महामहोपाध्यायश्रीभट्टोजिदीक्षितविरचिता

# प्रौढमनोरमा

अव्ययीभावान्ता

तत्पौत्रमहामहोपाध्यायश्रीहरिदीक्षितविरचित-

**लघुशब्दरत्नाख्यव्याख्ययाऽलङ्कृता**

—०—

महामहोपाध्यायभैरवमिश्रविरचित-

**शब्दरत्नप्रकाशिका ( भैरवी ) व्याख्यया**

काशीस्थबिरलासंस्कृतमहाविद्यालयप्रधानाध्यापक-

श्रीयुतपण्डितसभापतिशर्मोपाध्यायनिर्मित-

**रत्नप्रभानामकटिप्पण्या च विलसिता**

—०—



तृतीयसंस्करणम्
सम्वत २०३९
महाशिवरात्रिः

वाणीविलासप्रकाशनाध्यक्षेण

**व्रजभूषणदासचाँदरतनगुप्तेन**

प्राकाश्यं नीता

—०—

व्यवस्थापक
चाँद रतन लढ़ा
मार्फतः—वाणी विलास प्रकाशन
के. ८/५ राजमदिर, वाराणसी ।

विक्रय केन्द्र :
**वाणी विलास प्रकाशन**
कचौड़ी गली वाराणसी
२२१००१ ।





मूल्य ८०)

राजस्व पुस्तक का मूल्य १००/



द्वारा मुद्रित
माडल आफसेट प्रोसेस
जामामस्जिद, दिल्ली-६

# अथ सभैरवीकशब्दरत्नसहितप्रौढमनोरमास्थप्रकरणानाम्

## अनुक्रमणिका ।



॥ इति ॥

# भूमिका

इह विविधकल्मषोपनीतचतुरशीतिलक्षयोनिराक्षसीप्रसूताचिन्त्याप्रमेयदुःखजालाकुले जगतीतलेऽनेकजन्मार्जितपुण्यजातप्रतापैरेवात्र भारते मनुष्यशरीरमासाद्यते प्राणिनिवहैः। यतस्तच्छरीरेणैवात्रैव जन्मवतामाध्यात्मिक्याबुन्नत्यवनती सम्भवतः। तदुक्तं विष्णुपुराणेः—

यतो हि कर्मभूरेषा ततोऽन्या भोगभूमयः।
कदाचिल्लभते जन्तुर्मानुष्यं पुण्यसञ्चयात् ॥ इति।

अत्रोन्नत्यवनती द्विविधे ÷ ऐहलौकिक्यौ पारलौकिक्यौ च। द्विविधेऽपि ते पुण्यापुण्यनिबन्धने इति सर्वसिद्धान्तः। के च पुण्यापुण्ये इति जिज्ञासायां वेद एव तज्ज्ञापकत्वेनाश्रयणीयो भवेत्। तदुक्तम्भर्तृहरिणाः—

प्राप्त्युपायोऽनुकारश्च तस्य वेदो महर्षिभिः।
एकोऽप्यनेकवर्त्मेव समाम्नातः पृथक् पृथक् ॥ इति।

भगवान् मनुरपि—

वेदोऽखिलो धर्ममूलं स्मृतिशीले च तद्विदाम्।
आचारश्चैव साधूनामात्मनस्तुष्टिरेव च ॥ इति।

आत्मनस्तुष्टिश्च वेदानुमते वैकल्पिके प्रमाणम्, न तु स्वातन्त्र्येण, अन्येषां वैयर्थ्यापत्तेः, उच्छृङ्खलत्वापत्तेश्च। किं बहुना, निखिलोऽपि व्यवहारजातो वेदादेव नियतः। तदप्याह ÷

सर्वेषां स तु नामानि कर्माणि च पृथक् पृथक्।
वेदशब्देभ्य एवादौ पृथक् संस्थाश्च निर्ममे ॥ इति।

शारीरकेऽपि—"शब्द इति चेन्नातः प्रभवात् प्रत्यक्षानुमानाभ्याम्" इति सूत्रेण (१–३–२८)। तदेवं धर्माधर्मप्रमाणभूतानां स्मृतिसदाचाराणामपि वेदमूलकत्वादेव प्रामाण्यम्। एवञ्च वेदस्य तन्मूलकस्मृतिपुराणादीनाञ्च संस्कृतवाग्रूपत्वेन तद्घटकशब्दार्थादीनां सम्यक् परिज्ञानाय वक्ष्यमाणरक्षोहादिभाष्योक्तप्रयोजनकं व्याकरणं पाणिनिर्निर्ममौ। न च व्याकरणस्थ-

शब्दज्ञानायाप्युपायान्तरापेक्षेत्यनवस्था, तत्तदुपज्ञापकाचार्यैरेवालौकिकज्ञानशालिभिस्तदर्थबोधनात् ।

एक एव वेद उपाधिवशात् त्रयो वेदाः, चत्वारो वेति व्यवहारविषयताम्प्राप्तः । एतदप्युक्तं हरिणा ÷

स्मृतयो बहुरूपाश्च दृष्टादृष्टप्रयोजनाः ।
तमेवाश्रित्य लिङ्गेभ्यो वेदविद्भिः प्रकाशिताः ॥ इति ।

तत्र त्रित्वन्तु तद्गतमन्त्राभिप्रायम् । तदुक्तं जैमिनिना ÷ "तेषामृग् यत्रार्थवशेन पादव्यवस्था" ( २-१-३५ ) । "यत्र पादकृता व्यवस्था स मन्त्र ऋङ्नामा" इति शबरः । "गीतिषु सामाख्या" ( २-१-३६ ) विशिष्टा काचिद् गीतिः साम इत्युच्यते । प्रगीते हि मन्त्रवाक्ये सामशब्दमभियुक्ताः उपदिशन्ति" इति शबरः । "शेषे यजुःशब्दः" ( २-१-३७ ) यजुषो लक्षणं न वक्तव्यम्, ऋग्लक्षणसामलक्षणाभ्यामेव यजुर्विज्ञास्यते वैपरीत्येन । या न गीतिर्न च पादबद्धं तत्प्रश्लिष्टपठितं यजुरिति । एवञ्च ऋग्लक्षणोपेतमन्त्रसमुदायात्मको वेद ऋग्वेद इति । गीतिलक्षणोपेतमन्त्रकदम्बात्मकः सामवेद इति । यजुर्लक्षणविशिष्टमन्त्रजातात्मको यजुर्वेद इति त्रयीत्वेन व्यपदिष्टाः ।

चतुष्ट्वन्तु याज्ञिककर्मभेदेन मन्त्राणां भेदमाश्रित्य । तथा च ब्राह्मणम् ÷ ऋग्विदमेव होतारं वृणीष्व, यजुर्विदमध्वर्युम्, सामविदमुद्गातारम्, अथर्वाङ्गिरोविदं ब्रह्माणम्, इति । एवञ्च होतृकर्मोपयोगिमन्त्रसमूह ऋक् । अध्वर्युकर्मोपयोगिमन्त्रसमूहो यजुरिति । उद्गातृकर्मोपयोगिमन्त्रसमूहः सामेति । ब्रह्मकर्मोपयोगिमन्त्रसमूहोऽथर्वेति च व्यवहारः । अथर्वाख्येन ब्रह्मणा दृष्टत्वात्तन्नाम्नाऽयं वेदो व्यपदिश्यते । कतिचिद्भाष्योक्तानि व्याकरणप्रयोजनानि प्रदर्श्यन्ते ।

१—वेदरक्षा-'भद्रं कर्णेभिः' इत्यत्र 'कर्णेभिः' इत्यादिवैदिकशब्दस्य स्थाने लौकिकशब्दज्ञा अशुद्धिं ज्ञात्वाऽन्यथा न कुर्य्युरिति रक्षा वेदानाम्प्रयोजनं व्याकरणस्य ।

२—ऊहः-'अग्नये त्वा जुष्टं निर्वपामि' इत्यत्र सूर्योद्देश्यताविवक्षायाम् 'सूर्याय त्वा' इति परिवर्तनशक्तिलाभः ।

३—आगमः—ब्राह्मणेन निष्कारणो धर्मः षडङ्गो वेदोऽध्येयो ज्ञेयश्चेति वेदेन बोधितो ब्राह्मणधर्मः।

अङ्गानि च ÷

छन्दः पादौ तु वेदस्य हस्तौ कल्पोऽथ पठ्यते।
ज्योतिषामयनञ्चक्षुर्निरुक्तं श्रोत्रमुच्यते ॥ १ ॥
शिक्षा घ्राणन्तु वेदस्य मुखं व्याकरणं स्मृतम्।
तस्मात्साङ्गमधीत्यैव ब्रह्मलोके महीयते ॥ २ ॥

इत्युक्तेः शिक्षा-कल्प-व्याकरण-निरुक्त-च्छन्दो-ज्योतींषि षट्।

१—शिक्षा ÷ तत्तद्वर्णानां स्थानप्रयत्नोच्चारणादिक्रमप्रदर्शको ग्रन्थविशेषः। वर्णानां शास्त्रानुसारेणानुच्चारणे तु—

मन्त्रो हीनः स्वरतो वर्णतो वा मिथ्याप्रयुक्तो न तमर्थमाह।
स वाग्वज्रो यजमानं हिनस्ति यथेन्द्रशत्रुः स्वरतोऽपराधात् ॥

इति दूषणम्, सविध्युच्चारणे 'एकः शब्दः सम्यग्ज्ञातः शास्त्रान्वितः सुष्ठु प्रयुक्तः स्वर्गे लोके च कामधुग्भवति, इति फलञ्चोक्तम्भाष्ये।

२—कल्पः—केषाम्मन्त्राणां कुत्र प्रयोग इति प्रयोगक्रमकल्पक आपस्तम्बादिमुनिप्रणीतो ग्रन्थविशेषः। तेऽपि बहवः।

३—व्याकरणम्—शब्दसाधुत्वबोधकः सूत्रात्मको लक्ष्यलक्षणात्मको वा ग्रन्थविशेषः। तदुक्तं भाष्ये ÷ लक्ष्यलक्षणं व्याकरणम्, लक्ष्यञ्च लक्षणञ्चैतत्समुदितं व्याकरणं भवति, किम्पुनर्लक्ष्यं लक्षणञ्च ? शब्दो लक्ष्यः सूत्रं लक्षणम्' इति। अथवा पुनरस्तु 'सूत्रम्' इति च व्याकरणमपि बहुविधम्—

ऐन्द्रं चान्द्रं काशकृत्स्नं कौमारं शाकटायनम्।
सारस्वतञ्चापिशलं शाकलं पाणिनीयकम् ॥ १ ॥

इत्युक्त्या नवसंख्याकानि ÷ स्फोटायनम्, पौष्करसादि, दौर्गम्, हैमम्, कातन्त्रम्, इत्यादीन्यपि श्रूयन्ते।

४—निरुक्तम्—वैदिकशब्दानामेवार्थादिनिर्वचनात्मको यास्कमुनिप्रणीतो ग्रन्थविशेषः।

५—छन्दः ÷ लौकिकान् वैदिकांश्च वाक्यविशेषान् पादविरामादिव्यव-

स्थापनेन छन्दयति=नियमयतीति छन्दः। पिङ्गलादिमहर्षिप्रणीतो ग्रन्थविशेषः।

६—ज्यौतिषम् ÷ सूर्यचन्द्रादिज्योतिर्द्वारा तत्तद्वेदशास्त्रादिविहितकर्मानुष्ठानकालनिर्णयेष्टानिष्टफलप्रदर्शको ग्रन्थविशेषः। तेऽपि बहव इति।

व्याकरणस्य बहूनि प्रयोजनानि प्रदर्श्योक्तं भाष्ये ÷ "समानायाञ्चार्थावगतौ शब्देन चापशब्देन च, तत्र धर्मनियमः क्रियते—शब्देनैवार्थोऽभिधेयो नापशब्देनेति, एवं क्रियमाणमभ्युदयकारि भवतीति" इति। तथा चाभ्युदयफलकमपि व्याकरणम्। तथा च व्याकरणाभ्यासजन्यज्ञाने वैजात्यं कल्प्यते। मन्त्रजन्यमिवार्थस्मरणे, वेदान्तजन्यमिव ब्रह्मज्ञाने, तस्य च ज्ञानस्य यज्ञादीनामन्तःकरणशुद्धाविव शरीरादिशुद्धावुपयोगः, साक्षात्परम्परया वा स्वर्गमोक्षादिहेतुत्वञ्च।

सत्स्वपि बहुषु व्याकरणान्तरेषु अद्यत्वे पाणिनीयस्यैव वेदाङ्गत्वम्। अन्यत्र वैदिकानां लौकिकानाञ्च सर्वेषां व्युत्पादनाभावात्, अस्यैव वेदमूलकत्वाच्च। 'अइउण्' सूत्रमुपक्रम्य ऋक्तन्त्रव्याकरणे उक्तम् ÷ 'इदमक्षरच्छन्दो वर्णशः समनुक्रान्तं ब्रह्मा बृहस्पतये प्रोवाच, बृहस्पतिरिन्द्राय, इन्द्रो भरद्वाजाय, भरद्वाज ऋषिभ्यः, ऋषयो ब्राह्मणेभ्यस्तं खल्विममक्षरसमाम्नायमित्याचक्षते, न भुक्त्वा न नक्तं ब्रूयाद् ब्रह्मराशिः" इति। "वेदानां वेदः" इति श्रुतेरस्य वेदमूलकत्वम्।

कृते तु मानवा धर्मास्त्रेतायां गौतमाः स्मृताः।
द्वापरे शङ्खलिखिताः, कलौ पाराशराः स्मृताः॥

इति व्यवस्थावत्, अद्यत्वे शब्दसाधुत्वासाधुत्वव्यवस्थाऽपि पाणिनीयव्याकरणानुसारेणैव विधेया। तदुक्तं पराशरोपपुराणे ÷

पाणिनीयं महाशास्त्रं पदसाधुत्वलक्षणम्।
सर्वोपकारकं ग्राह्यं कृत्स्नं त्याज्यं न किञ्चन॥ इति।

"शताच्च ठन्यतावशते" (५-१-२१-) इति सूत्रे कैयटोऽपि ÷ 'शतप्रतिषेधेऽन्यशतत्वेऽप्रतिषेधः, इति भाष्यवार्तिकमुपादाय 'एवं सति शतं परिमाणमस्य शतको गोसङ्घ इत्यत्रापि प्रतिषेधो भवति। आपिशल–काशकृत्स्नयोस्तु 'अग्रन्थे' इति वचनादन्यप्रतिषेधाभावः। नियतकालाश्च स्मृतयो

व्यवस्थाहेतव इति मुनित्रयमतेनाद्यत्वे साधुत्वासाधुत्वविभाग इति। किञ्च÷ पाणिनीयव्याकरणेनैव साधुत्वासाधुत्वनिर्णय इति भाष्येऽपि ध्वनितम्। तथा हि÷

"कथन्तर्हीमे शब्दाः प्रतिपत्तव्याः, किञ्चित् सामान्य-विशेषवल्लक्षणं प्रवर्त्यम्, येनाल्पेन यत्नेन महतो महतः शब्दौघान् प्रतिपद्येरन्" किम्पुनस्तदुत्सर्गापवादौ, कश्चिदुत्सर्गः कर्तव्यः, कश्चिदपवाद इति। अद्यत्वे व्याकरणान्तरस्य साधुत्वनिर्णायकत्वे शब्दानां प्रतिपत्तौ यत्नस्य कृतत्वेन भाष्योक्तप्रश्नोत्तरयोरसङ्गतिर्दुर्वारैव स्यादिति पाणिनीयव्याकरणस्यावश्यकत्वम्। ज्ञाते च व्याकरणे—

अङ्गानि वेदाश्चत्वारो मीमांसान्यायविस्तरः।
पुराणं धर्मशास्त्रञ्च विद्या ह्येताश्चतुर्दश ॥ १ ॥

इत्युक्तासु सर्वासु विद्यासु सुकरप्रवेशतेति न तिरोहितं मतिमताम्।

ननु व्याकरणस्यावश्यकत्वेऽपि तत्तात्पर्यनिर्णायकानां भाष्यादीनां शब्दसाधुत्वबोधनप्रकारप्रदर्शकानां काशिकादीनाञ्च सत्त्वे सिद्धान्तकौमुदीनिर्माणवैयर्थ्यमिति चेन्न, भाष्यादीनां साधारणबुद्ध्यवेद्यत्वात्, काशिकादीनां बहुत्र भाष्याद्याकरग्रन्थविरुद्धार्थप्रतिपादकत्वाच्च तैः सिद्धान्तज्ञानासम्भवेन तदर्थं कौमुदीनिर्माणस्यावश्यकत्वात्। नन्वेवमपि मनोरमादिनिर्माणवैयर्थ्यमिति चेन्न, कौमुदीकर्तुरेव मनोरमायाः कर्तृत्वेन तदभिप्रायस्य कार्त्स्न्येन तद्विरचितविवृतेरेव सम्भवात्। न चैवमपि शब्दरत्नविषयकप्रयासनैष्फल्यम्, शरीरस्यालङ्काराणामिव मनोरमोक्तार्थानां प्रेक्षावदुत्प्रेक्षितप्रामाणिकरहस्यार्थप्रकाशनेन गौरवाधायकत्वात्। एवञ्च सर्वमनवद्यम्।

## ❀ समासतः पाणिन्यादीतिवृत्तम् ❀

श्रीमहामाहेश्वरजयद्रथनिर्मितहरचरितचिन्तामणेः शब्दशास्त्रावतारनामकं सप्तविंशम्प्रकाशमाश्रित्य किञ्चिदुच्यते:—

श्रीभगवतो महेश्वरस्नेहास्पदीभूतः पुष्पदन्त नाम गणो दैववशादद्रिजयाशस: कौशाम्बीनगरे सोमदत्तशर्मद्विजपत्न्यां वसुदत्ताख्यां जनिमवाप्य वररुच्य-

भिधानेन ख्यातिङ्गतः। दिव्यधिषणाधिष्ठितस्वान्तं तमिन्द्रदत्त-व्याडिनामानौ पितृविहीनौ जनन्येकशरणौ विद्याभिलाषया तपसा तोषितकार्तिकेयौ स्वप्ने—

नन्दस्य नृपतेरस्ति पुरं पाटलिपुत्रकम्।
वर्षाख्यस्तत्र विप्रोऽस्ति तस्माद्विद्यामवाप्स्यथ ॥१॥

इति लब्धवरौ द्विजन्मानौ पाटलिपुत्रनिवासिशङ्करस्वामितनूजात् बाल्ये बालिशादपि स्वामिकुमारप्रसादेन प्राप्तसकृद्ग्राहित्वात्, आप्तसकलविद्याच्च वर्षनामकाचार्य्याल्लब्धविद्यौ कदाचित्सङ्गतौ। वररुचेरपि सकृद्ग्राहित्वमवेक्ष्य वर्षगुरोरशेषविद्याशिक्षणाय तन्मातरमभ्यर्थ्य मात्रा—

"अयं श्रुतधरो लब्ध्वा विद्यावर्षादशेषतः।
लोके व्याकरणं दिव्यं प्रतिष्ठां प्रापयिष्यति ॥ १ ॥
रोचते हि वरं यस्मान्नाम्ना वररुचिः सुधीः।
प्रतिपाद्येति सा वाणी व्यरमच्च नभस्तलात् ॥ २ ॥

इत्याकाशवाचमुक्त्वा दत्तं तमवाप्य सर्वज्ञवर्षगुरोः सविधे नीतवन्तौ। सकृच्छ्रुतग्राहिवररुचिम्, द्विःश्रुतग्राहिव्याडिम्, त्रिःश्रुतग्राहीन्द्रदत्तमवाप्यातीव ख्यातिङ्गतस्य वर्षाचार्य्यस्यान्तिके बहवः शिष्याः समागताः। तेष्वेकः पणिनाम्न ऋषेस्तनयात्पाणिनाद् दाक्ष्यामवाप्तजनिः पाणिनिरपि समायातः। स च जडबुद्धिस्तत्रत्यच्छात्रैरुपहसितो हिमगिरिं गत्वा तपसाऽऽराधितमहेश्वरो दिव्यं व्याकरणमवाप्य सर्वान् वादायाजुहाव। वररुचिना (कात्यायनापरनाम्ना वार्तिककारेण) साकं सप्तदिनानि यावद्वृत्ते शास्त्रार्थे जितकल्पे पाणिनौ नभस्तलाद्घोरशङ्करहुङ्कारतः पाणिनिर्वररुचिं जिगाय। जितो वररुचिर्विस्मृतशास्त्रो मूर्खतामापन्नः पुनस्तपसेश्वरं सन्तोष्याशेषपाणिनीयशास्त्रमवाप्य पाणिन्यनुक्तार्थपरिपूरकं तद्दुरुक्तनिरासकं वार्तिकनामकं ग्रन्थं व्यरचत्। तेन खिन्नः पाणिनिस्तं शशाप। 'अचिरात्त्वं पतिष्यसि, इति। वररुचिरपि तं तथैव शप्तवान्। ततोऽरण्ये गच्छन्तं पाणिनिं त्रयोदश्यां व्याघ्रो निहतवान्, तस्यामेव तिथौ वार्तिककारोऽपि तनूं त्यक्तवान्। ततोऽध्यापनद्वारेण पाणिनिशिष्येण व्याघ्रभूतिना पाणिनिव्याकरणम्, कात्यायनशिष्येण श्वोभूतिना च स्ववार्तिकं तत् प्रकाशितं सज्जगति

विख्यातिमाजगाम। व्याडिरपि पाणिनीयव्याकरणेऽतिविस्तृतं सङ्ग्रहाख्यं ग्रन्थमभ्यधात्, नाद्यत्वे उपलभ्यते सः।

शेषोऽपि तदानीमेव भगवतेश्वरेणाज्ञप्तः कस्मिंश्चिदृषौ सन्ध्यामुपासीने अर्घ्यदानसमये जले प्रविश्य भूमौ पतितः। भयात्कोऽभवान्, इति तेन पृष्टः। सर्पोऽहमिति प्रत्युवाच। रेफः क्व गत इति पृष्टे, त्वयापहृत इत्यब्रवीत्। श्रीमता भगवताऽर्केणायं पुत्रो दत्त इति पुत्रार्थं तपस्यतर्षिणातीव प्रसेदे। 'सर्पोऽहम्' इत्युत्तरप्रदानेन, पुत्रबुद्ध्या जातमुनिप्रसादेन च पतनसमये सर्पशरीरं धृतवताऽपि भगवता तदनन्तरं मानवं शरीरं धृतमिति प्रतीयते। महेश्वरप्रसादाद्दिव्यदृष्टिः पतञ्जलिः "पाणिनिवाक्यस्य महाभाष्यं विधाय 'दिवं व्रज" इति महेश्वरेणाज्ञप्तो भाष्यश्चकार। सहस्राधिकशिष्यप्रार्थनया "जवनिकाभ्यन्तरस्थेन मया यूयं महाभाष्यमध्यापयितव्याः तत्स्थश्चाहं कदापि केनापि न द्रष्टव्यः" इति समयेन सहस्रफणामण्डिताच्छेषात् द्वात्रिंशदाह्निकानि तेऽधीतवन्तः। ततोऽभाग्यवशात् 'कृदतिङ्' इतिसूत्रमहाभाष्याध्ययनान्ते "कति मुखान्यस्य सन्ति यैः सर्वान् पृथक् पृथक् पाठयति" इति द्रष्टुकामः कश्चिज्जवनिकामपनिन्ये। दर्शनमात्रेणैवोग्रविषज्वालया ते छात्रा भस्मीबभूवुः। तदानीं जलोत्सर्जनाय तेषु कश्चन गतवान् आसीत्। आगत्योवाच ÷ "नाहमपराधी क्षन्तव्योऽहम्, 'प्रसीद'"इति भूयोभूयः पतञ्जलिम्प्रार्थितवान्, पतञ्जलिराह पाठारम्भे शान्तिपाठमकृथाः, अध्ययनान्ते तु तमकृत्वैव बहिर्गतोऽतो राक्षसो भव" इति, ततः स्तुत्या तोषितः स "पच्धातोः क्ते कीदृग्रूपमिति सर्वः प्रष्टव्यः। यः पक्वमिति ब्रूयात् स मदीयं भाष्यमध्यापनीयः, तेन त्वं शापाद्विमोक्ष्यसे, मदनुग्रहान्मदीयं सर्वं भाष्यं ते स्फुरतु" इत्युक्त्वाऽन्तरधात्, तेनैवावशिष्टं भाष्यमभ्यधात्।

एते सर्वेऽपि पाणिन्यादय ईशवीयवर्षात् प्राक् सप्तमवर्षसन्निहिते आसन्, इति केचन पुरातत्त्वविदः। अन्ये तु ईशातः प्राक् चतुर्थे वत्सरे एव बभूवुरित्याहुः। नात्र सम्यङ् निश्चेतुं शक्यते। भाष्याब्धिमथनोपलब्धशब्दकौस्तुभकौस्तुभतत्त्वज्ञानकिरणध्वस्तध्वान्तस्वान्ताः, भट्टवंशावतंसाः, विद्वन्मूर्धन्यलक्ष्मीरमणसदृशलक्ष्मीधरशर्मतनूजाः, निखिलविद्यापारावारीणश्री-

कृष्णशेषशर्मान्तेवासिनः, स्वीयाप्रतर्क्यतर्केण जितभट्टतयाऽन्वर्थनामानो भट्टोजिदीक्षिताः।

ईशवीये मिते वर्षे शून्यवह्निरसेन्दुभिः।
भट्टोजिदीक्षिता जाता इति भाति प्रमाणतः॥ १॥

एभिः शब्दकौस्तुभादयो व्याकरणग्रन्थाः, त्रिस्थलीसेत्वादयो बहवो धर्मशास्त्रग्रन्थाश्च लिखिता विस्तरभयान्नोपन्यस्यन्ते। श्रीमद्भट्टोजिदीक्षितकृता मनोरमा तदात्मजभानुदीक्षितसूनुना निखिलविद्याऽमृतगम्भीरमानसेन श्रीहरिदीक्षितेन विद्वन्मानसोल्लासकरेण शब्दरत्नेनालङ्कृता। शब्दरत्नोऽपि युक्तप्रान्तीय'बदायूँ'नगरवास्तव्येन सनाढ्यान्वयावतंसेन सर्वतन्त्रस्वतन्त्रश्रीभवदेवमिश्रतनूजेन 'पेशवा'महाराजतो लब्धपण्डितसार्वभौमपदवीकेन महामहोपाध्यायश्रीभैरवमिश्रमनीषिप्रवरेण निर्मितया रत्नप्रकाशिकया व्याख्यया विलसित एवेति नास्ति टीकान्तरस्यावश्यकता, तथाऽपि गेयवैचित्र्यस्येव वाङ्मयव्याख्याया आनन्त्यात् प्रातःस्मरणीयानां पाणिनेरिव व्याकरणसारामृतपरिपूर्णमानसानां महर्षिकल्पानां पूज्यगुरुवराणां नवनवोन्मिषितानां परिष्काराणां सिद्धान्तानाञ्च प्रदर्शनस्यावश्यकत्वाच्च मदीयटिप्पण्यपि नानुपयुक्ता भवेदिति विद्वद्वरेभ्यः सादरमुपह्रियते। छात्राणामप्युपकारः स्यादिति तेभ्यः समर्प्यते।

एतद्ग्रन्थसंशोधनादिविषये मदीयशिष्यः काशीस्थ दे० सू० खेतान सं० महाविद्यालयाध्यापकः, भ० रा० लोयलका सं० विद्यालयाध्यापकश्च व्याकरणाचार्य-पञ्चोल्युपनामकबालकृष्णशास्त्री आशीराशिना समुद्द्योतताम।

भवदीय—

**सभापतिशर्मोपाध्यायः**

काशीस्थविरलामहाविद्यालय—

प्रधानाध्यापकः।

श्रीगणेशाय नमः

# प्रौढमनोरमा

ध्यायं ध्यायं परं ब्रह्म स्मारं स्मारं गुरोर्गिरः ।
सिद्धान्तकौमुदीव्याख्यां कुर्मः प्रौढमनोरमाम् ॥ १ ॥

---

## अथ शब्दरत्नः

शेषविभूषणमीडे शेषाशेषार्थलाभाय ।
दातुं सकलमभीष्टं फलमीष्टे यत्कृपादृष्टिः ॥ १ ॥

---

## अथ शब्दरत्नव्याख्या भैरवी

ध्यात्वा देवम्परम्ब्रह्म जानकीपतिमव्ययम् ।
विदुषां प्रीतिदां लघ्वीमृज्वीं रत्नप्रकाशिकाम् ॥ १ ॥
नत्वा तातञ्जगद्वन्द्यं भवदेवाभिधं गुरुम् ।
सीताख्यां जननीं कुर्वे भैरवोऽगस्त्यसम्भवः ॥ २ ॥

'ग्रन्थादौ ग्रन्थमध्ये ग्रन्थान्ते च मङ्गलं कुर्यात्' इति शिष्टसमाचारानुमितश्रुत्या प्रारिप्सितग्रन्थसमाप्तिप्रतिबन्धकविघ्नविनाशस्यावश्यकतया समुचितेष्टदेवतास्तुतिरूपम्मङ्गलमाचरन् शिष्यशिक्षायै निबध्नाति—शेषविभूषणमिति । विशिष्टं भूषणं विभूषणं शेषो विभूषणं यस्य तं शिवमित्यर्थः । यद्वा शेषश्च विश्च शेषवी, भूषयतस्ते भूषणे यस्य तं विष्णुं शेषशायिनं गरुडवाहनमिति फलितोऽर्थः । कस्मै प्रयोजनाय—शेषाशेषार्थलाभाय। शेषस्य योऽशेषोऽर्थस्तल्लाभाय । आद्यपक्षे शेषयुक्तशिवस्तुत्या शिवस्य विशिष्टविभूषणयुक्तस्य हर्षावस्थापन्नस्य स्मरणेऽभीप्सितार्थस्य सिद्धिर्भविष्यत्येव । अन्त्ये शेषस्याशेषोऽर्थो महाभाष्यार्थस्तस्य । यद्वा शेषश्चाशेषश्चेति द्वन्द्वगर्भस्तत्पुरुषः । तेन महाभाष्यार्थगरुडपुराणोक्तार्थस्य लाभः । अशेषशब्दे च विरोधार्थकनञ्तत्पुरुषोऽसुरपदे यथा । गरुडपुराणोक्तोऽर्थः सदसद्विवेकस्तस्य लाभः । प्रथमवाक्ये तमित्यस्याध्याहारः, तं कं यत्कृपादृष्टिः सकलमभीष्टम्फलन्दातुमीष्टे । सर्वनाम्नामुत्सर्गतः प्रधानपरामर्शकत्वात् यच्छब्दः शिवस्य विष्णोर्वा बोधकः । ईष्टे इत्यनेनेश्वरत्वस्य लाभः । तथाचेश्वरस्य भूपतेः प्रसादेन तदाज्ञयैव लौकिकसकलार्थलाभो यथा दृश्यते लोके, तथा शिवस्य विष्णोश्च कृपापूर्वकदृष्ट्या सकलार्थलाभो भवत्येवेति । तदन्तर्गतत्वेन प्रारिप्सितग्रन्थस्य निर्विघ्नपरिसमाप्तिरपि भविष्यत्येवेति ध्वनितम् ।

ध्यायं ध्यायमिति । ध्यात्वा ध्यात्वेत्यर्थः । [1]णमुलन्तमेतत् । परम्=[2]सर्वजगदुपादानम् । [3]कार्यब्रह्महिरण्यगर्भव्यावृत्तये [4]इदम् । ध्यानम्=

ननु ध्यायमिति यदि द्वितीयान्तं तदाऽभ्यासानुपपत्तिरत आह—ध्यात्वा ध्यात्वेति । ध्यायशब्दो यदि घञन्तस्तदोक्तार्थलाभोऽत आह—णमुलन्तमिति । एवञ्च क्त्वाणमुलोः समानार्थत्वेनोक्तार्थस्य लाभः सुकर एव । एतेन स्मारं स्मारमित्यपि व्याख्यातम् । कार्यब्रह्मणो हिरण्यगर्भस्यापि ।

यः सर्वज्ञः सर्ववित् यस्य ज्ञानमयन्तपः ।
तस्मादेतद्ब्रह्मनामरूपमन्नञ्च जायते ॥

इति श्रुत्या नपुंसकलिङ्गब्रह्मशब्दवाच्यत्वात्तद्व्यावृत्तये—परमिति । एवञ्च हिरण्यगर्भस्यापि जगदन्तःपातित्वेन तदुपादानत्वस्य तत्राभावात्तद्व्यावृत्तिरिति भावः । नच हिरण्यगर्भस्य चेतनरूपत्वात्तस्य च "नित्यं विज्ञानमानन्दम्ब्रह्म" इति श्रुत्या नित्यत्वावगमेन कथङ्कार्यत्वमिति वाच्यम्, अपञ्चीकृतसकलभूतसमष्टिसूक्ष्मशरीरोपहितो हिरण्यगर्भः, तदुपाधिभूततादृशशरीरस्य जन्यत्वात् हिरण्यगर्भस्य जन्यत्वव्यवहारः । अत एव

"हिरण्यगर्भः समवर्तताग्रे भूतस्य जातः पतिरेक आसीत्" ।

---

गुरुपादाम्बुजं नत्वा व्याचष्टे समनोरमम् । रत्नं रत्नप्रभानाम्न्या मोदन्तां सुधियां धियः ॥१॥

१—एतेन 'ध्यायम्' इत्यस्य ब्रह्मविशेषणत्वे 'ध्येयम्' इत्यस्यैवौचित्येन घञन्तप्रयोगासङ्गतिः, द्वित्वानुपपत्तिश्चेति निरस्तम्, आभीक्ष्ण्ये णमुलस्सत्वात्, तत्र "क्रियासमभिहारे द्वे वाच्ये" इत्यनेन द्वित्वस्यौचित्यात् ।

२—सदसद्भ्यामनिर्वचनीयं त्रिगुणात्मकं ज्ञानविरोधि भावरूपम् अज्ञानपदवाच्यम्, न तु ज्ञानाभावरूपम् अभावे वक्ष्यमाणविक्षेपशक्त्योरसम्भवेन जगत्कारणत्वानुपपत्तेः । तस्य शक्तिद्वयम्—आवरणशक्तिः, विक्षेपशक्तिश्च । तत्रादित्यमण्डलाच्छादकमेघवदात्मस्वरूपाच्छादिकाऽऽवरणशक्तिः, सर्पादिकोद्भावकरज्ज्वज्ञानवदज्ञानावृतात्मनि आकाशादिप्रपञ्चोद्भाविका विक्षेपशक्तिरिति । तथा च आवरणशक्ति-विक्षेपशक्तिमदज्ञानोपहितचैतन्यस्यैव प्रपञ्चकारणतया कारणान्तराभावेऽपि चैतन्यप्राधान्यविवक्षया निमित्तकारणत्वम्, अज्ञानरूपोपाधिप्राधान्यविवक्षया चोपादानकारणत्वं बोध्यम् ।

३—पूर्वोक्ताज्ञानञ्च—समष्टि—व्यष्टिरूपद्वयात्मकम्, तत्र वृक्षसमूहस्य 'वनम्' इति एकत्वबुद्धिवद् जीवगताज्ञानानां समुदायरूपैकत्वविवक्षया समष्टिरूपत्वेन, 'वृक्षाः' इति अनेकत्वबुद्धिवद्बहुत्वविवक्षया च व्यष्टिरूपत्वेन व्यवह्रियते । एवञ्च ज्ञानेन्द्रियपञ्चकविशिष्टबुद्धिरूपविज्ञानमयकोश—ज्ञानेन्द्रियपञ्चकविशिष्टमनोरूपमनोमयकोश—कर्मेन्द्रियपञ्चकविशिष्टवायुपञ्चकरूपप्राणमयकोशैतत्त्रयसप्तदशावयवात्मकसूक्ष्मशरीररूपसमष्ट्युपहितचैतन्यम् 'सूत्रात्मा' 'हिरण्यगर्भः' इति चोच्यते । अयमेव जीवसृष्टौ प्रथमः । चैतन्यस्य नित्यत्वेऽपि उपाधेरनित्यतया जन्यत्वं तस्य ।

४—ननु 'परम्' इति विशेषणस्यैतादृशार्थकत्वे नपुंसकब्रह्मशब्दनिर्देशेनैव तदर्थलाभात्तद्वैयर्थ्यम् इति चेत्, न, "ब्रह्मणा लोककर्त्रा"... ...इति रामायणात्, "तस्मादेतद्ब्रह्म नामरूपमन्नञ्च जायते" इति श्रुतेश्च कार्यब्रह्मवाचकस्यापि नपुंसकत्वलाभात् ।

चिन्तापरपर्यायं स्मृत्यनुकूलव्यापाररूपम्। स्मरणं तु तज्जन्यमिति विशेषः। गुरोरित्येकवचनेन सर्वविद्यालाभ एकस्मादेव गुरोरिति सूचितम्। 'प्रौढानां मनो रमयति' इत्यर्थिकां मनोरमाम्। प्रौढत्वं च सक-

इति श्रुतिः सङ्गच्छते। इदम् = परमिति विशेषणम्। ध्यै-स्मृधात्वोरतुल्यार्थकत्वस्य प्रसिद्धत्वादुभयोरुपादाने पौनरुक्त्यमत आह—ध्यानमित्यादि। व्यापाररूपमिति। स्मृत्यनुकूलभावनाख्यसंस्काररूपमित्यर्थः। तज्जन्यम् = तादृशसंस्कारजन्यम्। ननु गुरुशब्दार्थस्य पूज्यत्वेन 'गुरवः समागताः' इत्यादौ बहुवचनवदत्रापि बहुवचनेनैवोपादानमुचितमत आह—गुरोरित्येकेति। एतेनैकस्मात्सर्वविद्यालाभस्तस्य सर्वविद्याश्रयतां विना नोपपद्यत इति तस्यैकस्य सर्वविद्याकुशलत्वे लब्धेऽधिकपूज्यत्वस्येश्वर इव सर्वोत्कृष्टत्वस्य लाभ इति ध्वनितम्। प्रौढानाम्मनांसि प्रौढमनांसि रमयति या सा प्रौढमनोरमा इत्यर्थश्चेत्तदा कर्मण्यणित्यण्प्रत्यये 'टिड्ढेति' ङीप् स्यादत आह—प्रौढानामित्यादिना। एवञ्चैवंविधस्तस्य फलितोऽर्थः, विग्रहस्तु 'गङ्गाधरः'

१—व्यापारेण व्यापारिणोऽन्यथासिद्धिमते ध्यानम्—स्मृत्यनुकूलभावनापरपर्यायव्यापाररूपम्, अनन्यथासिद्धिमते तु संस्काररूपव्यापारेण व्यापारिणोऽनुभवस्यान्यथासिद्धत्वाभावादनुभवरूपमेव बोध्यम्, स्मृत्यनुकूलो व्यापारो यस्मादिति पञ्चम्यर्थे बहुव्रीहिस्वीकारात्। ध्यै चिन्तायाम्, स्मृ चिन्तायामित्यर्थनिर्देशस्तु 'गम्लृ गतौ', 'सृप्लृ गतौ' इतिवत् सामान्यरूपाभिप्रायेण।

२—'बहुषु बहुवचनम्' (अ, १-४-२१) इति भाष्ये "दृष्टविप्रयोगाच्च" दृश्यन्ते खल्वपि विप्रयोगाः तद्यथा—अक्षीणि मे दर्शनीयानि पादा मे सुकुमारा इति" इति भाष्यसूचितेन एकस्मिन्नपि 'गुरवः समागताः' इत्यादिवृद्धव्यवहाराणां प्रामाणिकत्वेनात्र बहुवचनस्यौचित्येऽपि तद्योत्यपूज्यत्वस्यात्रैकवचनेन लाभान्न तद्विरोध इति भावः।

३—प्रौढानां मनांसि रमयतीति विग्रहे "कर्मण्यण्" (पा० सू, ३-२-१) इति कर्तर्यणि "टिड्ढाणञ्"—इति ङीप्मा भूदित्यत आह—इत्यर्थिकामिति—नत्विति विग्रहिकामिति भावः।

वस्तुतस्तु 'प्रौढानां मनांसि रमयति' इति वाक्यार्थके ये वाक्ये—'प्रौढमनांसि रमयति' इति 'मनांसि रमयति' इति च तत्प्रतिपाद्यामित्यर्थः। येभ्यो विशिष्टेभ्योऽनादिप्रत्यय इष्यते तान् केवलान् पचादिगणे पठित्वा 'कर्मोपपदेभ्यश्च ततो णिचश्च' इति पाठ्यम्। चकारेण पूर्वानुवर्त्यं ण्यन्तान्मनोरमा इत्यादि साधनीयम्। अत एव "अलमाश्रयते अलाश्रयः स चासौ विधिः" इति स्थानिवत्सूत्रस्थम्, "लियमाचक्षाते लाख्यौ" इति "यूस्त्र्याख्यौ" इति सूत्रस्थञ्च भाष्यं संगच्छते। किञ्च—पचादौ विशिष्टपाठाभावे कर्मत्वस्याविवक्षायां सम्बन्धत्वस्य च विवक्षायाम्, रमयतेः फलसमानाधिकरणव्यापारवाचित्वस्य विवक्षायाम्, फलव्यधिकरणव्यापारवाचित्वस्याविवक्षायाञ्चातिगौरवम्। इत्येवं जातीयकेषु भूधरादिष्वपि विशिष्टपाठ एव पचादौ कल्पनीयः। अत एव रमा, मनोरमेति द्विविधप्रयोगसिद्धिः। 'प्रौढानां मनो रमयतीत्यर्थिकाम्' इत्युक्तिस्तु नित्यसाकाङ्क्षत्वादजुत्तरषष्ठी तत्पुरुषोत्तरं वाऽस्विति द्योतनाय। अत एव मूले 'मनोरमाम्' इत्येवोक्तम् इति दिक्।

४—चिन्त्यमिदम्, उक्तप्रौढत्वशालिनां मनोरमाया अकिञ्चित्करत्वात्। अतोऽधीतमनोरमार्थबोधोपयोगिकोशादिकत्वे सति विशिष्टबुद्धिशालित्वमेव प्रौढत्वं बोध्यम् इति केचित्।

"ह य व र ट्" ( मा० सू० )। हकारोपदेशः, अट्अश्हश्-इण्ग्रहणेषु हकारग्रहणार्थः। 'अर्हेण' 'अड्व्यवायेऽपि' इति णत्वम्। 'देवा हसन्ति' 'भोभग्गो' ( पा० सू० ८।३।१७ ) इति रोर्यत्वम्।

---

लदर्शनार्थज्ञानपूर्वकमहाभाष्यगूढार्थज्ञानवत्त्वम् ॥ इण्ग्रहणेष्विति। नन्विदं न्यूनम्, अम्ग्रहणेऽपि ग्रहणात्। फलं तु 'बहुपुम्कुह्' इत्यादौ "पुमःखय्यम्" ( पा० सू० ८।३।६ ) इति रुत्वम्। 'गवित्ययमाह' इत्यादिवत्

---

इत्यत्रैव रमयतेः पचादित्वस्य, मूलविभूजादित्वस्य वा कल्पनेन रमयतीति रमा प्रौढमनसां रमेति कार्यं इति सूचितमिति केचित्। वस्तुतस्तु यदि रमयतेः पचादित्वादि कल्प्यते तदा प्राप्तस्यापि कर्मण्यणित्यस्य पचादिभ्योऽजित्यादिना बाधे ङीबभावः सुकर एवेति। प्रौढमनांसि रमयतीत्येव विग्रह इति बोध्यम्। प्रकृतोपयोगिप्रौढपदार्थतावच्छेदकमाह—प्रौढत्वमिति। एतेन महाभाष्यगूढार्थज्ञानमितरसकलदर्शनार्थज्ञाने सत्येवेति सूचितम्, भाष्यकृतां विचारसमये सकलदर्शनार्थस्य तत्र तत्र ध्वननात्। अतएव गूढत्वविशेषणं सङ्गच्छते। एवंविधप्रौढत्वोपपादनेन तादृशज्ञानवतामेव निर्दुष्टत्वज्ञानेनेयं मनोरमा रमयति नान्येषामित्युक्तम्भवति ॥

हयवरडित्यत्र यः प्रथमो हकारस्तत्प्रयोजनावसरे प्रत्याहारचतुष्टय एव प्रयोजनमुपात्तम् तत्र न्यूनत्वमाशङ्क्य निराचष्टे—नन्वित्यादिना। अम् ग्रहणेऽपीति। अम् गृह्यते यस्मिंस्तस्मिन् "पुमः खय्यम् परे" इति सूत्रे। ग्रहणादिति। निमित्तत्वेन ग्रहणस्यापेक्षणीयत्वादित्यर्थः। एतत्प्रयोजनमाह—फलन्त्विति। क्लृप्तप्रयोजनाभावसूचनाय तुशब्दः। बह्विति। अत्र बहवः पुमांसो यस्येति बहुव्रीहौ शेषाद्विभाषेत्यत्र विभाषाग्रहणात् उरःप्रभृतिषु एकवचनान्तस्य पुंस्शब्दस्य पाठाच्च कप्। सकारस्य तु संयोगान्तलोपः। कुह् इति प्रत्येकमनुकरणद्वयम्। ननु प्रत्येकानुकरणेऽनुकार्येणार्थेन ककारहकारयोरर्थवत्त्वात्प्रातिपदिकत्वेन सुबुत्पत्तौ हल्ङ्यादिलोपे प्रत्येकम्पदत्वाज्जश्त्वढत्वयोः कृतयोर्न रुत्वस्य प्राप्तिरत आह—गवित्ययमाहेत्यादीति। इत्यादाविवेत्यनेन

---

१—अनुकरणं हि अनुकार्य्याद्भिन्नम् "मतौ छः" इति सूत्रे ( अ० ५-२-५९ ) भाष्ये 'अस्यवामीयम्' इत्यत्र छसिद्ध्यर्थम् अस्यवामशब्दस्यानुकरणत्वसमर्थनाय "सिद्धं तु प्रातिपदिकविज्ञानात्" इत्युक्त्वा, एवं योऽसावाम्नायेस्यवामशब्दः पठ्यते सोऽस्य पदार्थः। किं पुनरन्येऽम्नायशब्दाः, अन्य इमे। ओमित्याह' इत्युक्तेरनुकार्यशब्दस्वरूपनिरूपितायाः शक्तेरनुकरणे सत्त्वाद्वृत्त्याऽर्थविषयकबोधजनकत्वरूपार्थवत्त्वेन प्रातिपदिकत्वात्स्वादयो जायन्ते। "ऋलृक्" सूत्रे "प्रकृतिवदनुकरणं भवति, किम्प्रयोजनम्, ? द्विःपचन्त्वित्याह 'तिङ्ङतिङः' इति निघातो यथा स्यात्, 'अग्नी' इत्याह—ईदूदेद्द्विवचनं प्रगृह्यसंज्ञा भवतीति प्रगृह्यसंज्ञा यथा स्यात्" इति भाष्यादनुकरणमनुकार्य्यादभिन्नमिति च लभ्यते। अत्र पक्षे हि स्वसदृशशब्दमात्रार्थतात्पर्य्यकोच्चारणविषयरूपानुकरणं सादृश्यमूलाभेदविवक्षया स्वसा-

'देवो हसति' 'हशि च' (पा० सू० ६।१।११४) इत्युत्वम् । 'लिलिहि-ढ्वे' 'लिलिहिध्वे' "विभाषेटः" (पा० सू० ८।३।७९) इति वा ढः ।

अपदान्तत्वात्ककारादेर्न जश्त्वमिति, चेत्, न, "सुट्तिथोः" (पा०सू० ३।४।१०७) इत्यादावकाराद्युच्चारणेन शास्त्राबोधिताजव्यवहितहल्समुदायस्यासाधुत्वबोधनात् । अत एव "उच्चैरुदात्तः" (पा० सू० १।२।२९) इति सूत्रे भाष्यम्—"न पुनरन्तरेणाचं व्यञ्जनस्योच्चारणमपि भवति" इति । स्को-

तत्रैवाभेदविवक्षा सूचिता, बहुपुमित्यत्र तु सान्तप्रातिपदिकानुकरणम्, भेदविवक्षा च । अतएव सकारस्य संयोगान्तलोपः । ककारादेरित्यादिना हकारपरिग्रहः । जश्त्वमित्युपलक्षणं ढत्वस्यापि । "सुट्तिथोः" इति—आदिपदद्वयेन झषस्तथोरित्यस्यात्रत्याकारस्य च परिग्रहः । शास्त्राबोधितेति । अचा अव्यवहितोऽजव्यवहितः अजव्यवहितश्चासौ हल्समुदायश्चाजव्यवहितहल्समुदायः, शास्त्रेणाबोधितो योऽजव्यवहितहल्समुदायस्तस्यासाधुत्वमित्यर्थः । शास्त्राबोधितत्वञ्च = शास्त्रबोधितभिन्नत्वम् । ननु राज्ञ इत्यादौ शास्त्रबोधितत्वं लोपस्य न तु अव्यवहितत्वस्येति प्रतियोग्यप्रसिद्धिरिति, चेन्न, शास्त्रजन्यज्ञानप्रयोज्यसाधुत्वप्रतिपत्तिकभिन्नत्वस्य विवक्षितत्वात् । साधुत्वस्य व्याकरणव्यङ्ग्यजातिविशेषरूपत्वासत्प्रतिपत्तेः शास्त्रजन्यज्ञानप्रयोज्यत्वमक्षतमेव । बोधनादिति । एवञ्चैतादृशस्यापभ्रष्टवदसाधुत्वेन शास्त्रप्रवृत्तियोग्यता तेषु नास्तीत्याशयेन 'अम्' प्रत्याहारे हकारस्य ग्रहणरूपम्प्रयोजनं नोपन्यस्तमिति भावः । इदञ्च तस्य समुदायस्य सत्त्वाभिप्रायेण । वस्तुतस्तु सत्त्वमेव नेत्याह—अत एवेति । तादृशसमुदायस्य सत्त्वसाधुत्वयोरभावादेव । उच्चारणमपीति । एकस्याप्युच्चारणासम्भवेन तादृशसमुदायस्य सुतरां तदसम्भवेन तयोर्लाभः । यत्त्विदम्भाष्यं किम् मणिमन्त्रन्यायेन तादृशोच्चारणे प्रतिबन्धकम्, उत तादृशसमुदायस्यासाधुत्वतात्पर्यकम् । आद्ये संयोगसंज्ञाविधायकशास्त्रस्य संज्ञ्यप्रसिध्यानर्थक्यापत्तिः । "लोपश्चेति द्विशकारकोनिर्देशः" इति भाष्यस्य चासङ्गतिः, नान्त्यः, एतद्भाष्यघटकोच्चारणशब्दस्यासाधुत्वाबोधकत्वादिति, तन्न, वाच्यवृत्त्या साधुत्वाबोधकत्वेऽपि लक्षणया तदर्थबोधकत्वसम्भवात् । नन्वेवं शास्त्राबोधिताजव्यवहितहल्समुदायस्यासाधुत्वे 'स्कोः' इत्यादौ सकारककारयोस्तादृशसमुदाय-

द्वयेनानुकार्य्यस्वरूपार्थमुपस्थापयतीति वृत्त्याऽर्थोपस्थापकत्वरूपनिमित्ताभावान्न प्रातिपदिकत्वमिति स्वाद्यभावात्पदत्वाभावः, शिष्टप्रयोगाच्च साधुत्वम् । ननु 'घटोऽस्ति' इति वाक्यात्समवायेनाश्रयतयाऽऽकाशस्याप्युपस्थित्या शाब्दबोधवारणाय शाब्दे वृत्तिज्ञानजन्योपस्थितेरेव हेतुतयाऽभेदपक्षेऽनुकार्य्यस्य बोधनापत्तिरिति, चेन्न, शाब्दं प्रति निरूपकताऽऽश्रयतान्यतरसम्बन्धेन वृत्तिविशिष्टविषयकोपस्थितेरेव हेतुत्वकल्पनात्, अनुकार्य्यविषयकशाब्दबुद्धित्वावच्छिन्नं प्रत्यनुकरणजन्योपस्थितित्वेन कारणताया विशेषरूपेण स्वीकाराच्च ।

"हल्" इदं सूत्रं वल्रल्झल्शल्षु हकारग्रहणार्थम्। 'रुदिहि' 'स्वपिहि' "रुदादिभ्यः सार्वधातुके" (पा० सू० ७।२।७६) इति वलादिलक्षण इट्। 'स्निहित्वा' 'स्नेहित्वा' 'रलो व्युपधाद्' (पा० सू० १।२।२६) इति वा कित्त्वम्। 'अदाग्धाम्' "झलो झलि" रित्यादिस्तु सौत्रः प्रयोगः। अत एवाट्ि हकारप्रयोजनकथनावसरे भाष्ये "शश्छोऽटि" (पा० सू० ८।४।६३) इत्युपन्यस्य तदुदाहरणं नोपन्यस्तम्। हकारपरशकारासम्भवेन शश्छोटीति प्रसङ्गोच्चारितमिति च कैयटेन व्याख्यातम्। 'अमि' हकारप्रयोजनम् 'इति' च भाष्ये नोक्तमिति दिक्॥

इदं सूत्रमिति। वलादिप्रत्याहाराश्च रेफेणैव सन्तु। हरन्त्यमित्यत्र

स्याप्यसाधुत्वापत्तिरत आह—स्कोरिति। आदिना व्योरित्यस्य सङ्ग्रहः। सौत्र इति। एवञ्च शास्त्रबोधितत्वमेवात्रेति भावः। अत एव = तादृशहल्समुदायस्यासाधुत्वादेव। हकारप्रयोजनम् = हकारग्रहणप्रयोजनम्। तदुदाहरणम् = शश्छोटीत्यस्योदाहरणम्। हकारपरेत्यत्र बहुव्रीहिः। असम्भवश्चोक्तरीत्या बोध्यः। उक्तार्थे कैयटोक्तिरपि साधिकेत्याह—हकारपरेति। इतिं चेति। चकारो वाक्यालङ्कारे॥

ननु मूले प्रथमहकारस्याड्ग्रहणेन ग्रहणरूपम्प्रयोजनमुक्तम्, तन्न सङ्गच्छते 'भोभगो' इति सूत्रेऽश्ग्रहणेन यद्यपि 'देवाः सन्ति' 'छन्दःसु' 'पयःसु' इत्यादौ यथाश्रुतप्राचीनरीत्या लोपो वार्यते इति सम्भवति, तथापि वक्ष्यमाणसिद्धान्तरीत्याऽत्राश्ग्रहणस्य न प्रयोजनम्। नच 'वृक्षव्ँकरोति' इत्यस्य साधुत्वाय "हलि सर्वेषाम्" इति सूत्रेऽश्ग्रहणानुवृत्त्यर्थमश्ग्रहणमस्त्विति वाच्यम्, तादृशप्रयोगाणामनभिधानात्। अन्यथाऽशित्यस्य सम्बन्धेऽपि 'वृक्षव्ँहसति' इत्यत्र लोपापत्तिर्दुर्वारैव। अत एव "न पदान्ताः परेऽणः सन्ति" इति लण्सूत्रस्थभाष्यसङ्गतिः। अत एव भाष्येऽश्ग्रहणेन हकारस्य ग्रहणमिति नोक्तमिति, चेन्न, प्रथमहकारस्याट्ग्रहणेन ग्रहणरूपप्रयोजनकथनपरभाष्यस्योपलक्षणत्वात्। अत एवेण्ग्रहणेन ग्रहणस्य 'लिलिहिढ्वे' इति प्रयोजनम्भाष्यानुक्तमपि मूले उपात्तम्। अत एव भाष्यकृता द्वितीयहकारस्य प्रयोजनकथनावसरे विशिष्य तस्य प्रयोजनमुक्त्वा, "यदि किञ्चिदन्यत्राप्युपदेशे प्रयोजनमस्ति तत्राप्युपदेशः कर्त्तव्यः" इत्युक्तमित्याहुः। वस्तुतो मूलोक्तं प्राचामनुरोधेन। यदि किञ्चिदित्यादिना संदिग्धार्थकथनानन्तरमुदाहरणप्रदर्शनेन प्रयोजनान्तराभाव एवानुमीयते। कैयटेनापि तस्य प्रयोजनन्नोपन्यस्तम्। एवञ्च भाष्याविरुद्धप्रयोजनमेवोचितमित्याशयेनाह—दिगिति॥

द्वितीयहकाराभावे लकारस्याप्यसत्त्वमित्याशयेनाह—इदं सूत्रमिति। लकारसाध्यप्रयोजनानामन्यथासिद्धिमाह—वलादीति। आदिना हलादिसंग्रहः। रेफेण = लकारोत्तरवर्त्तिरेफेण। ननु हलिति सूत्रसत्त्वे हलन्त्यमित्यस्यावृत्त्या वक्ष्यमाणरीत्यान्यो-

( पा० सू० ८।२।२६ ) इति सकारलोपः । 'अलिक्षत्' "शल इगुपधात्" ( पा० सू० ३।१।४५ ) इति क्सः ॥

'हलन्त्यम्' (पा० सू० १।३।३ )॥ सूत्रेऽन्त्यमिति । 'हलि अन्त्यम्' इति विग्रहे 'सप्तमी' इति योगविभागात् 'सुप्सुपा' इति ( पा० सू०

अन्योन्याश्रयपरिहारस्तु 'रन्त्यं हर्' इति न्यासेनावृत्त्या, हर्प्रत्याहारबोधकसूत्रसमुदायान्त्यमिदित्यर्थेन वा सुकर इति भावः । ग्रहणार्थमिति । शषसहरित्येव तु नोक्तम्, खरि हकारग्रहणापत्तौ हरिर्हरतीत्यादौ विसर्गापत्तेः । सप्तमीति । अधिकरणकारकस्य कर्त्राद्यन्वयद्वारा क्रियान्वयादस्ति सामर्थ्यमिति भावः । अस्य योगविभागस्य भाष्येऽदर्शना-

न्याश्रयपरिहारो भवति, अधुना कथमत आह—अन्योन्याश्रयेति । रन्त्यं हरिति न्यासेनेति । अत्र वाक्यद्वयम् रन्त्यमित्येकम्, हरिति द्वितीयम्, द्वितीयेऽप्यन्त्यपदस्य सम्बन्धः । अत एव मध्ये पाठः । र इति पृथक् पदम्, अन्त्यं र इति स्वरूपमित्, अन्त्यो हर्वा इत्, इति न्यासभेदे गौरवमित्याशयेनाह—आवृत्त्येति । हरन्त्यमित्यस्यावृत्त्येत्यर्थः । तत्र प्रथमस्यार्थमाह—हर्प्रत्याहारबोधकेति । इदं स्वरूपकथनम्, हकाररेफबोधकस्य हर्शब्दस्य स्वघटितत्वसम्बन्धेन हकारादिरेफान्तसूत्रसमुदाये लक्षणा, नातो दुर्ग्रहत्वं दोषः । द्वितीयस्य तु अन्त्यो हर् हप्रत्याहारबोध्य इदित्यर्थ एव । नन्विदं सूत्रमित्यादिना यत्प्रयोजनं मूलेऽभिहितं तद्द्वितीयहकारमात्रस्यैव तथा च स हकारस्सकारानन्तरं पाठ्यः, तत्सूत्रन्तु नारब्धव्यमत आह—शषसेति । विसर्गापत्तेरिति । नच 'प्रेष्यब्रुवोर्हविष' इत्यत्र हे परे विसर्गादर्शनेन हकारे परे विसर्गो नेति वाच्यम्, 'सुगणहसति' 'प्रत्यङ्हसति' इत्यत्र 'ङ्णोः कुक्टुक्' इत्यस्यापत्तेः । अस्यापि "एङ् ह्रस्वात्सम्बुद्धेः' इति ज्ञापकाद्धकारे परे ङमुट् नेति कल्पनया वारणं भविष्यतीति चेत् ! अनेकस्य ज्ञाप्यस्य वचनस्य कल्पनापेक्षया हस्य परत्र पाठे एव लाघवमिति, ज्ञापकानां सौत्रत्वेनोपपत्तौ ज्ञापकत्वे मानाभावाच्च । ननु सप्तमीति योगविभागात्समास इत्यनुपपन्नम्, अधिकरणकारकस्य क्रियायामेवान्वयेनान्यपदार्थेनासामर्थ्यादत आह—अधिकरणेति । आदिना कर्मपरिग्रहः । यद्द्वारा यस्य क्रियाजनकत्वं तद्द्वारा क्रियान्वयस्यौचित्यादिति भावः । अस्य योगविभागस्य = सप्त-

१—सुप्सुपेतीति—सुबित्यनुवर्त्तमाने 'सुपा' इत्यनेनेत्यर्थः । यथाश्रुतन्तु न युक्तम्, तादृशसूत्राभावात् ।

२—स्वग्रहसापेक्षग्रहकत्वं, स्वोत्पत्त्यधीनोत्पत्तिकत्वान्यतरसम्बन्धेन परस्परविशिष्टत्वमन्योन्याश्रयत्वम् ।

३—'करोति=स्वसम्बन्धेन क्रियायां विशेषरूपत्वं सम्पादयति' इति व्युत्पत्त्या कारकस्य साक्षात्क्रियायामेवान्वयः । तत्रान्वयनियामकश्च सम्बन्धः साक्षाद्रूपः, अधिकरणस्थले स्ववृत्तिवृत्तित्वरूपश्च । तथा च क्रियान्वयित्वं कारकत्वमिति फलितम्, अत एव 'ब्राह्मणस्य पुत्रं पन्थानं पृच्छति' इत्यादौ

२।१।४) वा समास इति भावः। यद्वा षष्ठीतत्पुरुषोऽयम्। स्यादेतत्।

दाह–सुप्सुपेतीति। अनेनापि साधन[2]स्यागतिकगतिक[3]त्वादाह–यद्वेति। हलः=हलितिसूत्रस्यान्त्यमिति विग्रह इति भावः। "षष्ठी स्थाने" (पा० सू० १।१।४९) इत्यस्य च "ऊदुपधाया गोहः" (पा० सू० ६।४।८९) इत्यादाविव, 'गुणानाञ्च परार्थत्वात्' इति न्यायेन वा[4]ऽप्रवृत्तिरिति बोध्यम्।

मेति योगविभागस्य। अगतिकगतिकत्वादिति। अगतिकप्रयोगसाधकत्वादित्यर्थः। विग्रहः = हलः अन्त्यमिति विग्रहः। हलिति सूत्रस्येति कथनं तु फलितार्थसूचनाय। ननु "षष्ठी स्थाने योगा" इति परिभाषया हलः स्थाने योऽन्त्यः स इत् इत्येव सूत्रार्थः किन्न स्यात्, उदाहरणञ्चैतस्य "ङे प्रथमयोरम्" इत्यनेन सुस्थाने जातोऽम् भविष्यतीत्यत आह–षष्ठी स्थाने इत्यादि। गोह इत्यादाविवेति। तत्र यथोपधापदसन्निधानेनावयवार्थकत्वं षष्ठ्या निर्णीतमिति "षष्ठी स्थाने" इति परिभाषाया अप्रवृत्तिः

ब्राह्मणादेर्न कारकत्वम्। न च 'अक्षशौण्डः' इत्यत्र क्रियान्वये शौण्डेन सामर्थ्याभावात्समासानापत्तिः, शौण्डपदस्यासक्तशौण्डे लक्षणया शौण्डपदार्थभूतासक्तिक्रियान्वयेन सामर्थ्यस्य सत्त्वात्। नचैवमपि 'मातुः स्मरति' इत्यादौ कारकत्वापत्तिः, कर्तृत्वादिषट्कान्यतमसम्बन्धेनान्वयस्यैव कारकत्वनियामकत्वात्। 'कारकाणां क्रियान्वयः' इत्यत्र शाब्दबोधस्तु कारकपदस्य संकेतसम्बन्धेन कारकपदवत्स्वरूपस्वार्थतावच्छेदकावच्छिन्नपरतया नेय इति मनोरमाकारादयः।

तन्मते हलरूपाधिकरणस्य क्रियान्वयादन्त्यपदार्थेनासामर्थ्यात्समासाभावाशङ्कायाम् 'क्रियाजनकत्वं कारकत्वम्' कर्त्रादिकारकाणां क्रियायामेव साक्षादन्वयेऽपि अधिकरणकारकस्य परम्परयैवान्वय इति हल्पदार्थस्यान्त्यपदार्थे एवान्वयेन सामर्थ्यात्समासोपपत्तिरिति नवीनमतानुसारेण समाधत्ते—अधिकरणकारकस्येत्यादिना। अधिकरणकारकस्य कर्तृकर्मणोरेवान्वयेन 'अक्षशौण्डः' इत्यत्र न लक्षणोपयोगः। 'अक्षशौण्डस्य धनम्' इत्यादौ तु अगत्या लक्षणा स्वीकार्या। 'मातुः स्मरति' इत्यादौ तु क्रियाजनकत्वेन विवक्षितत्वस्य निवेशाददोषः। 'ब्राह्मणस्य पुत्रम्' इत्यत्र तु ब्राह्मणस्यान्यथासिद्धत्वेन दण्डत्वादेरिव क्रियाजनकत्वाभावान्न कारकत्वम्।

१—एतद्–वक्ष्यमाणं सम्भाव्यत इत्यर्थः, सम्भावनायां लिङः सत्त्वात्।

२—समासरूपकार्यस्येत्यर्थः, साध्यते यत्तत्साधनमिति, बाहुलकात् कर्मणि ल्युड्विधानात्।

३—मूले "अगतिकगतिकत्वात्" इति पाठः, "बहुव्रीहिपूर्वपदकषष्ठीतत्पुरुषः, स्वार्थे क इति भावः" इति भावप्रकाशात्।

४—"गुणानाञ्च परार्थत्वादसम्बन्धः समत्वात्" इति न्यायशरीरम्। इदञ्च "नहि भिक्षुको भिक्षुकान्तरं याचितुमर्हति सत्यन्यस्मिन्नभिक्षुके" इति भाष्योक्तन्यायमूलकमेव।

५—"षष्ठी स्थाने योगा" (पा० १–१–४८) इति सूत्रे भाष्ये "अवयवषष्ठ्यादीनाञ्च नियमस्याप्राप्तिः, किं कारणम्? योगस्यासन्दिग्धत्वात्। सन्देहे नियमः, न चावयवषष्ठ्यादिषु सन्देहः" इत्युक्तेर्लोकाच्च 'निरूपकांशे नित्यसाकाङ्क्षं यद्रूपं तद्रूपावच्छिन्नवाचकपदसमभिव्याहृतषष्ठ्या येन सम्बन्धेन साकाङ्क्षत्वं तदितरसम्बन्धाबोधकत्वम्' इति नियमात्। स्वघटकस्य–स्वघटकान्त्याक्षर-

हलित्येकदेशस्यैव तन्त्रावृत्त्येकशेषान्यतममस्तु। 'हस्य ल्' इति च

तन्त्रावृत्त्येकशेषान्यतममस्त्विति। यद्यपीदृशे विषये उच्चारयितुस्तन्त्रैकशेषान्य-
तरेणोच्चारणम् बोद्धुस्त्वावृत्त्या बोध इत्येवानुभवसिद्धम्, तथापि व्यव-

तथात्रान्त्यपदसन्निधानेन तदप्रवृत्तिरिति भावः। इति न्यायेनेति। गुणानाञ्च परार्थ-
त्वादसम्बन्धः समत्वात्स्यादिति न्यायेनेत्यर्थः। अत्र गुणानाम्परार्थत्वात्समत्वादसम्बन्ध
इत्यन्वयः। संज्ञासूत्रस्य परिभाषायाश्च विध्युपकारकत्वेन गुणत्वात्तयोः समत्वमस्त्यतः
परस्परमनयोरुपकार्योपकारकभावो न भवतीति भावः।

हलन्त्यमिति संपूर्णसूत्रावृत्त्यपेक्षयैकदेशस्यैवावृत्तिरस्त्विति शङ्कते मूले—स्यादेत-
दित्यादिना। एकस्य शब्दस्यानेकार्थपरत्वे तन्त्रव्यवहारः, यथा 'अक्षान्पश्य' इत्यत्रा-
क्षशब्दो देवनाक्षरथाक्षविभीतकाक्षस्य बोधकस्तथाऽत्रापि हल्शब्द उभयपरोऽस्तु। सकृ-
दुच्चरितः शब्दः सकृदर्थङ्गमयति' इति न्यायस्य 'गङ्गायाम्मीनघोषौ स्तः' इत्यादौ व्यभि
चारस्य दर्शनादनाश्रयणमिति भावः। इदमेकशेषस्य प्रत्याख्यानपक्षे। शास्त्रीयप्रयोग-
निर्वाहार्थन्तदारम्भे त्वाह—एकशेषेति। यत्र सकृदुच्चारितस्यैकस्य शब्दस्य समाना-
नेकार्थपरता तत्र श्रुतस्यैकस्य शक्त्या, लक्षणया वाऽनेकार्थबोधकत्वसम्भवः, यत्र तु
विरुद्धानेकार्थबोधकता तत्रैकानुसन्धानेनानेकार्थबोधकत्वासम्भवः। यथा 'पुण्यजनाश्र-
योऽयं देश' इत्यादौ। अत्र हि 'पुण्यजनाश्रयः' इत्यर्थविवक्षायां तात्पर्यग्राहकसत्त्वे
धार्मिकबोधकत्वेन चरितार्थस्यार्थान्तराबोधकत्वम्। यदा तु रूढ्या 'यातुधानस्य बोधो
जायताम्' इति तात्पर्यन्तत्र सामग्रीसत्त्वे यातुधानबोधकत्वम्, न तदा धार्मिकबोधक-
त्वमिति तादृशस्थले आवृत्तिं विना नानेकार्थप्रतीतिरिति। प्रकृते हल्शब्दस्य विरुद्धार्थ-
कतया तन्त्रनिर्देशस्यावृत्तेश्च समानफलकत्वाभावेनान्यतमशब्दप्रयोगानुपपत्तिरित्याशयेन

वहितपूर्वत्वोभयसम्बन्धेन समुदायविशिष्टत्वरूपोपधात्वस्यावयवावयविभावसम्बन्धेन समुदाये साकाङ्क्ष-
तया गोह इति षष्ठ्या अवयवावयविभावबोधकत्वमिव 'हलः—अन्त्यम्' इत्यत्रापि स्वघटकत्व—स्वघटको-
च्चारणप्रागभावाधिकरणक्षणावृत्तित्व—स्वघटकोच्चारणध्वंसाधिकरणक्षणवृत्तित्वैतत्रितयसम्बन्धेन समुदाय-
विशिष्टस्वरूपान्त्यत्वस्य समुदाये नित्यसाकाङ्क्षतया हल इति षष्ठ्या अवयवावयविभावसम्बन्धबोध-
कत्वनिश्चयस्य सत्त्वेन सन्देहाभावात् "षष्ठी स्थाने" इत्यस्याप्रवृत्तिरिति भावः।

१—अयम्भावः—'श्रोतॄणामनेकार्थविषयकबोधो भवतु' इति तात्पर्येणैकोच्चारणम् तन्त्रम्। तत्र
'घटाः' इत्यादिस्थले कथञ्चिदावृत्तिमन्तरा बोद्धुरेकशब्दानुसन्धानेनाविरुद्धानेकार्थबोधसम्भवेऽपि, यत्र
"सुखिते, दुःखिते चेतसि दवदहनदीधितिराशिस्तुहिनदीधितिः" इत्यादौ सुखिते चेतसि दवदहनदी-
धितिराशिः—वनाग्निसमूहः। तुहिनदीधितिः—चन्द्रकिरणः। दुःखिते चेतसि तुहिनदीधितिर्दवदहन-
दीधितिराशिः' इत्युद्देश्यविधेयभेदेन विरुद्धार्थतया यथाऽऽवृत्त्यैव बोद्धुर्बोधः। तथा हलन्त्यमित्यत्रापि
हल्पदार्थस्याप्रसिद्धार्थतया 'हसमीपो ल् इत्' 'हल्रूपान्त्यश्च इत्' इत्यर्थयोर्विरुद्धतया बोद्धुः केवलावृत्त्यैव
बोधेनैच्छिकविकल्पबोधकान्यतमशब्दप्रयोगोऽसङ्गत इत्याशङ्क्याह—ईदृश इति—विरुद्धानेकार्थविषयेऽप्यत्र

**व्याख्यास्यते। सामीप्यं षष्ठ्यर्थः। यद्वा मास्तु तन्त्रादि। अस्तु समा-**

---

स्थितैवान्यतमसत्ताऽनेन बोध्यत इति न दोषः। एकशेषश्च प्रत्याख्यातोऽसहविवक्षायामपि शास्त्रमात्रप्रक्रियोपयोगीत्याशयेन पृथगुक्तः। सामीप्यं

---

शङ्कते—यद्यपीति। ईदृशे विषये = विरुद्धानेकार्थविषये। व्यवस्थितैवेति। एवकारणैच्छिक्या व्यावृत्तिः। सा च व्यवस्था वक्तृश्रोत्रन्यतरपरत्वेन कल्पनीया। वक्तुस्तन्त्रेणैकशेषेणैवोच्चारणम्, बोद्धस्तूभयत्राप्यावृत्तिरेवेति। एवञ्च तन्त्रावृत्ती वा एकशेषावृत्ती इति बोध्यम्। न दोष इति। वक्त्रभिप्रायेण त्रितययोजने योऽनुभवविरोधरूपो दोषः स नेत्यर्थः।

नन्वेकशेषस्य प्रत्याख्यानादन्यतमशब्दानुपपत्तिरित्यत आह—एकशेषश्चेति। प्रत्याख्यात इति। लौकिकशब्दसाधकत्वेन भाष्यकृता निराकृत इत्यर्थः। प्रत्याख्यानञ्च सहविवक्षायां सजातीयानेकशब्दानान्द्वन्द्वादर्शनेन तन्त्रेणैकेनैव शब्देनानेकार्थस्य बोधसम्भवे तदर्थमेकशेषो नारब्धव्य इति रीत्या कृतः। नच शास्त्रीयप्रयोगसाधकत्वेन तस्यावश्यकत्वेन प्रत्याख्यात इत्यसङ्गतमिति वाच्यम्, लौकिकप्रयोगासाधकत्वेनैतदर्थमनावश्यक इति तदर्थात्। नन्वेवम्पाणिनेः सूत्रकरणासङ्गतिरत आह—असहविवक्षायामिति। तदेतदुक्तम् सर्वादिसूत्रभाष्ये तत्र हि—संज्ञोपसर्जनव्यावृत्तिसमये 'सर्वादीनि' इति सूत्रेण सर्वनामसंज्ञा क्रियते, पाठश्च विशेष्यते, कथम्पुनरेकेन यत्नेन उभयं लभ्यम्? लभ्यमित्याह "एकशेषनिर्देशात्सिद्धम्" इति। इत्याशयेनेति। भाष्यकृत इति शेषः। पृथगुक्त इति। मूले दीक्षितैरिति शेषः। असहविवक्षा च प्रकृतसूत्रेऽप्युक्तरीत्या अस्त्येव।

---

वक्तृबोद्धृन्यतरसम्बन्धित्वेन त्रयाणामैच्छिकविकल्पस्य विवक्षितत्वात्। तन्त्रावृत्ती, एकशेषावृत्ती, आवृत्तिर्वास्तु इति त्रयाणां सत्ताया बोधनात् प्रत्येकसम्बन्धित्वेन बोधेऽन्यतमशब्दप्रयोगासङ्गतत्वेऽपि उक्तरूपेण=अन्यतरसम्बन्धित्वेन, नियतसत्तायाः सम्भवाददोषः। वक्तृश्रोत्रोरन्यतराभिप्रेतत्वेन तन्त्रावृत्तीः एकशेषावृत्ती श्रोतुस्तु शुद्धावृत्तिरेव, श्रोतरि श्रोतुः शब्दानुसन्धानद्वयं भवत्विति तात्पर्येणोच्चारणरूपतन्त्रस्यैकशेषेणोच्चारणस्य चाभावादिति भावः।

१—एकधर्मावच्छिन्नस्य एकधर्मावच्छिन्नसंसर्गेणैकधर्मावच्छिन्नेऽन्वयरूपायामित्यर्थः। एकधर्मश्च समुदायत्वरूपः। तथा च 'ईश्वरं गुरुञ्च भजस्व' इति प्रत्येकान्वयाभिप्रायेण प्रयोगे। एकस्य कर्तृतयाऽपरस्य कर्मतयाऽन्वये, ध्यान–भजनरूपविभिन्नक्रियायामन्वये च सहविवक्षाया अभावात्समासाभावः। तन्त्रेणैव लौकिकलक्ष्याणां सिद्ध्या "सरूपाणाम्" इत्यस्य भाष्यकृता प्रत्याख्यातत्वेऽपि "सर्वादीनि सर्वनामानि" (पा० सू० १–१–२७) "द्विर्वचनेऽचि" (पा० सू० १-१-५८) इति सूत्रयोः "एकशेषनिर्देशाद्वा सिद्धम्" इति तदुक्त्याऽसहविवक्षायामपि सौत्रमात्रप्रयोगार्थं तस्यावश्यकत्वं सूचितम्। 'सर्वनामानि' इति पदे एकशेषेण 'सर्वनामानि=सर्वार्थवाचकानि यानि सर्वादीनि तानि सर्वनामानि=सर्वनामसंज्ञकानि, इत्यर्थे एकत्रान्वयाभावेन, "द्विर्वचनेऽचि" इत्यत्र 'द्विर्वचने' इत्यस्यैकशेषेणैकस्य द्विर्वचने कर्तव्ये इत्यर्थकत्वात् क्रियायामन्वयेन, द्वितीयस्य 'द्वित्वनिमित्तेऽचि' इत्यर्थकतयाऽजादौ प्रत्यये

**हारद्वन्द्वो हल् च ल् चेति । लकारस्य संयोगान्तलोप इति चेन्मैवम् ।**

षष्ठ्यर्थं इति । 'षष्ठी स्थाने' इत्यस्य 'गुणानां च परार्थत्वात्' इति न्यायेना- प्रवृत्तिः । न च 'इको गुणवृद्धी' (पा० सू० १।१।३) इति सूत्रे तच्छेषश- ब्देन परिभाषयोरपि गुणगुणिभाव उक्त इति वाच्यम्, 'सार्वधातुकार्ध- धातुकयोः' 'अलोन्त्यस्य' 'इको गुणवृद्धी' इति सूत्रत्रयस्य लक्ष्यसंस्कारक- महावाक्ये[2] विशेष्यविशेषणभावमादायैव तच्छेषव्यवहारो न तु गुणगु-[3]

ननु सामीप्यं षष्ठ्यर्थं इत्यनुपपन्नम्, "षष्ठी स्थाने" इति परिभाषायाः सत्वादत आह–षष्ठी स्थान इत्यस्येति । ननु हस्थानिकलकाराभावात्परिभाषायाः कथम्प्रवृत्तिः नचोपानह्लुनार्तात्यस्त्येवेति वाच्यम्, उपदेशेऽतथात्वादिति चेत्, न, लक्ष्याभावेन परिभाषाया अप्रवृत्तिकल्पनाऽपेक्षया न्यायेन तदप्रवृत्तिकल्पनं युक्तमित्याशयात् ।

'गुणानाञ्च' इति न्यायस्य व्यभिचारमाशङ्क्य निराचष्टे–नचेत्यादिना । तच्छेष- शब्देन = तस्य शेषः, स शेषो यस्येति वेत्यर्थकतच्छेषशब्देन । परिभाषयोः = 'अलोन्त्य- स्य' 'इकोगुणवृद्धी' इत्यनयोः परिभाषयोः लक्ष्यसंस्कारकेति । एतेन तेषां स्वस्व- प्रदेशेऽपि वाक्यार्थबोधजनकत्वमस्त्येवेति ध्वनितम् । गुणगुणिभावेन = अङ्गाङ्गिभावेन ।

ऽन्वयेनैकत्रान्वयाद्यभावादुक्तरूपासहविवक्षा नास्तीति तत्रैकशेषार्थं सूत्रमित्याशयेन मनोरमाकृता तन्त्रात्पृथगेकशेष उक्त इति भावः ।

१—"इको गुणवृद्धी" ( पा० सू० १·१ ३ ) इति सूत्रे भाष्ये·"किं पुनरयमलोन्त्यशेषः ? आहो- स्विदलोन्त्यापवादः ? कथचायं तच्छेषः स्यात्कथं वा तदपवादः ? यद्येकं वाक्यं तच्चेदञ्च, अलोऽन्त्य- स्य विधयो भवन्ति इको गुणवृद्धी अलोन्त्यस्येति, ततोऽयं तच्छेषः अथ नानावाक्यम्–अलोऽन्त्यस्य विधयो भवन्ति, इको गुणवृद्धी अन्त्यस्य चानन्त्यस्य चेति" इत्युक्तम् । अस्यायम्भावः·"सार्वधातुकार्ध" इति गुणविधायके 'अङ्गस्य' इति स्थानषष्ठ्या "अलोऽन्त्यस्य" इत्युपतिष्ठते, गुणश्रुत्या च 'इक' इति, तत्र यदि पूर्वमिकाङ्गं विशिष्य इगन्ताङ्गस्य गुणो भवति स च भवन्नलोन्त्यस्येत्यन्त्यस्येत्युच्यते, तदा सः= अलोऽन्त्यस्य इति सूत्रम् अस्य=इको गुणवृद्धी, इत्यस्य शेषो भवतीति तच्छेष इत्यत्र बहुव्रीहिः यदा तु 'अङ्गस्य' इति षष्ठी पूर्वमन्त्येनाला विशेष्यते अङ्गान्त्यस्य गुणो भवति इति स च भवन्निगभिन्नस्येति 'इगभिन्नस्यान्त्यालः' 'अन्त्यालभिन्नस्येकः' इति विशेष्यविशेषणभावव्यत्यासकल्पनेन द्विधा तच्छेषपक्षो भवति । उभयथापि यत्रेगभिन्नान्त्यालस्यात्, तत्रैवोपस्थितिरनयोः स्यादिति 'मिदेर्गुणः' इत्यादावुपस्थि- तिरेव न स्यादिति सर्वस्य मिदेर्गुणः स्यादिति तच्छेषपक्षोऽसङ्गतः । यदि तु 'अङ्गस्य' इति अवयवषष्ठी तदा अङ्गावयवस्येको गुण इत्याद्यर्थं इति स्थानषष्ठ्यभावेन 'अलोन्त्यस्य' इत्यस्य उपस्थितेरभावात्तदप- वादपक्ष इति परिभाषयोरपि गुणगुणिभावदर्शनादत्रापि "षष्ठी स्थाने" इत्यस्य प्रवृत्तिः स्यादिति भावः ।

२—"सार्वधातुकार्द्धधातुकयोः" इत्यत्र परिभाषोपस्थाप्यार्थस्य 'इकः' इत्यस्य 'अन्त्यस्यालः' इत्यस्य च विशेष्यविशेषणभावेन सार्वधातुकार्द्धधातुकाव्यवहितपूर्वस्याङ्गावयवस्य 'अन्त्यालभिन्नेकः' 'इगभिन्नान्त्यालो वा गुणः' इति महावाक्यार्थे विशेष्यविशेषणभावमादायैव तच्छेषव्यवहार इति भावः ।

३—परिभाषयोरिति शेषः ।

आद्ये समासस्य क्लिष्टत्वात् । न हि 'ब्राह्मणकम्बलः' इत्यादौ ब्राह्मणसमीपवर्त्यन्यदीयः कम्बलः प्रतीयते । न वा चित्रगुशब्दाच्चित्र-

---

णिभावेन परस्परापेक्षत्वेन वेति कैयटेन स्पष्टमुक्तेः, एतन्मूलकतयैव तत्पक्षासम्भवस्य तेनोक्तेश्चेति भावः ॥

क्लिष्टत्वादिति । 'ब्राह्मणस्य कम्बलः' इत्यादावसत्यपि प्रकरणादौ स्वस्वामिभावादिप्रतीतिवदनन्तरसमीपादिशब्दप्रयोगमन्तरेण सामीप्याद्यप्रतीतेः, तस्य षष्ठ्यर्थत्वाभावात्,तत्प्रयोगे त्वसामर्थ्यात् षष्ठीसमासाप्राप्तिरिति मध्यमपदलोपिसमासे, सौत्रे वा तत्र समासस्य क्लिष्टत्वमिति भावः । तदेतदाह—नहीत्यादिना तत्रानिष्ट इत्यन्तेन । चित्रगवीणामिति । 'कुमति च'

---

परस्परापेक्षत्वेन = परस्परनिमित्तिनिमित्तभावेन । यथा—'चक्षिङः ख्याञ्' इत्यादेः "षष्ठी स्थाने" इति सूत्रपरामर्शं विना वाक्यार्थबोधजनकत्वं नास्तीति तयोः परस्परनिमित्तनिमित्तिभावस्तथात्र नास्तीति भावः । विशेष्यविशेषणभावमात्रेण तच्छेषत्वकल्पनमपि न युक्तमित्याह—एतन्मूलकतया = उक्तन्यायमूलकतया । तत्पक्षासम्भवस्य = परिभाषयोरेव तच्छेषत्वमिति पक्षासम्भवस्य ।

प्रतीतिवदिति । यथा तत्र स्वस्वामिभावप्रतीतिर्भवति तथाऽनन्तरादिशब्दप्रयोगं विना सामीप्यं न प्रतीयत इति वैपरीत्ये दृष्टान्तः । षष्ठ्यर्थत्वाभावादिति । तथाच सामीप्यस्य षष्ठ्यर्थत्वाभावे तस्मिन्नर्थे समासोऽपि नोपपद्यत इति भावः । ननु वृत्त्या तस्यार्थस्य प्रतीत्यर्थं वाक्ये ते शब्दा उपादेया अत आह—तत्प्रयोग

---

१–'इको यणचि" 'तस्मिन्निति निर्दिष्टे' इत्यनयोर्यथा परपस्परसाङ्क्षत्वेनाप्रामाण्यज्ञानानास्कन्दितबोधजनकत्वं तथाऽत्र नास्तीत्यर्थः । २–गुणानाञ्च परार्थत्वादिति न्यायमूलकतयेत्यर्थः । ३–कैयटेनेति बोध्यम् । ४–सरूपसूत्रे भाष्ये कृतद्वन्द्वानां एकशेष इति पक्षे 'ऋक्च ऋक्च ऋचौ' इत्यत्र असारूप्यादेकशेषो न प्राप्नोति" इति भाष्योक्तेः, 'ऋचौ' इत्यत्र "ऋक्पुर" इत्यप्रत्ययस्य समासावयवत्वे पूर्वोत्तरपदयोः सरूपत्वसत्त्वेनासङ्गत्यापत्त्या समासान्तानानुत्तरपदावयवत्वं ध्वनितम् । तथाचैकस्यादन्तत्वेनापरस्य हलन्तत्वेन "असारूप्यात्" इति भाष्योक्तिः सङ्गच्छते । अत एव "अकारान्तोत्तरपदो द्विगुः स्त्रियामिष्टः" इति वार्तिकात् 'द्विधुरी' इत्यादौ स्त्रीत्वान्ङीप्सिद्धिः । अत एव समासान्तानामुत्तरपदावयवत्वमित्यपि भाष्यकारस्य मतम् इति सरूपसूत्रे कैयट इति प्राचीनाः । नवीनास्तु 'समासान्ताः समासावयवा एव' उक्तभाष्यस्य कृतद्वन्द्वानां विभक्तौ परत एकशेषः इति पक्षे प्रवृत्तत्वेन विभक्त्यव्यवहितपूर्वत्वविशिष्टस्य 'ऋचः' इत्यदन्तस्य सारूप्याभावेन समासावयवत्वपक्षेऽपि विरोधाभावः । 'द्विपुरी' 'द्विधुरी' इत्यादि तु 'अर्धनावम्' 'द्विखारम्' इतिवत् "लिङ्गमशिष्यं लोकाश्रयत्वाल्लिङ्गस्य" इति भाष्योक्त्या लिङ्गविधायकशास्त्राणां प्रत्याख्यानरीत्या सिद्धम् । अत एव 'बहुकुमारीकः, इत्यादौ "गोस्त्रियोः" इति ह्रस्ववारणाय "समासान्ताः" इत्यत्र समासपदस्य लक्षणया अलौकिकविग्रहवाक्यपरत्वमाभित्यान्तरङ्गत्वात् कपं विधाय

(पा० सू० ८।४।१३) इति णत्वम्। दन्त्यपाठस्तु लेखकप्रमादात्। एवं

इति। लेखकप्रमादादिति। अत्राहुः प्रमादाभिधानमनवधानेन तथाहि-चित्र-शब्दगोशब्दयोः कर्मधारयसमासे "गोरतद्धितलुकि" इति टच्। अयमुत्तरपदस्यावयव इति नात्रैकाज्ञुत्तरपदकसमासत्वम्। समासान्तस्योत्तरपदावयवत्वादेव 'द्विपुरी' इत्यादावदन्तोत्तरपदकद्विगुत्वसत्त्वात्स्त्रीत्वमिति ङीप्सिद्धिः। 'उपशरदम्' इत्यत्राव्ययीभावस्यादन्तत्वन्त्ववयवावयवस्य समुदायावयवत्वेनास्तीति "नाव्ययीभावाद्" इति सूत्रप्रवृत्तिरिति, तन्न, "समासान्ताः" इत्यत्रयत्समासपदन्तस्य समासार्थवाक्यलक्षणयाऽलौकिके प्रक्रियावाक्ये सुबन्तसमुदायात्समासान्तस्य प्रवृत्तिरित्यस्य सिद्धान्तस्य वक्ष्यमाणतया, टचः समुदायावयवत्वेनैकाज्ञुत्तरपदकसमासत्वमस्त्येवेत्याशयात्। 'द्विपुरी' इत्यादौ समुदायस्य स्त्रीत्वन्तु 'लिङ्गमशिष्यं लोकाश्रयत्वाल्लिङ्गस्य' इति 'समासान्ताः' इति सूत्रभाष्योक्त्या लिङ्गानुशासनस्य लोकसिद्धलिङ्गानुवादकत्वेन प्रकृते लोकादेव सिद्धम्, अत एव 'परवल्लिङ्गम्' इति सूत्रसत्त्वेऽपि 'द्विनावम्' 'अर्द्धखारम्' इत्यत्र नपुंसकत्वस्य सिद्धिः। समासान्तानां समुदायावयवत्वादेव 'अकारान्तोत्तरपदो द्विगुः स्त्रियामिष्टः' इत्यत्रोत्तरपदग्रहणञ्चरितार्थम्। यत्तु—टचः समुदायावयवत्वेऽपि "कुमति च" इति सूत्रे

ह्रस्वाभावसाधनपरं भाष्यं सङ्गच्छते। उत्तरपदावयवत्वे तु यदागमन्यायेन कञ्चिविशिष्टस्य स्त्रीप्रत्ययान्ततया ङीपो निर्दिश्यमानत्वेन ह्रस्वत्वापत्त्या भाष्यासङ्गतिः स्यात्।

अत एव "अन्तः" इति सूत्रे समासस्य, उत्तरपदस्य वाऽन्तोदात्तत्वमिति शङ्कायाम् आद्ये 'इदं प्रथमकाः' इत्यत्र कपोऽन्तोदात्तत्वापत्तिः, द्वितीये 'अनृचः' इत्यत्रान्तोदात्तत्वासिद्धिरिति भाष्यसङ्गतिः। उत्तरपदावयवत्वे तूभयसिद्ध्या तदसङ्गतिः स्पष्टैव। एतेन 'उपशरदम्' इत्यादावुत्तरपदावयवत्वेपि 'अवयवावयवः समुदायावयवः' इति न्यायेनाम् सिद्धिरित्यपास्तम्, उक्तभाष्यविरोधेन मूलस्यैवाभावात्। नन्वेवमपि "कुमति च" इत्यस्यासिद्धतया 'पंकाज' इति णत्वं न्याय्यम्, इति, चेन्न, असिद्धत्वस्य कार्यार्थतया फले विशेषाभावेन तदप्रवृत्तेः, प्रतिपदविधित्वेन शीघ्रोपस्थितिकतया 'कुमति च' इत्यस्यैव प्रवृत्तेश्च। न चान्तवर्तिविभक्त्या गोशब्दस्य पदतया 'पदव्यवायेऽपि' इत्यनेन णत्वनिषेधः, 'उत्तरपदत्वे' इति प्रत्ययलक्षणप्रतिषेधस्तु न, अपदादिविधाविति पर्युदासेन पदान्तविधावेव तत्प्रवृत्तेरिति वाच्यम्, 'अतद्धिते' इति वक्तव्यम्' इति वार्तिकैकवाक्यतया णत्वाश्रयातिरिक्तो यस्तद्धितभिन्नोऽर्थवान् तत्परकं यत्पदं तादृशपदव्यवधाने एव निषेधप्रवृत्तेः। णत्वाश्रयातिरिक्तेत्युक्त्या 'रम्यविणा'इत्यत्र, तद्धितभिन्नेत्युक्त्या 'आर्द्रगोमयेण' इत्यत्र च णत्वसिद्धिः, 'ना' इत्यस्य णत्वाश्रयत्वात् 'मय' इत्यस्य तद्धितत्वाच्च। 'चतुर्बहङ्गेण' इत्यत्र बहुचः पदत्वाभावेन णत्वाश्रयातिरिक्तस्तद्धितभिन्नो योऽङ्गशब्दस्तत्परकत्वेऽपि न दोषः। यत्तु—'निष्कृतम्' 'दुष्पीतम्' इत्यादौ सत्वस्यासिद्धतया षत्वाप्राप्त्या 'प्रकरणे प्रकरणान्तरमसिद्धम्' भाष्योक्तरीत्या परत्वात् 'कुमति च' इत्यस्य प्रवृत्तिरिति, तन्न, 'भोश्छिन्धि' 'भगोश्छिन्धि' हरिवंश्छिन्धि' इत्यादौ 'नश्छव्यप्रशान्' (पा० सू० ८।३।७) इत्यस्य 'मतुवसो रु' (पा०-सू०-८।३।१) इत्यपेक्षया परत्वात्तेनैव रुत्वे 'अत्रानुनासिकः' इत्यस्याधिकारपक्षे तदुत्तर 'नश्छव्य' इति सूत्रविहितरुत्वसत्वेनानुनासिकाबापत्त्या कैयटेनैव तत्पक्षस्य 'उपसर्गादसमासे'(पा०सू०८।४।१४) इति सूत्रे दूषितत्वात्, 'निष्पीतम्, इत्यादौ विसर्गस्यैव षत्वसिद्ध्या फलाभावेन तत्पक्षस्यैकदेश्युक्तत्वाच्चेति दिक्।

स्त्रीगवीणामित्येकशेषप्रकरणान्तस्थकैयटप्रयोगेऽपि, बोध्यम् । अस्तेर-

उत्तरपदेन समासस्याक्षेपे, विभक्त्या च प्रकृतेरिति प्रत्यासत्त्योभयोरेकत्वाश्रयेणैकाजु-त्तरपदकसमासरूपप्रकृतिकविभक्तेर्ग्रहणमिति नात्र णत्वस्य प्राप्तिः, विभक्तिप्रकृतित्वं ङीबन्तस्य, समासत्वन्तु टजन्तस्येति भेदादिति, तन्न, स्त्रीप्रत्ययरहिते दृष्टानाम्प्रातिप-दिकत्व-तद्व्याप्यधर्माणां लिङ्गबोधकप्रत्ययविशिष्टेऽतिदेशेन "प्रातिपदिकग्रहणे" इति परि-भाषया ङीबन्ते सुप्प्रकृतौ समासत्वस्य प्रातिपदिकत्वव्याप्यस्य सत्त्वेनोभयोर्भेदाभा-वात्, आक्षिप्तस्यार्थस्य शाब्दबोधे भाने मानाभावाच्च ।

न चैवं सति "कुमति च" इति सूत्रभाष्ये 'मापकुम्भवापेन' इत्यत्र षष्ठीतत्पुरुषो-त्तरपदकसमासे नित्यणत्वेन भवितव्यम्, षष्ठीतत्पुरुषे तु प्रातिपदिकान्तेति विकल्पेन भवितव्यमिति प्रतिपादितम्, तच्च प्रत्यासत्त्याश्रयण एव सङ्गच्छते । अन्यथा वैकल्पिक-णत्वापवादस्य "कुमति च" इत्यस्योभयथापि प्राप्तिरिति तदसङ्गतिः स्पष्टैवेति वाच्यम्, एतस्य भाष्यस्य यथाकथञ्चिदत्र णत्वस्य प्राप्तिरित्यत्र तात्पर्यात् । णत्वन्तु तत्र "पद-व्यवायेऽपि" इति निषेधान्न भवत्येव । किञ्च पूर्वोक्तप्रत्यासत्त्याश्रयणे 'बहुचतुरङ्गेण' इत्यत्र "विभाषा सुपो बहुच्पुरस्तात्" इति बहुचि विभक्तिप्रकृतित्वम्बहुज्विशिष्टस्यैकाजु-त्तरपदकसमासत्वञ्चतुरङ्गशब्दस्येति भेदाण्णत्वन्न स्यात् । नन्वेवमप्यन्तर्वर्तिविभक्त्या गोशब्दस्य पदत्वात् 'पदव्यवायेऽपि' इति निषेधः स्यात्, "उत्तरपदत्वे चापदादिविधौ" इति प्रत्ययलक्षणप्रतिषेधस्तु वक्तुमशक्यः, 'अपदादिविधौ' इति पर्युदासबलेन पदा-न्तविधावेव तस्य निषेधस्य प्रवृत्त्यङ्गीकारादिति, चेन्न, 'अतद्धित इति वक्तव्यम्' इति वार्तिकैकवाक्यतया णत्वाश्रयातिरिक्तो यस्तद्धितभिन्नस्तत्परकपदव्यवाये निषेधस्य प्रवृत्त्यङ्गीकारात् ।

अत एव 'रम्यविणा' 'आर्द्रगोमयेण' 'चतुर्बह्वङ्गेण' इत्यत्र णत्वस्य सिद्धिः । आद्ये आङो नाभावे पूर्वस्य विशब्दस्य पदत्वमस्त्येवेति, तद्धितभिन्ने तस्मिन्परे सति निषेधा-भावाय णत्वाश्रयातिरिक्तेति । द्वितीये मयटो णत्वाश्रयातिरिक्तत्वात्तस्मिन्परे यत्पदङ्गो-शब्दस्तेन व्यवधानेऽपि णत्वसिद्धये तद्धितभिन्नेति । तृतीये णत्वाश्रयातिरिक्तो यस्तद्धित-भिन्नोऽङ्गशब्दस्तत्परत्वात्तेन व्यवधानेऽपि णत्वसिद्धये पदेति । एवञ्च 'चित्रगवीणाम्' इत्यत्र गोशब्दस्य णत्वाश्रयातिरिक्ततद्धितभिन्नपरत्वाभावाण्णत्वम्भवत्येव ।

नन्वेवमपि "कुमति च" इति णत्वमित्यनुपपन्नम्, अस्यासिद्धत्वात् "एकाजुत्तर-पदे णः" इत्यस्य प्राप्तेः । 'कुमति च' इति सूत्रस्य 'एकाजुत्तरपदे णः' इति सूत्रापवाद-त्वन्तु वक्तुमशक्यम्, 'चतुरङ्गेण' 'मापकुम्भाणाम्' इत्यत्रैकाजुत्तरपदकत्वाभावेऽपि कव-र्गवदुत्तरपदकत्वस्य सत्वात्तस्य प्राप्तेरिति येन नाप्राप्तिन्यायस्य विषयाभावादिति, चेन्न, असिद्धत्वस्य कार्यार्थतया यत्र फले विशेषस्तत्रैव तत्प्रवृत्तेः स्वीकारात् ।

नन्तरे समीपे वा इत्यादिभाष्यं त्वनन्तरादिपदाध्याहारेण तन्निरूपित-सम्बन्धार्थिका, स्थानपदाध्याहारेण तन्निरूपितसम्बन्धार्थिका वा षष्ठीत्यभिप्रायकम्। अत एव मतुप्सूत्रे कैयटेन 'गावोऽस्य सन्त्यनन्तराः' इत्यर्थे मतुप्शङ्कापरभाष्यव्याख्यावसरे आनन्तर्यमस्त्यर्थवत्प्रकृत्यर्थोपाधिरित्यु-

---

'किञ्च प्रतिपदविधित्वेन' 'कुमति च' इति सूत्रस्य प्रवृत्तिर्न्याय्या। प्रतिपदविधित्वन्निरवकाशत्वे एव बाधप्रयोजकमिति तु न भ्रमितव्यम्, 'अपरशालः' इत्यत्र 'दक्षिणपूर्वा' इत्यत्र चरितार्थस्यापि 'सर्वनाम्नो वृत्तिमात्रे' इत्यस्य भाष्यकृता प्रत्ययलोपसूत्रे प्रवृत्त्यङ्गीकारात्।

यदि निरवकाशत्वे एवेति नियमस्तर्हि 'स्त्रियाः पुंवत्' इत्यस्य सूत्रस्यैव प्रवृत्तिर्वक्तव्या, न तु स्त्रीयेष्टेरिति शीघ्रोपस्थितिकत्वेन प्रतिपदविधित्वम्पूर्वप्रवृत्तौ नियामकं भवत्येव।

प्रकरणान्तस्थेति। त्यदादीनीति सूत्रस्थेत्यर्थः। मूले अनन्तरादिष्विति-आनन्तर्यादिष्वित्यर्थः। ननु यद्यानन्तर्यन्न षष्ठ्यर्थस्तदा 'अस्तेर्भूः' इति सूत्रे षष्ठीमात्रोच्चारणे सन्देहप्रतिपादनपरम् 'अस्तेरनन्तरे समीपे वा' इति भाष्यमनुपपन्नमत आह—अस्तेरनन्तर इत्यादि। तन्निरूपितेति। आनन्तर्यनिरूपितो यः सम्बन्धो निरूपकत्वाश्रयत्वान्यतररूपस्तदर्थिका। अध्याहारेणैव भाष्ययोजना कार्येत्यत्र दृष्टान्तमाह—स्थानपदेति। नच स्थानपदं षष्ठ्यर्थ एवेति एतत्प्रतिपत्तयेऽध्याहारो नावश्यक इति वाच्यम्, 'स्थानेन योगो यस्याः' इति व्यधिकरणपदकबहुव्रीहिप्रदर्शनपरभाष्यात् स्थानरूपः सम्बन्धो न षष्ठ्यर्थः। अन्यथा स्थानं योगो यस्या इत्येव वदेदित्याशयात्। निपातनात्साधुत्वमितितूभयथा वक्तव्यमेव। एवञ्च स्थाननिरूपितो यः सम्बन्धो निवर्त्यनिवर्त्तकभावः स एव षष्ठ्यर्थः। कैयटेनापि स्थाननिमित्तसम्बन्ध इति वदता स्थानरूपः सम्बन्धो न षष्ठ्यर्थ इति ध्वनितमेव। नचास्य दृष्टान्तपरतया योजनायां वाशब्दप्रयोगासङ्गतिरिति वाच्यम्, अत्रत्यवाशब्दस्येवार्थकत्वात्, 'ववा यथा तथा साम्ये' इत्यमरात्। एवञ्च 'षष्ठी स्थाने' इति सूत्रपर्यालोचनात्प्राग्वाक्यार्थपर्यवसानायाध्याहारोऽवश्यङ्कार्य एवेति ध्वनितम्। इत्यभिप्रायकमिति। न तु सामीप्यादिः सम्बन्ध एव षष्ठ्यर्थ इत्यभिप्रायकमिति शेषः। यद्यपि षष्ठ्यर्थसम्बन्धा बहवस्तथापि निर्णयाय 'षष्ठी स्थाने' इति सूत्रम्।

उक्तार्थे भाष्यान्तरमपि साधकमित्याह—अत एवेति। सामीप्यस्य षष्ठ्यर्थत्वाभावादेवेत्यर्थः। अस्त्यर्थवदिति। यथा वर्तमानेकालावच्छिन्नाऽस्त्यर्थस्य-सौत्रास्तिपदप्रतिपाद्यस्य षष्ठ्यर्थत्वाभावेन प्रकृत्यर्थोपाधित्वं तथेत्यर्थः। अत्रोपाधिशब्दो विशेषणपरः प्रकृत्यर्थस्य गोपदार्थस्य विशेषणम्। नच वर्तमानकालावच्छिन्नाऽस्त्यर्थस्य प्रकृत्यर्थविशेषणत्वे 'गोमानासीत्' इत्यादावनन्वय इति वाच्यम्, तादृशव्यवहारविषये 'गोमान्'

गवीणां समीपवर्त्ती वृक्षादिः प्रतीयते। अत एवानन्तरादिषु न समासः,

क्तम्, न तु तस्य षष्ठ्यर्थत्वेन प्रत्ययार्थत्वमुक्तम्। भाष्यकृता चासामर्थ्या-त्तत्र वृत्त्यभाव उक्तः। षष्ठ्यर्थत्वे तु प्रत्ययार्थत्वात्कासामर्थ्यम्!। तस्मा-द्यत्र षष्ठ्यन्तमात्रप्रयोगे आनन्तर्यादिप्रतीतिस्तत्रानन्तरादिपदाध्याहार एव बोध्यः। तत्रास्तिग्रहणाभावे तस्यान्यफलकत्वे वा[2] सूत्रानुपात्तास्त्यर्थान्त-र्भावेण मत्वर्थीयवद्बहुव्रीहिवच्च तथाभूतानन्तर्याद्यर्थान्तर्भावेण 'चित्रा गा-वोऽस्य सन्त्यन्तराः' इत्याद्यर्थे बहुव्रीहिमत्वर्थीयौ न भवतोऽनभिधाना-दिति मतुप्सूत्रे भाष्ये स्पष्टम्। अनन्तरादेरिदमर्थत्वे[3] 'तस्येदम्' (पा० सू० ४।३।१२०) इति शैषिकोऽप्यनभिधानान्नेति 'तस्येदम्' इत्यत्र भाष्ये। तदुक्तम्—अनन्तरादिषु न समासोऽनभिधानादिति स्पष्टमाकर इति। तत्र समा-

इत्यत्र लक्षणाया अङ्गीकारात्। तत्र'गावोऽस्य सन्त्यनन्तराः' इत्यत्र। षष्ठ्यर्थत्वे-त्विति। आनन्तर्यस्येत्यादिः। 'अनन्तराः' इति बहुवचनान्तोपादानेन प्रकृत्यर्थविशे-षणत्वं स्पष्टमेव। एवञ्च 'सापेक्षमसमर्थवत्' इति न्यायेन तत्रासामर्थ्यम्। उपसंहरति-तस्मादिति। यत्र='गुरुपुत्रो देवदत्तस्य किञ्चित्' इत्यत्र। आनन्तर्यादि-प्रतीतिः=आनन्तर्यनिरूपितसम्बन्धप्रतीतिः।

उक्तार्थे प्रमाणान्तरमपि दर्शयितुमनन्तरादिष्विति ग्रन्थमवतारयति—तत्रेत्यादि। तत्र मतुब्विधायकसूत्रे यथा बहुव्रीहिसमासे वर्त्तमानकालावच्छिन्नाऽस्त्यर्थान्तर्भावस्तथा शब्दशक्तिस्वभावान्मतुबन्तादपि भविष्यतीति नैतत्प्रयोजनमिति भावः। नन्वनर्थकमेवा-स्त्वित्यत आह—अन्यफलकत्वे वेति। सूत्रकारस्याज्ञानकल्पनापेक्षयाऽन्यफलकत्व-कल्पनमेव वरमिति भावः। अन्यत्फलम् अस्तिमानिति। अत्र हि—सत्ताकर्तृधनवाचकोऽ-स्तिशब्दोऽव्ययम्, तस्यास्तिसामानाधिकरण्याभावान्मतुप्प्रत्ययो न प्राप्तस्तदर्थमेतदस्तिग्र-हणमिति भावः। सूत्रानुपात्तेति। यथा शब्दशक्तिस्वाभाव्यान्मत्वर्थीयो बहुव्रीहिश्च भवति तथेति वैपरीत्ये दृष्टान्तः। तथाभूतेति। सूत्रानुपात्तेत्यर्थः। उक्तार्थे प्रमाणान्त-रमप्याह—अनन्तरादेरिति। तदुक्तम्=तदेतत्सर्वम्मनसि निधायोक्तम्। नन्वेवम-

१—'चित्रा गावः सन्ति अस्य' इत्यर्थेऽस्त्यर्थान्तर्भावेण शब्दशक्तिस्वभावाद्बहुव्रीहिवन्मतुबपि भविष्यतीति नास्ति तत्फलमित्याशय इति भावः।

२—तथा च भाष्यम् 'तद्वै क्रियमाणमपि प्रत्ययविध्यर्थं, नोपाध्यर्थम् 'अस्तिमान्' इति मतुब्यथा स्यात्, अस्तिना सामानाधिकरण्ये मतुब्विधीयते, न चास्तेरस्तिना सामानाधिकरण्यम्' इति। अय-म्भावः—शब्दशक्तिस्वभावात् अस्त्यर्थे मतुपो विधानात् 'घटो घटः' इतिवत् सत्ताविशिष्टकर्तृवाचकात् अस्त्यव्ययात् समानार्थकत्वेन 'अस्ति' इति तिङन्तप्रतिरूपकाव्ययेन सामानाधिकरण्याभावेऽपि मतुप्। 'अस्तिमान्' इत्यस्य 'सत्ताकर्तृत्वेन धनवान्' इत्यर्थे सिध्यर्थमस्ति ग्रहणमिति।

३—'राज्ञ इदम् अनन्तरम्' इत्येवं रूपेणानन्तर्यस्येदमर्थत्व इत्यर्थः।

अनभिधानादिति स्पष्टमाकरे। किं बहुना 'ब्राह्मणस्य कम्बलः' 'चित्रा गावोऽस्य' इति व्यस्तप्रयोगोऽपि तत्रानिष्टः।

द्वितीयेऽपि संयोगान्तलोपो दुर्लभः, यणः प्रतिषेधारम्भात्, तत्प्रत्याख्यानपक्षेऽपि "झलो झलि" (पा० सू० ८।२।२६) इत्यतो झल्ग्रह-

---

सग्रहणं तद्धितवृत्तेरप्युपलक्षणम्। अनन्तरादिशब्दैः षष्ठीतत्पुरुषादिस्तु भवत्येव। 'ग्रामकूपः' 'गङ्गातीरम्' इत्यादौ समीप एवावयवत्वारोपेण समासः। स्पष्टा चेयं रीतिः "त्रपर्यन्तस्य" (पा० सू० ७।२।९१.) इति सूत्रे कैयटे। किं च हस्य लित्यर्थे "हल विलेखने" इति धातोर्लस्येत्त्वापत्तिः। न च फला[2]भावः? 'देवदत्त! हल्' इत्यादौ ङित्त्वसामर्थ्यादभस्यापि टेर्लोपवल्लित्त्वसामर्थ्यात्प्रत्ययात्पूर्वत्वाभावेऽपि लित्स्वरस्यैव फलत्वस्य व[2]क्तुं

---

नन्तरशब्देन षष्ठीतत्पुरुषोऽपि न स्यादत आह—अनन्तरादिशब्दैरिति। असामर्थ्यस्य वृत्त्यभावप्रयोजकस्य तत्राभावादिति भावः। नन्वेवम् 'ग्रामकूपः' इत्यादिव्यवहारस्य कथमुपपत्तिरत आह—ग्रामकूप इत्यादि। यदा ग्रामशब्दः शालासमुदाये वर्तते तदाप्ययं व्यवहार एवमेवोपपाद्यः। आनन्तर्यस्य षष्ठ्यर्थत्वमभ्युपेत्याप्याह—किञ्चेति। आपत्तिरिति। नन्वियमापत्तिर्हलन्त्यमिति सूत्रावृत्तावपि समानैवेति वाच्यम्, धात्ववयवलकारस्योपदेशेऽन्त्यत्वाभावादिति भावः। इत्त्वापत्तिरिति। तथाच लोपः स्यादिति भावः। अत एव 'लोपश्च बलवत्तरः' इति भाष्ये उक्तम्, अणादिसंज्ञाशब्देषु लोपस्तु न, आदिरन्त्येनेति सूत्रारम्भसामर्थ्यात्, अन्त्येनेत्यस्येदन्त्यसदृशोऽस्यार्थस्य वक्ष्यमाणत्वाच्च।

नचेत्संज्ञाया लोपातिरिक्तमपि फलमनुबन्धा अनेकान्ता इति पक्षे 'अञ्च औं अटितः' इत्यत्रेट्प्रतिषेधरूपन्दृष्टमिति वाच्यम्, अनुबन्धानामेकान्तत्वपक्षस्यैव स्थापयिष्यमाणत्वात्। लोपस्य फलत्वेऽपि तदतिरिक्तम्फलञ्चास्तीति शङ्कान्निराकुरुते—नचेत्यादिना। फलाभावः = लोपातिरिक्तफलाभावः। समाधत्ते—देवदत्तेति। हलिति क्विबन्तम्, देवदत्तेति सम्बोधनम्, 'अस्ति' इति शेषः। लित्त्वसामर्थ्यादिति। व्यञ्जनस्य या इत्संज्ञा तस्य लोप एव फलमिति तु न, तथात्वे व्यञ्जनानुच्चारणस्यैव सुकरत्वात्। किन्तु फलान्तरमपि। तच्च फलं लितीत्येतत्प्रवृत्तिरूपमेव लकारस्थले स्वीकार्यम्। एवञ्च प्रकृतोदाहरणे प्रत्ययात्पूर्वत्वाभावान्न प्राप्नोतीति तत्सामर्थ्याद्भवतीति भावः। ननु 'हलसीरात्' इति निर्देशेन लकारस्य लोपाभावे इत्त्वमपि न भविष्यति, प्रतियोगिता-

---

१—असमस्त इत्यर्थः।

२—'न च फलाभावः' इत्यत्र हेत्वपेक्षायाम् 'फलत्वस्य वक्तुं शक्यत्वात्' इत्येव पाठो युक्तः।

ग्रमपकृष्य संयोगान्तस्य झलो लोपविधानाच्च। किञ्च पदार्थबोधं विना

शक्यत्वादित्यपि बोध्यम्। यद्यपि "हलसीरात्" (पा० सू० ४।३।१२४) इति निर्देशेन तस्य इत्त्वमिति कल्पयितुं शक्यम्। तथापि ज्ञापकस्वीकारापेक्षया सूत्रावृत्तिरेव लघीयसीति दिक्।

झलो लोपेति। सौत्रलोपाश्रयणे तु मूलोक्तमेव[1] लघु। असम्भवादिति। न च "आद्यन्तौ टकितौ" (पा० सू० १।१।४६) इत्यादौ यथासंख्यमन्वये[2]ऽपि प्रथमतः साहित्यावच्छिन्ने साहित्यावच्छिन्नान्वयमात्रेण सहविवक्षा-

सम्बन्धेन लोपस्येत्त्वव्यापकतया व्यापकाभावे व्याप्याभावस्य न्याय्यत्वादित्याशयेन शङ्कते—यद्यपीति। लघीयसीति। कण्ठताल्वादिव्यापारगौरवापेक्षया मनो व्यापारगौरवमधिकमिति भावः।

मूलोक्तम् = सम्पूर्णसूत्रावृत्तिरूपम्। ननु 'कर्मवत्कर्मणा' (पा० सू० ३।१।८७) इति सूत्रे 'व्यत्ययो बहुलम् लिङ्याशिष्यङ्' (पा० सू० ३।१।८६) इति संहितापाठेन द्विलकारको निर्देशः, एकस्य लकारस्य 'संयोगान्तलोपः' इति प्रतिपादितमन्यत्र, तदुपपत्तये 'संयोगान्तस्य' इति सूत्रे सम्बध्यमानमपि झल्ग्रहणं वाक्यभेदेन सम्बध्यते, तेन क्वचिदझलोऽपि लोपो भविष्यति। अत एव 'अमो मश्' (पा० सू० ७।१।४०) इति सूत्रस्थशकारप्रत्याख्यानपरभाष्यस्याप्युपपत्तिः। तत्र हि शकाराभावे मकारादेशे प्रयोजनञ्चास्तीति सर्वादेशो भविष्यतीति दूषणे दत्ते मकारस्य मकारादेशोऽनुस्वारबाधनार्थो भविष्यतीति दूषणे परेण दत्ते एवन्तर्हि द्विमकारको निर्देशः करिष्यते इत्युक्तम्। अत्र 'द्विमकारकः' इति प्रतीकमुपादाय 'एकस्य मकारस्य संयोगान्तलोपः करिष्यते' इति कैयटेनोक्तम्। एवञ्च न लकारस्य संयोगान्तलोपानुपपत्तिरित्यत आह मूले—किञ्चेति। अयं यत्न इति। 'हल् च ल् च' इति द्वन्द्वकल्पनारूपो यत्न इत्यर्थः। अस्याश्चावस्थायाम् = हल्पदार्थाज्ञानावस्थायाम्।

सहविवक्षाया असम्भवाभिधानमसङ्गतमित्याशयिकामाशङ्कां निरस्यति—नचेत्यादिना। यथासङ्ख्यमन्वयेपीत्यस्य लक्ष्यसंस्कारवेलायामित्यादिः। साहित्यावच्छिन्न इति। आद्यन्तसमूहे साहित्यावच्छिन्नस्य टित्कित्समूहस्य अन्वयः। समानविभक्तिक-

१—सम्पूर्णसूत्रावृत्तिरूपम्।

२—यथासङ्ख्यमन्वयेऽपीति—लक्ष्यसंस्कारवेलायाम् आदिपदार्थस्य टिति, अन्तपदार्थस्य किति, प्रत्येकमन्वये समुदायस्य समुदायेऽन्वयाभावेन द्वन्द्वो न प्राप्नोतीति 'आद्यन्तौ टकितौ' इति वाक्यप्रयोगवेलायाम् आद्यन्तसमुदायस्य टित्कित्समुदायेऽन्वयं कृत्वा समासः, समूहान्वयाभिप्रायेण वाक्यार्थबोधः, ततो यथासङ्ख्यसूत्रबलात्प्रत्येकान्वयेन वाक्यार्थबोधो यथा जायते तथाऽत्रापि प्रथमम् 'हल् ल्' इति समुदायस्य 'इत्' इति पदार्थेऽन्वयेन समासे पुनः प्रत्येकान्वयेन बोधः स्यादिति भावः।

वाक्यार्थबोधासंभवेन हल्प्रत्याहारसिद्धेः प्रागेतत्सूत्रार्थाबोधे प्रसक्ते

माश्रित्य यथा द्वन्द्वसाधुत्वं तथेहापि प्रथमतः 'लकारो हल्पदवाच्यश्चेत्'-इति सामान्यतो[1] बोधं कल्पितमादाय द्वन्द्वसाधुत्वम्, ततो विशेषजिज्ञासायाम् 'आदिरन्त्येन' इत्येकवाक्यतया[2] विशेषतो वाक्यार्थो लक्ष्य संस्कारकः। किंच[3] सहविवक्षा = सह वक्तुं वक्तुरिच्छा, सा च सूत्रप्रणयनानुपपत्त्या[4] पाणिनेस्ततः पूर्वमपि हल्पदार्थज्ञानादक्षतैव, बोद्धृबोधस्तु

तथा अभेदान्वयः। वक्ष्यमाणरीत्या इतरेतरयोगेऽपि समूहस्य विशेष्यत्वमिति भावः। हल्पदवाच्यश्चेति। यथाऽज्ञम्प्रति 'नागरङ्गभक्षय' इत्युक्ते नागरपदवाच्यः कश्चन पदार्थः स्यादिति सामान्यतो बोधः प्रथमतो जायते, ततो 'नागरपदवाच्यः कः' इति विशेषजिज्ञासा भवति तथेति। कल्पितमिति। सूत्रप्रणयनान्यथाऽनुपपत्त्या कल्पितमित्यर्थः। एतेन सहविवक्षासम्भवो दर्शितः। ततः = सामान्यतो बोधानन्तरम्। विशेषजिज्ञासायामिति। निर्विशेषस्य सामान्यस्याभावेन कारणस्य सामान्यज्ञानस्य वृत्तत्वाद्विशेषजिज्ञासा भवत्येवेति भावः। ननु पृथग्वाक्यार्थबोधे किं साधकमत आह—आदिरन्त्येनेति। विशेषतः = हलादिना विशेषरूपेण, वाक्यार्थः = वाक्यार्थबोधः। एतेन सूत्रस्य सार्थक्यं द्वन्द्वस्य चोपपत्तिः कृता। श्रोतुर्हल्पदार्थस्य ज्ञानाभावेऽपि वक्तुः पाणिनेस्तज्ज्ञानमस्त्येव। अन्यथा वाक्यप्रयोगमेव न कुर्यात्, यत्नं प्रति इच्छायाः कारणत्वात्तादृशी सहविवक्षा सम्भवति। ततः पूर्वम् = आदिरन्त्येनेत्येतत्सूत्रप्रणयनात्प्राक्। हल्पदार्थज्ञानात् = हकारादिलकारान्तस्य हल्पदार्थत्वेन

१—'न हि निर्विशेषं सामान्यं भवति' इति नियमात् सामान्यज्ञानस्य विशेषज्ञानहेतुत्वेन 'हल्' इति पदम्, अर्थविषयकबोधजनकतावत्, पदत्वात्, 'घटः' इति पदवत्' इत्यनुमानेन सूत्रप्रणयनानुपपत्त्या कल्पितं बोधमादायेत्यर्थः।

२—'अन्त्येनेता=लकारेण सहादिर्हकारो हकारादिलान्तसमुदायघटकानां संज्ञा' इत्येवं वाक्यैकवाक्यतयेति भावः।

३—ननु "अजन्तौ" इत्यत्र वक्तुराद्यन्तपदार्थज्ञानसत्त्वेन तथात्वसम्भवेऽपि प्रकृते हल्पदार्थज्ञानाभावेन दृष्टान्तदार्ष्टान्तिकयोर्वैषम्यमाशङ्क्याह—किंचेति।

४—"हलन्त्यम्" इति सूत्रप्रणयनेत्यर्थः। यावद्बुद्ध्या पदार्थो न विषयीक्रियते तावच्छब्दोच्चारणाभावात् "हलन्त्यम्" इति सूत्रं प्रणयतः पाणिनेः प्रत्याहारसंकेतग्राहकादिरन्त्येनेति सूत्रनिर्माणात्प्रागपि हल्पदार्थज्ञानं वर्तत एवेति सहविवक्षाऽक्षतैवेति भावः। वस्तुतस्तु अर्थज्ञानाभावेऽपि शब्दोच्चारणदर्शनात् सूत्रप्रणयनेत्यस्य आदिरन्त्येनेति सूत्रप्रणयनानुपपत्त्येत्यर्थः, हल्पदनिष्ठसंकेतज्ञानाभावे तद्ग्राहकसूत्रप्रणयनासम्भवादिति तत्त्वम्।

तदुद्धारार्थोऽयं यत्नः। अस्यां चावस्थायां हल्शब्दार्थाप्रसिद्धौ द्वन्द्व

क्रमेणैवेति वाच्यम्, 'आद्यन्तौ (पा० सू० १।१।४६) इत्यादौ यथासङ्ख्य-सूत्रारम्भसामर्थ्येन[2] तथासाधुत्वाङ्गीकारेऽप्यन्यप्रकारेण[3] तस्य साधुत्व-कल्पने मानाभावात्। किं च[4]–'श्रोतॄणां सहबोधो भवतु' इतीच्छया[5] सह वक्तुमिच्छाया एव सहविवक्षात्वेन श्रोतॄणामपि[6] सह बोध एवोचितः। तादृशेच्छया तेषां तादृशबोधाजनकशब्दप्रयोगे तु पाणिनेर्भ्रान्तत्वापत्तिः[7]।

ज्ञानात्। क्रमेण = प्रागल्कारस्येत्वेन ज्ञानम्, ततो हल्पदार्थत्वेन ज्ञानम्, ततो हल्पदवाच्य इदिति ज्ञानमिति क्रमेण। समाधत्ते–आद्यन्तावित्यादि। सूत्रारम्भसामर्थ्येनेति। यत्र न द्वन्द्वस्तत्र, यथा लोके—

'शत्रुम्मित्रं विपत्तिञ्च जय रञ्जय भञ्जय'

इत्यत्र स्थानाख्यलौकिकप्रमाणेनान्वयबोधो भवति, तथा शास्त्रेऽपि भविष्यतीति यथासङ्ख्यसूत्रन्न तदर्थङ्किन्तु द्वन्द्वार्थमेव। लोके यथा द्वन्द्वनिर्देशे यथासङ्ख्यन्न प्रतीयते तथा शास्त्रेऽपि न स्यात्। अत एव 'अजाविधनौ देवदत्तयज्ञदत्तावित्युक्ते न ज्ञायते कस्याजाधनङ्कस्यावयः' इति भाष्ये उक्तम्। अतस्तथान्वयबोधार्थं पूर्वोक्तरीत्या यथासङ्ख्यसूत्रसहायेनास्तु साधुत्वमिति भावः। अन्यप्रकारेण = श्रोतुर्वक्तुश्च प्रथमतः सामान्यतः, श्रोतुः प्रथमतो ल्त्वेन, ततो हल्पदवाच्यत्वेनेति, य उक्तः प्रकारस्ततोऽन्य-प्रकारेण। अयम्भावः–प्रकृते यथासङ्ख्यसूत्रविषयताया अभावाच्छ्रोतुर्द्वन्द्वस्य साधुत्वज्ञानं ततः प्राथमिको बोधश्चान्योन्याश्रयान्न सम्भवतीति पूर्वपक्ष्युक्तसहविवक्षापदार्थोऽसम्भव-दुक्तिक इत्याह–किञ्चेत्यादिना। श्रोतृसम्बन्धिसहबोधकर्तृकसत्तेच्छा सहविवक्षा, सा कदा सम्भवति यदा श्रोतुः सह बोधः स्यात्, तथात्र तु न सम्भवति, अन्योन्याश्रयादिति सहविवक्षैव नास्तीति कल्पनीयम्। ननु पाणिनेस्तादृशी इच्छा कल्प्यतामत आह—तादृशेच्छयेति। भ्रान्तत्वापत्तिरिति। इच्छाम्प्रतीष्टसाधनताज्ञानस्य कारणतया

१–हल्प्रत्याहारसाधनक्रमेणेत्यर्थः।

२–लोके द्वन्द्वाभावस्थले "शत्रुं मित्रं विपत्तिञ्च जय रञ्जय भञ्जय" इत्यादौ योग्यतया क्रमेणा-न्वयदर्शनात् शास्त्रेऽपि यथासंख्यसूत्रमन्तरैव क्रमेणान्वयसिद्धेः "अजाविधनौ देवदत्त–यज्ञदत्तौ" इत्युक्ते न ज्ञायते कस्याजाधनं कस्यावयः" इति भाष्याद् द्वन्द्वस्थले यत्नं विना क्रमेणान्वयासिद्ध्या तदर्थं तयैव यथासंख्यसूत्रस्य निर्माणेन तथा साधुत्वाङ्गीकारेऽपीत्यर्थः।

३–यत्नं विनैव एकस्य हल्पदवाच्यत्वेनापरस्य ल्त्वेन ज्ञानरूपप्रकारेणेत्यर्थः।

४–ननु अत्रापि आदिरन्त्येनेति सूत्ररूपमानसत्वमित्यरुचेराह–किञ्चेति।

५–श्रोतॄणां सहबोधभवनेच्छयेत्यर्थः।

६–श्रोतॄणामित्यर्थः।

७–श्रोतुः सहबोधाभावेन सहविवक्षाकारणीभूतं यत् 'श्रोतृसमवेतः सहबोधो मदिष्टसाधनम्

एव दुर्लभः, सहविवक्षाया[1] असम्भवात्। तस्माद्यथोक्तमेव न्याय्यम् ॥

'मुखनयनं[2] पश्य' इत्यादौ तु न दोषः, उभयज्ञत्वेन ज्ञातं प्रत्येव तादृशशब्दप्रयोगात्। तेन रूपेण ज्ञानं भ्रमः, प्रमा वेत्यन्यदेतत्। किं च पाणिनेः पूर्वं हल्पदार्थज्ञानेऽपि तदभिप्रायेण न प्रयोगः। अन्यथा व्याख्यातृपरम्परावगतवक्तृतात्पर्या[3]नुपपत्त्या 'लट्[4] स्मे' (पा० सू० ३।२।११८) इति सूत्रस्थ-

---

'श्रोतृसमवेतं सहज्ञानं मदिष्टसाधनम्' इति ज्ञानम्पूर्वम्पाणिनेः कल्पनीयम्। श्रोतुस्तु सह ज्ञानन्न भवतीति पाणिनिसमवेतस्य ज्ञानस्य सहबोधविशेष्यकत्वावच्छिन्नश्रोतृसमवेतत्वप्रकारकस्य भ्रमात्मकत्वेन पाणिनेर्भ्रान्तत्वापत्तिरित्यर्थः। तादृशबोधाजनकेति। सहबोधाजनकेत्यर्थः। ननु लोके यः पुरुषोऽन्यतरविषयकज्ञानवान्, न तूभयविषयकज्ञानवांस्तम्प्रति 'मुखनयनम्पश्य' इति प्रयोगो दृश्यते तथाऽत्रापि भविष्यतीत्यत आह—मुखनयनमिति।

पूर्वपक्ष्युक्तसहविवक्षापदार्थमभ्युपगम्यापि दूषणमाह—किञ्च पाणिनेरिति। हल्पदार्थज्ञानेऽपि 'आदिरन्त्येन' इति सूत्रप्रणयनान्यथानुपपत्त्या हल्पदार्थज्ञानेऽपि। तदभिप्रायेण = हल्पदार्थज्ञानतात्पर्येण। न प्रयोगः = न हलिति प्रयोगः। अन्यथा = तादृशतात्पर्यकल्पने। व्याख्यात्रिति। पाणिनिप्रभृतयो ये व्याख्यातारस्तेषाम्परम्परयाऽवगतं यत्तात्पर्यन्तदन्यथानुपपत्त्येति समुदितार्थः। 'लट् स्मे' इत्यादिलक्षणाया अनुमानस्य च हेतुसद्भावात् 'लट् स्मे' इति सूत्रे यथा कैयटेन लक्षणोक्ता तथेहापि भविष्यति, 'लट् स्मे' इति सूत्रे वार्तिककृता 'स्मपुरा भूतमात्रे, न स्मपुराऽद्यतने' इति वार्तिकम्पठितम्, तत्र 'स्मपुरा' इत्याकारकसूत्राभावादन्यथानुपपत्त्या प्रथमवार्तिके स्मपुराशब्दाभ्यामाद्यन्ताभ्यां 'लट् स्मे' 'अपरोक्षे च' 'न नौ पृष्टप्रतिवचने'

---

इत्याकारकमिष्टसाधनताज्ञानम्, तस्य श्रोतृसमवेतत्वाभाववत्सहबोधविशेष्यकज्ञानविषयकत्वेन स्वयमभ्रमत्वेऽपि स्वविषयज्ञानस्य भ्रमत्वेन तस्यापि तत्त्वेन पाणिनेर्भ्रान्तत्वापत्तिरिति भावः।

१—सहविवक्षाया अन्वयरूपतया अन्वयस्य च पृथग्बुद्ध्योः पदार्थयोः सम्बन्धरूपत्वेन बोधाभावे तदभाव एव स्यादिति भावः।

२—ननु हल्पदार्थाज्ञानेऽपि लूपदार्थस्य ज्ञानात् एकपदार्थस्य ज्ञानसत्त्वेऽपि 'मुखनयनं पश्य' इत्यत्रेव न दोषोऽत आह—मुखेति।

३—पाणिनिना 'हल्—हकारादिलान्तसमुदायघटकः' इत्येवं व्याख्यानेन शिष्या बोधितास्तैश्च स्वशिष्या इत्येवं बोधदर्शनेन 'हल्पदं हकारादिलान्तसमुदायघटकबोधजनकं भवतु' इति वक्तृतात्पर्यानुमानेन शाब्दबोधजनकतात्पर्यस्य च तत्तदर्थवृत्तिं विनाऽसम्भवेनानुमितलक्षणया, शक्तिं विना शक्यसम्बन्धरूपलक्षणाया असम्भवेन शक्त्यनुमानाद्वा बोधसम्भव इति तत्त्वम्।

४—"लट् स्मे" इति सूत्रादारभ्य पञ्चसूत्र्यां कालविभागेन प्रत्ययविधानार्थं भाष्ये—"स्म पुरा भूतमात्रे' 'न स्म पुराद्यतने' इति वार्तिकद्वयं पठितम्। तत्र विधायकनिषेधकवार्तिकयोः 'स्मपुरा' इति

कैयटोक्तरीत्या लक्षणया, तन्त्रान्तरीयप्रथमादिव्यवहारेण प्रथमादिपदानामिव शक्त्यनुमानाद्वा ततः श्रोतृणां बोधसम्भवेनेतरेतराश्रयस्यैवाभावेन तदाशङ्का 'लश्चेति वक्तव्यम्' इत्यादिसमाधानपरभाष्यासङ्गत्यापत्तेः। न चैवमजादिव्यवहारस्यापि लक्षणादिनैवोपपत्तावादिरन्त्येनेति सूत्रवैयर्थ्यम्, क्वचिल्लक्षणादिना बोध इति सर्वत्र लक्षणाद्याश्रयणमेवेति

---

'नन्वोर्विभाषा' 'पुरि लुङ् चास्मे' इति पञ्चसूत्री लक्ष्यत इत्युक्तम्। तत्र लक्षणायाम्मानन्तु यदि लक्षणा न स्यात्तदा प्रथमवार्तिकेन 'लट् स्मे' 'अपरोक्षे च' 'पुरि लुङ्' इति सूत्रत्रयस्य भूतमात्रे प्रवृत्तिर्बोधिता, तस्यैवाद्यतननिषेधप्रतिपादनद्वाराऽनद्यतने विधानप्रतिपादने भूतविशेषे विधानमिति लभ्यते, ततश्च भूतमात्रे इत्यनेन सामान्येन विधानेन विरोधः प्राप्नोति, यदा तु प्रथमवार्तिके लक्षणा तदा पञ्चसूत्र्या भूतमात्रे प्रवृत्तिर्बोधिता तथा च 'लट् स्मे' 'अपरोक्षे च' 'पुरि लुङ्' इति सूत्रत्रयस्याद्यतनभूतेऽपि प्रवृत्तिः प्राप्ता, सा द्वितीयवार्तिकेन प्रतिषिध्यते। 'न नौ पृष्टप्रतिवचने' 'नन्वोर्विभाषा' इत्यनयोस्तु भूतमात्रे प्रवृत्तिरिति सिध्यति। एवञ्च तत्रत्यभाष्यप्रघट्टकबलेन प्रथमवार्तिके लक्षणा यथाऽस्ति तथेहापि हकारादिलकारान्तसूत्रसमुदायघटकतत्तत्सूत्रान्त्ये लक्षणाऽङ्गीकार्या। अन्त्यपदञ्च तादृशे तात्पर्यग्राहकम्भविष्यति, 'गभीरायान्नद्यां घोषः' इत्यत्र यथा नद्यामित्यस्य गभीरनदीतीराभिन्नाधिकरणप्रतिपादकत्वे गभीरायामिति तात्पर्यग्राहकं तद्वत्। 'लक्षणये'ति तृतीयान्तस्य बोधसम्भवेनेत्यत्रान्वयः।

शक्त्या निर्वाहे लक्षणाया अनौचित्यमित्यभिप्रायेणाह—तन्त्रान्तरीयेति। यथा तन्त्रान्तरे 'स्वौजस्' इति प्रथमा, 'अमौट्शस्' इति द्वितीया, इत्यादि उक्तन्तेनैवात्र शास्त्रे प्रथमाद्वितीयापदार्थग्रहस्तद्वत्। अनुमानादिति। हल्पदम्, हकारादिषु शक्तम्, हकारादिबोधतात्पर्येण पाणिन्युच्चरितत्वात्' इत्यनुमानादित्यर्थः। एवम् =

---

एकनिमित्तस्यैवोपादानादेकस्मिन्नेव निमित्ते भूतमात्रे विधानस्याद्यतनभूते निषेधस्य चासंभवात् आद्यवार्तिके स्मपुरा शब्देन 'लट् स्मे' ( पा० सू० ३।२।११८ ) इति स्मशब्दादारभ्य 'पुरि लुङि चास्मे' ( पा० सू० ३।२।२२) इति सूत्रस्थपुराशब्दपर्यन्तनिमित्तघटितपञ्चसूत्री लक्षणयोच्यते. उत्तरवार्तिकस्य च स्म, पुरा शब्दनिमित्तके एव प्रवृत्तिः। तथा च 'लट् स्मे' 'अपरोक्षे च' इति सूत्रद्वयस्य स्मनिमित्तकस्य, 'पुरि लुङ् चास्मे' इत्यस्य पुरा निमित्तकस्य चोत्तरवार्तिकेन निषेधादद्यतनभूते न प्रवृत्तिः, 'न नौ पृष्टप्रतिवचने' 'नन्वोर्विभाषा' इत्यनयोश्च पूर्ववार्तिकेन भूतमात्रे प्रवृत्तिर्यथा तथाऽत्रापि लक्ष्यानुरोधादन्त्यपदसामानाधिकरण्यानुपपत्त्या च हल्पदेन हकारादिलान्तसमुदायरूपदशसूत्रीघटकवर्णाः लक्ष्यन्ते—इत्याह—लक्षणयेति। ननु हल्पदस्य शक्यार्थाभावे शक्यसम्बन्धरूपलक्षणाया असम्भवः, न च हपदस्य हत्वावच्छिन्ने लपदस्य च लत्वावच्छिन्ने शक्त्या तत्संभवः, उभयोर्लक्षणाऽङ्गीकारे गौरवादाह—शक्त्यनुमानाद्वेति। अनुमानप्रयोगश्च—'हल्पदम्' हकारादिलान्तसमुदायवर्णनिरूपितशक्तिमत्, तन्त्रान्तरे हकारादिलान्तसमुदायघटकवर्णबोधकत्वेन व्यवहारविषयत्वात्'।

*मध्यगानामिति* । आद्यन्ताभ्यामवयवाभ्यामवयवी समुदाय

नियमाभावात् । 'नासूया कर्त्तव्या यत्रानुगमः क्रियते' इति 'पङ्क्तिविंशति' ( पा० सू० ५।७।५९ ) इति सूत्रे भाष्योक्तेः । तस्मात्करिष्यमाणशक्तिग्रहोपायकपदस्य तदभिप्रायेणाचार्यस्य पूर्वमप्रयोग इत्येव कल्पना ज्यायसी, ध्वनितश्चायमर्थो "नाऽऽज्झलौ" ( पा० सू० १।१।१० ) इति सूत्रेऽष्टादशानां ग्रहणाभावाय "वर्णानामुपदेशस्तावत्, उपदेशोत्तरकालेत्सञ्ज्ञा, इत्सञ्ज्ञोत्तरकालः प्रत्याहारः, प्रत्याहारोत्तरकाला सवर्णसञ्ज्ञा, तदुत्तरमणुदिदिति सवर्णग्राहकमित्येतेन समुदितेनान्यत्र[1] सवर्णानां ग्रहणं भवति न स्वस्मिन्नापि स्वाङ्गे" इत्येवं वाक्यापरिसमाप्तिप्रतिपादकभाष्येणापि[2] । अन्यथा तत्तच्छास्त्रप्रणयनानुपपत्त्या पाणिनेस्तथाज्ञानस्य पूर्वमपि सत्त्वेनाचार्येण तथा प्रयोगे, बोद्धृणामपि क्रमेण तथा बोधे उपपन्ने किं तेन कृतं स्यात्, कथं वा नाऽज्झलावित्यत्राष्टादशादीनां ग्रहणवारणं भाष्योक्तं सङ्गतं स्यादिति विभाव्यतां तदाह—तस्मादिति ।

---

अनुपदोक्तरीत्या लक्षणायाः शक्त्यनुमानस्य वाऽङ्गीकारे । **नियमाभावादिति** । व्याकरणस्य शक्तिग्राहकत्वसिद्धान्तस्यैवमेवोपपत्तिरिति भावः । **नासूयेति** । प्रकृतिप्रत्यययोरानन्त्येन शब्दानां साधुत्वज्ञानन्न सम्भवति तत्र केषाञ्चिच्छब्दानां साधुत्वमाचार्येण प्रतिपादितम् "पङ्क्तिविंशति" इत्यादिना, शब्दानामानन्त्यात्सर्वेषां तन्न सम्भवतीति तथा न कृतम्, नह्येतावताऽऽचार्यस्य दोष इति । उपसंहरति—**तस्मादिति** । **करिष्यमाणेति** । करिष्यमाणः शक्तिग्रहोपायो यस्य तादृशं यत्पदन्तस्य, तदभिप्रायेण = प्राग्ज्ञातार्थाभिप्रायेण, आचार्यस्य = पाणिनेः, पूर्वम् = शक्तिग्रहोपायात्पूर्वम् । अस्मिन्नर्थे साधकान्तरमप्याह—**ध्वनित इत्यादिना** । अस्य भाष्येणापीत्यत्रान्वयः । **ग्रहणाभावायेति** । अच्पदेनेत्यादिः । न स्वस्मिन् = नाण्पदे, न स्वाङ्गे = नाज्झलावित्यत्र **वाक्यापरीति** । वाक्यस्य = परिष्कृतवाक्यार्थस्य । अपरिसमाप्तिः = अनिश्चयः । **अन्यथा** = करिष्यमाणशक्तिग्रहोपायकस्य पदस्य स्वस्य ज्ञानसत्त्वात्तदभिप्रायेण प्रयोगाङ्गीकारे । आचार्येण = पाणिनिना । क्रमेण = उपदेशादिक्रमेण । तथाबोधे = आचार्यज्ञानवद्बोधे । **सङ्गतं स्यादिति** । पाणिनेः पूर्वमपि तावतां ज्ञानस्य सत्त्वेन तत्तत्सवर्णाभिप्रायेण प्रयोगेणाच्पदेन सवर्णग्रहणं दुर्वारमित्यर्थः । **विभाव्यतामिति** । द्वन्द्ववादिनेति शेषः । **तदाह** = तदेतत्सर्वम्मनसि निधायाह ।

---

१—महावाक्यचतुष्टयसहितेनाणुदित्सूत्रेणेत्यर्थः । एतेन दिग्योगलक्षणपञ्चम्या समुदितादित्यस्य वक्तमुचितत्वात् समुदितेनेत्यसंगतमिति परास्तम्, ग्रहणेऽन्वयेन करणे तृतीयासत्त्वात् ।

२—वाक्यस्य अणुदित्सूत्रस्य स्व–स्वाङ्गान्तरबोधकाले अपरिसमाप्तिः—सवर्णग्रहणबोधनासामर्थ्यमित्यर्थः ।

आक्षिप्यते, तस्य च युगपल्लक्ष्ये प्रयोगाभावात्तदवयवेष्ववतरन्ती सञ्ज्ञा मध्यगेषु विश्राम्यति, न त्वाद्यन्तयोः, संज्ञास्वरूपान्तर्भावेण तयोः पारार्थ्यनिर्णयादिति भावः। *स्वस्य चेति*। 'स्वं रूपम्' ( पा० सू० १।१।६८ ) इत्यनुवृत्तेः। स्वं रूपं चादेरेव गृह्यते नान्त्यस्य, अन्त्येनेत्यप्रधानतृतीयानिर्देशात्, सर्वनाम्नामुत्सर्गतः प्रधानपरामर्शित्वात्।

---

आद्यन्ताभ्यामिति। अवयवत्वेन बोधकाद्यन्तशब्दाभ्यामित्यर्थः। तस्येति। समुदायस्य। तयोः पारार्थ्येति। सञ्ज्ञास्वरूपबोधकतया शक्तिग्रहकाले एव तयोः पारार्थ्यनिर्णयादित्यर्थः। परामर्शित्वादिति। वस्तुतो ज्ञापकादिनाऽस्यापि न संज्ञाकार्यम्, आद्यन्तशब्दाभ्यामाद्यन्तघटितसमुदायस्याक्षेपे-

---

अवयवत्वेनेति। अवयवस्यावयविनम्प्रति नित्यसाकाङ्क्षत्वादाक्षेपस्य सम्भवः। तृतीयार्थः प्रकारिता। तयोः = आद्यन्तयोः। पारार्थ्येति। संज्ञिबोधकत्वनिर्णयात्। संज्ञा हि संज्ञिनम्बोधयति न तु संज्ञास्वरूपमपि। प्राचामनुरोधेन मूलकृतोक्तं व्याख्याय सिद्धान्तमाह—वस्तुत इति। अस्यापि = संज्ञास्वरूपघटकान्त्यस्यापि।

---

१–अन्त्येनेता सहादिः=अच् अक्, इत्यादिसमुदायः संज्ञा, संज्ञायाश्च सञ्ज्ञिनि साकाङ्क्षत्वात्सूत्रे च तदनुपादानात् स्वघटकत्व–स्वघटकोच्चारणध्वंसाधिकरणक्षणावृत्तित्व–स्वघटकोच्चारणप्रागभावाधिकरणक्षणवृत्तित्वैतत्त्रितयसंम्बन्धेनादेः, स्वघटकत्व–स्वघटकोच्चारणध्वंसाधिकरणक्षणवृत्तित्व–स्वघटकोच्चारणप्रागभावाधिकरणक्षणावृत्तित्वैतत्त्रितयसम्बन्धेनान्त्यस्य च समुदायविशिष्टतया समुदायं विना तयोरनुपपत्त्या 'येन विना यदनुपपन्नं तत्तेनाक्षिप्यते' इति न्यायात् आद्यन्तघटितसमुदायरूपः संज्ञी आक्षिप्यत इति भावः। नचाऽऽक्षिप्तस्य शाब्दबोधे भानानुपपत्तिः, वृत्तिज्ञानजन्योपस्थितेरेव शाब्दाङ्गत्वात्, अन्यथा घटादिपदादाश्रयतयोपस्थिताकाशादेरपि शाब्दे भानापत्तिरिति वाच्यम्, अर्थापत्त्याऽऽक्षिप्तस्य शाब्दे प्रवेशस्येष्टत्वात्। आक्षेपो द्विविधः–तत्सत्ताधीनसत्ताकत्वेन, अर्थापत्त्या च। यथा शरीरसत्ताधीनसत्ताकत्वेनावयवानाम्। द्वितीयः–पीनत्वान्यथानुपपत्त्या रात्रिभोजनस्य। अर्थापत्तिश्च–उपपाद्यज्ञानेनोपपादकज्ञानकल्पनरूपा। उपपाद्यस्य=पीनत्वस्य ज्ञानेनोपपादकस्य रात्रिभोजनस्य कल्पनं प्रत्यक्षादिभिन्नं ज्ञानमित्यर्थः इति वेदान्तसरणिः। 'परस्परविरुद्धत्वेनावभासमानधर्मद्वयघटितहेतुसाध्यानुमितिरर्थापत्तिः' इत्यन्ये। तद्यथा–प्रकारितासम्बन्धेनाद्यवयवत्वान्तावयवत्वविशिष्टबोधजनकम् आद्यन्तपदम्, स्वार्थनिष्ठविषयतानिरूपितावयवित्वावच्छिन्नविषयताश्रयसमुदायविशिष्टम्, सूत्रघटकपदप्रयोज्यावयवित्वावच्छिन्नविषयतानिरूपितविषयत्वाप्रयोजकत्वे सति अवयवत्वावच्छिन्नविषयतानिरूपितविषयताप्रयोजकत्वात्, यन्नैवं तन्नैवमिति व्यतिरेक्यनुमित्या समुदायरूपसञ्ज्ञिलाभः। साध्यतावच्छेदकसम्बन्धश्च–स्वनिष्ठविषयतानिरूपितविषयताप्रयोजकत्वरूपः। स्वरूपसम्बन्धश्च हेतुताऽवच्छेदक इति दिक्।

२–सम्बध्नातीत्यर्थः।

आद्योच्चारणमिति[1] । यद्यपि 'उपदिश्यतेऽनेन' इति करणव्युत्पत्त्या

णान्येषामिव तयोः प्राप्तायाः सञ्ज्ञायाः प्रकारान्तरेणाशक्यवारणत्वात् । स्वशब्दानुवृत्तेश्च न फलम् । भाष्येऽपि एतत्फलितार्थकथनमेव स्वस्य च रूपस्येति । सञ्ज्ञास्वरूपत्वं[2] विशिष्टस्यास्तु, प्रत्येकं स्वबोध्यत्वं चास्तु को विरोधः । यथा 'अच्च घेः' ( पा० सू० ७।३।११९ ) इत्यादौ गुणदर्शनेन घिशब्दस्यापि घिसञ्ज्ञाबोध्यत्वं तद्वदेवौजादि[3]सञ्ज्ञा स्वसञ्ज्ञिघटकैकारादिष्विवाकारचकारयोरपि प्राप्नोत्येव । किं च स्वशब्देन केवलान्त्यपरामर्शासम्भवेऽपि विशिष्टपरामर्शो न बाधकम्, तत्र समुदाये फलाभावादवयवयोर्विश्रान्तिं प्राप्स्यति । तस्माज् ज्ञापकादिनैवान्त्यस्य तत्कार्यं वारणीयमित्यलम्[4] ।

अपिना समुदायघटकेत्संज्ञकवर्णपरिग्रहः । प्रकारान्तरेण = ज्ञापकादिभिन्नप्रकारेण । अनुवृत्तिपदोत्तरश्चकारो भिन्नक्रमः फलपदोत्तरं द्रष्टव्यः । तेन तदनुवृत्तेः फलाभावश्चेत्यस्य लाभः । नन्वेवमनुवृत्तिपरभाष्यकारीयव्याख्यानविरोध इत्यत आह—भाष्येऽप्येतदिति । को विरोध इति । यत्रोद्देश्यताऽवच्छेदकविधेययोरेकरूपेणोपस्थितिस्तत्रोद्देश्यविधेययोर्नान्वयबोधः 'दण्डवान्दण्डवान्' इत्यत्र यथा । न हि तथा प्रकृतेऽस्ति । अकारादिचान्तसमुदायपर्याप्तसमुदायत्वमुद्देश्यताऽवच्छेदकम्, अजित्यानुपूर्वी तु विधेयतावच्छेदिकेति भावः । प्राप्नोत्येवेति । एतेन भवदुक्तरीत्या आद्यन्तयोर्वारणाभावः, स्वं रूपमित्यनुवृत्तेर्वैयर्थ्यञ्च ध्वनितम् । यन्मूले 'स्वं रूपम्' इत्यस्यानुवृत्तिङ्कृत्वा स्वपदेनान्त्यपरामर्शाभाव उक्तस्तद्वैयर्थ्यमप्यस्तीत्याह—किञ्चेति । विशिष्टेति । अजित्यादिविशिष्टेत्यर्थः । तस्मात् = उक्तप्रकारद्वयात् ॥

१—उच्चारणे आद्यत्वञ्च—स्ववृत्तिश्रावणप्रत्यक्षविषयतावच्छेदकधर्मावच्छिन्नविधेयताकबोधप्रयोजकत्वरूपम् । तथा च धर्मविशिष्टोच्चारणमाद्योच्चारणमिति फलितम्, वैशिष्ट्यञ्च स्वेन साक्षादवच्छिन्नविधेयताकशाब्दबोधानुकूलत्व-स्वप्रकारकप्रत्यक्षानुकूलत्वैतदुभयसम्बन्धेन । धर्मश्चात्र यस्योपदेशत्वं चिकीर्षितं तद्वृत्त्यानुपूर्वीरूपो ग्राह्यः । तथा च—'अत्र आँ अदितः' इत्यत्र अनुनासिकपदेन विधीयमाने 'आँ' इति शब्दे अनुनासिकपदवृत्त्यानुपूर्व्यवच्छिन्नाविधेयता नास्तीति न दोषः । उच्चारणञ्च—पाणिन्यादीनामेवेति नातिप्रसङ्गः ।

२—स्वविधेयघटितस्य स्वस्मिन्नुद्देश्यत्वासम्भवः—यथा 'घटवति भूतले घटः' इत्यत्र नोद्देश्यविधेयभावेनान्वयः, एवं विधेयभूतः 'अच्' इति शब्दस्तद्घटितस्याकारादिचान्तसमुदायस्योद्देश्यत्वं न स्यादिति 'स्वम्' इत्यनुवृत्त्यादेरपि संज्ञाविधेयेति मूलाशयं खण्डयति—संज्ञास्वरूपत्वमिति—अयम्भावः—अकाराव्यवहितोत्तरत्वविशिष्ट 'च्'शब्दस्य संज्ञात्वेन विधेयता समुदायघटकस्य चोद्देश्यतयोद्देश्यदले 'अच्' इति समुदायस्याप्रवेशान्नास्ति नियमविरोध इति ।

३—तद्वदेवेति पाठः, तद्वदेवमिति मूलस्थस्यानन्वितार्थकत्वात् ।

४—वस्तुतस्त्वत्र बोधकत्वस्य समुदायवृत्तितया सावकाशत्वेऽपि 'माठरपरिवेषण' न्यायेन बाध्यबाधकभावो दुर्वारः । 'सर्वे ब्राह्मणा भोज्यन्तां माठरकौण्डिन्यौ परिवेविषाताम्' इति हि न्यायस्वरूपम् ।

शास्त्रमुपदेश इति भाष्यवृत्त्यादिषु व्याख्यातम्, तथापि तत्प्रौढिवा-

भाष्येति। तत्र हि 'उपदेश इति किम्, अभ्र आँ अपः, प्रत्यक्षमाख्यानमुपदेशो गुणैः प्रापणमुद्देशः' इति 'नासावुपदेशः' इत्युक्त्वोपदेशोद्देशयोर्लोकव्यवहारेण सङ्कीर्णत्वमाशङ्क्य 'उपदेशनेऽजनुनासिकः' इति वार्त्तिककृद्दर्शितन्यासस्य खण्डनाय 'उपदेश इति करणे घञुपदिश्यतेऽनेन' इत्युक्तम्। तच्च शास्त्रम् = शासनकरणम्, प्रत्यासत्त्यैतच्छास्त्रीयधात्वागमप्रातिपदिकप्रत्याहारसूत्रप्रत्ययादेशरूपम्॥

प्रौढिवादमात्रमिति। वार्तिककृदुक्तन्यासीयार्थस्य कथंचित्सूत्रतोऽपि लाभसम्भवान् न्यासान्तरप्रवृत्तिस्ते वृथैवेति प्रौढ्या बोधयितुमेवं वाद

तत्र हीति। 'उपदेशेऽच्' इतिसूत्रव्याख्यानपरभाष्ये हीत्यर्थः। प्रत्यक्षमिति। अत्र प्रत्यक्षशब्द अर्श आद्यजन्तस्तेन प्रत्यक्षस्येन्द्रियग्राह्यस्याख्यानमित्यर्थो लभ्यते। प्रत्यक्षमिति त्वाख्यानक्रियाविशेषणम्। गुणैः प्रापणम् = साधारणधर्मोपादानेन कथनम्। नासाविति। अनुनासिकशब्देन 'आङोऽनुनासिकः' इति सूत्रेण विधानम्, अनुनासिकत्वन्तु साधारणमिति भावः। सङ्कीर्णत्वमिति। प्रत्यक्षाख्यानेऽप्युद्देशप्रयोगदर्शनेन सङ्कीर्णत्वम्, यथा शिष्येण 'अनुवाकम्भवानुद्दिशतु' इत्युक्ते, गुरुणा 'शन्नो देवीयकमधीष्व' इत्युक्ते, शिष्य आह—'उद्दिष्टो मेऽनुवाकः' इति। इदञ्च सङ्कीर्णत्वम् 'लटः सद्वा' इति सूत्रविहितसंग्रहायावश्यकमिति भावः। वार्तिकेति। 'सिद्धन्तूपदेशनेऽजनुनासिक इति वचनात्' इति वार्तिकेत्यर्थः। इदञ्च वार्तिकमुच्चारित इत्यस्याध्याहारेण व्याख्येयम्। प्रत्याहारसम्पादकं सूत्रम् 'अइउण्' इत्यादिसूत्रमिति प्रत्यासत्त्येत्यस्योपस्थितत्वेनेत्यर्थः।

'प्रौढिवादमात्रम्' इति अस्य महत्त्वेनोक्तं वस्तुतोऽसङ्गतमित्यर्थः प्रतीयते, स तु न युक्तः, भाष्यकारोक्तावसङ्गतत्वकथनस्यायुक्तत्वादतस्तद्व्याचष्टे—वार्तिककृदिति।

अनेन नैककार्यविनियोगोद्देशेन प्रवृत्तवाक्यकदम्बघटकव्यापकपदार्थे तद्वाक्यघटकव्याप्यपदार्थातिरिक्तत्वेन संकोचः क्रियते। तथाच प्रकृतेऽकारादिचान्तसमुदायरूपव्यापकपदार्थे आद्यन्तरूपव्याप्यपदार्थातिरिक्तत्वेन संकोचे आदेरपि संज्ञा न प्राप्नोतीति 'स्वम्' इत्यनुवृत्तिपरभाष्यसंमतभूलोक्तमार्ग एव ज्यायान्, तथा च 'माठरपरिवेषणन्यायाभिप्रायेण 'सुद्ध्युपास्यः' इत्यादौ तु स्थानिन निमित्तत्वमिकः 'तस्मादित्युत्तरस्य' इत्यादिनिर्देशाज्ज्ञापकान्न बाध्यते" इति कैयटोक्तिरपि समर्थितेति दिक्।

१—ननु 'प्रत्यक्ष' शब्द इन्द्रियजन्यज्ञानपरः, तादृशज्ञानविषयपरश्च. उभयार्थकत्वेऽप्याख्यानविशेषणत्वमसम्भवि, आख्यानस्य क्रियारूपत्वात्तस्याश्चाप्रत्यक्षत्वादिति चेन्न, यस्योपदेशत्वं चिकीर्षितं तस्य शब्दोच्चारणवेलायां प्रत्यक्षविषयत्व एवोपदेशत्वस्येष्टतयाऽऽरोपितप्रत्यक्षत्वस्य तत्रापि सम्भवात्। अनुनासिकत्वस्य श्रावणप्रत्यक्षविषयतयोपदेशत्ववारणाय शब्दोच्चारणवेलायामिति। तथा च पाणिनिकर्तृकानुनासिकपदोच्चारणवेलायाम् 'आँ' इत्यत्रानुनासिकत्वस्य प्रत्यक्षविषयत्वाभावान्नातिप्रसङ्ग इति भावः।

दमात्रम्, करणे घञो दुर्लभत्वात्, ल्युटा बाधात् । न च घः, असंज्ञात्वात् । 'प्रायेण संज्ञायाम्' इति व्याख्यानस्य क्लिष्टत्वात्, न ह्युपाधेरुपाधिर्भवतीत्यादिना भाष्यकृताऽवहेलनाच्च । अत एव घापवादः 'हलश्च' ( पा० सू० ३।३।१२१ ) इति घञपीह न ।

इति भावः । घञ इति । 'अकर्त्तरि च' ( पा० सू० ३।३।१९ ) इत्यत्र संज्ञायामित्यस्य प्रायिकत्वात्तत्प्राप्तिरिति भावः । बाधादिति । वा सरूपविधिस्तु क्तल्युट्तुमुन्खलर्थेषु प्रतिषिद्धः । न च तत्र साहचर्येण भावल्युट एव ग्रहणमिति वाच्यम्, 'ईषत्पानः सोमो भवता' इत्यत्र कर्मणि खल् नेति भाष्यादिप्रामाण्येनात्र साहचर्यानाश्रयणादिति भावः । क्लिष्टत्वादिति । गुणप्रधानसन्निधौ प्रधानस्य विशेषणे साकाङ्क्षत्वे इतरान्वयस्तस्यायुक्त इति क्लेश इति भावस्तदाह—नहीत्यादिना । भाष्यकृतेति । अस्यार्थस्येति शेषः । एवञ्च 'उभयप्राप्तौ कर्मणि' ( पा० सू० २।३।६६ ) इति नियमान्न कर्त्तरि षष्ठीति बोध्यम् । अवहेलनाच्चेति । चो हेतौ यतोऽवहेलनमतः क्लिष्टत्वमित्यर्थः। घापवाद इति । ल्युडपवादश्चेत्यपि बोध्यम्, तत्रापि सञ्ज्ञायामित्यनुवृत्ते-

कथञ्चित् = बाहुलकरूपागतिकगत्या । प्रायिकत्वादिति । अत एव 'को भवता दायो लब्धः' इत्यादिप्रयोगा इति भावः, ननु वा सरूपविधिना ल्युड्विषये घञपि भविष्यतीत्यत आह—वा सरूपेति । प्रतिषिद्ध इति । अत्र ज्ञापकम्—'अर्हे कृत्यतृचश्च' ( पा० सू० ३।३।१६९ ) इति सूत्रे कृत्यतृज्ग्रहणम्, तद्धि चकारसमुच्चये लिङा कृत्यतृचोर्बाधा माभूदिति क्रियते, यदि वा सरूपविधिर्नित्यः स्यात्तदा तेन सिद्धेऽस्य ग्रहणं व्यर्थं स्यात् । साहचर्येण = परतुमुन्साहचर्येण । खल्नेति । किन्तु 'आतो युज्' ( पा० सू० ३।३।१२८ ) इति युजेवेति शेषः । यदि साहचर्याश्रयणमत्र स्यात्तदा तुमुन्साहचर्येण भावार्थकखल्विषय एव वा सरूपविधिनिषेधेन प्रकृते कर्मार्थकत्वेन निषेधाप्राप्त्या भाष्यासङ्गतिः स्पष्टैवेति भावः । क्लिष्टत्वमुपपादयति—गुणेति । विशेषणे इति । निरूपितत्वं सप्तम्यर्थः, तस्याऽऽकाङ्क्षायामन्वयः । एवञ्च विशेषणनिरूपिताकाङ्क्षावत्त्वे 'इतरान्वय' इत्यर्थो लब्धः । इतरान्वयः = इतरस्मिन् प्रधानातिरिक्ते गुणे । तस्य = गुणस्य । अयुक्त इति । किन्तु प्रधानान्वय एव न्याय्यः । प्रकृते च विधेयतया प्रत्ययः प्रधानम्, तद्विशेषणमेव प्रायेणेति, न तु संज्ञायामित्यस्येति । एवञ्चोक्तन्यायत्यागे एव 'प्रायेण संज्ञायाम्' इत्यन्वय इति भावः ।

भाष्यकृतावहेलनादित्यत्र भाष्यकृच्छब्दात्कर्तृकर्मणोरिति षष्ठी प्राप्नोतीति शङ्कावारणायाह—अस्यार्थेति । मूले—अत एवेति । तथा व्याख्यानस्य क्लिष्टत्वादेवेत्यर्थः ।

बाहुलकं त्वगतिकगतिः। अत एव 'प्रक्रियन्ते शब्दा याभिः' इति करणव्युत्पत्तिरपि परास्ता। तथा च वार्तिकम्।

'अजब्भ्यां स्त्रीखलनाः स्त्रियाः खलनौ विप्रतिषेधेन'' इति। अतो भाव एव प्रत्ययो न्याय्य इति भावः।

---

रिति भावः। अगतिकगतिरिति। न च 'खनो घ च' (पा० सू० ३।३।१२७) इति घविधानमन्यतोऽपीत्यर्थमित्याकरे स्पष्टम्, तेनात्र घे सिद्धयतीति वाच्यम्, तस्याप्यगतिकगतित्वात्, 'भगः पदम्' इत्यादौ यत्र घित्वफलं तत्रैव तत्प्रवृत्तेश्च। पदस्य घञर्थे केन सिद्धेर्नैतदुदाहरणम्, किन्तु क्वाचित्कं वाक्यं तत्। किं च 'उच्चार्य हि वर्णानाह–उपदिष्टा इमे वर्णाः' इत्यादि- भाष्यादुपदेशशब्दस्योच्चारणार्थत्वस्य निर्णयेन, सङ्कीर्णलौकव्यवहारस्य

---

ननु ल्युटो बाधकत्वशङ्कायां घापवादत्वकथनमनुपपन्नमेवेत्यत आह–ल्युडपवाद इति। तत्रापि = 'हलश्च' इति सूत्रेऽपि। अगतिकगतिरित्यस्य न विद्यते गतिर्यस्य तस्य गतिरित्यर्थे अगतिकगतिरित्यनुपपन्नङ्गत्याश्रयस्यैव सत्त्वादित्याशयेन शङ्कते–न चेति। अन्यतोऽपीति। खनूभिन्नादपीत्यर्थः, खनूधातौ घित्वस्य फलाभावादिति भावः। तत्रैवेति। तावतैव घित्वस्य चारितार्थ्यादिति भावः। ननु पदमित्यत्र न तथेति कथन्तत्प्रदर्शनमित्यत आह–पदस्येति। घञर्थे केन सिद्धेरिति। 'घञर्थे कविधानम्' इति वचनेनेत्यर्थः। ननु 'स्नानीयञ्चूर्णम्' 'राजभोजनाः शालयः' इत्यत्र यथा बाहुलकत्वेनार्थान्तरे प्रत्ययस्य स्वीकारस्तथा बाहुलकादुपदेशपदेऽपि करणे घञ्- कल्पने किम्बाधकमत आह–किञ्चोच्चार्येति। उच्चारणार्थत्वेति। आद्योच्चारणार्थत्वे- त्यर्थः। अत एवैकाच उपदेश इति सूत्रे 'इत्संज्ञाविधावुच्चारणवचन उपदिशिर्गृह्यते' इति कैयटः सङ्गच्छते।

ननु लोके चैत्रम्प्रति यज्ञदत्तेन 'सुघ्नङ्गमिष्यामि, पन्थानम्भवानुपदिशतु' इत्युक्ते चैत्रेण अमुष्मिन्नवकाशे हस्तदक्षिणो ग्राह्यः, अमुष्मिन्हस्तवामः, इत्युक्ते यज्ञदत्तो वदति–'भवतोपदिष्टः पन्थाः' इति तदनुपपन्नम्, पथ उच्चारणासम्भवादत आह— सङ्कीर्णेति। लक्षणयाऽपीत्यपिना शक्तिपरिग्रहः। एतेन पाणिन्यादिवाक्यादिव लौकिकव्यवहारादपि शक्तिसिद्धिर्भवतीति सूचितम्। न च भावघञन्तेनोपदेशशब्दस- मभिव्याहृतेनाद्योच्चारणक्रियोपस्थाप्यते, तथा च तदन्तत्वमनुबन्धत्वाभिप्रेतस्य न सम्भवतीति वाक्यार्थानुपपत्तिरिति वाच्यम्, "उद्देशश्च प्रातिपदिकानाञ्चोपदेशः" इति भाष्यात् 'येषां स्वरूपज्ञापनायापूर्वमुच्चारणं तेषामेवोपदेशः' इति "आदेच उपदेशे" (पा० सू० ६।१।४५) इति सूत्रस्थकैयटाच्चोपदेशशब्दस्याद्योच्चारणपरत्वव्यवस्थिता-

यत्तु—धातुसूत्रेत्यादि पठन्ति। यच्च—व्याचक्षते—करणव्युत्पत्त्या

लक्षणयाऽप्युपपत्त्या भावे घञि बाधकाभावः। किं चोपदेशशब्दस्य प्रत्ययादिपरत्वे तस्यैव हलन्त्यमित्यत्रान्वयेन यत्किंचित्समुदायान्त्यस्य वारणसम्भवे तदर्थमन्त्यग्रहणसामर्थ्यादिवर्णनक्लेशो भाष्यकृतो व्यर्थः स्यादिति बोध्यम्। 'उद्देशश्च प्रातिपदिकानां नोपदेशः' इति 'आदेच उपदेशे' (पा० सू० ६।१।४५) इति सूत्रे च भाष्ये भावघञन्तस्यैव तस्याङ्गीकाराच्चेति दिक्। धातुसूत्रेत्यादीति।

'धातुसूत्रगणोणादिवाक्यलिङ्गानुशासनम्।
आगमप्रत्ययादेशा उपदेशाः प्रकीर्त्तिताः'॥ १॥ इतीत्यर्थः।

वन्त्यपदार्थान्वयाय तस्य शब्दस्याद्योच्चारणविषये लक्षणाया अङ्गीकारात्। नन्वेवं "लटः सद्वा" (पा० सू० ३।३।१४) इति "निष्ठा" (पा० सू० (३।२।१०२) इति सूत्रविहितशत्राद्यवयवस्य 'राजसूयसूर्य' (पा० सू० ३।१।११४) इत्यादिनिपातनानुमितक्यबाद्यवयवस्य चेत्संज्ञानुपपत्तिः। यद्युक्तरीत्या लौकिकव्यवहारेणोपदेशशब्दस्योभयार्थकस्येह ग्रहणमिति ब्रूषे! तदा 'आङोऽनुनासिकः' इति सूत्रविहितेऽतिव्याप्तिरत आह—किञ्चोपदेशेति। प्रत्ययादिपरत्वे = भाष्योक्तकरणव्युत्पत्त्या प्रत्ययार्थकत्वे। यत्किञ्चिदिति। धात्वादिभिन्नेत्यर्थः। तदर्थम् = यत्किञ्चित्समुदायान्त्यवारणार्थम्। सामर्थ्यादीति। अन्त्यपदोपादानेत्यादिः। 'आदि' पदेन तस्य पदस्य व्यवसितान्त्यपरत्ववर्णनस्य 'के पुनर्व्यवसिता!—धातुप्रातिपदिकप्रत्ययनिपातागमादेशाः' इति प्रदर्शनस्य च परिग्रहः। न च भावघञन्तस्योपदेशशब्दस्य पूर्वोत्तरसूत्रयोराश्रयणे मनिनाद्यवयवेकारनकारयोरित्त्वानापत्तिः, इका—(२) रस्याद्योच्चारणविषयान्त्यत्वाभावात्। किञ्च—णिनिप्रत्ययावयवनकारस्योत्तरसूत्रेण मनिनवयवनकारवदित्त्वापत्तिरिति वाच्यम्, 'यस्योपदेशे ऋषेस्तात्पर्यन्तस्य तदुपदेशप्रयुक्तेत्संज्ञा' इत्यर्थं आश्रीयते, णिनिप्रत्यये समुदायोपदेशप्रयुक्तैव, मनिनादौ त्ववयवोपदेशप्रयुक्ता सेति व्याख्यातृवचनप्रामाण्यादाश्रीयत इत्याशयात्। व्याख्यातृवचनमप्रमाणमिति तु न, भाष्योक्तरीत्या व्यवसितान्त्यस्यैव ग्रहणे सिद्धे भावघञन्तत्वपक्षेऽपि दोषपरिहाराय तथा वर्णनात्। उपदेशशब्दस्य भावघञन्तत्वे भाष्यान्तरमपि साधकमित्याह— उद्देशश्चेत्यादिना। न च भावघञन्तस्य स्वीकारे 'लटः सद्वा' इति सूत्रविहितशत्रवयवस्यासङ्ग्रह इति वाच्यम्, 'व्यवसितान्त्यग्रहणम्' इति भाष्यैकवाक्यतयाऽस्मिन्नपि पक्षे सत्पदार्थज्ञानापत्तौ सदिति सूत्रोपस्थितेरावश्यकतया तत्र यः सच्छब्दबोध्यस्तदन्त्यस्य ग्रहणमित्याशयात्। एवमेव

१—इयं कारिका प्रक्रियाकौमुद्यामुक्ता, तट्टीकायां प्रसादनाम्न्यां व्याख्याता च।
२—नकारस्येत्युचितम्।

पूर्वार्धोपात्तानामुपदेशत्वम्, कर्मव्युत्पत्त्या त्वागमादीनाम्। उणादिलिङ्गानुशासनयोरपि सूत्रत्वात्सिद्धे पृथगुपादानं 'गोबलीवर्दन्या-येन। एवं गणत्वादेव सिद्धे धातोरपीत्यादि।

अत्रेदं वक्तव्यम्—किमेषामुपदेशसंज्ञा? उत योगमात्रम्? नाद्यः, संज्ञायाः शास्त्रकारैरनुक्तेः, "असंज्ञात्वाद् घप्रत्ययो न" इति भा-

---

उपदेशत्वमिति। उपदेशशब्दव्यवहार इत्यर्थः। धातोरपीति। प्रत्ययेऽस्य उणादेरपीत्यपिशब्दार्थः। वाक्यशब्देन वार्तिकम्। शीङ्, लंण्, चोरट्, उण्, आचारेऽवगल्भ, धुट्, अण्, अनङित्युदाहरणानि। उपदेशसञ्ज्ञेति। उपदेशपदं योगरूढमेष्विति भावः। ननु सञ्ज्ञाशब्देन व्यवहार एवाभिमतोऽत आह—आम इत्यादि। न चाकारोच्चारणं व्यर्थम्, तेनास्मत्पक्षज्ञापनस्यैवौचित्यादिति भावः। आदिना यकारादी चुञ्चुप्चणपावित्यादिसंग्रहः॥

---

'निष्ठा' इत्यत्र निपातनस्थले बोध्यम्। वस्तुतस्तु एवंविधक्लेशपरिहाराय बाहुलकास्करणे घञ्स्वीकार एवोचित इति बोध्यम्। अत एव 'भवतष्ठक्छसौ' इति सूत्रविहितान्त्यस्येत्त्वसिद्धिः। अत एवाह—दिगिति। एतेन शेखरोक्तसिद्धान्तार्थः सूचितः॥

उपदेशत्वमित्यस्य शब्दस्य संज्ञिबोधकोपदेशशब्दप्रकृतिकत्वप्रत्ययान्तत्वे वक्ष्यमाणमूलोक्तदूषणानामापत्तिरत आह—उपदेशशब्देति। वाक्यशब्दो न सुप्तिङन्तचय इत्यादिप्रसिद्धार्थः, किन्तु रूढ इत्याशयेनाह—वाक्यशब्देनेति। ननु आद्या योग एव प्रदर्शित इति विकल्पप्रदर्श्य तन्मतखण्डनमयुक्तमत आह—उपदेशपदमिति। तथाच भवत्कृतं योगार्थवर्णनरूपङ्कआदिशब्दार्थवर्णनसदृशम्, उत पाठकादिशब्दार्थवर्णनसदृशमित्यत्र विकल्पप्रदर्शनतात्पर्यमिति भावः। मूले संज्ञाया इति। संज्ञारूपत्वं विनाऽस्य शब्दस्य रूढत्वन्न सम्भवतीति भावः। ननु शास्त्रकृत्कृतसंज्ञारूपत्वाभावेऽप्य-

---

१—भाष्यविरुद्धोऽयं न्यायः, तथा हि—"त्यदादीनि" (पा०सू०१।२।७२) इति सूत्रे भाष्ये "सामान्यविशेषवाचिनां द्वन्द्वाभावात्सिद्धम्। सामान्यविशेषवाचिनोश्च द्वन्द्वो न भवतीति वक्तव्यम्। यदि सामान्यविशेषवाचिनोर्द्वन्द्वो न भवतीत्युच्यते, 'शूद्राभीरम्' गोबलीवर्दम्' 'तृणोलपम्' इति न सिद्ध्यति। नैष दोषः, इह तावद् 'शूद्राभीरम्' इत्याभीरा जात्यन्तराणि। 'गोबलीवर्दम्' इति गाव उत्कालितपुंस्का वाहाय च विक्रियाय च स्त्रिय एवावशिष्यन्ते।" अयम्भावः—गोशब्दस्य स्त्रीत्वविशिष्टगोत्वम्, पुंस्त्वविशिष्टगोत्वञ्च प्रवृत्तिनिमित्तमिति नानाऽर्थकत्वम्। उत्कालितपुंस्का वाहाय च विक्रयाय च ये ते बलीवर्दाः। केवलेन गोपदेन च स्त्रीत्वविशिष्टगोत्वावच्छिन्नस्यैव प्रसिद्धत्वाद्बोध इति सामान्यविशेषभावो नास्तीति द्वन्द्वसाधुत्वम्, तथा च गोपदेन बलीवर्दस्यापि ग्रहणे सिद्धे तदुक्तिः प्राधान्याभिप्रायेणेत्याशयेनायं न्याय असङ्गत एव, भाष्यकारेण तयोः सामान्यविशेषभावस्य खण्डितत्वात्। 'ब्राह्मणवशिष्ठ' इत्यत्र तु सामान्यविशेषभावसत्त्वाद् 'ब्राह्मणेन सहितो वशिष्ठः' इत्यर्थो बोध्यः।

ष्योक्तेश्च । अस्मदादिकृतसंज्ञायाः शास्त्रव्यवस्थापकत्वेऽतिप्रसङ्गाच्च, 'आमोऽमित्त्वमदन्तत्वात्' इत्यादिस्वपरग्रन्थविरोधाच्च, न ह्युत्सृष्टानुबन्धस्यामो न प्रत्ययत्वं येन मित्त्वं न भवेत् । किं चैवं प्रत्ययविधौ पञ्चम्याः षष्ठीप्रकल्पकत्वे सनः सन्नेवादेशोऽस्त्वित्याशङ्क्योपदेशाभावादित्संज्ञा न स्यादिति भाष्यकैयटोक्तं व्याकुप्येत । किञ्च 'न धातुलोपः' ( पा० सू० १।१।४ ) इति सूत्रे 'धातुग्रहणं किम् ?

---

उपदेशाभावादिति । आदेशस्योपदेशाभावादित्यर्थः । ततो धातुसञ्ज्ञेति । लूशब्द एव धातुसञ्ज्ञकः केवलमसौ ञित्कार्यं लभत इति भावः । नन्वत्र सूत्रसाहचर्याद्धात्वागमप्रत्ययादिशब्देन तद्बोधकपाणिन्यादिपठितानुपूर्वीकाणां ग्रहणम्, तेषां धात्वादिव्यवहारस्तु भाविसञ्ज्ञाविषयघटितत्वेन 'धातुपाठ' इत्यादिव्यवहारवदिति चेन्न, आद्योच्चारणविषयाणामित्येव सिद्धे एतस्यानुपयोगात् । इत एव वाऽरुचेराह—अपि चेति ।

---

स्वकृतैव साऽस्त्वित्यत आह । मूले—अस्मदादीति । अतिप्रसङ्गादिति । रघुनाथादिशब्दे बालकविशेषसङ्केतिते पूर्वपदादिति णत्वापत्तिरूपातिप्रसङ्गादित्यर्थः । संज्ञात्वाभावेऽपि न तद्ग्रन्थीयसंज्ञापदमनुपपन्नम्, तस्य व्यवहारलाक्षणिकत्वादित्याह—संज्ञाशब्देनेति । अभिमत इति । तस्येति शेषः । अस्मत्पक्षेति । भावघञन्तपक्ष इत्यर्थः । किमत्र विनिगमकमिति चेत् क्लृप्तार्थकल्पने लाघवमेवेति गृहाण । यकारादी इति । चुञ्चुबादिप्रत्ययादेः 'चुट्टू' इति सूत्रेणेत्त्ववारणाय तेनेत्थमुक्तम् ।

ननूपदेशाभावादित्यसङ्गतम्, स्थानिनस्तस्य सत्त्वादत आह—आदेशस्येति । अभ्युपेत्य वादोऽयम् । वस्तुतस्त्वसङ्गत एव । अथवा "नानुत्पन्ने सनि प्रक्लृप्त्या भवितव्यम्" इत्यादिना भाष्य एव दूषितत्वात् । लूशब्द एवेति । यस्य क्रियावाचकत्वन्तस्य धातुसंज्ञा, क्रियावाचकता चार्थबोधनाय प्रयुज्यमानशब्दघटकस्येति भावः । असौ = लूशब्दः । अनुबन्धस्येत्संज्ञया निवृत्तिस्तूच्चारणाव्यवहितोत्तरकाल एवात आह—केवलमिति । ञित्कार्यमिति । ञकारोच्चारणसामर्थ्यादिति भावः । अत्र=धातुसूत्रगण इत्यत्र । साहचर्यात् = साहश्यात् । एतस्य=उक्तार्थलक्षणाकल्पनस्य । भावघञन्तोपदेशशब्दस्य सप्तम्यन्तस्याद्योच्चारणविषयाणामित्यर्थे लक्षणेति तात्पर्यम् । कर्मकरणव्युत्पत्तिकल्पनस्य, साहचर्यकल्पनम्, लक्षणाकल्पनञ्चानुचितमिति भावः । इत एवारुचेः = उक्तरीत्योक्तदोषपरिहाररूपारुचेः ।

---

१—'अदन्तत्वादिति' आदिशब्दरहितपाठोऽसङ्गतः, आदिना यकारादी' इति शब्दरत्नोक्तेः ।

लूञ् लविता, पूञ् पविता" इति भाष्यम्, "उपदेश एवानुबन्धलोपे कृते ततो धातुसञ्ज्ञा' इत्येवंपरः कैयटग्रन्थश्च विरुद्ध्येत। अपि च 'ढ्वसोरेद्धौ' (पा० सू० ६।४।११९) इति सूत्रे 'लोपश्च' इति द्विशकारको निर्देशः; द्वितीयः शकार इदिति अलोऽन्त्यसूत्रस्थभाष्यकैयटादिकमपि विरुद्ध्येत। न द्वितीयः, योगस्यैव पुरस्कारे परिगणनस्य व्यर्थत्वात्, धात्वादिषु करणव्युत्पत्तिरागमादिषु नेति

अलोऽन्त्यसूत्रेति। उपधासञ्ज्ञासूत्रेत्यर्थः। विरुद्ध्येतेति। तत्र हि 'लोपश्' इति भिन्नं पदम् 'श्' इति च। पूर्वस्य श्चुत्वेन शः। असन्देहाय झलपरसंयोगादित्वेऽपि 'स्कोः' (पा० सू० ८।२।२९) इत्यस्य न प्रवृत्तिः, 'झलां जश्' (पा० सू० ८।४।५३) इत्यादौ जश्त्वस्येव। शकारस्य धात्वाद्यन्तत्वाभावः स्पष्ट एवेति भावः। किं च "नमो वरिवश्चित्रङः" (पा० सू० ३।१।१९) इत्यस्यासंग्रहोऽत्र पक्षे इत्यपि बोध्यम्, एतस्य क्वचिरि-

अलोऽन्त्यसूत्रेतिशब्दात्तावन्मात्रं सूत्रमिति प्रतीतावसङ्गतिः, अप्रसिद्धेरत आह—उपधासंज्ञेति। उपधासंज्ञाविधायकसूत्रेत्यर्थः। विरोधमुपपादयति—तत्र हीति। भिन्नम्पदमिति। एतेन शकारस्य संज्ञाशब्दावयवत्वेन समुदायाद्विभक्त्युत्पत्तिः, यथाकथञ्चित्ततो विभक्त्युत्पत्तौ हल्ङ्यादिलोपः स्यादिति 'द्विशकारको निर्देश' इत्यनुपपन्नमिति परास्तम्। श् इति चेति। भिन्नम्पदमित्यनुषज्यते। स्वरूपेणार्थेन प्रातिपदिकत्वादेतस्मात्सुप्, हल्ङ्यादिलोपः। न चास्य शकारस्य लोपशब्दानवयवत्वेन कथन्तस्य शित्त्वमिति वाच्यम्, 'अनेकान्ता अनुबन्धाः' इति पक्षेणास्य पक्षस्य सत्त्वात्, तत्पक्षे हि समीपेऽवयवत्वारोपेण बहुव्रीहेः स्वीकारात्। 'अनुबन्धाः एकान्ताः' इति पक्षे न तु शकारान्तरस्य प्रश्लेषः, किन्तु लोपग्रहणानुवृत्त्यैव सिद्धे पुनर्लोपग्रहणात्सर्वादेशः। असन्देहायेति। 'द्विशकारकोऽयन्निर्देशः' इति भाष्याक्षरस्यान्यथानुपपत्त्या चेति शेषः। एतद्भाष्याक्षरमूलकव्याख्यानात्सन्देहनिवृत्तिकल्पनापेक्षया संयोगादिलोपस्य कसाहचर्येण सलोपविषये ऽखण्डपद एव प्रवृत्तिकल्पनमुचितमिति भावः। नचायस्मयादित्वेन भत्वदृष्टान्ते जश्त्वाप्रवृत्तिर्न्याय्यैवेति वाच्यम्, छन्दोवत्सूत्राणीत्यतिदेशस्य प्रवृत्तिं विना भत्वस्यासम्भव इति तस्य प्रवृत्तिरवश्यं वाच्या, तथा च तत एव दृष्टान्तदार्ष्टान्तिकयोः संस्कारकशास्त्रस्याप्रवृत्तिः स्यादित्याशयात्। ननूक्तपक्षस्यानेकान्तपक्षाभिप्रायकत्वेनैकदेश्युक्तित्वेन तद्विरोधेऽपि न क्षतिरत आह—किञ्चेति। इत्यस्येति =

१—उपदेशसंज्ञकेषु धातुसूत्रेत्यादिषु प्रातिपदिकस्यानुक्तेः 'चित्रङ्' इति प्रातिपदिकघटकङकारस्येत्त्वं न स्यादिति भावः।

वैषम्यस्य दुरुपपादत्वाच्च । उपदेशताप्रयोजकधातुत्वादिरूपोपाध्य-

त्युक्तेः परिगणनताया एव लाभात् । योगस्यैवेति । न तु रूढेरित्यर्थः । परिगणनस्येति । धात्वादिगणनस्येत्यर्थः । वैषम्येति । भाष्यरीत्या करणव्युत्पत्त्यैव सर्वसंग्रहादिति भावः । उपदेशताप्रयोजकेति । योगमात्रस्वीकारे उपदेशता = उपदेशकरणता, न हि तत्प्रयोजकं धातुत्वादि भवतीति तद्विरोधः । संज्ञात्वे तु उपदेशता = उपदेशशब्दत्वम्, उपदेशशब्दस्य शब्दपरत्वात् । तदवच्छिन्नस्य प्रयोजकं तु रूढ्यर्थतावच्छेदकतया धातुत्वादि वक्तुं शक्य-

सूत्रस्थचित्रङ् इत्यस्य । अत्र पक्षे = उपदेशपदस्य धातुसूत्रेत्यादिना पठितेषु योगरूढिरिति पक्षे । भाष्यसम्मतकरणव्युत्पत्तिरिति पक्षे तु नासंग्रहः । त्वदुक्तरीत्या भाष्यकृताऽपरिगणनात् । व्यवसितान्त्यस्य ग्रहणमिति व्याख्यानेऽपि नासङ्ग्रहः, प्रातिपदिकात्वत्वादिति च ध्वनितम् । ननु मन्मतेऽपि परिगणनन्नेत्यत आह—एष्वेतस्येति । अस्य = धातुसूत्रेत्यादिना पठितस्य । परिगणनस्यैवेत्यत्र पठितैवकारव्यवच्छेद्यमाह—नत्विति ।

नन्वन्यत्र यथा परिगणनङ्कर्तव्यमित्युच्यते तथा अत्र नोक्तमिति परिगणनमिति कथनं नोचितमत आह—धात्वादीति । मूले—दुरुपपादत्वादिति । सकृदुच्चरितस्य शब्दस्यैकव्युत्पत्त्यैवार्थबोधकत्वन्न तु तत्र व्युत्पत्तिद्वयसम्भवः, एकार्थबोधकतया चारितार्थ्यादावृत्तौ मानाभावादिति भावः । करणतेति । प्रकृतिजन्यबोधप्रकारस्यैव भावप्रत्ययार्थतयोपदेशशब्दो यदि करणघञन्तस्तदा करणताया एव भावप्रत्ययार्थत्वमित्याशयः । न हीत्यादि प्रयोज्यप्रयोजकभावस्यान्वयव्यतिरेककल्पनया यथा चैत्रे चैत्रत्वधर्मसत्त्व एव पाचकत्वमन्यथा नेति कस्यापि न सम्मतम्, किन्तु विक्लित्यनुकूलव्यापारसत्त्वमेव पाचकत्वप्रयोजकम्, तथा धातुत्वादिकन्न करणताप्रयोजकम् । पूर्वस्मिन्पक्षे तु न तद्ग्रन्थविरोध इत्याह—संज्ञात्वे त्विति । उपदेशशब्दत्वमिति । भावप्रत्ययप्रकृतिभूत उपदेशशब्दः स्वरूपपरः, ततस्तल्प्रत्ययस्तद्वृत्तिधर्मपर इति भावः । तदवच्छिन्नस्येति । उपदेशतायाः प्रयोजकमिति विग्रहे या षष्ठी तस्यास्तदवच्छिन्नसम्बन्धित्वमर्थ इति कल्पनेन तदवच्छिन्नस्येत्यस्य लाभः । प्रयोजकपदन्तु रूढ्यर्थतावच्छेदके लाक्षणिकमित्याशयेनाह—रूढ्यर्थतेति । यथा हर्यादिनानार्थपदस्य विष्णु-

१—उपदेशशब्दस्य यौगिकत्वस्वीकारे धात्वाद्यन्यतमत्वापेक्षयोपदेशकरणताया धात्वाद्यतिरिक्तप्रातिपदिकपदादिष्वपि सत्त्वेनाधिकवृत्तितया प्रयोज्यप्रयोजकभावस्य च समनियतयोरेव नियतत्वेन 'उपदेशताप्रयोजकधातुत्वादि' इत्यग्रिमग्रन्थो विरुध्येतेति भावः ।

२—पङ्कजपदवद्योगरूढत्वाङ्गीकारे तु शब्दार्थयोस्तादात्म्यादुपदेशशब्दस्याभेदेनैव धात्वादिबोधकया, तदुत्तरभावप्रत्ययस्य तद्वृत्त्यानुपूर्वीबोधकतया, उपदेशता=उपदेशशब्दत्वम्, तदवच्छिन्नः=उपदेशशब्दः संकेतसम्बन्धेन तद्वत्ताप्रयोजकस्य रूढ्यर्थतावच्छेदकधातुत्वादिधर्मस्यान्यतमत्वेन रूपेणोपदेशशब्दसमनियततया प्रयोज्यप्रयोजकभावस्य सुलभत्वेनाग्रिमग्रन्थो न विरुध्यत इत्याह वक्तुं शक्यमिति ।

वच्छिन्नसमुदायान्त्यं हलिदित्यर्थ इति स्वग्रन्थविरोधाच्च। पक्षद्वये ऽपि लिङ्गानुशासनस्य प्रकृतानुपयोगात्, लोपश्चेति शकारस्यासंग्रहाच्च। "आदेच उपदेशे" ( पा० सू० ६।१।४५ ) "उपदेशेऽत्वतः" ( पा० सू० ७।२।६२ ) इत्यादावाद्योच्चारणस्यैवोपदेशपदार्थतायाः सर्वसंमतत्वाच्चेति दिक् ॥

मिति भावः। शकारस्येति। न ह्यनेन किञ्चिदुपदिश्यत इति भावः। ननूपदिश्यते = ज्ञाप्यते ऽनेनेति तदर्थः, धात्वादिभिर्हि प्रयोगो ज्ञाप्यते, तद्वदनेनापि शकारेण सर्वादेशत्वं ज्ञाप्यते, इत्यरुचेराह—आदेच इति। सर्वेति। भाष्यकारादीत्यर्थः। यत्र तु करणव्युत्पत्त्यैवार्थसङ्गतिः, तत्रागत्या ऽस्तु "कृत्यल्युटः" ( पा० सू० ३।३।११३ ) इति बाहुलकाल्ल्युडभावः। यथा 'यन्निमित्तवैकल्यप्रयुक्तोपदेशाप्रवृत्तौ' इत्यादाविति दिक् ॥

त्वादिरूपा नानाधर्माः शक्यतावच्छेदका भवन्ति, तथेहाऽपि धातुत्वादिकं रूढ्यर्थतावच्छेदकं सम्भवतीत्याशयः। न चास्मिन्पक्षे प्रयोजकपदस्य यदि लक्षणा तदा द्वितीयपक्षेऽपि प्रयोजकपदस्यावच्छेदके लक्षणाऽस्तु तथा चोपदेशकरणतावच्छेदकमित्यर्थो भविष्यतीति तत्पक्षेऽपि न स्वग्रन्थविरोध इति वाच्यम्, अन्यूनानतिरिक्तवृत्तिधर्मस्यैवावच्छेदकतया धातुत्वादेर्न्यूनवृत्तितयाऽवच्छेदकत्वासम्भवादिति भावः।

केचित् उपदेशतेत्यत्रोपदेशशब्दस्य संज्ञाशब्दतया संज्ञाशब्दस्थले शब्दस्वरूपस्यैव संज्ञिपरशब्दप्रकृतिकभावप्रत्ययार्थत्वमित्युपदेशतेत्यस्योपदेशशब्द इत्यर्थ एवोचित इत्याहुः, तन्न योगरूढस्य शब्दस्य शब्दस्वरूपप्रवृत्तिनिमित्तकत्वासम्भवात्। मूले पक्षद्वयसाधारणं दूषणमाह—लोपश्चेतीति। आद्यपक्षे परिगणनेनासङ्ग्रहः स्पष्टः। द्वितीये तमुपपादयति—न ह्यनेनेति। तदर्थः—उपदेशपदार्थः। सर्वसम्मतत्वेऽपि भाष्यानुसारिणाम्भाष्यसम्मतार्थे एवाग्रह इत्याशयेनाह—भाष्यकारादिति। ननु करणव्युत्पत्तिस्तर्ह्यप्रसिद्धार्थिकैव स्यादत आह—यत्र त्विति। इत्यादाविति। आदिना भाष्ये यस्य सन्ध्यक्षरेषु तपरोपदेशश्चेत्तपरोच्चारणमिति वाक्यस्य सङ्ग्रहः। मूले—दिगिति। दिगर्थस्तु प्रागुक्तभाष्यवार्तिकस्वारस्येन "लटः सद्वा" इत्यादिसङ्ग्रहानुरोधेन सकललक्ष्यसाधनानुरोधेन बाहुलकाश्रयणमेवोचितमिति ॥

१—दिगर्थस्तु भावे घञि अज्ञातस्वस्वरूपज्ञापकोच्चारणरूपोपदेशपदार्थस्वीकारे "लटः सद्वा" "निष्ठा" इति विहितशतृ-शानच्-क्त-क्तवतूनां शकारककारादेरित्त्वानापत्तिः, प्रतीक्षाख्यानत्वाभावात्। तथा "राजसूयसूर्य" "ऐकागारिकट् चौरे" इत्यादिनिपातानुमितक्यप्-ठगादीनाम् "कालेभ्यो भववत्" "चरणेभ्यो धर्मवत्" "गोत्रादङ्कवत्" इत्याद्यतिदेशबोधितप्रत्ययानाञ्च पादेरित्त्वानापत्तिः। किञ्च 'उद्देश

"उपदेशेऽजनुनासिक इत्" (पा० सू० १।३।२)॥ यद्यप्य-त्रोपजीव्यत्वादनुनासिकसञ्ज्ञा प्रथमं वक्तुमुचिता, तथाऽपि 'नासिकामनुगतः' इति योगाश्रयणेनैव गतार्थत्वाद् 'अनुनासिकसञ्ज्ञासूत्रं

---

नासिकामनुगत इति। नासिकामभिहत्य वायुनाऽभिव्यञ्जित इत्यर्थः। प्रातिशाख्यशिक्षादौ लोके च तद्व्यवहारस्य तथैवोपपादनमावश्यकमिति तात्पर्यम्॥

अत एव मुखग्रहणप्रत्याख्यानभाष्यध्वनितो यमानुस्वारयोरनुनासि-

---

नन्वनुनासिकपदात् 'अनु = पश्चान्नासिकाङ्गतः' इति, नासिका पश्चाद्यस्मिन्' इति वाऽर्थः प्रतीयते, तथा चानुनासिकाकारादीनामनुनासिकत्वगुणरहितानां स्वरूपोपलम्भात्तद्विषये मतभेदेन यद्यप्युक्तस्यार्थस्य सम्भव इति तेषां संग्रहो भवति, तथापि आदीनान्तद्गुणरहितानामनुपलम्भात् युगपदेवोभयावच्छेदेनोत्पन्नाभ्यां वायुसं-योगाभ्यामुत्पत्तिरिति विनिगमनाविरहेणोभयोः स्थानत्वमतः कथं योगाश्रयणेन गता-र्थता। किञ्च—

"अनुस्वारयमानाञ्च नासिकास्थानमिष्यते"

इति शिक्षोक्तेस्तेषाञ्चासङ्ग्रहोऽत आह—नासिकामभीति। तथाच नायमुक्तरीत्या यौगिकः। किन्तु 'नासिकामनुगतः' इत्यत्र योऽनुशब्दस्तस्याभिहत्येति, गत इत्यस्य चाभिव्यञ्जित इत्यर्थ इति सर्वेषां सङ्ग्रह इति भावः। उक्तयोगाश्रयणमावश्यकमित्याह—प्रातिशाख्येति।

न केवलं प्रातिशाख्यादावेव तथा किन्तु प्रकृतशास्त्रेऽपीति सूचयन्नाह—अत एवेति। योगाश्रयणादेवेत्यर्थः। प्रत्याख्यानेति। तत्र ह्यादौ मुखग्रहणस्य 'मुख-

---

प्रातिपदिकानां नोपदेशः" इति भाष्योक्तेः 'चित्रङ्' अवगल्भक्लीबहोडेत्यादिप्रातिपदिकानाम् "चोः कुः" इत्यादीनाचेत्त्वानापत्तिः, इति करणे घञा उपदेशपदेन व्यवसितपदार्थत्वेन भाष्ये उक्तानां धातुप्रातिप-दिकप्रत्ययनिपातागमादेशानां ग्रहणं कार्यमिति नातिप्रसङ्गः। न च 'अत्र श्रौं अपः' इत्यत्रादेशत्वेने-त्वापत्तिः, धातुप्रातिपदिकेत्यनेन धात्वादिबोधकानां ग्रहणेनादोषादिति। अन्ये तु "तौ सत्" "क्तक्तवतू निष्ठा" इत्यनयोः परिभाषात्वेन यत्र 'सत्' 'निष्ठा' इति पदं तत्र "शतृशानचौ" क्तक्तवतू इत्युपतिष्ठेते इति स्वीकारेण राजसूयेत्यादौ 'राजपूर्वकसुवतेः—सरते र्वा क्यप्' इत्यादिनिपातानुमितवचनेन ककारप-कारेत्संज्ञकस्यैवानुमानेन वा "कालेभ्यो भववत्" इत्यादावपि लुप्तानुबन्धस्यैवातिदेशेन "उदेशश्च प्राति-पदिकानाम्" इत्यत्र निपातातिरिक्तत्वेन सङ्कोचात् "ऐकागारिकट्" इत्यादौ प्रत्यक्षाख्यानसत्त्वेन 'चित्रङः क्यच्' इत्यत्र चित्रेत्यस्य लुप्तपष्ठीकतया "ङः क्यच्" इत्यस्य लक्षणया ङित्त्वयजित्यर्थेन च निर्वाहे नास्ति दोषलेश इति वदन्ति। अत्रानेकक्लिष्टकल्पनापेक्षया करणघञन्तस्वीकार एव श्रेयानिति तत्त्वम्।

१—अत्र सूत्रे भाष्ये हि—"मुखग्रहणं शक्यमकर्तुम्। केनेदानीमुभयवचनानां सिद्धं भविष्यति?

मन्दप्रयोजनम्' इति ध्वनयितुं नेहोपन्यस्तम्। उपदेशे किम्? 'अ-

कव्यवहारः सूत्रमते सङ्गच्छते। "यरोऽनुनासिके" (पा० सू० ८।४।४५) इत्यादौ स्वरूपग्रहणाभावस्तु[1]'पशुः' 'अपत्यम्' इत्यादिवदिति ध्येयम्।

ग्रहणं यमानुस्वाराणामेव मा भूदित्येवमर्थम्' इति प्रयोजनमुक्त्वा ये उभयवचनास्तेषा-म्प्रासादवासिन्यायेन सङ्ग्रहो मुखग्रहणाभावेऽपि भविष्यति, यमानुस्वाराणान्तु सङ्ग्रहेऽपि 'नैव दोषो न प्रयोजनम्' इत्यनेन क्षत्यभावमुक्त्वा मुखग्रहणप्रत्याख्यानेत्यर्थः। ध्वनि-तमिति। 'भवेदुभयवचनानां सिद्धम्' इति कथनेन ध्वनितमित्यर्थः। उभयवचनमु-भयावच्छिन्नवायुसंयोगप्रयोज्याभिव्यक्तिविषयत्वेनैवेति तथा कथनेनायमर्थो लभ्यते। नन्विदं सूत्रं यद्यारभ्यते तदा 'अशब्दसंज्ञा' इति निषेधात् 'यरोऽनुनासिकः' इत्यादौ स्वरूपग्रहणाभावो भवति, सूत्रानारम्भे तु स्वरूपग्रहणम्प्राप्नोतीत्यत आह—यरोऽनुना-सिक इत्यादाविति। इत्यादिवदिति। आदिना देवदत्तादिशब्दपरिग्रहः। तथा च—स्वं रूपमित्यंशः पश्वादिविषये व्यभिचरित इति तस्यानित्यत्वात्तानुवादकमवाशब्द-संज्ञेति न तु स्वातन्त्र्येण निषेधविधायकम्, इति पश्वादिशब्दोच्चारणस्थलवदत्रापि स्व-रूपग्रहणाभाव इति भावः। अनुनासिकाकारादिविषये मतभेदश्च कैयटीये प्रसिद्धः। अनुनासिकस्य पूर्वः परो वा भागो मुखेनोच्चार्यते, अपरो भागो नासिकया, नासिकावच-नभागानुरागवशान्मुखवचनोऽपि भागो नासिकावचन इव लक्ष्यते। अत्र प्रासादवासि-न्यायो नास्ति, भागस्यैव मुखेन, नासिकया चोच्चारणात्। यदा तु सर्व एव वर्णो मुखे-नोच्चार्यते नासिकया च, तदा प्रासादवासिन्यायेन मुखग्रहणम्भाष्यकारः प्रत्याचष्ट इति॥

प्रासादवासिन्यायेन। तद्यथा—केचित्प्रासादवासिनः केचिद्भूमिवासिनः केचिदुभयवासिनः। तत्र ये प्रासादवासिनः, गृह्यन्ते ते प्रासादवासिग्रहणेन। ये भूमिवासिनः, गृह्यन्ते ते भूमिवासिग्रहणेन, ये तूभयवासिनः गृह्यन्ते ते प्रासादवासिग्रहणेन, भूमिवासिग्रहणेन च। एवमिहापि केचिन्मुखवचनाः, केचिन्नासिकावचनाः, केचिदुभयवचनाः। तत्र ये मुखवचनाः गृह्यन्ते ते मुखग्रहणेन, ये नासिका-वचनाः, गृह्यन्ते ते नासिकाग्रहणेन, य उभयवचनाः, गृह्यन्ते ते मुखग्रहणेन, नासिकाग्रहणेन च। भवेदुभयवचनानां सिद्धम्, यमानुस्वाराणामपि प्राप्नोति। "नैव दोषो न प्रयोजनम्" इत्युक्तम्। इत्थ-मुभयवचनानां ञमङणनानामनुनासिकसंज्ञां समर्थ्य यमानुस्वारयोः, "नैव दोषो न प्रयोजनम्" इत्युक्त्या अनुनासिकत्वस्येष्टत्वसूचनेन 'नासिकामनुगतः' इत्यत्रानुशब्दस्याभिहत्यार्थे, गतशब्दस्याभि-व्यञ्जितार्थे च लक्षणाऽवश्यं स्वीकार्या। 'अनु=पश्चाद् गतः' इत्यर्थकत्वे तु "अनुस्वारयमानाञ्च नासिका-स्थानमिष्यते" इति शिक्षोक्तेस्तेषां नासिकामात्रस्थानकत्वेन पश्चान्नासिकागतत्वाभावात्संज्ञानापत्ति-रिति सूत्रभाष्ययोः फलैक्यायोक्तार्थकत्वमावश्यकमिति तत्त्वम्।

१—"हरतेर्दृतिनाथयोः पशौ" (सू० ३-२-२५) "तस्यापत्यम्" इत्यादौ स्वरूपग्रहणे हि पशुशब्दस्य नाथहरणकर्तृत्वासम्भवेन, गोत्रार्थे प्रत्ययविधानेन च यथा स्वरूपग्रहणाभावस्तथाऽत्र "ङमुण्नित्यम्" इति निर्देशात्, 'स्वर्नयति' 'प्रातर्नयति' 'यरोऽनुनासिकेऽनुनासिको वा' इत्यनुनासिकः "प्राप्नोति" इति "हयवरट्" सूत्रस्थभाष्याच्च स्वरूपग्रहणाभाव इति भावः।

'अभ्र आँ अपः'[1] यद्यपीह "उञः" "ऊँ" (पा० सू० १।१।१७।१८) इत्यत्रैव विधानसामर्थ्यान्नेत्त्वमिति सुवचम्, तथाप्युत्तरार्थमवश्यं

मन्दप्रयोजनमिति। मन्देषु प्रयोजनमस्येति बहुव्रीहिः। एवंविधयोग-लोक-प्रातिशाख्याद्यनभिज्ञं प्रति सप्रयोजनमित्यर्थः। अभ्र आँ अप इति। अत्रे-त्सञ्ज्ञायां लोपः स्यादिति भावः। विधानेति। इदिति वक्तव्येऽनुनासिक-विधानसामर्थ्यादित्यर्थः। नेत्त्वमिति। तत्फललोपस्य सामर्थ्यादभावे इत्त्व-मपि फलाभावान्नेत्यर्थः। ननु 'अभ्र आँ अटितः' इत्यत्र 'अनेकान्ता[1] अनु-बन्धाः' इति पक्षे 'आदितश्च' (पा० सू० ७।२।१६) इतीट्प्रतिषेधः फलम्। न च लोपाभावे इदिति[2] महासञ्ज्ञाकरणात्संज्ञाऽपि नेति वाच्यम्, महा-सञ्ज्ञयैव लोपसिद्ध्या 'तस्य लोपः' (पा० सू० १।३।९) इत्यस्य वैयर्थ्या-पत्तेः, 'इक'[3] इत्यादौ ककारादिश्रवणानापत्तेश्च; इति चेन्न, 'अनुबन्धाना-

मन्दप्रयोजनशब्दो न क्रियाविशेषणमन्दशब्दघटितः समानाधिकरणपदको बहु-व्रीहिः, उक्तरीत्या प्रयोजनालाभात्, किन्तु 'सप्तमी विशेषणे' इति ज्ञापकाद्व्यधिक-रणपदक इत्याशयेनाह—मन्देष्विति। लोपः स्यादिति। अत्र स्यादित्यनेन सम्भा-वनामात्रं न तु प्रसक्तिः, वेदे आपाद्यमानरूपाभावात्। यद्यपि 'अनेकान्ता अनुबन्धाः" इति पक्षे "अभ्र आँ अटितः' इत्यत्रेट्प्रतिषेधः फलं सम्भवति, तथाऽप्येका-न्तपक्षे तदसम्भव एवेति वक्ष्यते। "आङ इदिति वक्तव्यः" इति आङ इच्छन्दसीति वक्तव्य इत्यर्थः। यत्तु "तस्य लोपः" इति सूत्रानन्तरम् 'आङ श्छन्दसि' इति लाघवाद्वक्तव्यमिति तन्न, अचीत्यस्य कर्तव्यत्वापत्तेः। स्वस्थाने तथापाठे तु 'प्लुतप्रगृह्या' इति सूत्रादचीत्येतस्य सम्बन्धेन तदनावश्यकमेव। ननु विधानसामर्थ्यादस्य लोपो मा भूदित्संज्ञा तु स्यादेवेत्यत आह—तत्फलेति। तस्ये-त्त्वस्य फलं लोपः स प्रतियोगितासम्बन्धेनेत्त्वस्य व्यापको विधानसामर्थ्यादव्यापकस्य तस्याभावे व्याप्यस्येत्त्वस्याप्यभाव इत्यर्थः। फलान्तरमाशङ्क्य निराचष्टे—नन्वभ्रेति। महासंज्ञेति। इदिति व्यञ्जनमात्रं संज्ञा कर्त्तव्या तथा च लाघवम्। इदिति स्वेतीतीदित्यर्थकमिति लोपो भविष्यतीत्याशयः। इक इत्यादाविति। प्रत्याहारार्थ-मित्वन्तस्यावश्यकमेव। तथाच महासंज्ञया तन्निवृत्तिः स्यादिति भावः। ननु न

१—अनवयवा इत्यर्थः, एकान्तशब्दस्यावयवरूपार्थे प्राक्तनसंकेतात्।

२—एति=गच्छतीति 'इत्' इत्यन्वर्थसंज्ञेत्यर्थः। एतेन सार्द्धमात्राधिककालिकसंज्ञाया एव महासं-ज्ञात्वेन टि, घु, भादिवन्महासंज्ञात्वाभावेनेदमसङ्गतमित्यपास्तम्।

३—ननु इत्संज्ञाविधायकशास्त्रे 'इत्' इत्यन्वर्थसंज्ञया लोपस्य सिद्धावपि संज्ञाशास्त्राणां साधुत्वाबोध-कतया लोपघटितस्य साधुत्वार्थम् "तस्य लोपः" इति सूत्रं सार्थकमित्यरुचेराह—इक इति। केचित्तु 'इकः' इत्यादीनामज्ञातस्वस्वरूपज्ञापकत्वस्योपदेशत्वाभावेनेत्त्वाप्राप्त्या चिन्त्यमिदमित्याहुः।

कर्त्तव्यमुपदेशग्रहणं स्पष्टप्रतिपत्तये इहैव कृतम्। अच् किम्? मनिनो भकारस्य मा भूत्। 'प्रतिज्ञायते इति प्रतिज्ञा' "आतश्चोपसर्गे" (पा० सू० ३।३।१०६) इति कर्मण्यङ्। 'प्रतिज्ञा[1] आनुनासिक्यं येषाम्' इति विग्रहः। एवं च 'प्रतिज्ञासमधिगम्ये प्रतिज्ञाशब्दस्य लक्षणा'[2] इति क्लिष्टं व्याख्यानं नाश्रयणीयम्, "पाणिन्युपज्ञं व्याकरणम्" इत्यादिष्विव लक्षणां विनैव निर्वाहात्। यद्यपि सूत्रकार-

मेकान्तत्वमेव' इति मुख्यपक्षे दोषाभाव इत्याशयात्। तदा हि मुख्ये ऽव[3]-यविन्यन्यपदार्थे बहुव्रीहिः। न चायमाकारोऽद्धातोरवयवः, इत्यदोषात्। प्रतिज्ञेति। प्रतिज्ञानविषय इत्यर्थः। प्रतिज्ञाशब्दस्येति। भावाङन्तस्येत्यर्थः। क्लिष्टेति। शक्तिग्राहकव्याकरणसत्त्वाच्छक्त्यैव तदर्थबोधसम्भवे लक्षणाश्रयणं क्लेश इति भावः। लक्षणां विनैवेति। अत्र लक्षणया व्याख्यानं कुर्व-

तस्येतस्तत्रोच्चारणङ्किन्तु तत्सदृशस्यैव, अत एव "आदिरन्त्येन" इति सूत्रव्याख्यानावसरे इता इत्सदृशेनेत्युक्तम्, अत एव 'वैयाकरण' इत्यत्र चित्स्वरो नेत्यत आह—आदाविति। तेन इउणित्यादौ णादिश्रवणानापत्तिः समुच्चीयते। मुख्यत्वन्तस्योपपादयति—तदा हीति। एवं हलन्त्यमित्यादौ लक्षणाया अकल्पनेनापि लाघवम्बोध्यम्। ननु दोषाभाव इति प्राग्लिखितमेव, पुनरिहेत्यदोषादित्युच्यते इति पौनरुक्त्यमिति, चेन्न, पूर्वस्य दोषपदस्येट्प्रतिषेधप्रसङ्गरूपं दोषपरत्वम्, अस्य तु दोषसामान्यपरत्वमिति भेदात्।

'प्रतिज्ञानुनासिक्या' इत्यत्र 'प्रतिज्ञा' शब्दः कर्मबोधकाङन्त इत्याशयेनाह—प्रतिज्ञानेति। लक्षणावादिमतमुपपादयति—भावेति। लक्षणेति। क्लिष्टमित्यनेन लक्षणास्वीकार एव क्लेश इति प्रतीयते, स तु न युक्तः, लक्षणाया उच्छेदापत्तेरतो भावार्थमाह—शक्तीति। मूले—पाणिन्युपज्ञमिति। आद्यर्थकोपशब्दपूर्वकाज्ज्ञाधातोः कर्मण्यङ्। पाणिनेरुपज्ञेति कर्तृषष्ठ्या समासः। पाणिनिकर्तृकाद्यज्ञानविषयभूतमि-

१—प्रतिज्ञा चात्र—'इदमेवम्' इति बोधनरूपा, न तु न्यायनिकायप्रसिद्धा—पक्षे साध्यनिर्देशरूपा। बोधनञ्च क्वचित् 'अयमनुनासिकः' इति भाष्यकारादीनां साक्षात्कथनेन, प्रत्ययः इत्यादिनिर्देशादिरूपव्यवहारेण च।

२—भावाङन्तमते प्रतिज्ञाशब्दार्थस्य क्रियारूपत्वेन आनुनासिक्यस्य च गुणत्वेन सामानाधिकरण्यासम्भवात्प्रतिज्ञाशब्दस्य प्रतिज्ञासमधिगम्ये=प्रतिज्ञानप्रयोज्यज्ञानविषये लक्षणया सामानाधिकरण्येन बहुव्रीहिरिति तत्त्वम्।

३—अनेकान्तपक्षे हि सामीप्यस्य षष्ठ्यर्थत्वाभावात् अवयवत्वस्य च बाधात् "आदितश्च" इत्यादौ बहुव्रीहिर्न प्राप्नोतीति तत्सिद्धयेऽनुबन्धे सामीप्यमूलकमवयवत्वमारोप्यते, इत्यारोपितावयवरूपषष्ठ्यर्थे बहुव्रीहिः, एकान्तपक्षे तु वास्तविकावयवरूपषष्ठ्यर्थे इति भावः।

कृतोऽनुनासिकपाठ इदानीं परिभ्रष्टस्तथापि वृत्तिकारादिव्यवहारबलेन यथाकार्यं प्राक् स्थित इत्यनुमीयत इति भावः।

ननु रलयोरिति न्यूनम्, टकारस्यापि मध्यगतत्वादित्यत आह—*प्रत्याहारेष्विति*। *व्यवह्रियन्ते इति*। 'प्रत्याह्रियन्ते = संक्षिप्यन्ते वर्णा यत्र' इति बाहुलकादधिकरणे घञ्। यद्यपि

ताऽपि तत्र लक्षणां विना मदुक्तरीत्यैव[1] व्याख्यातम्। एवं च पूर्वापरविरोधस्तस्येति भावः। न चोभयोर्विधानेऽपि लाघवाद्भावे शक्तिः, कर्मणि लक्षणा, अनुशासनमपि लाक्षणिकार्थानुशासनमेवेति वाच्यम्, 'लः कर्मणि' (पा० सू० ३।४।६९) इत्यादीनापि तथात्वापत्तौ 'तिङां कर्त्रादौ शक्तिः' इति सिद्धान्तासङ्गत्यापत्तेः, व्याकरणस्याभियुक्तोक्तशक्तिग्राहकत्वस्य[2] भङ्गापत्तेश्च॥

टकारस्यापीति। अत्र यद्वक्तव्यं तदन्यत्रोक्तम्[3]। बाहुलकादिति। 'भावघ-

त्यर्थः। तत्र = दृष्टान्ते। उभयोः = भावकर्मणोः। तथात्वापत्तौ लाक्षणिकार्थबोधकत्वापत्तावित्यर्थः। अभियुक्तोक्तेति।

"शक्तिग्रहं व्याकरणोपमानकोशाप्तवाक्याद्व्यवहारतश्च।
वाक्यस्य शेषाद्विवृत्तेर्वदन्ति सान्निध्यतः सिद्धपदस्य वृद्धाः॥"

इति वृद्धोक्तेत्यर्थः॥

अत्र—रप्रत्याहारविषये। अन्यत्र = लघुशब्देन्दुशेखरे। 'लण्सूत्रस्थाकारो यद्यनुनासिकः स्यात्तर्हि 'अतो ल्रान्तस्य' इति सूत्रे पाणिनिर्लकारन्नोच्चारयेत्, रप्र-

१—उपशब्दस्याद्यर्थकत्वाज्ज्ञाधातोश्च ज्ञानार्थकत्वात् कर्मण्यङश्च विषयार्थकत्वात् पाणिनेरिति कर्तरि षष्ठ्या समासे 'पाणिनिकर्तृकाद्यज्ञानविषयो व्याकरणम्, इत्येवं रूपेण शक्यार्थमादायैव व्याख्यातमिति भावः।

२—याथातथ्येन सकलविषयकज्ञानवन्तो रागादिवशादपि नान्यथावादिन आप्ताः=अभियुक्ता इत्युच्यन्ते।

३—शब्देन्दुशेखरे इत्यर्थः। तत्र हि रप्रत्याहारसत्त्वे "अतो ल्रान्तस्य" इति सूत्रे लकारग्रहणवैयर्थ्यापत्तिः रप्रत्याहारेणैव सिद्धेः। किञ्च रप्रत्याहारवत् अकारेण यप्रत्याहाराश्रयणे "इको योऽचि" इति लघुभूतन्यासेनैव सिद्धेः यण् इति णकारेण प्रत्याहाराश्रयणवैयर्थ्यम्। किञ्च प्रत्याहारेऽनुबन्धानां ग्रहणाभावे भाष्यकृता "आचारात्=अनुनासिकेत्यादिनिर्देशरूपव्यवहारात्, अप्रधानत्वात्=प्रत्याहारेषु ग्रहणार्थत्वाभावरूपात्, श्रुत्यघटकत्वरूपाद्वा, बलवत्तरलोपात् 'आदिरन्त्येन' इति संज्ञातः प्रागेव परत्वान्नित्यत्वाच्चानुबन्धलोपे संज्ञाकाले तदभावेन तस्य संज्ञित्वाभावादिति हेतुत्रयमुक्तम्, तत्र लणोऽकारस्यानुनासिकत्वेऽन्योन्याश्रयदोषपरिहाराय प्रथमं हल्प्रत्याहारसिद्धिसमये लणोऽकारस्येत्त्वाभावाल्लोपाप्राप्त्या इत्संज्ञकस्याग्रहणे तृतीयहेतोरव्यापकत्वापत्तिश्चेत्याद्युक्तमिति बोध्यम्।

योगमात्रमकारादिसञ्ज्ञास्वतिप्रसक्तं तथापि योगरूढिरिति भावः। प्रत्याहाराश्चैकचत्वारिंशदिति प्राञ्चः। चतुर्दशसूत्रीस्थैर्हल्भिरिद्भिः कृता अष्टाध्याय्यां व्यवहृता एकचत्वारिंशदिति तस्यार्थः। तेन

---

अन्तादर्शं आद्यच्' इत्यपि बाहुलकादविशिष्टमिति भावः। एकचत्वारिंशदिति।

---

त्याहारेणैव व्यवहरेत्। एवं यण्घटितसूत्रेषु लाघवाय प्रत्याहारनिर्देशमेव कुर्यात्। तस्मादस्यानुनासिकत्वमप्रामाणिकम्' इत्यादि तत्रोक्तम्। वस्तुतस्तु लेत्यत्र रेत्येव सिद्धे लकारोच्चारणं लण्सूत्रस्थाकारनिष्पाद्यप्रत्याहारनिर्देशस्य क्वचिन्नाश्रयणमिति ज्ञापनाय। तेन 'शुल्कमाचष्टे शुल्कयति', शुल्कयतीति 'शुल्क्' इत्यत्र रात्सस्येति नियमाप्रवृत्त्या संयोगान्तलोपस्य प्रवृत्तिसिद्धिः। अत एव 'रदाभ्याम्' इत्यत्र 'रोऽसुपि' 'वनो र च' इत्यनयोश्च न दोषः। न चानयोरकार उच्चारणार्थो नत्वनुनासिक इति भ्रमितव्यम्, विधेयविषये इत्संज्ञां विना निवृत्त्यसिद्धेः। 'रदाभ्याम्' इति सूत्रे प्रत्याहारस्य ग्रहणे 'प्रफुल्तः' इत्यत्रादितश्चेतीट्प्रतिषेधाल्लकारपरस्य तस्य नत्वापत्तिः। यदपि लण्घटितसूत्रेषु लाघवाय यप्रत्याहारनिर्देशमेव कुर्यादिति तत्स्थवीयः, 'इणो यण्' 'इग्यणः सम्प्रसारणम्' इत्यत्र लाघवाभावात्' 'इको यण्' इत्यत्र मात्रालाघवसत्त्वेऽपि योऽचीत्युक्ते प्रक्रियागौरवमस्त्येव।

किञ्च—लण्सूत्रस्थाकारनिष्पन्नयप्रत्याहारनिर्देशस्य क्वाचित्कत्वं यप्रत्याहारेणैव निर्दिशेदिति वादिनापि वाच्यम्, अन्यथा 'महाशूद्री' इत्यत्रायोपधादिति प्रतिषेधस्य प्राप्त्या 'जातेः' इति सूत्रविहितङीषभावस्य 'ङेर्यः' इत्यनेन यकारादिचतुष्टयादेशघटितानिष्टरूपाणामिष्टरूपाभावानां चापत्तेः। न चास्यानुनासिकत्वे हल्प्रत्याहारेऽनुनासिकाकारस्य ग्रहणापत्तिः, हल्प्रत्याहारसिद्धेः प्रागचपदार्थनिष्पत्त्यभावेनोपदेशेऽजित्यस्यार्थबोधाभावेनास्याकारस्येत्वानापत्तेः। इष्टापत्तिस्तु कर्तुमशक्या, 'मा माँस्राय-स्व' इत्यत्रान् धातोः क्विपि दीर्घे तत्प्रकृतिकसम्बुद्धौ नलोपाभावे 'नश्छवि' इति रुत्वे 'अत्रानुनासिकः' इत्यनुनासिकपक्षेऽनुस्वारापत्तेरिति वाच्यम्। 'लण्सूत्रस्थाकारो नानुनासिकत्वविशिष्टः श्रूयते, किन्तु कार्यार्थन्तथा प्रतिज्ञात इति वाच्यम्, तच्च कार्यं प्रत्याहारसिद्धिरूपम्, तच्चेत्त्वं विनाऽनुपपन्नमिति हल्प्रत्याहारसिद्धिकाले तस्योक्तरीत्या इत्संज्ञायाः प्राप्त्यभावेऽपि 'मोऽनुस्वारः' इति सूत्रजवाक्यार्थनिष्पत्तिकाले लण्सूत्रस्थाकारस्येत्वप्रवृत्तौ प्रतिबन्धकाभावात्तत्र तस्य लोपप्रवृत्तेर्दुर्वारत्वात्, तावताऽपि भवदुक्तबलवत्तरलोपप्रतियोगित्वरूपहेतुसत्तायाः सत्त्वात्तस्य प्रत्याहारे ग्रहणाभावस्य सिद्धेः।

किञ्च—यत् 'प्रत्याहारे जातिनिर्देशमाश्रित्य 'सोऽस्ति' इत्यत्र सुलोपापत्तिः' इति तत्स्थविस्थवीयः, 'अदेङ् गुणः' इत्यादौ सुलोपाकरणेन हलन्तात्परत्वादेव सुलोपे सिद्धे 'एतत्तदोः' इति सुलोपविधानेन, ज्ञापकेन च लण्सूत्राकारस्य रप्रत्याहाराप्रयोजकत्वकल्पनात्। यद्यपि

'एकस्मान् ङञणवटाः, द्वाभ्यां ष, त्रिभ्य एव कणमाः स्युः ।

लण्सूत्रस्थाकारस्यानुबन्धत्वे तृतीयहेतोरव्यापकत्वापत्तिरूपदोषोद्भावनं तदपि न मनोरमम्, अइउणित्यादौ सन्धिकार्यम्प्राप्नोतीति शङ्कायां वर्णोपदेशकाले 'अजादिसंज्ञाया अनिष्पादात्सन्धिर्नेति परकृतसमाधानस्य खण्डनावसरे 'वर्णोपदेशे इत्संज्ञायामच्प्रत्याहारे च निष्पन्ने प्रवर्तमानानां यणादीनाम् 'सुध्युपास्यः' इत्यादौ तटस्थ इवोद्देश्यताऽवच्छेदकाक्रान्ते वर्णोपदेशेऽपि प्रवृत्तेर्दुर्वारत्वादिति यथाभिहितम्, तथा हल्प्रत्याहारनिष्पत्त्युत्तरमच्प्रत्याहारे निष्पन्ने भवत्वादिशब्दोकारे यथोपदेश इति सूत्रस्य प्रवृत्तिर्भवति, तथोद्देश्यतावच्छेदकरूपाक्रान्ते लण्सूत्रस्थाकारेऽपि तस्य प्रवृत्तिर्दुर्वारेति प्रत्याहारग्रहणाभावे साध्ये स्वपक्षतावच्छेदकमनुबन्धत्वं तद्व्यापकत्वम्बलवत्तरलोपप्रतियोगिस्वरूपहेतोरस्त्येव । हल्प्रत्याहारसिद्धेः प्राक् पक्षे परं हेतोः पक्षावृत्तित्वेऽपि न क्षतिः, अव्याप्यवृत्तेरपि कपिसंयोगस्य वृक्षे द्रव्यत्वानुमापकताया दर्शनात् । यद्यपि प्रत्याहारेऽनुबन्धानामित्यादिनाच्प्रत्याहारेऽनुबन्धानाङ्ग्रहणशङ्का कृता न तु हल्प्रत्याहारे, यदि लण्सूत्रस्थाकारो ऽनुनासिकः स्यात्तदा हल्प्रत्याहारेऽकारस्यानुनासिकस्य ग्रहणशङ्काऽपि कर्तुमुचितेति तदकरणान्न्यूनतापत्तिः, अतोऽस्यानुनासिकत्वमप्रामाणिकमिति भाषितं तदपेशलम्, तत्रत्याज्ग्रहणस्योपलक्षणत्वात् । यथाश्रुतार्थकत्वे भवन्मतेऽपि उक्प्रत्याहारे णकारस्य ग्रहणाशङ्कासमाधानयोरकरणेन न्यूनताया दुर्वारत्वात् । 'उक्' प्रत्याहारे णकारस्य ग्रहणमिष्टमेवेति तु न, 'रणितो भणितः' इत्यादौ 'श्र्युकः किति' इतीण्निषेधापत्तेः । न च तस्योपलक्षितार्थकत्वं यद्यभिमतं तदाऽइउणित्यादिसूत्रचतुष्टयोपादानस्वारस्यभङ्ग इति वाच्यम्, हल्प्रत्याहारे एवानुबन्धाग्रहणन्तेन भाष्येण साध्यते इति भ्रमो हयवरेत्यादिसूत्रव्याख्यानोत्तरं शङ्कासमाधानयोः करणान्मा भूदित्याशयेन तत्राइउणित्यादिसूत्रचतुष्टयस्य लेखनात् । हल्प्रत्याहारसाधकसूत्रव्याख्याने मध्ये तथा शङ्कासमाधानयोः करणेन हल्प्रत्याहारेऽपि तैर्हेतुभिरनुबन्धाग्रहणसाधनस्याभिमतत्वमिति कल्पनसम्भवादिति कैयटानुयायिनः । यत्तु—बाहुलककल्पनापेक्षया भावघञन्तप्रत्याहारशब्दादेश आद्यजिति व्याख्यानन्तद्दूषयति—भावेत्यादिना । अविशिष्टमिति । गणविशेषे पाठकल्पने गौरवमित्यस्य स्पष्टत्वात् ।

'एकस्मान्ङञणवटाः' इति । ङञणवटा एकस्मात्परे ग्राह्या इत्यर्थः । एवम्-

---

१—प्रभृत्यर्थयोगे पञ्चमी, तथा च एकैकमादिवर्णमवधिमादाय ङ, ञ, ण, व, टाः एकादिप्रत्याहारं प्रयोजयन्तीत्यादिक्रोणार्थः । तद्यथा—एकस्मात् एङ्, यञ्, अण्, छव्, अट् । द्वाभ्याम् झष्, भष् । त्रिभ्यः अक्, इक्, उक् । अण्, इण्, यण् । अम्, यम्, ङम् । चतुर्भ्यः—अच्, इच्, एच्, ऐच्, यय्, मय्, झय्, खय् । पञ्चभ्यः—यर्, झर्, खर्, चर्, शर् । षड्भ्यः—अश्, हश्, वश्, झश्, जश् बश् । अल्, हल्, वल्, रल्, झल्, शल्, एवमेकचत्वारिंशत्संख्याकाः । ञुबादिग्रहणे तु चतुश्चत्वारिंशत्प्रत्याहाराः ।

सुप्तिङादीनाम्, रप्रत्याहारस्य, "चयो द्वितीया" इति वार्तिकस्थ-'चय्'प्रत्याहारस्य चाधिक्येऽप्यदोषः । यत्तु—"अमन्ताड्ः" इति, 'यमिर्ञमन्तेष्वनिडेक इष्यते" इति च 'अम्' वार्तिककृता व्यवहृत इत्याहुः, तद्भ्रमसाभिधानम्, आद्यस्योणादिसूत्रत्वात्, द्वितीयस्य व्याघ्रभूतिकारिकास्थत्वात् । इत्यास्तां तावत् । एष च संख्यानियमो नातीवोपयुज्यत इत्युपेक्षितः ।

"ऊकालोऽच्" ( पा० सू० १।२।२७ ) ।। ह्रस्वदीर्घप्लुत इति समाहारद्वन्द्वः । सौत्रं पुंस्त्वम् । वां काल इवेति । फलितार्थकथनमिदम् । विग्रहस्तु 'वः कालो यस्य' इति बोध्यः । ऊशब्देन स्वोच्चा-

---

झयौ चयौ चतुर्भ्यो, रः पञ्चभ्यः, शलौ षड्भ्यः'
इति तदुक्तेरिति भावः ॥

सौत्रं पुंस्त्वमिति । यद्यपि इतरेतरयोगेऽपि सौत्रमेकवचनं वक्तुं शक्यम्, तथापि 'लिङ्गमशिष्यं लोकाश्रयत्वाल्लिङ्गस्य' इति तत्र तत्र वार्त्तिकोक्तेर्लिङ्गस्य लौकिकत्वात्तद्व्यत्ययकल्पनमेवोचितम्, न तु शास्त्रीयवचनव्यत्ययकल्पनमिति भावः । फलितार्थेति । ऊपदेन स्वोच्चारणकालसदृशलक्षणया, कालशब्देन[1] समानाधिकरणबहुव्रीहौ तत् फलतीति भावः । 'वां कालः' इति तु न विग्रहो व्यधिकरणत्वाद्त आह—विग्रहस्त्विति । 'कालः' इति जात्याख्यायामेकवचनम्[2] । स्वोच्चारणकाल इति । स्वोच्चारणकालसदृश इत्यर्थः ।

---

ग्रेऽपि ङ्जणवटा इत्यत्र णकारः प्रथमसूत्रस्थो ग्राह्यः । अणिति यथा । इण् प्रत्याहारस्तु न तेन, 'अचिश्नु' इति सूत्रे समृद्य ग्रहणात् । 'आदिरन्त्येन सह' इति सूत्रस्यानित्यत्वे नैकस्मादित्यादि लभ्यते, तत्र मानन्तु—'इको झल्' 'अज्झनगमां सनि' इति सूत्रद्वयारम्भ एव । यदि अन्त्येन इता सह यस्य यस्यादेरुच्चारणसम्भवस्तत्र सर्वत्र प्रत्याहारे इङपि प्रत्याहारः स्यात्, तथा चार्द्धधातुक इत्यनेन धातोराक्षेपे इङन्तस्य धातोः सनि इङश्चेत्यनेन गाऽऽदेशे सूत्रद्वयवैयर्थ्यं स्पष्टमेवेति । तदुक्तेरिति । प्रक्रियाकारोक्तेरित्यर्थः ।

पुंस्त्वैकवचनयोरेकस्य सौत्रत्वाश्रयणे न विशेष इत्याशयेन शङ्कते—यद्यपीति ॥

---

१—अस्य 'ऊपदस्य' इत्यादिः, कालशब्देनेत्यस्य कालशब्देन चेत्यर्थः, मिथ इति शेषः, तथा च 'ऊपदस्य स्वोच्चारणसदृशलक्षणया ऊपदेन कालशब्देन च मिथः समानाधिकरणबहुव्रीहौ इत्यन्वयेन तृतीयान्तद्वयमसङ्गतम् इत्यपास्तम् ।

२—कालशब्दस्यात्र त्रिविधकालबोधकतया बहुवचनाशङ्कायामाह—जात्याख्यामिति ।

रणकालो लक्ष्यते । *आ ये इति ।* "निपाता आद्युदात्ताः" ( फि० सू० १२ पा० ४ ) इत्याकार उदात्तः । यच्छब्दस्तु फिट्सूत्रेण । *अर्वाङ् इति ।* अकारोऽनुदात्तः ।

*"तस्यादितः"*(पा० सू० १।२।३२) । *[1]तन्त्रामिति ।* "उपेयिवान्"(पा०सू०३।२।१०२) इत्यत्रोपसर्ग इवाविवक्षितमित्यर्थः। ननु तत्र "ईयिवांसमतिस्निधः" इत्यादिप्रयोगदर्शनादविवक्षाऽस्तु, इह त्वविवक्षायां प्रमाणं किम् ?, इति चेल्लक्ष्यदर्शनं प्रातिशाख्यादिकं चेति गृहाण । तथा हि—'येऽराः' इत्यत्रैकारः, 'तनूनपात्' 'शचीपतिम्'

---

सादृश्यमूलके कालयोरभेदाध्यवसाये तु यथाश्रुतमेव साधु ।

फिट्सूत्रेणेति । अन्तोदात्त इत्यर्थः । जसः सुप्त्वादनुदात्तत्वम् । 'एकादेश उदात्तेन' ( पा० सू० ८।२।५ ) इत्येकार उदात्त इति भावः । अनुदात्त इति । फिट्स्वरेणान्तस्योदात्तत्वे शेषनिघातेनेति भावः । अभिमुखवाच्यव्युत्पन्नं प्रातिपदिकमर्वाङिति । अविवक्षितमित्यर्थ इति । [3]इदं च वक्ष्यमाणं

---

ऊपदेनेति । अस्य बहुव्रीहावित्यत्रान्वयः । लक्षणयेति । ऊपदस्येत्यादिः । अभेदाध्यवसायः = अभेदारोपः । अत एव 'मृगचपला' इत्यत्र पुंवद्भावः । यथाश्रुतमेव = सदृशे लक्षणां विनैव ।

आद्युदात्त इत्यस्यानन्तरं फिट्स्वरेणेत्युपादाने आद्युदात्तः फिट्स्वरेणेत्यर्थः प्रतीयेत ; तथाचानुपपत्तिः, तस्यान्तोदात्तत्वविधायकत्वादत आह—अन्तोदात्त इति । अर्वाङ्शब्दाद्याकारस्यानुदात्तत्वमुपपादयति—फिडित्यादिना । अव्युत्पन्नमिति । फिट्स्वरप्रवृत्तयेऽभिहितन्तत्र किम्मानमिति ? 'आङभिमुखः' इति वेदभाष्योक्तिरेव । ह्रस्वग्रहणमतन्त्रमित्यनेन स्वरितार्द्धमात्रस्याद्यस्योदात्तत्वविधायकमिति प्रतीयते, एवञ्चासङ्गतिः, दीर्घादावप्यर्द्धमात्राया उदात्तत्वस्य लोके दर्शनात् । अस्य शास्त्रस्य सर्वशाखासाधारणत्वेन सर्वोपकारकव्याख्यानस्यौचित्यात् । 'अर्द्धह्रस्वशब्दोऽर्द्धमात्रायां रूढ' इति भाष्यविरोधश्चेत्यत आह—इदञ्चेति । इदम् = अविवक्षितमित्यादिकथनम् । लक्ष्यदर्शनमित्यनेन बोधितलक्ष्यन्दर्शितम्—'ये ऽराः' इत्यादि, तन्त्र तनूनपाच्छचीपतिशब्दयोरित्यादिना

---

१—तन्त्रशब्दस्य विवक्षितार्थकत्वे मूलं मृग्यम् । हेमचन्द्रोक्तदिशा तन्त्रशब्दस्यार्थसाधकत्वार्थकताऽभ्युपगमे तु लक्षणया विवक्षितार्थकत्वं कथञ्चित्समाधेयम् ।

२—देवदत्तसादृश्यसत्त्वेऽदेवदत्तेऽपि 'देवदत्तोऽयम्'इतिवद् भिन्नेऽपि काले मात्राकृतसाम्येनाभेदारोपे तु 'स्वोच्चारणकालो लक्ष्यते'इति मूलोक्तमेव युक्तम् सादृश्यविशिष्टे लक्षणाया नोपयोग इति भावः ।

३—ह्रस्वग्रहणस्याविवक्षया समांशोदात्तत्वबोधनमित्यर्थः ।

इत्यत्र पदपाठे ऊदीतौ चार्थोदात्तौ इति सकलबह्वृचप्रसिद्धम् । तनूनपाच्छचीपतिशब्दयोः "उभे वनस्पत्यादिषु युगपत्" ( पा० सू० ६।२।१४० ) इति पूर्वोत्तरपदयोराद्युदात्तत्वे कृते "अनुदात्तं पदमेकवर्जम्" (पा० सू० ६।१।१५८) इति शेषनिघातः । पूर्वपदभूतयोस्तनूशची एतयोरन्त्यस्य पाक्षिकं स्वरितत्वं प्रातिशाख्ये उक्तम् ।

"जात्यवद्वा तथा वाऽन्तौ तनूशचीति पूर्वयोः" इति ।

तथा स्वरितार्द्धस्योदात्तत्वे प्रातिशाख्यमपि—

"एकाक्षरसमावेशे पूर्वयोः स्वरितः स्वरः ।
तस्योदात्ततरोदात्तादर्धमात्राऽर्द्धमेव वा ॥

---

प्रातिशाख्यं यच्छाखायाम्, तच्छाखास्थवैदिकोदाहरणविषयम् । तनूनपाच्छचीपतिशब्दयोरिति । अस्य यद्यपीत्यादिः । शेषनिघात इति । अस्य तथापीति शेषः । तेनोदीतौ अनुदात्तौ प्राप्नुत इति भावः । जात्यवद्वेति । पूर्वपदभूतयोस्तनूशचीशब्दयोरन्तौ जात्यवदिति ।

---

शङ्काग्रन्थ इति प्रतीयते, तदसङ्गतिः, शङ्काबोधकशब्दानुपादानादत आह—अस्येति । अस्य ग्रन्थस्येत्यर्थः । आद्युदात्तत्वे कृत इति । वनस्पत्यादिगण एव ऊप्रत्ययान्तस्तनूशब्द आद्युदात्तो निपात्यते, 'न भ्राड्' इति सूत्रे निपातितः 'तत्पुरुषे तुल्य'-इत्याद्युदात्तो नपाच्छब्दः, एतयोः समासे समासान्तोदात्तत्वे प्राप्ते 'उभे वनस्पत्यादिषु युगपत्' इत्यनेन पूर्वोत्तरपदयोः प्रकृतिस्वरे सति द्वयोरप्याद्युदात्तत्वप्राप्तिरिति भावः । एवं शचीशब्दः शार्ङ्गरवादिङीनन्तत्वादाद्युदात्तः । पतिश्च डतिप्रत्ययान्तत्वादाद्युदात्तः । तेन = शेषपूरणेन, अनुदात्तावेव प्राप्नुत इत्यर्थो लभ्यते ।

स्वरितत्वविधायकप्रातिशाख्यमाह मूले—जात्यवदित्यादि । जात्यवदिति वाक्यस्थपूर्वशब्दः प्रकरणात्पूर्वपदपर इत्याशयेनाह—पूर्वपदेति । जात्यलक्षणघटकं यदत

---

२—'शाखां शाखां प्रति' इति प्रतिशाखम्, प्रतिशाखमधिकृत्य कृतो ग्रन्थः प्रातिशाख्यम्, दिगादित्वाद्यत् । वेदतरोः, शाखाश्चस्तः ऋग्वेदादयः, तत्रत्यशब्दानां स्वर–वर्ण–संहिता–ध्वनक्रम–मन्त्रलक्षणादिनिरूपको ग्रन्थविशेषः शौनकादिप्रणीतः प्रातिशाख्यमित्युच्यते वैदिकव्याकरणमिति यावत् । तच्च प्रतिवेदं भिन्नम् । कठादिशाखाश्च तत्तत्प्रचारानुसारेण तत्तन्नाम्ना प्रसिद्धिमागताः, ताश्च बह्व्यः । प्रातिशाख्यघटकशाखापदेन तु चतुर्णां वेदानामेव ग्रहणम् । एवं तत्प्रातिशाख्यस्य चतुःपञ्चसङ्ख्याकत्वमुपपद्यते । अन्यथा तेषामपि बहुत्वापत्तिः । शाखापदेन वेदानां ग्रहणे प्रमाणन्तु व्यासमधिकृत्य 'चक्रे वेदतरोः शाखाः' इति वृद्धोक्तिरेवेति दिक् ।

अनुदात्तः परः शेषः स उदात्तश्रुतिर्न चेत्।
उदात्तं वोच्यते किंचित्स्वरितं वाऽक्षरं परम्॥" इति।

अस्यार्थः—पूर्वयोः = उदात्तत्वानुदात्तत्वयोः। एकत्र समावेशे सति स्वरितो बोध्यः। तस्य = स्वरितस्य, स्वतन्त्रोदात्तापेक्षयोदा-

'अतोऽन्यत्स्वरितं स्वारं जात्यमाचक्षते पदे'।

इति लक्षितो जात्यः। उदात्तस्वरितपूर्वस्वरितादन्य एकपदे स्थितः स्वरितो जात्य इति तदर्थः। तेन तुल्यं तद्वत्, अस्यान्त उदात्तश्रुतिक इत्यर्थः। तथा वा असंहितवद्वा। संहितवद्वेत्यर्थः,

'पद्यादींस्तु द्व्युदात्तानामसंहितवदुत्तरान्।'

इत्युत्तरमस्य पाठात्। असंहितवदित्यनेन केवलमनुदात्तत्वम्। संहि-

---

इति प्रतियोगिबोधकन्तत्स्वरूपजिज्ञासाशान्तये प्रतियोगिनन्दर्शयति—उदात्तेति। उदात्तश्च स्वरितश्चोदात्तस्वरितौ उदात्तस्वरिताभ्याम्पूर्वः उदात्तस्वरितपूर्वः उदात्तस्वरितपूर्वश्चासौ स्वरितश्चेति समासः। तस्मादन्यः स्वरित इत्यर्थः। एवञ्च यः स्वरित-उदात्तपरकः, स्वरितपरको वा तस्यान्तानुदात्तश्रुतिकस्य स्वरितस्य अत इत्यनेन बोधनमित्युक्तं भवति। तद्भिन्नस्योदात्तस्वरितपरत्वाभावे सति जात्यपदव्यवहार्यत्वमिति लभ्यते। पदे इत्यस्य तात्पर्यार्थमाह—अस्येति। इत्यर्थ इति। पर्यवसितार्थः। तथा वेत्येतद्व्याचष्टे—असंहितवदिति। जात्यवद्भावासंहितवद्भावयोर्विकल्पार्थो वा शब्दः। द्वितीयकोटौ वाशब्दोपादानेन विकल्पेऽर्थात्तत्कोटिविपरीता कोटिर्लभ्यते, तेन संहितवदित्यस्य लाभः। 'तथा' शब्देनासंहितवदित्यस्य प्रतिपादने साधकमाह—पद्यादींस्त्विति।

---

१—अखण्डपदे इत्यर्थः।

२—जात्यां=स्वरान्तरसम्बन्धं विनैव जातो जात्यः, दिगादित्वाद् यति साधुः। यथा—'क्व' 'स्वः' इति। अत्र "तित्स्वरितम्" "न्यङ्स्वरौ स्वरितौ" इति विहितं स्वरितत्वं न हि स्वनिमित्तत्वेन "उदात्तादनुदात्तस्य स्वरितः" इत्यादिवत्स्वरान्तरमपेक्षत इति तत्त्वम्।

३—जात्यवद्भावस्य वैकल्पिकतया पक्षे वैकल्पिकं स्वरान्तरमाह—तथा वेति—पूर्वकारिकयाऽसंहितवत्स्वरस्य विधानात्तथा शब्देनासंहितवदित्यस्य परामर्शः, तथा च जात्यवद्भावसंहितयोर्विकल्पेन विधानात्पक्षे संहितवद्भावस्यापि सिद्ध्या स्वरत्रयं लभ्यत इति भावः।

४—अवग्रहः=समस्तपदविभागस्तद्विषयस्य पदद्वयघटितसमूहस्याद्यं पूर्वमुत्तरञ्च पद्यमित्युच्यते। द्व्युदात्तानाम्पदानाम्=उदात्तद्वयघटितपदसमुदायरूपाणाम्। उत्तरान् पद्यादीन्=उत्तरार्द्धादीन्स्वरान्, असंहितवत्=केवलानुदात्तश्रुतिकान् जानीयात्। यथा—'अन्वेतवै' अत्र 'अनु' इति "निपाता आद्युदात्ताः" इत्याद्युदात्तः। 'एतवै' इति प्रत्ययस्वरेण मध्योदात्तः तथा चोदात्तद्वयघटितपदसमूहः 'अनु—एतवै' इति अस्योत्तरं पद्यम् 'एतवै' इति तत्र एकारस्य पद्यादेः केवलानुदात्तश्रुतिकस्वरितत्वम्' इति रहस्यम्

त्तराऽर्द्धमात्रा बोध्येति। "क्व वोऽस्वाः" इत्यादिह्रस्वाभिप्रायम्। "अर्धं वा" इति दीर्घाभिप्रायम्। अनेनैव ह्रस्वस्यापि संग्रहाद्व्यापकत्वादिदमेवादर्तव्यमिति सूचयितुमेवकारः। "अनुदात्तः" इत्यादिपरिशेषसिद्धार्थकथनम्। सः = शेषः। उदात्तश्रुतिः स्यात्। किमविशेषेण? नेत्याह—न चेदित्यादि। उदात्तस्वरितपरं त्रिहाये-त्यर्थः। शाकल्योऽप्याह—

"अप्राकृतस्तु यः स्वारः स्वरितोदात्तपूर्वगः।
उदादायार्द्धमस्याथ शिष्टं निघ्नन्ति कम्पितम्" ॥ इति ॥

---

तवदित्यनेनार्धानुदात्तस्वरितत्वमिति तद्भाष्ये स्पष्टम्। तथेति। लक्ष्यदर्शनवत्प्रातिशाख्यमपि प्रमाणमस्तीत्यर्थः ॥

स्वतन्त्रोदात्तापेक्षयेति। श्लोके 'उदात्तात्' इति स्वतन्त्रोदात्तादित्यर्थकमिति भावः। एवकार इति। तच्छायायां दीर्घादिष्वपि समांशोदात्तकस्वरितस्यैव पाठादिति भावः। एतेनैतौ पक्षौ वैकल्पिकावित्यपास्तम्। 'वा' शब्दस्तु पादपूरणायेति बोध्यम्। अप्राकृत इति। स्वरित इत्यर्थः। स्वार इति। स्वर एव स्वारः, स्वार्थे ऽण्। स्वरितोदात्ताभ्यां पूर्ववर्णग इत्यर्थः। लक्ष्यते

---

स्वतन्त्रोदात्तादित्येतल्लाभायाह—श्लोक इति। ननु लौकिकप्रयोगे इतरशाखायाञ्च समांशोदात्तकत्वं नास्तीति नियमानुपपत्तिरत आह—तच्छाखायामिति। ऋक्शाखायामित्यर्थः। एतेन = एवकारस्योक्तार्थसूचनफलकत्वेन। एतौ पक्षौ = अर्द्धमात्राऽर्द्धमेव वेति पक्षौ। ननु यदि नैतौ वैकल्पिकौ तदा वाशब्दस्य वैयर्थ्यमत आह—वाशब्देति। मूले—अप्राकृत इति। स्वरितो द्वेधा—अप्राकृतः, प्राकृतश्च। आद्यः 'उदात्तस्वरितयोर्यणः' इति 'स्वरितो वाऽनुदात्ते' इति 'तित्स्वरितम्' इति सूत्रविहितः। द्वितीयः 'उदात्तादनुदात्त' इति विहितः। स्वारशब्दो न स्वरभक्तिपर इत्याशयेनाह—स्वर एवेति। न च 'सौवर्यः सप्तम्यस्तदन्तसप्तम्यः' इत्यत्र यथा स्वरशब्दस्य द्वारादिगणे पाठेनैजागमो भवति, तथाऽत्रापि स्यादिति वाच्यम्, स्वरशब्दो द्वेधा—अव्युत्पन्नो, व्युत्पन्नश्च, व्युत्पत्तिश्चास्यान्यत्र दर्शिता 'स्वयं राजन्ते ते स्वराः' इति द्वारादिगणे 'स्वग्रामस्वाध्याययोः' पाठो नियमार्थः—स्वशब्दादेश्चेदेतयोरेवेति। अन्यथा स्वशब्दस्य द्वारादिगणे पाठेन सिद्धे तद्वैयर्थ्यं स्पष्टमेव। एवञ्च योऽव्युत्पन्नस्तस्य स्वार इति रूपम्, तेनार्थवत्स्वशब्दघटितनियमेनैचः प्राप्त्यभाव इत्याशयात्। बहुव्रीहिभ्रमवारणायाह—स्वरितोदात्ताभ्यामिति। मूले कम्पितमिति—क्रियाविशेषणम्। कम्पो निघातविशेषः

उदादाय = उदात्तं कृत्वा । 'अर्द्धह्रस्वशब्देनार्द्धमात्रा लक्ष्यते' इति हरदत्तादिग्रन्थास्तु मतान्तरपरतया कथंचिन्नेयाः । केति । "किमोऽत्" "तित्स्वरितम्" । व इति । "अनुदात्तं सर्वमपादादौ" ( पा० सू०.८।१।१८ ) इत्यधिकारादनुदात्तम् । अश्वा इति । अशेः क्वनि नित्स्वरेणाद्युदात्तम् । संहितायां तु "एकादेश उदात्तेनोदात्तः" ( पा० सू० ८।२।२५ ) इत्योकार उदात्तः । ये अरा इति । द्वयमपि फिट्सूत्रेणान्तोदात्तम् । एकादेशस्तु पक्षे स्वरितः, "स्वरितो वाऽनुदात्ते पदादौ' ( पा० सू० ८।२।६ ) इत्युक्तेः ।

---

इति । तदुक्तं भाष्ये—'अर्द्धह्रस्वशब्दोऽर्द्धमात्रायां रूढः' इति । हरिरप्याह—

'प्रमाणमेव ह्रस्वादावनुपात्तं[1] प्रतीयते' इति ।

अनुपात्तमपि अर्द्धमात्रारूपं प्रमाणमेवोपलक्ष्यत[2] इत्यर्थं तस्य हेलाराज[3] आह । एवं च लोकेऽन्यशाखासु च दीर्घादिष्वप्यर्धमात्रैवोदात्तेति भावः । मतान्तरेति । प्रातिशाख्योक्तमतापेक्षयेतरवेदलोकसाधारणमतान्तरेत्यर्थः । कथंचिदिति । लक्ष्यते इत्यंशपरमिदम्, भाष्यतो रूढिशक्तेरेव प्रतीतेरिति भावः । इत्युक्तेरिति । 'नोदात्तस्वरितोदयम्' ( पा० सू० ८।४।६७ ) इति निषेधस्तु 'उदात्तादनुदात्तस्य' ( पा० सू० ८।४।६६ ) इत्यस्यैव, 'अनन्तरस्य' इति न्यायादिति भावः ॥

---

हरदत्तग्रन्थो भाष्यसम्मतार्थाभिधायकत्वेन युक्त एवेति मूलमसङ्गतमिति ध्वनयितुं तत्रार्थे भाष्यसम्मतिमाह—तदुक्तमिति ।

अनुपात्तम् = शब्दशक्त्यप्रतिपाद्यम् । तस्य = हरिग्रन्थस्य । तथा सति यत्सिद्धन्तदाह—एवञ्च = अर्द्धह्रस्वशब्दस्यार्द्धमात्राप्रतिपादकत्वसिद्धौ च । अन्यशाखास्विति । तदुक्तं तैत्तिरीयप्रातिशाख्ये—'आदिरस्योदात्तसमः शेषोऽनुदात्तसम इत्याचार्याः' इति । तत्र पूर्ववाक्याद्यावदर्द्धं ह्रस्वस्येति सम्बध्यते । एवञ्चास्य स्वरितस्यादिर्यावद्ध्रस्वस्यार्द्धं ह्रस्वार्द्धं कालस्य उदात्तसमो भवति, शेषस्त्वनुदात्तसम इत्याचार्या इति तदर्थम्भाष्यकार आह 'प्रातिशाख्योक्तं पूर्वोक्तं 'यादृक् प्रातिशाख्यमर्द्धमेव' इति तदुक्तमत इत्यर्थः । ननु यदि मात्रापर एवार्द्धह्रस्वशब्दो बहुसम्मतस्तदा कथं कथञ्चिदित्यस्योपपत्तिरत आह—लक्ष्यते इत्यंशेति । इति भाव इति । मूलकृतोऽभिप्रायः ।

---

१—'अर्द्धह्रस्वशब्दनिष्ठशक्त्यप्रतिपाद्यमपीत्यर्थः । २—निरूढलक्षणया बोध्यते ।

३—वाक्यपदीयटीकाकारः ।

'मुखं च नासिका च' इति विग्रहे प्राण्यङ्गत्वादेकवद्भावे 'मुखनासिकम्' इति स्यादत आह—*मुखसहितेति*[1] ॥

"*तुल्यास्य*"[2] ( पा०सू० १।१।९ ) । आस्ये भवमास्यम्, "शरीरावयवाद्यत्" । इत्यभिप्रेत्याह—*ताल्वादीति* । *आभ्यन्तरेति* । एतच्च

---

'आस्य'शब्देन कथं तदवयवताल्वादिग्रहणमत आह—आस्ये भवमिति ।

---

मुखश्च नासिका चेतीति । अत्र नासिकाशब्दसमभिव्याहारान्मुखशब्दो मुखावयवताल्वादिस्थानपरः । आस्ये भवमिति । यद्यप्यास्यशब्दस्यास्यन्दतेऽत्र-

---

१—भाष्ये-"मुखद्वितीया वा नासिकावचनमस्य सोऽयं मुखनासिकावचनः, मुखोपसंहिता वा नासिकावचनमस्य सोऽयं मुखनासिकावचनः' इत्युक्तेर्भाष्योक्तस्यैव शाकपार्थिवादौ पाठकल्पनान्मुखसहितनासिकाशब्दस्य तत्र पाठे मानाभावात्, 'शाकपार्थिवादौ मुखसंहितनासिकाशब्दस्य पाठेन मुखसहितनासिकया इति वृत्तिरसङ्गता' इत्यपास्तम् । वस्तुतस्तु-' द्विविधविग्रहप्रदर्शनेन द्वयोस्तत्र पाठकल्पने गौरवान्मुखशब्दस्य तादृशार्थे लक्षणेत्यत्र भाष्यतात्पर्य्येण शाकपार्थिवादित्वकल्पने मानाभाव इति शङ्कासमाधाने निर्दले ।

२—ननु इकारनिरूपितस्वजनकस्थानप्रयत्नजन्यत्वकृततुल्यत्वस्यैकारेऽपि सत्त्वात्सावर्ण्यापत्तिरिति चेन्न, स्वजनकयावत्स्थानप्रयत्नजन्यत्व—स्वाजनकस्थानप्रयत्नाजन्यत्वैतदुभयसम्बन्धेन स्वविशिष्टस्वरूपतुल्यत्वस्यैव सवर्णसंज्ञाप्रयोजकत्वात् । एकारादेरिकारादिषु द्वितीयसम्बन्धेन वैशिष्ट्यमादाय सावर्ण्यवारणायाद्यसम्बन्धनिवेशः । इकारादेरेकारादिषु प्रथमसम्बन्धेन वैशिष्ट्यसत्त्वात्तद्व्यावृत्तये द्वितीयसम्बन्धोपादानम् । नन्वेवं द्वितीयसम्बन्धेन ककारस्य ङकारे, प्रथमसम्बन्धेन ङकारस्य ककारे च, वैशिष्ट्याभावात्कङयोः सावर्ण्यानापत्तिरिति, चेन्न, भाष्ये आस्यशब्देन मुखरूपस्थानग्रहणे सर्वेषां तत्तुल्यतया तद्वैयर्थ्यमाशङ्क्य बाह्यप्रयत्नसाम्यमादायं सावर्ण्यनिवृत्तये तुल्य आस्यभवप्रयत्नो यस्येत्येवमर्थलाभाय 'प्रयत्नविशेषणमास्योपादानम्' इत्युक्त्वा स्थानकृततुल्यत्वाभावेऽपि जबगडदशां मुखभवप्रयत्नसाम्येन सवर्णसंज्ञाशङ्कायाम् 'सिद्धन्त्वास्ये तुल्यदेशप्रयत्नं सवर्णम्' इति तुल्यास्यसूत्रस्थाने न्यासान्तरं प्रदर्श्य आस्ये तुल्यो देशः=स्थानम् प्रयत्नश्च येषां तेषां सवर्णसंज्ञेत्यर्थेन जबगडदशामापत्तिं परिहृत्य आस्यग्रहणस्य प्रयत्नविशेषणत्वे व्यावर्त्यत्वेन बाह्यप्रयत्नान्प्रदर्श्य 'यथा तृतीयास्तथा पञ्चमा आनुनासिक्यमेषामधिको गुणः' इतिः भाष्येणानुनासिक्यस्य बाह्यप्रयत्नत्वोक्त्या नासिकाया आस्यान्तर्गतत्वेऽपि 'तुल्यास्य' सूत्रे नासिकाया आस्यशब्देन, नासिकाभवप्रयत्नस्य च प्रयत्नशब्देनाग्रहणबोधनेन 'ध्रुवोऽनापादाने' इत्यादिसूत्रे ञकारादिघटितनिर्देशेन च वैशिष्ट्यनियामकसम्बन्धघटकस्थानपदेन नासिकाया अग्रहणात्, स्वाजनकनासिकातिरिक्तस्थानप्रयत्नाजन्यत्वसम्बन्धनिवेशेनादोषादिति यावत् । 'नासिका आस्यबाह्या' इति मते मुखभवस्थानतुल्यत्वस्यैवापेक्षणेन नासिकास्थानातुल्यत्वस्याकिञ्चित्करत्वाच्च । यत्तु-'मुखनासिका' इति सूत्रे नासिकाग्रहणान्नासिकाऽतिरिक्तस्यैव तत्र मुखशब्दबोध्यतया तत्साहचर्य्यादत्र सूत्रेऽप्यास्यशब्देन नासिकातिरिक्तस्यैव ग्रहणमिति, तन्न, निरपेक्षतया सूत्रान्तरसाहचर्य्यग्रहणे मानाभावात्, 'अनुस्वारयमानाश्च नासिकास्थानमिष्यते' इति शिक्षोक्त्याऽनुस्वारयोः सावर्ण्यानापत्तेश्च । अनुस्वारयोः सावर्ण्ये फलन्तु हल्मात्र'म्' शब्दस्य स्मरणशब्देन षष्ठीसमासे अनुस्वारे

प्रशब्दबलाल्लभ्यते । तुल्यास्यं किम् । तप्तं अत्र पकारस्य तकारे परे "झरो झरि' ( पा० सू० ८।४।६५ ) इति लोपो मा भूत् । प्रयत्नग्रहणं किम् । वाक् श्चोतति । शस्य लोपो न । *ञमङणनानामिति* । 'नासिका च' इति चकारेण स्वस्ववर्गानुकूलं ताल्वादि समुच्चीयते ।

प्रशब्दबलादिति । प्रकृष्टो यत्नः प्रयत्नः । प्रकर्षश्च–वर्णोत्पत्त्यव्यवहितप्राक्कालिकत्वरूप[1] इति भावः । चकारेणेति । अत्र यथा नासिकायाः स्थानत्वम्,

स्नाप्य द्रवीभवतीत्यर्थे 'अन्येष्वपि दृश्यते' इति डप्रत्यये कर्तरि सति मुखपरत्वम्, अथवाऽन्नेन द्रवीक्रियत इत्यन्तर्भावितण्यर्थात्स्यन्दधातोः परिखेत्यत्रेव कर्मणि डप्रत्ययेन मुखपरत्वम्, तथाऽपि सर्वेषां तत्तुल्यमिति तदुपादानवैयर्थ्यमत आस्यभवताल्वादिस्थानपरत्वमित्याशयेनाह–ताल्वादीतीति । मूले प्राक्कालिकत्वरूप इति । नाभिप्रदेशात्प्रयत्नप्रेरितो वायुः प्राणो नाम ऊर्ध्वमाक्रामन्नुरःप्रभृतीनि स्थानान्याहन्ति ततो वर्णाभिव्यक्तिः, ततोत्पत्तेः प्राग्यदा तत्तत्स्थानानि जिह्वाग्रोपाग्रमध्यमूलानि सम्यक् स्पृशन्ति तदा स्पृष्टता, जिह्वाग्रादीनां सम्यक् स्पर्शश्च तत्तत्स्थानेन सह बोध्यः । ईषद्यदा स्पृशन्ति तदा ईषत्स्पृष्टता, समीपावस्थानमात्रेण संवृतता । बाह्यास्तु वर्णोत्पत्तेः पश्चान्मूर्ध्नि प्रतिहते, निवृत्ते प्राणाख्ये वायौ उत्पद्यन्ते । गलविवरसङ्कोचात्संवारः, तस्यैव विकासात् विवारः, इत्यादिरीत्या भवन्तीत्येषां न वर्णोत्पत्तेः प्राक्कालिकत्वम् । उदात्तत्वादीनामेतेषु गणनन्तु, सावर्ण्यानुपयुक्तत्वान्तरतम्यपरीक्षोपयुक्तत्वरूपधर्मसादृश्यात् । यद्यपि-वर्ग्याणाञ्चादीनामेकमेव स्थानन्तात्विति भेदाभावात् तुल्यत्वन्नोपपद्यते, तथाऽपि कार्यभेदेन स्थानेषु भेदारोपेण भेदघटिततुल्यत्वस्योपपत्तिः ।

यत्तु–नासिका न स्थानङ्किन्तु करणमिति मतन्तन्न युक्तम्, अस्यन्त्यनेन वर्णानिति भाष्यात् कण्ठादीनामपि करणत्वप्रतीतेः । स्थानत्वव्यवहारस्तु वर्णाभिव्यक्तिजनकवायुसंयोगाधारत्वाद्वर्णाधारत्वारोपेण । एवञ्च ञादीनान्नासिक्यव्यवहारस्य प्रातिशाख्यशिक्षादौ दर्शनेन, नासिकायाम्भवा इत्यर्थकरणेन, 'नासिक्या ञमङणना' इति व्याख्यातृवचनेन च नासिकाऽपि स्थानमित्याशयेनाह– अत्र यथेति । "अनुस्वारो ञमा

वाक्शब्देन योगे वाक्(ं)स्मरणमित्यत्र अनुस्वारस्य शर्षु पाठात् 'शरः' खयः इति अनुस्वारस्य द्वित्वे 'झरो झरि सवर्णे' इत्यनेन अनुस्वारस्य पाक्षिकलोपरूपम् । तथा च पूर्वोक्तवैशिष्ट्यनियामके स्वजनकस्थानप्रयत्नजन्यत्वरूपसम्बन्धे स्थानशब्देन नासिकायाः ग्रहणेऽपि स्वाजनकस्थानप्रयत्नाजन्यत्वसम्बन्धे स्थानशब्देन भाष्यव्याख्यानात्तन्निर्देशाच्च नासिकाया अग्रहणे न कोऽपि दोष इति सर्वमनवद्यम् ।

१—आभ्यन्तरप्रयत्नाः वर्णोत्पत्तेरभिव्यक्तेर्वा प्राक्कालिकाः, बाह्यप्रयत्नास्तूत्पन्नेष्वभिव्यक्तेषु वा वर्णेषु गुणसम्पादकतयोत्तरकालिकाः । अत एव गुणशब्देन व्यवहारस्तेषाम् । तस्मादुक्तप्रकर्षस्य आभ्यन्तरप्रयत्ने एव सत्त्वात्प्रयत्नशब्देन तेषामेव ग्रहणम् । 'बाह्यप्रयत्नस्त्वेकादशधा' इति मूलोक्त्या यत्नप्रय-

"अनुस्वारोत्तमा अनुनासिकाः" इति तैत्तीरीयाणां प्रातिशाख्यम्। "यमानुस्वारनासिक्यानां नासिकाश्चोत्तमाः" इति कात्यायनप्रातिशाख्यम्। "वर्गोत्तमा ञमङणना अनुनासिका भवन्ति, चशब्दात्स्वस्थानाद्यपरित्यागेन नासिकास्थानं द्वितीयमेषामित्यर्थः" इति तद्भाष्यञ्च। "एदैतोः" इत्यादौ तपरत्वमसन्देहार्थं, न तु तत्कालग्रहणार्थम्। तेन प्लुतस्यापि संग्रहः।

"पूर्वत्रासिद्धम्" (पा० सू० ८।२।१)॥ यद्ययं स्वतन्त्रो विधिः स्यात्, तर्हि 'त्रिपादी पूर्वं प्रत्यसिद्धा' इत्येव लभ्येत, त्रैपादिकन्तु पूर्वम्प्रति परन्नासिद्धं स्यादत आह—अधिकारोऽयमिति।

---

तथाऽन्यत्र निरूपितम्। न तु तत्कालेति। एषां शिक्षाद्युक्तार्थानुवादत्वेनात्र शास्त्रप्रवृत्त्यभावादिति भावः। नाऽसिद्धं स्यादिति। ततश्च 'गोधुङ्मान्'

---

अनुनासिकाः' इति तैत्तिरीयप्रातिशाख्यम्। 'यमानुस्वारनासिक्यानान्नासिका, अनुनासिकाश्चोत्तमाः' इति कात्यायनप्रातिशाख्यम्। वर्गोत्तमा अनुनासिका भवन्ति चशब्दास्स्वस्थानाद्यपरित्यागद्वारेण नासिकास्थानन्द्वितीयमेषामित्यर्थं इति तद्भाष्यञ्च। शिक्षेति।

'ए ऐ तु कण्ठ्यतालव्या ओ औ कण्ठोष्ठजौ स्मृतौ'।

इति पाणिनीयशिक्षेत्यर्थः। तत्र तपरत्वाभावेन प्लुतानामपि संग्रहादत्र 'तपर'सूत्रस्य प्रवृत्तावनुवादभङ्गापत्तिरतस्तदप्रवृत्तिः। शिक्षाद्युक्तानुवादत्वेनेत्यत्रादिपदेन लोकानुभवपरिग्रहः॥

त्रैपादिकस्य परस्य पूर्वदृष्ट्या सिद्धत्वाभावे दोषमाह—ततश्चेति। घत्वेत्यादि। अस्य सूत्रस्य विधित्वपक्षे त्रिपाद्याम्पूर्वम्पठितं यच्छास्त्रन्तद्दृष्ट्या परस्यासिद्धत्वबोधकत्वाभावेन गोदुह् मानिति स्थिते घत्वजश्त्वयोः प्राप्तयोः पदान्ते घत्वस्य जश्त्वापवादत्वेनादौ घत्वम्, ततो जश्त्वानुनासिकत्वयोर्जश्त्वम् अन्तरङ्गम्। न चानुनासिकत्वज-

---

श्त्वयोः पर्यायत्वे तु 'तुल्यास्यप्रयत्नौ यस्य' इति जनकत्वरूपषष्ठ्यर्थे बहुव्रीहिणा प्रयत्नशब्देनाभ्यन्तरस्य ग्रहणं बोध्यम्, जनकत्वस्य तत्रैव सम्भवादिति दिक्।

१—शब्देन्दुशेखरे इत्यर्थः। तथा—'यद्देशावच्छिन्नवायुसंयोगाद्वर्णस्वरूपोपलब्धिस्तद्देशीयत्वमेव तस्य' इति नियमः, अत एवाकारादीनां कण्ठाऽदिदेशावच्छिन्नवायुसंयोगेन स्वरूपोपलब्ध्या तत्तद्देशत्वमेव तेषाम्, नासिकालाभस्वकारादिषु अनुनासिकगुणजनकत्वाच्च तत्स्थानत्वम्। वर्णपञ्चमानान्तु तत्तद्वर्गीयस्थानमासिकोभयावच्छिन्नवायुसंयोगेनैव स्वरूपोपलब्ध्या उभयस्थानत्वम्।

नच 'अनुस्वारयमानाञ्च नासिकास्थानमिष्यते' इति शिक्षायां ञादीनां नासिकास्थानानुक्त्या तद्विरोधः, तत्रानुक्तसमुच्चयार्थक 'च' शब्देन तेषामपि संग्रहात्।

यद्यत्र कार्यासिद्धत्वमिष्येत तर्हि पूर्वत्रासिद्धमिति 'मनोरथः' इत्यादौ घत्वजश्त्वानुनासिकेषु भष्भावो न स्यात्। न चातिदेशोऽन्तरव-[1]
श्त्वापवादः, 'सुगण्वान्' इत्यादौ 'पर्जन्य'न्यायेन णकारादेर्णकाराद्यादेशविधायकत्वेन चारितार्थ्यसम्भवेन 'येन नाप्राप्ते'न्यायविषयाभावात्। किन्तु विजातीयादेशाभावेन निरवकाशत्वेन तद्बाध्यमिति तत्रादावपवादविषयेऽप्युत्सर्गस्य प्रवृत्तेर्जश्त्वम्, ततोऽनुनासिकः। नन्वत्र घत्वोत्तरं 'झयः' इति वत्वापत्तिः, जश्त्वस्य पदसंज्ञासापेक्षत्वेनाधिकापेक्षत्वेन बहिरङ्गत्वात्। 'झयः' इत्यस्य तु तदनपेक्षत्वेनान्तरङ्गत्वञ्च। न चास्य जश्त्वापवादत्वात्प्राक्प्रवृत्तिरिति, 'उदश्वित्वान्' इत्यादौ तान्तात्परत्वेन 'तसौ मत्वर्थे' इति भसंज्ञाविषये तत्प्राप्त्याऽपवादत्वासम्भवात्। अत एव परत्वादादौ जश्त्वमिति न। किञ्चाविरोधेनैतादृशस्थले परत्वन्न नियामकम्। एवमेव वत्वस्य भष्भावात्प्राक्प्राप्तिः, ततो जश्त्व-भष्भावा-नुनासिकत्वानामप्राप्त्या 'गोधुङ्वान्' इति स्यादिति चेन्न, घत्वोत्तरं वत्वभष्भावजश्त्वानामप्राप्तौ परत्वात्, अन्तरङ्गत्वाच्च जश्त्वस्यैव प्राप्तेः।

न च जश्त्वाद्वत्वमुक्तरीत्यान्तरङ्गम्, 'झयः' इति सूत्रस्यापि पूर्वपरोभयसापेक्षत्वेनोभयोः समत्वात्। न च स्थानभेदेनाविरोधात्परत्वन्न नियामकमिति, वाच्यम्, विषयभेदेऽपि विप्रतिषेधशास्त्रस्य प्रवृत्तिदर्शनात्। भष्भावाज्जश्त्वस्यान्तरङ्गत्वन्तु स्फुटमेव। ततो वत्वात्परत्वादनुनासिकः, अनित्यत्वन्तूभयोः सममित्याशयात्। पूर्वत्रासिद्धमित्यस्याधिकारत्वे तु घत्वात्प्राग्भष्भाववत्वयोरप्राप्त्या प्रथमतो घत्वम्, ततो जश्त्वस्यासि-

१—नन्वत्र 'कृतेषु' इति 'प्राप्तेषु' इति वा शेषः। नाद्यः, एषु कृतेषु सर्वथा भष्भावाप्राप्त्या भष्भावानापत्तेरिति मूलासङ्गतेः। नान्त्यः, घत्वं विनाऽनुनासिकाप्राप्त्या एषु प्राप्तेष्वित्यस्यासङ्गत्यापत्तेरिति चेन्न, निर्धारणसप्तम्या घत्वजश्त्वानुनासिकेषु घत्वे कृते जश्त्वानुनासिकभष्भावेषु प्राप्तेषु जश्त्वापवादत्वात्प्राप्तस्यापि भष्भावस्य परत्वान्नित्यत्वाच्चानुनासिकत्वे भष्भावो न स्यादित्याशयात्। अधिकारत्वे तु घत्वानन्तरं जश्त्वानुनासिकयोरसिद्धत्वाद्भष्भावेनेष्टसिद्धिः।

वस्तुतस्त्वत्राधिकारत्वाभावेऽप्यपवादत्वेन जश्त्वम्, अन्तरङ्गत्वेनानुनासिकत्वञ्च बाधित्वा भष्भावेनेष्टसिद्धिरिति घत्वे कृते 'झयः' इति वत्वापत्तिर्दोषो बोध्यः। एतेन घत्वे कृते भष्भावोऽपवादत्वाज्जश्त्वम्, भष्भावं च परत्वान्नित्यत्वादनुनासिकत्वम्, अनुनासिकत्वमन्तरङ्गत्वाज्जश्त्वम्, जश्त्वमपवादत्वाद्भष्भावो बाधते इत्येवंरीत्या चक्रकापत्तिरित्यपास्तम्, अनुनासिकापेक्षयान्तरङ्गत्वेन भष्भावप्रवृत्त्या चक्रकाभावात्। उक्तरीत्या भष्भावे कृतेऽनुनासिकापेक्षयाऽन्तरङ्गत्वात्प्राप्तं जश्त्वं निरवकाशतया, प्रतिपदविधित्वेन च बाधित्वा 'झयः' इति वत्वं स्यादिति तद्व्यावृत्तयेऽधिकारत्वं स्वीकार्यम्।

न च 'तसौ मत्वर्थे' इति भत्वविषये 'तडित्वान्' इत्यादौ चारितार्थ्यादुक्तरीत्या जश्त्वानुनासिकयोरिष्टसिद्धिः, एवमपि 'झयः' इति प्रत्याहाराश्रयणस्य वैयर्थ्येन जश्त्वापवादत्वस्य सुवचत्वेनोक्तदोपतादवस्थ्यात्। अधिकारत्वे तु घत्वस्यासिद्धतया वत्वाप्राप्त्या जश्त्वापवादत्वादनुनासिकत्वस्यासिद्धत्वाच्च भष्भावेऽनुनासिकत्वस्यासिद्धत्वाज्जश्त्वे ततोऽनुनासिकत्वे च रूपसिद्धिरिति न दोष इत्यन्यत्र विस्तरः।

२—स्थानिवत्सूत्रादिवदित्यर्थः। न च वतिघटितस्यैवातिदेशत्वेन 'अतिदेशान्तरत्व' इत्युक्तिरसङ्गता 'अन्तरेणापि वतिमतिदेशो गम्यते' तद्यथा—'एष ब्रह्मदत्तः' 'अब्रह्मदत्तं ब्रह्मदत्तः' इत्याह, तेन मन्यामहे

इत्यादावुत्वं न स्यात्, परत्वाद् "रो रि" ( पा० सू० ८।३।१४ )

दस्यापि त्रिपाद्यां प्रवृत्तौ न दोषः, सपादसप्ताध्याय्यामपि पूर्वं प्रति परासिद्धत्वापत्तेः। मध्ये पाठस्य, विप्रतिषेधसूत्रस्य च सामर्थ्याश्रयणे तु विनिगमनाविरहात् त्रिपाद्यामप्यप्रवृत्त्यापत्तिरिति भावः। रो रीत्यस्य प्रसङ्गादिति। सिद्धेऽसिद्धत्वारोपात् सूत्रोदाहरणसंपत्त्यै परत्वाल्लक्ष्ये कार्यप्रवृत्तेरावश्यकतया परत्वात् त्रैपादिके कार्ये जाते तत्राभावप्रतियोगित्वा-

द्धत्वात्ततः प्रागभावः वत्वन्तु न प्रवर्तते घत्वादीनामसिद्धत्वेन तद्दृष्ट्या हस्यैव सत्त्वात्।

इदं विधिसूत्रमेवास्तु, तथाऽप्युक्तप्रयोगस्य सिद्धिर्भविष्यतीति शङ्कान्निराचष्टे—न चेत्यादिना। अतिदेशान्तरवत् = स्थानिवत्त्वातिदेशान्तादिवद्भावातिदेशवत्। न चास्मिन्सूत्रे वतिनिर्देशाभावादस्य सूत्रस्यातिदेशाविधायकत्वेनातिदेशान्तरवदित्यसङ्गतमिति वाच्यम्, 'विनाऽपि वतिं वत्यर्थो गम्यते' इति भाष्यकारोक्त्या वत्यर्थलाभात्। अस्य परिभाषात्वं वाऽस्तु पूर्वत्वावच्छिन्नशास्त्रत्वमस्या लिङ्गम्भविष्यतीति पूर्वपक्षकर्त्रभिप्रायः। उभयथाऽपि दोष इत्याशयेन समाधत्ते—सपादेत्यादिना। ननु मध्ये पाठसामर्थ्यात्स्वापेक्षपूर्वत्वाश्रयशास्त्रेषु प्रवृत्तिरिति चेत्तत्राह—मध्य इति। एवञ्चेष्टासिद्ध्या नास्यातिदेशशास्त्रत्वम्, नापि परिभाषाशास्त्रत्वम्, नापि स्वतन्त्रविधित्वम्, मूलोक्तदोषात्, किन्त्वधिकारसूत्रत्वमेवेति भावः। रोरीत्यस्य प्रसङ्गादिति मूलमसङ्गतम्, रलोपोत्वयोः प्राप्तौ रलोपस्यासिद्धत्वेनोत्वे 'मनोरथ' सिद्धेर्निष्प्रत्यूहत्वात्, अतो मूलाशयम्प्रकटयति—सिद्ध इत्यादिना। परत्वादिति। कार्यासिद्धत्ववादिमते शास्त्रेऽसिद्धत्वारोपाभावेन तत्र विप्रतिषेधशास्त्रस्य प्रवृत्तिः स्यात्। तथा च तद्विधेयकार्यस्यापि तद्द्वारा प्रवृत्तिर्जायेत, कार्यमसिद्धमिति बुद्धिस्त्वधुना न सम्भवति, कार्यस्यासिद्धत्वादिति भावः। तत्र जाते कार्ये अस्य जननोत्तरमित्यादिः। शास्त्रयोः प्राप्तौ विप्रतिषेधशास्त्रस्य विरोधे एव प्रवृत्तिः,

ब्रह्मदत्तवदयं भवतीति' इति भाष्यबलात् 'सिंहो माणवकः' इतिवत्सिद्धेऽसिद्धत्वबोधनेन 'असिद्धवत्' इत्यर्थे पर्यवसानात्। एतच्च सूत्रमात्मानं विहाय सूत्रान्तराणामसिद्धत्वं बोधयति, बोधकस्य बोध्यत्वाभावात्। एतस्यासिद्धत्वे सर्वेषां सिद्धत्वात्सूत्रारम्भस्यैवानर्थक्यप्रसङ्गः। यथा—'सर्वं मिथ्या ब्रवीमि' इति वाक्यं वाक्यान्तराणामेव मिथ्यात्वं प्रतिपादयति। स्वस्यापि मिथ्यात्वे वाक्यान्तराणां मिथ्यात्वं न स्यादित्यनर्थकमेतद्वाक्यं स्यात्।

१—सामान्यतः पूर्वं प्रति परासिद्धत्वं परिभाषाप्रकरणे एव पाठस्यौचित्येन सपादसप्ताध्यायीत्रिपाद्योर्मध्ये पाठानर्थक्यमेव स्यादिति भावः।

२—न च पूर्वत्रेत्यस्य त्रिपाद्यां प्रवृत्तौ 'अट् श्च्योतति' इत्यत्र धुडभावाय 'श्चुत्वं धुटि सिद्धं वाच्यम्' इति वार्तिकवैयर्थ्यमेव विनिगमकम्, तस्यैतत्सिद्धार्थानुवादकत्वस्यापि वक्तुं शक्यत्वात्, वार्तिकस्य सूत्रनियामकत्वे 'प्रत्ययस्थात्' इति सूत्रे 'मामकनरकयोरुपसंख्यानम्' इति नियमेनैव 'शका' इत्यत्र दोषवारणसम्भवे 'प्रत्ययस्थात्' इत्यस्य वैयर्थ्यापत्तेश्च।

इत्यस्य प्रसङ्गात् । तथा च "पूर्वत्रासिद्धे नास्ति विप्रतिषेधोऽभावादुत्तरस्य" इति सिद्धान्तो व्याकुप्येत ।

---

रोपेऽपि 'देवदत्तहन्तृहत'न्यायेन स्थानिभूतरोरभावात् 'हशि च' (पा० सू० ६।१।११४) इत्यस्याप्राप्तिरिति भावः । स्पष्टश्चेदं प्रकृतसूत्रे 'अचः परस्मिन्' (पा० सू० १।१।५७) इत्यत्र 'षत्वतुकोः' (पा० सू० ६।१।८६) इत्यत्र च भाष्ये ।

तथा चेति । शास्त्रस्य तद्बोध्यकार्यस्य च शास्त्रजज्ञानवेलायामसिद्धत्वाभावे 'रो रि' (पा० सू० ८।३।१४) इत्यादेः प्रसङ्गे चेत्यर्थः । व्याकुप्येतेति । त्वया विप्रतिषेधशास्त्रप्रवृत्तौ निमित्तस्य त्रैपादिकस्य शास्त्रजबोधविषयकार्यस्य, शास्त्रस्य वाऽसिद्धता वक्तुमशक्या, किन्तु लक्ष्ये जातस्य तस्य प्रवर्तमानसपादसप्ताध्यायीस्थकार्यदृष्ट्याऽसिद्धत्वं वाच्यम् । एत-

---

स च विरोधः कार्य्यंद्वारा बोध्यः । देवदत्तहन्तृहतन्यायेनेति । देवदत्तस्य हन्तरि हतेऽपि देवदत्तस्य यथा न दर्शनम्, तथात्र देवदत्तस्थानीयस्य रोर्हननसदृशलोपसंपादकं 'रो रि' इति शास्त्रं, तस्य प्रवृत्तिरेव हननम्, तस्मिन्कृते रोरदर्शनमस्तीति 'हशि च' इति न स्यात् । आरोपेति कथनं वस्तुतोऽभावो नास्तीति सूचनाय, पूर्वत्वस्य सावधिकतया यदि परस्य सत्तैव न स्यात्तदा पूर्वत्वमपि तस्य वक्तुमशक्यमिति पूर्वत्रासिद्धमिति वाक्यस्य प्रवृत्तिर्न स्यात्, अतो वस्तुतः परसत्ताऽपेक्षितैव, तथा च तत्र न तत्कालिकाभावप्रतियोगित्वम्, किन्तु शास्त्रबलादभावप्रतियोगित्वारोप एवेति भावः । स्थानिभूतेति । उत्वलोपयोरित्यादिः । एतेन पूर्वत्रेति सूत्रस्य वैयर्थ्यापत्तिर्ध्वनिता ।

सिद्धान्तव्याकोपमुपपादयति—शास्त्रेत्यादिना । शास्त्रस्य—त्रैपादिकशास्त्रस्य । अधुना शास्त्रासिद्धत्वपक्षाभावेऽपि शास्त्रस्येत्यस्य कथनन्दृष्टान्तार्थम् । शास्त्रजज्ञानवेलायाम्—त्रैपादिकशास्त्रजन्यवाक्यार्थज्ञानसमये इत्यर्थः । भवन्मते विप्रतिषेधशास्त्रप्रवृत्तौ त्रैपादिकशास्त्रबोध्यकार्यस्य लक्ष्ये प्रवृत्तिविघातो निमित्तमिति वक्तव्यम्, तच्च न सम्भवति, तस्याजातत्वादिति सिद्धान्तव्याकोप इति भावः । पूर्वादिपदे लक्षणाऽस्तु, तथा च लक्ष्ये कार्यप्रवृत्तिर्नापेक्षिता, किन्तु तात्कालिकज्ञानविषयपूर्वशास्त्रजन्यज्ञानविषयकार्यज्ञानमात्रमपेक्षितं तच्चास्त्येवेति मनोरथस्य सिद्धिः स्यादेव, अभावादुत्तरस्येत्यत्राप्युत्तरपदमुत्तरशास्त्रबोध्यकार्यपरमिति न सिद्धान्तव्याकोप इत्याशयकशङ्कां निराचष्टे—न

---

१—ननु लोकेऽनाहार्यज्ञानस्यैव प्रवृत्तिनिवृत्तिप्रयोजकताया दृष्टत्वेन प्रकृते सिद्धेऽसिद्धत्वारोपस्य च बाधसमकालिकेच्छाजन्यज्ञानरूपाहार्य्यारोपत्वेन शास्त्रप्रवृत्ति-निवृत्तिनियामकत्वानापत्तिरिति चेन्न, अतिदेशशास्त्रारम्भसामर्थ्यादत्र शास्त्रेऽहार्य्यारोपस्यापि प्रवृत्ति-निवृत्तिप्रयोजकत्वकल्पनात् ।

अमू, अमी, इत्यादि च न सिध्येदत आह—*त्रिपादीति*, परं

त्र विप्रतिषेधाभावोपपादकहेतोर[1]सिद्धिरिति भावः। न च ममापि पूर्वपरपदयोः पूर्वपरशास्त्रजन्यबोधविषयकार्यलक्षणया शास्त्रे[2] एव कार्यासिद्धत्वमिति वाच्यम्, लक्षणायां मानाभावात्, फलाभावात्, गौरवाच्च। ननु मनोरथे दर्शनाभावरूपे लोपेऽभावारोपस्य दर्शनारोपरूपत्वेन न दोषः, अभावाभावस्य प्रतियोगिरूपत्वादित्यत आह—अमू इत्यादि। 'अद् अ औ' 'अद् अ अस्' इत्यवस्थायां जातस्योत्वस्य सपादसप्ताध्यायीस्थकार्यदृष्ट्या-

चेति। ममापि—कार्यासिद्धत्ववादिनो ममापीत्यर्थः। पूर्वपरपदयोः अत्र पूर्वपदमुपात्तम् परपदन्त्वाक्षिप्तं बोध्यम्। शास्त्र एव = 'विषयता'सम्बन्धेन शास्त्रजन्यज्ञानविशिष्ट-कार्य एव। 'एव' कारेण लक्ष्ये कार्यप्रवृत्तिव्यावृत्तिः। ननु 'पूर्वत्रासिद्धम्' इति शास्त्रा-रम्भ एव मानमत आह—फलाभावादिति। ननु फलमप्युक्तमेवेत्यत आह—गौरवा-दिति। कार्यासिद्धत्वपक्षम्परित्यज्य शास्त्रासिद्धत्वपक्षः स्वीकार्यस्तथा सत्युक्तार्थे लक्षणां विनापि प्रयोजनानाम्, उक्तसिद्धान्तस्य च निर्वाहो भविष्यति, यद्येवन्न क्रियते, किन्तु कार्यासिद्धत्वमेवाश्रीयते, उक्तः प्रकारोऽप्याश्रीयते, तदा गौरवं स्पष्टमेवेति भावः। कार्यासिद्धत्ववादी शङ्कते—ननु मनोरथ इति। दर्शने निरस्येत्यादिः। रूपत्वेनेति। अभावाभावस्य प्रथमाभावप्रतियोगिरूपत्वादित्यर्थः। जातस्येति। निरधिष्ठानारोपास-म्भवेनारोपार्थंजातस्येत्यर्थः। पूर्वरीत्या 'देवदत्तहन्तृहत' न्यायेन अकाराभावेन उकारा-भावस्याकाररूपत्वाभावादिति भावः। आदिपदेन औकारस्थानिकस्योत्वस्यैकारस्थानि-कत्वस्य परिग्रहः। ननु नाभावे कर्तव्ये मुत्वासिद्धत्वनिषेध एवं सति व्यर्थः स्यात्, आङोऽकारेण व्यवधानान्नाभावाप्राप्तेरिति 'देवदत्तहन्तृहत' न्यायोऽत्र नाश्रयणीयस्तथा

१—लक्ष्ये जातकार्य्यासिद्धत्ववादिनये शास्त्रस्य, तज्जन्यबोधविषयीभूतकार्य्यस्य वाऽसिद्धत्वाभावेन त्रिपाद्यां विप्रतिषेधसूत्रप्रवृत्तौ बाधकाभावेन 'अभावादुत्तरस्य' इति भाष्योक्तहेतोरसिद्ध्यापत्तिरिति भावः।

२—'शास्त्रे' इत्यस्य 'स्वजन्यबोधविषयता' सम्बन्धेन लक्षणया कार्ये एवेत्यर्थः।

३—ननु 'अभावादुत्तरस्य' इतिभाष्यमेव मानम्, अत आह—फलाभावादिति, यत्तु—'पूर्वत्रासिद्धम्' इति सूत्रमेव मानम्, अत आह—फलाभावादिति, तन्न, शास्त्रासिद्धत्वपक्षेऽपि तच्चारितार्थ्यात्।

न च शास्त्रासिद्धत्वपक्षे पूर्वपरशास्त्रयोर्युगपत्प्राप्तावेव 'पूर्वत्रासिद्धम्' (पा०-सू०-८-२ १) इत्यनेन पूर्वं प्रति परासिद्धत्वबोधनसम्भवेन 'हरय् एहि' इत्यादौ पूर्वस्य वृद्धिविधायकशास्त्रस्याप्राप्त्या निष्प्रति-पक्षतया यूलोपे ततो वृद्धिप्राप्त्या एतद्दृष्ट्याऽनेन लोपशास्त्रासिद्धत्वेऽपि जातस्य 'य्'लोपस्य 'जातसंस्कारो न निवर्तते' इति न्यायेनानिवृत्त्या वृद्धिः प्राप्नोति, कार्य्यासिद्धत्वपक्षे तु जातस्यैव कार्य्यस्यानेनासिद्धत्वा-तिदेशेन मध्ये यकारबुद्ध्या वृद्ध्यभाव एव फलमिति वाच्यम्, शास्त्रासिद्धत्वपक्षेऽपि तत्तच्छास्त्रे एवा-सिद्धत्वारोपेण विधायकशास्त्रसत्त्वाज्ञाने तद्विहितकार्यस्याप्यज्ञानेन यकारव्यवधानस्य सत्त्वेन वृद्धेरप्राप्त्या तत्फलत्वासम्भवात्।

शास्त्रमिति च। एतेन त्रिपाद्यां विहितं कार्यमसिद्धमित्यादिः प्राचां

ऽसिद्धत्वेऽपि पूर्वरीत्याऽकाराभावेन पररूपाद्यनापत्तिः। मुत्वस्यासिद्धत्व-निषेधसामर्थ्यादेतद्विषये उक्तन्यायाप्रवृत्तिरिति चेत्? तेन शास्त्रासिद्ध-त्वमेव[2] ज्ञापयितुं युक्तम्। एवं शीभावात्पूर्वम् 'अदसोऽसेः' (पा० सू० ८।

सत्यकारबुद्ध्या पररूपम्भविष्यतीत्याशयेन शङ्कते—मुत्वस्येति। युक्तमिति। लाघवा-दिति शेषः। एतच्चाभ्युपेत्यवादेन। वस्तुतस्तूक्तज्ञापकेनापि न लक्ष्यस्य सिद्धिः। उत्वेऽसिद्धत्वारोपेणाकारबुद्धौ प्रवृत्तेन 'अतो गुणे' इति शास्त्रेण पररूपे सत्यकारो भविष्यति, ततो वृद्धावप्युकारस्य लक्ष्ये श्रवणन्न स्यादेव, पररूपेण तस्य निवर्तनात्। न चोकारा-सिद्धत्ववन्मकारोऽप्यसिद्ध इति तात्परत्वबुद्ध्या पुनर्मुत्वस्य प्रवृत्तिर्भविष्यतीति वाच्यम्, लक्ष्ये लक्षणस्य पुनः प्रवृत्तेः शास्त्रविरुद्धत्वात्। यदि पुनः प्रवृत्तिरपि 'नमुत्वादेशः' इति वार्तिकैकवाक्यतापन्न 'न मु ने' इति शास्त्रारम्भसामर्थ्याद्भविष्यतीति कल्प्यते, तर्हि कार्यासिद्धत्ववादिनो महान् क्लेशः।

१—इष्टस्य पररूपस्यासिद्धिरित्यर्थः। एतेन मुत्वे कृते 'अमु अ औ' इत्यवस्थायां मुत्वस्यासिद्धत्वे नोक्तन्यायेनोकारस्थानिनोऽकारस्यालाभेऽपि सकारस्थानिकाकारमादाय पररूपसिद्धयेदमसङ्गतमित्य-पास्तम्, तादृशपररूपे सिद्धेऽपीष्टपररूपासिद्धेस्तादवस्थ्यात्। अन्ये तु 'घड़ा' इत्याद्यपभ्रंशेषु शास्त्रप्रवृत्ति-वारणाय यत्किञ्चित्शास्त्रबोधितसाधुत्ववत्येव लक्ष्ये लक्षणप्रवृत्त्या 'अमु अ औ' इत्यस्य मुत्वविधायकेन साधुत्वबोधनेऽपि 'अ अ औ' इत्यस्यासाधुत्वात् तत्रापि पररूपाप्रवृत्त्या यथाश्रुतमेव मूलोक्तं साधु इति वदन्ति। यत्तु—मुत्वस्यासिद्धत्वेऽपि तदधिकरणकालस्यासिद्धत्वाभावेन स्वाभाविकार्धमात्राव्यवायात्मक-संहिताया अभावान्मुत्वे कृते पररूपाप्राप्त्या 'पररूपाद्यनापत्तिः' इति यथाश्रुतमेव साधु इत्याहुस्तन्न, सार्धमात्राकालेऽर्धमात्राकालत्वस्याप्यतिदेशबोधनात्। अत एव 'इमं मे गङ्गे यमुने' इत्यादौ 'गङ्गे' इत्य-स्याविद्यमानवद्भावेन 'मे' शब्दात्परत्वमाश्रित्य 'यमुने' इत्यस्य निघातः सिद्ध्यति। अत एव 'सिज्लोप एकादेशे सिद्धो वाच्यः' इति वार्तिकमपि चरितार्थम्, अन्यथा सिज्लोपस्य सिद्धत्वेऽपि तदधिकरणकालस्य व्यवधानेन एकादेशाप्राप्त्या तद्वैयर्थ्यं स्पष्टमेव।

२—न च कार्यासिद्धत्वपक्षेऽपि पूर्वत्र कर्तव्ये परशास्त्रविहितं कार्यं न जातम्, तत्कृता स्थानि-निवृत्तिर्न जाता' इत्येवं सम्भावनायाम् यत्प्राप्नोति तत्कर्तव्यम् यन्न प्राप्नोति तन्न कर्तव्यम्, इत्यर्थस्वी-कारेण कृतेऽपि मुत्वे तदभावस्य, तत्कृतस्थानिनिवृत्त्यभावस्य च 'पूर्वत्र'इत्यनेन बोधनात्स्थानिनोऽकारस्य सत्त्वबुद्धया वस्तुतो जाते उकारे पररूपप्रवृत्त्या उकारनिवृत्तौ 'सन्नियोगशिष्ट' इति न्यायेन मकारस्यापि निवृत्तौ 'अद औ' इति जाते वृद्धौ तद्घटकमात्रोद्देश्यकविकारातिरिक्तौकारघटितत्वेन तल्लक्ष्यत्वाभावात् पुनर्मुत्वे 'अमू' 'अमी' इत्यादिलक्ष्याणां सिद्धिरिति वाच्यम्, 'अमूभ्याम्', 'अमीभिः' इत्यादौ मुत्वमी-त्वयोः कृतयोरसिद्धतयोक्तरीत्या पररूपे 'सुपि च' (पा० सू०-७-३-१०२) इत्यनेन दीर्घे 'बहुवचने झल्येत्' (पा० सू० ७-३-१०३) इत्यनेनैत्वे च कृते तयोश्च स्वघटकमात्रोद्देश्यकविकारातिरिक्तघटि-तत्वेन तल्लक्ष्यत्वसत्त्वात्पुनर्मुत्वमीत्वाप्राप्त्या तदसिद्धिरूपदोषस्य सत्त्वात्। न च 'अमू, अमी, इत्यादि च न सिध्येत्' इति मूलासङ्गतिः, अमू—'अमी' इति आदिर्यस्य तत् 'अमू'—'अमी' इत्यादिलक्ष्यम्—'अमूभ्याम्' 'अमीभिः' इति तन्न सिध्येदिति तदर्थात्।

ग्रन्थः परास्तः ।

२।८० ) इति मुत्वे तात्परैकाराभावेन 'एत ईद्' (पा० सू० ८।२।८१ ) इति सूत्रमपि व्यर्थं सदत्रैव ज्ञापकमस्तु । न च 'तौ सत्' ( पा० सू० ३।२।२७ ) इत्यादिनिर्देशैर्देवदत्तहन्तृहतन्यायोऽनित्य इति वाच्यम्, 'हते देवदत्ते तद्ध-न्तरि हतेऽपि नोन्मज्जनम्, हतत्वारोपे तु सुतराम्, हन्तुमुद्यतस्य हनने तूज्जीवनमस्त्येव' इति न्यायशरीरम्, 'तौ' इत्यादौ वृद्धिहन्तुः पूर्वसवर्णदी-र्घस्य हननोद्यमसजातीयं प्रसङ्गमात्रम्, न तु हननस्थानीया लक्ष्ये प्रवृत्तिरिति न तत्रास्य न्यायस्य विषय इति तेनास्यानित्यत्वबोधनासम्भ-वात् । स्पष्टं चेदम् 'स्वादिष्वसर्वे' (पा० सू० ४।१।१७ ) इति सूत्रे कैयटे । प्रकृते तु निरधिष्ठानारोपासम्भवेन हननसजातीयं प्रयोगे कार्यप्रवर्तनमा-

एवम् = 'न मु ने' इति सूत्रवत् । अत्रैव = शास्त्रासिद्धत्वे एव । ननु 'देवदत्त-हन्तृहत' न्यायस्यानित्यत्वमन्यत्र दृष्टम्, तद्रीत्याऽत्रापि निर्वाहे ज्ञापकानुसरणं व्यर्थमित्याशङ्कान्निराचष्टे—न चेत्यादिना । 'तौ सत्' इत्यादिनिर्देशस्य न्यायानित्यत्व-ज्ञापकत्वं शिथिलयति—हत इत्यादिना । सुतरामित्यस्य नोन्मज्जनन्देवदत्तस्येति शेषः । तेन = 'तौ सत्' इति निर्देशेन । ननु तावितिवदत्रापि न्यायाविषयत्वमस्त्वि-त्यत आह—प्रकृत इति । ननु कार्यासिद्धत्वपक्षेऽपि न कार्यमसिद्धम् = अनिष्पन्नम् इति प्रकृतसूत्रेण प्रतिपाद्यते, जाते कार्ये तन्निष्पत्त्यभावस्य वक्तुमशक्यत्वात्, किन्तु पूर्वत्र कर्तव्ये परम् = परशास्त्रबोध्यङ्कार्यमसिद्धम्, तत्कालिकाभावप्रतियोगिप्रवृत्तिकर्तृ-त्ववदित्यर्थोऽस्तु । एतेन कार्ये स्वकर्तृकप्रवृत्त्यभावकत्वबोधनेन, त्रैपादिकशास्त्रस्य पूर्व-मप्रवृत्तिरेव कल्प्यते तथा च न 'अमू' इत्याद्यसिद्धिरिति, चेन्न, 'राजभ्याम्' इत्यत्र राजन् भ्यामिति स्थित्यवस्थायाङ्कस्यापि सपादसप्ताध्यायीस्थकार्यस्य प्राप्त्यभावेन त्रैपादिकनलोपस्य प्रवृत्त्यभावबोधनासम्भवेन नलोपे जाते ततो भवदुक्तार्थे पक्षे दीर्घस्य प्रवृत्त्यापत्तेः । एवं 'वृक्ष इह' इत्यादौ यलोपे जाते गुणापत्तेः । न चात्र सूत्रेऽसिद्ध-मिति न कार्यम्, अविद्यमानवदित्यनुवर्तनीयं तावतैवेष्टसिद्धिर्भविष्यति, पूर्वत्र कर्तव्ये परम् = परशास्त्रबोध्यम्, अविद्यमानवदित्यर्थोऽस्त्वित्यर्थादिति वाच्यम्, अप्रवृत्तस्या-विद्यमानवद्भावविधानासम्भवेन पूर्वम्प्रवृत्तेरावश्यकतया मूलोक्तदूषणापत्तेः । न च शास्त्रासिद्धत्वस्वीकारेऽपि 'राजभ्याम्' 'वृक्ष इह' इत्यस्यासिद्धिरेव, शास्त्रस्यासिद्धत्वेऽपि कार्यस्य सिद्धतया दीर्घादेः प्रवृत्त्यापत्तेर्दुर्वारत्वादिति वाच्यम्, शास्त्रस्यासिद्धत्वप्रति-पादनद्वारा कार्यासिद्धत्वस्य प्रतिपादनात् । एवञ्च यत्र सपादसप्ताध्यायीस्थशास्त्रस्य त्रैपादिकस्य युगपत्प्राप्तिस्तत्र परं शास्त्रमसिद्धम् = अप्रवृत्तमित्यनेन बोधने सति पर-शास्त्रेण लक्ष्ये कार्यसंस्कारबुद्धिर्न भवति । यत्र तु न द्वयोर्युगपत्प्राप्तिस्तत्र त्रैपादिके

*विवृण्वते कण्ठमिति* । **विवार एषां प्रयत्न इति भावः ।** *वर्गयमगा इति* । **वर्गगाः, यमगाश्चेत्यर्थः** । *कादय इति* । **लोकप्रसिद्धपाठापेक्ष-**

---

वश्यकमेवेत्यन्यत्र विस्तरः । परास्त इति । 'विहितं कार्यम्' इत्यध्याहारे गौरवाच्च । किञ्च—त्रिपादीशास्त्रं, तद्धि विधाने करणं न त्वधिकरणम् । त्रिपाद्यां विद्यमानेन शास्त्रेण विहितं कार्यमिति व्याख्याने त्वत्यन्तं क्लिष्टतेत्यपि बोद्धयम् ।

लोकप्रसिद्धेति । 'त्रिभिश्च मध्यमैर्वर्गैः' इति भाष्यपर्यालोचनया क-ख-

---

जातेऽपि शास्त्रेऽभावारोपे तन्निष्पाद्य कार्येऽप्रवृत्तत्वज्ञानेन प्रसक्तं सपादसप्ताध्यायीस्थं कार्यंम्भवत्येव । 'अग्नी इति' इत्यत्र प्लुतस्थानिकप्रगृह्यत्ववत् । यत्र तु शास्त्रासिद्ध-त्वज्ञानद्वारा कार्यानिष्पन्नत्वज्ञानेन सपादसप्ताध्यायीस्थशास्त्रोद्देश्यताऽवच्छेदकाज्ञानं तत्र तस्याप्रवृत्तिरेव । 'राजभ्याम्' इत्यादौ यथा, 'तथा च मूलोक्तप्रयोजनस्य प्रथमरीत्या सिद्धिरित्याशयेनाह—अन्यत्र विस्तर इति । मूले एतेनेति । उक्तरीत्या कार्या-सिद्धत्वस्य प्रतिपादनासम्भवेनेत्यर्थः ।

न च पूर्वोक्तप्रकारद्वयेऽपि 'ऊर्णुनविषति' इत्याद्यसिद्धिः, णत्वविधायकशास्त्रस्या-निष्पन्नत्वज्ञानद्वारा नकारबुद्ध्या द्विर्वचनेऽपि वस्तुतो णकारघटितस्यैव द्विर्वचनञ्जातमिति परभागेऽपि णकारः श्रूयेतेति वाच्यम्, 'स्थादिष्वभ्यासेन चाभ्यासस्य' इति ज्ञापकेन सपादसप्ताध्यायीस्थकार्ययोग्ये विषये त्रैपादिकशास्त्रस्य पूर्वमप्रवृत्तिकल्पनेनादोषात् ।

ननु लोकप्रसिद्धपाठस्याधुनिकत्वेन तदपेक्षा नोचितेत्यत आह—त्रिभिश्चेति पाद

---

१—यजुःप्रातिशाख्ये—'अन्तः पदेऽपञ्चमः पञ्चमेषु विच्छेदम्' ( अ० ४ सू० १६२ ) इति सूत्रेण पद-मध्येऽपञ्चमः स्पर्शः पञ्चमेषु स्पर्शेषु विच्छेदमापद्यते=यमत्वं प्राप्नोतीत्यर्थकेनापञ्चमवर्गीयेभ्यः पञ्चमे परे यमो भवतीत्युक्तम् । 'विच्छेदः' 'यमः' इत्यनर्थान्तरम् । 'अनन्तसंयोगमध्ये यमः पूर्वगुणः' इत्यौद्व-ज्यादिवचनात् पूर्ववर्णसदृशो यमः । तत्र 'कुँ, खुँ, गुँ, घुँ इति यमाः' ( अ०८ सू० १४ ) इति यजुः प्रातिशाख्यसूत्रात् 'चत्वारश्च यमाः स्मृताः' इति पाणिनीयशिक्षातश्च चत्वार एव यमाः । ते च न, क, ख, ग, घ, स्वरूपाः, भाष्येऽयोगवाहेषु यमानां परिगणनात्, स्वरूपतः सादृश्यासत्त्वेन "सादृश्यञ्च प्रयत्नकृतम्' इति शेखरासङ्गतेः । 'अनुस्वारयमानाञ्च नासिकास्थानमिष्यते" इति शिक्षाविरोधाच्च । अयोगवाहाश्च वर्णसमाम्नायेष्वनुपदिष्टाः सन्तः शास्त्रीयकार्यनिर्वाहिका एव । कादयश्च न तथा । तस्माद्वर्णान्तराण्येव यमाः । न च 'कुँ खुँ गुँ घुँ' इति प्रातिशाख्यविरोधः, 'अं अः' इतिवत् ककारा-दिसाहाय्येनोच्चारणविषयत्वस्यैव तेन बोधनात् । न च पञ्चमं विहाय वर्गीयवर्णेभ्यः पञ्चमे परे पूर्वसदृ-शयमस्वीकारे विंशतिसंख्याकत्वापत्तिः, वर्गाणां प्रथमेभ्यः पञ्चमे परे एकः, द्वितीयेभ्य एकः, तृतीयेभ्य एकः, चतुर्थेभ्य एक इति जातिचतुष्टयावच्छिन्नानामेव स्वीकारेण जातिगतसंख्यामादाय चतुष्ट्वव्यवहारात् 'पलिक्क्नि:' इत्यादौ कादिस्वरूपेण यमानां लेखनन्तु कादिसादृश्यमादाय, यमत्व-व्यवहारप्रयोजकसङ्केतान्तराभावादित्युपाध्यायाः ।

मिदम्, चतुर्दशसूत्र्यां मावसानत्वायोगात्। *अर्द्धविसर्गेति*। सादृश्य-मुच्चारणे, लेखने च बोध्यम्। *ऋलृवर्णयोरिति*। ॠ च ॠ च रलौ, तौ च तौ वर्णौ चेति विग्रहः उश्च उल् च ऋलोः, तयोर्वर्णयोरिति

ग–घ ङेत्यादीनामप्यनादित्वमिति भावः। उच्चारणेति। पादमात्रिकाविमा-विति भावः। लेखने चेति। अर्द्धवृत्तद्वयात्मकलिपित्वादिति भावः। रलाविति। 'ऋ लृ औ इति स्थिते 'ऋत्यकः' (पा० सू० ६।१।१२८) इति प्रकृतिभा-वेन दीर्घाभावे, गुणे, यणि च रलावित्यस्य सिद्धिः। उश्च उल् च ऋलो-रिति पाठः। रलोरिति पाठे आगन्तुना ऽकारेण निर्देश इति बोद्धयम्। तयोर्वर्णयोरिति। 'पूरणगुण' (पा० सू० २।२।११) इति निषेधस्तु षष्ठी-समासस्य न तु कर्मधारयस्य, बहुलग्रहणेन तदभावो भाष्योदाहृतविषय

मात्रिकाविति। विसर्गस्य व्यञ्जनरूपतयाऽर्द्धमात्रिकत्वेन तदर्द्धस्यास्य पादमात्रि-कत्वम्, अत एतस्य तथैवोच्चारणङ्कार्यमिति भावः। यत्तु–ऋ लृ औ इति स्थिते 'ऋत्यकः' इति प्रकृतिभावप्रवृत्तिपक्षे 'ऋ अलौ' इति स्यादिति कस्यचिदुक्तिस्तान्दूष-यितुमुपक्रमते–ऋलृ आवित्यादिना। न च गुणोत्तरमपि यणादेशः 'अचः परस्मिन्' इति स्थानिवद्भावेन 'ऋत्यकः' इति प्रकृतिभावप्रवृत्त्या न स्यादिति वाच्यम्, प्रत्या-सत्त्या ऋकाररूपान्निमित्तककार्यस्यैव प्रकृतिभावेन प्रतिबन्धात्। इति पाठ इति। एतेन तस्यासाम्प्रदायिकत्वन्ध्वनितम्। 'आगन्तूनामन्ते (अग्रे) सन्निवेशः' इति न्यायविरोधात्। ननु ऋलृवर्णयोरित्यनुपपन्नम्, षष्ठीसमासस्य 'समानाधिकरणेन षष्ठी न समस्यते' इति निषेधात्, कर्मधारय इत्यपि न सम्भवति, तस्यापि प्रकृते षष्ठ्यन्तपदसम्बन्धितया तेन निषेधस्य प्राप्तेरित्याशङ्कान्निराचष्टे–पूरणेति। न तु कर्मधारयस्येति। अन-न्तरस्येति न्यायादिति शेषः। ननु तस्य निषेधस्य विषये कर्मधारयाभावोऽप्यन्यत्र दृष्ट इत्यत आह–बहुलग्रहणेनेति। भाष्योक्तेति। 'यजुषः पीयमानस्य' इत्यादौ। न च 'समानाधिकरणसमर्थवत्' इत्यतिदेशात्कथङ्कर्मधारय इति वाच्यम्, समानाधिकरणा-धिकारे पूर्वकालैकेत्यादिवचनपाठेन तस्याप्रवृत्तेर्ज्ञापनात्। न चासामर्थ्यादेव समासा-प्राप्तौ 'समानाधिकरणेन षष्ठी न समस्यते' इति निषेधवैयर्थ्यमिति शङ्क्यम्, 'सर्पिः कालकम्' इत्यादौ 'इसुसोः' इति षत्वाभावार्थमावश्यकस्य तस्य वचनस्य 'सर्पिष्पीयते' इत्यत्रापि प्रवृत्तिः स्यादिति तद्वारणाय 'अषात्वमिहितं समानाधिकरणमसमर्थवद्भवति' इति

'न पदान्ता हलोऽणः सन्ति' इति भाष्येण लृकारान्तेभ्यः सुपोऽनभिधाने तु 'आ च लृवर्णश्च' इति विग्रहो बोध्यः। वस्तुतस्तु लृवर्ण इति शब्दोऽपि समासेनैवोपपाद्य इति सुपोऽभावे समासानापत्तिस्तस्मात् लृशब्दे उक्तभाष्यबलेन सामान्ये नपुंसकत्वं स्वीकृत्य नपुंसकेन विग्रहो विधेय इति नास्ति भाष्य-विरोध इत्युपाध्यायाः।

वा, प्रथमान्तेन, परिनिष्ठितविभक्त्या वा विग्रह इति सिद्धान्तात्। 'ऋत्यकः' (पा० सू० ६।१।१२८) इति प्रकृतिभावः।

'नाज्झलौ (पा० सू० १।१।१०)।[1] आकारसहित[2] इति। अत्र च 'कालसमयवेलासु' (पा० सू० ३।३।१६७) इत्यादिनिर्देशाः प्रश्लेषे लिङ्गम्। न चैवमपि 'यिया ३ सो!' इत्यादौ 'गुरोरनृतः' (पा०सू० ८।२।८६) इति प्लुतादाकारात्परस्य सनः सस्य षत्वं स्यादेवेति

---

एव नान्यत्रेति भावः। प्रथमान्तेनेति। प्रथमोपस्थितत्वादिति भावः। अयं पक्षः 'अनेकमन्यपदार्थे' (पा० सू० २।२।२४) इति सूत्रे भाष्ये। परिनिष्ठितेति। अत्र च 'एकविभक्ति चापूर्वनिपाते' (पा० सू० १।२।४४) इति ज्ञापकम्। अन्यथा 'मालामतिक्रान्तः' इति विग्रहेऽतिपदस्यापि नियतविभक्त्यन्तत्वेनैकविभक्तीत्यस्य व्यावर्त्यालाभः। एकस्यानियतविभक्तित्वे हि तद्वारणाय 'एकविभक्ति' इति सार्थकम्। परिनिष्ठितविभक्त्या समासे त्वतिक्रान्तमतिक्रान्तेनेत्यादिक्रमेण तस्यानियतविभक्तिकत्वं स्पष्टमेव। अत

---

कल्प्यते। एवञ्च 'यजुषः पीयमानस्य' इत्यत्र षष्ठीसमासवारणाय समानाधिकरणेति निषेधस्याऽवश्यकत्वात्। न चैवं 'पूर्वः पचन्' इत्यादौ 'पूर्वापर' इत्यस्य सूत्रस्य चारितार्थ्येनान्यस्मिन्कर्मधारये 'समानाधिकरणमसमर्थवत्' इत्यस्य प्रवृत्तौ प्रकृते कर्मधारयो न स्यादिति वाच्यम्, 'पूर्वः पचन्'इत्यादौ 'वचनप्रामाण्यात्' इति समर्थसूत्रस्थभाष्यप्रामाण्यादनभिधानेन समासाभावस्य सत्त्वात्। एवञ्च प्रकृते कर्मधारये न किञ्चिद्बाधकम्। अयम्पक्षः = प्रथमान्तेनेति पक्षः। अत एव = 'परिनिष्ठितविभक्त्या समासः' इति पक्षस्वीकारादेव। यदुक्तम्प्राग्भाष्योदाहृतेति तत्र मानन्तु अस्य वर्णस्येत्यर्थकः

---

१—ननूत्सर्गशास्त्रस्य स्वीयोद्देश्यतावच्छेदकाऽवच्छेदेन प्रवृत्तिरावश्यकी, अन्यथा 'उद्देश्यताऽवच्छेदकव्यापकत्वं विधेये भासते' इति नियमभङ्गः, एवञ्च 'तुल्यास्यम्' इत्यस्य स्वीयोद्देश्यताऽवच्छेदकावच्छेदेन प्रवृत्तौ 'नाऽज्झलौ' इत्यस्य वैयर्थ्यापत्तिः, 'भुक्तवन्तं प्रति मा भुक्थाः' इति न्यायेन निषेधस्याकिञ्चित्करत्वादिति निषेधशास्त्रीयोद्देश्यताऽवच्छेदकावच्छिन्नातिरिक्तत्वेनोत्सर्गशास्त्रीयोद्देश्यतावच्छेदकावच्छिन्ने संकोचोऽभ्युपेयः, स च न अज्झल्भिन्नत्वेन, तथा सति अज्झल्भिन्नवर्णानामभावात् सूत्रानर्थक्यप्रसङ्गादिति चेद्, न, 'अज्भिन्नेन तुल्यास्यप्रयत्नमज्भिन्नं सवर्णसंज्ञं भवति' 'हल्भिन्नेन तुल्यास्यप्रयत्नं हल्भिन्नं सवर्णसंज्ञं भवति' इत्यावृत्त्या तुल्यास्यमित्यस्यार्थद्वये नाऽज्झलावित्यस्य तात्पर्यग्राहकत्वेनादोषात्, अत्र प्रथमवाक्येन हलाम्, द्वितीयेन चाचां सवर्णसंज्ञा बोध्येत्यन्यत्र विस्तरः।

२—अत्र 'आश्च आश्च औ' 'औ च अच् च हल् च' इति द्वन्द्वे बहुवचनान्तत्वापत्तिः,'औ' च 'अच्' च इति समाहारं कृत्वा 'आच् हल्' 'च' इति इतरेतरयोगद्वन्द्वे तु 'द्वन्द्वाच्चुदषहान्तात्समाहारे' इति टजापत्तिरित्यत आह—आकारसहित इति।

वाच्यम्, आश्व, आ ३ श्वेति द्वन्द्वे सवर्णदीर्घेण दीर्घात्परत्र प्लुतोऽपि प्रश्लिष्यत इति व्याख्यानात्। *यणादिकमिति*। शीतलशब्दे सवर्णदीर्घ आदिशब्दार्थः।

एव 'तत्पुरुषे तुल्यार्थ' (पा०सू०६।२।२)इति सूत्रे भाष्ये परमे कारके,परमेण कारकेणेत्यादावतिप्रसङ्गमाशङ्क्य प्रतिपदोक्तपरिभाषया समाहितमितिभावः

व्याख्यानादिति। एवं व्याख्याने मानं तु प्रयत्नभेदेन 'नाऽज्झलौ' इत्येतत्प्रत्याख्यानपरं भाष्यम्। तद् ध्वनयन्वक्ष्यति—सूत्रं मास्त्विति भाष्ये स्थितमिति। शीतलशब्दे इति। शस्य ईकारे परे, दधीतीकारस्य शकारे परे चेत्यर्थः। न च शीङः शकारोच्चारणेन तच्छकारस्येकारे न दीर्घ इति वाच्यम्, शीतलशब्दे शीङोऽभावात्। किन्तु श्याधातोः क्ते 'द्रवमूर्तिस्पर्शयोः श्यः' (पा० सू० ६।१।२४) इत्यनेन सम्प्रसारणे, 'श्योऽस्पर्शे' (पा० सू० ८।२।४७) इत्युक्तेर्नत्वाभावे च निष्पन्नाच्छीतशब्दात्सिध्मादित्वाल्लचि शीतलशब्द इत्यदोषात्। शीतशब्दो हि सिध्मादिषु गणरत्ने,

'सहिवहोः' इति सूत्रेऽवर्णस्येति प्रयोगः, 'अनेकमन्यपदार्थे' इति सूत्रस्थान्यस्य पदस्येत्यर्थकोऽन्यपदेति प्रयोगश्चेति बोध्यम्। 'एकविभक्ति चापूर्वनिपाते' इति समुदायाभिधानमेकविभक्तिग्रहणाभावेऽपूर्वनिपात इत्यस्यानर्थक्यमित्यभिप्रायेण। ज्ञापकन्त्वेकविभक्तिग्रहणमेव। अतिप्रसङ्गम् = तेन सूत्रेण पूर्वपदस्वरप्राप्तिरूपातिप्रसङ्गम्। प्रतिपदोक्तेति। तृतीयासप्तमीति पदोपादानेन यः समासो विधीयते तस्य ग्रहणस्परिभाषया भवतीति भावः।

यत्तु—'कालसमयवेलासु' इति निर्देशेनाकारहकारयोर्न सावर्ण्यमित्येव कल्प्यताम्किमस्मिन्सूत्रे आकारस्य प्रश्लेषेणेति तन्मतन्निरस्यति—निर्देशेनेत्यादिना वेलास्वितीति। निर्देशस्य ज्ञापकत्वमर्थविशेषे चेद्यत्र ज्ञापकाभिधानन्तत्र तज्ज्ञाप्यं वचनमानुमानिकार्थाभिधायकमेव भवति। अनुमितिस्तु व्याप्तिज्ञानादिघटितगुरुतरसामग्रीप्रयोज्येति गौरवमिति भावः। अत्र न्यायः—'आकारः, हकारसावर्ण्याभाववान्, षत्वाप्रयोजकत्वात्, इति कल्पनीयः।

ननु 'नाऽज्झलौ' इत्यत्र दीर्घस्य सत्त्वेन प्लुतस्य सद्भावे मानन्नास्तीत्यत आह—व्याख्यानादिति। प्रयत्नभेदेन = ईषद्विवृतेति प्रयत्नभेदेन। भाष्यमिति। प्रयत्नभेदे सति सावर्ण्याभावः सूत्रप्राप्त्यभावप्रयोज्य एव भवति, यदा तु प्रयत्नभेदकल्पना तदा चेत्सावर्ण्यन्तदा फलभेदः स्पष्ट एवेति। शस्य ईकार इति। सूत्राभावे ह्रस्वेकारशकारयोः सावर्ण्याच्छकारस्याक्त्वात्सवर्णदीर्घप्राप्तिः, ईकारस्य तु तस्याक्त्वादिति विशेषः। सिध्मादिगणे सम्प्रति शीतशब्दपाठानुपलम्भादाह—शीतशब्दो हीति।

*अत्रेति।* **अत्रैवेत्यर्थः।** *यद्यपीति।* **ग्रहणकशास्त्रस्याद्याप्यनि-**

---

**वृत्तौ च पठ्यते। किञ्च—तेनापूर्ववचनकल्पनापेक्षया सूत्रोदाहरणत्वमेव तस्य युक्तमिति भावः। अत्रैवेति। ग्राहकसूत्र एवेत्यर्थः। अत्र च 'उर्ऋत्' (पा० सू० ७।४।७) इति सूत्रे तपरत्वं मानम्—तद्धि चुरादिण्यन्तात्कृत-धातोर्लुङ्यचीकृतदित्यत्र दीर्घाकारस्य स्थाने ह्रस्व एव यथा स्यादित्यर्थम् पूर्वेणात्राण्ग्रहणेतूद्देश्येन च ऋकारेणानण्त्वाद्भिन्नकालाग्रहणेन न तस्य स्थानित्वं न वा आदेशत्वं प्रसक्तमिति व्यर्थं तत्स्यात्। न च तपरसूत्रेण लृकारग्रहणार्थं तत्, स्थानेऽन्तरतमपरिभाषया ऋकारस्थाने तस्य वार-णेन तद्ग्रहणे फलाभावात्। न चैवं ज्ञापितेऽपि भाव्यमानत्वात्सवर्णग्रह-णाप्रसक्तेस्तद्वैयर्थ्यम्, तपरत्वाभावे आदेशान्तरनिवृत्त्यर्थत्वेन स्वरूपाभ्य-**

---

नन्वेतादृशक्लेशेन शीतलशब्दसाधनापेक्षया लाघवेन शीङ एव रूपमित्यस्तु तथाचोक्तं ज्ञापकं सुस्थमेवेत्यत आह—किञ्चेति। युक्तमिति। लाघवादिति शेषः। अन्यथा 'शकारोऽच्कार्यानिष्पादकः' इति वचनान्तरकल्पनाप्रयुक्तं गौरवं स्पष्टमेव। किञ्च—शीङः शकारोच्चारणं 'शिश्ये' इत्यादौ चरितार्थम्, तत्रोत्तरखण्डे 'एरनेकाचोऽसंयोग' इति यण् शकारसत्त्व एव भवति, दीर्घस्तु पूर्वत्र प्रवर्तते, वार्णादाङ्गस्य बलवत्त्वात्। मूले सूत्र-विशेषस्य प्रतीकमधृत्वा व्याख्याने सन्देहो भविष्यतीत्यतो व्याचष्टे—ग्राहकेति। अत्र च = परेणाण्ग्रहणे च। ननु तपरसूत्रस्यानणि विध्यर्थतया लृकारस्य ग्रहणार्थन्तपर-करणमस्त्विति शङ्कान्निरस्यति—न च तपरेत्यादिना। विध्यर्थत्वमभ्युपेत्यैव समाधत्ते—स्थानेऽन्तरतमेति। एवं ज्ञापितेऽपि = परेणाण्ग्रहणमिति ज्ञापितेऽपि। वैयर्थ्य-मिति। स्वविषये चारितार्थ्याभावादिति भावः। स्वरूपाभ्यनुज्ञानार्थेति। यद्यने-नादेशविधानन्न स्यात्तदा 'अचीकृतत्' 'अवीवृधत्' 'अमीमृजत्' इत्यादिष्विररारास्प्रवृत्तिः स्यादिति दीर्घऋकारस्य स्वरूपोपलम्भो न स्यात्, इरादेशेनापहारात्, सति त्वस्मि-न्दीर्घस्वरूपोपालम्भ इति स्वरूपाभ्यनुज्ञेत्यर्थः।

यत्त्वस्य 'ऋतः' इति स्थानषष्ठ्यर्थान्वयादेशत्वेन 'भाव्यमान' इति परिभाषा-प्रवृत्तिः स्यादतोऽयमेव तकारो भाव्यमानोऽपि सवर्णग्राहको भवतीत्यर्थे ज्ञापक इति, तन्न, अपूर्वबोध्यत्वमेव भाव्यमानत्वमित्यर्थस्य प्रसिद्धत्वात्, अपूर्वबोध्यत्वञ्च—स्थानि-स्वरूपविजातीयनिष्पाद्यत्वम्, भाव्यमानोकारविषय एव सवर्णग्राहकत्वस्य सुप्रसिद्ध-त्वाच्च। तावतैवादसोऽसेरित्यत्र सम्भवात्।

---

१—ननु शीङः शकारोच्चारणसामर्थ्यात् 'शकारस्येकारे सन्धिकार्य्याभावः' इति ज्ञापनाद्दोषा-भावोऽत आह—किञ्चेति।

ष्पत्तेरिति भावः ॥

'हो ढः' ( पा० सू० ८।२।३१ ) इत्युपलक्षणम्, रमास्वित्यत्र षत्वम्, वागाशीरित्यत्र 'झयो हः' ( पा० सू० ८।४।६२ ) इत्याकारस्य घकारः, दासीष्टेत्यादौ 'दादेः' ( पा० सू० ८।२।३२ ) इति

नुज्ञानार्थतयाऽपूर्वबोध्यत्वाभावेनाविधेयत्वात् । कृते तु तपरत्वे भाव्यमानताऽपीत्यन्यदेतत् ।

अनिष्पत्तेरिति । 'वर्णानामुपदेशस्तावत्, तदुत्तरकालमित्सञ्ज्ञा, तदुत्तरम् 'आदिरन्त्येन' ( पा० सू० १।१।७१ ) इति प्रत्याहारः, तदुत्तरकाला सवर्णसञ्ज्ञा, तदुत्तरकालं 'अणुदित्' ( पा० सू० १।१।६९ ) इति, एतेन समुदितेनान्यत्र सवर्णानां ग्रहणम्' इति वाक्यापरिसमाप्तिन्यायादित्यर्थः। अयं भावः–'आदिरन्त्येन' इति, प्रत्याहारसिद्धौ 'नाऽज्झलौ' ( पा० सू० १।१।१० ) इत्येतद्वाक्यार्थबोधे सति, निर्णीतैतद्विषयपरिहारेण सवर्णपद-

ननु ग्राहकशास्त्रस्याचार्येण पठितत्वादनिष्पत्तेरित्ययुक्तमतो भावार्थमाह–वर्णानामित्यादिना । तावत् = आदौ । नन्वेतादृशक्रमेण वाक्यार्थनिष्पत्तावन्यत्र = 'अस्य च्वौ' इत्यादौ सवर्णग्रहणवत् 'नाऽज्झलौ' इत्यत्रापि ग्राहकशास्त्रप्रवृत्तिः कुतो नेत्यत आह–अयम्भाव इति । एतत् = नाऽज्झलावित्येतत् । परिहारेणेति । अपवादविषयपरिहारेणैवोत्सर्गप्रवृत्तेरङ्गीकारात् । अन्यथा = 'नाऽज्झलौ' इत्येतद्वाक्यार्थापर्यालोचने । अनापत्तिरिति । अप्रामाण्यज्ञानानास्कन्दितशक्तिग्रहस्यैव शाब्दबुद्धिहेतुत्वादिति शेषः । न चेति । न हीत्यर्थः । एतद्वाक्यार्थबोधात् = 'नाऽज्झलौ' इति

१—अयम्भावः–'उरृत्' इत्यत्र तपरग्रहणेन परणकारेणाऽऽण्प्रत्याहारस्वीकारे उद्देश्यदले, विधेयदले च सवर्णग्रहणात् सूत्रेण कार्यान्तरव्यावृत्तये ह्रस्वऋकारस्य स्थाने ह्रस्वऋकारस्यैव दीर्घऋकारस्य स्थाने दीर्घऋकारस्यैव विधानादपूर्वबोध्यत्वरूपविधेयत्वाभावेन 'अप्रत्ययः' इत्यस्याप्राप्त्या सवर्णग्रहणं स्यादिति तद्व्यावृत्तये तपरत्वं चरितार्थम् । न चोद्देश्यदले सवर्णग्रहणेऽपि विधेयदले "भाव्यमानेन सवर्णानां ग्रहणं न' इति परिभाषया सवर्णग्रहणाभावेन दीर्घस्य ह्रस्वविधानेनापूर्वबोध्यत्वसत्त्वात्तपरत्वं व्यर्थमिति, वाच्यम्, 'परिभाषाप्रवृत्तिस्वीकारे दीर्घस्यापि ह्रस्वविधानेऽपूर्वबोध्यत्वरूपविधेयत्वम्, अपूर्वबोध्यत्वरूपविधेयत्वे च परिभाषाप्रवृत्तिः' इत्यन्योन्याश्रयेण परिभाषया अप्रवृत्तेरिति ।

२—न च 'उपसंजनिष्यमाणनिमित्तोऽप्यपवाद उपसंजातनिमित्तमप्युत्सर्गं बाधते' इति न्यायेन तपरकरणानन्तरं विधेयतया प्रवर्तिष्यमाणापवादभूतस्य 'अप्रत्ययः' इत्यस्य विषयसंभावनया पूर्वमपि 'अणुदित्' सूत्राप्रवृत्तौ ह्रस्वस्यैव विधानेन तपरकरणवैयर्थ्यम्, उत्सर्गशास्त्रप्रवृत्त्यभावसम्भावना यथोक्ता यत्रापवादशास्त्रप्रवृत्तिसम्भावना तत्रैवैतन्न्यायप्रवृत्तिस्वीकारेण प्रकृते 'यदि अणुदित्सूत्रं न प्रवर्तेत तदा 'अप्रत्ययः' इति निषेधः प्रवर्तेत' इति सम्भावनया निषेधस्य निषेध्यविधिसाकाङ्क्षत्वेन वक्तुमशक्यत्वोक्तन्यायाप्रवृत्तेः ।

घत्वं च नेति बोध्यम्। यदि तु विवृतमूष्मणामित्यत्र ईषदित्यनुवर्त्य प्रयत्नभेदो व्याख्यायते, तदा 'नाज्झलौ' इति सूत्रं माऽस्त्विति भाष्ये स्थितम्॥

'वृद्धिरादैच्'—(पा० सू० १।१।१)। ऐजिह द्विमात्र एव, तात्परत्वात्, तेन 'कृष्णैकत्वम्' इत्यत्र त्रिमात्रो न। एवमुत्तरसूत्रेऽपि। तेन 'गङ्गोदकम्' इत्यादौ त्रिमात्रो न॥

'भूवादयो धातवः' (पा० सू० १।३।१)। भूश्च वाश्चेति द्वन्द्वः। आदिशब्दयोर्व्यवस्थाप्रकारवाचिनोरेकशेषः। भूवौ आदी येषामिति

---

बोध्यत्वनिश्चये 'अणुदित्' इत्यनेन तावतां ग्रहणं बोधनीयम्। अन्यथा बाधकसम्भावनया तुल्यास्यसूत्रजशक्तिग्रहेऽप्रामाण्यसन्देहेन तच्छास्त्रजबोधानापत्तिः। न चैतद्वाक्यार्थबोधात् प्राक् तन्निश्चय इति। यत्तु—निषेधवाक्यार्थबोधात्पूर्वं विधेर्वाक्यार्थबोध एव नेति, तन्न, पदार्थोपस्थितौ वाक्यार्थबोधे बाधकाभावात्, निषेधस्य प्रतियोगिज्ञानोपपादकतया विध्यपेक्षत्वेऽपि विधेस्तदपेक्षत्वे मानाभावाच्च। रमास्वित्यत्र षत्वमिति। सर्वस्याप्येकया युक्त्या वारणेनापाद्यमानेऽर्थे न्यायानादरादेवमुक्तम्॥

भाष्ये स्थितमिति। अनेनाऽकारप्रश्लेषे मानं दर्शितम्।

---

वाक्यार्थबोधात्। तन्निश्चयः=सवर्णपदार्थनिश्चयः। तथाच तुल्यास्यसूत्रार्थबोधो यद्यपि प्राग्भवति तथाऽपि निश्चितो न सम्भवतीति तस्याप्रवृत्तिः। बाधकाभावादिति। प्रतिबन्धकबाधबुद्ध्यभावादित्यर्थः। विध्यपेक्षत्वेनेति। प्रतियोगितावच्छेदकप्रकारकप्रतियोगिज्ञानस्याभावबुद्धिकारणतायाः प्रसिद्धत्वादिति भावः। षत्वमितीति। अत्र षत्वस्यासिद्धत्वादादौ ढत्वं, ततः 'षढोः कः सि' कत्वं, ततः षत्वस्य प्राप्तिरिति बोध्यम्। ननु ढत्वादीनामसिद्धत्वात्संयोगान्तलोपः प्राप्नोतीत्येव कुतो नोक्तमत आह—सर्वस्येति। एकया युक्त्या=आकारप्रश्लेषरूपा युक्त्या। न्यायानादरादिति। न्यायस्य=पूर्वत्रासिद्धमिति युक्तेः, प्रवृत्तिविषयेऽनादरादित्यर्थः।

---

१—ननु एकधर्मावच्छिन्नस्य एकधर्मावच्छिन्नसंसर्गेणैकधर्मावच्छिन्नेऽन्वयरूपसाहित्यस्य सत्त्व एव द्वन्द्वः। अत एव भाष्ये समुच्चयान्वाचयोरनेकस्य पदस्य चार्थकृत्त्वाभावाद् द्वन्द्वाभावोक्तिः सङ्गच्छते। प्रकृते च भाष्ये—'भू' इत्यत्र य आदिशब्दः स व्यवस्थायां वर्तते, वा इत्यत्र य आदिशब्दः स प्रकारे, 'भू' इत्येवमादयो 'वा' इत्येवं प्रकारा इति, इत्युक्तेर्भूशब्दस्याभेदेन व्यवस्थारूपार्थे, वाशब्दस्य स्वनिष्ठप्रतियोगितानिरूपकत्वसम्बन्धेन प्रकारेऽन्वयेनोक्तरूपसाहित्याभावाद् द्वन्द्वो न प्राप्नोति।

किञ्चैकशेषोपस्थापितार्थद्वयस्य परस्परमभेदान्वयस्याव्युत्पन्नतया भूप्रभृतयो वासदृशाः इत्येवमभेदा-

बहुव्रीहिः। भूप्रभृतयो वासदृशाः। सादृश्यञ्च-क्रियावाचकत्वेनेत्यभिप्रेत्याह—*क्रियावाचिन इति*। क्रियावाचिनः किम्? 'याः पश्यसि' इत्यादौ धातुत्वं मा भूत्। सति हि तस्मिन्, 'आतो धातोः' (पा० सू० ६।४।१४०) इति स्यात्। भ्वादयः किम्? 'हिरुक्' 'पृथक्' इत्या-

---

सादृश्यञ्चेति। बाधातौ चासादृश्यं च प्रयोगभेदेन बोध्यम्। आतो धातोरिति। न च स्त्र्यर्थनिमित्तकटापो बहिरङ्गासिद्धत्वम्। 'नाजानन्तर्ये' (परि० ५१) इति निषेधात्, ततोऽपि बहिर्भूतसंख्यानिमित्तकविभक्तिनि-

---

ननु सादृश्यस्य भेदनिबन्धनत्वाद्बाधातौ धातुसंज्ञा न प्राप्नोतीत्यत आह—बाधाताविति। अत एव 'याति' 'वाति' इति निर्देशसङ्गतिः। स्त्र्यर्थनिमित्तकेति। बह्वपेक्षस्य बहिरङ्गत्वात्। नन्वत्र नाजानन्तर्य्यपरिभाषाप्रवृत्तिः, यत्राचः पञ्चम्यन्तशब्दबोध्यस्यान्यनिरूपितानन्तर्याश्रयणन्तत्रैव तत्परिभाषायाः प्रवृत्तेः सम्प्रदायसिद्धत्वात्। यत्रान्तरङ्गे वा अजानन्तर्यमित्यर्थस्तु न युक्तः, 'पचावेदम्' इत्यादावसिद्धत्वाभावप्रसङ्गादत आह—ततोऽपीति। टापोऽपीत्यर्थः। यद्यप्यर्थापेक्षत्वमुभयत्र, तथाऽपि लोपस्याधिकापेक्षत्वम्, प्रकृतिप्रत्ययसमुदायापेक्षत्वात्। किञ्च—टापो लिङ्गापेक्षा, तच्च लिङ्गम्प्रथमत उपस्थितम्भवति, सङ्ख्या तु तदुत्तरं प्रतीता भवतीति टाप एवान्तरङ्गत्वमिति भावः। ननु 'भत्वावच्छिन्नम्प्रति विभक्तित्वेन कारणता' इत्येवं कार्यकारणभावो न सम्भवति, 'वृषण्वसुः' 'वृषणश्वः' इत्यत्र व्यभिचारात्। यदि भसंज्ञासामान्यम्प्रति विभक्तेर्निमित्तत्वाभावेऽपि लोपविधायकशास्त्रप्रवृत्तिहेतुभसंज्ञाविभक्तिनिमित्तिकैवेति विभाव्यते, तदा 'याः पश्यसि' इत्यादौ भसंज्ञानिमित्तविभक्तिनिमित्तकाच्परत्वनिमित्तकत्वेन

---

न्ययोऽपि दुर्लभ इति चेत्, न, 'आद्यन्तौ' इत्येत्रैव स्वघटकाभिन्नत्वघटित—स्वघटकनिष्ठप्रतियोगितानिरूपकसादृश्यवद्घटितत्वैतदुभयसम्बन्धेन समुदायस्य समुदायेऽन्वयेन साहित्यसत्त्वाद् द्वन्द्वस्य सुवचत्वात्, समन्वयश्च—स्वं भूवासमुदायस्तद्घटको भूशब्दस्तदाभिन्न आद्यर्थ आद्यवयवस्तद्घटितत्वमादिसमुदाये। एवं स्वं भूवाशब्दस्तद्घटको वाशब्दस्तन्निप्रतियोगितानिरूपकसादृश्यवद्घटितत्वञ्च तादृशसमुदाये इति। भूवादयः" इत्यत्र तन्त्रस्वीकारेण द्वयोरेव भूवाशब्दयोर्व्यवस्थारूपार्थे, प्रकाररूपार्थे चान्वयेनोक्तदोषद्वयस्य निरासाच्च।

२—ननु 'वासदृशाः' इत्यत्र क्रियावाचकत्वस्यैव सादृश्यनियामकत्वं मूलकाराद्यभिप्रेतम्, तच्च न सम्भवति, सादृश्यप्रतियोगितावच्छेदकधर्मव्यापकधर्मस्यैव सर्वत्र सादृश्यनियामकत्वेन दृष्टतया प्रकृते सादृश्यप्रतियोगिताऽवच्छेदकवात्वस्य तु अव्ययवाशब्देऽपि सत्त्वात् क्रियावाचकत्वस्य च तत्रासत्त्वेनाव्यापकत्वादिति, चेत्, न, परस्परसाहचर्येण क्रियावाचकत्वस्य लाभात्। तथा हि वाशब्दोऽसत्त्ववाची उपलभ्यते, तत्साहचर्याद् भूशब्दोऽप्यसत्त्ववाची एवात्र गृह्यते। असत्त्ववाची भूशब्दश्च क्रियावाचक एवेति तत्साहचर्याद्वाशब्दोऽपि क्रियावाचक एव इति क्रियावाचिन इत्यर्थलाभः। नन्वेवमपि क्रियावाचिन इत्यस्य वृत्त्याऽनुपस्थितत्वात् शाब्देऽप्रवेश इति, चेत्, न, व्यञ्जनाख्यवृत्त्यैव तदुपस्थितेरितिदिक्।

मित्तकभसञ्ज्ञानिमित्तकत्वेन लोपस्य बहिरङ्गत्वाच्च, अर्थनिमित्तकबहिरङ्गत्वस्याभावाच्च । नाप्ययं लाक्षणिकः,

'नकारजावनुस्वारपञ्चमौ झलि धातुषु ।
सकारजः शकारश्चेर्षाट्टवर्गस्तवर्गजः' ॥ १ ॥

इत्यभियुक्तोक्तेर्भ्वादिषु लाक्षणिकानामपि दर्शनेन तद्विषये तत्परि-

---

टपो लोपाद् बहिरङ्गत्वमपि सम्भाव्यत इत्यत आह—अर्थनिमित्तकेति । अभावाच्चेति । अयम्भावः शब्दशास्त्रे शब्दस्य प्राधान्यादसिद्धम्बहिरङ्गमिति परिभाषाघटकनिमित्तबोधकाङ्गशब्देन शब्दरूपं तद्गृह्यते इति नियमः, अत एव 'त्रयादेशे स्रन्तस्य प्रतिषेधः' इति वार्तिकं सङ्गच्छते । अन्यथा स्त्रीत्वापेक्षतिस्रादेशापेक्षया तदनपेक्षत्रयादेशस्य पूर्वं प्रवृत्तौ ततस्तस्य स्थानिवद्भावेन त्रिशब्दत्वात्तस्य स्थाने तिस्रादेशे 'लक्ष्ये लक्षणस्य सकृदेव प्रवृत्तेः' पुनस्त्रयादेशाप्रवृत्तौ वार्तिकासङ्गतिः स्पष्टैव । अत एव 'गौधेरः' 'पचेत्' इत्यस्य सिद्धिः । अन्यथा 'अतो येयः' इत्यस्याङ्गसंज्ञासापेक्षत्वेन बहिरङ्गतया वलि लोपो न स्यात् । अर्थापेक्षबहिरङ्गत्वाभावे 'नलोपः सुप्' इति सूत्रस्थं कृति तुग्ग्रहणं ज्ञापकमिति । अन्यथा 'वृत्रहभ्याम्' इत्यादौ पदसंज्ञासापेक्षनलोपस्य बहिरङ्गत्वादेव तुगभावस्य सिद्धौ तद्वैयर्थ्यं स्पष्टमेव । न च 'भ्याम्' निमित्तकत्वमेव नलोपस्य, न तु पदसंज्ञासापेक्षत्वमिति शब्दस्वरूपस्याङ्गशब्देन ग्रहणेऽपि दोष एवेति वाच्यम्, भ्यामः पदसंज्ञाम्प्रति निमित्तत्वेऽपि नलोपं प्रत्यनिमित्तत्वात् । परम्परया निमित्तत्वाश्रयणे तु मानाभाव इति । लाक्षणिक इति । लक्षणशब्दोऽत्र 'भीम' इतिवदेकदेशशक्त्या लक्षणप्रतिपदोक्तपरिभाषापरः, ततोऽर्हतीत्यर्थे ठञ्, लक्षणप्रतिपदोक्तपरिभाषाया अविषय इत्यर्थः ।

तदविषयत्वे हेतुमाह—नकारजाविति । तद्विषये = धातुसंज्ञाविषये । दर्शनेनेति । एवञ्च येषां लक्षणप्रवृत्तिज्ञानेनोत्तरकालिकज्ञानविषयस्वरूपकत्वन्तेषामपि-

---

१—'स्वार्थ-द्रव्य-लिङ्ग-संख्या-कारकरूपं पञ्चकं प्रातिपदिकार्थः' इति मते लिङ्गस्य स्वान्वयिद्रव्यज्ञानाधीनज्ञानविषयतया तन्निमित्तककार्यस्यान्तरङ्गत्वम्, संख्यायास्तु अपेक्षाबुद्धिसापेक्षतयाऽनेकद्रव्यरूपधर्मिज्ञानाधीनज्ञानविषयत्वेन बहिरङ्गत्वात्, तन्निमित्तककार्यस्य बहिरङ्गत्वाच्चेत्यपि बोध्यमित्यन्यत्र विस्तरः ।

२—ननु धातुसंज्ञाविधायकसूत्रदृष्ट्याऽनुस्वारादीनां त्रिपादीस्थत्वेनासिद्धतया लाक्षणिकानामभाव एवेति, चेत्, न, 'लाक्षणिकानाम्' इत्यस्य लक्षणज्ञानाधीनज्ञानविषयस्वरूपकाणामित्यर्थात् । एवञ्च—अनुस्वारादीनामसिद्धत्वेऽप्युक्तलाक्षणिकत्वाक्षतिः । असत्यादीनां प्रतिपदोक्तानामसिद्धत्वारोपेऽधिष्ठानज्ञानस्य कारणतया परशास्त्रज्ञानापेक्षा, ततः परशास्त्रापेक्षया स्वस्य पूर्वत्वज्ञाने हि पूर्वं प्रति परासिद्धत्वं बोधनीयमिति 'न श्चापदान्तस्य झलि' इति 'सूत्रावधिकपूर्वत्वविशिष्टमिदम्' इत्येवं रूपेण लक्षणज्ञानाधीनज्ञानविषयस्वरूपकत्वेन लाक्षणिकत्वं बोध्यमिति मैरवमिश्राः ।

भाषाया अप्रवृत्तेः। 'आतो धातोः' ( पा० सू० ६।४।१४० ) इत्यत्र प्रतिपदोक्त आकारो गृह्यते इति तु वक्तुमप्यशक्यम्, 'पशुषः' इत्यसिद्ध्यापत्तेः। पशुं सनोतीति विट्, 'विड्वनोः' ( पा० सू० ६।४।४१ ) इत्यात्वम्। 'आतोऽनापः' इति वार्त्तिकमते तु विकल्पार्थकनिपात'वा'शब्दस्य धातुत्वे प्रातिपदिकत्वाभावात्सुबभावे पदत्वानापत्तिर्दोषः। क्रियात्वम्—साध्यत्वेन प्रतीयमानत्वम्, साध्यत्वञ्चोत्पाद्यमानत्वमेवेत्यन्यत्र विस्तरः। हिरगित्यादि।

धातुपाठे पाठसामर्थ्येन धातुसंज्ञाविधौ तस्याः परिभाषाया अप्रवृत्तिरिति भावः। न च 'भूवादयः' इति सूत्रदृष्ट्या तेषामसिद्धत्वान्न लाक्षणिकानां दर्शनमिति परिभाषाप्रवृत्तिः स्यादेवेति वाच्यम्, यादृशानुपूर्वीकस्य धातुसंज्ञाऽभिप्रेता तादृशानुपूर्व्यवच्छिन्नस्य ज्ञानं धातुसंज्ञाप्रवृत्तिप्राक्कालिकं लक्षणज्ञानपूर्वकालिकं भवति, ततोऽसिद्धत्वारोपेऽधिष्ठानस्फुरणमस्ति, अधिष्ठानस्य परस्य ज्ञाने सत्त्वे हि परत्वज्ञानसापेक्षपूर्वत्वज्ञानं धातुसंज्ञाविधायकसूत्रविशेष्यकम्भवति, ततोऽसिद्धत्वारोप इति 'न श्रापदान्तस्य' इत्यादिसूत्रज्ञानसापेक्षत्वमस्त्येवेत्याशयात्। यत्तु—वर्णग्रहणे 'आदेच उपदेशे' इति सूत्रस्थोपदेशग्रहणाल्लक्षणप्रतिपदोक्तभाषा न प्रवर्तत इति, तन्न, ओत्सूत्रस्थभाष्यविरोधात्÷ तत्र हि—'हे चित्रगोऽग्रम्' इत्यत्र 'ओत्' इति सूत्राप्रवृत्तिः परिभाषया साधिता। तस्मादादेच इति सूत्रस्थमुपदेशग्रहणम्परिभाषया अनित्यत्वे एव ज्ञापकम्। वर्णग्रहणेऽपि तस्याः क्वचित्प्रवृत्तिस्वीकारादेव 'पशुषः' इत्यस्य, 'चिकीर्षति' 'जिहीर्षति' इत्यस्य च सिद्धिः। आद्ये—पशुं सनोतीति विग्रहे 'जनसन'-इति विट्प्रत्यये 'विड्वनोः' इत्यात्वे आकारस्य लोपो लाक्षणिकस्यापि भवति। अन्त्ययोः—'अज्झनगमां सनि' इति दीर्घेऽपि 'वृतो वा' इतीड्विकल्पो न ऋकारस्य, लाक्षणिकत्वात्। अनित्यत्वस्य फलान्तरन्तु 'वापयति' 'क्षापयति' इत्यादौ पुक्सिद्धिरिति, एतदेवाह—आत इति। ननु 'त्कः' 'क्षः' इत्यादिसिद्ध्यर्थम् 'आतोऽनापः' इति वार्तिककृतोक्तन्तद्विरोधात्कथं 'याः पश्यसि' इत्यत्राकारलोपस्य प्राप्तिरत आह—आतोऽनाप इति। पदत्वापत्तिरिति। ततश्च देवदत्तः पचति वा! गच्छति वा! इत्यत्र निघातापत्तिः। एवं 'नृपतिस्तत्र त्वा वा मा वा प्रेषयिष्यति'! इत्यत्र 'त्वामौ' इति सूत्रस्य प्रवृत्त्यनापत्तिः। ननु सत्ताद्यर्थनिर्देशाद्धातुसंज्ञा न भविष्यतीति, चेन्न, तस्या पाणिनीयत्वात्। अत एव 'सेधतेर्गतौ' इति सङ्गच्छते।

१—ननु उत्पाद्यमानत्वस्यापि क्रियान्तराकाङ्क्षाऽनुत्थापकताऽवच्छेदकविलक्षणरूपतया साध्यत्वलक्षणे क्रियायाः, क्रियात्वलक्षणे साध्यत्वस्य च प्रवेशादन्योऽन्याश्रयः, इति चेत्, न, कालान्वयिताऽवच्छेदकविलक्षणरूपवत्त्वस्य, कारकान्वयिताऽवच्छेदकविलक्षणरूपवत्त्वस्य वा साध्यत्वस्य स्वीकारेणादोषात्। कालस्य, कारकस्य च 'क्रियाभेदाय कालः स्यात्' इति हर्युक्तेः, 'साधनं हि क्रियां निर्वर्तयति' इत्यादिभाष्याच्च क्रियायामेवान्वय इति नान्योऽन्याश्रयः।

द्यव्ययानाम्, 'शिश्ये' इति भावार्थतिङन्तस्य च मा भूत् । स्तम्भ्वा-

एषां क्रियासमानाधिकरणत्वात्, लिङ्गाद्यनन्वयित्वाच्च तदर्थस्य क्रियात्व-मित्यभिमानः । एषामव्ययेषु पाठस्तु अप्रातिपदिकत्वेऽप्यकजर्थः स्यात् । एतेन तेषु पाठसामर्थ्याद्धातुत्वाभाव इत्यपास्तम् । नन्वेषां क्रियाऽऽकाङ्क्षा-दर्शनेन न क्रियावाचकत्वमत आह—शिश्ये इति । कालोऽपि धात्वर्थ

ननु 'क्रियावाचिनि' इत्युक्तावपि 'वाति' इत्यत्र 'विकल्पयति' इत्येत्रेव निपातवाशब्दादपि विकल्परूपा क्रिया प्रतीयत एवेत्यत आह—क्रियात्वञ्चेति । उत्पाद्य-मानत्वमिति । एतत्प्रतीतिस्तु नात्र, शब्दशक्तिस्वभावात् । अत एव विकल्पो विकल्पावित्यत्रेव न लिङ्गसंख्यान्वयः । ननु हिरुगाद्यर्थस्योक्तरीत्या क्रियात्वाभावादेव धातुसंज्ञा न भविष्यतीत्यत आह—एषामिति । नन्वेषां धातुत्वे प्रातिपदिकत्वाभावा-देव सुबभावे सिद्धेऽव्ययेषु पाठवैयर्थ्यापत्तिरत आह—एषामव्यय इति । अभिमानपदेन सूचितामरुचिम्प्रकटयति—नन्वेषामिति । ननु 'शिश्ये' इति तिङन्तात्कालस्यापि प्रतीतिसत्त्वात्तस्यापि तादृशसमुदायवाच्यत्वं वाच्यम्, तथा च न क्रियामात्रवाचकत्व-मिति कथन्धातुसंज्ञाप्रसक्तिरत आह—कालोऽपीति । अपिशब्दः फलसंग्रहार्थः । पचकन्धात्वर्थः, तिङ् तु द्योतकः, अत एव तिङ्द्योत्यकालप्रकारक एव बोधः । फल-

१—ननु प्रथमोपस्थितत्वात् 'शय्यते' इत्यत्रैव दोषदानस्यौचित्यादिदमसङ्गतमिति, चेत्, न, अष्टाध्याय्यां लकारेषु लिट एवादौ विधानेन तत्रापि प्रथमोपस्थितत्वसत्त्वात् ।

२—अथ किमिदं धातुत्वम्—क्रियानिरूपितशक्तिपर्याप्त्यधिकरणत्वम्, इति चेत्, न, दरिकर्मकद्राणकर्तृत्वेनोच्चरिते द्रिद्राशब्देऽतिव्याप्तेः । क्रियामुख्यविशेष्यकबोधतात्पर्येणोच्चरितत्वं तत्, इत्यपि न, कर्तृक्विबन्तधुगादावव्याप्तेः, 'सत्त्वप्रधानानि नामानि' इति निरुक्तात् कर्तृमुख्यविशेष्यकबोधतात्पर्येणोच्चरितत्वस्यैव तत्र सत्त्वादिति चेदत्रोच्यते— क्रियानिष्ठमुख्यविशेष्यताकबोधानुकूलशक्तिविशिष्टत्वं धातुत्वम्—वै० स्वपर्याप्त्यधिकरणत्व—स्वनिरूपकार्थविषयकबोधतात्पर्येणोच्चरितत्वैतदुभयसम्बन्धेन । एवञ्च दरिकर्मकद्राणकर्त्रर्थक'दरिद्रा'शब्दे दुर्गतित्वावच्छिन्नमुख्यविशेष्यताकबोधजनकताऽवच्छेदकानुपूर्व्याः सत्त्वेन शक्तिपर्याप्त्यधिकरणत्वसत्त्वेऽपि नातिव्याप्तिः, तादृशार्थमुख्यविशेष्यकबोधतात्पर्येणानुच्चरितत्वात् । धुगादौ तु दोहनमुख्यविशेष्यकबोधानुकूलशक्तिपर्याप्त्यधिकरणत्वस्य, दोहनविषयशक्तिनिरूपको यो दोहनकर्तृमुख्यविशेष्यको बोधस्तत्तात्पर्येणोच्चरितत्वस्य च सत्त्वान्नाव्याप्तिः । नचैवमपि उक्तद्रिद्राशब्दे दोषतादवस्थ्यम्, स्वनिरूपकार्थविषयकबोधतात्पर्येणोच्चरिताघटितत्वस्यापि निवेशात् । अत्र घटितत्वमान-तिदिष्टं ग्राह्यं तेन धुगादौ कर्तृबोधकत्वेऽपि न क्षतिरिति दिक् ।

'शिश्ये' इत्यत्र भावे लिटि 'ए' इत्यत्र धातुत्वलक्षणातिव्याप्तिवारणाय स्वनिरूपकार्थानुवादकत्वरूप-मपि वैशिष्ट्यं निवेशनीयम् । तथा च भावार्थकप्रत्ययानां सर्वत्रैवानुवादकतया न दोषः ।

३—ननु 'सर्वं वाक्यं सावधारणम्' इति न्यायेन क्रियावाचित्वपदेन क्रियामात्रवाचकत्वस्यैव ग्रहणेन 'शिश्ये' इत्यत्र च कालवाचित्वस्यापि सत्त्वाद्दोषाभावोऽत आह—कालोऽपीति । तथा च तन्मात्र-वाचित्वमसम्भवतीति भावः ।

दीनामुदित्करणेन सौत्राणां धातुत्वं ज्ञाप्यते। चुलुम्पादीनां तु

एवेति न क्रियावाचकत्वहानिः। तस्य च धातुत्वे 'आदेच उपदेशे' (पा० सू० ६।१।४५) इत्यात्वं स्यात्। तद्धि अनैमित्तिकम्, धातुत्वनिमित्तकञ्चेति स्पष्टमेव। अत्र च प्रत्ययस्यैव धातुत्वापत्तिर्बोध्या, तिङन्तस्य तूपदेशाभावान्नात्वप्रसक्तिरित्याहुः। ननु षष्ठे प्रकृतसूत्रे धातुग्रहणासम्बन्ध उक्तो भाष्ये, इति न तद् धातुत्वनिमित्तकम्, किञ्चाशितीति प्रसज्यप्रतिषेधेऽपि शित्परत्वयोग्यस्यैवात्वविधानान्नात्रात्वप्रसक्तिः। अपि च 'वा'सादृश्यमन्यानभिहितक्रियावाचकत्वेनेति न दोषोऽत आह—चेति। सूत्रशेषभाष्योक्तेषु 'आणवयति' 'वट्टयति' इत्यादिषु च धातुत्वे शास्त्र-

स्यापि क्रियात्वव्यवहारविषयत्वमिष्टमेव। अत एव कर्मणः फलान्वयित्वेऽपि 'कारकाणां क्रियान्वयित्वम्' इति व्यवहारस्य न क्षतिः। ननु क्रियावाचकस्य समुदायस्य धातुत्वेऽपि न क्षतिः, न च तिङापत्तिः, उक्तत्वात्, आत्वापत्तिरपि न उपदेशाभावादत आह—अत्र चेति। अत्र सूत्रे='आदेच उपदेशे' इति सूत्रे। उक्त इति। अत एव 'गोभ्याम्' इत्यादावुपदेशपदव्यावृत्तिप्रदर्शनसङ्गतिः। प्रसज्यप्रतिषेध इति। पर्युदासे तु प्रत्यये शिद्भिन्ने एवात्वं स्यात्तथा चाकारान्ताद्विधीयमानः प्रत्यय एजन्तान्न स्यादत आह—प्रसज्यप्रतिषेधेऽपीति। शित्परत्वयोग्यस्यात्वमिति स्वीकारान्नात्रात्वप्रसक्तिरिति यदि स्वीक्रियते, तदा तिङन्तघटकतिङ्मात्रस्यापि न प्रसक्तिरित्याह—किञ्चेति। उक्तार्थे प्रमाणन्तु विप्रयोगस्यापि संयोगवत्तादृशार्थोपस्थितिजनकत्वमेव। उक्तार्थानङ्गीकारेऽप्याह—अपि चेति। यद्वा प्रसज्यप्रतिषेधपक्षे योग्यता यदि निमित्तन्तदाऽवसाने जायमानविसर्गादेर्द्वित्वन्न स्यादतस्तथा स्वीकारो न युक्त इति यदि स्वीक्रियते, तदाप्याह—अपि चेति। वासादृश्यमिति। भ्वादाविति शेषः। वाचकत्वेनेति। स्वीक्रियत इति शेषः। आणवयतीति। आज्ञापयतीत्यर्थः। वट्टयति—वर्तयतीत्यर्थः। आदिपदेन वर्द्धयतीत्यस्यार्थे प्रयुज्यमानस्य वड्ढयतीत्यस्य

१—'लिटि धातोरनभ्यासस्य' (पा० सू० ६-१-२) इति सूत्रादनुवर्तमानस्यापि धातोरित्यस्य 'ष्यङः सम्प्रसारणम्' इति सूत्रेऽयोग्यत्वादननुवृत्तौ 'आदेच उपदेशे' इत्यत्रापि मण्डूकानुवृत्तौ प्रमाणाभावादसम्बन्ध इति भावः। नचैवम् 'गोभ्याम्' 'नौभ्याम्' इत्यादावतिप्रसङ्गः, 'उद्देश्यश्च प्रातिपदिकानां नोपदेशः' इति भाष्येण तत्रोपदेशग्रहणेनैवानतिप्रसङ्गात्। न च 'गोपयसोर्यत्' 'नौद्व्यचष्ठन्' इत्यादौ प्रत्यक्षाऽख्यानसत्त्वादुपदेशत्वेन दोषतादवस्थ्यम्, येषां स्वरूपज्ञानायापूर्वमुच्चारणम्, तेषामेवोपदेशत्वस्य भाष्यसिद्धत्वेनोक्तस्थले प्रत्ययविधावुद्देश्यतयोपादानेनोपदेशत्वाभावात्। न च 'गमेर्डसि' 'नयतेर्डौः' इति विहितप्रत्यययोरुपदेशत्वस्याक्षतत्वेन दोष एव, 'उणादयोऽव्युत्पन्नानि प्रातिपदिकानि' इत्यस्य स्वीकारात्।

२—नन्वेकारमात्रस्यापि धातुत्वे प्रत्ययोत्पत्तिसम्भावनया शित्प्रत्ययनिष्ठविधेयतानिरूपितोद्देश्यताऽवच्छेदकधर्मवत्त्वरूपशित्परत्वयोग्यत्वमस्त्येवात आह—अपि चेति।

'बहुलमेतन्निदर्शनम्' इति गणसूत्रेण सङ्ग्रहः ॥

'चादयः' (पा० सू० १।४।५७)। अद्रव्यार्थाः किम्? 'पशुः'। लिङ्गसंख्यान्वितं द्रव्यम्। इह तु स्यादेव—'लोधं नयन्ति पशु मन्यमानाः'। 'पशु' इति सम्यगर्थे ॥

विषयतया साधुत्वापत्तिरिति तद्व्यावृत्तये तदिति भावः। उदित्करणेनेति। इदमुपलक्षणम्, तत्प्रकृतिकच्ल्यनुवादेनाङ्विधानेन, सार्वधातुके परे विकरणविधानेन च धातुत्वम्। 'जुचङ्क्रम्य' (पा०सू०३।२।१५०) इत्यत्र पठितजोः, 'जपजभ' (पा० सू० ७।४।८६) इत्यत्र पठितपसः, ऋतिप्रभृतीनाञ्च केषाञ्चिद्धात्वधिकारविहितकार्योद्देश्यत्वाद् बोध्यम्। एतैश्च स्थितस्य तेषां पाठस्य भ्रंशोऽनुमीयते इति भावः। मैत्रेयाद्यन्यसम्मतस्समाधिमाह—बहुलमिति। सम्यगर्थे इति। न च "लुब्ध-

समुच्चयः। अपभ्रंशानामर्थबोधकता सुप्रसिद्धैव। साधुत्वापत्तिरिति। तथा च यागादिष्वपि तादृशप्रयोगापत्तिरिति शेषः। न च साधुत्वनिश्चयस्य तादृशकर्मणि तत्तच्छब्दप्रयोगे कारणताऽस्ति, स च निश्चय एतादृशशब्दविशेष्यकासाधुत्वनिश्चयेन प्रतिबध्यत इति नायन्दोष इति वाच्यम्, साधुत्वस्य व्याकरणव्यङ्ग्यजातिविशेषरूपतया यद्येतेषु शास्त्रप्रवृत्तिः स्यात्तदाऽप्रामाण्यज्ञानानास्कन्दितासाधुत्वज्ञानन्न स्यात्, तथा च प्रतिबन्धकाभावात्तेषु एतेषाम्प्रयोगः स्यादेवेत्याशयात्।

ननु स्तम्भ्वादीनामुदित्करणन्धातुत्वानुमापकमित्यसङ्गतम्, तेषान्धातुत्वाभावे प्रातिपदिकसंज्ञायान्ततः सर्वनामस्थाने 'उगिदचाम्' इत्यनेन नुम्सम्पादकत्वेनोदित्करणस्य चारितार्थ्यादत आह—इदमिति। तत्प्रकृतिकेति। स्तम्भ्वादिप्रकृतिकेत्यर्थः। ननु च्ल्यनुवादेनाङ्विधानात्स्तम्भेर्धातुत्वमवतु स्तुम्भुप्रभृतिषु कथन्तदनुमानमत आह—सार्वधातुक इति। स्तुम्भुस्कुन्भुप्रभृतिधातुभ्यः कर्त्रर्थकसार्वधातुके परे 'श्ना' प्रत्ययस्य, 'श्नु' प्रत्ययस्य च विधानन्तादृशधातुत्वानुमापकमविष्यतीत्यर्थः। धातुत्वमिति। बोध्यमित्यस्यापकर्षः। ननु जुप्रभृतीनामुक्तरीत्या धातुसंज्ञाऽनुमानन्न सम्भवतीत्यत आह—जुचङ्क्रम्य इत्यादिना। ऋतिप्रभृतिग्रहणं कात्यनेकाज्ग्रहणञ्चुलुम्पाद्यर्थमिति वार्तिकपठितानाम्, कण्ड्वादिपठितानाञ्च सङ्ग्रहाय, स्तम्भुप्रभृतीनाम्मूलोक्तप्रकारेण धातुत्वानुमानकरणे गौरवमनेकानुमानकल्पनाप्रयुक्तं स्यादतो लाघवायाऽह—एतैश्चेति। ननु 'बहुलमेतन्निदर्शनम्' इत्यप्रामाणिकमत एव "पाठेन धातु-

१—गगर्यादीनां प्रातिपदिकत्ववारणाय 'यत् किञ्चिच्छास्त्रबोधितसाधुत्ववत्येव लक्ष्ये लक्षणप्रवृत्तिः' इति नियमात् लाघवात् धातुसंज्ञाविधायकस्य 'भूवादयो धातवः' इत्यस्यैवाऽऽवृत्त्या, 'भूवादयः साधवः' 'ते च धातुसंज्ञकाः' इत्येवंरूपेणोभयविधायकत्वस्वीकारेण धातुसंज्ञाप्रवृत्तौ साधुत्वं स्यादिति भावः।

'उपसर्गाः' ( पा० सू० १।४।५९ )। निस्, दुस् इति सान्तौ, 'निसस्तपतौ' ( पा० सू० ८।३।१०२ ) इति निर्देशात्, अयोगवाहानामविशेषेणेति प्रकरणे 'निष्कृतम्' 'दुष्कृतम्' इत्युदाहृत्य 'इदुदुपधस्य सकारस्य यो विसर्जनीय इति भाष्यकारोक्तेश्च। 'उपसर्गस्यायतौ' ( पा० सू० ८।२।१९ ) इति सूत्रे वामनोऽप्येवम्। 'निरः कुषः' ( पा० सू० ७।२।४६ ) 'सुदुरोरधिकरणे' इति निर्देशाद्रेफान्तावपीति तत्रैव सूत्रे हरदत्तः॥ ॥ इति संज्ञाप्रकरणम्॥

ऋषिं नयन्ति पशुं मन्यमानाः' इति निरुक्ते 'पशुम्' इति सानुस्वारपाठात् तत्र पश्विति लुप्तविभक्तिकं सत्त्ववाचीति वाच्यम्। 'लोधम्' इत्यनवगतमिति तद्भाष्योक्त्या तन्मात्रनिर्णायके निरुक्ते पशुशब्दांशेऽन्यथापाठे मानाभावात्। स्पष्टं चेदं प्रकृतसूत्रे हरदत्तग्रन्थे, दृशधातौ माधवग्रन्थे चेति दिक्। वामनोऽप्येवमिति। तत्र हि 'दुस् सान्तः' इति तेनोक्तम्॥

संज्ञा क्रियते, सा न प्राप्नोति" इति भाष्यकारोक्तिः सङ्गच्छते। व्याख्या च तस्य भाष्यस्य 'स पाठो नोपलक्षणार्थः, अपि तु इयत्ता प्रतिपादनार्थः' इति कैयटेन कृतेत्याशयेनाह—मैत्रेयाद्यन्येति। एतेन तदुक्तेः स्वीयभाष्यासम्मतत्वन्ध्वनितम्। सानुस्वारपाठादिति। केषुचित्पुस्तकेष्वित्यादिः। तद्भाष्योक्त्येति। वेदभाष्योक्त्येत्यर्थः। तन्मात्रनिर्णायके—लोधशब्दार्थमात्रनिर्णायके। यदि तस्य भाष्यस्य पशुशब्दार्थनिर्णायकताऽपि स्यात्तदा तथा भाष्यकृतोक्तं स्यादिति भावः। अन्यथा पाठे = निरनुस्वारपाठाद्भिन्ने सानुस्वारपाठे। यथा लुब्धमिति विशेषणबोधकमृषिमिति विशेष्यसन्निधाने पठितन्तथा तत्सन्निधाने एव पशुमित्यस्यापि पाठे कर्तव्ये क्रियावाचकपदसमभिव्याहारेण पाठस्य स्वारस्यानुपपत्तिश्चेत्यपि बोध्यम्। किञ्चाद्युदात्तत्वदर्शनमप्यस्य निपातत्वनिर्णायकम्। लोमवल्लाङ्गूलावच्छिन्नवचनस्य तु "पशूंस्तांश्चक्रे वायव्यान्" इत्यत्रान्तोदात्तत्वमेव दृश्यते, तदेतद्दर्शयितुमाह—दिगिति।

"उपसर्गस्यायतौ" इति सूत्रे वामनेन निसः सान्तत्वमनुक्तम्, इत्येवमिति कथमत आह—तत्र हीति। उपसर्गेति सूत्रे हीत्यर्थः। इति संज्ञेति। अष्टाध्यायीस्थसूत्रविहितानां सन्धिकार्योपयोगिनीनां संज्ञानाम्प्रकरणं समाप्तमित्यर्थः। तेनाङ्ग-प्रगृह्य-लोपाम्रेडित-भ-लोपादिसंज्ञानामस्मिन्प्रकरणे पाठाभावेऽपि न न्यूनतापत्तिः। एतेन संज्ञानामेवेदम्प्रकरणन्तु संज्ञानामिदमेवेत्यत्र तात्पर्यम्, पूर्वत्रासिद्धमित्यादिसूत्रार्थकथनन्तु प्रसङ्गादिति बोध्यम्॥ ॥ इति संज्ञाप्रकरणविवरणम्॥

१—निरुक्तम्=वेदाङ्गम्, पदविभाग—मन्त्रार्थदेवतानिरुक्तं शास्त्रमिति यावत्।

# अथ परिभाषाप्रकरणम्

'इको गुणवृद्धी' (पा० सू० १।१।३) गुणवृद्धिशब्दाभ्यामिति । एतच्च पूर्वसूत्राभ्यां गुण–वृद्धिपदे अनुवर्त्य गुणो वृद्धिरिति ये गुण–वृद्धी इति योजनया लभ्यते, तेनेह न— 'दिव औत्' (पा० सू० ७।१।८४)

योजनयेति । यद्यपि तदनुवृत्त्यैव सिद्धे सामर्थ्याच्छब्दव्यापारा-

इको गुणवृद्धी । नेदमधिकारसूत्रम्, "न धातुलोप" इति सूत्रस्थनकारस्य पृथक्पाठात् । अन्यथाऽधिकारत्वाविशेषात्तेना संयुज्यैव पठेद् । संज्ञासूत्रमपि न, विरुद्धविभक्तिनिर्देशात् । विधिसूत्रमपि न, तत्तद्विधायकसूत्रसामर्थ्यादतः परिभाषा-सूत्रमेवेत्याशयेन प्रकरणान्तरेऽस्य पाठः । अत्र पूर्वसूत्राभ्यां गुण-वृद्धिपदे अनुवर्त्य योजनयोक्तार्थलाभः इति मूलीयव्याख्यानं गुणवृद्धिग्रहणसामर्थ्यादिति भाष्याक्षर-विरुद्धमित्याशयेनाह—यद्यपीत्यादि । तदनुवृत्त्यैव=गुणवृद्धिपदानुवृत्त्यैव । न च तयोः सूत्रयोर्गुणवृद्धिपदे स्वरूपपरे, इह तु तयोः संज्ञिपरत्वङ्कथमिति वाच्यम्, 'ष्णान्ता षट्' इत्यत्र संख्यापदवच्छब्दाधिकारेण संज्ञिपरत्वसम्भवात् । सामर्थ्यात् =

१—अत्र प्राचीनाः—संज्ञाशास्त्रादन्यत्र सूत्रेऽनुवर्तमानानि संज्ञापदानि स्वरूपपराण्येव, यथा— 'सुप्तिङन्तं पदम्' इत्यत्र पदपदं स्वरूपपरं न तु संज्ञिपरम्, असम्भवात्, तथा 'स्वादिष्वसर्वनामस्थाने' इत्यत्रानुवृत्तमपि पदपदं स्वरूपपरमेव, अर्थाधिकारानुरोधात् । न चैवम् 'बहुगुण' इति सूत्रात् 'ष्णान्ताः षट्' इति सूत्रेऽनुवृत्तस्य संख्यापदस्यापि स्वरूपपरता स्यादिति वाच्यम्, तत्र स्वरूपपरकत्वे संख्या-शब्दस्य ष्णान्तत्वासम्भवात् 'ष्णान्ताः' इति विशेषणानुपपत्त्या संज्ञिपरकत्वस्यैव लाभात् । एवञ्च—'इको गुणवृद्धी' इति सूत्रघटकगुणवृद्धिपदयोरर्थपरत्वेन, अनुवृत्तयोश्च तयोः स्वरूपपरकत्वेनान्वयानुपपत्त्या 'इति' 'उच्चार्य' 'विधीयते' इति पदत्रयमध्याहृत्य गुण इति, वृद्धिरिति वोच्चार्य यत्र गुणो विधीयते, वृद्धिर्वा विधीयते तत्र 'इकः' इति षष्ठ्यन्तं पदमुपतिष्ठते इत्यर्थः । यद्वा पदत्रयाध्याहारे गौरवात्, संज्ञाशास्त्रे स्वरूपपरस्यापि प्रत्ययपदस्य 'आद्युदात्तश्च' इत्यत्रानुवृत्त्या, संज्ञितव्यादिप्रत्ययपरकत्वस्य दर्शनाच्च प्रकृते अनुवर्तमाने अपि गुणवृद्धिपदे संज्ञिपरके एव, तथा च सूत्रस्थयोरनुवृत्तयोश्चैकार्थतया यत्र विशेष्यताऽवच्छेदक-प्रकारताऽवच्छेदकधर्मयोर्भेदस्तत्रैवाभेदान्वयस्य नियमात् 'घटो घटः' इतिवत् 'अदेङ्देङ्' 'आदैजादैच्' इत्यन्वयस्य बाधात् अनुवृत्तगुणवृद्धिपदयोः स्वावच्छिन्नविधेयताप्रयोजकपदे सूत्रघटकगुणवृद्धिपदयोर्लक्षणायां तात्पर्यग्राहकतया यत्र गुणपदावच्छिन्नविधेयताप्रयोजकं गुणपदम्, वृद्धिपदावच्छिन्नविधेयताप्रयोजकं वृद्धिपदं वा तत्र 'इकः' इति षष्ठ्यन्तं पदमुपतिष्ठते इत्यर्थो बोध्य इत्याहुः।

नव्यास्तु सूत्रघटकगुणवृद्धिपदयोः संज्ञिमात्रपरत्वे अनुवर्तमानस्य संज्ञिपरकत्वमाश्रित्य गुणवृद्धिपदा-नुवृत्त्यैवाभीष्टसिद्धे पुनः सूत्रे गुणवृद्धिग्रहणसामर्थ्यात् सूत्रघटकगुणवृद्धिपदयोरेवोक्तार्थे लक्षणया तदर्थ-लाभादनुवृत्ति–योजनादिविषयकः प्रयासो विफल एवेत्याहुः ।

द्यौः, "त्यदादीनामः" ( पा० सू० ७।२।१०२ ) सः, इमम् । षष्ठयन्तमिति । सूत्रे षष्ठ्यन्तस्यानुकरणाच्छब्दस्वरूपपरतया नपुंसकत्वात्सोर्लुगिति भावः । पदमिति । तच्च सम्भवति सामानाधिकरण्ये

श्रयणेन लभ्यते मूलोक्तार्थः, तथाऽपि मन्दबुद्धिसाधारण्येन स्फुटत्वाद्यैवमेवोक्तम् । स इति । अत्र नैव स्यादिति भावः । इममिति । अकारस्यैव स्यान्नत्वन्त्यस्येति भावः । सोर्लुगिति । अत एव दीर्घो नेति भावः । तच्चेति । इक इति पदञ्चेत्यर्थः । अनेनात्र सूत्रे पदोपस्थितिपक्ष इति सूचयति । 'अचो ञ्णिति' ( पा०सू० ७।२।११५ ) 'ओर्गुणः' ( पा०

पुनरस्मिन्सूत्रे तयोः पाठसामर्थ्यात् । लभ्यत इति । लक्षणयेति शेषः । सा च गुणवृद्धिशब्दकरणकविधानाधिकरणे कार्या । मन्दबुद्धीति । किञ्च—यदीहोक्तार्थे गुणवृद्धिपदयोरनुवर्तमानयोर्लक्षणाऽऽश्रीयते, तदा "न धातु" इत्युत्तरसूत्रयोः पुनरर्थान्तरेऽकारादिमात्रे लक्षणाऽऽश्रयणीयेति गौरवं स्यादतो लाघवायास्मिन्सूत्रे तयोरनुवृत्त्या योजनाकल्पनमेव युक्तमिति बोध्यम् । शब्दव्यापारपरतया व्याख्यानस्य फलं 'द्यौः' इत्यादावतिव्याप्तिवारणरूपं दर्शितं यथा, तथा 'सः' इत्यत्र न सम्भवतीति तदुपादानन्निष्फलमित्याशङ्कां निरासायाह—अत्र नैवेति । तथा चातिव्याप्तिवदव्याप्तिनिरासोऽप्येवं व्याख्यानस्य तस्य फलमिति ध्वनितम् । नन्विममित्यत्र पुनरतिव्याप्तिप्रदर्शनं सन्दर्भविरुद्धम्, 'द्यौः' इत्यस्यातिव्याप्त्यधिकरणस्याग्रे एतदुपन्यासस्योचितत्वात्, अतो भावमाह—अत्रेकारेति । तथाचान्त्यादेशस्य विषये दोषमुक्त्वाऽनन्त्यादेशप्रसक्तयातिव्याप्तिप्रदर्शनाय पुनरेवं दोषः । अत एव = लुकः प्रवृत्तेरेव । दीर्घ इति । "अत्वसन्तस्य" इति सूत्रविहित इत्यादिः । ननु तच्चेत्यनेन सम्पूर्णसूत्रपरामर्शेऽर्थासङ्गतिरत आह—इक इति पदञ्चेति । अनेन = पदपदोपादानेन । ननु विधेयसमर्पकगुणवृद्धिपदोपादानं यत्र तत्रास्योपस्थानञ्चेत्, "अचो ञ्णिति" इति सूत्रे, "ओर्गुणः" इत्यत्र च तथा सत्त्वादत्रापीक इत्यस्योपस्थानं स्यात्, तथा च सूत्रोपात्तयोर्वैयर्थ्यमत आह—अच इति । न च निर्दिष्टस्थानिकत्वमिक इत्यस्यानुप-

अन्ये तु पूर्वसूत्रास्यामादेच्पदम्, अदेङ्पदञ्चानुवर्त्य, संज्ञाविधायकशास्त्रीयविधेयताऽवच्छेदकधर्मेतरधर्मावच्छिन्नविधेयताप्रयोजकेऽनुवर्तमानमपि संज्ञापदं संज्ञिपरमेवेति नियममाश्रित्य वा 'यत्र गुणवृद्धी विधीयेते तत्रेक इत्युपतिष्ठते' एतावन्मात्रार्थलाभे पुनर्गुणवृद्धिग्रहणसामर्थ्यात् सिद्धान्तार्थलाभ इत्याहुः । अत्र नव्यमतमेव ज्यायः, अनुवृत्त्यध्याहारयोजनाद्यकल्पनालाघवादिति दिक् ।

१—गुरुभूतयाऽप्यनुवृत्तियोजनादिकाश्रयणरीत्येत्यर्थः ।

२—अत्र भाष्ये—'यथैकं वाक्यं तच्चेदञ्च'—'अलोऽन्त्यस्य विषयो भवन्ति, 'इकोगुणवृद्धी', 'अलोऽन्त्यस्येति ततोऽयं तच्छेषः' इत्युक्तम् । अयम्भावः—'अङ्गस्य गुणः' इत्युक्तेः स्थानषष्ठीनिर्देशाच्छित्वात् 'अलोऽ-

सू० ६।४।१४६ ) इत्यादौ तु नास्याः प्रवृत्तिः, लिङ्गस्य श्रुत्यपेक्षया दुर्बलत्वेन प्रथमतः श्रौताच्पदार्थादिघटितवाक्यार्थबोधे वृत्ते निर्दिष्टस्था-

स्थाने नियामकम्भविष्यतीति वाच्यम्, अच इत्यस्य स्थानिबोधकत्वनिर्णयस्य वाक्यार्थबोधोत्तरकालिकत्वात् । लिङ्गस्य = वृद्ध्यादिपदनिष्ठस्य लिङ्गस्य, इक्पदोपस्थितिद्वारा तदर्थप्रकाशनसामर्थ्यरूपस्य । श्रुत्यपेक्षया=अच इत्यादिश्रुत्यपेक्षया । निरपेक्षो रवः श्रुतिः । दुर्बलत्वेनेति । "श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानां समवाये पारदौर्बल्यमर्थविप्रकर्षात्" ( जै० अ० ३ पा० ३ सू० १४ ) इति सूत्रे मीमांसायां हि तथोक्तम् । दुर्बलत्वमुपपादयति-प्रथमत इति । श्रौत इति । श्रुतेरयं श्रौतः । श्रुतिश्चाच्पदादिरूपा, अत एवाह—अच्पदार्थादीति । आदिना वृद्ध्यादिपदार्थपरिग्रहः । वृत्ते = निष्पन्ने । वाक्यार्थबोधस्य या पदार्थोपस्थित्यादिसामग्री तस्या वृत्तत्वादिति शेषः । एतेन पदोपस्थितिप्रतिबन्धकसद्भावो ध्वनितः । उपस्थितस्यापीत्यपिनाऽनुपस्थितौ सम्यक्त्वं सूचितम् । लिङ्गस्य तु पदोपस्थापकत्वं ततस्तस्य

न्त्यस्य', इत्युपतिष्ठते, गुणश्रुत्या तु 'इकः' इति, तत्र विशेष्यविशेषणभावेनान्वये यदि पूर्वमिकाऽङ्गं विशेष्यते, तदा इगन्ताङ्गस्य गुणो भवति, स च भवन् 'अलोऽन्त्यस्य' इत्यन्त्यस्येति, यदि पूर्वम् 'अङ्गस्य' इति षष्ठी अन्त्यमलं नीयते, अङ्गान्त्यस्यालो गुणो भवति, स च भवन्, 'इकः' इति वा उभयथापि सः= अलोऽन्त्यस्येति सूत्रम्, शेषः=विशेषणमस्य 'इकः' इत्यस्य, इति व्युत्पत्त्या, तस्य=अलोऽन्त्यस्येत्यस्य, शेषः=विशेषणम्, अयम्='इको गुणवृद्धी' इति व्युत्पत्त्या वा तच्छेषपक्ष इति व्यवहारः । तथाचान्त्यालभिधस्येको गुणवृद्धिविधायके एवानयोरुपस्थितिः, लघूपधादिहलन्ताङ्गेषु उभयोरनुपस्थित्या सर्वस्य गुणप्रसङ्गः । यदि तूक्तदोषवारणाय 'अङ्गस्य' इति गुणवृद्धिविधौ न स्थानषष्ठी, किन्तु इगपेक्षयाऽवयवषष्ठी तदा स्थानषष्ठ्यभावात् 'षष्ठी स्थानेयोगा' इत्यस्य सम्बन्धेन स्थानषष्ठीस्थले एव प्रवर्तमानस्यालोऽन्त्यस्येत्यस्यानुपस्थितिर्गुणवृद्धिविधायके, इत्यनुपस्थित्यैवापवादत्वव्यवहारः । अत्र पक्षेऽङ्गावयवस्येको गुण इत्यर्थे 'जुसि च' इति 'अनेनिजुः' इत्याद्यनिगन्तेषु 'सार्वधातुकार्धधातुकयोः' इति 'ईहिता' 'ईहितुम्' इत्याद्यनिगन्तेषु गुणः प्राप्नोति, इत्युभयपक्षे दोषमाशङ्क्योक्तम्,—'एवं तर्हि नायं तच्छेषः, नापि तदपवादः, अन्यदेवेदं परिभान्तरमसम्बन्धमनया परिभाषया' इति । ततः 'एवन्तर्हि वृद्धिर्भवति, गुणो भवतीति यत्र ब्रूयादिक इति तत्रोपस्थितं द्रष्टव्यम्' इत्युक्तम् । अत्रेक इत्युपस्थितं द्रष्टव्यमित्युक्तया 'पदोपस्थितिपक्ष' एवोक्तो भवतीति स्पष्टमेव ।

१—अयम्भावः-'श्रुति–लिङ्ग–वाक्य–प्रकरण–स्थान–समाख्यानां समवाये पारदौर्बल्यमर्थविप्रकर्षात्' इति मीमांसादर्शने जैमिनिना उत्तरोत्तरपेक्षया पूर्वपूर्वस्य बलवत्त्वमुक्तम्, लिङ्गज्ञानप्राप्तविध्यपेक्षया श्रावणप्रत्यक्षविषयश्रुतिप्राप्तविधेर्बलवत्त्वम् । तत्र 'अर्थविप्रकर्षात्' इति बलवत्त्वे हेतुः । यथा-'ऐन्द्रया गार्हपत्यमुपतिष्ठते' इत्यत्र इन्द्रस्तुतिरूपं लिङ्गं लिङ्गस्य स्वतो विनियोजकत्वभावेन 'अनया ऋचा इन्द्रम् उपतिष्ठेत' इति वाक्यं प्रकल्प्य इन्द्रोपस्थाने विनियोजकं स्यात् 'ऐन्द्रया गार्हपत्यमुपतिष्ठते' इति श्रुतिस्तु स्वत एव गार्हपत्याग्नेरुपस्थाने इमामृचं विनियोजयतीति शीघ्रोपस्थापकतया यथा बलवत्त्वम्, तथा प्रकृते श्रौताच्छब्दार्थमन्तरङ्गमादाय जाते वाक्यार्थबोधे सूत्रान्तरेणोपस्थापितस्य बहिरङ्गस्येक्पदार्थस्य निराकाङ्क्षतया वाक्यार्थेऽनन्वय इति ।

इगन्तस्याङ्गस्येत्यादिक्रमेण संबध्यते । "भिदेर्गुणः" (पा० सू०

निकत्वेनोपस्थितस्यापीकपदस्य वाक्यार्थेऽनन्वयात् । 'सार्वधातुक' (पा० सू० ७।३।८४) इत्यादौ तु तदुपस्थितिं विना स्थान्याकाङ्क्षाशान्त्यभावेन बोध एव नेति विशेषः । एवञ्च पदश्रुतिनिमित्तैषा पदैकवाक्यतया-

पदस्य शक्तिस्मरणं ततस्तदर्थोपस्थितिस्ततस्तस्यार्थस्य वाक्यार्थघटकत्वसम्भावनेति विलम्बः स्पष्ट इति भावः । यथा—"इमामगृभ्णन् रशनामृतस्य" इति मन्त्रे रशनामात्रप्रकाशनसामर्थ्यरूपलिङ्गसत्त्वेन गर्दभरशनाग्रहणेऽपि प्रसक्तस्य तस्य मन्त्रस्य तदीयब्राह्मणे "अश्वाभिधानीमादत्ते" इति विधिबोधकलेडन्तशब्दोच्चारणेनाश्वरशनाग्रहणे श्रुत्या तस्य मन्त्रस्य विनियोगो बोध्यते इति । निर्दिष्टस्थानिकत्वादित्यनेन स्थान्यन्तराकाङ्क्षाऽभाव उक्तः । अनन्वयेति । अर्थद्वारेति शेषः, जनितान्वयबोधादिति च भावः ।

प्रकृतसूत्रोपयोगस्थलमाह—सार्वधातुक इत्यादिना । तदुपस्थितिम्=एतत्सूत्रस्थेक्पदोपस्थितिम् । शान्त्यभावेनेति । गुणादीनामनेकाल्त्वाभावेन 'अनेकाल्शित्सर्वस्य' इत्यस्यानुपस्थितेः अङ्गस्येति षष्ठ्या अर्थस्य समीपादिपदाध्याहारेण "अस्तेर्भूः" इत्यत्रेवानेकस्य सम्भवेन स्थानषष्ठीत्वनिर्णयाभावाद् 'अलोऽन्त्यस्य' इत्यस्याप्यनुपस्थितिः, अन्यस्य तु निर्णायकस्य स्वरूपत एवाभावादिति अङ्गसम्बन्धिगुण इत्यर्थबोधस्तु सामान्यतो जातोऽपि न लक्ष्यसंस्कारक इति भावः । बोध एव नेति । सम्बन्धविशेषविषयकः षष्ठीजन्यबोध एव नेत्यर्थः । न चैवमस्याः परिभाषाया अप्युपस्थितिर्न स्याद्विधेयसमर्पकत्वनिर्णयाभावेन लिङ्गानिश्चयादिति वाच्यम्, असति बाधके विधिवाक्यस्था प्रथमा विधेयबोधकपदावयव इति सामान्यतः सिद्धवाक्यतः 'गुण' इति पदस्य प्रथमान्तस्य लिङ्गत्वसम्भवात् । मौलन्तचेत्यादिग्रन्थमवतारयति—एवञ्चेत्यादिना । एवञ्च=सामान्यतो बोधे च । पदश्रुतिनिमित्ता=विधेयबोधकत्वज्ञानविषयगुणादिपदश्रवणनिमित्ता । एषा=इको गुणेति परिभाषा । अन्तरङ्गत्वादस्याः प्रथमतः प्रवृत्तिमाह—पदैकेति ।

१—ननु पदोपस्थापकत्वेऽपि वाक्यार्थबोधानन्तरं स्थानषष्ठीत्वनिर्णयस्येव विधेयताप्रयोजकत्वनिर्णयस्यापि वाक्यार्थबोधानन्तरभावितया 'इकः' इति परिभाषाया अपि अन्तरङ्गत्वाभाव इति, चेन्न, विधेयताप्रयोजकत्वज्ञानप्रतिबन्धकाभावविशिष्टप्रथमान्तपदज्ञानमात्रस्यैव 'इकः' इति परिभाषोपस्थितौ हेतुत्वात् । विधेयताप्रयोजकज्ञानप्रतिबन्धकश्च—'यच्छब्दयोगः प्राथम्यं स्यादुद्देश्यस्य लक्षणम्' इति वृद्धोक्तोद्देश्यताप्रयोजकज्ञानादि । एवञ्च 'वृद्धिर्यस्याचाम्' इत्यादौ यच्छब्दयोगस्य, प्राथम्यस्य च सत्त्वान्न दोषः ।

न च 'गुणो यङ्लुकोः' इत्यत्र प्राथम्यज्ञानस्य सत्त्वादिक इत्यस्योपस्थितिर्न स्यादिति, वाच्यम्, स्वघटितसूत्रघटकप्रथमान्तपदान्तरापेक्षप्राथम्यस्यैवोक्तनियमे निवेशात् । 'गुणो यङ्लुकोः' इत्यत्र तु प्रथमान्तपदान्तराभावः । यस्य प्राथम्यं त्रिकीर्षितं तत् स्वपदग्राह्यमिति दिक् ।

७।३।८२) 'मृजेर्वृद्धिः" (पा० सू० ७।२।११४) इत्यादौ तु सामानाधिकरण्यासंभवान्मिदिमृज्योरवयवस्येक इति सम्बध्यते। यत्तु—'इक एव स्थाने स्तः' इति प्राचा व्याख्यातम्, यच्च—तट्टीकाकृतोक्तमनियमप्रसङ्गे नियमार्थमिदमित्यादि, तत्सर्वं भाष्यविरोधादुपेक्ष्यम्,

ऽन्वयवत्यन्तरङ्गा, स्थानषष्ठीत्वनिर्णये उपस्थिताऽलोऽन्त्यपरिभाषाया अनन्त्यस्य गुणव्यावृत्तये वाक्यैकवाक्यतयाऽन्वय इति बहिरङ्गा सा, तदाह—इगन्ताङ्गस्येत्यादि। मृज्योरवयवस्येति। एवञ्च स्थानषष्ठीत्वाभावनिर्णयेन 'अलोऽन्त्यस्य' (पा०सू० १।१।५२) इत्यस्य प्रवृत्तिरेव नेति भावः। नियमार्थमिदमिति। तत्राङ्गविधायकैर्विहितयोर्गुणवृद्ध्योः 'अलोऽन्त्यस्य' इतिवदिदमपि स्थानिनियमार्थमिति तदाशयः। तत्सर्वं भाष्येति। द्वयोर्नियमयोः 'सार्वधातुक' इत्यादावविरोधेनेग्रूपस्यान्त्यस्येत्यर्थो वाच्यः, अन्त्यस्येक इति वा। उभयथाऽपि द्वयोर्विशेष्य-विशेषणभावसत्त्वात्तच्छेषपक्षे पर्यवसानम्। सः 'अलोऽन्त्यस्य' इति नियमः शेषो विशेषणमस्येति तदर्थः, तस्य = 'अलोऽन्त्यस्य' इत्यस्य (शेषः) विशेषणमिति वा। एवञ्च 'मिदेर्गुणः'

"अलोऽन्त्यस्य" "आदेः परस्य" "अनेकाल्" इत्यस्य च यथाऽन्यत्र व्यवस्थापकत्वम् तदाह—स्थानषष्ठीत्वेति। "पादस्य लोपः" इत्यादौ यथा, प्रकृते सार्वधातुकेत्यादिसूत्रे स्थानषष्ठीत्वस्य "क्ङिति च" इत्यस्य निर्दिष्टपरिभाषोपस्थितावव्यवहितस्य गुणनिषेधकत्वेन तत्प्रतिबध्यसूत्रस्थपदघटितवाक्यघटकषष्ठ्या निर्णये इत्यर्थः। एवञ्चालोऽन्त्यस्येत्यस्य बहिरङ्गत्वं स्पष्टमेव। अनन्त्यस्येति। 'कृष्णर्ति' इत्यादावृकारादेरित्यर्थः। वाक्यैकवाक्यतेति। तस्याः परिभाषायाः यत्र स्थानषष्ठी तत्रालोऽन्त्यस्येत्युपतिष्ठत इत्यर्थेन वाक्यैकवाक्यतेत्यर्थः। तदाहेति। तदेतन्मनसि निधायाऽऽहेत्यर्थः। एवञ्च = 'मिदेः' इत्यादिषष्ठ्या अवयवषष्ठीत्वनिर्णये च। स्थानषष्ठीत्वेति। इक इत्यस्य तथात्वेऽपि परिभाषाया अनियमे नियमकारकत्वस्वभावादिक इत्यस्य पदस्येकवर्णोपस्थापकतयाऽल्समुदायबोधकत्वाभावेनालोऽन्त्यस्येत्यस्य तत्रानुपस्थितिरिति भावः।

नन्विको गुणेत्यस्य सूत्रस्य परिभाषात्वकथनेन विधिसूत्रत्वमेव नास्ति, नियमसूत्रत्वन्तु कुत इत्याकाङ्क्षानुत्थानायाह—तत्तदिति। इदमपि = इको गुणेति सूत्रमपि। नियमार्थमिति। अन्यथा गुणादिविधायकवाक्यस्य निर्णयाजनकतया वैयर्थ्यापत्तिः स्यादिति तद्भावः। अलोऽन्त्यस्येतिवदिति। यथाऽन्त्यस्यानन्त्यस्य च प्राप्तावन्त्यस्येति तेन नियमः क्रियते, तथाऽनेनापीकोऽनिकश्च गुणवृद्धिप्रसङ्गे इक एवेति नियमकल्पनया परिभाषात्वमस्याः सिद्धमिति भावः। भाष्यविरोधमुपपादयति—द्वयोरित्यादिना। द्वयोः = इको गुणालोऽन्त्यस्येत्यनयोः। इत्यर्थ इति। फलि-

तच्छेषपक्षं दूषयित्वा पदोपस्थितिपक्षस्यैव भाष्ये समर्थितत्वादित्याहुः। तच्छेषपक्षेऽपि दूषणोद्धारस्तु शब्दकौस्तुभे स्पष्टीकृतोऽस्माभिः ।।

इत्यादौ परस्परविरोधादनयोस्त्यागे सर्वादेशगुणापत्त्या तद्विरोध इति भावस्तदाह—तच्छेषपक्षमिति । दूषणोद्धारस्त्विति । 'मिदेः' इत्यत्र मिद् इर्मिदिस्तस्येति व्याख्यानान्न दोषः । 'पुगन्त' ( पा०सू० ७।३।८६ ) इत्यत्र पुक्यन्तो लघ्वी उपधेति व्याख्येयमित्यादि ( १ ) भाष्योक्तदूषणोद्धारस्त्वित्यर्थः । न च 'यापयति 'क्ष्मापयति' इत्यादौ दोषः, गुणे कृते वृद्ध्या रूपसिद्धेः । अत एव 'समथाश्च यापनायाम्' ( पा०सू० ७।४।६० ) इति

तार्थः । विशेषणमिति । विशेषणार्थप्रतिपादकमित्यर्थः । सर्वादेश इति । सूत्रसामर्थ्यात्सर्वादेश इत्यर्थः । तद्विरोधः = भाष्यविरोधः । प्राचामिति शेषः ।

दूषणोद्धारप्रकारन्दर्शयति-मिदेरित्यादिना । इत्यादीत्यादिना मृजेर्वृद्धिरित्यस्य परिग्रहः । तत्र हि अच इत्यपकृष्यत इत्यादि द्रष्टव्यः । भाष्योक्तेति । नन्वेवम्भाष्यानुक्तार्थस्य स्वयङ्कथनेन स्वस्य प्रौढत्वप्रदर्शनमनुचितमिति, चेन्न, सम्भवमात्रेण तदुक्तेः । दोष इति । पुक्यनन्तरस्याकारस्य गुणापत्तिरूपो दोष इत्यर्थः । ननु सन्निपातपरिभाषया पुकि कृते गुणो न भविष्यति । वस्तु-गुणे कृते "अत उपधायाः" इति वृद्धिरिति, तन्न, अङ्गवृत्तपरिभाषया तदप्राप्तेरिति, चेन्न, पुग्निमित्तके कार्ये कर्तव्ये सन्निपातपरिभाषाया अप्रवृत्तिरिति सिद्धान्तात् , अत एव 'अदिद्रपत्' इत्यत्र ह्रस्वस्य सिद्धिः, क्ष्मापयतीत्यत्र सन्निपातपरिभाषायास्तत्र प्रवृत्तिस्वीकारेऽपि यस्य गुणापत्तेर्दुर्वारत्वाच्च । यदि "चेले क्नोपेः" इति निर्देशेन पुकि कृते क्वचिद्गुणो भवतीत्युच्यते, तदा प्रतिपत्तिगौरवमिति प्रदर्शयन्नाह-गुणे कृत इति । न चाङ्गवृत्तपरिभाषया वृद्धिर्न भविष्यतीति, वाच्यम् , तस्या द्वयोरिति निर्देशेनानित्यत्वात् , असत्वाच्च । अत एव "पिबतेर्गुणप्रतिषेध उक्तः स न वक्तव्यः" इत्येव तस्याः प्रयोजनम्भाष्ये उक्तम् । अत एव=गुणोत्तरं वृद्धिप्रवृत्तिस्वीकारादेव । एकारस्य गुणापत्तिरपि यापनेति

१—भाष्ये-तच्छेषपक्षमभ्युपेत्य मिदिमृजिपुगन्तलघूपधर्च्छिदृशिक्षिप्रक्षुद्रेष्वापतिताः दोषा वक्ष्यमाणरीत्या परिहृताः । तथाहि-'मिदेर्गुणः' इत्यत्र लुप्तषष्ठ्यन्तं 'मिद्' इति 'एः' च, इति पृथक्पदम्, मिद इर्मिदिस्तस्य मिदेरिति षष्ठीतत्पुरुषं वा स्वीकृत्य मिदेरिकारस्य गुणविधानान्न दोषः । 'मृजेर्वृद्धिः' 'अचो ञ्णिति' इत्यस्य स्थाने 'मृजेर्वृद्धिरचः' 'ञ्णिति' इत्येवं न्यासेन मृजेरच एव वृद्धिरिति दोषाभावः, 'पुगन्तलघूपधस्य' इत्यत्रापि 'भिनत्ति' इत्यादौ दोषवारणाय 'पुकि अन्तः पुगन्तः' 'लघ्वी चासावुपधा च लघूपधा' 'पुगन्तश्च लघूपधा च' पुगन्तलघूपधम्' इति व्याख्यानेन अङ्गावयवस्य पुगन्तस्य, लघूपधायाश्च गुणः, इत्यर्थकरणान्न क्षतिः । 'ऋदृशोऽङि गुणः' अत्रापि 'ऋ अङि गुणः' ततो दृशेरिति योगं विभज्य पूर्वसूत्रं दृशेरित्यत्रानुवर्त्य दृशेर्ऋकारस्याङि गुणः, इत्यर्थाद्दोषाभावः । क्षिप्रक्षुद्रयोरपि 'स्थूल-दूर युव ह्रस्व-क्षिप्र-क्षुद्राणां यणादिपरम्' इत्येको योगः, ततः-'पूर्वस्य च गुणः'

अचां मध्य इति । यत्तु—प्राचोक्तम् अन्त्यादचः परः इति, तन्न, "शे मुचादीनाम्" ( पा० सू० ७।१।५९ ) इत्यादावन्त्यस्याचोऽसम्भवात् । तस्यैवान्तावयव इति । तेन त्रपूणीत्यादौ अङ्गस्य नान्तत्वेन दीर्घः सिद्धः । परादित्वे स न सिध्येत् । अभक्तत्वे तु 'वर्हलिहः'

निर्देशः सङ्गच्छते, तदाह—कौस्तुभे स्पष्टीकृत इति । नन्वेवं तर्हि किमर्थं प्राचां पक्ष उपेक्षित इति चेच्छृणु—लघूपधांशे इक्परिभाषाऽनुपस्थितावनिग्लक्षणत्वाद्भिन्नमित्यादौ गुणनिषेधानापत्तिभिया स उपेक्षित इति । क्नोः कित्त्वस्यानिग्लक्षणत्वेऽपि गुणनिषेधप्रवृत्तिज्ञापकत्वाश्रयणे तु तस्य पदोपस्थितिपक्षज्ञापकत्वमेवोचितमिति दिक् ।

इत्यादावितिं । आदिना झलन्तलक्षणो नुम्, इदितो नुम्इत्यादि च । अचोऽसम्भवादिति । नुमो मित्त्वं तु ज्ञानानीत्यादौ चरितार्थमिति मुचादावन्त्यस्यैव स्यादिति भावः । दीर्घः सिद्ध इति । तच्छब्देन यस्य विहितः

निर्देशेन नेति यदि कल्प्यते तदाधिकगौरवम्, पुक्यन्त इति व्याख्यानमेव युक्तमिति तात्पर्यम् । एवम्=पुक्यन्त इत्यादिरीत्या दोषाभावे सति । क्नोः="त्रसिगृधि" इति सूत्रविहितक्नोः । उचितमिति । ज्ञापकमूलकवाक्यान्तरकल्पनापेक्षयाऽस्मिन्पक्षे प्रतिपत्तिलाघवादौचित्यम् । किञ्च—"मृजेर्वृद्धिः" इत्यत्राच इत्यस्यापकर्षेऽमाट् इत्यत्राटो गुणापत्तिवारणायानन्त्यविकारेऽन्त्यसदेशस्येति परिभाषायाः प्रवृत्तिः स्वीकार्या । "ऋच्छत्यृताम्" इति सूत्रे ऋकारान्तरस्य प्रश्लेषः कार्यः, "ऋदृशोऽङि" इत्यत्र योगविभागश्च कर्तव्यः, इत्यधिकन्तच्छेषपक्षे गौरवम् । किञ्च—परिभाषयोर्गुणगुणिभावो 'गुणानाञ्च परार्थत्वात्' इति न्यायविरोधान्न युक्तः । किञ्च—व्यञ्जनस्य गुणवारणे जनेर्डविधानस्य ज्ञापकत्वमाश्रयणीयं तदपेक्षयाऽस्य सूत्रस्य पदोपस्थापकत्वमेव युक्तमित्याशयेनाह—दिगिति । अत एवेग्लक्षणा वृद्धिरेषितव्येति भाष्यीयोपसंहारः साधु सङ्गच्छते ।

अन्त्यस्यैवेति । न च "अनिदिताम्" इति सूत्रेऽनिदिद्ग्रहणस्यैवं सति वैयर्थ्यापत्तिरतोऽनेन ज्ञापकेनान्त्यस्य न भविष्यतीति, वाच्यम्, अनिदिद्ग्रहण-

इत्यपरः, तत्र यणादीति यण आदिर्यणादिः तस्माद्यणादि लुप्तपञ्चमीकं पृथक्पदम् । पूर्वयोगस्य स्थूलादीनां यणादेः परं लुप्यते इत्यर्थेन यणादेः परभागस्य लोपे 'ओर्गुणः' इत्युकारस्य गुणे 'स्थविष्ठः' इत्यादीनां सिद्धया परत्र क्षिप्रक्षुद्रयोरेवानुवृत्तिः, तत्र स्वरितत्वात्, अन्यानुवृत्तौ फलाभावाच्च । तथाच यण आदिर्यणादिः तस्मात्परं यणादिपरं लुप्यते, यणादेरेव पूर्वस्य च गुणः, इति व्याख्यानात्, यण आदी—क्षिप्रक्षुद्रयोः पकारदकारौ ततः परस्य रश्ब्दस्य लोपे, गुणे च 'क्षेपिष्ठः' इत्यादीनां सिद्धिरिति न दोष इत्यलम् ।

इत्यत्र "वहाभ्रे लिहः" (पा० सू० ३।२।३२) इति खशि "अरुर्द्विषद्" (पा० सू० ६।३।६७) इति मुमोऽनुस्वारो न स्यात्, अपदान्तत्वात्। यत्तु—अभक्तत्वे 'त्रपूणि'इति दीर्घो न स्यादिति, तत् 'तदादिग्रहणं स्यादिन्नुमर्थम्' इत्यङ्गसंज्ञासूत्रस्थवार्तिकेनैव दूषितप्रायम्।

स समुदायः परामृश्यते इति भावः। यद्यपि 'तस्यान्त्याचः' इति व्याख्यानेऽपि भवितेत्यादौ तासवयवेटो लघूपधाङ्गावयवत्वेन प्राप्तस्य गुणस्य 'दीधीवेवीटाम्' (पा० सू० १।१।६) इति निषेधारम्भेण, लोकव्यवहारेण चावयवावयवस्य समुदायावयवत्वाङ्गीकारादत्र न दोषः, तथाऽपि तथा न व्याख्यातम्, पञ्चारत्नीनीत्यादौ पदस्य विभज्यान्वाख्याने उत्तरपदस्यापि नान्तत्वापत्तौ 'इगन्त' (पा० सू० ६।२।२९ इति स्वरानापत्तेरिति स्पष्टं भाष्यादौ। त्रपूणीत्युपलक्षणम्, 'ता ता पिण्डानाम्। इति नलोपसिद्धेः। तानि तानित्यर्थे 'शेश्छन्दसि' (पा० सू० ६।१।७०) इति शेर्लोपे तदुदाहरणम्॥

स्थानेति। स्थानशब्दार्थेनेत्यर्थः। तन्निरूपितसम्बन्धः षष्ठ्यर्थो न तु तद्रूपः सम्बन्धस्तदर्थ इति अनेन ध्वनयति। एतच्चेति। व्यधिकरणबहुव्रीहिरप्यत एवेति बोध्यम्॥

स्यार्थान्तरे ज्ञापकत्वकल्पनापेक्षयोक्तार्थे ज्ञापकताया उचितत्वात्। ननु तच्छब्देनोपस्थितत्वादन्तावयवपरामर्शः स्यात्, एवञ्चाङ्गस्य नान्तत्वमनुपपादनमेवेत्यत आह—यस्येति। यद्यपीति। अस्य न दोष इत्यत्रान्वयः। अत्र='त्रपूणि' इत्यादौ। इगन्तेतीति। द्विगुसमासे इगन्तोत्तरपदे परे सङ्ख्यावाचि पूर्वपदप्रकृत्येत्यर्थकेनेगन्तेति सूत्रेण स्वरानापत्तिरित्यर्थः। नलोपसिद्धेरिति। प्रातिपदिकान्तस्यावयवस्य हि लोपविधानात्॥

ननु 'स्थानं योगो यस्याः' इति समानाधिकरणपदकबहुव्रीहिणैव सामञ्जस्ये व्यधिकरणपदकबहुव्रीहिप्रदर्शनमनुचितमत आह—तन्निरूपित इति। स्थाननिरूपित इत्यर्थः। सम्बन्धः=निवर्त्यनिवर्तकभावः। अनेन=व्यधिकरणपदकबहुव्रीहिप्रदर्शनेन। अत एव=निपातनादेव। न चेयं स्वकल्पनेति भ्रमितव्यम्, भाष्यकृतैवोक्तत्वात्।

१—परशब्दस्योत्तरत्वविशिष्टावयवत्वावच्छिन्ने शक्त्या उत्तरत्वस्यावयवत्वस्य च निरूपकांशे नित्यसाकाङ्क्षतया पदार्थैकदेशे उत्तरत्वे, अन्त्याचः, स्वनिष्ठावयवितानिरूपकत्वसम्बन्धेन समुदायस्य च निरूपितत्वसम्बन्धेन अवयवत्वेऽन्वयः। तथा च अन्त्याजवधिकपरत्वविशिष्टः स्वोद्देश्यरूपसमुदायनिरूपितावयवत्वविशिष्टो मिद् भवतीत्यर्थः सम्पद्यत इति भावः।

स्थानेयोगेति । स्थानेन योगोऽस्या इति विग्रहः । निपातनादेत्वम् ।

१---स्थानशब्दार्थश्चात्र-: अवच्छेदकतानिरूपिताऽवच्छेदकतानिरूपितोच्चारणत्वावच्छिन्ना या साधुत्वप्रकारकभ्रमात्मकज्ञानीयविशेष्यतात्वावच्छिन्नप्रकारतानिरूपितविशेष्यता, तदवच्छेदकोच्चारणत्वधर्मावच्छिन्ना या साधुत्वप्रकारकप्रमात्मकज्ञानीयविशेष्यतात्वावच्छिन्नप्रकारतानिरूपितविशेष्यता, तदवच्छेदकतानिरूपिताऽवच्छेदकतारूपः । 'इको यणचि' इत्यादिशास्त्रेण हि अजव्यवहितपूर्वत्वविशिष्टेङ्निष्ठकर्मतानिरूपकमुच्चारणं साधु, इत्याकारकं ज्ञानं भ्रमः, अजव्यवहितपूर्वत्वविशिष्टयण्निष्ठकर्मतानिरूपकमुच्चारणं साधु, इत्याकारकं ज्ञानं प्रमा, इति ज्ञानद्वयं बोध्यते । तथा च पूर्वज्ञाने उच्चारणस्य मुख्यविशेष्यतया तत्र साधुत्वस्य प्रकारतया तज्ज्ञानस्य इङ्निष्ठकर्मतानिरूपकमुच्चारणं साधुत्वप्रकारकभ्रमात्मकज्ञानीयविशेष्यतावत्, इत्याकारकतया उच्चारणे प्रकारतया भ्रमात्मकज्ञानीयविशेष्यतात्वाच्छिन्नप्रकारतानिरूपिता या इङ्निष्ठावच्छेदकतानिरूपितकर्मत्वनिष्ठावच्छेदकतानिरूपितोच्चारणत्वावच्छिन्ना विशेष्यता तादृशविशेष्यताऽवच्छेदकोच्चारणत्वावच्छिन्ना या यण्निष्ठकर्मतानिरूपकमुच्चारणम् साधुत्वप्रकारकप्रमात्मकज्ञानीयविशेष्यतावत् इत्याकारकज्ञानीयसाधुत्वप्रकारकज्ञानीयविशेष्यतात्वावच्छिन्नप्रकारतानिरूपितविशेष्यता, तन्निरूपिता या कर्मत्वनिष्ठावच्छेदकता तन्निरूपिता या यण्निष्ठावच्छेदकता स एव स्थानपदार्थस्तदाश्रयो यणादेशः, उक्तस्थानपदार्थस्वीकारे इङ्निष्ठस्थानितानिरूपितोऽदेशतावान् गुणः, इत्यादिव्यवहारवारणाय, विकल्पस्थले स्थानिनः, आदेशस्य च साधुत्वप्रकारकप्रमात्मकज्ञानीयविशेष्यतावदुच्चारणकर्मतया स्थानपदार्थानन्वयवारणाय च, अवच्छेदकतानिरूपिताऽवच्छेदकतानिरूपितविशेष्यताविशिष्टविशेष्यतानिरूपिताऽवच्छेदकतानिरूपिताऽवच्छेदकता स्थानपदार्थः ।

वै०---स्वावच्छेदकोच्चारणत्वावच्छिन्नत्व–स्वप्रयोजकशास्त्रप्रयोज्यत्व–स्वनिरूपितप्रकारताविशिष्टप्रकारतानिरूपितत्वैतत्त्रितयसम्बन्धेन । सम्बन्धघटकप्रकारतावैशिष्ट्यं च प्रकारतायाम्–स्वावच्छेदकं यद् साधुत्वप्रकारकभ्रमात्मकज्ञानीयविशेष्यतात्वं तद्घटकसाधुत्वप्रकारकप्रमात्मकज्ञानीयविशेष्यतात्वावच्छिन्नत्व-स्वावच्छेदकसाधुत्वप्रकारकप्रमात्मकज्ञानीयविशेष्यतात्वावच्छिन्नत्वैतदन्यतरसम्बन्धेन । समन्वयश्च-: 'इको यणचि' इत्यादौ इङ्निष्ठकर्मतानिरूपकमुच्चारणम्-: साधुत्वप्रकारकभ्रमात्मकज्ञानीयविशेष्यतावत् यण्निष्ठकर्मतानिरूपकमुच्चारणम्–साधुत्वप्रकारकप्रमात्मकज्ञानीयविशेष्यतावत्, इत्याकारकज्ञानद्वयमादाय बोध्यः । तथाहि–प्रथमज्ञानीयविशेष्यतानिष्ठप्रकारतानिरूपितोच्चारणत्वावच्छिन्नविशेष्यतावैशिष्ट्यं द्वितीयज्ञानीयविशेष्यतानिष्ठप्रकारतानिरूपितोच्चारणत्वावच्छिन्नविशेष्यतायाम्, स्वावच्छेदकोच्चारणत्वावच्छिन्नत्वस्य, उभयोर्विशेष्यतयोः 'इको यणचि' इति शास्त्रप्रयोज्यत्वेन स्वप्रयोजकशास्त्रप्रयोज्यत्वस्य, प्रथमज्ञानीयोच्चारणनिष्ठविशेष्यतानिरूपितविशेष्यतानिष्ठप्रकारतायाः द्वितीयज्ञानीयोच्चारणनिष्ठविशेष्यतानिष्ठप्रकारतायां स्वावच्छेदकं यत्साधुत्वप्रकारकभ्रमात्मकज्ञानीयविशेष्यतात्वं तद्घटकं यत् साधुत्वं तत्प्रकारकप्रमात्मकज्ञानीयविशेष्यतात्वावच्छिन्नत्वस्य च सत्त्वेन वर्तते इति यणि यण्निष्ठकर्मतानिरूपकमुच्चारणम् इत्यंशमादायोच्चारणनिष्ठविशेष्यताऽवच्छेदकता कर्मतायां तदवच्छेदकतानिरूपिताऽवच्छेदकता यण्निष्ठा सैव विशिष्टावच्छेदकता स्थानपदार्थः । 'जराया 'जरस्' इत्यत्र जरानिष्ठकर्मतानिरूपकमुच्चारणं भ्रमात्मकज्ञानीयविशेष्यतावत्, 'जरस्' निष्ठकर्मतानिरूपकमुच्चारणं प्रमात्मकज्ञानीयविशेष्यतावत् इति ज्ञानद्वयमादाय पूर्ववद् वैशिष्ट्यं संघटनीयम् । इयानेव विशेषः-:यत् प्रथमज्ञानीयविशेष्यतानिष्ठप्रकारताया द्वितीयज्ञानीयविशेष्यतानिष्ठप्रकारतायां स्वावच्छेदकं यत्साधुत्वप्रकारकभ्रमात्मकज्ञानीयविशेष्यतात्वं तदवच्छिन्नत्वसम्बन्धेन वैशिष्ट्यम् । पूर्वत्र प्रकारतावैशिष्ट्यन्तु-:स्वावच्छेदकभ्रमात्मकज्ञानीयविशेष्यतात्वघटकसाधुत्वप्रकारकप्रमात्मकज्ञानीयविशेष्यतात्वाऽवच्छिन्नत्वसम्बन्धेनेति दिक् ।

*अनेकविधमिति* । स्थानार्थगुणप्रमाणकृतमित्यर्थः । *बलीय इति* । तेन 'चेता' 'स्तोता' इत्यत्र प्रमाणत आन्तर्यवानकारो नेति भावः । 'तस्मिन्' इति सप्तम्यन्तानामनुकरणम् । निःशब्दो नैरन्तर्यपरः ।

गुणप्रमाणेति । प्रमाणस्य ह्रस्वत्वादेर्गुणत्वेऽपि ब्राह्मणवसिष्ठन्यायेन पृथगुक्तिः । गुणशब्देनोक्तत्रितयातिरिक्तधर्ममात्रम् । तेन 'अनान्तर्यमेवैतयोरान्तर्यम्' इत्यादिस्थानेऽन्तरतमसूत्रस्थभाष्येण न विरोधः, अन्तरतमाभाव एव गुणविधौ ऋकाराकारयोः सादृश्यमिति तदर्थः । बाह्यानां साक्षाद्वर्णावृत्तित्वेऽप्यौपचारिकं गुणत्वं बोध्यम् ।

ह्रस्वत्वादेरिति । एतेन 'प्रमाणे द्वयसज्' इति सूत्रप्रसिद्धस्य नैयायिकमते प्रसिद्धानां चानुपयोगान्न ग्रहणमिति ध्वनितम् । स्वशास्त्रप्रसिद्धगुणपदार्थन्दर्शयति— गुणशब्देनोक्तेति । गोशब्दाज्झटिति स्त्रीव्यक्तेः प्रतीतिरतो 'गोबलीवर्द'न्यायस्परित्यज्य 'ब्राह्मणवसिष्ठ'न्याय उक्तः । तेन = तादृशधर्ममात्रस्य गुणशब्दाद्बोधनेन । इत्यादीति । आदिना सोष्मणः सोष्माण इत्यस्य, "ऐचश्चोत्तरभूयस्त्वात्" इत्यस्य, पादादीनां पदादयो वर्णसाम्यादित्यस्य च परिग्रहः । स्थानेऽन्तरतमेति । तत्सूत्रोपलक्षणम् । आनन्तर्यपदं सादृश्यपरन्तस्य प्रयोजकाः समानस्थानिकत्वादयो वर्णधर्मास्ते च यत्र न सन्ति तत्रापि भाष्यप्रामाण्यादनान्तर्यस्यानुरूपप्रतिसम्बन्धिराहित्यस्यापि सादृश्यप्रयोजकत्वङ्कल्पनीयम् । ननु 'झयो होऽन्यतरस्याम्' इत्येतदुदाहरणविवेचनसमये बाह्यप्रयत्नस्य गुणपदव्यवहार्यस्य सादृश्यप्रयोजकत्वं सर्वैः स्वीकृतम्, तच्च नोपपद्यते, बाह्यप्रयत्नस्य वर्णावृत्तित्वात्, ते हि काकलकाधस्तात्कण्ठविवरनिष्ठविकासादिकार्यजनकाः, अत एव तेषां बाह्यत्वमत आह—बाह्यानामिति । अत्र साक्षादिति कथनेन परम्परासम्बन्धेन वर्णसम्बद्धत्वं ध्वनितम् । साक्षात् = समवायसम्बन्धेन पररीत्या, स्वमते तु तादात्म्येन, परमते आत्मधर्मत्वम्, स्वमते मनोधर्मत्वमिति त्वन्यत् । परम्परासम्बन्धश्च—स्वप्रयोज्यविकासाश्रयसमीपताल्वादिनिष्ठवायुसंयोगाभिव्यङ्ग्यत्वात्मकः । गुणत्वम् = वर्णगुणत्वम् ।

नन्वनुकरणमनुकार्यगतवर्णसमानानुपूर्वीकमेव प्रायोऽत्र शास्त्रे दृश्यते—"तस्थस्थमिपाम्" इत्यादौ यथा, तथाऽत्रापि चेदनुमतम्, तदा तस्मिन्निति सूत्रस्य "तस्मिन्नणि च युष्माकास्माकौ" इत्यत्रैव प्रवृत्तिः स्यान्न तु "इको यणचि" इत्यादाविति तेष्वभिप्रेतार्थालाभः स्यादस्य सूत्रस्य वैयर्थ्यञ्च "तस्मिन्नणि" इति सूत्र एव निर्दिष्ट-

१—ब्राह्मणेन सहितो वसिष्ठो ब्राह्मणवसिष्ठस्तस्य न्यायेनेत्यर्थः । द्वन्द्वस्तु न, 'त्यदादीनि' इति ( पा० सू० १।२।७२ ) सूत्रभाष्ये सामान्यविशेषवाचिनो द्वन्द्वस्य निषिद्धत्वात् ।

१—औपश्लेषिकाधिकरणसप्तम्यन्तानामित्यर्थः । अत्र मानञ्च—'उपपदविभक्तेः कारकविभक्तिर्बली-

अनुकरणमिति । अचीत्यादिसप्तम्यन्तार्थकस्य स्वतन्त्रतच्छब्दस्य निर्देशो

पदोपादानेन तत्रेष्टार्थलाभसम्भवादत आह—अचीत्यादीति । सप्तम्यन्तार्थकस्य सप्तम्यन्तानि पदान्यर्थो यस्येत्यर्थः स्वतन्त्रस्येत्यनेनानुकरणत्वाभाव उक्तः। 'तस्मिन्नणि

यसी' इति न्यायः, 'संहितायाम्' (पा० सू० ६-१-७२) इति सूत्रस्थम्—'अधिकरणं नाम त्रिप्रकारम्—व्यापकम्, औपश्लेषिकम्, वैषयिकमिति । शब्दस्य च शब्देन कोऽन्योऽभिसम्बन्धो भवितुमर्हत्यन्यदत उपश्लेषात् । 'इको यणचि' 'अचि उपश्लिष्टस्येति' इति भाष्यञ्च । सत्सप्तम्यां तु नाऽस्य प्रवृत्तिः । अत एव 'कृतिः कृष्णस्य' 'कर्ता कृष्णो जगतः' इत्यत्रापि 'कर्तृकर्मणोः कृति' इत्यनेन षष्ठी सिद्ध्यति ।

अत्र 'कृति' इति सत्सप्तमी इत्यत्र 'तस्मिन्निति' सूत्रमौपश्लेषिकाधिकरणसप्तम्यामेव प्रवर्तते—इत्यत्र च 'उभयप्राप्तौ कर्मणि' इति सूत्रमपि मानं बोध्यम् । अन्यथा तस्मिन्नित्यस्य सत्सप्तम्यामपि प्रवृत्तौ कृदन्ततदाद्यव्यवहितपूर्वत्ववैशिष्ट्यस्यैकत्र कर्तरि, कर्मणि वाऽसम्भवेनोभयप्राप्तेरभावात् सूत्रवैयर्थ्यं स्पष्टमेव । अत्र तत्पदं सप्तम्यन्तपदपदार्थकम्, ततः सप्तमी तु 'निर्दिष्टे' इत्यनेन सामानाधिकरण्याय, 'अभेदेनान्वयस्थले विशेष्यविशेषणयोः समानविभक्तिकत्वस्य नियमात्, इति ब्रुवता शब्दरत्नकृता. 'सप्तम्यन्तार्थेऽव्यवहितोच्चरिते उपश्लिष्टस्य पूर्वस्य कार्यमिति वाच्योऽर्थः' इत्यभिदधता शेखरकृता च—'अव्यवहितोच्चारितसप्तम्यन्तार्थनिरूपितोपश्लिष्टसम्बन्धिकार्यं पूर्वस्य भवति' इत्येवं रूपेण पूर्वसम्बन्धित्वमात्रस्य परिभाषाविधेयत्वं सूचितम्, तन्न, पूर्वस्य भवति इत्येतन्मात्रस्य विधेयत्वे उद्देश्यतावच्छेदकरूपेणोद्देश्यसिद्धेरपेक्षिततया तादृशोद्देश्यस्य च परिभाषाप्रवृत्तिं विनाऽसिद्धतया 'तस्मिन्' इति सूत्रवैयर्थ्यापत्तेः । 'सप्तम्यन्तार्थे उच्चरिते उपश्लिष्टस्य यत्कार्यं तदव्यवहितपूर्वस्य' इत्येवमव्यवहितपूर्वसम्बन्धित्वस्य विधेयत्वमपि न सम्यक्, एवं सति निर्दिष्टे इत्यस्य विधेयकोटौ निविष्टतया तस्मिन्नित्यस्यापि तत्रैवान्वयस्योक्ततया उद्देश्यदलाप्रसिद्धेः, 'तस्मिन्नित्यत्र सप्तमी 'निर्दिष्टे' इत्यनेन सामानाधिकरण्याय' इति ग्रन्थासङ्गतेश्च । यदपि अव्यवहितोच्चारितसप्तम्यन्तार्थनिरूपितोपश्लिष्टस्य यत्कार्यमिति उद्देश्यसिध्यन्यथाऽनुपपत्त्या 'सप्तम्यन्तार्थे उपश्लिष्टस्य यत्कार्यं तदव्यवहितस्य भवति' इति वाक्यान्तरकल्पनयोद्देश्यसिद्धिरित्युच्यते, तदपि, न, निष्फलगौरवस्यानुचितत्वात् । तस्मात् 'यत्रौपश्लेषिकाधिकरणबोधकपदं तत्र 'निर्दिष्टे' 'पूर्वस्य' इति पदद्वयमुपतिष्ठते' इति प्राचीनोक्तमेव ज्यायः । तस्मिन्नित्यत्र सप्तमी तु तच्छब्दस्य सप्तम्यन्तार्थकत्वद्योतनाय, यत्र सप्तम्यर्थबोधस्तत्रैव प्रवृत्तिरिति द्योतनाय च । अत एव 'नेड् वशि' इत्यादौ नास्याः प्रवृत्तिरिति दिक् ।

नन्वौपश्लेषिकसप्तम्याः 'पूर्वस्य' इत्यस्यैवाध्याहारप्रयोजकत्वेन 'परसप्तमी इयम्' इति व्यवहारानुपपत्तिः 'यजादौ सुपि परे' इत्यादेः शाब्दत्वानुपपत्तिश्चेति चेन्न, अस्याः परिभाषायाः औपश्लेषिकसप्तमीनिर्देशेषु पूर्वस्यैवाव्यवहितस्यैवेति नियमः प्रयोजनम् । तस्य च परशब्दाध्याहारेऽपि निष्पत्तेः । अत एव 'तस्मिन्' (पा० सू० १-१-६६ ) सूत्रे भाष्ये 'तास्यादिभ्यः परस्य लसार्वधातुकस्य लसार्वधातुके परतस्तास्यादीनामिति सन्देहः' इत्युक्तिः सङ्गच्छते । परशब्दाध्याहार एव ज्यायान् ।

अत एव "श्नान्नलोपः" इति भाष्ये नैषा परसप्तमी, का तर्हि ? सत्सप्तमी, क्ङिति सति इति परसप्तमीत्वेन व्यवहारोऽप्युपपन्नः । न च 'तस्मिन्निति निर्दिष्टे पूर्वस्य' इति सूत्रविरोधः, 'औपश्लेषिकसप्तम्या निर्दिष्टं कार्यम् अव्यवहितपूर्वस्य यथा स्यात्तथा कार्यम्, इत्यर्थेन परशब्दाध्याहारेऽपि तदुक्तार्थलाभेन विरोधाभावात् । किञ्च—'पूर्वशब्दाध्याहारे 'स्य-तासी' इत्यत्र 'लृलुटोः' परयोरित्यर्थस्य फलविषया भासमानत्वेऽपि शब्दालभ्यत्वेन शाब्दान्वये प्रवर्तमानस्य 'प्रत्ययग्रहणे चापञ्चम्याः' इत्यस्य प्रवृत्त्ययोगात्तत्र तदन्तविधेर्दुर्वरत्वमित्यन्यत्र विस्तरः ।

दिशिरुच्चारणक्रियः। अचि यणित्युक्ते व्यवहिते, अव्यवहिते

न स्वरूपपरम्, व्याख्यानात्, बहुलक्ष्यसंस्कारानुरोधाच्च। सप्तमी तु सप्तम्यन्तानामेव तच्छब्दार्थत्वमिति बोधनाय, तद्बोध्यार्थस्य निर्दिष्टे इत्यनेन सामानाधिकरण्याय चेति भावः। शब्दार्थकत्वेन त्वनुकरणत्वव्यवहार इति बोध्यम्। दिशिरुच्चारणेति। अत एव 'जनपदे लुप्' (पा० सू० ४।२।८१) इत्यादौ न दोषः। नह्यर्थे उच्चारितो नापि शब्दस्य निरन्तर इति भावः। अचि यणित्युक्ते इति। अचि उपश्लिष्टस्य यणित्युक्ते इत्यर्थः।

च' इति सूत्रस्यैवोदाहरणत्वे फलन्तु 'यौष्माकीणा अस्मभ्यं देहि' इत्यादावादेशाभाव इति। व्याख्यानादिति। तस्मिन्नणीति सूत्रबोध्ययोः 'खञणोः' प्रत्ययत्वात्ताभ्यां यस्माद्विहितौ तदादेरित्यस्योपस्थित्या तत्र सूत्रे निर्दिष्टे पूर्वयोरित्येवेष्टसिद्धेऽस्य सामान्यसूत्रस्य निष्प्रयोजनत्वापत्तिरित्येतन्मूलकादित्यर्थः। नन्वेवमनुकरणमिति व्यर्थमत आह—शब्दार्थकत्वेनेति। तस्मिन्निति प्रकृतसूत्रस्थस्तच्छब्दो बुद्धिस्थपरामर्शकः। सर्वनाम्नां प्रधानार्थपरामर्शकत्वमेवेति न नियमः। तथा च यत्र सप्तम्यर्थबोधस्तत्रैवास्योपस्थितिः। यत्र सूत्रे सप्तम्यन्तपदोपादानन्तत्रास्य सूत्रस्य प्रवृत्तिरिति तु न, "नेड् वशि कृति" "ङः सि धुट्" "तस्माल्लुडचि" इत्यादावस्य प्रवृत्त्यदर्शनात्। एतेन यत्रास्य प्रवृत्तिरभिप्रेता तेषां सङ्ग्रहाय सप्तमी निर्दिष्टा इत्येवास्त्विति निरस्तम्। एवञ्च सप्तम्यन्तार्थेऽव्यवहितोच्चारिते पूर्वस्य कार्यमिति वाच्योऽर्थः। तथाच सप्तम्यन्तपञ्चम्यन्तपदयोरर्थोपस्थितिर्यत्र तत्र तद्रूपलिङ्गसद्भावात्तस्मिन्नित्यादिपरिभाषाद्वयस्य यथायथमुपस्थितिरिति सिद्धम्। निर्दिष्टपदस्य प्रयोजनमाह—अत एवेति। सप्तम्यर्थतात्पर्यकपदघटितेऽस्योपस्थितेरेवेत्यर्थः। आदिना "कारनाम्नि" "यस्कादिभ्यो गोत्रे" इत्यादेः सङ्ग्रहः। न दोष इति। तत्र चेदुपस्थितिः स्यात्तदा जनपदरूपेऽर्थे देशे इति लक्षणया तादृशार्थबोधकशब्द इति वा तेषां सूत्राणामर्थेऽनिष्टापत्तिरूपो दोषो नेत्यर्थः। एतदेव दर्शयति—न हीति। अर्थः=देशरूपः। अचि उपश्लिष्टेति। एतेन यत्रौपश्लेषिकाधारे सप्तमी तत्रास्योपस्थितिरिति सूचितम्। उपश्लिष्टस्य=पूर्वोच्चारितत्व—परोच्चारितत्वान्यतररूपस्य। यत्रौपश्लेषिकाधारत्वं तत्रैव सम्भवात्, अवध्यवधिमतोः साजात्यात्। पूर्वत्वादिव्यवहारस्य व्यवहितेऽपि दर्शनादस्मिन्सूत्रे निर्दिष्टपदम्। यथा 'काश्याः प्रयागः पूर्वः' 'पाटलिपुत्रः परः' इत्यादिलोके। अचः परस्मिन्पूर्वस्येति शास्त्रे अस्य सूत्रस्योपस्थितौ यादृशार्थोऽपस्थितिर्भवति तदुदाहरणम्मूले प्रदर्शितमचि यणीत्यादिना। केचित्तु "इको यणचि" इत्यादिसूत्रे क्रियावाचकपदाश्रवणात् "अस्तिर्भवन्तीपरः" इति न्यायेन सतीत्यस्याध्याहारेणाचि सति यण् भवतीत्यादिरीत्या तत्र तत्रार्थं इति, तन्न, युक्तम्, भवनक्रियायाम्प्रधानार्थप्रतिपादिकायामन्वये सम्भवति

च सति प्राप्तमव्यवहित एवेति। पूर्वस्य, परस्य च प्राप्तं पूर्वस्यैवेति च नियम्यते। अव्यवहितस्येति तु फलितार्थकथनम्।

परस्य यदिति। 'तस्मादित्युत्तरस्यादेः' इति तु न सूत्रितम्,

---

इदं 'संहितायाम्' (पा०सू० ६।१।७२) इति सूत्रे भाष्ये स्पष्टम्। फलितेति। सप्तम्यन्तार्थेऽव्यवहिते षष्ठ्यन्तार्थोऽप्यव्यवहित एवेति भावः।

न सूत्रितमिति। 'स्वं रूपम्' (पा० सू०१।१।६८) इत्यतः प्रागिति शेषः। तत्र आदेः (पा०सू०१।१।५४) इति पृथग्वाक्यम्, तत्र उत्तरस्य

---

सति गुणभूतायामन्वयस्यानौचित्यात्। औपश्लेषिकाधारे एवास्योपस्थितेः स्वीकाराच्च "कर्तृकर्मणोः कृति" इत्यत्र नास्योपस्थितिः, कृति सति तत्प्रकृत्यर्थक्रियानिरूपितकर्तृत्वकर्मत्वविशिष्टार्थवाचकात्षष्ठीति तदर्थात्। यदि तु "यस्य च भावेन" इति सूत्रविहितसप्तम्यन्तपदस्य सतीत्यस्याध्याहारेऽपि कर्तृ–कर्मणोरित्यत्रास्योपस्थितिः स्यात्, तदा कृदन्ते निरन्तरोच्चारित इत्यर्थापत्तौ 'कृष्णस्य कृतिः' इत्यत्रैव षष्ठी स्यात्, न तु 'कृतिः कृष्णस्य' इत्यत्रेत्यनिष्टापत्तिः, अतः "इको यणचि" इत्यादौ "उपपदविभक्तेः" इति न्यायेनौपश्लेषिकाधार एव सप्तमीत्याशयेनोपश्लिष्टस्येति व्याख्यातम्। उपश्लिष्ट इति पदमेतेष्वध्याहर्तव्यम्। उप = समीपे, श्लेषः = सम्बन्धस्तत्कृताधिकरणमौपश्लेषिकाधिकरणम्। अत एव "तत्र च दीयते" इति सूत्रभाष्ये "मासेऽतिक्रान्ते यद्दीयते तस्य मास औपश्लेषिकमधिकरणम्" इत्युक्तम्। वर्णयोः समीपवृत्तित्वन्तु बौद्धं बोध्यम्। इदम् = इको यणचीत्यत्रौपश्लेषिकमधिकरणमित्येतत्। तत्र हि–तस्मिन्नित्यादिसूत्रस्य प्रयोजननिरूपणावसरे "पूर्वोत्तरयोर्योगाविशेषान्नियमार्थं वचनम् 'दध्युदकम्' 'पचत्योदनम्' इति वार्तिककृतोक्तम्, तदर्थनिरूपणावसरे भाष्यकृता "इको यणचि" "दध्युदकम्' 'पचत्योदनम्' 'उभाविकौ' 'उभावचौ' अचि पूर्वस्याचि परस्येति सन्देहः, इष्यते चात्राचि पूर्वस्य स्यात्, तच्चान्तरेण यत्नं सिध्यतीति नियमार्थमेवमर्थमिदमुच्यते" इत्युक्तम्। अत्र तथा सन्देहप्रदर्शनेनौपश्लेषिकाधारे सप्तमीति स्पष्टम्प्रतीयते। उक्तञ्च कैयटेन–"उपपदविभक्तेः कारकविभक्तिर्बलीयसी" इति न्यायादधिकरणसप्तमी कृतेति। न सूत्रितमिति।

अत्र केचित्–"अनेकाल्" इति सूत्रात्प्रागिति शेष इति वदन्ति, तन्न युक्तम्, एवं सत्यनेकालिति सूत्रस्यादेरित्येतदपेक्षया परत्वन्निर्बाधमिति वक्ष्यमाणस्यादेरिति ग्रन्थस्यासङ्गत्यापत्तेरत उत्तरग्रन्थसङ्गमनायाऽऽह–स्वं रूपमिति। नन्वेतादृशसूत्रकरणे यत्रादेरित्यस्यानुपस्थितिस्तत्र तस्मादित्यस्याप्यप्रवृत्तिः स्यात्तथा च "गाङ्कुटादिभ्यः" इत्यादौ दोष इत्यत आह–तत्रेति। तत्र=एकस्मिन्सूत्रे। पृथगिति। उत्तरस्येति

आदेरित्यंशस्य सर्वादेशबाधकत्वापत्तेः। सिद्धान्ते तु परत्वात्सर्वादेशत्वं बाधकमित्यनुपदमेव वक्ष्यति।

इत्यनुवर्तते स्थानषष्ठी चेयं, पञ्चमीनिर्देशेन यत्कार्यं तदुत्तरसम्बन्धि, उत्तरस्य स्थाने विधीयमानं चादेर्बोध्यमिति वाक्यार्थद्वयम्, वाक्यभेदसामर्थ्याच्च 'आदेः' इत्यंशं विनाऽपि क्वचिदंशान्तरप्रवृत्तिः। 'आदेः' इत्यंशस्त्वनुवृत्तोत्तरस्येत्यस्यावृत्त्या परत्वबोधकशब्देन यत्र विधानं तत्रैवेति 'नित्यं ङितः' (पा०सू०३।४।९९) इत्यादौ न प्रवर्तत इति भावः। वक्ष्यतीति। न च 'अनेकाल्' इत्यतः पूर्वमेव 'तस्मिन्निति निर्दिष्टे पूर्वस्य'

व्यस्तपाठात्। अस्यैकपदत्वेऽपि वाक्येति कथनमुत्तरस्येत्यस्य तत्र सम्बन्धाभिप्रायेण, तत्र आदेरित्यंशे एकसूत्रस्यांशभेदेन व्याख्यानेंऽशान्तरे पूर्वांशानुवृत्तेः, "णेरणौ" इति सूत्रे क्लृप्तत्वात्, तथांशभेदेन व्याख्यानेऽनुवृत्तस्यार्थान्तराभिधायकत्वमपि दृष्टमित्याशयेनाह—इयमिति। इयम् = पृथग्भूते आदेरित्यंशे ऽनुवर्तमानं यदुत्तरस्येति तत्र स्थिता। चः—त्वर्थे। क्वचित् = "गाङ्कुटादिभ्यः" इत्यादौ। ननु यथा आदेरित्यंशाप्रवृत्तावपि तस्मादित्यस्य क्वचित्प्रवृत्तिस्तथा तस्मादित्यंशं विनाप्यादेरित्यस्यापि प्रवृत्त्यापत्तिरिति "नित्यं ङितः" इत्यादौ दोष एवेत्यत आह—आदेरित्यंशस्त्विति। आवृत्त्येति। अत्र प्रमाणन्तु—'पचावेदम्'इत्यादिप्रयोगदर्शनम्। ननु "आदेः परस्य" इति न क्रियते, तस्मादित्यनेन सहादेरिति पठ्यते लाघवाभिप्रायेण, तच्च लाघवमधुना नोपपद्यते, वाक्यभेदस्यावृत्तेश्च करणात्, उत्तरस्येत्यत्र शब्दाधिकाराश्रयणाच्च, परस्येत्यस्यानुपादानेऽपि मनोव्यापारगौरवस्याधुना सत्त्वाच्चेति, चेन्न, सिद्धान्तेऽप्यादेरित्यस्य "नित्यं ङितः" इत्यत्र दोषवारणायावृत्तेः सत्त्वात्। एतदेव ध्वनयितुमधुनोत्तरस्येत्यस्यावृत्तिम्प्रदर्श्योत्तरत्वबोधकशब्देनेत्यनुपादाय परत्वबाधकेत्युक्तम्। तत्रैवेति। प्रवर्तते इति शेषः। ननु मूलोक्तदोषोऽपि स्थानभेदेन सूत्रपाठाद्वारयितुं शक्य इत्याशयेन शङ्कां प्रदर्शयन्निराचष्टे—न चेत्यादिना। न चैवं न्यासेऽप्युक्तरीत्या वाक्यभेदाद्यावश्यकमेवेति 'सूत्रे' इति द्विवचनोपादानमसङ्गतमिति, वाच्यम्, द्वितीयस्य सूत्रस्यादौ पाठे एकत्वमेवेत्याशयेन द्विवचनोपादानात्। "षष्ठी स्थाने' इत्यस्य सम्बन्धासम्बन्धेन

१—अतिदेशविधायकेषु, आगमविधायकेषु, चेत्यर्थः।

२—"पत ऐ" (पा सू० ३-४-८३) इति सूत्रस्थभाष्ये "पत ऐत्वे आद्गुणप्रतिषेधः" 'पचावेदम्' इत्युक्तेरावृत्त्या धातोरित्यस्य विहितपञ्चम्याश्रयणादेतदर्थाश्रयणमिति भावः।

ननु वस्तुस्थित्या परस्य कार्यविधानेऽपि आदेरित्यस्य प्रवृत्तौ प्रकृते निर्दिश्यमानपरिभाषया तद्बाधेन दोषाभावः इति, चेन्न, 'टित आत्मनेपदानां टेरे' इत्यादावपि प्रवृत्त्यापत्तौ 'पचेते' इत्याद्यसिद्ध्यापत्तेः।

'अनेकाल्' ( पा० सू० १।१।५५ ) ॥ शित उदाहरणम्—'इदम इश्' इतः। यत्तु—वृत्तिकृता 'जश्शसोः शिः' ( पा० सू० ७।१।२० ) इत्युदाहृतम्, तन्न, सर्वादेशतायाः प्राक् शित्त्वस्यैवालाभात्। तत्र हि डाणलोरिवानुपूर्व्यादनेकाल्त्वेन सर्वादेशत्वमिति सिद्धान्तः। इत्यादाविति। आदिशब्देन 'अतो भिस ऐस्' ( पा० सू० ७।१।९ ) इति गृह्यते। परत्वादिति। अत एव 'आदेः परस्य' ( पा० सू० १।१।५४ )

(पा०सू०१।१।६६) 'तस्मादित्युत्तरस्यादेः' इति सूत्रे कुतो न पठिते? इति वाच्यम्, 'आदेः' इत्यंशे 'षष्ठी स्थाने' इत्यस्यासम्बन्धे 'आज्जसेरसुक्' (पा०सू०७।१।५०) इत्यादावपि तस्य प्रवृत्त्यापत्तेः। सम्बन्धे मध्ये 'तस्मिन्निति—' 'तस्मादिति—' अनयोरपि तत्सम्बन्धे तयोरप्यागमविषयेऽप्रवृत्त्यापत्तेरिति दिक्।

डाणलोरिवेति। आदेशानां प्रत्ययाधिकारे पाठेऽपि वाक्यार्थबोधोत्तर-

समाधत्ते—आदेरित्यंश इति। तस्य = आदेरित्यंशस्य। प्रवृत्त्यापत्तेरिति। तथा चाऽऽज्जसवयवाकारस्यासुगागमे आगमेऽकारोच्चारणसामर्थ्याद् "अतो गुणे" इति पररूपाभावे सकारोच्चारणसामर्थ्यात्संयोगान्तलोपाभावेऽनिष्टरूपापत्तिः स्पष्टैव। सम्बन्धे इति। "षष्ठी स्थाने" इत्यस्य सम्बन्ध इत्यर्थः। अत्र निर्दिष्टस्येत्यस्याध्याहारेण स्थानषष्ठीनिर्दिष्टस्य यत्कार्यंन्तत्तस्यादेरित्यर्थेन "आज्जसेरसुक्" इत्यत्र नोक्तदोषः, तत्रासुकः कित्वेन जसेरिति षष्ठ्या अवयवार्थकत्वनिर्णयात्। मध्य इति। पठितयोरिति शेषः। तयोः = मध्ये पठितयोः। आगमविषय इति। "आने मुक्" "छे च" इत्येतद्विहितागमविषय इत्यर्थः। एवं सति विपरीतरूपापत्तिर्दुर्वारैवेति स्पष्टमेव। एतादृशन्यासपक्षे आदेरित्यस्य यत्र स्थानषष्ठीनिर्दिष्टादेशस्य तस्मादित्यनेन नियमस्तत्रैव प्रवृत्तिः स्यात्। एवञ्च "ज्यादादीयसः" इत्यत्र ज्यादिति पञ्चम्याः परस्येत्यस्याप्राप्तलोपपत्त्या तत्रानियमाप्रवृत्तेस्तस्मादित्यस्य तत्राप्रवृत्तावादेरित्यस्याप्यप्रवृत्त्या-पत्तावन्त्यस्य प्रवृत्तावनिष्टापत्तिरित्यपि बोध्यम्। सिद्धान्ते तु परस्येत्यस्याध्याहारेऽपि परत्वविशिष्टबोधकशब्देन परस्यादेशविधानमस्त्येवेत्यादेरित्यस्य प्रवृत्त्या न दोषोऽत एवाह—दिगिति।

ननु डाणलोरिवेति दृष्टान्तोपादानम्प्रकृते विरुद्धम्, तयोः प्रत्ययाधिकारे पाठेन प्रत्ययतया आनुपूर्व्यनुपयोगादत आह—आदेशानामिति। आदेशानामिति बहुवचनं त्यदाद्येत्सङ्ग्रहाय। वाक्यार्थबोधोत्तरम् = "षष्ठी स्थाने" इति शास्त्रैकवाक्यतया वाक्यार्थबोधोत्तरम्। एतेन तत्र वाक्ये प्रत्यय इत्यस्य सम्बन्धाभावेऽपि प्रत्य-

इति पृथक् क्रियते इत्युक्तम्। 'उत्तरस्य' इत्यंशस्तु औशैसोरपि प्रवर्तते एव। यत्तु—प्राचा 'आदेः' इति सूत्रं विवृण्वता पञ्चमीनिर्देशेनेत्याद्युक्तं तदसम्बद्धमिति स्पष्टमेव।

*परनित्येति*। परान्नित्यं यथा—'तुदति' 'रुणद्धि' परमपि लघूपधगुणं बाधित्वा शश्नमौ। तथा रन्धेर्णिच् 'रन्धयति' परामप्युपधावृद्धिं बाधित्वा 'रधिजभोः' (पा० सू० ७।१।६१) इति नुम्। न च सोऽपि शब्दान्तरप्राप्त्याऽनित्य इति वाच्यम्, कृताकृतप्रसङ्ग-

---

मेव प्रत्ययत्वज्ञानेनोपदेशे णकारे इत्त्वाप्रवृत्तेस्तदुत्तरं लक्ष्ये प्रवृत्तकाले इत्त्वेऽप्यनेकाल्त्वाक्षतेरिति भावः। प्रवर्तत एवेति। उपपादितमेतत्।

शब्दान्तरप्राप्त्येति। यद्व्यक्तिसम्बन्धितया पूर्वं प्रवृत्तिस्तद्व्यक्तिसम्बन्धितयैव पुनः प्रवृत्तौ कृताकृतप्रसङ्गित्वं प्रसिद्धमिति भावः। कृताकृतेति। व्यक्तिविशेषानाश्रयणेनेत्यर्थः। 'वृध्द्यौत्त्वतृज्वद्भाव' इत्यस्य त्वत्र न प्राप्तिः, साहचर्येण विभक्तिनिमित्तानामेव वृद्ध्यादीनां तत्र ग्रहणात्,

---

भावो ध्वनितः। उपदेशे=पाणिनिकर्तृकाद्योच्चारणे। प्रवृत्तिकाले इति। 'बभूव' इत्यादिलक्ष्यसंस्कारकाले यो वाक्यार्थबोधस्तस्योत्पत्तिकाले इत्यर्थः। एतच्च दीक्षिताभिप्रायवर्णनमेव। वस्तुतस्तु प्राचोक्तम् "जश्शसोः शिः" इत्युदाहरणमपि युक्तमेव, शकारस्यानुबन्धत्वयोग्यतया "नानुबन्धकृतमनेकाल्त्वम्" इति परिभाषाविषयत्वसत्त्वात्। शित्त्वञ्चेत्संज्ञायोग्यशकारवत्त्वमेव। इत्सञ्ज्ञायाः—प्रवृत्तिर्यद्यप्यादेशोत्तरम्भवति, तथाऽपि योग्यताऽस्त्येव। अनुबन्धत्वमपीत्संज्ञायोग्यत्वमेव। अत एव काणोर्नासारूप्यप्रयुक्तो विकल्पः। अन्यथा तत्रापि वाक्यार्थबोधोत्तरम्प्रत्ययत्वज्ञानेनेत्संज्ञाप्रवृत्तावप्युपदेशेऽसारूप्यमस्त्येवेति। उपपादितमिति। न सूत्रितमित्येतद्व्याख्यानावसर इति शेषः।

मूले—शब्दान्तरप्राप्त्येति कथनं सर्वस्य शब्दान्तराच्छब्दान्तरे वा प्राप्त्येत्यर्थकम्, सम्बन्धसामान्यार्थकषष्ठ्या समासः, अत एवाह—यद्व्यक्तीति। अनाश्रयणेनेति। अक्लृप्ताभावकस्याभावकल्पनापेक्षया क्लृप्ताभावकस्याभावकल्पनायां लाघवमिति लाघवमेव नित्यस्यानित्याद्बलवत्त्वे साधकम्, तच्च लक्ष्यानुरोधेन क्वचिद्व्यक्तिविशेषचिन्तयाऽऽश्रीयते, क्वचित्सामान्यतः प्राप्तिमात्रेणेति भावः। ननु व्यक्तिविशेषचिन्तायामप्यत्र न बाधकम्, वार्तिकेन निर्वाहादित्याशङ्कां निराकरोति—"वृध्द्योत्व" इत्यादिना। अत्र=रन्धयतीति लक्ष्यसाधनावसरे। तृज्वद्भावपदम्—तत्र वार्तिके स्त्रियाश्चेत्येतद्व्यतिरिक्तपरम्, तेन न तदंशे साहचर्यभङ्गः। ननु साहचर्यस्यानित्यत्वेन वार्तिकेन रन्ध-

मात्रेणापि क्वचिन्नित्यताऽभ्युपगमात् । अन्तरङ्गं यथा—उभये देवमनुष्याः'—इह 'प्रथमचरम'—( पा० सू० १।१।३३ ) इति परमपि विकल्पं बाधित्वा 'सर्वादीनि' (पा० सू० १।१।२७) इति सर्वनामसञ्ज्ञा, विभक्तिनिरपेक्षत्वेनान्तरङ्गत्वात् । अपवादोऽपि यद्यन्यत्र चरितार्थस्तर्ह्यन्तरङ्गेण बाध्यत एव । तद्यथा—'अयजे इन्द्रम्' 'ग्रामे इह' 'सर्वे

---

नित्यत्वेनैव सिद्धे वाचनिकपूर्वविप्रतिषेधाऽऽश्रयणे फलाभावाच्चेति दिक् । अन्तरङ्गत्वादिति । भाष्ये त्वयच्प्रत्ययान्तरं न तु तयबादेशः, 'उभयी'इत्यत्र ङीप्तु मात्रजिति प्रत्याहाराश्रयणेन साधितः । एवञ्चोभयशब्दे विकल्पस्य प्राप्तिरेव नेति उक्तम् । अन्तरङ्गस्य बलवत्त्वे ज्ञापकमन्यत्र प्रपञ्चितम् । बाध्यत एवेति । निरवकाशत्वरूपस्य बलवत्त्वबीजस्याभावात् ।

---

यतीत्यस्य सिद्धावत्र नित्यत्वाश्रयणवैयर्थ्यमत आह—नित्यत्वेनैवेति । दिगिति । दिगर्थस्तु विप्रतिषेधसूत्रस्थपरशब्दस्येष्टवाचकत्वमाश्रित्य सर्वेषां पूर्वविप्रतिषेधसाधकवचनानां संग्रह इति यदि, तदा "स्वरितेनाधिकारः" इत्यस्य स्वरितत्वयुक्तेनाधिकङ्कार्यमित्यर्थाश्रयणेन नुमागमस्य व्यक्तिविशेषचिन्तयाऽनित्यत्वेऽपि स्वरितत्वेनैव प्रवृत्तिर्भविष्यतीति न नित्यस्य बलवत्त्वोदाहरणम् तत्, किन्तु तुदतीत्येवेति । मौलम्—"अन्तरङ्गत्वात्" इति तु "तयपः स्थानेऽयजादेशः" इति मतेन, "अन्तरङ्गबहिरङ्गयोरन्तरङ्गम्बलीयः" इति परिभाषान्तरमिति पक्षे च बोध्यम् । वस्तुतस्तु भाष्यकारीयसिद्धान्तरीत्या न तस्य प्राप्तिरित्याशयेनाह—भाष्ये त्वयजिति । ज्ञापकमिति । युगपत्प्राप्तिविषयकस्यान्तरङ्गबहिरङ्गयोरन्तरङ्गम्बलीय इति वचनस्य बोधकमित्यर्थः । प्रपञ्चितमिति । लौकिकोऽयन्दृष्टान्तः "मनुष्योऽयम्प्रातरुत्थाय शरीरकार्याणि करोति, ततः सुहृदां ततः सम्बन्धिनामिति" प्रत्यासन्नवर्तित्वस्य लोके दृष्टत्वात्तन्मूलकमेवेदं वचनमिति एतस्य वचनान्तरत्वम्मूलकृतोऽप्यभिमतम् । अत एवासिद्धमिति प्रतीकमुपादाय पचावेदमित्यस्य साधनं सङ्गच्छते । सापवादत्व—निरपवादत्वाभ्यान्द्वयोः परिभाषयोर्भेदः । अन्यथाऽन्तरङ्गत्वेनायजे इन्द्रमित्यस्य साधनन्न स्यात्, 'नाजानन्तर्ये' परिभाषाविषयत्वादिति बोध्यम् ॥

---

१—नित्यादन्तरङ्गमित्यस्य 'ग्रामणिनी' इत्युदाहरणम् । नित्यमपि नुमं बाधित्वाऽन्तरङ्गत्वाद्ध्रस्वः ।

२—"स्थानिवत्" (पा० सू० १-१-५६ ) इति सूत्रे भाष्ये—'उभये' इत्यत्र तयपो अयजादेशत्वेन 'प्रथमचरम' इति विकल्पमाशङ्क्य 'अयच्प्रत्ययान्तरम्' इति समाधाय 'उभयी' इत्यस्यासिद्ध्याशङ्कायाम् 'मात्रच् इत्येवं भविष्यति, कथं ? मात्रजिति नेदं प्रत्ययग्रहणम्, किं तर्हि प्रत्याहारग्रहणम् । स च प्रत्याहारः 'प्रमाणे द्वयसज्दघ्नञ्मात्रचः' ( पा० सू० ५-२-३७ ) इति मात्रशब्दादारभ्य 'द्वित्रिभ्यां तयस्यायज्वा' ( पा० सू० ५-२-४३ ) इत्ययचश्चकारमादाय बोध्यः । डतेस्तदन्तर्गतत्वेऽपि 'कति' इत्यत्र न ङीप्, टिड्ढाण्' इति सूत्रे 'अतः' इत्यनुवृत्तेः, 'न षट्स्वस्रादिभ्यः' इति निषेधाच्च ।

इत्थम्' अत्रान्तरङ्गेण गुणेन सवर्णदीर्घो बाध्यते। स च यद्यपि यण्गुणयोरपवादस्तथाऽपि समानाश्रये चरितार्थः। तथा च वार्तिकम्—'इण्ङिशीनामाद्गुणः सवर्णदीर्घत्वात्' इति ॥

*असिद्धमिति*। तेन 'पचावेदम्' इत्यादावेत ऐत्वं न।

*अकृतव्यूहा इति*। यद्यपि 'कृतमपि कार्यं निवर्त्तयन्ति' इति

---

तेनेति। पूर्वा तु अन्तरङ्गबहिरङ्गयोर्युगपत्प्राप्तावेवेति भावः।

---

तेन = अन्तरङ्गे कर्तव्ये जातमपि बहिरङ्गमसिद्धमित्यर्थकपरिभाषान्तराश्रयणेन। अत एवाह—पूर्वात्विति। अन्तरङ्गशास्त्रत्वमस्या लिङ्गम्। अत एव कार्यकालपक्षे त्रिपाद्यामप्येषा प्रवर्तते इति वृद्धाः। पक्षद्वये तत्र न प्रवर्तते इति तु भाष्यतत्त्वविदः। वाह ऊडिति सूत्रस्थमूठ् इति ज्ञापकमिति स्फुटीभविष्यति। न च सा विप्रतिषेधसूत्रभाष्ये प्रत्याख्यातेति वाच्यम्, तस्य भाष्यस्य प्रौढिवादत्वात्। नाजानन्तर्यपरिभाषायाम्'षत्वतुकोरसिद्धः'इति सूत्रस्थन्तुग्ग्रहणं ज्ञापकम्,तद्धि 'अधीत्य' 'प्रेत्य' इत्यादौ समासोत्तरं ल्यपः प्रवृत्त्या पूर्वं समासे जाते तत्र संहिताया नित्यत्वादेकादेशे ल्यपि तुगपेक्षया पदद्वयसम्बन्धिवर्णद्वयापक्षैकादेशस्य बहिरङ्गत्वेनासिद्धतया तुकः सिद्धौ तत्सूत्रस्थन्तुग्ग्रहणं व्यर्थम्। नाजान्तर्यपरिभाषासत्त्वे तु तुकि अजानन्तर्यस्य निमित्तत्वेनाश्रयणाद्बहिरङ्गपरिभाषाया निषेधे तुकः प्रवृत्त्यर्थन्तत्र सूत्रे तुग्ग्रहणमावश्यकमेव। परिभाषार्थस्तु—अचोरानन्तर्यमिति द्विवचनान्तेन समासमाश्रित्य बाध्यासिद्धपरिभाषायामुभयोपादानादधिकरणाकाङ्क्षायास्ताभ्यान्निरासेनान्तरङ्गे, बहिरङ्गे वा यत्कार्येऽजानन्तर्यमाश्रीयते तत्र बहिरङ्गपरिभाषा न प्रवर्तत इति हरदत्तेन प्रतिपादितः, स तु न युक्तः, पचावेदमित्यत्रासिद्धपरिभाषया "एत ऐ" इति सूत्रप्रवृत्तिवारणपराऽऽकरविरोधात्। किन्त्वचोऽन्यानन्तर्यनिमित्तकेऽन्तरङ्गे कर्तव्ये जातस्य बहिरङ्गस्य बहिष्ट्वप्रक्लृप्तिर्नेति। अत्र जातस्येति निवेशादेवौमाङोश्चेत्यत्राङ्ग्रहणञ्चरितार्थम्, तद्धि 'खट्वा आ ऊढा' इति स्थिते परमपि सवर्णदीर्घम्बाधित्वा धातूपसर्गकार्यत्वेनान्तरङ्गत्वाद्गुणे वृद्धिप्राप्तौ तद्बाधनार्थं क्रियते। युगपत्प्राप्तस्याप्यन्तरङ्गस्य बलवत्त्वाभावश्चेत्परिभाषाबोध्यः स्यात्तदाऽनया बाधादन्तरङ्गपरिभाषाया अप्रवृत्तौ परत्वात्सवर्णदीर्घे, ततो गुणे रूपसिद्धावाङ्ग्रहणवैयर्थ्यं स्पष्टमेवेति दीक्षिताशयः। वस्तुतस्तु न परिभाषाद्वयम्, किन्त्वन्तरङ्गे कर्त्तव्ये जातम्, तत्कालप्राप्तिकञ्च बहिरङ्गमसिद्धमित्येतदर्थिका परिभाषा एकैव। यदजानन्तर्यपरिभाषायां "षत्वतुकोरसिद्धः" इति सूत्रस्थन्तुग्ग्रहणं ज्ञापकन्तदसिद्धमिति परिभाषाया अनित्यत्व एव ज्ञापकमिति सर्वेष्टसिद्धिः।

असिद्धपरिभाषाया अपवादभूतामन्यापि परिभाषाम्पठन्ति प्राञ्चः—अकृतव्यूहा

परिभाषान्तरं पठ्यते, फलञ्च तुल्यम्, तथाऽपि 'अकृत' इत्येव लघु, 'प्रक्षालनाद्धि पङ्कस्य दूरादस्पर्शनं वरम्' इति न्यायादिति भावः। न कुर्वन्तीति। यथा 'निषेदुषीम्' इत्यादौ क्वसोरिटमन्तरङ्गत्वात्प्राप्तमपि

न कुर्वन्तीत्यर्थं इति। यदि तु 'सेदुषः' इत्यादौ पदावधिकेऽन्वाख्याने 'सेद् वस् अस्' इति स्थिते इट्सम्प्रसारणयोः प्राप्तौ प्रतिपदवि-

इतीति। 'विशिष्ट ऊहो येषु तानि व्यूहानि=शास्त्राणि; ऊहः = तर्कः, स च बहिरङ्गेणान्तरङ्गनिमित्तविनाशरूपस्तद्वन्ति शास्त्राणि अकृतानि यैरित्यर्थः। 'भाविनिमित्तविनाशः' इत्याध्याहारः। एवञ्चान्तरङ्गशास्त्रनिमित्तस्य बहिरङ्गशास्त्रेण विनाशसम्भावनायामन्तरङ्गशास्त्राणां प्रवृत्तिं लक्ष्ये न कुर्वन्ति पाणिनिप्रोक्तशास्त्राध्येतार इति फलितम्। अस्याञ्च समर्थानामिति सूत्रस्य समर्थग्रहणं ज्ञापकम्, तद्धि कृतसवर्णदीर्घात्सुत्थितशब्दादिञ् यथा स्यादित्येवमर्थं क्रियते चेत्तत्परिभाषाभावेऽन्तरङ्गे सवर्णदीर्घे कृत एव भविष्यतीति व्यर्थं सदस्या ज्ञापकम्। अकृतव्यूहपरिभाषासत्त्वे तु भाविन्या आदिवृद्ध्या दीर्घनिमित्तस्य सवर्णाच्त्वस्य विनाशः सम्भावित इत्यकृतदीर्घात्सु उत्थितशब्दादिञ् प्रत्ययः स्यात्, तथा च 'सावुत्थितिः' इति रूपं स्यादिति तन्निवृत्त्यर्थमिति तेषामाशयः।

ननु प्राचीनसम्मताया अकृतेतिपरिभाषाया लक्ष्यसाधकत्वेनाऽवश्यकतया भाष्यकृतैषा कुतो नोक्तेत्याशङ्कायान्तदभिप्रायमाह—यदि त्विति। क्रमेणान्वाख्यानेऽकृतेति परिभाषां विना न निर्वाह इत्याह—पदेति। एवञ्च 'नि सेद् वस् इ अम्' इति स्थितिङ्कल्पयित्वा वस इट्सम्प्रसारणयोः प्राप्तौ प्रतिपदविधित्वात्सम्प्रसारणे कृते वलादित्वाभावादिटः प्राप्तिरेव नेति 'निषेदुषीम्' इत्यादिसिद्धिरित्येषा निष्फलेति नवीनाः। "समर्थानाम्" इति सूत्रस्थसमर्थग्रहणन्तु—'विष्णुः' इत्यत्राकृतसन्धेरपि प्रत्ययदर्शनेन सुत्थितादावपि तथाऽकृतसन्धेर्वाणादाङ्गमिति परिभाषया प्रत्ययो मा भूदित्येवमर्थं

(१) अन्वाख्यानन्नाम शब्दसंस्कारः, तच्च त्रिविधम्—क्रमिकम्, पदावधिकम्, वाक्यावधिकञ्चेति। तत्र प्रयोगीयोच्चारणक्रमानुरोधेन संस्काररूपमाद्यम्। तच्च—स्वाभाविकत्वात्प्रमाणनिरपेक्षम्। पदम्, वाक्यं वोच्चार्यैककालाऽवच्छेदेन तद्घटकानां संस्कारे द्वितीयम्, तृतीयञ्च, द्वितीयमपि विप्रतिषेधसूत्रेऽन्तरङ्गपरिभाषोदाहरणदानावसरे 'वैक्ष्यमाणिः' 'सौत्थितिः', 'वृद्धिश्च प्राप्नोत्येकादेशश्च, परत्वाद् वृद्धिः स्यात्, एकादेशो भवत्यन्तरङ्गतः' इति भाष्योक्त्या ध्वनितम्, पदावधिकान्वाख्यानं विना वृद्ध्येकादेशयोर्युगपत्प्राप्ते र्वक्तुमशक्यत्वात्। तृतीये प्रमाणन्तु 'न पदान्त' (पा० सू० १–१–५८) इति सूत्रस्थम् "अस्ति पुनः किञ्चिद्भावसाधनस्य विधिशब्दस्योपादाने सतीष्टं संगृहीतम्। आहोस्विद्दोषान्तरमेवेति। अस्तीत्याह। इह 'कानि सन्ति' 'यानि सन्ति' 'कौ स्तः' 'यौ स्तः'। योऽसौ पदान्तो यकारः वकारो, वा श्रूयेत स न श्रूयते इति' भाष्यमेव। वाक्यान्वाख्यानाभावे पूर्वत्वेन दृष्टस्य कार्याभावात् स्थानिवत्त्वाप्राप्त्या तदसङ्गतमेव स्यात्।

भाविना संप्रसारणेन वलादित्वं नङ्क्ष्यतीत्यालोच्य न कुर्वन्तीत्यर्थः ॥

इति परिभाषाप्रकरणम् ।

---

धित्वेन शीघ्रोपस्थितिकत्वात्पूर्वं सम्प्रसारणे[1] वलादित्वाभावादिटः प्राप्ति-रेव न, लक्ष्यानुरोधाच्चात्र पदाद्यधिकमेवान्वाख्यानमिति तत्सिद्धिरित्यु-च्यते तदेषा परिभाषा निष्फलेति बोद्धव्यम् । अत एव एषा भाष्ये न क्वापि व्यवहृता । इत्यन्यत्र विस्तरेण निरूपितम् ।

इति परिभाषाप्रकरणम् ।

---

क्रियते । अस्याः परिभाषाया असत्त्वादेव "चौ प्रत्यङ्गस्य प्रतिषेधः" इति वचनं वार्त्तिककृताऽऽरब्धम्, भाष्यकृता च न प्रत्याख्यातम् । प्रत्यङ्गम् = अन्तरङ्गम् । अस्याम्परिभाषायां सत्यान्तु 'प्रतीचः' इत्यादिरूपाणामनयैव सिद्धेस्तद्वैयर्थ्यं स्पष्टमेव । अत एव "च्छ्वोः" इति सूत्रे "अवश्यमत्र तुगभावार्थो यत्नः कर्त्तव्योऽन्तरङ्गत्वाद्धि तुक् प्राप्नोति" इति भाष्ये उक्तम् । परिभाषायाः सत्त्वे तु 'विश्नः' 'प्रश्नः' इत्यादौ तुगभावस्य परिभाषयैव सिद्धेरावश्यकत्वकथनवैयर्थ्यं स्पष्टमेव । अत एव=अस्याः परिभाषाया असत्त्वादेव । ननु प्रतिपदविधित्वमनवकाशत्वे सत्येव बाधकत्वे प्रयोजकम्, तच्चात्र नास्ति, 'लुलुवुषः' 'चिच्युषः' इत्यादावस्य चारितार्थ्यात् । अत्र हि—"वस्वेकाजात्" इति नियमादिडभावस्य सिद्धेरिति कथमेतदिति, चेन्न, तथात्वाभावेऽपि शीघ्रोपस्थितिकत्वप्रयोज्यप्रतिपदविधित्वं पूर्वप्रवृत्तौ प्रयोजकं भवत्येवेत्याशयात् । अत एव "प्रत्ययोत्तरपदयोश्च" इति सूत्रव्याख्यानावसरे "पर-नित्या-न्तरङ्ग-प्रतिपदविधयो विरोधिसन्निपाते तेषाम्मिथः प्रसङ्गे परबलीयस्त्वम्" इति कैयट आह । अत एव 'रमे' इत्यादौ प्रतिपदोक्तत्वेन पूर्वं सम्बुद्धौ चेत्येत्वे आकारप्रश्लेषाद्धल्ङ्यादिलोपो न प्राप्नोतीत्याशङ्क्यैङ्ह्रस्वादिति लोपेन समाहितम् । अन्यत्र = परिभाषेन्दुशेखरादौ ॥

॥ इति परिभाषाप्रकरणम् ॥

---

१—न च लाघवान्नियमशास्त्राणां विधिमुखेन प्रवृत्त्या प्रकृते 'वस्वेकाजाद्धसाम्' इत्यनेनैवेटः प्राप्त्या तस्यापि वसुशब्दमुच्चार्य विहितत्वेन प्रतिपदोक्तत्वादिटः प्राप्तिरस्त्येवेतीदमसङ्गतमिति वाच्यम्, 'सेट् वस् अस्' इति स्थितौ कृतद्विर्वचनैकाच्त्वाभावेनेटोऽप्राप्त्या द्वित्व–सम्प्रसारणयोश्च प्राप्तौ प्रतिपदविधित्वेनान्तरङ्गत्वात्पूर्वं सम्प्रसारणे ततो द्वित्वे वलादित्वाभावेनेटोऽप्राप्त्या ग्रन्थासङ्गतेरभावात् ।

# अथ अच्सन्धिप्रकरणम् ।

'इको[1] यणचि' ( पा० सू० ६।१।७७ ) । प्रत्याहारग्रहणेषु तद्वा-

नतु व्यक्तिपक्षे इक्पदो[2]पस्थाप्योकारादिभिर्दीर्घादिग्रहणन्न स्यात् ,

इको यणचि । 'पदानां वाच्या व्यक्तिः' इत्येकः पक्षः, आनयनादिकार्यान्वयस्य व्यक्तिष्वेव दर्शनात् । नतु व्यक्तेरानन्त्यात्सर्वासु व्यक्तिषु शक्तिग्रहासम्भवः, यत्किञ्चिद्व्यक्तौ शक्तिग्रहश्चेद्व्यक्त्यन्तरस्य शक्तिग्रहाविषयतया शाब्दबोधविषयत्वन्न स्यादिति चेन्न, जात्यादिरूपानुगमकधर्माणां शक्यताऽच्छेदकत्वस्वीकारेण समानप्रकारकत्वेन शक्तिज्ञान-पदार्थोऽपस्थित्योः कार्यकारणभावाभ्युपगमान्नानुपपत्तिरिति तेषामाशयात् । न चाशक्त्वेन कथं शक्यताऽवच्छेदकत्वमिति वाच्यम्, अलक्ष्यत्वेऽपि लक्ष्यताऽवच्छेदकत्ववदशक्यत्वेऽपि शक्यताऽवच्छेदकत्वसम्भवात् । 'जातावेव पदानां शक्तिः' इति पक्षान्तरम् । व्यक्तिलाभस्त्वाक्षेपात् । आनयनादिकार्यान्वय आक्षिप्तव्यक्तिद्वारैव, जातेरेकत्वाल्लाघवमत्र पक्षे । अत एव "सवर्णेऽण्ग्रहणमपरिभाष्यमाकृतिग्रहणात्" इति भाष्ये उक्तम् । तत्राद्यपक्षाभिप्रायेणाशङ्कते—नन्विति । उकारादिभिरिति । इकारविषये तु शङ्का न कृता, तस्योच्चारितत्वेन तत्राणुदित्सूत्रप्रवृत्तिसम्भवात् । दीर्घादीत्यादिना प्लुतानुदात्तादीनां

१—ननु 'आदिरन्त्येन सहेता' इत्यनेन इगादिपदानाम् इकारादिकाद्यन्तघटितसमुदायघटकवर्ण-निरूपिता शक्तिर्बोध्यते, तच्च न सम्भवति 'अक्' 'इक्' 'अच्' इत्यादिपदघटकान्त्यवर्णानामित्संज्ञकत्वाभावेन, मध्यगवर्णाभावेन च 'आदिरन्त्येन' इत्यस्य तत्र प्रवृत्त्यभावात् । यत्र च 'ऋलृक्' 'ऐऔच्' इत्यादावित्संज्ञा तत्र बहुवर्णव्यवहितत्वेन अन्त्येनेता=ककारादिना सह अकारादेरभावादिति चेन्न, अन्त्येत्सदृशसहिताऽदिसदृशघटितं पदं, स्वविशिष्टानां संज्ञा इत्यर्थात् ।

वै०—स्वघटकाद्यवर्णनिष्ठानुयोगितानिरूपकसादृश्यप्रतियोगित्वेन विवक्षितवर्णनिष्ठाद्यवयवतानिरूपकसमुदायघटकत्व–स्वघटकान्त्यवर्णनिष्ठानुयोगितानिरूपकसादृश्यप्रतियोगित्वेन विवक्षितवर्णनिष्ठचरमावयवतानिरूपकसमुदायघटकत्वैतदुभयसम्बन्धेन । यथा—अन्त्येत् 'ऐऔच्' घटकचकारस्तत्सदृशः 'इको यणचि' इत्येतदच्पदघटकचकारः, तेन सहितः=आदिसदृशः, आदिः='अइउण्'घटकाकारः तत्सदृशः 'इकः' इति सूत्रस्थाच्पदघटकाकारः तद्घटितं पदम् 'अच्' इति तत्पदम्—स्वघटकाद्यकारनिष्ठानुयोगितानिरूपकसादृश्यप्रतियोगिताश्रयत्वेन विवक्षिताइउण्सूत्रघटकाकारनिष्ठाद्यवयवतानिरूपकः, स्वघटकान्त्यवर्णचकारनिष्ठानुयोगितानिरूपकसादृश्यप्रतियोगिताश्रयत्वेन विवक्षित–'ऐऔच्'सूत्रघटकचकारनिष्ठचरमावयवतानिरूपकश्च यः समुदायः 'अइउण् ऋलृक् एओङ् ऐऔच्' इति तद्घटकत्वसम्बन्धेन विशिष्टानामकारादीनां बोधकम्, एवमन्यत्रापि समन्वयो बोध्यः, इति दिक् । आदिरन्त्येनेति सूत्रटिप्पण्याम् पृ० २४ प्रक्षेपः कार्यः ॥

( २ ) ननु व्यक्तिपक्षे इक्पदस्य इकारादिकान्तसमुदायघटकवर्णनिरूपितशक्तिमत्त्वेन दीर्घेकारा-

'उच्चारित एव शब्दः प्रत्यायको नानुच्चारितः' इति 'अणुदित्' सूत्रे भाष्योक्ते। न चोच्चारितस्यैव प्रत्यायकत्वे रहसि पुस्तकमीक्षमाणस्य बोधानापत्तिरिति वाच्यम्, तत्रापि पुस्तकद्रष्टुः स्वीयसूक्ष्मोच्चारणसत्त्वादित्यत आह—प्रत्याहारग्रहणेष्विति। एतेन दीर्घैकारादेर्ग्राहकशास्त्रबलेन इकारादिभिर्बोधेऽपि तेषामिक्पदवृत्त्याऽनुपस्थितत्वेन तदुत्तरप्रत्ययार्थानन्वयापत्तिरित्य-

सङ्ग्रहः। उच्चारितः = उच्चारितत्वेन गृहीतः। प्रत्यायकः = स्वार्थबोधनसमर्थः। तत्रापि = पुस्तकेक्षणस्थलेऽपि। सूक्ष्मेति। जपे मन्त्राणां त्रैस्वर्येण ज्ञानस्यावश्यकतया त्रैस्वर्यस्य ताल्वाद्यूर्ध्वदेशाधिकरणकोच्चारितत्वरूपतया तत्र सूक्ष्मोच्चारणमावश्यकम्, तद्वद्रहसि पुस्तकेक्षणस्थलेऽपि बोध्यम्। एतेन 'उच्चारित एव प्रत्यायकः' इत्यसङ्गतम्। लिपिस्मृतशब्दादर्थबोधानापत्तेरिति परास्तम्, तत्रापि सूक्ष्मोच्चारणसत्त्वात्। यत्र नोच्चारणन्तत्र नार्थप्रत्ययः। यथा ऋगित्युक्ते विशिष्टसन्निवेशा ऋक् प्रतीयते। न तु तस्या उच्चारणमिति यदा, तदा नार्थप्रत्ययः, अनुकरणवत्।

मूले—तद्वाच्यवाच्येति। प्रत्याहारवाच्याक्षरसमाम्नायपठ्यमानवाच्या इत्यर्थः। अक्षरसमाम्नायवाच्यत्वग्राहकञ्चाणुदित्सूत्रमेव। रत्नाकराद्युक्तिं खण्डयति एतेनेति। इक्पदवृत्त्या = इक्पदशक्त्या। अन्वयापत्तिरिति। प्रत्ययानाम्प्रकृत्यर्थान्वितस्वार्थबोधकत्वमिति सिद्धान्तात्। अत एव "सार्वधातुके यक्" इति सूत्रे 'पच्यमानः' इत्यादौ 'कर्तरि शानच्' 'कर्मणि यक्' इति पक्षे प्रकृतिप्रत्ययाविति नियमेन कर्मार्थविशेष्यक-

दीनामपीक्पदनिष्ठवृत्त्याऽनुपस्थितत्त्वेन 'इकारादिभिर्दीर्घादिग्रहणं न स्यात्' इत्यस्य वक्तुमुचितत्वेनेदमसङ्गतम्। न च 'आदिरन्त्येन' इति बोधितेक्पदनिष्ठशक्त्या इकारादिवर्णचतुष्टयस्य, 'अणुदित्' सूत्रबोधितेकारपदनिष्ठशक्त्या अष्टादशेकाराणां बोधसम्भवान्नासङ्गतिरिति वाच्यम्, 'अवयवनिष्ठशक्तिनिरूपकार्थविषयकशाब्दबुद्धित्वावच्छिन्नं प्रति समुदायनिष्ठशक्तिनिरूपकार्थविषयकबोधजनकत्वप्रकारकतात्पर्यज्ञानस्य प्रतिबन्धकत्वम्' इति नियमात्। प्रकृते—ककारघटितोच्चारणेन इक्पदम्—'इकारादिवर्णचतुष्टयविषयकबोधजनकम्भवतु' इति पाणिनितात्पर्यानुमानेन तदवयवनिष्ठशक्त्या दीर्घैकारादिबोधासम्भवात्। न च शक्तताऽवच्छेदकत्वे लाघवात्, शब्दरत्नेऽणुदित्सूत्रस्य प्रत्याहाराणामाद्यवर्णेषु चारितार्थ्यप्रदर्शनाच्च ककारादेस्तात्पर्यमात्रग्राहकत्वेन प्रत्याहाराद्यवर्णे एव सर्वसवर्णनिरूपितशक्तेः, प्रत्याहारबोध्यवर्णनिरूपितशक्तेश्च सत्त्वेन अवयवावयविनोः शक्तिद्वयस्थले एवोक्तप्रतिबध्यप्रतिबन्धकभावस्य विषयतया प्रकृते तदभावेन पूर्वोक्तग्रन्थसङ्गतिरिति वाच्यम्, हरिशब्दस्थल इव 'एकशक्तिनिरूपकार्थविषयकशाब्दबुद्धित्वावच्छिन्नं प्रति भिन्नशक्तिनिरूपकार्थविषयकबोधजनकत्वप्रकारकतात्पर्यज्ञानं प्रतिबन्धकम्' इति प्रतिबध्यप्रतिबन्धकभावविषयत्वस्य सत्त्वेनोभयबोधासम्भवादिति, चेन्न, इकारेणैव तन्त्रादिना दीर्घैकारादेः, वर्णचतुष्टयस्य च बोधसम्भवेऽपि दीर्घैकारादीनां कथमपि बोधासम्भवात् तादृशग्रन्थप्रवृत्तेः। नन्वेवमप्युक्तरीत्या बोधद्वयस्य कल्पकाभाव इति, चेन्न, इग्घटकेकारस्य वर्णचतुष्टयमात्रबोधकत्वेऽणुदित्सूत्रेऽण्ग्रहणस्यैव वैयर्थ्येन, स्वसवर्णमात्रबोधकत्वे ककारसमभिव्याहारवैयर्थ्येन चोभयबोधकपाणिनितात्पर्यस्योन्नेयत्वादित्यन्यत्र विस्तरः।

१—'घटं पश्य' इत्यत्र घटपदात्समवायेनाऽऽश्रयतयोपस्थिताऽऽकाशादेरपि अमर्थकर्मत्वेऽन्वयवारणाय

परास्तम्, वृत्तिप्रयोज्योपस्थितिसत्वेनादोषाच्च । ननु 'अणुदित्' सूत्रं व्यर्थम्, न च प्रत्याहाराणामाद्यवर्णेषु चरितार्थम्, अन्यसवर्णानामिव तत्सवर्णानामपि लक्षणयैव ग्रहणसिद्धेः । न च 'अस्य च्वौ' (पा० सू० ७।४।३२) इत्यादौ चारितार्थ्यम्, व्यक्तिपक्षेऽस्य प्रत्याहारसूत्रस्थतो भेदेनाण्त्वाभावादिति स्पष्टम् 'अणुदित्'—(पा०सू०१।१।६९) सूत्रे भाष्ये

बोधानापत्तिः, कर्तुरेव प्रथमतो जातप्रत्ययार्थत्वादित्युक्तम् । परास्तमिति । लक्षणायां दीर्घादाविक्पदस्य लक्षणारूपा या वृत्तिस्तदाश्रयत्वान्निरस्तमित्यर्थः । वृत्तिप्रयोज्येति । प्रकृतिवृत्तिप्रयोज्येत्यर्थः । प्रयोज्यत्वन्तु जन्यजन्यत्वम् । न चैवं सति 'घटमानय' इत्यत्र घटोपस्थितिविषयघटे विभक्त्यर्थान्वयापत्तिर्घटस्य योपस्थितिः सा घटपदजन्यैव, न तु घटपदजन्यजन्येति वाच्यम्, अस्य ग्रन्थस्य प्रकृताभिप्रायकत्वात्, सामान्यतः क्लृप्तस्तु नियमः प्रकृतिजन्यत्वघटित एव, जन्यत्व-जन्यजन्यत्वान्यतरवत्त्वमेव प्रयोज्यत्वमित्यस्य सामान्यतो नियमे प्रवेश इत्यभिप्रायाद्वा । प्रत्याहारग्रहणे यदि लक्षणा तर्ह्यणुदित्सूत्रस्थाण्ग्रहणं विनाऽपि निर्वाहात्तद्वैयर्थ्यम् ।

यत्र न प्रत्याहारग्रहणङ्किन्त्वेकवर्णमात्रबोधकशब्दोपादानन्तदर्थन्तदस्त्विति वाच्यम्, तत्रापि वक्ष्यमाणरीत्या लक्षणाया आवश्यकत्वादित्याशयेन शङ्कते—नन्विति । अणुदित्सूत्रमिति । उदितः सूत्रमुदित्सूत्रम्, अण्विशिष्टमुदित्सूत्रमणुदित्सूत्रमित्यर्थः । एवञ्चोदिद्ग्रहणस्यावश्यकत्वेऽपि "सविशेषणे विधिनिषेधौ विशेषणमुपसङ्क्रामतः सति विशेष्ये बाधे" इति न्यायेन 'स्वर्गी ध्वस्तः' 'शिखी विनष्टः' इत्यादिस्थल इव विशेषणे पर्यवसानं बोध्यम् । आद्यवर्णेष्विति । तत्रानुबन्धसमभिव्याहारेणाऽक्षरसमाम्नायिक एवायमिति प्रत्यभिज्ञायाः सम्भवेनाण्पदबोध्यत्वस्य सम्भवादिति भावः । अन्यसवर्णानामिव=द्वितीयादिसवर्णानामिव । तत्सवर्णानाम्—आदिसवर्णानाम् । प्रत्याहारवाच्यत्वस्यादिवर्णेऽपि सत्त्वादिति भावः । "अस्य च्वौ" इत्यादाविति । आदिपदेन "एरच्" इत्यादिसङ्ग्रहः । एतेषु प्रत्याहारग्रहणाभावादित्याशयः । अत एव 'शुक्लीभवति' इतिवत् 'मालीभवति' इत्यस्य सिद्धिः । शङ्काऽनुरोधेनाह—व्यक्तिपक्ष इति । अस्य="अस्य च्वौ" इत्यादिसूत्रस्थाकारादिवर्णस्य । भेदेनेति । यत्र प्रत्याहारनिर्देशस्तत्र यथा आद्यवर्णस्यानुबन्धसमभिव्याहारेण स इवायमिति प्रत्यभिज्ञाविषयत्वं तथाऽत्राभावेनैतेषु तादृशप्रत्यभिज्ञाया असम्भवेन भेदस्य निश्चितत्वेनेत्यर्थः । अत एवाह—अण्त्वाभावादिति । ननु "प्वादीनां ह्रस्वः" इति निर्देशेन ज्ञापकेन, 'अप्रत्ययः' इति निषेधारम्भेण च तत्सदृशेऽपि प्रत्याहारनिर्देशबोध्यकार्यम्भवतीति निश्चयो भविष्यति, अन्यथा "सनाशंसभिक्ष उः" इत्यत्रोपात्तोकारस्यापि "अस्य च्वौ" इत्यका-

'प्रत्ययार्थनिष्ठविषयतानिरूपितविषयता' सम्बन्धेन शाब्दबुद्धित्वावच्छिन्नम्प्रति तत्प्रकृतिनिष्ठवृत्तिज्ञानाधीनतद्विषयकोपस्थितेः कारणत्वेन दीर्घादीनां वृत्त्याऽनुपस्थितत्वेन तदुत्तरङसर्थेऽनन्वयाऽपत्तिरिति भावः

इति, चेन्न, लक्ष्यताऽवच्छेदकज्ञानार्थमेव तच्चारित्र्यात्। प्रत्याहारेत्युपलक्षणम्, तद्वाच्यवाच्येति च, 'अस्य च्वौ' इत्यादावपि स्वसदृशवाच्येषु लक्षणाऽवश्यकत्वात्। अणुदित्सूत्रगृहीतलक्ष्यताऽवच्छेदकिका लक्षणा विधीयमानातिरिक्तविषये एव, 'अप्रत्ययः' इत्युक्तेः। अत एव 'त्यदादीनामः' ( पा०सू०७।२।१०२ ) इत्यादौ न स्वसदृशवाच्येषु लक्षणा। 'नाऽज्झलौ' ( पा०सू० १।१।१० ) 'अणुदित्' इत्यत्र तु न लक्षणा, तद्बोधकाले

रवच्छेदेन ग्रहणकशास्त्राप्राप्तेस्तद्वैयर्थ्यं स्पष्टमेव। अत एव 'अवात्ताम्' इत्यत्र तकारद्वयस्य झल्प्रत्याहारबोध्याक्षरसमाम्नायिकतकारसादृश्येन "झलो झलि" इत्यस्य प्रवृत्तिरिति, चेन्न, "इणो यण्" इत्यत्र णकारचिह्नेन यकारांशे तत्त्वप्रत्यभिज्ञासत्त्वेन तत्राप्रत्यय इत्यस्य चारितार्थ्यात्। "प्वादीनाम्" इति निर्देशस्यापूर्वार्थज्ञापकत्वकल्पनापेक्षया सूत्रोक्तार्थे एवोपष्टम्भकत्वस्य सम्भवात्।

लक्ष्यताऽवच्छेदकज्ञानार्थमिति। तद्वाच्यवाच्यत्वरूपस्य लक्ष्यताऽवच्छेदकधर्मस्य लक्ष्येषु ज्ञानार्थमित्यर्थः। प्रत्याहारवाच्यत्वस्याऽक्षरसमाम्नायपठितेषु "आदिरन्त्येन सहेता" इति सूत्राज्ज्ञानसम्भवेऽपि तद्वाच्यत्वस्य दीर्घादिषु ग्रहोऽणुदित्सूत्रादेवेति भावः। प्रत्याहारग्रहणेष्विति सामान्यत उपादानेनावर्णविषयेऽपि लक्षणयैव निर्वाहे शक्त्या तत्र बोधनस्यानावश्यकत्वं ध्वनितम्। यत्तु—युगपद्वृत्तिद्वयकल्पनाया विरोधेन सर्वेषां लक्षणयैव बोधनमुचितम्, किन्तु "दीर्घाज्जसि च" इति ज्ञापकादच्पदस्य दीर्घेकारेऽस्तु लक्षणा, ह्रस्वोकारादीनान्तु शक्त्यैव बोधनम्भविष्यतीति तत्र यणादेशासिद्धिः, "ल्वादिभ्यः" इत्यादिनिर्देशस्य दीर्घोकारादिष्वपि लक्षणया बोध्यत्वसाधकत्वे त्वनेकज्ञापककल्पनापेक्षया जातिपक्ष एव ज्ञापकमस्त्विति, तन्न, सति तात्पर्ये युगपद्वृत्तिद्वयस्य "गङ्गायां मीनघोषौ स्तः" इत्यादिषु दर्शनेन तयोर्विरोधस्याभावात्। इति चेति। उपलक्षणमिति शेषः। आवश्यकत्वादिति। अन्यथोक्तरीत्याऽनुपपत्तिपरिहाराभावादिति शेषः। ननूक्तार्थयोर्लक्षणास्वीकारे "अस्य च्वौ" इत्यत्रेवोकारादिप्रत्ययविषयेऽपि लक्षणायाः सम्भवाद्दोष एवेत्यत आह—अणुदिदित्यत्रेति। अत एव=विधीयमानातिरिक्तविषयैवेति स्वीकारादेव। नन्वेवं "नाऽज्झलौ" इत्यादावनुवादस्थले दोष एवेत्यत आह—नाऽऽज्झलाविति। अग्रहादिति। वाक्यापरिसमाप्तिन्यायेन "नाज्झलौ" इत्यादिघटकप्रत्याहारस्य स्वशक्यताऽवच्छेदकधर्मावच्छिन्नबोधक-

२—शक्यसम्बन्धो हि लक्षणा। इकपदशक्यश्च—वर्णसमाम्नायस्थेकारादिवर्णचतुष्टयम्। लक्ष्येषु तत्सम्बन्धश्च-स्ववृत्तिजातिमत्त्वरूपः। तथा च इकपदम् 'स्ववाच्यवृत्तिजातिमत्त्व' सम्बन्धेन स्ववाच्यवाच्ये लाक्षणिकम्। तत्र लक्ष्यताऽवच्छेदकरूपेण ज्ञातपदार्थस्यैव लक्षणया बोधदर्शनात् लक्ष्यताऽवच्छेदकीभूतप्रत्याहारवाच्यवाच्यत्वज्ञानमणुदित्सूत्रं विनाऽसम्भवि, दीर्घादिष्विकारादिवाच्यत्वस्य तदधीनत्वादिति तज्ज्ञानार्थमेव तच्चारितार्थ्यमिति भावः।

च्यवाच्ये निरूढा लक्षणा, 'दीर्घाज्जसि च' (पा० सू० ६।१।१०५) इति ज्ञापकात्, 'ल्वादिभ्यः' (पा० सू० ८।२।४४) इति निर्देशाच्च। तेनैकच्छब्देन षट्षष्टिर्गृह्यन्ते। यण्शब्देन सप्त, भाव्यमानत्वेन सवर्णाग्राहकत्वेऽपि गुणानामभेदकत्वेनानुनासिकानामपि यवलानां ग्रहणात्।

लक्ष्यताऽवच्छेदकाग्रहादिति भावः। तत्र प्रमाणमाह—दीर्घादिति। अक्पदीयाकारेण स्वसवर्णग्रहणेऽपि तत्र 'नाऽदिचि' इत्येव सिद्धमिति भावः। तेन=लक्षणाऽङ्गीकारेण। भाव्यमानत्वेनेति। विधीयमानविषये लक्षणाऽभावस्यानुपदमुक्तत्वादिति भावः। अभेदकत्वेनेति। शास्त्रे उच्चारितगुणानां

स्वस्यैव सम्भवादिति भावः। तत्र=लक्षणायाम्।

ननु "प्रथमयोः" इति सूत्रेऽनुवृत्तं यदगिति पदं तत्राकारस्योच्चारणेन तस्याण्त्वात्तत्राणुदित्सूत्रस्य प्रवृत्त्या 'विश्वपाः' इत्यादौ प्राप्तस्य पूर्वसवर्णदीर्घस्य व्यावृत्त्यर्थं "दीर्घाज्जसि च" इति सूत्रमस्त्विति कथं तस्य ज्ञापकत्वेनोपन्यास इत्यत आह—अक्पदीयेति। ननु दीर्घाकारविषये नादिचीत्येव सिद्धमिति कथनं नोपपद्यते, "अस्य च्वौ" इत्यकार इवास्याप्यकारस्यानाक्षरसमाम्नायिकत्वेन तत्राणुदिति सूत्राप्रवृत्तेरिति, चेन्न, "अमि पूर्वः" इति सूत्रेऽनुवृत्तावपदस्य "नाऽदिचि" इत्यत्रापि सम्बन्धस्तस्य च विशेष्यत्वमिति प्रत्याहाराद्यवर्णेन नादिचीत्यस्य प्रवृत्तिरित्याशयात्। यदि निराकाङ्क्षत्वात्तत्र तस्यासम्बन्ध इति ब्रूषे, तदा "ल्वादिभ्यः" इति निर्देशस्यैव ज्ञापकत्वमस्त्वित्याशयेन मूले तदुक्तिः सङ्गच्छते।

ननु यथासङ्ख्याभावोपपादनाय गुणाभेदकत्वप्रदर्शनमनुचितम्, यण्विषयेऽप्युक्तरीत्या लक्षणया निर्वाहादत आह—विधीयमानेति। ननु यद्यभेदस्तदा भेदनिबन्धन-

१—असति प्रयोजने अनुपपत्तिप्रतिसन्धानपूर्वकं तत्सम्बन्ध्यपरार्थबोधे निरूढा लक्षणेति व्यवह्रियते। यथा 'त्वचा ज्ञातम्' इत्यादिस्थले त्वक्पदस्य त्वगिन्द्रिये निरूढा लक्षणा। प्रकृते 'गङ्गायां घोषः' इत्यत्रातिशयितशैत्यपावनत्वादिबोधनरूपफलमिव लक्षणया बोधे फलाभावेन 'ल्वादिभ्यः' इत्यादिनिर्देशाद्यनुपपत्त्या तात्पर्यानुपपत्तिरप्रतिसन्धानसत्त्वेन निरूढात्वव्यवहार इति भावः।

२—ननु 'प्रथमयोः' इत्यत्र 'अकः सवर्णे' इत्यतोऽक इत्यस्यानुवृत्त्या तत्राकारेणाणुदित्सूत्रबलाद्दीर्घाकारस्य ग्रहणात् प्राप्तदीर्घवारणाय 'दीर्घाज्जसि च" इत्यस्य चारितार्थ्यन्तु न, तत्र 'नादिचि' इत्यनेनैव सिद्धेरित्युक्तम्, तन्न सम्यक्, 'नादिचि' इति सूत्रघटकाकारेण दीर्घाकारग्रहणासम्भवात्, वर्णसमाम्नायस्थत्वप्रत्यभिज्ञाया अभावेनाणुदित्सूत्राप्राप्तेः इति चेन्न, 'अकः' इत्यस्य 'अमि पूर्वः' इत्यत्रानुवृत्तेरावश्यकतया मण्डूकानुवृत्तिवारणाय 'नादिचि' इत्यत्रापि तदनुवृत्तेः सत्त्वेन तत्रत्याकारस्य च ककारसमभिव्याहारेण वर्णसमाम्नायस्थत्वप्रत्यभिज्ञासत्त्वादणुदित्सूत्रेण दीर्घाकारेऽपि तत्प्रवृत्तिसिद्धेः। यद्वा—'अश्व, आश्व, अम् तस्मात् आत्, इत्येवमाकारप्रश्लेषेण नादिचीत्यनेनैव दीर्घाकारादपि निषेधसिद्धिरित्याशयात्। न च लक्षणातः प्राक् आकारे परे "अकः सवर्णे" इत्यस्याप्राप्त्या आकारप्रश्लेषेण आदिति

अतो नास्ति यथासङ्ख्यम् । न च लक्ष्यार्थबोधात्पूर्वभाविनं

भेदकत्वाभावेऽपि स्वरूपकृतभेदमादाय सप्तत्वसंख्या न विरुध्यते। यदि तु अणुदित्सूत्रेऽण्ग्रहणाद्यण्विषये गुणानां भेदकतैवोचितेति विभाव्यते, तदाऽपि चत्वारो यण इति यथासङ्ख्यमसङ्गतमेव। तद्ध्वनयन्नाह—अतोनास्तीति। तत्खण्डने एवाग्रहो न तु सप्तत्वसंख्यायामिति भावः। शक्यार्थबोधमादायेति। 'ल्वादिभ्यः' (पा०सू० ८।२।४४) इत्यादिनिर्देशोहितितात्पर्यानुपपत्तिग्रहस्य[2] तत्सत्त्वे एव सम्भवेन स बोध आवश्यकः। तत्र च

सप्तत्वसङ्ख्याविरोध इत्यत आह—शास्त्रे इति। एतेन लोके भेद एव, यद्भेदकत्वेन ज्ञापकमस्थिदधीति सूत्रे 'उदात्तः' इति कथनन्तच्छास्त्रे एव तथा कल्पनेत्यत्र ज्ञापकमिति ध्वनितम्। भेदकत्वाभावेऽपीति। एतेन गुणकृतो भेदः शास्त्रप्रवृत्तिप्रतिबन्धको नेति ध्वनितम्। स्वरूपकृतेति। तत्तद्धर्मवैशिष्ट्यस्य भेदसाधकतया सप्तत्वसङ्ख्याया उपपत्तिरिति भावः। अणुदिदित्यत्राऽुदिदित्येव सामञ्जस्येनाण्ग्रहणं भिन्नानां यणां संग्रहार्थमेवेति यण्विषये भेदकत्वपक्ष एवोचित इत्याशयेनाह—यदि त्विति। चत्वार इति। निरनुनासिकानामेव यादीनां यण्छब्दबोध्यत्वात्। तत्खण्डन इति। यथासङ्ख्यखण्डन इत्यर्थः। ननु शक्यार्थबोधमादायेत्यसङ्गतम्, उक्तरीत्या सर्वत्र लक्षणया बोधकत्वस्येष्टत्वादतआह—ल्वादिभ्य इत्यादीति। "ल्वादिभ्यः" इति निर्देशेनोहितः=कल्पितो यस्तात्पर्यानुपपत्तिग्रहस्तस्य शक्यार्थबोधसत्त्वे एव सम्भवः इति शक्यार्थबोध आवश्यकः, लक्षणायाः शक्यार्थोपस्थितिमूलकत्वादिति भावः। उक्तरीत्या दीर्घाजसीत्यस्य चारितार्थ्यादत्र ल्वादिभ्य इत्येवोक्तम्। तत्र चेति। शक्यार्थबोधानन्तरज्ञायमाने वाक्यार्थबोध इत्यर्थः। शक्यार्थोपस्थितिमूलकवाक्यार्थबोधेऽपि "ल्वा-

निर्देशासम्भवः, अणुदित्सूत्रेण अगचोराद्यवर्णेन दीर्घाकारस्यापि ग्रहणेन दीर्घे, नपुंसकह्रस्वेन चोक्तनिर्देशसिद्धेः। न च प्रत्याहाराद्यवर्णेषु अणुदित्सूत्राप्रवृत्तिः तथात्वे पूर्वत्राकपदानुवर्तनेन ग्रन्थोपपादनासङ्गत्यापत्तेः। केचित्तु 'नाऽदिचि' इत्यत्र 'आत्' इति प्रथमान्तम्, तथाच 'अक इचि परे आद्रूपः पूर्वसवर्णदीर्घो न' इत्यर्थः, आकारादिचि परे आद्रूप एव पूर्वसवर्णदीर्घः प्राप्नोतीति तस्यानेन निषेधः। आद्रूपः पूर्वसवर्णदीर्घो नेत्युक्तेः 'हरी' इत्यादौ पूर्वसवर्णदीर्घः सिध्यति इत्याहुः।

१—निर्देशानुमितेत्यर्थः। अनुमानप्रयोगश्चेत्थम् 'इको यणचि' इति शास्त्रघटकमिक्पदम्, इत्यादि जातिचतुष्टयावच्छिन्नविषयकबोधजनकत्वप्रकारकपाणिनितात्पर्यविशिष्टम्, "ल्वादिभ्यः" इत्यादिघटकयण्निष्ठविधेयतानिरूपितोद्देश्यताप्रयोजकत्वात्, यन्नैवं तन्नैवम्, साध्यताऽवच्छेदकसम्बन्धश्च—स्वीयविशेष्यतावत्त्वरूपः।

२—प्रकृते षष्ठ्यर्थे इक्पदशक्यार्थान्वयसम्भवेन अन्वयानुपपत्तिरूपलक्षणाबीजाभावेऽपि "नक्षत्रं दृष्ट्वा वाचं विसृजेत्" इति श्रुतिः मौनव्रतिनो नक्षत्रदर्शने सति वाग्विसर्जनं विधत्ते। मेघावरणे तदसम्भवेन किं कर्तव्यमित्याशङ्कायां नक्षत्रपदस्य तदुपलक्षितकालबोधनतात्पर्येणोच्चरितत्वं स्वीकृत्य तात्पर्यानु-

शक्यार्थबोधमादाय यथासङ्ख्यमस्त्विति वाच्यम्, एवमपि तृतीय-

यथासंख्यसहायेन वाक्यार्थे निष्पन्ने 'स्वादिभ्यः' इत्यादिनिर्देशाल्लक्षणया जायमाने पुनर्वाक्यार्थबोधे लक्षितदीर्घादीनां स्ववाचकान्वयिन्येवान्वय इति भावः। स्थानेऽन्तरतमसूत्रेणैवेति । व्यक्तिपक्षे व्यक्तीनामानन्त्येन संख्याज्ञानाभावाद्यथासंख्यासम्भवाल्लक्ष्यासिद्धेश्चेति भावः।

परे–तु व्यक्तिपक्षे झलादिप्रत्याहारसूत्रेषु सर्वझकारादीनां ग्रहणं दुरुपपादम् । न हि तत्र लक्षणा वक्तुं शक्या, लक्ष्यताऽवच्छेदकाग्रहात् । एवञ्च तत्र प्रत्याहारसूत्रेषु जातिनिर्देशेनैव निर्वाहो नान्यथा । एवञ्च 'अइउण्' इत्यादावपि जातिनिर्देश एवोचितः, अर्द्धजरतीयस्यानौचित्यात् ।

दिभ्यः, इत्यादिनिर्देशानुपपत्तिरस्त्येवेत्यत आह—स्वादिभ्य इत्यादीति । स्ववाचकेति । दीर्घवाचकह्रस्वान्वयिनीत्यर्थः । स्थानेऽन्तरतम इति । सूत्रेणैवेति-मूलस्थैवकारेण यथासंख्यसूत्रं व्यवच्छिन्नमित्याह—व्यक्तिपक्ष इति । एवं व्यक्तिपक्षे दोषमुक्त्वा तस्मिन्पक्ष एव 'स्थानेऽन्तरतमः' इति सूत्रस्य प्रवृत्तिरिति न, किन्तु जातिपक्षेऽपीत्याह=लक्ष्यासिद्धेश्चेति । निरनुनासिकवकारघटितानाम्वादीनामित्यादिलक्ष्याणामसिद्धेरित्यर्थः । यदि यथासङ्ख्यपरिभाषाप्रवृत्तिस्तदाऽनुनासिकोऽपि वकारः कदाचित्स्यात्, भाव्यमानेन सवर्णानाङ्ग्रहणन्नेत्यरिक्ता तु परिभाषा गुणाभेदकत्वाभासस्य सवर्णग्रहणस्य न बाधिका, किन्त्वणुदित्सूत्रप्राप्तसवर्णग्रहणस्यैवास्तीत्याशयेनाह—भाव इति । मूलकाराशय इत्यर्थः । नन्वेवं सति यथासङ्ख्यसूत्रे भाष्ये–'किमुदाहरणम्' 'इको यणचि' 'दध्यत्र' 'मध्वत्र' इत्युक्तं तद्विरोध, इति चेन्न, तस्य भाष्यस्य प्राथमिकोपस्थितिकवर्णाभिप्रायकत्वात् ।

अथ मूलकाराशयमुपवर्ण्य भाष्यकारीयसिद्धान्तानुसारेणाह–परे त्विति । प्रत्याहारसूत्रेषु=प्रत्याहारघटितेषु 'झलो झलि' इत्यादिषु सूत्रेषु । अग्रहादिति । झलामणिभन्नत्वादिति शेषः । तत्र=तेषु । प्रत्याहारसूत्रेषु=प्रत्याहारघटितेषु सूत्रेषु । इदमुपलक्षणम् 'अस्य च्वौ' इत्यादेः । जातिनिर्देश एव । तत्तज्जातेरेवोद्देश्यत्वनिमित्तत्वतात्पर्यकत्वादेव यद्यपि साक्षाज्जातौ तदसम्भवस्तथाऽपि व्यक्तिद्वारा बोध्य इत्युक्तमेव । निर्वाहः=अवात्तामित्यादिलक्ष्याणान्निर्वाहः । एवञ्च=जातिपक्षावश्यकत्वे च । उचित इति । प्रत्याहारनिर्देशस्थले तत्तत्प्रत्याहारेणोद्देश्यबोधनायेत्यादिः

पपत्त्या लक्षणया कालबोधकत्वं यथाऽभियुक्तैरुक्तम्, तथाऽत्रापि तात्पर्याऽनुपपत्तिरेव लक्षणबीजमितिभावः।

१—अणंशे लक्षणा, झलंशे जातिपक्षः, इत्येवं रूपस्येत्यर्थः । अर्द्धजरतीव अर्द्धजरतीयम् इदम्—'समासाच्च तद्विषयात्' ( पा० सू० ५–३–१०६ ) इति सूत्रेण छप्रत्यये सिध्यति। भाष्यसम्मतोऽप्ययम्। तथाहि—'अभिनः' ( पा० सू० ४–१–७८ ) इति सूत्रे भाष्ये–'ष्यङः प्रत्ययत्वम्, आदेशत्वं वेति विकल्प्य प्रत्ययत्वेऽनुबन्धाकरणत्वं समर्थ्य, आदेशत्वेऽप्यनुबन्धो न कर्तव्यः, इत्याश्रित्य इनो यादेशे

चतुर्थाभ्याम् ऋकारऌकाराभ्यां प्रत्येकं त्रिंशदुपस्थितौ ऌवर्णानां रेफादेशस्य, ऋवर्णानां लादेशस्य च प्रसङ्गात् । तस्मादिह 'स्थानेऽ

अत एव 'अणुदित्–' सूत्रे भाष्ये प्रत्याहारेषु, 'अस्य च्वौ' इत्यादौ च उक्तामनुपपत्तिमाशङ्क्य जात्याश्रयणमेव कृतम् । यथासङ्ख्यसूत्रञ्च व्यक्तिसाम्य इव धर्मसाम्येऽपि प्रवर्तते । 'स्यतासी ऌलुटोः' (पा० सू० ३।१।३३) इत्यादौ यथा । नाप्यत्र पक्षे ऋकारादौ लकाराद्यापत्तिः, ऌत्वादिजातेर्ऋकारादावभावात् । न च जातिपक्षे अणुदित्सूत्रेऽण्ग्रहणप्रत्याख्याने 'उपसर्गादृति'(पा०सू०६।१।९१)इत्यादौ ऋकारेण ऌकारग्रहणाय सावर्ण्यवचनस्थाने ऌवर्णस्य ऋवदतिदेशाद् ऌकारे रेफापत्तिरिति वाच्यम्, 'क्लृं इस

अत एव = जातिपक्षाश्रयणतात्पर्यकत्वादेव । उक्तामिति । व्यक्तिपक्ष इत्यादिः । तत्र हि–प्रत्याहारनिर्देशे सवर्णग्रहणमनण्त्वात् । तत्रानुवृत्तिनिर्देशे सवर्णग्रहणमनण्त्वादित्यनेनोक्तामित्यर्थः। एव कृतमिति। एवकारेण लक्षणाव्यवच्छेदः, लक्षणावादिमतेऽण्विषये व्यक्तिपक्षाश्रयणमपिभिन्नप्रत्याहारग्रहणस्थले जातिपक्षाश्रयणमिति यद्वैरूप्यं, तदस्मन्मते नास्ति । एवञ्च यथोत्तरम्मुनीनाम्प्रामाण्यमिति लक्षणाऽश्रयणमप्रामाणिकमिति भावः । जातिपक्षाश्रयणस्याभिप्रेतत्वादेव 'स्थानेऽन्तरतमः' इति सूत्रभाष्ये—'किमुदाहरणम् ? 'इको यणचि' 'दध्यत्र' 'मध्वत्र' यथाङ्ख्येनाप्येतत्सिद्धम्, यत्तु–यथासङ्ख्यसूत्रे 'दध्यत्र' 'मध्वत्र' इत्यस्य स्थानेऽन्तरतमसूत्रोदाहरणत्वप्रदर्शनपरम्भाष्यं तदिकोयणचीत्यादौ सूत्रे, तदुदाहरणे चोभयपक्षे फलांशे वैलक्षण्याभावतात्पर्यकमित्याशयेनाह–यथासङ्ख्यसूत्रञ्चेति । यथेति यदि व्यक्तिसाम्यस्य विवक्षा स्यात्तदा ऌशब्देन ऌङ्लुटोर्बोधनेन तत्र यथासङ्ख्यसम्बन्धो न स्यात् । नचेको यणचीत्यत्र स्थानसाम्यमपि नियामकमिति यदि फलाभेदाय कल्पयसि, तदा ऌकारस्य वकारोऽपि स्यादिति वाच्यम्, 'स्थानेऽन्तरतमः' इत्यत्र तमब्ग्रहणेनान्यूनातिरिक्तस्थानिकादेशस्य ग्रहणात् । यथासङ्ख्यसूत्रस्येको यणचीत्यत्र प्रवृत्तिस्वीकारपक्षे मूलोक्तदोषापत्तिम्परिहरति–नाप्यत्रेति । अतिदेशादिति । समानजातित्वातिदेशादित्यर्थः । वस्तुतो ऋत्वजातिर्ऌकारे

'यङश्चाप्' इति चापोऽभावे 'वाराह्या' इत्यत्र 'ञ्नित्यादिर्नित्यम्' इति प्राप्ताद्युदात्ताभावाय हसंज्ञामकृत्वैवादेश इत्युक्तम् । ततः प्रत्ययत्ववादिनाऽदेशत्वे स्वरसिद्धावपि वृद्धिर्न स्यादित्यर्धजरतीयत्वं स्यादिति दूषणमुक्त्वा प्रत्ययत्वाभिप्रायेण 'न चेदानीमर्द्धंजरतीयं लभ्यम्, वृद्धिर्मम भविष्यति स्वरो नेति । तद्यथा—अर्द्धं जरत्याः कामयन्तेऽर्द्धं नेति । इति प्रत्ययत्वपक्षे अर्द्धजरतीयन्यायाऽपत्तिः परिहृता । अत्र कैयटः–'मुखं न कामयन्तेऽङ्गान्तरन्तु कामयन्ते जरत्याः' इति । अस्य कैयटस्य 'कामिनः' इति शेषः तथाऽन्यत्रापि 'न च जानीमो विषयसन्धायामिवान्तरालेऽवस्थानेऽर्द्धंजरतीयकौशलम्' ( बृह० उप० भा० ) अत्र आनन्दगिरिः–'यथा न जागर्ति न स्वपिति......इति अन्तरालेऽवस्थानं दुर्घटम् । यथा चार्धं कुक्कुट्याः पाकाय, अर्धं च प्रसवायेति कौशलं नोपलभ्यते' इति ।

न्तरतमः' ( पा० सू० १।१।५० ) सूत्रेणैवेष्टसिद्धिरित्यभिप्रेत्याह—
*स्थानत आन्तर्यादिति ।*

शिखार्थं तस्यातिदेशस्यानित्यत्वाऽवश्यकत्वात् । तत्पक्षेऽण्ग्रहणप्रत्याख्याने ऽपि 'अप्रत्ययः' इत्यंशो वाक्यभेदेन विधीयमाने जातिग्रहणप्राप्तसवर्णग्रहणनिषेधकस्तपरसूत्रवदिति 'त्यदादीनामः' इत्यादौ न दोषः । एवञ्चात्र यणपदेन जात्याश्रयणेनापि न सवर्णबोधनमिति 'स्वौजस्–' इत्यादौ अनुनासिकस्थानेऽपि निरनुनासिक एव । अत एव 'स्थानेऽन्तरतमः' सूत्रे

नास्ति, पृथक्पाठस्याक्षरसमाम्नाये कृतत्वात् । अनित्यत्वेति । 'ऋलृक्'सूत्रे पृथक्पाठस्य, धातुपाठे ऋकार-लृकारयोः पृथक्करणस्य चात्र ज्ञापकत्वसम्भवादिति शेषः ।

ननूद्देश्यांश इव विधेयांशेऽपि जातिनिर्देश एव वाच्यः, तथा च 'त्यदादीनामः' इत्यादौ, दीर्घापत्तिरत आह—तत्पक्ष इति । जातिपक्ष इत्यर्थः । प्रत्याख्यान इति । 'सवर्णे ऽण्ग्रहणमपरिभाष्यमाकृतिग्रहणात्' इत्यनेन भाष्यकृता प्रत्याख्यान इत्यर्थः । वाक्यभेदेन=योगविभागेन । 'चोः कुः' इत्यादौ विधेयविषये उदित्करणसामर्थ्यात्सवर्णग्रहणस्यावश्यकतया तदेकवाक्यत्वस्यावश्यकत्वेन योगविभाग आवश्यक इति भावः । न चोच्चारणार्थ एवोकार इति शङ्क्यम्, उद्देश्येऽपि तथात्वापत्तेः । उदिद्ग्रहणसामर्थ्यादिति चेत् ? विनिगमनाविरहेणोभाभ्यां सवर्णग्रहणन्दुर्वारमेव । निषेधक इति । एतेनाधुना प्रसज्यप्रतिषेधार्थको नञिति बोधितम् । अन्यथैकवाक्यतायां हि पर्युदासस्य प्रसक्तिः । सर्वनिषेधकत्वे दृष्टान्तमाह—तपरसूत्रवदिति । यथाऽत्र पक्षे तपरसूत्रस्य तद्वच्च तपरकरणमित्यइउण्सूत्रभाष्योक्त्या सूत्रस्य सार्थक्याय च सर्वनिषेधकत्वम्, तथाऽप्रत्यय इत्यत्रापि कल्पनेति भावः । न च जातिपक्षेऽप्रत्यय इत्यंशोऽपि प्रत्याख्येय इति भ्रमितव्यम्, 'सवर्णेण्ग्रहणमपरिभाष्यमाकृतिग्रहणात्' इत्यनेनाण्ग्रहणप्रत्याख्यानस्यैव भाष्यकृदभिमतत्वनिर्णयात् । तपरसूत्रस्य सवर्णपदानुवृत्त्या नियमार्थत्वपक्षेऽपि फलितनिषेधमादाय दृष्टान्ततयोपन्यास इति बोध्यम् यत्तु—'त्यदादीनामः' इत्यादौ 'पथिमथि' इत्यत्रेव प्रश्लेषेण निर्वाह इति तन्न, 'पथिमथीत्यत्राप्यप्रत्यय इत्यनेन निषेधात् प्रश्लेषानुप्रयोगात्, प्रश्लेषेऽनेकाल्त्वेन सर्वादेशत्वापत्तेश्च । एवञ्च=अप्रत्यय इत्यनेन निषेधे च । अपिना गुणाभेदकत्वस्य परिग्रहः । निरनुनासिक एवेति । यत्र यत्र विधेयता तत्र तत्र सर्वत्रानेन निषेधादेव मतोर्मस्य निरनुनासिक एव वकारः । अत एव तद्वानासामुपधानसूत्रनिर्देशसङ्गतिः । अन्यथा प्रत्यये भाषायामित्यनेन दस्य स्थानेऽनुनासिकापत्तिरित्येकवाक्येन

१—धात्वादिषु ज्ञानकृतलाघवानुरोधेन सर्वत्र ऋकारे, लृकारे वा एकरूपे एवानुबन्धे कर्तव्ये पृथगनुबन्धकरणमतिदेशानित्यत्वे ज्ञापकमिति भावः ।

भाष्येऽस्य तदुदाहरणत्वमाशङ्क्य 'यथासङ्ख्यम्' इत्यनेनापि सिद्धमित्युक्तम्। तेनात्र तयोः फलाविशेष उक्तः। 'उञः' (पा० सू०१।१।१७) इति सूत्रे नव्यानां प्रमाद एव। न च झलादिषु झकारादिभी रूपसादृश्येन सर्वझकारादिप्रतीतिरिति वाच्यम्, अगादिष्वति किञ्चित्सादृश्यमाश्रित्य दीर्घादीनामपि ग्रहणोपपत्तौ 'अणुदित्–' (पा० सू० १।१।६९) सूत्रस्य, तद्वाच्येत्यस्य च वैयर्थ्यापत्तेः, 'ल्वादिभ्यः' इति निर्देशानामीषत्सादृश्येनापि ग्रहणमित्यर्थज्ञापकताया युक्तत्वात्। तदप्युक्तम् 'अइउण्' सूत्रे भाष्ये–'रूपसामान्याद्वा सिद्धम्' इति। अणुदित्सूत्रेऽग्रहणन्तु प्रत्याहाराद्यवर्णेषु णकारादिभिश्चिन्हैः प्रत्याहारसूत्रस्थोऽयमिति प्रत्यभिज्ञासत्त्वादुपायान्तरपरम्, 'आचार्याः कृत्वा न निवर्तन्ते' इति न्यायात्। इदमेषाभि-

---

ध्वनितम्। एवं 'यवलपरे यवला वा' इत्यनेनापि निरनुनासिक एव।

अत एव=जातिपक्षस्याभिप्रेतत्वादेव। उक्तमिति। भवन्मते प्रागुक्तरीत्या यथासङ्ख्यासम्भवेन तदुक्त्यसङ्गतिः स्पष्टैव। तेन=उक्तभाष्येण। अत्र इको यणित्यत्र। उक्त इति। जातिपक्षबोधनद्वारेति शेषः। तयोः=द्वयोः परिभाषयोः। ननु उञिति सूत्रोदाहरणसमये 'किम्विति' इति प्रयोगेऽनुनासिकवकारस्य प्रदर्शनपरदीक्षितादिग्रन्थस्य कथमुपपत्तिरत आह–उञ इति सूत्र इति। नव्यानाम्=दीक्षितप्रभृतीनाम्। जातिपक्षानाश्रयणेऽपि झलादिप्रत्याहारग्रहणस्थले निर्वाहमाशङ्क्य निराचष्टे–न चेति। रूपसादृश्येन=स्वरूपस्य सदृशत्वेन। यथाऽल्पत्व–महत्वकृतभेदापरामर्शेनाल्पत्व–महत्वस्थूलत्वं कृशत्वविशिष्टास्वपि व्यक्तिषु 'घटः' 'गौः' इति प्रत्ययो भवति यथा 'अवत्ताम्' इत्यत्र द्वयोरपि तकारयोर्झलपदबोध्यत्वं भविष्यतीति भावः। किञ्चित्सादृश्यमिति। तुल्यध्वनिव्यङ्ग्यत्वकृतमधुना सादृश्यम्, दृष्टान्ते तु समानावयवसंस्था न कृतम्। न तु जातिकृतम्, जातिपक्षपरित्यागस्य कृतत्वात्। ग्रहणेति। ह्रस्वादिभिरिति शेषः। उक्तार्थे मुनिसम्मतिमपि दर्शयति—'ल्वादिभ्य इति। ईषदिति। एतेन दीर्घाभिव्यञ्जकध्वनेराधिक्येऽपि न क्षतिरिति सूचितम्। युक्तत्वादिति। लक्षणाज्ञापकताऽपेक्षयोक्तार्थज्ञापकतायां लाघवादिति शेषः। स्वोक्तार्थे भाष्यकारस्यापि सम्मतिमाह—तदप्युक्तमिति। तदपि—रूपसादृश्येन सिद्धमित्यपि। अपिना जातिपक्षसमुच्चयः। न चात्र पक्षे ऋकारेण लृकारग्रहणानापत्तिरिति वाच्यम्, तत्रापीषत्सदृशध्वनिव्यङ्ग्यत्वस्य सत्तायाः सत्त्वात् अण्ग्रहणप्रत्याख्यानपरभाष्यमत्र मानम्, अन्यथा फलभेदेन प्रत्याख्यानासङ्गतिः स्पष्टैव।

ननु पक्षद्वयमपि सूत्रकारस्याण्ग्रहणकरणेन नाभिप्रेतमत आह–अणुदित्सूत्र इति। अयम्=अणादिप्रत्याहारघटकोऽकारादिः। उपायान्तरपरमिति। तत्रैवोपायान्तरमित्यर्थः। एतेनास्य त्वावित्यत्र तादृशचिह्नाभावेन तस्य सूत्रस्य दीर्घेऽपि

'अनाचि च' (पा० सू० ८।४।४७) द्वे वेति । 'यरोऽनुनासिके' (पा० सू० ८।४।४५) इति सूत्राद्वाग्रहणमनुवर्तते, इति 'नाज्झलौ' (पा०सू० १।१।१०) इति सूत्रे कैयटः । एवञ्च 'सर्वत्र शाकल्यस्य' (पा० सू० ८।४।५१) इति सूत्रम्, तत्प्रपञ्चभूतं पूर्वोत्तरसूत्रद्वयञ्च नारम्भणीयमिति भावः । यत्तु—'दीर्घादाचार्याणाम्' (पा० सू० ८।४।५२) इति सूत्रे आचार्यग्रहणं पूजार्थमित्यभिप्रेत्य 'वाक्' 'वाक्क्' इति भाष्योदाहृते विकल्पे उपपत्तिचिन्तार्थं क्लिश्यन्ते तन्मुधैव, पूजार्थतायाः प्रामाणिकैरनुक्तेः, 'त्रिप्रभृतिषु' (पा० सू० ८।४।५०) इति सूत्रे शाकटायनग्रहणस्यापि तथात्वापत्तेः । न चेष्टापत्तिः, 'संस्स्कर्ता' इति त्रिसकारपरकैयट-हरदत्तादिग्रन्थविरोधात्, स्वग्रन्थविरोधाच्च । अत एव प्रातिशाख्यभाष्येऽपि 'आ त्वा रथम्' इति

---

प्रेत्य तत्रत्यमण्ग्रहणं प्रत्याख्यातं भाष्ये इत्याहुरिति दिक् ॥

क्लिश्यन्त इति । 'अनचि' इत्यनुवर्त्य पर्युदासपरतया हलि पर एव

---

प्रवृत्त्यर्थमुपायान्तरस्यावश्यकत्वेन सूत्रकृतो न्यूनतेति ध्वनितम् । इदमेव । न्यूनतारूपं दोषमेवेत्यर्थः । भाष्य इति । यथोत्तरम्मुनीनाम्प्रामाण्याज्जातिपक्षाश्रयणमेव वरन्तु लक्षणाऽश्रयणमित्येतेन ध्वनितम् । यत्तु—'ह्रस्वस्य' इति सूत्राद्धस्वग्रहणस्य दीर्घादिति सूत्राद्दीर्घग्रहणस्य चानुवृत्त्या दीर्घादिति पञ्चम्याः 'सेनासुराच्छाया' इति ज्ञापकात्षष्ठ्यर्थकत्वस्य स्पष्टततया ह्रस्वदीर्घयोर्यणादेशेनेष्टसिद्धाविको यणचीति सूत्रे इग्ग्रहणन्त्याज्यम्, रामेश्वरः, रमेशः, दैत्यारिः, श्रीशः, इत्यादौ गुणेन सवर्णदीर्घेन बाधादेवेष्टसिद्धेः तयोर्बाधकत्वे मानन्तु निरवकाशत्वादपवादत्वमेवेति, तन्न, 'अयी उ इत्याह' 'करभोरू उ इत्याह' इत्यादौ 'अप्लुतवदुपस्थिते' इति सूत्रेणाप्लुतवद्भावे कृते यणादेशानापत्तेः । न च प्लुतस्य स्थानेऽप्लुतस्य श्रवणानापत्तेः । न च यणादेशदृष्ट्या प्लुतस्यासिद्धतया न दोष इति वाच्यम्, 'सिद्धः प्लुतः स्वरसन्धिषु' इति सिद्धान्तात् ।

अनुवर्त्येति । दीर्घादाचार्याणामित्यत्रेत्यादिः । पर्युदासेति । शब्दाधिकारेण प्रकृतसूत्रे पर्युदासे इत्यर्थः । तेन पूर्वसूत्रे प्रसज्यप्रतिषेध एव, अन्यथा 'दीर्घादाचार्याणाम्' इति निषेधस्य प्राप्त्यभावो यद्यपि पर्युदासेनोपपादितस्तथाऽपि द्वित्वस्याप्राप्त्या भाष्योदाहरणस्यासङ्गतिरेवेति शङ्काया नावकाशः । पर एवेति । अत्रैवकारेण-

मन्त्रे तकारस्य द्वित्वविकल्प उदाहृतः। माधवेन च 'आस्ते' इत्यत्र सकारस्य द्वित्वविकल्प उक्तः। एवञ्च 'धात्रंशः' इत्यत्र तकारस्य द्वित्वमसदित्युक्तिरेवासतीति दिक्॥

नित्यनिषेध इति व्याख्यानेनेति भावः। विकल्प उक्त इति। एवञ्च 'सर्वत्र शाकल्यस्य' (पा० सू० ८।४।५१) इतिवदिदमपि प्रपञ्चार्थमिति भावः। असतीति। यत्तु–'नादिनी' (पा० सू० ८।४।४८) इत्यादौ वृत्तौ 'अनचि' इति प्राप्तिमुद्भाव्य 'त्रिप्रभृतिषु' (पा० सू० ८।४।५०) 'सर्वत्र' इत्यनयोः प्राप्तिमनुद्भाव्य पुनः 'दीर्घात्' (पा० सू० ८।४।५२) इत्यत्र 'अनचि' इति प्राप्तिरुद्भाविता हरदत्तेन। तस्यायमाशय ÷ निषेधविकल्पे प्राप्त्युद्भावनं नाऽवश्यकम्, तद्धि विकल्पे विधिविकल्पस्य फलितत्वेन विधेरेव अप्राप्तविषयविकल्पसम्भवाद्, नित्यनिषेधे तु तदुद्भावनमावश्यकमिति तन्न,

वसानव्यावृत्तिः। नित्येति। तन्मते आचार्यग्रहणस्य पूजार्थतया निषेधस्य नित्यत्वमिति भावः। व्याख्यानेनेति। तन्मते व्याख्यानेन। एतेन हलीति वक्तव्येऽनर्चीत्युक्तिः प्रसज्यप्रतिषेधार्थैवेति ध्वनितम्। ननु सर्वत्रेति सूत्रे शाकल्यपदस्य विकल्पार्थकत्वेनात्वेत्यादिप्रयोगस्य निर्वाहेऽत एवेत्यादि उक्त इत्यन्तग्रन्थस्य प्रकृतेऽनुपयोग इत्यत आह– एवञ्चेति। माधवाद्युक्तविकल्पाङ्गीकारे चेत्यर्थः। इतिवदिति। अनर्चीति सूत्रे विकल्पानुवृत्तेः सर्वसम्मतत्वेन तेनैव सर्वेष्टसिद्धौ सर्वत्रेति सूत्रस्य वैयर्थ्यं यथा भवन्मते, तथा दीर्घादाचार्येति सूत्रस्याप्याचार्यपदघटितत्वे विकल्पार्थकतयाऽस्यापि प्रपञ्चरूपत्वमेवेति वैयर्थ्यन्दुर्वारमिति भावः। इदम् = दीर्घादिति सूत्रम्। अपिना सर्वत्रेत्यस्य संग्रहः। प्रक्रियाव्याख्यानपरतत्पौत्रोक्तिमनुवदति–यत्त्विति। वृत्ताविति। उक्तमिति शेषः। उद्भाव्य = उपपत्तिपूर्वकं व्याख्याय। तेन समानकर्तृत्वस्योपपत्तिः। एवञ्चयनङ्काशिकापदमञ्जर्योर्नादिन्येति सूत्रे प्राप्तिविचारस्य क्वचित्पुस्तके उपलम्भाभिप्रायेण। पदमञ्जर्यामेव प्राप्त्युल्लेखे तु वृत्तावित्यस्य व्याख्यानभूते पदमञ्जरीग्रन्थे इत्यर्थः। एवं पौत्रोक्तेरयमाशयः–पूजार्थतायाः प्रामाणिकैरनुक्तेरित्युक्तम्, मुनित्रयस्यौदासीन्येनाचार्यग्रहणस्य पूजार्थत्वलाभात् माधवोक्तिस्त्वयुक्ता, उक्तस्य 'वाक्' इत्यादिप्रयोगस्योक्तरीत्योपपत्तेः। एवञ्च यथा 'नादिनीति' नित्यो निषेध इति तत्रानर्चीत्यस्य प्राप्त्युद्भावनं तथा दीर्घादित्यपि नित्यमित्यत्रापि प्राप्त्युद्भावनमावश्यकमेव। 'त्रिप्रभृतिष्विति' सर्वत्रेति च वैकल्पिकम्, शाकटायनग्रहणशाकल्यग्रहणयोर्विकल्पार्थत्वादिति। फलितत्वेनेति। अभावाभावस्य प्रतियोगिरूपत्वान्निषेधस्य प्रवृत्तिपक्षे विधेरप्राप्त्या फलितत्वेनेत्यर्थः। तथाऽत्र प्राप्त्युद्भावनन्नावश्यकमिति भावः। नित्यनिषेधे त्विति। 'नादिनी' 'शरोऽचि' 'दीर्घात्' इति सूत्रत्रये इत्यर्थः। अभाव-

स्थानिवदादेशः । ( पा० सू० १।१।५६ ) 'धात्वङ्गकृत्तद्धिताव्ययसुप्तिङ्पदादेशाः' इति प्राचोक्तम् । तत् परिगणनम्, उदाहरणमात्रं वा ?। नाद्यः, सिच्क्सच्चङ्ङादीनां श्नादेशस्य शानशश्चासङ्ग्रहा-

---

विकल्पेऽपि निषेधप्रकरणान्नञुल्लेखस्यावश्यकत्वेन प्राप्त्युद्भावनस्यावश्यकत्वात्, मध्ये नञोऽसम्बन्धो मण्डूकानुवृत्तिरग्रे इत्यत्र मानाभावाच्च, 'सर्वत्र' इति सूत्रेऽस्य द्वित्वमात्रनिषेधकतेति बोधयितुं तदनुल्लेखाच्च, 'त्रिप्रभृतिषु' इत्येतद्विषये नकारषकारयोर्द्विर्वचनाभावः, इति मिश्रग्रन्थेन प्राप्त्युल्लेखस्य कृतप्रायत्वाच्च, वृत्ति-हरदत्तयोः 'नादिन्या' 'शरोऽचि' ( पा० सू० ८।४।४९ ) इत्यनयोरपि प्राप्त्युल्लेखस्य बहुषु पुस्तकेष्वनुपलम्भाच्चेति दिक् ॥

चङ्ङादीनामिति । आदिना चिण् । न केवलं च्ल्यादेशानामेवासंग्रह

---

स्य प्राप्तिपूर्वकत्वादिति शेषः । एवञ्च राष्ट्रादिसिद्धये त्रिप्रेति सूत्रमावश्यकमेव । सर्वत्रेत्यस्य तु तत्र वापदस्य सम्बन्धेन विकल्पस्य सिद्धत्वादनावश्यकत्वमेवेति सूचितम् । विकल्पेऽपीति । सूत्रद्वयेऽप्राप्तविषयविधिविकल्पाङ्गीकारेऽपीत्यर्थः । अपिना निषेधविकल्पपक्षसमुच्चयः । प्रकरणादिति । नादिनीति सूत्रानन्तरमस्य पाठेन निषेधार्थकनञः सर्वत्र सम्बन्धादिति भावः । आवश्यकत्वादिति । एतेन तत्र प्राप्त्यकथनेन तस्य ग्रन्थस्य न्यूनतेति बोधितम् । ननु तयोः सूत्रयोर्नञोऽसम्बन्धेन न प्रकरणलाभ इत्यत आह-मध्य इति । द्वित्वमात्रेति । अत्र मात्रपदङ्गात्स्यै तेन 'अचो रहाभ्याम्' इत्यस्यापि सङ्ग्रहः । नकारषकारयोः-इन्द्रः राष्ट्रमित्युदाहरणघटकयोरिति शेषः । उल्लेखस्येति । द्विर्वचनशब्देन प्रथमोच्चारितेन प्राप्तेर्लाभादिति भावः । अनुपलम्भादिति । एतेन भवदीया कल्पना असङ्गतैवेति ध्वनितम् । दिगिति । दिगर्थस्तु आचार्यग्रहणस्य पूजार्थत्वे राष्ट्रमित्यादौ विकल्पार्थं 'त्रिप्रभृति' इत्यस्य प्रवृत्तिरवश्यमेव वक्तव्येत्याशयेन त्रिप्रभृतीत्यस्य सूत्रस्य राष्ट्रमित्युदाहरणप्रदर्शनपरवृत्तिग्रन्थव्याख्यानावसरे दीर्घादित्यस्यासिद्धत्वात् त्रिप्रभृतीत्ययमेव प्रतिषेधो भविष्यतीति सन्दर्भ इति मिश्रोक्तिविरोधः, 'वाक्' 'वाक्क्' इति भाष्योदाहरणविरोधश्च । न चानचीत्यस्यानुवृत्त्या तस्य पर्युदासपरतया व्याख्यानान्न तदुदाहरणासङ्गतिरिति वाच्यम्, मण्डूकानुवृत्तिकल्पनायाम्मानाभावात्, तथा कल्पनायामपि शब्दाधिकारकल्पनायां साधकाभावेनोक्तार्थालाभाच्च ॥

नन्वादिशब्दोपादानमसङ्गतम्, च्ल्यादेशानां सर्वेषामुपादानादत आह-आदिनेति । तदभावे स्थानिवद्भावाभाव इत्यर्थः । यदि विकरणादेशस्य स्थानिवद्व्यवहाराविषयत्वं तदा तेषामादेशानामार्धधातुकत्वेन, प्रत्ययत्वेन, अङ्गसंज्ञानिमित्तत्वेन च

इत्याह-आऽदेशस्येति। तदभावे ह्यवादिषातामित्यत्रेड् न स्यात्, क्सादेः कादीनामित्वं न स्यात्, शानचः शस्य च तन्न स्यात्, मा हि दर्शादित्यादौ अङि गुणो न स्यादिति भावः। ननु सिजादीनां प्रत्ययाधिकारे पाठात् श्नम्वत् प्रत्ययत्वमस्तीति न स्थानिवत्त्वोपयोगः। न च तेषां प्रत्ययत्वे च्लिविधानं व्यर्थम्, 'मन्त्रे घस-( पा० सू० २।४।८० ) इति सूत्रे चङङ्सिचामिति त्रयाणां ग्रहणे गौरवापत्तेः, सिचो लुकि तद्विषये 'आदिः सिचः' ( पा० सू० ६।१।१८७ ) इति स्वरापत्तेश्चेति भाष्यकैयटयोः स्पष्टमित्यरु-

ग्रहणं न स्यात्, इष्टापत्तौ क्रमेण दूषणान्याह—अवादिषातामिति। अत्रावाधिषातामिति युक्तः पाठः। इड् न स्यादिति। आर्द्धधातुकत्वाभावादिति शेषः। केचित्त्ववादिषातामित्यत्रात्मनेपदसमर्थनाय कर्मव्यतिहारे तङिति वदन्ति। प्रत्ययत्वस्य फलमाह—क्सादेरिति। आदिना चङादेशस्य परिग्रहः। बहुवचनम्प्रयोगबाहुल्याभिप्रायेण। तन्न स्यादिति। प्रत्ययत्वस्याभावेन लशक्वतद्धित इतीत्संज्ञा शस्य न स्यात्। तृतीयस्य फलमाह—मा हीति। ऋदृशोऽङीत्यस्याङ्गाधिकारे पाठादिति भावः। प्रत्ययाधिकारे पाठात्प्रत्ययत्वे फलमाह—श्नम्वदिति। यद्यप्यस्य मित्त्वसामर्थ्यादागमत्वन्तथाऽपि प्रत्ययत्वम्प्रत्ययाधिकारे पाठादत एव शस्येत्वसिद्धिः। स्थानिवत्त्वोपयोग इति। औपदेशिकार्द्धधातुकत्वे प्रत्ययत्वमादायेष्टसिद्धेरिति भावः। एतन्मते आदेशत्वेऽपि प्रत्ययत्वन्द्रढयितुं शङ्कते—न चेति। व्यर्थमिति। च्लेः क्वाप्युच्चारणाभावेन सिज्लुर्ङ्गति वाच्यम्, चङादयस्त्वपवाद इति भावः। शङ्काम्परिहरति—मन्त्र इति। 'मन्त्रे' इति सूत्रे भवन्मते च्लिविधानस्याभावेन च्लेरित्यस्य वक्तुमशक्यत्वादिति भावः। त्रयाणामिति। ग्रहणमिति शेषः। धयतेराकारान्तात्परयोश्चङ्सिचोर्लुगर्थमेतयोर्ग्रहणं, घसर्थमङोऽन्यार्थंसिच इति विवेकः। सिचो लुकि दोषान्तरमाह—सिचो लुकीति। इदञ्च यत्र सिजपवादप्रत्ययस्याप्राप्तिस्तद्विषये बोध्यम्। तेन घस्णगम्धातोः सिचोऽसत्त्वेपि न ग्रन्थासङ्गतिः। स्वरापत्तेरिति। प्रत्ययलक्ष-

१—वदधातोरात्मनेपदस्य दुर्लभत्वात् कर्मव्यतिहारे तत्त्वेऽपि वृद्धेर्दुर्वचत्वात् 'अत्राधिषाताम्' इत्येवोचितम्। अन्ये तु वादशब्दादाचारक्विबन्तात्कर्मणि लुङि एतद्रूपम्। न चात्र सिच आर्धधातुकत्वाभावेऽपि चिण्वदिटा सिद्धिः, अस्योपदेशाभावेन तदप्राप्तेरित्याहुः। वस्तुतस्तु स्यसिजित्यस्य उपदेशेऽजन्तानामित्यर्थे ण्यन्तेऽव्याप्तिः, उपदेशे योऽच् तदन्तानामित्यर्थे 'आरिता' इत्यादौ नित्यत्वाद् गुणे, रपरत्वे च चिण्वद्भावासिद्धिः, किञ्च 'अवादिषाताम्, इत्यत्रापि औपदेशिकं घञोऽचमादाय चिण्वद्भावेनैव सिद्धिः, नचार्धधातुकत्वाभावे चिण्वदिटोऽप्यप्राप्तिः, तत्रार्धधातुकस्य अप्रकृतत्वेनानुवृत्तेरसम्भवात् तस्मात् स्यादिप्रत्ययोपदेशकालेऽजन्तानां चिण्वद्भाव इति सिद्धान्तः, तथात्वेऽप्यत्र चिण्वद्भावो दुर्वार एवेति सुधियो विभावयन्त्वित्युपाध्यायाः।

२—'ऋदृशोऽङि गुणः' ( पा० सू० ७-४-१६ ) इत्यस्याङ्गाधिकारीयत्वात्प्रत्यासत्त्याऽङ्गाधिकारीयकार्याणामङ्गसंज्ञानिमित्तकप्रत्ययनिमित्तकत्वनियमादिति भावः।

पत्तेः। नान्त्यः, अव्ययस्याङ्गपदाभ्यां पृथग्ग्रहणवैयर्थ्यात्। प्रस्तुत्येति

चेराह–चेति। तेन 'अग्रहीत्' इत्यादाविडादेशस्य ईटोऽसंग्रह इत्यर्थः। इदमुपलक्षणम्–अव्ययस्य पदात्पृथग्ग्रहणवैयर्थ्यमपि दोष इति बोद्धव्यम्। अव्ययस्येति। अत्र त्वस्यैव दोषत्वमिति भावः। नन्वव्ययस्याङ्गत्वे फलाभा-

णेनेत्यादिः। 'सिचः' इति सूत्रेण सिजन्तस्याद्युदात्त इत्यर्थकेनाद्युदात्तत्वापत्तिरित्यर्थः। न च 'न लुमता' इत्यस्य प्राप्त्या न दोष इति वाच्यम्, लुमता लुप्ते प्रत्यये यदङ्गं तदुद्देश्यककार्ये एव निषेध इति सिद्धान्तात्। अत एव 'पञ्चभिः क्रोष्ट्रीभिः क्रीतङ्कुलं 'पञ्चक्रोष्टृ' इत्यत्र तृज्वत्त्वं भवति, अङ्गस्य क्रोष्टुस्तृज्वत्त्वमित्यर्थेन तद्धितार्थेति समासे ठको 'अध्यर्द्ध' इति लुकि लुक् तद्धितेति स्त्रीप्रत्ययस्यापि लुकि 'स्वमोर्नपुंसकात्' इति सोर्लुकि कृतेऽपि प्रत्ययलक्षणेनाङ्गत्वस्य सत्त्वात्। न चैवं सति वृषण्वस्वश्वयोरित्यनेन वृषण्वसुरित्यत्र भसंज्ञायामल्लोपोऽन इति सूत्रेणान्नन्तस्य भसंज्ञकाङ्गस्यानोऽकारस्येत्य-र्थकेनालोपापत्तिरिति वाच्यम्, प्रत्यासत्त्याऽङ्गसंज्ञा–भसंज्ञयोर्यत्रैकनिमित्तकत्वं तत्रैव प्रवृत्तेरङ्गीकारात्। न चैवमपि 'मसृष्टः' इत्यत्र मृजेर्वृद्धिर्दुर्वारा, भवद्रीत्या मृजेरङ्गत्वात्। 'न लुमता' इति निषेधस्याङ्गसंज्ञायामप्रवृत्तेर्भवतैवोपपादनादिति वाच्यम्, 'क्ङिति च' इति सूत्रेण ङिन्निमित्तप्रतिषेधस्य प्राप्तेस्तत्राङ्गसंज्ञाया अनपेक्षणेन 'न लुमता' इति निषेधेन न क्ङितीत्यस्य प्राप्तिरित्यस्य वक्तुमशक्यत्वात्, 'धातोः कार्यमुच्यमानन्त-त्प्रत्यये' इति निषेधाच्च।

नन्वादिः सिच इत्यस्य वैकल्पिकतया छन्दस्यपाठ्यमानरूपस्य वक्तुमशक्यत्वेन न स्वरापत्तिरूपदोष इत्यत आह–चेतीति। तेन सिच एव स्थाने क्साद्यादेशविधानमिति पक्षे ऽपुषन्नित्यत्र जुसापत्तेर्लौकिके तादृशप्रयोगे स्वरापत्तेश्च परिग्रहः। यदि तु च्लि-रुत्सर्गः, क्सादयो ऽपवाद इत्याश्रीयते तदा न दोषः इत्यवधेयम्। परिगणने तु दोष एवेत्याह–तेनेति। परिगणनेनेत्यर्थः। नचात्र स्थानीत्संज्ञकटकारोपलक्षितो नत्वादेश इतीट इत्यसङ्गतमिति वाच्यम् स्थाने निष्ठस्येत्संज्ञकटकारोपलक्षितत्वस्यारोपाभिप्रायेणै-वमभिधानात्। इदम्–अग्रहीदित्याद्यसिद्धिरूपदूषणम्। अव्ययस्येति। अस्य पृथग्ग्रहणेत्यत्रान्वयः।

अत्र=अन्त्यपक्षे। दोषत्वमिति। 'ब्राह्मणवशिष्ठ' न्यायानाश्रयण इत्यादिः। अत एवाह–इति भाव इति। एतेनायम्पक्षो निर्दुष्ट इति ध्वनितम्। 'अव्ययादा-प्सुपः' इति यस्मिन्काले प्रवर्तते तस्मिन्काले आकडारीयसंज्ञाविषये यथोद्देशपक्षा-श्रयणेनाङ्गसंज्ञाप्रवृत्तौ प्रत्ययलोपेऽपि प्रत्ययलक्षणेन तत्प्रवृत्तौ बाधकाभाव इत्या-शयेनाह–अङ्गत्व इति। उक्तरीत्या पञ्चेत्यत्र पदसंज्ञा यथा प्रवर्तते, भाविफलसत्त्वात्,

१—'ग्रहोऽलिटि'इत्यनेन दीर्घीभूतेकारस्य स्थानिवत्त्वेनेट्त्वात् 'इट ईटि'इति लोपः सिध्यतीति भावः।

वृत्तिकारोक्तं तदुदाहरणमपि मन्दम्, क्त्वामात्रस्यानव्ययत्वात्, कृत्त्वेन सिद्धत्वाच्चेत्याशयेनाह—*आदेश इति*। अनल्विधाविति

वेन, प्रत्ययस्य लुका लुप्तत्वेन च तदप्राप्त्या कथं तेनाव्ययसंग्रहोऽत आह—पदेति। तत्त्वं च ततः परस्य निघातार्थमावश्यकम्, प्रत्ययलक्षणेन सुबन्तत्वाच्च तत्त्वमिति भावः। सिद्धत्वाच्चेति। अत एवात्र तुक्। न च 'सर्वे सर्वपदादेशाः' इति न्यायेन 'प्रस्तुत्वा' इत्यस्य स्थाने 'प्रस्तुत्य'इत्यादेशे तस्याव्ययत्वसिद्धिरिति वृत्त्याशय इति वाच्यम्, अर्थवत्त्वेव स्थानित्वमिति

तत्राऽत्र फलं नास्तीति भावः। ननु फलाभावेऽपि पर्जन्यन्यायेनाङ्गसंज्ञा भविष्यति, लुक्प्रवृत्तिसमकालमेव संज्ञायाः प्राप्तेः सत्त्वात्। यद्येकस्मिन्काले स्थानित्वनिमित्तत्वयोर्विरोधेन, लुग्विधेः सर्वतो बलवत्त्वेन च तस्यैवादौ प्रवृत्तिर्भविष्यतीति ब्रूषे तर्ह्यस्त्वादौ लुक्, तथाऽपि प्रत्ययलक्षणेन लुगुत्तरमपि सा भविष्यतीत्यत आह—लुका लुप्त इति। अयम्भावः—'न लुमताङ्गस्य' इति सूत्रे 'नलुमता तस्मिन्' इति न्यासो वार्तिककृता 'लुमति प्रतिषेधे तन्निमित्तग्रहणम्' इत्यनेन बोधितः, लुमता लुप्तो यः प्रत्ययस्तस्मिन्परे यत्पूर्वन्तदुद्देश्यकं यत्कार्यन्तत्र कर्तव्ये प्रत्ययलक्षणन्नेति तदर्थः। एवञ्च तद्वार्तिकैकवाक्यतया सूत्रकारमतेऽपि फलभेदाभावाय लुमता लुप्ते प्रत्यये परे यदङ्गं यत्पूर्वन्तस्य यत्कार्यमाङ्गमनाङ्गं वा तस्मिन् कर्तव्ये निषेध इत्येवार्थो, न तु लब्धाङ्गसंज्ञकत्वस्यापि निवेश इति निषेधस्याङ्गसंज्ञायामपि प्रवृत्तिर्भविष्यतीति। न च "पञ्चभिः क्रोष्ट्रीभिः क्रीतङ्कुलं पञ्चक्रोष्टृ" इत्यस्य सिद्धये लब्धाङ्गसंज्ञकत्वनिवेश आवश्यकः, अङ्गस्य क्रोष्टुस्तृज्वत्त्वमिति सूत्रार्थात्, तत्र हि—तद्धितार्थेति समासे ठको लुकि 'लुक्तद्धिते' इति स्त्रीप्रत्ययस्य ङीपो लुकि सोर्लुकि कृतेऽपि तृज्वद्भावस्य सिद्धिः। स्पष्टञ्चेदं "युवाखलाकौ" इत्यत्र भाष्यकैयटयोरिति वाच्यम्, तस्य ग्रन्थस्य "न लुमता" इत्यस्यानित्यत्वाभिप्रायकत्वात्। अत एव प्रियतिस्र कुलमिति प्रयोगोपपत्तिः। तदप्राप्त्या = अङ्गसंज्ञाया अप्राप्त्या। तेन = अङ्गशब्देन। ननु सुपो लुकि पदसंज्ञाऽपि कथमत आह—तत्त्वञ्चेति। पदत्वञ्चेत्यर्थः। निघातार्थमिति। 'प्रादुर्भवति' 'प्रस्तुत्य भरती'त्यादौ "तिङ्ङतिङः" इति निघातार्थमित्यर्थः। एतेन फलसत्त्वमुक्तम्। सुबन्तत्वाच्चेति। एतेन न लुमतेति निषेधाप्रवृत्तिं सूचयति पदसंज्ञाया लुप्तप्रत्यये यः पूर्वस्तन्मात्रोद्देश्यकत्वाभावात्। चस्त्वर्थे। तत्त्वम् = पदत्वम्।

कृत्त्वस्यावश्यकतां ध्वनयति—अत एवेति। कृत्त्वास्यावश्यकत्वादेवेत्यर्थः। अत्र= प्रस्तुत्येत्यत्र। ननु कृत्त्वमात्रस्यानव्ययत्वेऽपि तदन्तस्याव्ययत्वेन तदादेशस्य समुदायस्याव्ययत्वेनाव्ययोदाहरणं मूलोक्तं सम्यगेवेत्यर्थः, सोपपत्तिकमनूद्य दूषयति—न चेति। अर्थवत्त्वेन = भावार्थाभिधायकत्वेन। अस्य तत्त्वम् 'सर्वे सर्वपदादेशाः'

किम्? तेन, तस्मात्, तस्य, तस्मिंश्च विधौ मा भूत्। तत्र अलः विधौ यथा—'व्यूढोरस्केन' अत्र सकारस्य स्थानिवत्त्वेन

तात्पर्येण क्त्वोऽप्यर्थवत्त्वेन तादृशस्थान्यादेशभावकल्पने मानाभावादिति दिक्। अनल्विधाविति किमिति। विधिग्रहणविशिष्टं किमर्थमिति प्रश्नः। णत्वं प्राप्तमिति। न च सकारे स्वतोऽङ्भिन्नत्वसत्त्वादड्भिन्नव्यवाये नेति निषेधात्कथं णत्वप्राप्तिरिति वाच्यम्, अतिदिश्यमानधर्मविरुद्धस्वाश्रय-

इत्यत्र पदशब्दो ह्यर्थवत्पर' इत्याशयः। क्त्वादीनां क्वचिदनर्थकत्वेन व्यवहारस्तु प्रकृत्यर्थातिरिक्तार्थाभावेन बोध्यः। तादृशेति। समुदाये इत्यर्थः। मानाभावादिति। श्रौतस्य स्थान्यादेशभावस्य यत्र स्थानिनि आनर्थक्यन्तत्र समुदायस्य स्थानित्वमिति आनर्थक्यमेव तादृक्कल्पनायां मानन्तथाऽत्र नास्तीति भावः। ननु जहत्स्वार्थावृत्तिरिति पक्षे समुदायादेशत्वकल्पनमेव युक्तमत आह—दिगिति। रूढेरभावेन जहत्स्वार्थायास्तस्या अङ्गीकाराभावः। प्रक्रियादशायान्तदनङ्गीकारश्चावश्यकोऽत एव 'सुपन्थाः' इत्यादावात्वस्य, प्रकृते प्रयोगे तुकश्च सिद्धिरिति।

नन्वनल्विधाविति। 'द्युकामः' इत्यादिप्रयोगसिद्ध्यर्थमावश्यकमेवेति प्रश्नानुपपत्तिरत आह—विधिग्रहणविशिष्टमिति। 'द्युकामः' इत्यादिसिध्यर्थमनलीत्येव वाच्यमित्याशयः। उत्तराशयस्तु षष्ठीसमासेनालाश्रये विधौ नेत्यर्थेन सकलमूलोक्तप्रयोजनसिध्यर्थं तस्यावश्यकत्वमिति। ननु तृतीयान्तार्थाभावेऽपि "व्यूढोरस्केन" इत्यस्य नासिद्धिः, ? "रषाभ्याम्" इति पञ्चमीनिर्देशेन 'तस्मादिति' परिभाषायाः प्रवृत्तिसम्भवात्। अत एव "आदर्शेन" इत्यत्र न णत्वम्। न च सौत्रव्यवायपदविरोध इति वाच्यम्, अडादिभिन्नव्यवधानेनेत्यर्थात्। अत एव क्षुभ्नादिषु क्षुभ्नशब्दपाठस्य चारितार्थ्यम्। भाष्यकारमतेऽपि योगविभागेनोक्तार्थलाभाच्च। तच्चाङ्भिन्नत्वं स्वतो ऽस्त्येवेत्याशयिकामाशङ्कान्निराकरोति—नचेति। निषेधादिति। नियमशास्त्राणान्निषेधमुखेन प्रवृत्तिरिति पक्षे निषेधः स्पष्ट एव। विधिरूपेण प्रवृत्तिः सामान्यशास्त्रतात्पर्यसङ्कोच इति पक्षेऽपि फलितनिषेधमादायेत्थमभिधानम्। अतिदिश्य-

१—ननु 'अड्भिन्नव्यवाये न' इति वचनाभावादिदमसङ्गतमिति, चेन्न, भाष्ये—'आदर्शेन'इत्यादावडादिव्यवायसत्त्वात्प्राप्तणत्ववारणाय 'व्यवाये' इत्येको योगः, तस्य च रषाभ्याम्परस्य नस्य व्यवाये णत्वमित्यर्थः। तथाचानेन 'रामेण' इत्यादाविवादर्शेनेत्यत्रापि प्राप्तणत्वस्यैव 'अट्कुप्वाङ्नुम्' इति नियमसूत्रकल्पितेन 'अडादिभिन्नव्यवाये णत्वं न' इति वचनेन निषेधस्य वक्तुं शक्यत्वात्। 'व्यवाये' इत्यनेनाडादिव्यवधानेऽपि णत्वसिद्ध्या 'अट्कुप्वाङ्नुम्' इति नियमार्थम्। तस्य निषेधमुखेन प्रवृत्तौ लक्षणया अडादिभिन्नव्यवाये णत्वं नेत्यर्थं इति कल्पितवचनमादाय तद्ग्रन्थप्रवृत्तेः। नियमस्य विधिमुखेन प्रवृत्तौ तु आर्थिकार्थकथनं तत्।

विसर्गवदट्त्वमाश्रित्य 'अड्व्यवाये' ( पा० सू० ८।४।२ ) इति णत्वं प्राप्तम् । अलः परस्य—'द्यौः' 'पन्थाः' हल्ङ्याब्भ्यो दीर्घात्—इति लोपो न । अलो विधौ—'द्युकामः' वलि लोपो न । अलि विधौ—यजेः क्तः 'क

धर्मप्रयुक्तकार्याभावस्यातिदेशस्वभावसिद्धत्वात् । इदञ्चासिद्धवत्सूत्रे कैयटे स्पष्टम् । द्युकाम इति । यद्यपि वत्वं हल्त्वाद्यपेक्षया विशेषधर्मस्तथाप्येतद्वाक्योपप्लुते 'वकारवदुकारः' इति वाक्ये उपात्तधर्मापेक्षया न तस्य तत्त्वम्, सूत्रक्लृप्तस्थान्यादेशभावमादायैवैतत्क्लृप्तवाक्योपप्लवादिति भावः॥

मानो यो धर्मस्तद्विरुद्धो यः स्वाश्रयधर्मस्तत्प्रयुक्तकार्याभाव इत्यर्थः । स्वाश्रयः= आदेशनिष्ठः । कार्येति । कार्यातिदेशस्य प्राधान्याभिप्रायेण । शास्त्रातिदेशोऽपि कार्यातिदेशादभिन्न एव फलत इत्यभिप्रायेण—स्वभावेति । यथा सिद्धत्वासिद्धत्वयोर्विरोधेन जहीत्यत्रासिद्धवदत्रेत्यनेनासिद्धत्वातिदेशेऽपि स्वाश्रयो हेर्लुङ् न भवति । असिद्धवत्सूत्रन्तु शाधीत्यत्र स्थानिप्रयुक्तस्य धिभावस्य झलन्तत्वस्य बुद्ध्या प्रवृत्तिसम्पादनेन चरितार्थम् । इदम् = स्वभावसिद्धपूर्वोक्तम्' न च ब्राह्मणवदस्मिन्क्षत्रिये वर्तितव्यमित्यत्रातिदिश्यमानो धर्मो ब्राह्मण्यन्तत्प्रयुक्तकार्यविरुद्धस्याध्यापनप्रतिग्रहनिवृत्तिरू-

१—'घटाभाववद्भूतलम्' इति निश्चयसत्त्वे 'घटवद्भूतलम्' इति बुद्धेरदर्शनात् 'तद्वत्ताबुद्धिम्प्रति तदभाववत्तानिश्चयस्य प्रतिबन्धकत्वम्' इति नियमः । प्रकृते—'सकारोऽड्भेदवान्' इति बुद्धेरतिदेशसामर्थ्यात् स्थानिवत्सूत्रबोधितया 'सकारोऽट्त्ववान्' इति बुद्ध्या बाधादड्भिन्ननिमित्तककार्याभावः । न चाड्भेदवत्ता बुद्धिम्प्रति अड्भेदाभाववत्तानिश्चयस्यैव प्रतिबन्धकत्वात् 'सकारोऽट्त्ववान्' इति अतिदेशबोधितनिश्चयस्यातथात्वात् प्रतिबन्धकत्वाभावः, 'समनियतधर्मयोरैक्यम्' इति सिद्धान्ताद् अड्भेदाभावस्याट्त्वस्य चाट्येव सत्त्वेनाट्त्वस्याप्यड्भेदाभावरूपत्वात् भेदस्य प्रतियोगिताऽवच्छेदकेनैव विरोधात्तत्त्वस्य सुवचत्वादिति भावः ।

२—'असिद्धवत्' ( पा० सू० ६-४-१९ ) इति सूत्रे भाष्ये—'इहाप्यसिद्धवचनमादेशलक्षणप्रतिषेधार्थम्, उत्सर्गलक्षणभावार्थश्च । तत्र आदेशलक्षणप्रतिषेधार्थं तावत्—'आगहि' 'जहि' इत्युक्तम् । तत्र वतिग्रहणाभिप्रायेण इहापि इति भाष्यप्रतीकमादाय कैयटेनोक्तम्—'अन्ये त्वाहुः—स्वाश्रयमपि यथा स्यादित्येवमर्थं वत्करणम् । तेन 'देगतुः' इत्यत्र स्वाश्रयैकहल्मध्यगताश्रयानेत्वाभ्यासलोपौ भवत इति । एतदपरे न मृष्यन्ति—सत्यसतिऽवावतावाऽतिदेशिकाविरुद्धस्वाश्रयकार्यानिवृत्तिः, सिद्धत्वासिद्धत्वयोर्विरोधात् कथं वतिना सिद्धत्वस्य प्रापणम् इति । 'जहि' अत्र हि जादेशस्येत्यादि तु कैयटे नोपलभ्यते ।

३—'सामान्यातिदेशे विशेषानतिदेशः' इति न्यायेन हल्त्वापेक्षया वत्वस्य, वत्वादेश्च विशेषधर्मत्वेनातिदेशाप्राप्त्याऽनल्विधावित्यस्य 'द्युकामः' इत्याद्युदाहरणासङ्गतिरिति, चेत्, न, सामान्यतः स्थानिवृत्तिधर्मातिदेशस्वीकारे 'यूष्णः' इत्यादावपि जरत्वातिदेशापत्त्या जरसापत्तिरिति संग्राहकवाक्यस्य 'स्थानिवदादेशः' इत्यस्यावृत्त्या तत्तदेकवाक्यतया 'वकारवदुकारः' इत्यादिकल्पनाया आवश्यकत्वेन प्रत्यासत्त्याऽतिदेशबोधकवाक्यजन्यज्ञानविषयसामान्यविशेषधर्मयोरेव परिभाषाविषयतया 'वकारवदुकारः' इत्यत्र वत्वोत्वयोरेवोपात्ततया सामान्यधर्मस्यानुपादानात्परिभाषाविषयाभावादिति भावः ।

इष्टः' "हशि च" (पा. सू. ६।१।११४) इत्युत्वञ्च । अल् चेह

क इष्ट इति । यद्यपीदं रूपमुत्वे, गुणे, अवादेशे च पाक्षिकलोपेन सिध्यति, तथाऽपि पक्षे 'कविष्टः' इति स्यात् 'कयिष्टः' इति चेष्यते इति

पस्य क्षत्रिये दर्शनेन भवदुक्तः स्वभावो व्यभिचरित इति वाच्यम्, तत्रापि न ब्राह्मण्यातिदेशः, किन्तु अभ्युत्थानसत्कारादिरूपस्य तद्विरुद्धन्यूनत्वबुद्धिप्रयोज्याभ्युत्थानाभावाप्रवृत्तिसम्पादनेनातिदेशस्य चारितार्थ्यात् । 'सामान्यातिदेशे विशेषानतिदेशः' इति हि परिभाषा लोकप्रसिद्धा यथा 'ब्राह्मणवदस्मिन्क्षत्रिये वर्तितव्यम्' इत्यनेनाग्रासनाद्यतिदेशो दृश्यते, न तु माठरकौण्डिन्यसम्बन्धिपरिवेषणादिधर्मस्य । एवञ्च वत्वस्य वल्त्वस्य वा हल्त्वापेक्षया विशेषधर्मत्वेन तदतिदेशो न भविष्यति, किन्तु हल्त्वस्यैव । तथा च कथमतिदेशेन 'द्युकामः' इत्यत्र, वलि ककारे लोपस्य प्राप्तिरित्याशयेन शङ्कते- यद्यपीति । हल्त्वादीत्यादिना वल्त्वपरिग्रहः ।

न च वत्वस्य विशेपधर्मत्वेपि न तद्रूपेण निमित्तत्वं, किन्तु वल्त्वेनैवेति वत्वातिदेशापेक्षाया एवाभाव इति यस्य विशेषधर्मत्वोपपादनपूर्विका कथमियमाशङ्केति वाच्यम्, 'दिव उत्' इत्यत्र दिव इति पष्ठीनिर्देशादलोन्त्यपरिभाषाया उपस्थित्या दिवोऽन्त्यस्य वस्येत्यर्थस्य प्राप्तौ वत्वस्य स्थानिताऽवच्छेदकत्वेन तस्योपस्थितौ तद्व्यापकं वल्त्वमप्युपस्थितं भविष्यतीत्याशयात् । परिभाषाघटकसामान्यविशेषशब्देन यस्य कस्यचिद् ग्रहणे प्रमेयत्वादिकेवलान्वयिधर्मापेक्षया विशेषधर्मत्वं सर्वस्यापि धर्मस्यास्तीति कस्याप्यतिदेशो न स्यात्, अतः सङ्ग्राहकवाक्यादुपप्लुतलक्ष्यसंस्कारकवाक्यघटकशब्दोपात्तधर्मापेक्षया विशेषधर्म एव विशेषशब्देन ग्राह्यः । 'आशंसायां भूतवच्च' इत्यत्र भूतत्वापेक्षया ऽनद्यतनत्वविशिष्टभूतत्वं यथा । एवञ्च प्रकृते स्थानिवदादेश इति यदतिदेशसूचकं वाक्यं तत्र यत्स्थानिपदन्तदुपात्तधर्मस्यैवातिदेशो नतु तद्व्यापकस्येत्यर्थो वाच्यः, स त्वनुपयुक्तः, स्थानित्वातिदेशस्य निष्फलत्वात् । किन्तु तस्मादुपप्लुतं यद्वकारवदुकार इत्याकारकं वाक्यन्तद्घटकशब्दोपात्तत्वापेक्षया विशेषधर्मत्वमेव वक्तव्यन्तच्च वत्वे नास्तीत्याशयेन समाधत्ते—तथापीति । एतादृशवाक्योपप्लवे मानमाह—सूत्रेति । अलोन्त्यपरिभाषैकवाक्यतया सूत्रकृतेत्यर्थः ।

स्थानिवद्भावाङ्गीकारेऽपि लक्ष्यस्य सिद्धिरित्याशयेन शङ्कते—यद्यपीति । पक्षे = लोपाभावपक्षे । यत्तु "हलि सर्वेषाम्" इति नित्यलोपस्य वैकल्पिकलोपापवादतया क इत्येव स्यादिति, तन्न, हलिति सूत्रे वकारस्याप्यनुवृत्तिरिति स्वीकारेऽपि 'वृक्षव् करोति' इत्यत्र नित्यलोपस्य चरितार्थतया ऽपवादत्वासम्भवात्, नित्यलोपविधायके ऽशूग्रहणानुवृत्त्या ऽशूरूपहल्येवप्रवृत्तिरिति स्वीकारेऽपि वृक्षवित्यत्र विज्निमित्तकवलोपस्य प्राप्त्या वृक्षवादेरनभिधानाच्च । नच "लोपो व्योः" इति वलोपे "अचः परस्मिन्" इति टिलो-

स्थान्यवयव एव गृह्यते 'रामाय' इत्यादौ 'सुपि च' (पा०सू० ७।३।१०२) इति दीर्घः सिद्धः। तद्विधौ हि यञादित्वमाश्रितं

---

भावः। स्थान्यवयव एवेति। उपलक्षणमेतत्स्थानिरूपोऽपीति बोध्यम्[2]। अत

---

गस्य स्थानिवद्भाव इति वाच्यम्, 'न पदान्ताः परे ऽणः सन्ति ननु चायमस्ति कर्तृ हर्तृ' इति भाष्याद् वृक्षवादेरनभिधानेन नित्यलोपविधायके वग्रहणानुवृत्तेर्निष्फलत्वात्। अत एव "भोभगो" इति सूत्रस्थम् "अश्ग्रहणमनर्थकमन्यत्राभावात्" इति भाष्यं सङ्गच्छते। मूले—स्थान्यवयव एवेति। अत्र एवकारो भिन्नक्रमः स्थानिपदोत्तरन्द्रष्टव्यः। अत एवादेशावयवाश्रयणेऽपि न निषेध इत्येतद्दर्शयति—तेनेति।

ननु स्थान्यवयवालो ग्रहणे स्थान्यवयवाल्वृत्तिधर्मावच्छिन्नस्याश्रयणे निषेध इत्यर्थलाभेन प्रपठ्येत्यस्य व्यावर्त्यस्य सिद्धावपि विधिग्रहणविशिष्टस्यानल्विधावित्यस्य यद्व्यावर्त्यं मूले दर्शितं तदनुपपत्तिः, प्रकृतसूत्रभोभगो इति सूत्रस्थभाष्यविरोधापत्तिश्च इत्यत आह—उपलक्षणेति। अत एव = स्थानिरूपस्याप्याश्रयणादेव।

---

१—'सिंहो माणवकः' इत्यादिस्थल इवातिदेशवाक्येन स्थान्यादेशयोः स्वरूपतो भेदस्यापलपितुमशक्यत्वात् स्थानिवृत्तिधर्मवत्त्वमेवातिदेशेन बोध्यते। तथाच 'अनल्विधौ' इत्यस्य स्थान्यल्विधौ नेत्यर्थे स्थानिनोऽभावेन तदलोऽप्यभावात्तन्निमित्तककार्याप्राप्त्या निषेधवैयर्थ्यमिति 'अनल्विधौ' इत्यस्य लक्षणया स्थान्यल्वृत्तिधर्मनिमित्तके विधौ स्थानिवत्त्वन्नेत्यर्थो फलतीति भावः। नचैवम् 'रामाय' इत्यादौ सुप्त्वस्य स्थान्यल्वृत्तिधर्मत्वेन तन्निमित्तके दीर्घे कर्तव्ये स्थानिवत्त्वनिषेधः, अल्मात्रवृत्तिधर्मनिमित्तके विधौ नेत्यर्थेनादोषात्। अल्मात्रवृत्तित्वञ्च—अल्वृत्तित्वे सत्यलितरावृत्तित्वरूपम्। यद्यपि सुप्त्वमेकारादिरूपाल्वृत्ति, तथाऽपि अलितरभ्यामादिरूपसमुदायवृत्तित्वान्न तस्य तत्त्वम्। ननु तण्डुलराशौ 'तण्डुलो न' इति व्यवहारादर्शनात् अल्समुदायरूपे भ्यामि 'अल् न' इति भेदस्य वक्तुमशक्यतयाऽलितरे घटादयः पदार्थास्तदवृत्तित्वस्य सुप्त्वे सत्त्वाद्दोषतादवस्थ्यम्, 'अल्त्वव्याप्यधर्मनिमित्तके' इत्यर्थनाक्षतेः। अलोऽल्समुदायस्य चाभेदेऽपि; सत्तायां विशिष्टसत्तात्वस्येवाल्त्वस्याल्समुदायेऽवृत्तितया, सुप्त्वस्य च सत्वात् सुप्त्वेऽल्त्वव्याप्यत्वाभावात्।

२ 'स्थानिरूपो योऽल् तद्वृत्तिधर्मनिमित्तके विधौ न स्थानिवत्' इत्यर्थः। स च धर्मोऽल्त्वव्याप्य इति नाऽग्रहः। अत एव 'धिन्वन्ति' इत्यत्र उप्रत्ययवृत्त्यार्धधातुकत्वस्य वकारेऽनतिदेशात् 'आर्धधातुकस्य इतीण्न। नवैवम् 'रामाय' इत्यादावपि यादेशस्याल्रूपैकारस्थानिकत्वेन सुप्त्वस्य तादृशधर्मतया दीर्घेऽपि स्थानिवत्त्वनिषेधः स्यादिति वाच्यम्, अल्त्वव्याप्यधर्मावच्छिन्नस्थानितासमानाधिकरणधर्मनिमित्तके विधौ न स्थानिवत् इत्यर्थेनादोषात्। षष्ठीप्रकृत्यर्थताऽवच्छेदकधर्मस्यैव स्थानिताऽवच्छेदकत्वनियमेन प्रकृते ङेत्वस्यैव षष्ठीप्रकृत्यर्थताऽवच्छेदकतया तस्य च ङेरूपसमुदायवृत्तित्वेनाल्त्वव्याप्यत्वाभावान्निषेधाप्रवृत्तेः।

नच 'रामायेह' इत्यत्र वाक्यसंस्कारपक्षे 'राम ए इ' इति दशायाम् 'एचोऽयवायावः' इत्यस्यापि प्राप्त्या 'ए' वृत्तिसुप्त्वस्य एत्त्वरूपाल्त्वव्याप्यधर्मावच्छिन्नस्थानितासमानाधिकरणत्वात्पुनरपि निषेधापत्तिरिति वाच्यम्, अल्त्वव्याप्यधर्मावच्छिन्नस्थानितानिरूपिताऽदेशताश्रयधर्मिकारोपप्रकारीभूतधर्मनिमित्तके विधौ स्थानिवत्त्वन्न इति व्याख्यानात्। प्रकृते आरोपश्च—'यादेशः सुप्त्ववान्' इत्याकारक एव, स

यञ्चादेशावयवो न तु स्थान्यवयव इति तदेतत्सकलमभिप्रेत्याह—

एव 'आदेशिन्यल्याश्रीयमाणे प्रतिषेधः' इति भाष्ये उक्तम्। न तु स्थान्यवयव इति। अतः प्रत्ययत्वं स्थानिवत्त्वेन भवत्येवेति भावः। 'अग्रहीत्'इत्यादौ

आदेशिन्यलि = स्थानिन्यलि, आदेशिन्यलीत्यत्र समानाधिकरणे सप्तम्यौ, आदेशिनीत्यत्र सम्बन्धिन आधारत्वविवक्षया सप्तमी। सम्बन्धश्चेतरसम्बन्धानवच्छिन्नविशेषणविशेष्यभावोऽवयवावयविभावश्च तेनोभयोर्लाभः। अत्र प्रपठ्येत्याद्युदाहरणप्रदर्शनपराकर एव आनख्। अतः=स्थानिस्थान्यवयवान्यतराल्लो ग्रहणात्। प्रत्ययत्वमिति। प्रत्ययत्वस्य सुप्त्वव्यापकतया व्यापकासत्तायां व्याप्यासत्त्वमप्यवश्यं स्थास्यतीति तदभावसूचनायेत्थमभिहितम्। तेन रामायेत्यस्य सिद्धिः। अन्यथा ऽप्रत्ययान्ततया समुदायस्य प्रातिपदिकत्वापत्तौ सुप्त्वातिदेशाल्लोपापत्तिरपि वारिता। भाष्ये आश्रीयमाणपदोपादानेन स्थानिबोधकशब्दजन्यप्राथमिकोपस्थितिविषयतां यन्नाल्त्वावच्छिन्ना तत्र निषेध इति ध्वनितमित्याशयेनाह—अग्रहीदित्यादाविति। न चैवं सति "क इष्टः'

च न एच्त्वरूपाल्त्वव्याप्यधर्मावच्छिन्नस्थानितानिरूपितादेशताश्रयधर्मिकः, किन्तु ङेत्वावच्छिन्नस्थानितानिरूपितादेशताऽऽश्रयधर्मिक एवेति न दोषः।

नन्वेवमर्थस्वीकारे सूत्र-भाष्य-वार्तिकविरोध आपद्येत, तथाहि—'ह्रस्वादेश आप्तवान्' इत्यारोपेणैव 'अतिखट्वः' इत्यादौ सुलोपप्राप्तेर्वक्तव्यतया तत्र च स्थानिताया अच्त्वावच्छिन्नतयाऽनल्विधाविति निषेधेन स्थानिवत्त्वाऽप्राप्त्या आपः परत्वाभावेनैव सुलोपाप्राप्तेर्दीर्घादित्यस्य वैयर्थ्यापत्तिः। 'अतिखट्वाय' इत्यस्य सिद्धये ङ्याप्निमित्तके कार्ये कर्तव्ये दीर्घभिन्न आदेशो न स्थानिवदित्यर्थकेन 'ङ्याब्ग्रहणेऽदीर्घ इति वक्तव्यम्' इति वार्तिकेन 'अतिखट्व' इति ह्रस्वाकारे स्थानिवत्त्वनिषेधेनाप्त्वाभावे 'अतिखट्वाय' इत्यत्र दीर्घेऽपि आप्त्वाभावाद्दोषाभाव इत्येवं परकवार्तिकविरोधः, आकारप्रश्लेषेण प्रत्याख्यानपरभाष्यविरोधः, तत्राप्यनल्विधाविति निषेधेनैव सिद्धेः। एवम् 'आधये' 'चिकीर्षवे' इत्यत्रेजन्तकृदन्तत्वाद्व्ययत्वमाशङ्क्य सन्निपातपरिभाषया वारणपरभाष्यविरोधश्च, उक्तनिषेधेनैव सिद्धेरिति, चेन्न, अल्त्वव्याप्यधर्मावच्छिन्नस्थानितानिरूपिताऽऽदेशताश्रयधर्मिकारोपप्रकारीभूतधर्मेण साक्षादवच्छिन्नोद्देश्यताके विधौ न स्थानिवदित्यर्थस्वीकारात्। सुलोपादिविधौ च नहि आप्त्वादिधर्मेण साक्षादवच्छिन्नोद्देश्यतेति दोषाभावः।

अत्रार्थे मानञ्च—'भोभगो' ( पा० सू० ८-३-१७ ) इतिसूत्रस्थं भाष्यमेव। तथाहि—अशि ग्रहणाभावे 'छन्दःसु' 'पयःसु' इत्यत्र दोषं प्रदर्श्योक्तं भाष्ये—'किं पुनः कारणं सुकारपर एवोदाह्रियते ? न पुनरयम् 'वृक्षस्तत्र' 'प्लक्षस्तत्र' इति। अस्त्यत्र विशेषः, विसर्जनीये कृते न भविष्यति, इहापि तर्हि विसर्जनीये कृते न भविष्यति 'छन्दःसु', 'पयःसु' इति, स्थानिवद्भावः। अथायमल्विधिः स्यात् शक्यमश्ग्रहणमवक्तुम् ? वाढं शक्यम्, अल्विधिस्तर्हि भविष्यति। कथम्। इदमस्ति रोरीति। ततो वक्ष्यामि 'खरवसानयोर्विसर्जनीयः, 'रः' ततो 'रोःसुपि विसर्जनीयः' र इत्येव इति उक्तार्थस्वीकारे एव भाष्योक्तवैषम्यमुपपद्यते, 'वृक्षस्तत्र' इत्यत्र स्थानिताया रेफत्वरूपाल्त्वव्याप्यधर्मावच्छिन्नत्वस्य, 'छन्दःसु' इत्यत्र रुत्वरूपाल्त्वव्याप्यधर्मावच्छिन्नत्वस्य च सत्त्वेन वैषम्यात्। नन्वेमप्युक्तार्थस्वीकारे फलाभावः, 'धिन्वन्ति' इत्यस्य 'अचः परस्मिन्' इत्यत्र पञ्चमीसमासेन स्थानिवद्भावात् 'आर्धधातुकस्येड्' इत्यत्र लक्ष्यानुरोधा-

'ग्रहोऽलिटि' ( पा० सू० ७।२।३७ ) इत्यनेनेट एव दीर्घविधानान्नाल्त्वेन

इत्यत्र वचिस्वपीतिसम्प्रसारणन्तत्र वाक्यार्थः संज्ञीति पक्षे 'वच्यादीनां यण् इक् संप्रसारणाभिन्नः' इत्यर्थो भविष्यति। एवञ्च स्थानिबोधकः शब्दो यण् इति, तज्जन्योपस्थितिविषयता यण्त्वावच्छिन्ना नतु अल्त्वावच्छिन्नेति कथमलि विधावित्यस्य तदुदाहरणमितिवाच्यम्; अल्त्वावच्छिन्नेत्यस्याल्पर्याप्तधर्मावच्छिन्नेत्यर्थात्। तथाच यण्शब्दजन्योपस्थितिविषयता यद्यद्रूपावच्छिन्नस्य यण्संज्ञा तत्तद्रूपावच्छिन्नेति यत्त्वरूपस्तादृशो धर्मः स चाल्पर्याप्त एवेति तदुदाहरणं युक्तमेव। एवमेव प्रत्याहारनिर्देशे सर्वत्र बोध्यम्। "दिव औत्" इत्यादौ चालोन्त्यपरिभाषैकवाक्यतयाऽल्पर्याप्ताल्त्वावच्छिन्नैव सेति तत्रापि निषेधस्य प्रवृत्तिः।

यत्तु यन्निमित्तवैकल्यप्रयुक्तोपदेशाप्रवृत्तावतिदेशो मृग्यते तस्य निमित्तस्य स्थान्यल्साधारणधर्मत्वे निषेध इत्यर्थं आश्रयणीयस्तथा च सुप्त्वस्य स्यामादौ समुदायेऽपि सत्त्वान्नाल्साधारण्यमिति न तत्र निषेध इति; तन्न, 'तन्वन्ति' इत्यत्रोकारवृत्त्यार्धधातुकत्वस्य तन्वादिसमुदायेऽपि सत्त्वेन नाल्साधारण्यमिति 'तस्यातिदेशेनेट् स्यात्। नच 'अपरविधौ' इति करणेन 'अचः परस्मिन्' इति सूत्रेण स्थानिवद्भावेनेट् तत्र भाष्यकृतैव वारित इति वाच्यम्, तस्य भाष्यस्यैकदेश्युक्तित्वात्। तस्यैकदेश्युक्तित्वसाधकञ्चायन्नासन्निति तदुदाहरणप्रदर्शनमेव, तस्योदाहरणस्यासिद्धवत्सूत्रेण सिद्धेः। न च 'कृन्मेजन्त' सूत्रभाष्ये 'आधये' 'चिकीर्षवे' इत्यत्रेकारोकारवृत्तिकृत्त्वस्याल्पर्याप्ततया निषेधयोग्यतायाः सत्त्वेन कथमव्ययसंज्ञाप्राप्तिरुक्तेति वाच्यम्, तत्र स्थानिबोधकस्य घिशब्दस्य प्रथमतः समुदायोपस्थापकतया स्थानिबोधकशब्दजन्यप्राथमिकोपस्थितिविषयता नाल्पर्याप्तधर्मावच्छिन्नेत्यदोषात्। नच तथापि 'कुम्भकारेभ्यः' इत्यत्र 'बहुवचने झल्येत्' इत्येत्वे कृते स्थानिवद्भावेन कृत्त्वमाश्रित्याव्ययत्वप्राप्तिशङ्का कृता, सा कथं संगच्छताम्? स्थानिबोधकादत इति शब्दादल एव प्रथमसुपस्थितिसत्त्वादिति वाच्यम्, तत्रापि प्रथमतो ऽल्त्वेनोपस्थितिर्नत्वत्वेन, अत्त्वन्तु समुदायपर्याप्तमिति। निषेधविषयतेत्यदोषात्। इत्थमेवान्यत्रापि बोध्यम्। अस्याङ्कल्पतायां 'विशिष्टं ह्येपो ऽनल्माश्रयते इटन्नाम' इति भाष्यमेव मानम्, कृन्मेजन्तसूत्रस्थं भाष्यञ्च साधकमिति दिक्।

अत्रानल्विधावित्यत्र प्रसज्यप्रतिषेध एव। न चासमर्थसमासापत्तिः, बहुषु स्थलेषु तस्य दर्शनात्। पर्युदासे हि स्थान्यल्भिन्नाश्रयके विधौ स इत्यर्थे 'व्यूढोरस्केन' इत्यत्र णत्वापत्तेर्दुर्वारत्वात्। स्थानिपदस्य स्थानिस्थान्यवयवान्यतरपरतया स्थानिस्थान्यवयवालाश्रितविधिभिन्नविधाविति व्याख्यानेन व्यूढोरस्केनेत्यस्य निर्वाहेऽपि बभूति-

---

दौपदेशिको यो वल् तदादेरित्यर्थेनादोषाच्चेति चेन्न, भरजो यनस्तस्यापत्यं यानिरित्यत्र स्थानिवत्त्वेन पदान्तत्वात्प्राप्तस्यैचो वारणायोक्तार्थस्यावश्यकत्वादित्यन्यत्र विस्तरः।

न तु स्थान्यलाश्रय इति । आश्रयणञ्चेह यथाकथञ्चिन्न तु प्राधान्येनै-
तस्य स्थानितेति तद्वृत्तीट्[2]त्वाश्रयस्य सिचो लोपस्य सिद्धिरिति बोध्यम् ।
यथा कथञ्चिदिति । व्याख्यानादिति भावः ॥

---

वेत्यस्यानिर्वाह इत्यसमर्थसमासाश्रयणेन प्रसज्यप्रतिषेध एवाश्रितः । नचान्यतराल्वृत्तिधर्मस्य वल्त्वस्याश्रयणादेवमपि बभूविवेत्यस्यासिद्धिरिति वाच्यम्, यद्धर्मवैकल्यप्रयुक्तोपदेशाप्रवृत्तिस्तस्य धर्मस्यान्यतराल्निष्ठस्यातिदेशे कर्त्तव्ये निषेधस्य प्रवृत्त्यङ्गीकारात् । यदि तु 'ङेर्यः' इत्यादौ ङकारोच्चारणेन ङकारोपलक्षिते स्थानित्वस्य बोधनेनाग्रहीदित्यत्रेट इव सर्वत्र सूत्रोपात्तसमुदाये स्थानित्वमिति ङेशब्दनिष्ठं सुप्त्वं प्रत्ययत्ववन्नाल्धर्म इति यन्निमित्तवैकल्यप्रयुक्तोपदेशाऽप्रवृत्तावतिदेशो मृग्यते सौत्रस्थान्यल्निष्ठधर्मावच्छिन्ननिमित्तकविधिभिन्नविधौ स्थानिवदित्यर्थ आश्रीयते तदाऽस्तु पर्युदासः । एवं सति लाघवमपि भवति । पर्युदासेऽप्यार्थिकनिषेधमादाय निषेधपरत्वेन व्याख्यातृग्रन्था नेयाः । पर्युदासपरतया व्याख्यानञ्च 'विशिष्टं ह्येषोऽनलमाश्रयते इटन्नाम' इति वदता भाष्यकृता ध्वनितम् । असङ्ग्राहकवाक्याल्लक्ष्यसाधकं वाक्यमिड्वद्दीर्घ इति 'ङेवद् यः' इति रीत्या कल्पनीयम् स्थानिताऽवच्छेदकशास्त्रोपात्तमेव रूपम् ।

व्याख्यानादिति । अनलिति शब्दसंस्कारार्थं प्रथमोपादेया, तत्तल्लक्ष्योपपत्त्यर्थञ्च

---

१—ननु एवमपि 'प्रदीव्य' इत्यादौ स्थानिवत्त्वादिड् दुर्वारः,'प्रधानाप्रधान'न्यायेन प्रधानस्यैवाल्त्वव्याप्यधर्मस्य ग्रहणेन वल्त्वस्य चाप्राधान्यादिति चेन्न, स्थानिघटकाल्वृत्त्यल्त्वव्याप्यधर्मघटितधर्मनिमित्तके विधौ न स्थानिवदित्यर्थात् । नचैवम् 'बभूविथ' इत्यत्रेडनापत्तिः, इटोऽल्त्वव्याप्यवल्त्वघटितवलादित्वनिमित्तकत्वादिति वाच्यम्, उक्तधर्मघटितधर्मस्यातिदिदिक्षितस्यैव ग्रहणात् । अतिदिदिक्षितत्वञ्च—तद्धर्माभाववद्विशेष्यकतद्धर्मप्रकारकेच्छाविषयत्वम् । तथा च इच्छां प्रति सिद्धेः प्रतिबन्धकतया प्रकृते 'वलादित्ववान् थल् प्रत्ययः' इति निश्चयात्मकसिद्धेः सत्त्वेन वलादित्वस्यातिदिदिक्षितत्वाभावः । नन्वेवं प्रतिबन्धकत्वस्वीकारे 'रामाय' इत्यादौ 'यादेशः सुप्त्वाभाववान्' इति निश्चयस्य सत्त्वेनातिदेशानापत्त्या दीर्घासिद्धिः, अतिदेशसूत्रारम्भसामर्थ्येन तदभाववत्तानिश्चयस्य प्रतिबन्धकत्वाकल्पनात्, तथा चातिदेष्टव्यधर्मस्यादेशावृत्तित्वे एव तन्निषेध इति फलितम् । 'बभूविथ' इत्यत्र चातिदेष्टुमिच्छाविषयीभूतमार्धधातुकत्वम्, तच्च नाल्त्वव्याप्यधर्मघटितो धर्मः, यश्चाल्त्वव्याप्यधर्मघटितधर्मो वलादित्वम्, तच्च नातिदेष्टुमिच्छाविषयीभूतमिति न कश्चिद्दोषः । नन्वनल्विधावित्यनेनार्थद्वयमलभ्यम्, सकृदुच्चरितन्यायविरोधादिति, चेन्न, आवृत्त्या तत्त्वस्य सुवचत्वात्, स्थानिघटकाल्विशिष्टविधौ न स्थानिवदित्येकार्थेनैवादोषाच्च वैः—स्ववृत्त्यल्त्वव्याप्यधर्मघटितो योऽतिदिदिक्षितो धर्मस्तद्धर्मावच्छिन्नोद्देश्यताकत्व—अल्त्वव्याप्यधर्मावच्छिन्नस्थानितानिरूपिताऽदेशताश्रयधर्मिकारोपप्रकारीभूतधर्मेण साक्षादवच्छिन्नोद्देश्यताकत्वैतदन्यतरसम्बन्धेन । अत्राघसम्बन्धे उद्देश्यतायाः, तदवच्छेदकसाधारणविषयताया वा ग्रहणं कार्यम् । अत्र शास्त्रे स्थानिता=स्थानपदार्थानुयोगिकसम्बन्धप्रतियोगितारूपा, आदेशता च=स्थानपदार्थप्रतियोगिकसम्बन्धानुयोगितारूपा बोध्येत्यलम् ।

२—प्रकृतसूत्रे भाष्ये—"अलमाश्रयतेऽलाश्रयः । अलाश्रयो विधिरल्विधिरिति । इतरथा हि यत्र

वेत्याग्रहः । तेन 'प्रपठ्य'इत्यत्र वलादिलक्षण इण् न । *तन्निषेधादिति ।* स्थानिवत्त्वनिषेधादित्यर्थः ॥

*'अचः' ( पा० सू० १।१।५७ ) । अल्विध्यर्थमिति ।* तेन 'वव्रश्च'इत्यत्र वस्य सम्प्रसारणन्न, 'उरदत्वस्य स्थानिवत्त्वेन संप्रसारणतया 'न संप्रसारण' ( पा० सू० ६।१।३७ ) इति निषेधात् । न चोरदत्त्वं परनिमित्तं नेति वाच्यम्, अङ्गाक्षिप्ते प्रत्यये परे तद्विधानात्, 'प्रागभ्यासविकारेभ्योऽङ्गाधिकारः' इति पक्षं दूषयित्वा 'आसप्तमसमाप्तेः' इति पक्षस्यैव आकरे सिद्धान्तितत्वात् । किञ्च—पूर्वसूत्रेण स्थानिप्रयुक्तमतिदिश्यते नत्वादेशप्रयुक्तं वार्यते, नायकः, पावकः, इत्यादौ 'एचोऽयवायावः' *(पा० सू० ६।१।७८)* इत्यादीनामप्रवृत्तिप्रसङ्गात् । अनेन तु वार्यते, शब्दाधिकारमाश्रित्य भावाभावयोरुभयो-

दूषयित्वेति । 'अङ्गस्य' ( पा० सू० ६।४।१ ) इति सूत्रे भाष्ये इति शेषः । एतदसिध्यैव दूषयित्वेत्यर्थः । विस्तरस्त्वन्यत्र द्रष्टव्यः । अनेन तु वार्यत इति ।

विधिशब्दाध्याहारेण समासचतुष्टयफलानामुपपत्तिश्च कर्त्तव्येतिरीत्येष्टसिद्धौ विधिशब्दोपादानरूपादधिकाद्यत्नादित्यर्थः । परममूले—'निषेधो न शङ्क्योऽनल्विधाविति तन्निषेधात्'' इति ग्रन्थस्य तच्छब्देन निषेधपरामर्शेऽसङ्गतिरत आह मूले—स्थानिवत्त्वेति ॥

तेन=अल्विध्यर्थमस्य सूत्रस्यारम्भेण । 'उरत्' इति सूत्रे उरित्यनेनाल एव स्थानित्वबोधनादिति तात्पर्यम् । 'अचः परस्मिन्' इति सूत्राप्रवृत्तिशङ्कां वारयति—नचोरदत्वमिति । दूषयित्वेति । सामान्यत उपादानेन प्रकृतसूत्र इति भ्रमोऽपि स्यादिति तन्निवारणाय—अङ्गस्येतीति । अत्र दूषणे हेतोरनुक्तेः प्रसिद्धस्य हेतोरनुपलम्भाचाह—एतदिति । वव्रश्चेत्याद्यसिध्येत्यर्थः । यदा 'न संप्रसारण' इति निषेधारम्भादन्त्यस्य यणः प्रथमतः सम्प्रसारणम्पूर्वस्य तु तन्निमित्तः प्रतिषेध इति स्वीक्रियते तदा वव्रश्चेत्याद्यसिद्धिरूपो दोषः । 'प्रागभ्यासविकारेभ्योऽङ्गाधिकारः' इति पक्षे, यदा तु 'न सम्प्रसारण' इति सूत्रस्थसम्प्रसारणशब्दस्य सम्प्रसारणभाविनि लक्षणाऽऽश्रीयते सम्प्रसारणप्रवृत्तिप्राक्काल एव प्रतिषेधो निषेधसामर्थ्याच्च, कृते परस्य सम्प्रसारणे पूर्वस्य सम्प्रसारणाप्रवृत्तिरित्याश्रीयते, तदा नेदं प्रयोजनमचः परस्मिन्निति सूत्रारम्भस्य इत्याशयेनाह—मूले—किञ्चेति । न केवलमल्विध्यर्थमिदं सूत्रमित्येव, किन्त्वपरोऽपि विशेष इति भावः । अत एवाह—विस्तरस्त्विति । कैयटादिग्रन्थ इत्यर्थः ।

प्रधान्येनालाश्रीयते तत्रैव प्रतिषेधः स्यात्—यत्र विशेषणत्वेनाश्रीयते तत्र प्रतिषेधो न स्यात्, किं प्रयोजनं 'प्रदीव्य' 'प्रसीव्य' इति,—वलादिलक्षण इड मा भूदिति इत्युक्तिरुपादित्यर्थः ।

रस्त्यतिदेशोऽयमिति स्वीकारात् । 'न पदान्त' ( पा० सू० १।१।५८) इति सूत्रे यलोपदीर्घादिग्रहणं चेह लिङ्गम् । अत एव गणयतीत्यादौ

स्थानिनि सति यद्भवति तदादेशेऽपि भवति, तत्र सति यन्न भवति तदादेशेऽपि न भवतीत्यर्थात् । अजादेशोऽच्कार्यं लभते, न लभते चेति वाच्योऽर्थः । तत्रोपपत्तिमाह-शब्देति । पूर्वसूत्रे स्थानिवत्पदस्य तद्वत्कार्यं लभत इत्येतन्मात्रार्थकस्येहोभयार्थकत्वात्तदाश्रयणमिति भावः । यलोपदीर्घादीति । यलोपदीर्घावादी येषामित्यर्थः । यलोपादयो दीर्घादयश्चेति यावत् । तेन स्वरादीनामपि सङ्ग्रहः । यलोपादीत्येव सिद्धे एवमुक्तिर्वैचित्र्याय । न हि

ननु मूले तु 'वार्यते' इत्येवोक्तम्, हेतुस्तु नोक्तः, इति न्यूनतेति तद्भावायाह-स्थानिनीत्यादि । उक्तार्थस्य वक्ष्यमाणज्ञापकेन लाभे सति यथा लक्ष्यसिद्धिसम्पादकवचननिष्पत्तिस्तथाह-अजादेश इति । प्रयोगीयाच एवादेश इत्यर्थः । नन्वत्रापि सूत्रे पूर्वसूत्रवत्सौत्रस्थान्यादेशभावस्य ग्रहणन्तेन णिलोपस्यानेन स्थानिवद्भावसिद्धिः । अवधारणफलन्तु मरुतमाचष्टे मारयतीत्यादिसिद्धिः । ननु सर्वत्र शब्दस्यैवाधिकारो दृष्ट इति शब्दाधिकार इत्यनर्थकम्, क्लृप्तार्थस्य त्यागेन शब्दमात्रस्यात्र सूत्रे सम्बन्धे च किम्मानमत आह-पूर्वसूत्रेति । इत्येतन्मात्रेति । तेन नायकादिसिद्धिः । उभयार्थकत्वेति । भावाभावोभयार्थकत्वेत्यर्थः । क्लृप्तार्थपरित्यागेन शब्दमात्रस्य सम्बन्धो यत्र तत्र शब्दाधिकार इति व्यवहारः, यत्र तु क्लृप्तार्थसम्बद्धशब्दस्यान्यत्र सम्बन्धस्तत्रार्थाधिकार इति । यद्यपि दीर्घशब्दस्याल्पाच्त्वन्तथापि सूत्रे प्रागुपादानादिह यलोपदीर्घावादी इत्युक्तम् । द्वन्द्वान्ते श्रूयमाणमिति न्यायेनाह-यलोपादय इति । वैचित्र्यायेति । अल्पशब्दोपादानेन लभ्योऽप्यर्थः क्वचित्स्पष्टप्रतिपत्तयेऽधिकशब्दोपादानेन बोध्यते, तथापि नाधिकोपादानप्रयुक्तन्दुष्टत्वमित्येतद्वैचित्र्यध्वननायेत्यर्थः ।

१—नन्वेवमर्थस्वीकारे 'द्यूः' इति न सिद्ध्येत्, तथाहि—ण्यन्ताद् दिव्धातोः क्विपि ऊठि अयादेशे द्यूः इति जायते तत्र णिलोपरूपेऽजादेशेऽभावातिदेशे णौ सति ऊठोऽभावेन भवतोऽयादेशस्य णिलोपे ऊठि च कृतेऽपि प्रवृत्तिर्न स्यादिति चेन्न, आदेशे स्थानिवृत्तिधर्मारोपसम्भावनायां यत्प्राप्नोति तद्भवति, यन्न प्राप्नोति तन्न भवति, इति व्याख्यानेनादोषात् । एवञ्च लोपादेशे णित्वारोपेऽपि क्विन्निमित्तकोठः सत्त्वेन तन्निमित्तकार्यादेशप्रवृत्तौ बाधकाभावः । नचैवमपि वाक्यसंस्कारपक्षे 'एषो गमयति' इत्यत्रेणो गमादेशे स्थानिवृत्तीण्वरूपधर्मारोपसम्भावनायामपि गमादेशघटकगकारे हल्त्वस्य सत्त्वेन गकाररूपं हलमादाय 'एतत्तदोः' ( पा० सू० ६-१-१३२ ) इति सुलोपापत्तिरिति वाच्यम्, 'आदेशो न जातः, स्थानी न निवृत्तः,' इति सम्भावनायां यत्प्राप्नोति तद्भवति, यन्न प्राप्नोति तन्न भवति, इत्यत्रैव तात्पर्यात् तथा च 'गमयति' इत्यत्र 'इणो निवृत्तिर्न जाता, गमादेशो न जातः' इत्येतत्सम्भावनयाऽभावातिदेशेन सुलोपाभावः 'द्यूः' इत्यत्रापि णिञ्निवृत्तिर्न जाता, लोपादेशो न जातः, सम्भावनायामपि जातस्योठोऽनिवृत्त्याऽयादेशः सिध्यतीति सर्वं सुस्थम् ।

न वृद्धिः, स्थानिनि सत्यभवन्त्यास्तस्या आदेशेऽप्यभावातिदेशात् उक्तञ्च—'काममतिदिश्यतां वा सच्चासच्चापि नेह भारोऽस्ति' इति। स्यादेतत्—पूर्वत्वस्य सावधित्वेन सन्निहितस्यैव अवधित्वमुचितम्। सन्निहितं चेह त्रयम्—स्थानी, आदेशो, निमित्तञ्च। तत्र न तावत् स्थानी अवधिः, तस्यादेशेनापहारात्। नाप्यादेशनिमित्ते, 'वैयाकरणः' इत्यत्र ऐकारस्यायादेशापत्तेरित्याशङ्क्याह—*अचः पूर्वत्वेन दृष्ट-*

---

यलोपादिविषये भावातिदेशप्रसक्तिरिति भावः। न वृद्धिरिति। 'अत उपधायाः' (पा० सू० ७।२।११६) इति वृद्धिर्नेत्यर्थः। 'क्लिलुगुपधात्व'-(वा०) इति निषेधस्तूपधात्वनिमित्तकप्रत्ययविधावेव नान्यत्रेति भाष्ये स्पष्टम्। अयादेशापत्तेरिति। यणः स्थानिवत्त्वेनाच्त्वादिति भावः। पूर्वत्वं चात्र व्यवहिताव्यवहितसाधारणम्, स्वरे निषेधात्। अतो यण्निमित्ताकारापेक्षया-

---

लिङ्गत्वमुपपादयति—न हीत्यादिना। ननु यलोपादीत्युक्तौ न्यूनता, यथा यलोपादिग्रहणस्य ज्ञापकता तथा द्विर्वचनग्रहणस्यापि ज्ञापकत्वसम्भवादिति चेन्न, वाक्' 'वाक्क्' इति भाष्यीयोदाहरणस्योपपत्त्यर्थमनचीतिसूत्रेऽनचीत्यत्र प्रसज्यप्रतिषेधस्य सर्वैरङ्गीकृततया स्थानिनि सति भवतो निषेधस्यादेशेऽतिदेशप्रसक्त्याऽभावातिदेशमन्तरेणापि तस्य चारितार्थ्यसम्भवात्। अभावातिदेशस्य फलमाह मूले—अत एवेति। अभावातिदेशादेवेत्यर्थः। ननु गणयतीत्यादौ 'अचोञ्णिति' इति शास्त्राद् 'अतो लोप' इत्यल्लोपविधायकशास्त्रस्य बलवत्त्वादकारस्य एव भविष्यतीति न वृद्धिरित्यसङ्गतमत आह—अत उपेति।

ननु तस्य प्रवृत्तिरभावातिदेशेऽपि दुर्वारा 'क्लिलुगिति' वार्तिकेन स्थानिवत्त्वनिषेधादत आह—क्लिलुगिति। प्रत्ययेति। यथा 'पारिखीयः' इत्यत्र परिखाशब्दाच्चातुरर्थिकेऽणि तदन्ताद्वृद्धच्छस्य बाधको 'जनपदतदवध्योः' इति वुञ्प्राप्तस्तम्बाधित्वा 'वृद्धादकेकान्तखोपधात्' इति छो भवति। एवकारस्य क्लिलुगिति वार्तिके चङ्परनिर्ह्रासग्रहणाज्ज्ञापकाल्लब्धस्य व्यावर्त्यमाह—नान्यत्रेति। तेन कथयतीत्यादेः सिद्धिः। ननु वैयाकरण इत्यत्र निमित्तापेक्षया पूर्वत्वाश्रयणपक्षेऽप्यायादेशापत्तिरुक्ता सा न सङ्गच्छते, निमित्तादेकारस्याव्यवहितपूर्वत्वाभावादत आह—पूर्वत्वञ्चात्रेति। स्वरे निषेधादिति। तस्य हि चिकीर्षक इत्याद्युदाहरणं, तत्र रेफषकाराभ्यां व्यवधानेन स्थानिव-

---

१—ननु 'नपदान्त' ( पा० सू० १-१-५८ ) इति सूत्रे भाष्ये–लवमाचष्टे 'लौः' पञ्चेन्द्राण्यो देवता अस्य 'पञ्चेन्द्रः' परिखाया अदूरभवः पारिखस्तत्र भवः पारिखीयः। वादितवन्तं प्रयोजितवान् 'अवीवदत्' अर्चयतेः 'अर्कः' एषु आद्ये ऊठि ण्यल्लोपयोः, द्वितीये आनुकः स्थितये ङीषो लुकः, तृतीये 'वृद्धादकेकान्त-

स्येति। पूर्वत्वमुपलक्षणम्[1] न तु विशेषणमिति[2] भावः। एतेन 'अचः पूर्वत्वविज्ञानादैचोः सिद्धम्'[3] इति वार्तिकं व्याख्यातम् ॥

न पदान्त (पा० सू० १।१।५८)। पदस्य चरमावयव इति। वृक्षं वेतीति वृक्षवीः, वातीति वृक्षवाः, तमाचष्टे वृक्षव्, विच्। इह

ऽप्यैकारस्य पूर्वत्वमस्तीति तत्पक्षेऽप्ययं दोष इति भावः। आदेशेनापहारात् कथं स्थानिनोऽवधित्वमित्यत आह—उपलक्षणमिति ॥

अन्तशब्दस्य चरमावयववाचित्वं विधिशब्दो भावसाधनः कर्मषष्ठ्या समासेन पदचरमावयवे कर्त्तव्ये इत्येवं व्याख्याने[4] फलमाह—वृक्षमिति।

ज्ञावाप्राप्तेः स निषेधोऽव्यवहितपूर्वत्वाश्रयणे व्यर्थः स्यात्। अतः—व्यवहितस्यापि पूर्वशब्देन ग्रहणात्। अपिशब्दाभ्यामादेशापेक्षया पूर्वत्वस्य ग्रहणपक्षे दोषः सूचितः। नचान्तरङ्गपरिभाषया ऐजागमस्यासिद्धत्वान्नोभयपक्षे वैयाकरण इत्यात्रायादेशापत्तिः 'किरतौ लवने' इति ज्ञापकादतिदेशविषयेऽपि तस्याः प्रवृत्तिस्वीकारादिति वाच्यम्, ज्ञापकमूलकवचने कल्पनापेक्षया स्थान्यपेक्षया पूर्वत्वाश्रयणे लाघवात् ॥

मूले—'ऐचोः सिद्धम्' इत्यत्रैच इत्यस्य श्रवणमिति शेषः। परममूले—'न पदान्त' इति सूत्रस्थविधिशब्दस्य भावसाधनत्वाभिप्रायेण व्याख्यानं कृतं, नतु तस्य कर्मसाधनत्वं तस्य फलम्मूले आह—वृक्षं वेतीत्यादिना। एतदेवोपपादयति—अन्तशब्दस्येति। यत्तु कैयटेन 'वृक्षं वृश्चति' इति क्विपि तत आख्याने णिचि विप्लुक्तः, तथा

खोपधात्' इति खोपधनिमित्तकछप्रत्यये आलोपस्य, चतुर्थे 'णौ चङि' इति ह्रस्वे णिलोपस्य, पञ्चमे 'चजोः' इति कुत्वे णिलोपस्य च, स्थानिवत्त्वनिषेधाय 'क-लुग्-उपधात्व-चङ्परनिर्ह्रास-कुत्वेषूपसङ्ख्यानम्' इति वार्तिकं पठितम्। तत्रोपधात्वनिमित्तके प्रत्ययविधावेव निषेधः, अत एवोपधात्वनिमित्तकत्वेऽपि चङ्परनिर्ह्रासग्रहणस्य न वैयर्थ्यम्। तदुक्तं भाष्ये—'ननु चैतदप्युपधात्वविधिम्प्रति न स्थानिवदित्येव सिद्धम्। विशेषत एव तद्वक्तव्यम्। क्व 'प्रत्ययविधाविति' इह मा भूत्—'पटयति' 'लवयति' इति। तथाचोपधात्वनिमित्तकनिषेधस्य 'पटयति' इत्यादौ स्थानिवत्त्वनिषेधाभावाय प्रत्ययविधावेव प्रवृत्तिरिति न 'गणयति' इत्यादौ तेन सिद्धिरिति भावः।

१—विशेष्यानन्वयित्वे सति व्यावर्तकत्वमुपलक्षणत्वम्। अविद्यमानं सद्व्यावर्तकमिति यावत् यथा 'काकवन्तो देवदत्तस्य गृहाः' इत्यत्र काकः। स्वाधिकरणवृत्तित्वासमानकालिकत्वाभावप्रतियोगित्वमिति फलितोऽर्थः। तथाचेदानीं पूर्वत्वाभावेऽपि कदाचित्पूर्वत्वस्य सत्त्वान्न क्षतिरिति भावः।

२—विशेष्यान्वयित्वे सति व्यावर्तकत्वं विशेषणत्वम्। विद्यमानं सद्व्यावर्तकमिति यावत्। यथा-'रूपवान् घटः' इत्यत्र रूपम्।

३—उपलक्षणतया स्थानिभूताज्निरूपितपूर्वत्वस्य स्वीकारादैचोः श्रवणं सिद्धमित्यर्थः। आदेशनिमित्तापेक्षपूर्वत्वस्य स्वीकारे तु 'वैयाकरणः' इत्यादावायादेशापत्तौ वार्तिकविरोधः स्यादिति भावः।

४—पदचरमावयवनिष्ठकर्मतानिरूपकविधान इत्यर्थः। येन शास्त्रेण यत्कार्यं विधीयते तत्कार्यंनि

'लोपो व्योः–' ( पा० सू० ६।१।६६ ) इति वलोपो न, स्थानिवत्त्वात्। न च 'न पदान्त' ( पा० सू० १।१।५८ ) इति निषेधः, इह विधेयस्य लोपस्य पदानवयवत्वात्। पदान्तस्य स्थाने विधौ नेति व्याख्याने तु नेदं सिध्येत्, 'सुबन्ताण् णिच्' इति हरदत्तादिमतेऽन्तर्वर्तिसुपा पदत्वात्। न च 'इष्ठवत्' इत्यतिदिष्टेन णिचि

---

विजिति। क्विपि तूठ् स्यादिति भावः। स्थानिवत्त्वादिति। णिलोपस्य, टिलोपस्य वा स्थानिवत्त्वादित्यर्थः। नन्वस्य पदत्वाभावात्कुतोऽसिद्धिरत आह— सुबन्तादिति। अन्तर्वर्त्तिसुन्निमित्तकपदत्वस्यैकदेशविकृतन्यायेन वान्तेऽपि

---

व्याख्यानफलनिरूपणावसरे स तु प्रकारो न युक्तः, उपधावृद्धेर्दुर्वारत्वात्। अतोऽयमेव साधनप्रकार आदृतः। ऊठ् स्यादिति। तस्य वलोपापवादत्वादिति भावः। अस्य— वृक्षश्चशब्दस्य। पदत्वाभावादिति। प्रातिपदिकाण्णिजुत्पत्तेः स्वीकारादिति भावः। मूले—हरदत्तादिमत इति। 'तत्करोति तदाचष्टे' इति वचनस्य 'द्वितीयान्तात्' इति तेन व्याख्यातत्वादिति भावः। नच 'प्रातिपदिकाद्धात्वर्थे' इत्यत्र प्रातिपदिकादित्यस्य दर्शनेन सुबन्तादित्यसङ्गतमिति वाच्यम्, 'तेनातिक्रामति' इत्यत्र तेनेत्यस्य तृतीयान्तादिति व्याख्यानदर्शनेन तत्सादृश्यात्प्रातिपदिकादित्यस्य प्रातिपदिकप्रकृतिकात् सुबन्तादित्यर्थं इति तद्भावात्। अन्तर्वर्तिसुपा पदत्वमीकारान्यन्ते नतु वान्त इत्याशङ्कायामाह—अन्तर्वर्तीति। एकदेशेति। तस्य न्यायस्य लौकिकत्वादिति भावः। मूले— न चेष्ठवदिति। इदमपि परत्वात्सुप्तिङन्तमित्यस्य बाधकमिति भावः। ननु प्रत्ययलक्षणमित्याशङ्का कृता सा न सङ्गच्छते, तस्य सूत्रस्य नियमार्थत्वसिद्धान्तादत आह—

---

छकर्मतानिरूपकं विधानं तत्र प्रतीयते। यत्र यत्र भावरूपकार्यविधानं तत्रैवेतत्प्रवृत्तिः, भावस्यैव चरमावयवयोग्यत्वात्, अभावविधायकस्थले तु अभावस्य शून्यरूपतया चरमावयवत्वासम्भवात्, पदचरमावयवनिष्ठकर्मतानिरूपकविधानाभावेन नास्य प्रवृत्तिरिति भावः। यो विधीयतेऽसाविति कर्मणि किप्रत्ययः, पदान्तश्चासौ विधिरिति कर्मधारयस्तदापि पदचरमावयवाभिन्नविधानकर्मणि सति स्थानिवत्त्वन्नेत्यर्थः; इत्यभावरूपे विधानकर्मणि नास्य प्रवृत्तिः।

१—विधिरित्यत्र कर्मणि किप्रत्यये कर्मण उक्तत्वात् पदान्तस्येति शेषषष्ठ्या समासे पदचरमावयवसम्बन्धिनि विधानकर्मणि सति स्थानिवत्त्वं नेत्यर्थो लभ्यते। तथा च भावरूपेऽभावरूपे वा विधानकर्मणि पदचरमावयवसम्बन्धित्वं चेत्तदाऽस्य प्रवृत्तिः। एवञ्च 'वृक्षव्' इत्यत्र लोपादिस्थलेऽपि विधानकर्मणि लोपे पदचरमावयववकारस्य स्वनिष्ठस्थानितानिरूपितादेशतावत्त्वसम्बन्धस्य सत्त्वात् पदचरमावयवसम्बन्धिनि लोपेऽपि स्थानिवत्त्वनिषेधः स्यात्। पूर्वोक्तार्थे तु न दोषः, पदचरमावयववकारनिष्ठकर्मतानिरूपकविधानाभावात्, लोपस्यैव तत्र विधानकर्मत्वात्। अत एव तत्र लोपविधायकशास्त्रत्वेन व्यवहारः सङ्गच्छत इति भावः।

भत्वेन पदत्वबाधः, णेर्लुप्तत्वात् । न च प्रत्ययलक्षणम् वर्णाश्रय-

सत्त्वमिति भावः । प्रत्ययलक्षणमिति । स्थानिवत्त्वेन प्रत्ययनिमित्तं कार्यमित्यर्थः । वर्णाश्रयत्वादिति । 'णाविष्ठवद्-'इत्यनेन 'यचि भम्' इति शास्त्रस्यैवातिदेशः तच्च वर्णाश्रयम्, एवञ्च स्थानिवत्त्वस्याप्रसक्तिः । कार्यातिदेशेऽपि यन्निमित्तवैकल्यप्रयुक्तोपदेशाप्रवृत्तिस्तन्निमित्तातिरिक्तसर्वनिमित्तकत्वमतिदेशस्यापीत्यङ्गीकाराद्वर्णाश्रयत्वात्ततिः । प्रत्ययलक्षणसूत्रन्तु भाष्यकृता प्रत्ययस्य यत्रासाधारणं रूपमाश्रीयते तत्रैव प्रत्ययलक्षणमिति नियमार्थत्वेन स्थापितम्, न त्वप्राधान्येनालाश्रयणे विध्यर्थमिति भावः । न च

स्थानिवत्त्वेनेति । एवञ्च स्थानिवत्सूत्रस्यैव प्रसक्तिशङ्केयमिति भावः ।

अल्विधित्वात्तस्याप्राप्तिमुपपादयति–णाविष्ठवदित्यादिना । वर्णाश्रयमिति । यजादीत्यस्य स्वादीत्येतद्विशेषणत्वेऽपि प्रपठ्येत्यत्रेवाप्राधान्येनालाश्रयणेऽपि निषेधस्य प्रवृत्तेः स्वीकारादिति भावः । ननु स्थानिवत्सूत्रेण प्राधान्यात्कार्यातिदेश एव क्रियते इति कथमतिदेशाप्रवृत्तिरत आह–कार्यातिदेशेऽपीति । अङ्गीकारादिति । अत एव सर्वस्मिन्नित्यत्र दीर्घो न, अतिदिष्टकार्यस्यापि यत्रादित्वनिमित्तकत्वात् । ननु वर्णाश्रयेऽपि प्रत्ययनिमित्तककार्यार्थम्प्रत्ययलक्षणसूत्रमस्त्वित्यत आह–प्रत्ययेति । स्थापि-

१—'स्थानिवदादेशः' इति स्थानिवत्त्वेनैव सिद्धे 'प्रत्ययलोपे' ( पा० सू० १–१–६२ ) सूत्रं नियमार्थमिति भाष्यकारः । 'अतृणेट्' इत्यादौ तिपो लोपे 'अनल्विधौ' इति निषेधेन स्थानिवत्त्वाप्राप्त्या पित्सार्वधातुकपरत्वाभावात्तत्र विशेषणतयाऽलाश्रयणेऽपि प्रत्ययलक्षणार्थं विध्यर्थमिति वार्तिककारः। तत्र भाष्यमते नियमशास्त्रस्यान्यत्र निवृत्तिमात्रतात्पर्यकतया 'प्रत्ययलोपे' इत्यतिदेशाप्राप्त्या वार्तिकमतेऽल्विध्यर्थतया 'वर्णाश्रयत्वात्' इत्युत्तरग्रन्थासंगतेश्च 'न च प्रत्ययलक्षणम्' इत्यादिग्रन्थमन्यथा व्याचष्टे– स्थानिवत्त्वेनेत्यादिना । तथा च–नच 'प्रत्ययलक्षणम्' इत्यनेन स्थानित्त्वमाशङ्क्य 'वर्णाश्रयत्वात्' इत्यनेन 'अनल्विधौ' इत्यस्य प्रवृत्तिप्रदर्शनपरोऽयं ग्रन्थ इति भावः । नियमशास्त्राणां विधिमुखेन प्रवृत्तिपक्षेऽपि नास्य प्रवृत्तिः, भत्वस्य 'वृषण्वसुः' इत्यत्रापि सत्त्वेन प्रत्ययस्यासाधारणधर्मत्वाभावात् ।

२—ननु 'वृक्षन्' इत्यत्र 'यचि भम्' इत्यस्य यजादित्व-कप्रत्ययावधिकस्वादित्वोभयनिमित्तवैकल्यप्रयुक्ताप्रवृत्तिरिति इष्ठवद्भावस्य तद्धर्मातिरिक्तनिमित्तकत्वेऽपि यजादित्वस्य निमित्तत्वाभावेन 'वर्णाश्रयत्वात्ततिः' इत्यसंगतमिति चेन्न, 'यन्निमित्ते' इत्यत्र निमित्तपदेन सादृश्यानुयोगितावच्छेदकीभूतो योऽभावस्तत्प्रतियोगिधर्मस्यैव ग्रहणात् 'णिजिष्ठवत्' इत्यतिदेशे णिच्त्वस्य सादृश्यानुयोगितावच्छेदकतया तद्व्यापकस्य यजादित्वाभावे वक्तुमशक्यतया कप्रत्ययावधिकस्वादित्वाभाव एव सत्त्वात् तत्प्रतियोगिनोयजादित्वस्यैव यन्निमित्तेत्यत्र निमित्तपदेन ग्रहणात् । तदतिरिक्तयजादित्वस्य 'इष्ठवत्' इत्यतिदेशे निमित्तत्वाक्षतेः ।

३—ननु भाष्यमते–'प्रत्ययलोपे' इति सूत्रेऽपि 'अनल्विधौ' इत्यस्यानुवृत्तावेव नियमत्वं वक्तुं शक्यम् । अन्यथाऽल्विधौ चारितार्थ्येन नियमत्वासम्भवः । तथा च 'अतृणेट्' इत्यादेरसिद्धिरल्विधित्वेन स्थानिवत्त्व–प्रत्ययलक्षणयोरभावादिति चेन्न, 'तृणह् इम्' इत्यत्र हलित्यस्यानुवृत्तेः । नन्वेवम् 'तृणहानि' इत्यादाविमापत्तिः, 'नाभ्यस्तस्याचि' इत्यतो 'न' 'अचि' इत्यस्यानुवृत्तेः । नन्वेवमपि 'भिनत्ती:

त्वादिति भावः। *द्विर्वचनादौ चेति।* यलोपादय आदिशब्दग्राह्याः। 'वरे' इति तु वरे योऽजादेशः स न स्थानिवदिति व्याख्येयम्।

---

'अचः परस्मिन्' ( पा० सू० १।१।७५ ) इति णिलोपस्य स्थानिवत्त्वेन भत्वं सुलभमिति वाच्यम्, णिलोपस्येव टिलोपस्यापि स्थानिवत्त्वापत्तौ वान्ते भत्वस्य दुर्लभत्वेन तत्र पदत्वानिवृत्तेः, 'प्रकल्प्य चापवादविषयम्' इति

---

तमिति। नच 'अतृणेट्' इत्यत्र कथमिमागमस्तस्य हलादौ पिति सार्वधातुके प्रवृत्तिस्वीकारादिति वाच्यम्, हलीत्यस्य तत्र सम्बन्धमकृत्वाऽचि नेत्यस्य सम्बन्धात्। अनिवृत्तेरिति। अभ्युपेत्य वादोऽयम्। वस्तुतो 'अचः परस्मिन्'इत्यस्य प्रवृत्तिरेव न

---

इत्यादौ हलादिपरत्वाभावात् 'शास इदङ्हलोः' इत्यस्याप्राप्तिः, तत्रापि योगविभागेन हल्ग्रहणाकरणेन सिद्धेः। तथाहि-'शास् इत्' इत्येको योगः, अत्र 'क्ङिति' इत्यनुवर्तते' येन शास उपधाया इत्स्यात् क्ङिति, इति 'शिष्टः' 'मित्रशीः' इत्यादीनां सिद्धिः। ततः 'अङि' इति द्वितीयो योगः। तत्र पूर्वाननुवर्त्य-'शास उपधाया इत् अङि' इत्यर्थकरणेन पूर्वेणैवाङि इत्वस्य सिद्धतया 'अजादौ क्ङिति इत्वं चेत् अङ्येवेति' नियमार्थतया 'शासति' इत्यादौ दोषाभावेनेत्वस्याल्विधित्वाभावेन स्थानिवत्त्वेनैव सिद्धया 'प्रत्ययलोपे' इति सूत्रं नियमार्थम् प्रत्ययपर्याप्तनिमित्ताके लोपे प्रत्ययलक्षणमेव न तु स्थानिवत्, एवञ्च स्थानिवत्सूत्रे आदेशपदार्थे प्रत्ययलोपातिरिक्तत्वेन सङ्कोचात् 'सुदृषत्प्रासादः' इत्यादौ स्थानिवत्त्वेनासन्नत्वमादाय न दीर्घः। 'अनिनस्मन्' इति परिभाषया वर्णनिमित्तककार्यप्रवृत्तये 'अन्त्वादिषु' वर्णकत्वारोपे 'अनल्विधौ' इति निषेधेन स्थानिवत्त्व-प्रत्ययलक्षयोरभावे तु तेन 'शोभना दृषदु यस्यां सा सुदृषद्नगरी' इत्यत्र स्थानिवत्त्वेन सुगतोगित्त्वमादाय 'उगितश्च' इत्यनेन ङीप् नेति फलं बोध्यम्। अनल्विधाविति निषेधस्तु न, अनुबन्धकार्ये तदप्रवृत्तेः। 'प्रत्ययलोपे' इति सूत्रे 'प्रत्ययस्य लुक्' इति प्रत्ययस्येत्यनुवृत्त्या 'लोपे प्रत्ययलक्षणम्' इत्येव सिद्धे आद्यप्रत्ययग्रहणसामर्थ्यात् प्रत्ययपर्याप्तस्थानितानिरूपितादेशताश्रयलोप इत्यर्थलाभः।

तेन 'आभ्रीय' इत्यत्र प्रत्यावयवसकारलोपे प्रत्ययलक्षणेन झलादित्वमादाय 'अनुदात्तोपदेशवनति' इति सूत्रेण नलोपो न, नच प्रत्ययनिष्ठस्थानितानिरूपितादेशताश्रयलोपे 'प्रत्ययलक्षणम्' इत्यर्थेऽप्यत्राप्राप्त्या प्रत्ययग्रहणं व्यर्थम्, प्रत्ययग्रहणसामर्थ्यादेव प्रत्ययावयवेऽपि प्रत्ययत्वव्यवहारस्य ज्ञापनात्, नन्वेवं सकारस्यापि प्रत्ययत्वात्तन्निष्ठस्थानितायाः प्रत्ययपर्याप्तत्वस्याक्षततया दोषतादवस्थ्यमिति चेन्न, प्रत्ययत्वप्रतियोगिकपर्याप्त्यनुयोगितावच्छेदकधर्मावच्छिन्नानुपयोगिताकपर्याप्तिप्रतियोगीभूतस्थानितानिरूपितादेशताश्रयलोपे प्रत्ययलक्षणन्नेत्यर्थेनादोषात्, नच 'स्थानिवत्' इत्यवृत्त्यैव निर्वाहे प्रत्ययलक्षणग्रहणं व्यर्थम्, प्रत्ययस्यासाधारणं रूपं यत्राश्रीयते तत्रैव प्रत्ययलक्षणं यथा स्यादित्यर्थलाभार्थं, तत्सत्त्वात्। तेन 'सुदृषत्' इत्यत्र दीर्घो न, नच 'प्रत्ययलोपे तल्लक्षणम्'इत्येव सिद्धे प्रत्ययग्रहणं निष्फलम्, प्रत्ययप्राधान्ये एव तत्प्रवृत्तये तत्सत्त्वात्। तेन 'गोहितम्' इत्यादौ न दोषः। नच 'प्रत्ययलोपे प्रत्ययवत्' इति न्यासेन सर्वसिद्धे लक्षणग्रहणवैयर्थ्यम्, प्रत्ययनिमित्तकमेव यथा स्यान्नतु प्रत्ययस्थानिकम् इति ज्ञापनाय तत्सत्त्वात्।

तेन 'पञ्चभिः खट्वाभिः क्रीतं पञ्चखट्वम्' इत्यत्र प्रत्ययलक्षणेन भिस ऐस् न। वार्तिकमते तु स्थानिवद्भावेन दीर्घोदिर्दुर्वार एव स्यात्। विस्तरस्त्वन्यत्र द्रष्टव्यः।

सहविवक्षाऽभावे ऽपि निपातनाद् द्वन्द्वः, सप्तम्यलुक् च। अथोदाहरणानि पदान्ते—कानि सन्ति, कौ स्तः। द्विर्वचने—सुद्ध्युपास्यः।

न्यायेन निषेधविषये तत्प्रतिबन्धाय स्थानिवत्त्वाप्रवृत्तेश्च[1]। हरदत्तादिमते इत्यनेनारुचिर्बोधिता। तद्बीजं त्वयं पक्षो न सूत्र-वार्तिक-भाष्यसम्मत इति प्रातिपदिकात्तदुत्पत्तौ पदत्वाभाव इति। चरमावयवे कार्य इति व्याख्याने फलन्तु 'एषो यन्[2] हसति' इत्यादौ यणः स्थानिवत्त्वाद् 'एतत्तदोः' (पा० सू० ६।१।१३२) इति सुलोपाभावः, इणः शतरि यन्निति रूपम्, उत्वे च न स्थानिवद्, अनेन निषेधादिति तत्त्वम्। कानि सन्तीति। वाक्यसंस्कारपक्ष एतत्। तत्र पक्षे पूर्वोपस्थितनिमित्तकत्वरूपान्तरङ्गत्वमादायान्तरङ्गाणां पूर्वं प्रवृत्तेरिकारादेः स्थानिभूतादचः पूर्वत्वं द्रष्टव्यम्। एतन्मूलकमेव[3] वाक्यसंस्कारपक्षे श्रुतवर्णक्रमेणैव लक्ष्य-

सम्भवतीत्याह—प्रकल्प्येति। अयम्पक्षः—सुबन्ताण्णिजिति पक्षः। सम्मत इति प्रातिपदिकादिति। तत्करोतीत्यादि च 'टेः' इति सूत्रस्थस्य 'णाविष्ठवत्प्रातिपदिकस्य' इत्यस्यानुवादः। तत्र वार्तिके प्रातिपदिकादित्यस्य प्रातिपदिकप्रकृतिकसुबन्तादित्यर्थकरणे प्रातिपदिकपदोपादानस्य व्यर्थत्वापत्तिरिति भावः।

मूलोक्तस्य भावसाधनविधिशब्दस्याश्रयणे तर्हि प्रयोजनङ्किमत आह—चरमावयव इति। ननु 'एषो यन्' इत्यत्र तत्पुंस्त्वमपि न स्यादत आह—उत्वे चेति। तस्य भावरूपत्वेन पदचरमावयवत्वसम्भवात् 'कानि सन्ति' इत्यादौ स्थानिवद्भावप्रवृत्तिनिमित्तभूतमनादिष्टादचः पूर्वत्वमुपपादयति—वाक्येति। तत्रपक्षे। वाक्यसंस्कारपक्षे। एतन्मूलकमेव—तादृशान्तरङ्गत्वमूलकमेव। एतेन तस्यापूर्ववचनत्वन्निराकृतम्। श्रुतवर्णक्रमेण। यस्य प्रथमतः श्रवणन्तन्निमित्तककार्यस्यान्तरङ्गत्वात्तस्य पूर्वम्प्रवृत्ति-

१—अयम्भावः—"अचः परस्मिन्" इत्युत्सर्गः, 'न पदान्त' इति चापवादः, इत्युत्सर्गशास्त्रीयोद्देश्यताऽवच्छेदकावच्छिन्नेऽपवादशास्त्रीयोद्देश्यतावच्छेदकावच्छिन्नातिरिक्तत्वेन सङ्कोचात् 'न पदान्त'सूत्रविषये तदप्राप्त्या न पदान्तसूत्रप्रवृत्तिप्रतिबन्धाय 'अचः परस्मिन्' इत्यनेन स्थानिवत्त्वाभाव इति।

२—नच पदसंस्कारपक्षे सोः सकारस्य स्थानिभूतेणः पूर्वत्वेन दृष्टत्वाभावात् स्थानिवत्त्वाप्राप्त्योदाहरणासम्भव इति वाच्यम्, पय उपपदात् ण्यन्तादिण्धातोः 'कर्मण्यण्' इत्यणि 'पयोगमः' इत्यत्र रोः स्थानिभूतादचः पूर्वत्वेन दृष्टत्वसत्त्वात्तत्फलसम्भवात्। वस्तुतस्तु 'पयोगमः' इत्यत्र फलाभावः, उत्वस्यैव प्राप्त्यां तस्य च पदान्तस्य स्थाने विधावित्यर्थेनापि निषेधप्रवृत्त्योक्तरूपसिद्धेः, सपादसप्ताध्यायिस्थानां पूर्वं प्रवृत्त्या रुत्वपर्यन्तं गमादेशाभावे प्रमाणाभावेनात्रापि स्थानिभूतादचः पूर्वत्वेन दृष्टत्वाभावाच्च। तस्मात् गिरिं वातीति गिरिवाः तमाचष्टे गिरिव् तस्य रामः, 'गिरिव्रामः' इत्यत्र 'अचः परस्मिन्' इति स्थानिवत्त्वात् 'लोपो व्योः' इति वलोपो नेति फलं बोध्यम्। पदान्तस्य स्थाने विधावित्यर्थे तु स्थानिवत्त्वनिषेधात् वलोपो दुर्वार एव स्यात्।

३ पदसंस्कारपक्षे 'पदान्तविधौ न स्थानिवत्' इत्यस्य 'प्रतीचः' इत्युदाहरणं बोध्यम्।

वरे—यायावरः। 'यश्च यङः' इति वरच्, अतो लोपः, स च 'आतो लोप इटि च' (पा०सू० ६।४।६४) इत्यालोपे कर्तव्ये न स्थानिवत्। यलोपे—यातिः, यातेर्यङन्तात् क्तिच्, अतो लोपः, यलोपः, अल्लोपस्य

संस्कार इति वदन्ति। न स्थानिवदिति। तेन आतो लोपो नेति भावः। न च पूर्वमलोपस्ततो वलि लोप इति क्रमसत्त्वादकारेणार्द्धधातुकत्वाद्यलाभात्कथमतिदेशेन तल्लाभः, सम्भावनामात्रेणापि तल्लाभस्य वरेग्रहणेन ज्ञापनात्। अस्ति चात्रापि 'यदि पूर्वं यलोपः स्यात्तदाऽकारेण प्रत्ययत्वं लब्धं स्यात्' इति सम्भावना। फलन्तु यातिरित्यादिसिद्धिरिति दिक्। क्तिजिति। 'क्तिच्क्तौ च संज्ञायाम्' (पा० सू० ३।३।१७४) इत्यनेन।

रिति क्रमेण। ननु जातिपक्षमुपादायाण्ग्रहणस्य प्रत्याख्यानवत्पदसंस्कारपक्षाश्रयणं कृत्वा पदान्तग्रहणम्प्रत्याख्यायतामिति, चेन्न। 'अदद्रीचः' इत्याद्यर्थन्तस्यावश्यकत्वात् पदान्तग्रहणाभावे तन्राच इत्यल्लोपस्य स्थानिवत्त्वाद्यण्स्यात्। नचाद्र्यादेशस्योभयाश्रितत्वमच इत्यस्य तु न तदाश्रितत्वमित्यच इत्यन्तरङ्गमिति तस्यादौ प्रवृत्तिस्ततोऽद्र्यादेशस्येति नेकारस्यानादिष्टादचः पूर्वत्वमिति वाच्यम्, भसंज्ञानिमित्तविभक्त्युत्पत्तिपर्यन्तन्तस्याद्यादेशस्य प्रवृत्तिप्रतिबन्धे मानाभावेनाल्लोपात्प्राक्प्रवृत्तेः 'द्युप्रागपागुदक्प्रतीचो यत्' इति सूत्रे 'प्रतीच' इत्यत्र यणादेशस्याकरणेनाच इत्यल्लोपस्य पूर्वस्य कार्ये कर्तव्ये न स्थानिवत्त्वमित्यर्थकल्पनायां तु ज्ञानगौरवस्याप्यनुचितत्वमित्यर्थसाधकमेव पदान्तग्रहणमस्त्वित्याशयेन भाष्यकृता तस्य प्रत्याख्यानन्न कृतमिति। तेन—यायावर इत्यत्र यङवयवाकारलोपस्य स्थानिवद्भावाभावेन। तल्लाभः—आर्द्धधातुकत्वालाभः। यद्यकारस्यार्द्धधातुकत्वं स्यात्तदा तदादेशस्य लोपस्यातिदेशेनार्द्धधातुकत्वं स्यात्तदेव तु न सम्भवतीति भावः। ननु सम्भावनामादाय वरेग्रहणस्य चारितार्थ्येऽपि नापूर्वफलङ्किञ्चिन्निष्पन्नमत आह—फलन्त्विति। ननु मूले यलोपविधिं प्रति न स्थानिवदित्यस्य 'यायावर' इत्युदाहरणमेव कुतो नोक्तमिति चेन्न। यातिरित्याद्यर्थं यलोपग्रहणस्यावश्यकतया तेनैवात्रापि स सिद्ध इति न तदंशे उदाहरणत्वमित्याशयात्। इत्यादिसिद्धिरिति। यदि सम्भावितमार्द्धधातुकत्वमाकारलोपनिमित्तन्न स्यात्तदा यातिरित्यत्र यङन्तात् क्तिचि कृतेऽकारयकारयोः क्रमेण लोपेऽकारस्यार्द्धधातुकत्वाभावेनाकारस्य लोपो न स्यादतः सम्भावितमप्यार्द्धधातुकत्वमाकारलोपस्य निमित्तमित्याश्रयणीयम्। अत्रादिना 'लोलुवः' 'पोपुवः' इत्यस्य संग्रहः। अत्राच्प्रत्ययविषये यङवयवाकारस्य 'न धातु' इतिसूत्रस्य प्रत्याख्यानपक्षे 'यस्येति' योगविभागेनादौ लोपे 'यङोचिच' इति यलोपेऽलोपस्य स्थानिवत्त्वेनाच्प्रत्ययनिमित्तको गुणो यथा न भवति, तथोवङादेशोऽपि न तन्न तन्निमित्तकः।

स्थानिवत्त्वादातो लोपः, यलोपः । न च पुनरालोपः शङ्क्यः, चिणो लुङ्न्यायेनातो लोपस्यासिद्धत्वात्, स्थानिवद्भावाच्च । स्वरे—चिकीर्षकः, सनोऽतो लोपो 'लिति' ( पा० सू० ६।१।१९३ ) इति ककारेकारस्य उदात्तत्वे कर्तव्ये न स्थानिवत् । सवर्णानुस्वारयोः—शिण्ढि । दीर्घे—प्रतिदीव्ना । जशि—सग्धिश्च मे । अद्नं ग्धिः ।

क्तिन् तु न, 'अ प्रत्ययात्' ( पा० सू० ३।३।१०२ ) इत्यनेन बाधात् । न स्थानिवदिति । स्थानिवत्त्वे हि स्वराप्रवृत्तिरेव स्यात् । अकारस्य तु न, स्वविधौ[1] स्थानिवत्त्वनिषेधात् । लित्त्वन्तु 'कारकः' इत्यादौ सावकाशमिति भावः । शिण्ढीति । नन्वत्रानुस्वारस्यादिष्टादचः[2] पूर्वत्वेन स्थानिवत्त्वाप्रवृत्तिः ।

किन्तु यङवयवाकारनिमित्तक एव वाच्यः । स यदि सम्भावितप्रत्ययत्वन्नाश्रीयेत कार्यप्रयोजकत्वेन तदा न स्यात् ।

नतु मूले यातिरित्यस्य साधनावसरे नच पुनरालोपः शङ्क्यः चिणो लुङ्न्यायेनातो लोपस्यासिद्धत्वात्स्थानिवद्भावाच्चेत्युक्तम् । तत्र लक्ष्यभेदेन लक्षणभेदकल्पनयाऽसिद्धत्वमाकारलोपविधायकशास्त्रस्येत्यस्तु स्थानिवद्भावादिति तु न युक्तम् । 'अभ्यासस्यासवर्णे' इत्यनेनाभ्यासकार्ये तदुत्तरखण्डादेशस्याभ्यासकार्यप्रतिबन्धकीभूतस्थानिवत्त्वन्नेति ज्ञापनेन यथा आरतीत्यस्य सिद्धिर्भवति तथा प्रकृतेऽपि स्थानिवद्भावस्य निषेधः स्यादिति, चेन्न । अभ्यासत्वपर्याप्त्यधिकरणस्य स्थाने कार्ये कर्तव्ये तदुत्तरखण्डादेशस्य तत्प्रतिबन्धकीभूतमित्यर्थस्य तेन ज्ञापनात् । नचैवं सति परिभाषेन्दुशेखरविरोधस्तत्र हि अरियृयादित्यत्र स्थानिवत्त्वेनेयङ्भवत्येव, तस्य स्थानिवत्त्वस्याभ्यासकार्यप्रतिबन्धकत्वाभावादित्युक्तम् । अभ्यासत्वपर्याप्त्यधिकरणत्वस्य प्रवेशे तु तस्येयङोऽभ्यासत्वपर्याप्त्यधिकरणस्थानित्वन्तत्र नेति निषेधाप्राप्तेः प्रतिबन्धकीभूतेत्यस्य तत्र प्रयोजनकथनासङ्गतेरिति वाच्यम् । तस्य ग्रन्थस्य वस्तुतोऽभ्याससम्बन्धिकार्यं इत्यर्थाभिप्रायकत्वात् । अभ्यासावयवादेशस्याप्यभ्याससम्बन्धित्वमित्याशयात् । वस्तुतस्तत्र प्रतिबन्धकत्वनिवेशो न कार्योऽभ्यासत्वपर्याप्त्यधिरणत्वनिवेश एव कार्यो लाघवायेति दिक् ।

अप्रवृत्तिरेवेति । 'चिकीर्षकः' इतीकारस्येति शेषः । मूले सवर्णानुस्वारग्रहणस्य शिण्ढीत्युदाहरणन्तत्र शिषेर्लोटि तस्य 'हेर्धिः' 'श्नम्' 'श्नसोरल्लोपः' अनुस्वारे, ष्टुत्वजश्त्वपरसवर्णेषु, झरो झरीति, वा डकारलोप, इति प्रक्रिया । तत्र डकारलोपे पञ्चमीसमासेन स्थानिवत्त्वम्, आदिष्टादचः पूर्वत्वात्पूर्वत्रासिद्धीयत्वाच्च । तत्र शिण्ढीत्युदाहरणं खण्डयितुमाशङ्कते—नन्वित्यादिना । अप्रवृत्तिरिति । अल्लोपस्य परसवर्णे

१ स्थानिवत्त्वेन यद्व्यक्तिविषयिणी बुद्धिरुपजायते साक्षात्तदुद्देश्यकविधौ न स्थानिवद् इति हि तदर्थः ।

२—ननु आदिष्ट आदेशः, तथा च आदेशाभिन्नादच इत्यर्थो लभ्यते । सचानुपपन्नः, अचोऽनादे-

**अदेः क्तिनि 'बहुलं छन्दसि' ( पा० सू० २।४।३९ ) इति घस्लादेशः । 'घसिभसोर्हलि' ( पा० सू० ६।४।१०० ) इत्युपधालोपः ।**

**नचास्मादेव ज्ञापकात्तस्याशास्त्रीयत्वेऽपि स्थानिवत्त्वेन तत्त्वेऽस्तु, फलाभा-**

कर्तव्ये स्थानिवत्त्वाप्रवृत्तिरित्यर्थः । नकारनिष्ठस्थानादिष्टादचः पूर्वत्वं स्थानिवदादेश इत्यनेनानुस्वारे ऽतिदिष्टमस्तु, यद्यप्यनादिष्टादचः पूर्वत्वमशास्त्रीयन्तथापि सवर्णग्रहणाज्ज्ञापकात्तदतिदेशो भविष्यति । एवञ्चातिदिष्टन्तदेवादाय परसवर्णे कर्तव्ये 'अचः परस्मिन्' इति स्थानिवद्भावः स्यादित्याशङ्काञ्चिराचष्टे—न चेति

**फलाभावादिति ।** पूर्वसूत्रेण स्थानिवत्त्वस्य फलाभावादित्यर्थः । उत्तरसूत्रस्य प्रवृत्त्यर्थंपूर्वसूत्रस्य प्रवृत्तिकल्पनं कृत्वा सवर्णपरग्रहणकरणापेक्षया 'प्रक्षालनाद्धि' इति न्यायेन पूर्वसूत्राप्रवृत्तिरेवोचितेति भावः । किञ्च यत्र ज्ञाप्यार्थस्यान्यत्र फलन्तदेव ज्ञापकम्भवति तथात्र वक्तुमशक्यम् । नच 'समाद्या' इत्यस्य सिद्धिरेव फलम् । अत्र सम् अद् ईय इति स्थिते पूर्वविप्रतिषेधेनोपधावृद्धेः पूर्वं णिलोपे ततस्तस्य स्थानिवत्त्वेन णिरवबुध्या वृद्धौ कृतायामेकदेशविकृतन्यायेनाद्ग्रहणेन ग्रहणाज्जग्ध्यादेशस्य प्राप्तौ 'अचः परस्मिन्' इति स्थानिवत्त्वमिष्यते स चानादिष्टादचः पूर्वत्वस्यातिदेश एव घटत इति वाच्यम्; णिलोपादन्तरङ्गत्वेनोपधावृद्धेः प्रवृत्तेरनादिष्टादचः पूर्वत्वस्य सुलभत्वात् । 'सन्वल्लघुनि' इतिसूत्रे प्रत्याहारे ग्रहणेन 'वृद्धेर्लोपो बलीयान्' इति तु यत्रैकस्थानिकत्वं वृद्धिलोपयोस्तद्विषयम् । नच 'लोलुवः' इत्यत्रोवङि 'पुगन्त' इति प्राप्तस्याज्निमित्तकगुणस्य 'न धातुलोप' सूत्रप्रत्याख्यानपक्षे प्रतिबन्ध एव फलमस्त्विति वाच्यम्; 'न धातुलोप' इति सूत्रप्रत्याख्यानपक्षे फलसत्त्वेऽपि सूत्रकारमते फलाभावात् । अत एव पूर्वत्रासिद्धे न स्थानिवदित्यवष्टभ्य सवर्णग्रहणप्रत्याख्यानपरभाष्यस्य सङ्गतिः । अन्यथोक्तार्थज्ञापकतयैव सवर्णग्रहणस्यावश्यकतया 'वरेयलोपस्वरवर्जन्द्विर्वचनादीनि न वक्तव्यानि' इति भाष्यन्न सङ्गच्छेत ।

शत्वादिति, चेन्न, आदिष्टादित्यस्य आदेशत्वेन बुद्धिविषयीभूतादादेशादिति यावदित्यर्थेनादोषात् । शब्दनित्यतापक्षे हि अच्येवादेशबुद्धिकरणात् । यद्वा अच इति षष्ठ्यन्तमचः स्थाने आदेशादित्यर्थः ।

१—ननु नकारवृत्तिस्थानिभूतादचः पूर्वत्वम् 'स्थानिवदादेशः' इत्यनेन स्थानिवत्त्वादनुस्वारस्य स्थानिभूतादचः पूर्वत्वेन दृष्टत्वमक्षतम्, नच 'स्थानिवदादेशः' इत्यस्य शास्त्रत्वात्प्रत्यासत्त्या शास्त्रीयधर्मातिदेश एव तत्प्रवृत्तिरुक्तधर्मश्च न शास्त्रीयः, मुखप्रविष्टशास्त्रकारीयसङ्केतविषयतावच्छेदकधर्मस्यैव शास्त्रीयत्वादिति, वाच्यम्, परसवर्णे निषेधसामर्थ्येनाशास्त्रीयत्वेऽपि तेनातिदेशस्य ज्ञापनादिति मनसि निधायाह नचेति ।

२—स्थानिभूतादचः पूर्वत्वेनं दृष्टत्वमित्यर्थः ।

३—अशास्त्रीयत्वेऽप्युक्तधर्मस्यातिदेशस्वीकारे फलाभावादित्यर्थः, । फलाभावादशास्त्रीयस्याप्यदेशं स्वीकृत्य परसवर्णग्रहणन्न कार्यमिति भावः ।

'झलो झलि' ( पा० सू० ८।२।२६ ) इति सलोपः। धत्वम्। घस्य

वात्, तद्घटित[1]सन्निवेशापेक्षस्य ततः पूर्वत्वस्यातिदेशसहस्रेणाप्यतिदेष्टुमशक्यत्वाच्च, 'भोभगो[2]' ( पा० सू० ८।३।१७ ) इति सूत्रस्थभाष्यरीत्या तस्य स्थानिभूताल्वृत्तिधर्मत्वेन 'अनल्विधौ' इति निषेधाच्च, विशेषण[3]तयाऽलाश्रयणाच्च। भा[4]ष्ये 'पूर्वत्रासिद्धे' इत्यवष्टभ्य वरे—यलोप—स्वर—भिन्नानां द्विर्वचनादीनां ग्रहणस्यात्र प्रत्याख्यानेन तस्य च णत्वे प्रतिप्रसवेनात्र स्थानिवत्त्वेन परसवर्णाभावस्यैव लाभादिदमु

तद्घटितेति। अकारयुक्तो नकार इत्येवमानुपूर्वीघटितेत्यर्थः। अशक्यत्वादिति। नचाविद्यमानस्यैव धर्मस्यातिदेशो भवतीति तस्यातिदेशो भविष्यतीति वाच्यम्; तस्यानुपूर्वीरूपतया कार्यातिदेशस्याद्यसूत्रेण करणेऽपि रूपानतिदेशात्। स्थानिभूताल्वृत्तीति। नकारवृत्तीत्यर्थः। नन्वसाधारण्यनिवेशवादिमूलकुन्मतेनायमल्वृत्तिधर्मोऽत आह–विशेषणतयेति। अद्रूपस्याल्तो विशेषणत्वादिति भावः। पूर्वोक्तं सर्वमत्र सवर्णादेशपक्षे। वस्तुतोऽत्र तस्याभावेन णकारोऽयुक्त इत्याशयेनाह–भाष्य इति। प्रतिप्रसवेनेति। तस्य दोषः इति वचनेनेति शेषः। स्थानिवत्त्वेनेति। स्थानिद्वारकमनादिष्टादचः पूर्वत्वमाश्रित्य भवत्सम्मतस्थानिवत्त्वेनेत्यर्थः। ननु प्रतिपदो-

१ ननु 'न धातुलोपे' इत्यस्य प्रत्याख्यानपक्षे यङन्तलूधातोः 'नन्दिग्रहिपचादिभ्यः' इत्यचि 'अतो लोपः' 'इत्यल्लोपे 'यङोऽचि च" इति यलोपे 'अचिश्नु' इति उवङादेशे प्राप्तस्य लघूपधगुणस्याभावाय उकारवृत्तिस्थानिभूतादचः पूर्वत्वमुवङि आदायाल्लोपस्य स्थानिवत्त्वात् 'लोलुवः' इत्यस्य सिद्धिरेव फलमित्यरुचेराह–तद्घटितेति–स्थानिभूताज्घटितनकारसन्निवेशापेक्षस्येत्यर्थः। सन्निवेशः=पूर्वोत्तरभावेन स्थितिः। ततः=स्थानिभूतादचः।

२ नन्वसत एव धर्मस्यारोपार्थमतिदेशशास्त्रमत आह–भोभगोरिति–अनुस्वारनिष्ठादेश्यतानिरूपिता या ननिष्ठा स्थानिता तस्या अल्त्वव्याप्यनत्वधर्मावच्छिन्नतया 'अनुस्वारः' स्थानिभूतादचः पूर्वत्वेन दृष्टत्ववान् भवतु' -इत्यारोपप्रकारीभूतस्थानिभूतादचः पूर्वत्वेन दृष्टत्वरूपधर्मनिमित्तके 'अचः परस्मिन्' इति स्थानिवद्भावरूपे कार्ये 'अनल्विधौ' इति निषेधादनुस्वारे स्थानिभूतादचः पूर्वत्वेन दृष्टत्वालाभ इति भावः।

२ नन्वारोपप्रकारीभूतधर्मेण साक्षादवच्छिन्नोद्देश्यताकविधावेव निषेधप्रवृत्तेः, 'अचः परस्मिन्' इति स्थानिवत्त्वस्य चातथात्वाददोषोऽत आह–विशेषणतयेति–स्थानितायामेव 'साक्षादवच्छिन्नत्वनिवेशे तु 'नश्चापदान्तस्य' इत्यत्र 'अपदान्तनकाराभिन्नस्य निर्दिश्यमानस्यानुस्वारः' इत्यर्थेन नकारनिष्ठस्थानिताया निर्दिश्यमानत्वेन साक्षादवच्छिन्नतया तस्य चाल्त्वव्याप्यत्वाभावेनादोषो बोध्यः। अच्त्वस्याल्त्वव्याप्यधर्मतया तद्घटितस्थानिभूतादचः पूर्वत्वेन दृष्टत्वस्यात्र निमित्तत्वेन अल्त्वव्याप्यधर्मघटितधर्मनिमित्तके विधौ न स्थानिवदिति द्वितीयार्थेन 'अनल्विधौ' इति निषेधः स्यादिति भावः।

४—ननु 'अनल्विधौ' इति निषेधोऽल्त्वव्याप्यधर्मस्य स्थानिघटकाल्वृत्तित्वे एव प्रवर्तते, प्रकृते चाच्त्वरूपाल्त्वव्याप्यो धर्मो न नकाररूपस्थानिघटकाल्वृत्तिरिति निषेधाप्राप्तिरत आह–भाष्य इति, तथाचात्र भाष्यप्रामाण्याद् णत्वरूपपरसवर्णाभावो लभ्यते इति नेदमुदाहरणं सम्भवतीति भावः।

जश्त्वम् । 'सहस्य सः–' ( पा० सू० ६।३।७८ ) इति सूत्रात् स

दाहरणं चिन्त्यम् । णत्वग्रहणे च प्रतिप्रसववार्तिके लक्षणप्रतिपदोक्तपरिभाषा नेत्युपपादयिष्यते । किञ्च–'दीर्घादाचार्याणाम्' ( पा सू० ८।४।५२ ) इत्युत्तरम् 'अनुस्वारस्य ययि' ( पा० सू० ८।४।५८ ) 'वा पदान्तस्य' (पा० सू० ८।४।५९ ) 'तोर्लि' ( पा० सू० ८।४।६० ) 'उदःस्था' ( पा० सू० ८।४।६१ ) 'झयो हो' ( पा० सू० ८।४।६२ ) 'शश्छोऽटि' ( पा० सू० ८।४ ६३ ) इति षट्सूत्रीपाठोत्तरं 'झलां जश् झशि' ( पा० सू० ८।४।५३ ) 'अभ्यासे चर्च' ( पा० सू० ८।४।५४ ) 'खरि च' ( पा० सू० ८।४।५५ ) 'वाऽवसाने' ( पा० सू० ८।४।५६ ) 'अणोऽप्रगृह्यस्य' ( पा० सू० ८।४।५७ ) इति पञ्चसूत्र्याः पाठ इति भाष्यसम्मताष्टाध्यायीपाठपक्षे परसवर्णदृष्ट्या 'झलां जश् झशि' ( पा० सू० ८।४।५३ ) इत्यस्य, 'झरो झरि' ( पा० सू० ८।४।६५) इत्यस्य चासिद्धत्वेन यय्परत्वाभावात्तदप्राप्तेरिति चेत्, सत्यम्, पादयतेः क्विपि पाद्सतीयादौ 'झयो ह' इति पूर्वसवर्णे पञ्चमीसमासेन प्राप्तस्थानिवद्भाववारणार्थत्वात्, हरि[२]तशब्दादाचक्षाणण्यन्तात् क्विपि

क्षणत्वस्य प्रतिप्रसवसूचकवार्तिके ग्रहणमत आह–णत्वग्रहण इति । उपपादयिष्यत इति । अष्टन्शब्द इति शेषः । णग्रहणस्य 'अपदान्तस्य मूर्द्धन्य' इति सूत्रान्मूर्द्धन्यपदानुवृत्तिं कृत्वाप्रत्याख्यानेन प्रतिपदोक्तस्य णत्वस्याभावेन लक्षणप्रतिपदोक्तपरिभाषाया अप्रवृत्तिरेव । एवञ्च 'शिण्ढी' इति न सवर्णानुस्वारयोरुदाहरणम्, किन्तु अनुस्वारग्रहणस्यैव । आद्यसूत्रेणाभ्युपेत्यानादिष्टादचः पूर्वत्वं शिण्ढीत्येतत्परसवर्णग्रहणोदाहरणं न, एतत्साधयति–किञ्चेति । इदम्पाठव्यत्यासप्रदर्शनं जश्त्वस्यासिद्धत्वप्रदर्शनाय, नतु लोपस्यासिद्धत्वप्रदर्शनाय । व्यत्यासाभावेऽपि लोपस्यासिद्धत्वसम्भवात् । पाठव्यत्यासपक्षे शिण्ढीत्यत्र प्रक्रिया त्वित्थम्बोध्या–शिनष्हि इत्यत्राल्लोपानुस्वारष्टुत्वानि अस्यामवस्थायामनुस्वारस्य यय्परत्वाभावादप्राप्तिः परसवर्णत्वस्य, एवं लोपस्यापि सवर्णपरत्वाभावादप्राप्तिः, किन्तु जश्त्वम्, तस्य जश्त्वस्यासिद्धत्वात्परसवर्णाप्राप्तिरिति भावः।

सवर्ण इति । कर्तव्य इति शेषः । प्राप्तस्थानिवद्भावेति । 'क्वौ लुप्तन्न स्थानिवत्' इति तु क्वाचित्कमित्याशयः । ननु 'क्वौ लुप्त' मित्यस्यासार्वत्रिकत्वेऽपि तेन

१ रषाभ्यामित्यादिणत्वविधायकेष्वपि 'अपदान्तस्य मूर्द्धन्यः' इत्यस्य सम्बन्धं कृत्वाऽऽन्तरतम्यान्नकारस्य णकाररूपमूर्द्धन्यादेशेनैव सिद्धे 'रषाभ्याम्' इति सूत्रे णग्रहणस्य, 'पदान्तस्य' इति णत्वनिषेधकसूत्रस्य च भाष्यकृता प्रत्याख्यातत्वेन प्रतिपदोक्तणकाराभावेन प्रतिपदोक्तपरिभाषाया अप्रवृत्तिरिति भावः ।

२ ननु 'पाद्सति' इत्यत्रानित्येनापि 'क्वौ लुप्तन्न स्थानिवत्' इति न्यायेनेष्टानुरोधात् स्थानिवत्त्वस्य निषेधाद्दोषाभावोऽत आह–हरितेति ।

इत्यनुवर्तमाने 'समानस्य च्छन्दस्यमूर्द्धप्रभृत्युदर्केषु' इति सूत्रेण सः । चरि–जक्षतुः ॥

हरिद्धसतीत्यादौ उक्तरीत्या प्राप्तस्य तस्य वारणार्थत्वाच्च, अत्राल्लोपस्यापि तत्प्राप्त्या क्वौ लुप्तमित्यस्य विषय एव न, हरिन्निमतीत्यादौ अनुनासिके तद्व्यावृत्त्यर्थत्वाच्च । 'हयवरट्' सूत्रभाष्यरीत्या तत्र सवर्णग्रहणापकर्षेण तस्यापि सवर्णविधित्वादित्यन्यत्र विस्तरः । सूत्रेण स इति । 'सग्धिः स्त्री, सहभोजनम्' इत्यमरात्सहस्य सादेश इति प्रतीयते । 'झलो झलि' ( पा० सू० ८।२।२६ ) इति सिचँ एव लोप इति पक्षे छान्दसो वर्ण-

निषेधेनास्य रूपस्य सिद्धेनैतदसाधारणं सवर्णग्रहणोदाहरणमत आह–हरितेति । हरिद्धसतीत्यत्र । ननु हरिद्धसतीत्यपि पञ्चमीसमासस्यानाश्रयणपक्षे सुवचमत आह–हरिन्नमतीति । भाष्यरीत्येति । तत्र हि–'स्वर्नयति' 'प्रातर्नयति' इत्यादौ 'यरोऽनुनासिके' इति रेफस्य स्थानेऽनुनासिकादेशवारणाय वार्तिककृता 'रेफस्यानुनासिकपरसवर्णद्विर्वचनप्रतिषेधो वक्तव्यः' इति कथितं, तत्प्रत्याख्यानाय 'यरोऽनुनासिके' इति सूत्रे "अनुस्वारस्य ययि' इति सूत्रात्सवर्णग्रहणस्यापकर्षो दर्शितः । नच हरिन्नमतीत्येतदपि पदान्तविधिम्प्रति न स्थानिवदित्यनेन सिद्धमिति वाच्यम्; पदचरमावयवे कर्तव्ये परपदस्थाजादेशो न स्थानिवदिति सिद्धान्ते तस्याप्रवृत्तेः । अन्यत्र–'चतुर्मुखः' इत्यस्य साधनावसरे । स्त्रीति । इदम्पूर्वान्वयि । नचैवं सति मूलासङ्गतिरिति वाच्यम् वृत्त्यनुरोधेनैवं कथनात् । वस्तुतस्तु समाना जग्धिः सग्धिरित्यत्र सहशब्दस्यैव सादेशः समानशब्दस्य विग्रहवाक्ये प्रयोगस्तु सहार्थस्य सम्प्रत्ययप्रदर्शनाय । रूढश्चायं शब्द इति "सहस्य सः संज्ञायाम्" इति सादेशः । छान्दस इति । नचैवं सत्यमरग्रन्थे कथमस्य प्रयोग इति वाच्यम्; अस्य छान्दसानुकरणत्वात् ।

१ ननु 'हरिद्धसति' इत्यत्र 'झयो हः' इत्यस्यासिद्धतया 'झलां जशोऽन्ते' इति तकारस्य दकारे तस्य च स्थानिभूतादचः पूर्वत्वेन दृष्टत्वाभावात् ततः परस्य हस्य पूर्वसवर्णे कर्तव्ये पञ्चमीसमासेनापि स्थानिवत्त्वाप्राप्तिरिति चेन्न, उक्तहरिच्छब्दस्याशब्देन समासे जश्त्वे हरिच्छन्दात् णिचि टिलोपे "हरिद्धसति' इत्यत्र दकारस्य स्थानिभूतादचः पूर्वत्वेन दृष्टत्वात् प्राप्तास्थानिवत्त्वस्य 'परसवर्णे' इत्यस्य चारितार्थ्यात् । ननु सपादसप्ताध्यायीस्थशास्त्रप्रवृत्तिसम्भावनया जश्त्वाप्रवृत्त्या णिचि टिलोपे ततो जश्त्वे दस्य स्थानिभूतादचः पूर्वत्वेन दृष्टत्वाभाव इति चेन्न, हरिं ददातीति हरिदस्ततो णिचि टिलोपे दकारस्य तत्त्वसत्त्वेन तद्घटिते एव 'हरिद्धसति' इत्यत्र ग्रन्थतात्पर्यात् ।

२ ननु 'प्रविगणय्य' इति भाष्यात् पञ्चमीसमासस्यानित्यतयोक्तलक्ष्यस्य सिद्ध्या, अनन्यथासिद्धोदाहरणासम्भवोऽत आह–हरिन्नमतीति न च 'यरोऽनुनासिके' इति सूत्रे भाष्यमते एव सवर्णग्रहणापकर्षणेन तन्मते उदाहरणत्वसम्भवेऽपि सूत्रमते नेदमुदाहरणमिति वाच्यम्, उक्तहरिच्छब्दात् लुनातिशब्देन योगे 'हरिल्लुनाति' इत्यस्य तन्मतेऽप्युदाहरणत्वस्य सुवचत्वात् ।

३—सिच एव लोप इति पक्षे 'चकाद्धि' इति फलमुक्त्वा 'आशाध्वम्' इत्यत्र दोषमाशङ्क्य 'एक-

'संयोगान्तस्य' ( पा०सू० ८।२।२३ )। तदन्तस्येति। अलोऽन्त्यपरिभाषयेति भावः। यद्यपि विशेषणेन तदन्तविधिलाभात् संयोगस्येत्येव सूत्रयितुमुचितम्, तथाऽपि प्रत्येकं संयोगसञ्ज्ञेति पक्षे दृषलोपो बोध्यः। स्पष्टं चेदं 'धि च' ( पा० सू० ८।२।२५) इति सूत्रे भाष्ये। लोके तु सग्धिरित्यसाध्वेवेति बोध्यम्॥

विशेषणेन = पदस्येत्यधिकारप्राप्तविशेषणेन संयोगस्येत्यनेन। एकत्वप्राप्तविशेषणेनेति। प्राप्तस्य विशेषणेनेत्यर्थः। नन्वेकत्वङ्ख्येत्यस्य द्विवचनान्तेनापि समासे एकत्वमेव भासत इत्यर्थाः? उत एकवचनान्तेनैव समासः, सङ्ख्या तु सैव भासत इति। अथवा ङ्म्फडादिभ्य इवौत्सर्गिककैकवचनान्तेन साधुत्वार्थमुत्पन्नैकवचनान्तेनैव समास इत्यर्थ इति। नाद्यः। "द्व्येकयोर्द्विवचनैकवचने" इति सूत्रेण द्वित्वविवक्षायामेव द्विवचनस्य विधानेन तस्य विवक्षापि, तस्य तु न भानमिति न सम्भवति वदतो व्याघातात्, गौणी मुख्या वोत्तरा सङ्ख्या पूर्वसंख्याम्बाधत इति सिद्धान्तविरोधापत्तेश्च। अत एवैक एवाकार इति पक्षे घटिक इत्यत्र द्व्यज्लक्षणष्ठन् स्यादिति शङ्कायामावृत्तिः कृता द्व्यज्व्यपदेशादिति भाष्यकृतोक्तम्। न द्वितीयः "वृद्धेद" इति सूत्रभाष्ये कुमार्योरगारमिति विगृह्य कुमार्यगारमिति समासप्रदर्शनविरोधापत्तेः। अत एव—न तृतीयः। उदक्षरत्वापत्तेश्च, इत्यन्त आह—अभेदैकत्वेति। अभेदलक्षणा एकत्वसंख्येति तदर्थः। अभेदो—भेदाभावः। उपसर्जनपदार्थ-

स्यानेकस्य वा व्यञ्जनपरस्य श्रुतौ विशेषो नास्ति' इति स्वसिद्धान्तेन श्रवणे भेदाभावेन धातुसकारस्य जश्त्वेन सर्वत्र सिद्धिमुक्त्वा 'इणः षीध्वम्' इति सूत्रे व्यञ्जनपरस्य व्यञ्जनस्योच्चारणे भेदाभावाभिप्रायेण लुङ्ग्रहणं न कर्तव्यम्, सिचः षत्वे ष्टुत्वादिना रूपसिद्धिं प्रदर्श्य 'अलविढ्वम्' इत्यत्र विकल्पेन ढत्वासिद्धया, घसेः, सग्धिः, भसेः 'बब्धाम्' इति रूपासिद्धयभिप्रायेण च सिच एवेति नियमो नाश्रयणीय इत्यभिधाय पुनः सिच एव लोप इत्याश्रित्य सघ् धातुना 'सग्धिः' इति, बन्धिना, बब्धाम्' इति च संसाध्य, अथ छान्दसत्वात्सलोपः यथा निष्कर्तारमध्वरस्य' इति प्राप्ते 'इष्कर्तारमध्वरस्य' इत्यत्र नलोप इति सिच एव लोप इति समर्थितम्। वस्तुतस्तु समात्रस्य लोप इति 'इष्टमेवेतत्संगृहीतम् चकाधीत्येव भवितव्यम्' इत्युक्त्या सिद्धान्तितम्। तथा च भाष्यकारिका—

"धिसकारे सिचो लोपश्चकाद्धीति प्रयोजनम्।
आशाध्वन्तु कथं ते स्याजश्त्वं तस्य भविष्यति॥
सर्वथैवं प्रसिद्धं स्यात् श्रुतिश्चापि न भिद्यते।
लुङश्चापि न मूर्धन्ये ग्रहणं सेटि दुष्यति॥
घसि-भस्योर्न सिद्धयेत्तु तस्मात्सिज्ग्रहणं न तत्।
छान्दसो वर्णलोपो वा यथेष्कर्तारमध्वरे॥"

इति भाष्योक्तदिशा सग्धिबब्ध्योस्तु लोकेऽप्येतयोः साधुत्वम्।

त्करोतीत्यादौ लोपं वारयितुं संयोगावन्तौ यस्येति द्विवचनान्तेन समासलाभार्थमन्तग्रहणम् । वृत्तौ हि उपसर्जनानामेकत्वसंख्यौत्सर्गिकी, द्वित्वादिकं तु प्रयत्नलभ्यमिति भाष्ये स्थितम् ॥

संख्येति । अभेदैकत्वसंख्येति तदर्थः । संख्यासामान्याभाव इति यावत् । विग्रहे एकवचनन्तु औत्सर्गिकं सुबन्तत्वसम्पत्तिमात्रफलकमिति समर्थसूत्रे भाष्ये स्पष्टम् । भाष्ये स्थितमिति । संयोगसञ्ज्ञासूत्रस्थ इत्यर्थः । एवञ्च

तावच्छेदकधर्मावच्छिन्नप्रतियोगिताकभेदाभावः । एतेन यत्र भेदभानन्तत्रापेक्षाबुद्धिसत्त्वेन तत्समानाधिकरणद्वित्वादिभानम्, वृत्तौ तु तस्याभावेन द्वित्वादेर्न भानम्, एकत्वमपि प्रसिद्धं न भासते, समुदायस्यैकार्थीभावविवक्षायां साधुत्वस्य समासविधायकशास्त्रैर्बोधनेन तत्रोपसर्जनपदार्थतावच्छेदकरूपेणोपसर्जनपदार्थस्य भानम् । राजपुरुषादिशब्देभ्यो राजसम्बन्धी पुरुष इत्याद्याकारक एव बोधो भवति । तत्र तात्पर्यग्राहकसत्त्वे तेन रूपेणैकानेकव्यक्तिभानम् । 'तावकीनो' यौष्माकीण' इत्यादौ यथा । यत्र न तत्सत्ता तत्र तादृशधर्मावच्छिन्नप्रकारताक एव बोधः । अत एवोक्तं संख्यासामान्याभाव इति । अयञ्चोपसर्जनपदार्थे यत्र संख्याविशेषबोधकशब्दाभावस्तत्रैव यत्र तत्सत्ता तत्र भवत्येव 'द्विपुत्र' इत्यादिषु यथा समर्थसूत्र इत्यस्य प्राक्कथनाद्भाष्ये स्थितमित्यत्रापि भाष्यं समर्थसूत्रस्थमेव विवक्षितमिति भ्रमः स्यादत आह—संयोगेति । 'यद्वृत्तौ हि' इत्यादिना भाष्ये स्थितमित्यन्तेनाभिहितं, तत्तु सम्यगेव । यत्तु यद्यपीत्यादिना लाभार्थमन्तग्रहणमित्यन्तेन ग्रन्थेन संयोगसंज्ञासूत्रस्थभाष्यसंवादेन बोधितमन्तग्रहणस्य प्रयोजनं, तत्तु तस्य भाष्यस्यैकदेश्युक्तितया समञ्जसन्नेत्याह—

१ मूले–'एकत्वसंख्यौत्सर्गिकी' इत्युक्तम् । तस्य द्विवचनाद्यन्तेनापि समासे एकत्वमेव भासते इति नार्थः, संख्यामानानुरोधेनैव विभक्तेर्विधानात् । एकवचनान्तेनैव समास इत्यपि नार्थः, 'ईदूदेत्' (पा० सू० १।१।११) इति सूत्रे 'कुमार्यगारम्'इत्यादौ प्रगृह्यसंज्ञाऽपादनपरभाष्यासंगतेः । संख्यामनपेक्ष्यौत्सर्गिकैकवचनान्तेन समास इत्यपि न,ईदूदेदिति सूत्रस्थभाष्यविरोधादित्यत एकत्वसंख्येत्यस्यार्थमाह-अभेदैकत्वेति वृत्तौ यत्किञ्चित्पदजन्यपृथगुपस्थितिविषयार्थकत्वेन दृष्टानां शब्दानां विशिष्टविषयकैकशक्त्यैवोपस्थितिजनकत्वरूपैकार्थीभावबलादेवोपसर्जनपदार्थे संख्याविशेषानवगतिरित्यभेदैकत्वसंख्येत्युक्तम् । अभेदरूपा एकत्वसंख्येति तदर्थः । तत्राभेदश्च–न भेदत्वावच्छिन्नप्रतियोगिताकाभावः, यत्किञ्चिद्भेदस्य सर्वत्र सत्त्वेनाप्रसिद्धिप्रसङ्गात् । किन्तु उपसर्जनीभूतपदार्थतावच्छेदकावच्छिन्नप्रतियोगिताकभेदाभावरूपः । 'राजपुरुषः' इत्यत्र राजत्वावच्छिन्नप्रतियोगिताकभेदाभावस्य राजमात्रे सत्त्वेन 'राजसम्बन्ध्यभिन्नः पुरुषः' इत्येव विशिष्टविषयको बोध इति संख्यासामान्याभाव एव फलति तत्र तात्पर्यवशात्तु एकत्वादिविशिष्टस्य बोधः पर्यवस्यतीति भावः ।

२ उपलक्षणमेतद्द्विवचनादेरपि, 'सङ्ख्याविशेषो भवति वाक्ये 'राज्ञः पुरुषः' 'राज्ञोः पुरुषः' 'राज्ञां पुरुषः' इति समासे न भवति 'राजपुरुष' इति इति भाष्यात् ।

'यण' इति वाचनिकम् । यद्वा वाच्यो व्याख्येयः, व्याख्या च

प्रत्येकं संयोगसञ्ज्ञापक्षस्यानन्तरा इति सूत्राक्षर[1]स्वारस्यविरोधेन, फला[2]भावेन चासङ्गतत्वमिति तत्रैव भाष्ये ध्वनिततया ऽत्रत्यमन्तग्रहणं व्यर्थमेव, न तु फलान्तरे[2]ऽभिनिवेशः कार्य इति भावः। यत्तु ÷ संयोगेति लुप्तषष्ठीकम्, तच्च पदस्येति चान्तविशेषणम्, संयोगान्तस्य सतः पदान्तस्येत्यर्थमन्तग्रहणमिति तन्न, तादृशलक्ष्याभावात्। अत एव "ध्वसोः"

एवश्चेति । अन्तपदस्योक्तफलकत्वस्योक्तभाष्यारूढत्वे च । सूत्राक्षरेति । न विद्यते ऽन्तरं येषान्ते ऽनन्तरा, इत्यर्थेन समुदायस्य प्रतीतिः । ध्वनिततयेति । समुदायसंयोगसंज्ञासिद्धये सहग्रहणं कर्तव्यमिति प्रथममभिधाय 'गर्गदण्डन्यायेन' समुदायस्य तत्सिद्धौ सहग्रहणन्न कार्यमित्येवोक्तन्त्वेकस्य संयोगसंज्ञायाः किञ्चिदसाधारणम्प्रयोजनमभिहितं तेन ध्वनितमित्यर्थः । फलान्तर इति । अन्यग्रहस्येत्यादिः । अभीति । 'अस्ति सिचः' इति सूत्रे सिच्छब्दात्प्राक्सकारस्य प्रश्लेषेऽपि तस्य सकारस्य संयोगान्तलोपेन निवृत्तिरित्येतत्फलस्याभिनिवेशः। अत्रान्तपदोपादानेनैकम्प्रागुक्तं द्विवचनान्तेन समासलाभरूपं यद्यपि सम्भाव्यते तथापि प्रत्येकसंयोगसंज्ञापक्षस्यैवासत्त्वेन तन्नास्ति 'अस्ति सिचोऽपृक्ते' इत्यत्र 'विद्यमानास्ति सिच' इत्यर्थस्य लाभस्तु 'सिच्च अस् चेति' द्वन्द्वघटितास्तिपदाद्यवयवककर्मधारयेन सिद्धः । तथाच तदपि फलन्नास्तीति भावः ।

प्रक्रियाप्रकाशोक्तिं खण्डयितुन्तामनुवदति—यत्त्विति । अस्यार्थस्य फलन्तु सरूपसंज्ञासूत्रभाष्ये पृथग्विभक्तिपराणामेकशेष इति पक्षे वृक्षसस्इति प्राप्नोतीत्यभिधाय संयोगान्तलोपात्सिद्धमिति भाष्यकारोक्तिसङ्गमनम् । तादृशलक्ष्येति । पूर्वोक्तार्थाकरणे यादृशलक्ष्यन्न सिध्यति तादृशलक्ष्यस्य सम्प्रतिपन्नस्याभावादित्यर्थः । सरूपसूत्रस्थन्त-

१ अविद्यमाना अन्तरा येषां ते 'अनन्तराः' अव्यवहिता इत्यर्थः । 'द्वयोश्चैवान्तरा कश्चिद्विद्यते न वा' इति भाष्येण, स्वाव्यवहितपूर्वत्वसामानाधिकरण्य–स्वाव्यवहितोत्तरत्वसामानाधिकरण्यैतदुभयसम्बन्धेन यत्किञ्चिद्वस्तुविशिष्टद्वित्ववतोरेव व्यवहितपदार्थतया पर्युदासन्यायेन तद्भिन्नस्यापि द्वित्वविशिष्टस्यैव ग्रहणौचित्येन च सूत्राक्षरस्वारस्यभङ्गः स्पष्ट एवेति भावः । अत्र यत्किञ्चिद्वस्तुपदेन व्यवधायकवस्तुनो ग्रहणं बोध्यम् । यथा रामशब्दे आविशिष्टद्वित्ववत्त्वं रेफमकारयोः, द्वित्वस्य रेफमकारवृत्तित्वात् । रेफमादाय स्वाव्यवहितपूर्वत्वसामानाधिकरण्यम्, मकारमादाय स्वाव्यवहितोत्तरत्वसामानाधिकरण्यमिति लक्षणसमन्वय ऊहनीयः ।

२ संयोगसंज्ञासूत्रभाष्ये–'किंचास्याद्यद्येकैकस्य संयोगसंज्ञा स्यात्'. इत्युक्त्वा आपतितदोषानुद्धृत्य 'गर्गदण्डन'न्यायेन समुदायस्यैव संयोगसंज्ञास्थापितेति प्रत्येकसंज्ञायां फलाभाव इति भावः ।

'अस्तिसिचोऽपृक्ते' इत्यत्र 'द्विसकारकोऽयं निर्देशः' इति भाष्यात् प्रत्येकसंज्ञापक्षे प्रश्लिष्टसकारस्य पदत्वात्, संयोगत्वाच्च लोपरूपफलान्तर इत्यर्थः । उक्तभाष्यात् 'अस्तिस्सिचोऽपृक्ते' इति पाठस्यैव लाभेन लोपाभावस्यैवेष्टत्वात्। प्रश्लेषं विनैव विद्यमानार्थलाभस्य कौमुद्यामुक्तत्वाच्च तादृशफलाभाव इति भावः।

द्वेधा—'झलो झलि' ( पा० सू० ८।२।२६ ) इत्यतो झल्ग्रहणमपकृष्य झल एव लोपो विधीयत इति, अन्तरङ्गे लोपे कर्तव्ये बहिरङ्गस्य

(पा० सू० ६।४।११९) इति सूत्रे "द्विशकारको निर्देशः" इति भाष्ये उक्तम् । त्वद्रीत्या संयोगान्तलोपस्य दुर्वारत्वेन शकारद्वयाभावात्तदसंगतिः स्पष्टैव ॥

अपकृष्येति । तच्च षष्ठ्या विपरिणम्य वाक्यभेदेन सम्बध्यते । तेन पूर्ववाक्यस्य क्वचिदझल्यपि प्रवृत्तिः । उत्तरवाक्येन च तस्य क्वाचित्कत्वं

ज्ञाप्यन्तु तादृशार्थकरणेनैकसकारस्य निवृत्तावपि वृक्षस् इत्यस्य प्राप्त्यैकदेश्युक्तिरेवेति तादृशार्थकरणं व्यर्थमेव । अत एव कैयटेन तादृशार्थस्य लक्ष्यासाधकतया वस्तुतः संयोगान्तस्य लोपाद्धलङ्यादिलोपादिति व्याख्या कृता । अत एव=तादृशार्थाभावादेव । भाष्ये उक्तमिति । यदि तादृशोऽर्थोऽभिप्रेतः स्यात्तदा लुप्तनिर्दिष्टः शकार इति वदेदिति भावः ॥

अपकृष्येति । मुनिसमत एवायमपकर्षः । यथा—पूर्वसूत्रकरणकाले स्मृतप्रयोजनकपदोपादानेऽपि लक्ष्यानुरोधेनोत्तरत्र सम्बन्धो भवति तथा पूर्वसूत्रकरणकाले विषयान्तरसंसक्तमनसा प्रयोजनास्मरणेनाकृतस्य शब्दस्योत्तरसूत्रकरणकाले स्मृतप्रयोजनकस्य पूर्वत्र सम्बन्धोऽपि, स च क्वचिद्योगविभागेन भाष्यकृता प्रदर्श्यते, क्वचित्त्वन्यथा यथा—'रायो हलि' इत्यत्र 'हलीत्युभयोः शेषः' इत्युक्तम् । अत्र तु 'संयोगान्तस्य लोपे यणः प्रतिषेधः, न वा, झलो लोपात्, बहिरङ्गलक्षणत्वाद्वा' इति वार्तिककृतोक्तम् । षष्ठ्येति । उत्तरत्र पञ्चम्यन्तस्य तस्य सत्त्वात् । वाक्यभेदेनेति । 'संयोगान्तस्य

१ सिद्धान्ते संयोगान्तस्येति पदे 'विशेषणम्' तदन्तस्य लोप इत्यर्थे 'लोपश्च' इत्यत्र प्रश्लिष्टशकारस्य लोपो न प्राप्नोति, प्रथमान्तलोपशब्दस्य शकारमादाय द्वयोः शकारयोः संयोगत्वेऽपि शकारद्वयान्तस्यापदत्वेन संयोगान्तपदत्वाभावात् । संयोगेत्यस्य लुप्तषष्ठीकत्वे तु 'एकत्र द्वयम्' इति रीत्या संयोगावयवः पदावयवश्च योऽन्तस्तस्य लोपः संयोगान्तः सन् पदान्तो यस्तस्य लोप इति यावत् । तथाच—'लोपश्च' इत्यत्र प्रश्लिष्टशकारो लुप्तस्वन्तत्वात्पदसंज्ञकः, तदन्तत्वञ्च—व्यपदेशिवद्भावेन, शकारद्वयमादाय संयोगान्तश्चेति लोपापत्त्या द्विशकारको निर्देश इति भाष्यविरोधः स्यादिति भावः ।

२ क्वचिदझल्यपि प्रवृत्तिस्वीकारादेव 'कर्मवत्कर्मणा तुल्यक्रियः' ( पा० सू० ३-१ ८७) इति सूत्रे भाष्ये 'व्यत्ययो बहुलम्' 'लिङ्याशिष्यङ्' इति संहितया पाठे लकारं प्रश्लिष्य तस्य चात्रानुवृत्त्या 'लकारवाच्य एव कर्ता कर्मवत्' इति व्याख्यानेन 'ईषद्भेदं कुसूलेन' इत्यत्र कर्मकर्तरि खल्न, किन्तु भाव एवेत्युक्तिः सङ्गच्छते । वस्तुतस्तु हल्ग्रहणं सम्बन्ध्य वाक्यभेदेन व्याख्याने प्रमाणाभावः । अत एव भाष्ये वाक्यभेदो नोक्तः । अत एव 'कर्मवत्कर्मणा' इति सूत्रे 'द्विलकारको निर्देशः' इत्युक्तिः सङ्गच्छते । अन्यथा 'अमो मश्' इति सूत्रे भाष्ये 'किं यकारो न श्रूयते । लुप्तनिर्दिष्टो यकारः' इतिवत् किं लकारो न श्रूयते लुप्तनिर्दिष्टो लकारः' इति वदेत् । किञ्च—लकारस्य संयोगान्तलोप इत्यप्यसङ्गतम्, 'लोपश्च' इतिवत् लान्ते संयोगान्तपदत्वाभावाल्लोपाप्राप्तेः । 'अमो मश्' इत्यत्र मकारद्वयकरणपरं भाष्यन्तु एकदेश्युक्तिः । तत्रैव भाष्ये 'यदि द्विमकारकः, अपृक्तश्चय इड् न प्राप्नोति । 'वर्धी वृत्रं मरुत इन्द्रियेण' यकारादौ न

यणोऽसिद्धत्वमिति वा। न च षाष्ठो असिद्धपरिभाषा त्रिपादीस्थत्वेनासिद्धमन्तरङ्गं लोपञ्च पश्यतीति वाच्यम्, कार्यकालपक्षाभ्युपगमात्। न च 'नाजानन्तर्ये बहिष्ट्वप्रक्लृप्तिः' इति निषेधः, तस्यानित्यत्वात्, उत्तरकालप्रवृत्ते लोपे अजानन्तर्याभावाच्च। तथा च वार्ति-

ज्ञाप्यते। तेन च नातिप्रसङ्गः। ध्वनितं चेदम् 'अमो मश्' (पा० सू० ७।१।४०) इत्यत्र भाष्ये। तत्र हि—मद्वयात्मकमादेशं विधाय शित्त्वं प्रत्याख्यातम्। एकस्य मस्य संयोगान्तलोप इति च कैयटेन व्याख्यातम्। अनित्यत्वादिति। तत्र च ज्ञापकं 'केऽणः' (पा० सू० ७।४।१३) इति निर्देशः। 'क इ अणः' इति स्थिते लक्ष्यगतपरत्वमाश्रित्य प्राप्त इकारस्य यण् असिद्धपरिभाषया तत्र व्यावर्त्यते। 'अन्तरङ्गं बलीयः' इति परिभाषान्तरं नास्त्येवेति भावः। वस्तुतः 'ओमाङोश्च' (पा० सू० ६।१।९५) इत्याङ्ग्रहणादनित्यमिदम्। तद्धि 'शिव आ इहि' इति स्थिते परमपि सवर्णदीर्घं

लोपः' इत्येकं वाक्यम्। एतदर्थं प्रसिद्ध एव 'झलः' इति द्वितीयं तस्य 'संयोगान्तस्य लोपः' इत्यनुवर्तते, संयोगान्तस्य झलो लोप इत्यर्थः। एवञ्च पूर्ववाक्येनैव सिद्धावस्य वैयर्थ्यमतः पूर्ववाक्यस्य क्वाचित्कत्वज्ञापनमेव फलम्। पूर्ववाक्यस्य झलि प्रवृत्तिस्वीकारादेव 'ङे प्रथमयोरम्' इति सूत्रे मकारान्तरप्रश्लेषेऽपि तस्य निवृत्तिसिद्धिः। नातिप्रसङ्ग इति। 'सुध्युपास्यः' इत्यादौ यकारादिनिवृत्त्यापत्तिरूपोऽतिप्रसङ्गो नेत्यर्थः। ध्वनितञ्चेदमिति। अपकर्षकरणादिकमित्यर्थः। पूर्ववाक्यस्य क्वचिदझलि प्रवृत्तेः फलान्तरमाह—तत्र हीत्यादिना। हरदत्तसम्मतार्थाभिप्रायेण।

नाजानन्तर्यपरिभाषायाः प्राप्तिं वारयति मूले—नचेति। तत्र च = अनित्यत्वे च। ननु पदसंस्कारपक्षमादाय "केऽणः" इति निर्देशस्योपपत्तिर्भविष्यतीति कथन्तस्योक्तपरिभाषाया अनित्यत्वे ज्ञापकतेत्याशयेनाह—वस्तुत इति। परमपि सवर्णेत्यनेन

दुष्यति। किं यकारो न श्रूयते 'लुप्तनिर्दिष्टो यकारः' इतिस्वोक्त्यैव दूषितत्वात्। अत एव तत्रापि भाष्ये 'द्विमकारको निर्देशः करिष्यते' इत्युक्तम् न तु लुप्तनिर्दिष्टो मकार इति। तस्मात् 'वचनारम्भपक्षे गिरिवेडित्येवोचितम्। प्रत्याख्यानपक्षे तु मान्तमेवेति 'मूलोक्तं ज्यायः। 'तत्पक्षेऽपि गिरिवेडित्येव' इति शब्दरत्नोक्तिश्चिन्त्येत्युपाध्यायाः।

१ 'अच आनन्तर्यम्=अन्यनिरूपितव्यवधानराहित्यम् यस्मिन्नन्तरङ्गे, तदजानन्तर्य्यम्, इति व्यधिकरणबहुव्रीहिः। बहुव्रीहिघटके 'अचः' इत्यत्र षष्ठी च सम्बन्धसामान्ये, न तु स्थानपदार्थनिरूपिते, ज्ञापकपरभाष्यविरोधात्। आनन्तर्य्यञ्च–उद्देश्यभूताज्निष्ठप्रतियोगिताकभेदवन्निरूपितम्। बहिष्ट्वम्=बहिरङ्गत्वम्। प्रकृते बहिष्ट्वपदं लक्षणया बहिरङ्गत्वनिमित्तकासिद्धत्वपरम्। प्रक्लृप्तिः=सिद्धिः। तथा च 'सप्तम्यन्तपञ्चम्यन्तान्यतरबोध्यानन्तर्य्यविशिष्टो योऽच्तदुद्देश्यकेऽन्तरङ्गे कर्तव्ये–बहिरङ्गत्वप्रयुक्तासिद्धत्वस्य सिद्धिर्न=बहिरङ्गासिद्धत्वञ्च' इति फलितोऽर्थः।

कम्—'संयोगान्तस्य लोपे यणः प्रतिषेधः,' 'न वा झलो लोपाद्,' 'बहिरङ्गलक्षणत्वाद्वा' इति। इह यथोद्देशपक्षे आद्यं वार्तिकद्वयम्, तृतीयन्तु कार्यकालपक्षे इति विवेकः। यत्त्वाहुः—वार्तिककृतो वचनम्, प्रत्याख्यानप्रकारद्वयन्तु भाष्यकृत इति, तन्निर्मूलम्, मतभेदे प्रमाणाभावात्। यदप्याहुः—'काव्यम्' 'कलत्रम्' 'शाल्वम्' चाचक्षाणः काव्, कलत्, शाल्, अदभ्रयतेरभ्रब्, इति, तदपि न, पक्षत्रयेऽपि संयोगान्तलोपस्य दुर्लभत्वात्। आद्यपक्षद्वयैकरूप्यार्थं पूर्वं पूर्वमन्तरङ्गं परं परं बहिरङ्गमित्यल्लोप-णिलोपयोरसिद्धत्वस्य सुवचत्वात्।

बाधित्वा धातूपसर्गकार्यत्वेनान्तरङ्गत्वादाद्गुणे वृद्धिबाधनार्थम्। उदाहरणन्तु अक्षद्यूरिति। अन्यथा अन्तरङ्गे यण्यूठसिद्धः स्यात्। मतभेद इति। न वेति 'वा'शब्दस्वारस्येन वचनारम्भवादिन एव प्रत्याख्यानप्रकारो भाष्यकृत्तु 'तर्हि वक्तव्यं न वक्तव्यम्' इत्यादिशब्दैरेव प्रत्याचष्टे, इति सर्वं वार्तिककृत एवेति भावः। काविन्यादि। संयोगान्तलोपादिति भावः। ननु पूर्वपूर्वस्थानिकमन्तरङ्गमित्यर्थो न भाष्यसम्मतः, किन्तु पूर्वपूर्वनिमित्तक-

लक्ष्यगतपरत्वानाश्रयणेनाधुना सौकर्यमपीति ध्वनितम्। वृद्धिबाधनार्थमिति। अत्र नाजानन्तर्यपरिभाषाया यत्रान्तरङ्गे शास्त्रेऽजानन्तर्याश्रयणन्तत्र बहिष्ट्वस्य प्रबलत्वसिद्धेति पक्षेऽपि प्रवृत्तिः प्राप्ता। वस्तुतोऽयमेवार्थः—'असिद्धस्वहिरङ्गमन्तरङ्गे' इत्युक्त्वा पूर्वपरिभाषस्थस्यान्तरङ्ग इत्यस्य तत्रानुवृत्तिसूचनात्। यदि नाजानन्तर्यपरिभाषा नित्या स्यात्तदाऽनया ऽन्तरङ्गस्य गुणस्याप्रवृत्तिसम्पादने कृते परत्वात्सवर्णदीर्घे गुणेन लक्ष्यस्य सिद्धावाङ्ग्रहणवैयर्थ्यं स्पष्टमेवेति। अस्याः = नाजानन्तर्यपरिभाषायाः। पूर्वज्ञापकेन सर्वथा नाजानन्तर्यपरिभाषा नास्तीति न शङ्कनीयमिति ध्वनितम्। परोक्तमतभेदो ऽक्षरस्वारस्यविरुद्ध इत्येतदुपपादयति—न वेतीत्यादिना। सर्वमिति। आरम्भप्रत्याख्यानरूपम्।

लक्ष्यसाधनदूषणसङ्क्रमनायाह—संयोगान्तेति। न भाष्यसम्मत इति। अत

१ 'प्रकृत्यैकाच्' (पा० सू० ६–४–१६३) इति सूत्रप्रयोजनखण्डनावसरे भाष्ये 'स्रजीयान्' इत्यादौ 'विन्मतोर्लुक्' (पा० सू० ६–३–६५) इति विनेर्लुकि पुनः प्राप्तस्य 'टेः' (पा० सू० ६–४–१५५) इति टिलोपस्य 'पाठक्रमादार्थक्रमो बलीयान्' इति न्यायेन टिलोपमात्रस्य जातिपक्षमाश्रित्य बाध उक्तः। पूर्वपूर्वस्थानिकस्यान्तरङ्गत्वे तु विनोऽपेक्षया 'अज्' इत्यस्य पूर्वत्वेन तल्लोपस्यान्तरङ्गतया जातस्य विनो लुको बहिरङ्गतयाऽसिद्धत्वेनेष्ठाद्यव्यवहितपूर्वत्वाभावाल्लोपाप्राप्त्या जातिपक्षाश्रयेण बाधोक्तिरसंगतैव स्यादिति भावः।

अत एव कातन्त्रपरिशिष्टे शुक्लयतेः क्विपि 'शुक्ल्'इत्युदाहृतम्। वान्तयोः क्विपि ऊठो दुर्वारत्वात्। न च स्थानिवत्त्वम्, कौ विधिं प्रति तन्निषेधात्, विचि "लोपो व्योः—"( पा० सू० ६।१।६६ ) इति लोपस्य प्रसङ्गाच्च। गिरिवेश्मयतेस्तु क्विपि यणः प्रतिषेधार्थं वचनारम्भपक्षे गिरिवेडित्युचितम्। प्रत्याख्यानपक्षे तु मान्तमेवेति दिक्।

*इति पक्ष इति।* पक्षद्वयस्यापि भाष्ये स्थितत्वादिति भावः।

---

मित्येव। किञ्च ÷ प्रातिपदिकाद् णिजुत्पत्तेरेव भाष्यसम्मततया बहिर्भूतसुब्निमित्तकसंयोगान्तलोपोऽपि बहिरङ्ग इत्यरुचेराह—वान्तयोरिति। काव्ये यलोपे स्थानिवत्त्वनिषेधात् 'लोपो व्योः' ( पा० सू० ६।१।६६ ) इति कृते वान्तत्वमिति ऊठ् दुर्वारः, अन्त्ये च स्वत एवेति तत्र वलोपं बाधित्वोठ् दुर्वार इत्यर्थः। विचीति। काव्यशब्द इति शेषः, यलोपे स्थानिवत्त्वनिषेधात्। एवञ्च प्राचीनोक्तं संयोगान्तलोपोदाहरणत्वमयुक्तमिति भावः। शाल्वे तु अल्लोपादेः स्थानिवत्त्वान्न तत्प्रसक्तिरिति बोध्यम्। मान्तमेवेति। अस्य प्राप्नोतीति शेषः। तस्मात्तत्पक्षेऽपि वाक्यभेदेन व्याख्याय गिरिवेडित्येव। अन्यथाऽऽरम्भप्रत्याख्यानयोः फलभेदः स्यादिति भावः। दिगिति। दिग-

---

एव प्रकृत्यैकाजिति सूत्रस्य प्रयोजनखण्डनावसरे 'स्रजिष्ठः' इत्यत्र स्रग्विन्शब्दादिष्ठनि कृते 'विन्मतोर्लुक्' इति विनो लुकि प्राप्तस्य टिलोपस्य बाधनार्थं 'प्रकृत्यैकाच्'इत्यस्यारम्भ इति वाच्यम्, जातिपक्षाश्रयणेन टिलोपत्वावच्छिन्नस्य लोपो विन्मतोर्लुग्विषयेऽवश्यं प्राप्त इति विन्मतोर्लुगपवाद इति तद्विषये टिलोपस्याप्रवृत्तिरिति भाष्यकृता प्रतिपादितम्। यदि पूर्वस्थानिकस्यान्तरङ्गत्वमपि भाष्यकारसम्मतं स्यात्तदोत्तरकालप्राप्तटिलोपापेक्षया विनो लुको बहिरङ्गत्वेनासिद्धतया 'स्रजिष्ठः' इत्यस्य सिद्धौ जातिपक्षाश्रयणप्रयासस्य नैष्फल्यापत्तिरिति। परोक्तमभ्युपेत्याह—किञ्चेति। बहिरङ्ग इति। एवञ्च यदुक्तम्मूले 'अल्लोपणिलोपयोरसिद्धत्वस्य' इति तदयुक्तमिति भावः। वान्तयोरिति। द्विवचनस्य सङ्गमनायाह—काव्य इति। इति कृत इति। संयोगान्तलोपस्यासिद्धत्वादित्यादिः। अन्त्ये = शाल्वे। दुर्वार इति। एवञ्च त्वदुक्तरूपासिद्धिरिति शेषः। ननु शाल्वे ऽल्लोपस्य स्थानिवत्त्वेन न वलोपस्य प्राप्तिरत आह—काव्यशब्द इति। नन्वेवम्मदुक्तं 'कौ' इति रूपन्दुर्वारमेवेत्यत आह—एवञ्चेति। ननु मूलोक्तम् 'गिरिवेट्' इत्युचितम्, प्रत्याख्यानपक्षे तु मान्तमेवेति तदनुचितम्, आरम्भप्रत्याख्यानयोः फलभेदस्य क्वाप्यदर्शनादत आह—अस्येति। तत्पक्ष इति। सत्यग्रहणापकर्षपक्ष इत्यर्थः। अन्यथा = शेषपूरणेन व्याख्यानाभावे। दिगर्थः=

चत्वारि रूपाणीति । यत्तु वदन्ति—धकार–यकारोभयद्वित्वे उभयोः पुनर्द्वित्वे लोपविकल्पे ऽन्यतरद्वित्वे च नव रूपाणि । तथा हि—एकधं त्रिधा, एकयं द्वियश्च त्रियं च । एवं द्विधं त्रिधश्च त्रिधेति । न चान्तरङ्गे द्वित्वे बहिरङ्गस्य यणोऽसिद्धत्वम्, 'त्रैपादिकेऽन्तरङ्गे बहि-

र्थस्तु संयोगान्तलोप-संयोगादिलोपविषयकतयाऽऽरब्धस्य 'यणः प्रतिषेध–'इति वचनस्य संयोगान्तलोपविषयकस्य 'झलो लोपात्' इति प्रत्याख्यानम् । अत एव तत्र 'संयोगान्तलोपो झलो लोपः' इति भाष्ये व्याख्या कृता । 'बहिरङ्गलक्षणत्वाद्वा' इत्यस्य तु बहिरङ्गो यणादेशोऽन्तरङ्गो लोप इति व्याख्यानेन, वार्तिकस्वारस्येन चेदृशानां[1] लक्ष्याणामनभिधानमेव । वस्तुतस्तृतीयं वार्तिकं विसर्जनीयसूत्रभाष्ये कार्यकालपक्षमुपक्रम्य 'अयुक्तोऽयं परिहारो न वा बहिरङ्गलक्षणत्वाद्वा' इत्यनेन दूषितमित्यलम् ॥

उभयद्वित्वेति । द्विधं द्वियमेकम् । [1]पुनर्द्वित्वे त्रियम् । [2]अन्यतरेति । एकधं द्वियं त्रियश्च[3] एकयं[4] द्विधं त्रिधश्च द्वयोरपि[5] द्वित्वे अन्यतरस्य पुनर्द्वित्वे

दिक्शब्दोच्चारणेन सूचितार्थः । संयोगादिलोपविषयकतयेति । 'स्कोः' इति सूत्रे यण्ग्रहणसम्बन्धेन यणन्तसंयोगाद्योः सकारककारयोर्लोपो नेति तदर्थः । तेन 'वाक्यर्थं' 'वास्यर्थम्' इत्यत्र कसयोर्लोपो न । यद्यप्यनयोः कसयोर्लोपे कर्त्तव्ये 'अचः परस्मिन्' इति स्थानिवद्भावोऽपि वक्तुं शक्यः, पूर्वत्रासिद्धे न स्थानिवदिति तु 'तस्य दोषः' इत्यनेन निषिद्धः, तथापि स्थानिवद्भावानाश्रयणेनोपायान्तरमेतदिति बोध्यम् । एवञ्च प्रकृते एवङ्कथनं 'यणः प्रतिषेधः' इति संयोगान्तलोपस्यैव निषेध इति या कस्यचिदुक्तिस्तत्खण्डनतात्पर्यिकेति ध्येयम् । अत एव = तस्यैव प्रत्याख्यानादेव । तत्र = तत्र तत्र । अतएवात्र मूले 'संयोगान्तलोपे यणः प्रतिषेधः' इति व्याख्या कृता । प्रकृतमाह—बहिरङ्गेति । स्वारस्येनेति । अन्यथा ऽन्तरङ्गो लोपः, अन्तरङ्गलक्षणत्वाद्वेत्येव वदेत् । ईदृशानाम् = अकृत्रिमयणघटितानाम् । अभिधानमेवेति । अन्यपक्षरीत्या लोपप्राप्त्या आद्यपक्षे तस्याप्राप्त्या फलभेदापत्तेस्तादृशानामनभिधानमेवेत्यर्थः । तृतीयसमाधानं त्रिपाद्यामप्यसिद्धत्वस्य प्रवृत्तिरिति मतेन । वस्तुतस्तु त्रिपाद्यांबहिरङ्गपरिभाषाया वक्ष्यमाणरीत्या अप्रवृत्तिरेवेति बहिरङ्गपरिभाषया प्रकृते लक्ष्यस्य साधनं न युक्तं, तत्समर्थनाय पूर्वपूर्वस्थानिकमन्तरङ्गमित्यस्य स्वीकारक्लेशश्चायुक्त इत्याह—वस्तुत इति । विसर्जनीयसूत्र = 'विसर्जनीयस्य सः' इति सूत्रे । दूषितमिति । एतदग्रे स्फुटीभविष्यति ॥

१ ईदृशानाम्=लोपद्वयविषयाकृत्रिमयण्घटितानाम् 'काम्य्' 'शास्व्' इत्यादीनामित्यर्थः ।

रङ्गपरिभाषा न प्रवर्तते' इति विसर्जनीयसूत्रे भाष्य-कैयटयोर्व्यवस्थापितत्वादिति। अत्रेदं वक्तव्यम्—पुनर्द्वित्वमशुद्धम्, एकस्यां व्यक्तौ एकं लक्षणं सकृदेव प्रवर्त्तते इति "एकः पूर्वपरयोः" ( पा० सू०

द्धिधं त्रियम्, त्रिँधं द्धियर्श्च अनुभयद्वित्वे एकधमेक्यम्। लोपविकल्पान्यतरद्वित्वयोः समफलता, सम्भवमात्रेण तु तदुक्तिः। एकः पूर्वपरयोरिति। तत्र

ननु यदि लोपस्य वैकल्पिकत्वेन तत्कृतो न विशेषस्तर्हि तस्योपन्यासो व्यर्थ एवेत्यत आह—सम्भवमात्रेणेति। तदुक्तिः=लोपविकल्पोक्तिः। यत्तु 'एकः

१ 'खरवसानयोः' इति सूत्रे भाष्ये 'विसर्जनीयोऽनुत्तरपदे इति वक्तव्यम्' इह मा भूत् नार्कुटो नार्पत्य इति 'न वा बहिरङ्गलक्षणत्वात्' न वा वक्तव्यम्, किं कारणम्, बहिरङ्गलक्षणत्वात्, बहिरङ्गो रेफः, अन्तरङ्गो विसर्जनीयः, असिद्धं बहिरङ्गमन्तरङ्गे, नैष युक्तः परिहारः, अन्तरङ्गे बहिरङ्गमिति। प्रतिद्वन्द्विभाविनावेतौ पक्षौ, सत्यन्तरङ्गे बहिरङ्गम्, सति बहिरङ्गेऽन्तरङ्गं भवति। न चान्तरङ्गबहिरङ्गयोर्युगपत्समवधानमस्ति, किं कारणम्? असिद्धत्वात्' इत्युक्तम्। अन्तर्भूतान्यङ्गानि=निमित्तानि यस्य तदन्तरङ्गमित्यत्र किमपेक्षयान्तर्भूतत्वमित्याकाङ्क्षया बहिर्भूतान्यङ्गानि निमित्तानि यस्य तद्बहिरङ्गमित्यत्र च किमपेक्षया बहिर्भूतत्वमित्याकाङ्क्षया च—सनिरूपकान्तरङ्गबहिरङ्गयोः परस्परज्ञानसापेक्षत्वेन 'खरवसानयोः' इत्यस्य त्रैपादिकत्वेनासिद्धतया परस्परज्ञानासम्भवादयुक्त एष परिहार इति भावः।

२ नन्वेवं क्वचिल्लक्ष्ये प्रवृत्तस्य शास्त्रस्य लक्ष्यान्तरे प्रवृत्तिर्न स्यादिति, चेन्न, 'तल्लक्ष्ये तल्लक्षणं सकृदेव प्रवर्तते' इति तदर्थात्। नचैवमपि 'सुद्ध्युपास्यः' इत्यत्र धकारस्य द्वित्वे सकारादेर्द्वित्वानापत्तिस्तल्लक्ष्यत्वादिति वाच्यम्, शास्त्रविशिष्टत्वस्यैव तल्लक्ष्यत्वात्, वै० स्वीयप्राथमिकप्रवृत्तावुद्देश्यत्वेनाश्रीयमाणो यावान् शब्दसमुदायस्तदघटकाघटितत्वसम्बन्धेन। तथा च—'सुद्ध्युपास्यः' इत्यत्र 'अनचि च' इत्यस्य प्रथमप्रवृत्तावुद्देश्यत्वेनाश्रीयमाणशब्दसमुदायः 'उध्' इति तदघटक' आद्यघटकसकारस्तद्घटितत्वस्यैवासिसत्त्वेन तल्लक्ष्यत्वाभावात्सकारद्वित्वे न तत्प्रवृत्तिः। नन्वेवमपि 'पथः' इत्यत्र पुनर्लोपापत्तिः, विधेयवृत्तिविषयतया साक्षान्निरूपिता या विषयता तस्या एवोद्देश्यतात्वेन 'भस्य टेर्लोपः' इत्यत्र टेरेवोद्देश्यत्वेन प्रथमप्रवृत्तौ तत्त्वेनाश्रीयमाणशब्दसमुदायः 'इन्' इति तदघटकः पकारादिस्तद्घटितत्वस्यैव 'पथ्' इति समुदाये सत्त्वात् तल्लक्ष्यत्वाभावात् इति चेन्न, उद्देश्यतापदेनोद्देश्यदलप्रविष्टविषयतामात्रस्य ग्रहणेनादोषात्।

तथा च 'पथ्यायन्तस्य भस्य टेर्लोपः' इत्यर्थे पथिन्शब्दत्वस्य उद्देश्यताऽवच्छेदकतया तद्घटकपकारादावप्युद्देश्यदलीयविषयताया अक्षतत्वेनोद्देश्यदलीयविषयताश्रयसमुदायाघटक उदासीन एव, न तु पकारादिरिति तदघटितत्वसत्त्वेन तल्लक्ष्यत्वसत्त्वात्। उद्देश्यदलप्रविष्टविषयतामात्रस्य ग्रहणे च 'पथः सङ्ख्याव्ययादेः' इत्यादयो निर्देशाः लिङ्गम्। नचैवम् 'सर्वेषाम्' इत्यादौ "यदागम"न्यायेन सामोऽप्याम्त्वादुद्देश्यदलीयविषयाश्रयसमुदायः 'सर्व आम्' इति तदघटकस्सुटः सकारस्तद्घटितत्वस्यैव सत्त्वेन तल्लक्ष्यत्वाभावात्पुनरपि सुडापत्तिः। किञ्च—'उदवोढाम्' इत्यत्र लक्ष्ये लक्षण'न्यायेन पुनर्वृद्धिवारणपरभाष्यासंगतिः, 'उद् वह् स् ताम्' इति समुदायाघटकौकारघटितत्वेन तल्लक्ष्यत्वासत्त्वादिति वाच्यम्, तादृशसमुदायाघटके स्वघटकोद्देश्यकविकारागमातिरिक्तत्वविशेषणदानेनादोषात्। सुटः स्वघटकोद्देश्यकागमत्वेन, ओकारस्य च स्वघटकोद्देश्यकविकारत्वेन तादृशसमुदायाघटकतया मन्तुमशक्यत्वात्। नचोकारे 'उद् वह् स् ताम्' इति समुदायघटकोद्देश्यकविकारत्वाभावः, वृद्धिनिष्पन्नाकारस्यैवोकारादेशत्वादिति वाच्यम्, परम्परया तद्वि-

६।१।८४ ) इति सूत्रे भाष्ये सिद्धान्तितत्वात् । अन्यथा द्वित्वाना-

हि यथा-'अनयोः पूलयोः कटं कुरु' इत्यादौ एकवाक्यतयैव बोधादेकत्व-

पूर्वंपरयोः' इति सूत्रे यथा आधानादिसंस्काराणां सकृदेवानुष्ठानं, तथा गुणादीनामपि सकृदेव स्यात् , तथा च प्रतिपुरुषमेक एव गुणघटितः साधुः स्यादन्ये ऽपशब्दा स्युरित्याशङ्क्य ज्योतिष्टोमादिशास्त्रदृष्टान्तेन प्रतिप्रयोगङ्गुणादिविधायकशास्त्राणाम्प्रवृत्ति-र्भविष्यतीत्याद्युक्त्या 'लक्ष्ये लक्षणस्ये'ति न्यायस्याविषयोऽयमिति प्राचीनोक्तिखण्डन-परः 'पुनर्द्वित्वम्'इत्यादिग्रन्थो न युक्तः, इति केचित् ; तन्न, भाष्याशयानवबोधादिति ध्वनयितुम्भाष्याशयम्प्रकटयति-तत्र हीत्यादिना । तत्र = 'एकः पूर्वपरयोः'इति सूत्रभाष्ये । बोधादिति-पूलयोरिति द्विवचनस्वारस्यैनैकवाक्यतया उचिततयेत्यादि ।

कारत्वस्यापि तत्र सत्त्वात् । एतन्निवेशे मानञ्च लक्ष्ये लक्षणन्यायेन वृद्धिवारणपरम् 'सिचि वृद्धिः' (पा० सू० ७-२-१ ) इति सूत्रस्थं भाष्यम् , 'हलि सर्वेषाम्' इत्यादिनिर्देशाश्च । नन्वेवमपि 'ह्रस्वो नपुंसके' इति सूत्रस्थस्य 'काण्डे' इत्यत्र गुरुभूतोपायेन ह्रस्ववारणपरभाष्यस्यासंगतिः, स्वघटकोद्देश्यकविकारेत्यत्र' स्वघटकोद्देश्यकविभक्त्यनुद्देश्यकविकारस्यैव ग्रहणेनाक्षतेः । प्रकृते चैकारस्य विभक्त्युद्देश्यकत्वेन स्वघटकोद्देश्यकविभक्त्यनुद्देश्यकोऽन्य एव-विकारस्तदतिरिक्तश्च 'काण्डे' इत्यत्रैकारस्तद्घटितत्वस्यैव तत्र सत्त्वेन तल्लक्ष्यत्वात, प्रकारान्तरेण ह्रस्ववारणापरभाष्यविरोधो नेति भावः । यत्तु-'काण्डे' इत्यत्रत्य भाष्यविरोधाभावाय विकारपदेन स्वघटकमात्रोद्देश्यकविकारस्यैव निवेशेन स्वघटकोद्देश्यकत्वे सति स्वघटकेतरानुद्देश्यकत्वरूपस्यैव स्वघटकमात्रोद्देश्यकत्वेन एकारस्य च ह्रस्वे प्रथमप्रवृत्तावाश्रीयमाणका-ण्डरूपसमुदायाघटकविभक्तीकारोद्देश्यकत्वेन स्वघटकमात्रोद्देश्यकविकारोऽन्य एव, तदतिरिक्तश्च-'काण्डे' इत्यत्रैकारस्तद्घटितत्वस्यैव तत्र सत्त्वेन न भाष्यविरोध इति, तन्न, 'या' 'सा' इत्यादौ टापा सहैकादेशो-त्तरं पुनस्त्यदाद्यत्वापत्तेः । यदपि 'गोपाय ध्नन्ति' इत्यवस्थायां द्वितीयतृतीयाकारयोः पररूपावसरे 'अतो गुणे' इत्यस्य प्रथमप्रवृत्तावाश्रीयमाणः प्रथमो द्वितीयश्चाकारस्तद्घटको यः पररूपनिष्पन्नोऽकारस्तस्य स्वघ-टकोद्देश्यकविकारातिरिक्तत्वाभावेन तादृशविकारातिरिक्ताघटितत्वेन तल्लक्ष्यत्वादप्राप्तपररूपार्थं विकारे स्वघटकमात्रोद्देश्यकत्वनिवेश इति तदपि चिन्त्यम् , प्रथमप्रवृत्तावाश्रीयमाणसमुदायाघटकतृतीयाकारघ-टितया तस्य च स्वघटकमात्रोद्देश्यकविकारागमभिन्नत्वेन तल्लक्ष्यत्वाभावात्तदर्थं तन्निवेशस्यानावश्यक-त्वात् । नन्वेवमपि 'राजन् ङस्पुरुष सु' इत्यादिसमासस्थले 'सुपो धातु' इत्यस्य प्राथमिकप्रवृत्तावाश्रीयमा-णसमुदायाघटकाघटितत्वस्य सत्त्वेन द्वितीयसुपः पुन र्लुक्न स्यात् । किञ्चैवमेव एककालिकानेकत्र प्राप्ति-स्थले 'एधिषीष्ट' इत्यत्र षत्वस्य, 'भवेत्' 'भूयात्' इत्यादौ सलोपस्य च द्विवारं प्रवृत्त्यनापत्तिरिति, चेन्न, स्वीयप्राथमिकप्रवृत्तावुद्देश्यदलीयविषयताश्रयत्वेनाश्रीयमाणो यावान् शब्दसमुदायस्तद्विशिष्टाघटितत्वे सति-स्वीयप्राथमिकप्रवृत्त्यनुत्तरकालिकप्राप्तविषयाघटितत्वस्यैव तल्लक्ष्यात् । वै० स्वघटकोद्देश्यकागमाति-रिक्तत्व-स्वघटकोद्देश्यकविभक्त्यनुद्देश्यकविकारातिरिक्तत्व-स्वाघटकत्वैतत्त्रितयसम्बन्धेन । तथा च स्वीयप्राथमिकप्रवृत्त्यनुत्तरकालिकी प्राप्तिः-समानकालिकी, पूर्वकालिकी चेति, तत्र समानकालिकप्राप्तिवि-षयाघटितत्वाभावेन समासे, 'एधिषीष्ट' इत्यादौ च तल्लक्ष्यत्वाभावः 'षड्ध् सन्तः' इत्यादौ च धुटः प्राक्च र्त्वप्राप्तिविषयडकारघटितत्वेन पूर्वकालिकप्राप्तिविषयाघटितत्वाभावान्न दोषः । एतन्निवेशे मानञ्च-'न सम्प्र-सारणे सम्प्रसारणम्' इति सूत्रमेव ।

मानन्त्यापत्तेः। न च 'झरो झरि' (पा० सू० ८।४।६५) इति, 'हलो यमाम्' (पा० सू० ८।४।६४) इति च लोपेन निर्वाहः,

विवक्षणेनोभयसम्बन्ध्येककटकरणप्रतीतिस्तथा आद्‌चि पूर्वपरयोर्गुण इत्यादावपि द्वन्द्वनिर्देशाद्विधेयगतसंख्याविवक्षणाच्चोभयोः स्थाने एक एवादेशो भविष्यतीत्येकग्रहणं प्रत्याख्याय शङ्कितम्—शास्त्राधिकारिणः पुरुषान्प्रति प्रवृत्तं संस्कारकं तत्तच्छास्त्रं प्रतिपुरुषमेकवाक्यतया सकृदेवार्थबोधकं, यथाऽऽधानेनाग्नीन्संस्कुर्यादित्यर्थकं 'वसन्ते ब्राह्मणोऽग्नीनादधीत' इति वाक्यं प्रतिब्राह्मणं सकृदेवार्थबोधकं सकृदेव स्वविषये प्रवर्तकञ्च। अत एव पुनः पुनर्नाधानादिसंस्कारः, तथा व्याकरणशास्त्रस्य 'अवर्णादचि पूर्वपरयोर्गुणो भवति, गुणवान् शब्दश्च साधुर्भवति, स च प्रयोक्तव्यः' इत्येतावत्पर्यन्तं व्यापारात्तत्संस्कृतस्यैकस्य खट्वेन्द्रस्य प्रयोगेण शास्त्रार्थस्य करणान्मालेन्द्रादिप्रयोगो न स्यात्। अतस्तत्तल्लक्ष्यविषयवाक्योपप्लवेन वाक्यभेदोऽवश्यं वाच्यः। तद्वत्पूर्वपरविषयेऽपि स्यादिति तत्रैकग्रहणमावश्यकमिति। तत्र गुणो भवतीत्याद्यंशो लक्ष्यसंस्कारफलक एव यथाऽऽधानमग्निसंस्कारकं, शास्त्रतात्पर्यविषयप्रयोगविधिश्च पुरुषसंस्कारक एवेति तदाशयः। ततः सिद्धान्तितम्—यथा नित्य-नैमित्तिक-काम्य-

एतेन 'ग्रहं सम्मार्ष्टि' इत्यत्रोद्देश्ये बोधकपदोत्तरैकवचनस्य यथाऽविवक्षयाऽनेकग्रहाणां सम्मार्गस्तथाऽनयोः पूलयोरित्यत्रापि सम्भाव्यते, तथापि 'सम्भवत्येकवाक्यत्वे वाक्यभेदो न न्याय्यः' इति न्यायस्य सञ्चारो ध्वनितः एकत्वविवक्षणेन कटमित्यस्य विधेयबोधकतया तत्रैकत्वस्य विवक्षणेन द्वन्द्वनिर्देशात् इतरेतरयोगे तस्य द्वन्द्वस्य विधानेनोद्भूतावयवसमुदायस्यान्यत्रान्वयात्। शङ्कितमिति। अस्यावश्यकमित्यत्रान्वयः। दृष्टान्तप्रदर्शनेन शङ्कां योजयति—यथेति। स्वविषये = आधानाख्यसंस्कारे। व्यापारादिति। प्रतिपुरुषमेकवाक्यतया बोधकत्वादिति शेषः। वाक्यभेदोऽवश्यमिति। पुरुषैक्येऽपीति शेषः। तत्र पूर्वोपवर्णितवाक्यार्थत्रयमध्ये पुरुषसंस्कारकः = पुरुषस्य धर्मजनकक्रियाप्रवृत्तिसम्पादकः, 'एकः शब्दः सम्यग् ज्ञातः सुप्रयुक्तः शास्त्रान्वितः स्वर्गे लोके कामधुग्भवति' इति भाष्यात्।

नित्यत्वम्=यस्याकरणे प्रत्यवायस्तत्त्वम्, 'अहरहः सन्ध्यामुपासीत' इति यथा। निषेधविधिरपि नित्यः, 'न ब्राह्मणं हन्यात्' इति। नैमित्तिकम्। निमित्तसद्भावे स्वबोध्यार्थे आवश्यकप्रवृत्तिसम्पादकम्, यथा 'पूर्ववया ब्राह्मणः प्रत्युत्थेयः' इति। काम्यम्=तत्फलेच्छाधीनतद्विषयप्रवृत्तिसम्पादकशब्दबोधजनकम्, यथा—'ज्योतिष्टोमेन स्वर्गकामो यजेत' इत्यादि। तत्र नित्यविधिस्थले शुचि तत्कालजीवित्वस्याधिकार

विधीनां तदकरणजन्यप्रत्यवायपरिहाराय, फलाय च वाक्यभेदेन तत्तद्वि-षयकशास्त्रोपप्लवात् पुनः प्रवर्तकत्वम् । तथा ममाप्यसाधुप्रयोगे प्रत्यवा-यश्रवणान्नित्यत्वमत्वं प्रयोगविधेः । 'एकः शब्दः सम्यग् ज्ञातः शास्त्रान्वितः सुष्ठु प्रयुक्तः स्वर्गे लोके च कामधुग्भवति' इत्यनेन काम्यत्वं चेति तत्त-द्विषयानन्तवाक्योपप्लवेन भवत्येव मालेन्द्रादिप्रयोग इति । एवं प्रयोगवि-ध्यंशस्य नित्य-काम्यत्वव्यवस्थापनेन गुणविध्यंशस्य शुद्धसंस्कारार्थत्वमे वोक्तम् । एवञ्च तस्याधानादिवदेवाग्निस्थानीयलक्ष्येषु सर्वेषु प्रवृत्तावपि एकाग्न्याविवैकलक्ष्ये नावृत्तिरिति पूर्वपरयोर्नादेशद्वयप्रसक्तिरिति तत्त्वात्प-

---

सम्पादकतया यावज्जीवं तद्रूपसद्भावे स्वबोध्यक्रियाप्रवृत्तिसम्पादकत्वेन तस्याकरणे प्रत्यवायः कल्प्यते । नैमित्तिकस्थलेऽपि निमित्तप्राप्तेः क्रियाप्रवृत्तिसम्पादकतया यदा यदा तस्य प्राप्तिस्तदा तदा प्रवृत्तिः अन्यथा त्वनिष्टं स्यात् । यथा 'वृद्धे समागते तस्य ह्यूर्ध्वंस्प्राणा व्युत्क्रामन्ति, प्रत्युत्थानाभिवादाभ्यां पुनस्तान्प्रतिपद्यते' इति दोषप्रति-पादकवाक्यात्तथा कल्पनात् । एवं 'राहूपरागे स्नायात्' इत्यादावपि बोध्यम् । एवं काम्येषु कामानामानन्त्यात्तत्सद्भावे ज्योतिष्टोमादौ त्रैवर्णिकानामप्यधिकारात्प्रवृत्तिः । सा च यदा यदा तदा तदेति न सकृदेवानुष्ठानम् । तत्राऽपरो विशेषः, नित्यस्यानुष्ठाने प्रत्यवायानुत्पत्तिरेव फलम् । क्षैमिकमस्याः फलत्वम्, नैमित्तिके दोषपरिहारः, काम्यं फलञ्च भवति । काम्यस्थले कामनाविषयसिद्धिरेवेति । तत्तद्विषयकेति । तत्त-क्रियाविषयकेत्यर्थः ।

प्रत्यवायश्रवणादिति । "ते ऽसुरा हेलयो हेलय इति कुर्वन्तः पराबभूवुः, तस्मा-द्ब्राह्मणेन न म्लेच्छितवै = नापभाषितवै" इति श्रुत्या दोषश्रवणादित्यर्थः । नित्यस-मत्वमिति । शास्त्रसंस्कारविरुद्धोच्चारणे प्रत्यवायश्रवणेन नित्यत्वमर्थबोधनार्थम्प्रवृत्ते-रर्थस्य बोधो भवतीति फलसम्बन्धेन काम्यत्वमपि । अतः समशब्दस्य प्रयोगः । यथा काम्ये दर्शादियागे पुनः-पुनः प्रवृत्तिस्तथात्रापि तत्तत्सुखरूपस्वर्गकामनया खट्वेन्द्र-मालेन्द्र-रमेशादिसाधनाय तेषां सुप्रयुक्तत्वशास्त्रान्वितत्वसम्पत्तये पुनः पुनः प्रवृत्तिः ।

---

१ नित्य-नैमित्तिक-काम्यभेदेन त्रिविधानि कर्माणि । तत्तत्कर्मविधायकत्वञ्च तत्तद्विधित्वं बोध्यम् । तत्र 'अनुष्ठाने चित्तशुद्ध्यतिरिक्तफलाजनकत्वे सति, अननुष्ठाने प्रत्यवायजनकत्वं नित्यकर्मत्वम् । यथा— 'यावज्जीवमग्निहोत्रं जुहोति' इति, 'अहरहः सन्ध्यामुपासीत' इति च । नैमित्तिककर्मत्वञ्च—अनुष्ठाने फल-विशेषजनकत्वे सति अननुष्ठाने प्रत्यवायजनकत्वम्, यथा—'यस्याहिताग्नेरग्निर्गृहान्दहेत् सोऽग्नये क्षामवते पुरोडाशमष्टाकपालं निर्वपेत्' इति, 'राहूपरागे स्नायात्' इति च । काम्यकर्मत्वञ्च—अनुष्ठाने फलविशेषजनकत्वे सति अननुष्ठाने प्रत्यवायाजनकत्वम्, यथा—'सौर्यं चरुं निर्वपेद्ब्रह्मवर्चस्कामः' इति, 'उद्भिजा यजेत पशुकामः' इति च ।

लोपस्य वैकल्पिकत्वात् । कथमन्यथा त्रिधं त्रियं चेति भवदुक्तिः

र्यम् । एवञ्च स्पष्टमेव पूर्वपक्षसिद्धान्तयोरयं न्यायः संस्कारकविधिविषये सिद्धान्तित इति भावः । 'संप्रसारणाच्च' (पा० सू० ६।१।१०८) इति सूत्रे भाष्येऽपि स्फुटोऽयम् । वैकल्पिकत्वादिति । एवञ्च पक्षे द्वित्वानामानन्त्यापत्त्या परिनिष्ठितत्वाभावापत्तिः । न च त्वदुक्तरीत्याऽऽनन्त्यापत्तिप्रयुक्तापरिनिष्ठितत्वमसकृत्प्रवृत्तौ बाधकमिति लभ्यते । तच्च नात्र, द्वित्वस्य वैकल्पिकत्वेन यावच्छक्तिद्वित्वसहितप्रयोगस्य परिनिष्ठितत्वसम्भवात् । अप्रवृत्तनित्यविध्युद्देश्यताऽवच्छेदकानाक्रान्तत्वं हि परिनिष्ठितत्वमिति वा-

एवम् = उक्तप्रकारेण ।एवञ्च = शुद्धसंस्कारार्थत्वे च ।

उक्तार्थे भाष्यान्तरमपि साधकमित्याह—सम्प्रसारणाच्चेतीति । तत्र हि शकहृर्थमित्यत्र सम्प्रसारणपूर्वत्वमाशङ्क्य वाक्यस्य सम्प्रसारणसंज्ञापक्षमादाय पूर्वरूपनिष्पन्नस्य न सम्प्रसारणत्वमिति समाधानोत्तरं समाधानान्तरं कृतम् 'कार्यकृतत्वाद्वा' इति । शास्त्रस्यास्मिन्विषये प्रवृत्तिर्न भविष्यतीति तदर्थः । तत्र दृष्टान्ततयेत्थम्भाष्यकृताऽभिहितम् । तद्यथा–'वसन्ते ब्राह्मणो ऽग्नीनादधीत' इति सकृदाधाय कृतः शास्त्रार्थः इति कृत्वा पुनः प्रवृत्तिर्न भवति विषम उपन्यासः, उक्तं यत्तस्यैव पुनः प्रवृत्तिर्न भवति' तत्र कैयटः—'पराङ्गमग्न्याधानम् यज्ञसुखप्रतिपत्त्यर्थमिति पुनः क्रियमाणस्फलभेदाभावान्नानुष्ठीयते' इति । ततः यत्तु तदाश्रयम्प्राप्नोति न तच्छक्यस्याभिधातुं तद्यथा वसन्ते 'ब्राह्मणो ऽग्निष्टोमादिभिः क्रतुभिर्यजेत' इति अग्न्याधाननिमित्तं वसन्ते इज्यत इत्यभिहितम् । यत्तु 'तदाश्रयमिति यस्मात्फलावाप्तिस्तत्फलभेदाद्भिद्यमानमसकृदनुष्ठीयते' इति कैयट' । एवञ्च कार्यकृतत्वादित्यपरिहार इति तेनोपसंहृतम् । अस्ति चात्र फलं शास्त्रीयप्रक्रियापूर्वकप्रयोगाद्धर्मोत्पत्तेः शास्त्रान्वित इत्यनेन बोधनाच्छकहृर्थमित्यादौ सम्प्रसारणाच्चेति सूत्रस्य पुनः समुदायोच्चारणात्प्राक् स्मरणे ऽधिकस्य धर्मस्य लाभ एवेति भावः । एवम्प्रतिपादनेन लक्ष्यभेदेन पुनः प्रवृत्तिर्भवति, यत्र तु न तथा लक्ष्यभेदस्तत्राप्रवृत्तिरेवेति न्यायो ध्वनितः । लोपस्य वैकल्पिकत्वेन जातेऽपि द्वित्वे भावकार्यानुष्ठानात्पुनः प्रवृत्तावपीष्टापत्तिरिति मा शङ्किष्ठ इत्याह—एवञ्चेति । लोपस्य वैकल्पिकत्वे इत्यर्थः । पराक्रान्दूषयितुन्तदुक्तिमनुवदति—तदुक्तिरित्यादिना । त्वदुक्तरीत्या=लोपस्य वैकल्पिकत्वरूपोक्तरीत्या । सम्भवादिति । एतावतैव शास्त्रस्य कृतार्थत्वादिति शेषः । परिनिष्ठितत्वस्य स्वरूपम्प्रतियोगिज्ञानसम्पादनायाह—अप्रवृत्तेत्यादि । हिर्हेतौ । अस्ति चेदृशम्परिनिष्ठितत्वं यणादेशप्रवृत्त्युत्तरं 'सुध्युपास्यः' इत्यादौ, अत्र यणादेशविधायकशास्त्रस्य प्रवृत्तत्वेनाप्रवृत्तो नित्यविधिरेचोऽयवायाव इति तदुद्देश्यताऽवच्छेदकानाक्रान्तत्वन्तस्येति रीत्या सर्वत्रोहनीयम् । न च 'अग्नी इति'

च्यम्, आनन्त्यापत्तेरित्यस्य चतुष्पञ्चादिधकारयकाराणामापत्त्या त्रिध-मित्यादित्वदुक्तमर्यादाभङ्गापत्तेरित्यर्थात्। तद् ध्वनयन्वक्ष्यति—नवत्वोक्ति-रसङ्गतैवेति। आनन्त्यापत्तिरेव तन्न्यायबीजमिति तु न युक्तम्, उदवोढा-मित्यादौ 'उद् अवह् स् ताम्' इत्यवस्थायां सिज्लोपादेरसिद्धत्वात्सिचि वृद्धावोकारे 'लक्ष्ये लक्षणस्य' इति न्यायेन पुनर्वृद्धिर्नेति 'सिचि वृद्धिः-' (पा० सू० ७।२।१) इति सूत्रस्थभाष्यविरोधात्, आनन्त्यापत्तेस्तत्रा-भावात्। एतद्भाष्यप्रामाण्येन विकारकृतभेदेन न लक्ष्यभेदाश्रयणम्। 'समः सुटि' (पा० सू० ८।३।५) इति सूत्रञ्चास्यां मानम्। अन्यथा 'समो वा लोपम्—' इत्यनेनान्त्यलोपे पुनर्द्वित्वेन त्रिसकारस्यापि सिद्धयैतद्वै-यर्थ्यं स्पष्टमेव। 'ढ्रयोरे' (पा० सू० ६।४।७६) इति सूत्रे ढ्रयोरिति द्विव-

इत्यादावप्रवृत्तो नित्यविधिः सवर्णदीर्घस्तदुद्देश्यतावच्छेदकाक्रान्तत्वसत्त्वेनापरिनिष्ठित-त्वापत्तिरिति वाच्यम्, एषु प्रगृह्यत्वप्रयुक्तप्रकृतिभावस्य प्रवृत्त्या प्लुतप्रगृह्यभि-न्नत्वविशिष्टसवर्णाच्परत्वविशिष्टाक्त्वस्योद्देश्यताऽवच्छेदकतया तदनाक्रान्तत्वस्य सत्त्वात्। प्रवृत्तत्वम्—प्राप्तत्वम्, जातत्वं वा। वैकल्पिकेडादिविषये सेद्धादौ परिनिष्ठितत्वसि-द्धये—नित्येति।

तद्रीत्या समाधत्ते—आनन्त्यापत्तेरिति। पञ्चादीत्यादिना यावच्छक्तिद्वित्वपरि-ग्रहः। त्रिधमित्यादीति। अत्रादिना त्रियमित्यस्य परिग्रहः। असङ्गतैवेतीति। यद्यप्युक्तरीत्या परिनिष्ठितत्वस्योपपत्तिर्भवति तथापि नवत्वोक्तेरसङ्गतिरेव दूषणमिति भावः। खण्डनकृदादिमतन्दूषयति—आनन्त्यापत्तिरेवेति। इति न्यायेति। 'लक्ष्ये लक्षणं सकृदेव प्रवर्तते' इति न्यायेनेत्यर्थः। सा च वृद्धिराकाररूपा जाता। ओकारे 'सहिवहोरोदवर्णस्य' इत्योकारे जात इति शेषः। पुनर्वृद्धिर्न = ओकारस्य पुनर्वृद्धिर्न। विकारकृतभेदेनेति। विकारकृतो यो व्यक्तिभेदस्तेनेत्यर्थः। तस्य न्यायस्य समू-लतामाह—समः सुटीत्यादिना। अस्याम् = उक्तन्यायरूपपरिभाषायाम्। अन्यथा तन्न्यायानङ्गीकारे। सिद्धाविति। लोपस्य रुप्रकरणस्थत्वेनेष्टसिद्धावित्यर्थः। तद्वैय-र्थ्यमिति। 'समः सुटि' इति सूत्रन्त्रिसकारकरूपसिद्ध्यर्थं, तच्चाधुनापि सिद्धमिति भावः। लोपः पाणिनिसम्मतो नेति तु न शङ्कनीयम्, 'अप्रतिषिद्धमनुमतम्भवति' इति न्यायेन तस्य पाणिनिसम्मतत्वात्। शास्त्रान्तरप्रसिद्धानामिहाश्रयणस्य भाष्यकारसम्म-तत्वमपि। अत एव 'मृजन्ति' 'मार्जन्ति' 'ममृजतुः' 'ममार्जतुः' इत्यादिरूपाणाम् 'इहान्ये वैयाकरणा मृजेरजादौ सङ्क्रमे विभाषावृद्धिमारभन्ते' इति भाष्यकृतोक्तम्। अन्योक्तन्तन्न्यायबीजं खण्डयति—ढ्रयोरितीति। तद्धि सूत्रं 'प्रथमन्दध्र आप' इत्यस्य साधनायारब्धम्। तत्र धाञो लिटि तस्य झादेशे 'लिटस्तझयोः' इतिसूत्रेणेरे-जादेशे तस्यानेन रे आदेशे कृते तस्येडागमे पुनरनेन रेभावो भवति। रेभावविधानसा-

सङ्गच्छते। किञ्च चैवं सति 'सर्वस्य द्वे' (पा० सू० ८।१।१) इति द्वित्वमपि पुनः पुनः प्रवर्तेत। अत एव 'लिटि धातोः–' (पा० सू०

चनन्तु स्वविधेयस्य स्वस्मिन्नुद्देश्यत्वाप्राप्त्या तत्प्राप्तये इति न तदस्यां मानम्। न च तत्र 'सहिवहोरोत्' (पा० सू० ६।३।११२) इति तपरत्वसामर्थ्याद् न वृद्धिरिति वाच्यम्, अशाब्दत्वात्, अतत्कालव्यावृत्तेरेव तेन शब्दमर्यादया लाभात्। एतेन सुदुध्युपास्ये पूर्वधस्य द्वित्वे जश्त्वे लक्ष्यभेदात्पुनर्द्वित्वमित्यपास्तम्, पूर्वमकारस्येदानीमोकारस्येति लक्ष्यभेदस्योदवोढामित्यादावपि सत्त्वेनोक्तभाष्यविरोधात्। विकारान्यानुपूर्व्यैक्येन

मर्थ्येन तस्येडागमो नेति तु न वाच्यम्; 'चक्रे' इत्यादाविट्प्रतिषेधविषये तस्य चरितार्थत्वात्। स्वविधेयस्य रेभावस्येडागमेऽपि "यदागमा" इति न्यायेन रेशब्दत्वात्पुनस्तस्योद्देश्यत्वाप्राप्त्या रेभावो न स्यादिति द्विवचनं सफलमिति भावः। 'उदवोढाम्' इत्यत्र "सहिवहोरोत्" इति सूत्रे तकारोच्चारणेन पुनर्वृद्ध्यप्राप्तिरिति कस्यचिदुक्तिं खण्डयति–नच तत्रेति। अशाब्दत्वादिति। आदित्यत्र तपरकरणेन वृद्ध्यप्राप्तेः। शब्दमर्यादयाऽलाभादित्यर्थः। तदुपपादयति–एतेन = वक्ष्यमाणदूषणेन। ननु 'सुदुध्युपास्यः' इत्यत्र जश्त्वरूपविकारातिरिक्तवर्णकृतानुपूर्वीकृतलक्ष्यैक्यसत्त्वात्पुनर्द्वित्वं न

१ नन्वेवम् अशब्दादाचारक्विबन्तात् 'हेतुमति च' इति णिचि 'अतो लोपः' इत्यलोपे णिजूरूपाद्धातोः पुनर्णिज्न स्यात् स्वविधेयस्य णिचः स्वस्मिन्नुद्देश्यत्वासम्भवादिति, चेन्न, स्वविधेयताऽवच्छेदकस्य स्वीयोद्देश्यताऽवच्छेदकत्वन्न भवति इति तदर्थात्। एवञ्च 'हेतुमति च' इति सूत्रे धातुत्वस्यैवोद्देश्यताऽवच्छेदकतया विधेयताऽवच्छेदकस्य, णिच्त्वस्य च तदभावेन णिचो णिज्विधाने बाधकाभावः। अत एव वह्निमान् वह्निमान्' इत्यत्रोद्देश्यविधेयभावेन न शाब्दबोधः।

नन्वेवम् 'इरयो रे' इत्यत्र इरेत्वस्य, उद्देश्यताऽवच्छेदकतया रेत्वस्य च विधेयतावच्छेदकतयोक्तनियमाप्राप्त्या तद्बाधाय द्विवचनवैफल्यम् स्वविधेयताऽवच्छेदकघटितस्य स्वीयोद्देश्यताऽवच्छेदकत्वन्न भवतीति नियमात्। तथा च–स्वीयविधेयताऽवच्छेदकरेत्वघटितस्येरेत्वस्य स्वीयोद्देश्यताऽवच्छेदकत्वन्न स्यादिति तत्प्राप्तये द्विवचनसाफल्यम्। अत एव विधेयांशेऽधिकावगाहिज्ञानस्य प्रामणिकत्वेऽपि उद्देश्यांशेऽधिकावगाहिज्ञानस्य न प्रामाण्यम्, तत्रोद्देश्यताऽवच्छेदकस्य विधेयताऽवच्छेदकघटितत्वात्।

भावप्रकाशकारास्तु–"नहि गुरुचरणैस्तदवच्छेदकयोरभेदे उद्देश्यत्वविधेयत्वे उक्ते, किन्तु उद्देश्यत्वम्, विधेयत्वञ्च मिथो विरुद्धम्, भेदे तत्सम्भवादित्युक्तम्। एवञ्च सामान्यविशेष्यधर्मभेदेन वस्तुतो भिन्ने तत्सम्भवेन विरोधाभावेऽपि 'तक्रकौण्डिन्य' न्यायेन सामान्येन रेत्वरूपेणोद्देश्यताऽवच्छेदकेन प्राप्तस्योद्देश्यत्वस्य विशेषेण रैत्वरूपेण विधेयताऽवच्छेदकेन प्राप्तविधेयत्वेन बाधः। सागमे इरेशब्दे 'यदागमाः' इति न्यायेन रेत्वसत्त्वेऽपि इरेचि तदसत्त्वेन, रेत्वस्य विशेषत्वस्य द्वयोरिरयो रयादेशे स्थानिवद्भावेन–सत्त्वादिरेत्वस्य सामान्यत्वस्य निर्बाधत्वात् अत्र व्याप्यव्यापकभावश्च बहुवचनत्ववैशिष्ट्येन बोध्यमिति सम्बोधनद्योतके रेशब्दे रेत्वसत्वेऽपि न दोषः। तदेतत्सर्वमभिप्रेत्य स्वविधेयस्य स्वोद्देश्यत्वाप्राप्त्येत्युक्तमिति दिगित्याहुः।

**लक्ष्यैक्यं तु ममाप्यस्त्येवेति दिक्। इति द्वित्वमपीति। एतेनाष्टमिकवर्ण-द्वित्वं स्थाने द्वित्वमिति लक्ष्यभेदोऽस्तीति परास्तम्, पदद्वित्वस्याप्यावृ-**

भविष्यतीत्याशङ्कां वारयति—विकारेति। ममापि = उदवोढामित्यत्र लक्ष्यैक्यवादिनो ममापि। एवञ्च तपरत्वसामर्थ्यादिति त्वदुक्तिर्व्यर्थेति भावः।

दिगिति—दिगर्थस्तु स्वविधेयस्य स्वस्मिन्नुद्देश्यत्वासम्भवे बीजमुद्देश्यत्वं सिद्धस्य, स्वविधेयस्य त्वसिद्धतया तस्योद्देश्यत्वासम्भव इति। तथा 'इरयोरे' इति सूत्रसाध्ये 'दध्रे' इति प्रयोगे नास्ति रेभावे कृते तस्येडागमे कृते कालविलम्बेनोद्देश्यस्य सिद्धतया द्विवचननिर्देशाभावेऽपि रेभावस्य पुनर्विधानञ्चरितार्थमिति द्विवचननिर्देशस्य लक्ष्ये लक्षणस्येति न्यायबीजत्वमेव यत्रोद्देश्यतावच्छेदकविधेयतावच्छेदकधर्मैक्यं तत्र विधेयस्योद्देश्यत्वासम्भवो यथा 'घटो घटः' इत्यादौ। अवच्छेदकभेदेन तत्सम्भवस्तु 'घटो नीलः' इत्यादौ प्रसिद्ध इति केचिदूचुः, तन्न, यत्रोद्देश्यविधेययोः सामान्यविशेषभावस्तत्रोद्देश्यविधेयभाव इति नियमः। 'घटो घटः' इत्यादौ च तथात्वाभावेन तस्याभावः। 'घटो नीलः' इत्यादौ तु घटः सामान्यं नीलो विशेष इति विवक्षास्तीति सम्भवत्युद्देश्यविधेयभावः। एवञ्च प्रकृते रेभावे कृते इडागमे तस्येरेत्वप्रकारकज्ञानविशेष्यत्वेऽपि सामान्यविशेषभावाभावेन तस्यासम्भव इत्याशयात्। यदि चेडागमविशिष्टस्य रेशब्देन ग्रहणम् यमुद्दिश्यागमो विहितस्तद्बोधकेन शब्देनागमविशिष्टस्य ग्रहणमिति तदर्थात्। तथाच रेत्वेरेत्वयोः सामान्यविशेषभावसत्त्वेन ताभ्यां धर्माभ्यामाश्रययोरुद्देश्यविधेयभावसम्भव इति ब्रूषे, तर्हि कृतेऽपीडागमे तस्यादेशो न प्राप्नोतीति इरेत्वस्यैव स्थानितावच्छेदकत्वेन शास्त्रघटकशब्देनोपस्थितत्वात्। एवञ्चेडागमे कृते यो धर्मःस्थानितावच्छेदकत्वेनाश्रितस्तत्प्रकारिका प्रतीतिरस्त्येवेति भवति शास्त्रस्य प्रवृत्तिरिति वक्तव्यं, तथा चेरेत्वेन विधेयस्यैवोद्देश्यत्वं वक्तव्यं, तच्च न सम्भवतीत्याशयः। यदपि रेभावोत्तरसिडागमेऽपि तस्येरेशब्दस्य लाक्षणिकत्वादादेशो न स्यादतो द्विवचननिर्देश इति तदपि न, कृतेऽपि द्विवचननिर्देशे प्रकृते लाक्षणिकत्वन्नापगतमिति लक्षणप्रतिपदोक्तपरिभाषाया अनित्यत्वज्ञापनेनैव तस्य चारितार्थ्यस्य वक्तव्यत्वादिति।

ननु द्विधमित्यादिना धकारस्य द्वित्वमादाय यन्मूले चतुष्टयमुक्तन्तन्न युक्तं, दकारस्य द्वित्वमादाय रूपाधिक्यस्य सम्भवादिति, चेन्न, द्वित्वे कर्तव्ये जश्त्वस्यासिद्धत्वात्। नच 'पूर्वत्रासिद्धीयमद्वित्वे' इत्यसिद्धत्वस्य प्रतिषेधो भविष्यतीति वाच्यम्, तस्याः परिभाषात्वेन सिद्धत्वासिद्धत्वयोः फले विशेषो यत्र तत्रैव प्रवृत्तेः।

लक्ष्यभेदसम्पादनाय खण्डनकारोक्तामन्यां युक्तिं खण्डयति—एतेनेति। वक्ष्यमाणप्रकारेण। तमेव दर्शयति—यदेति। तथाच क्रियासमभिहारे लुनीहि लुनीहीत्येवायं लुनातीत्यादौ पुनर्द्वित्वापत्तिः, क्रियासमभिहारे द्वित्ववद्वीप्सायामपि पुनर्द्वित्वा-

६।१।८ ) इति सूत्रे ऽनभ्यासग्रहणं भाष्ये प्रत्याख्यातम् । सन्नन्ता-यङन्ताद्वा णिचि चङि द्वित्वाभावार्थं तदिति तु कैयटादिभिरुक्तम् । तस्मादिह त्यज वा पञ्चमादीनि रूपाणि, स्वीकुरु वा रूपानन्त्यमिति

स्यापत्तेः । वस्तुतस्तत्षाष्ठद्वित्ववन्न स्था (१) नेद्धिर्वचनमित्यन्यत्र निरू-पितम् । प्रत्याख्यातमिति । अनभ्यासप्रतिषेधोऽनर्थकश्छन्दसि बाधवचनात्

पत्तेश्च । क्रियासमभिव्याहारवत्तस्या अप्यनेकव्यङ्ग्यत्वसम्भवादिति भावः । परोक्त-भ्युपेत्य प्रतिबन्ध्युत्तरमिदम्, वस्तुतः पुनर्द्वित्वस्य प्रवृत्तौ मानाभाव इत्याशयेनाह— वस्तुत इति । तत् = आष्टमिकवर्णद्वित्वम् । अयं भावः षाष्ठद्वित्वस्थले 'एकाचः' इति षष्ठी स्थानपदार्थनिरूपितसम्बन्धार्थिका 'द्वे' इति शब्दस्वरूपात्मकसङ्ख्येयपर-मिति स्थाने द्विर्वचनस्य लाभः, यदा तूच्चारणे इत्यस्याध्याहार उच्चारणक्रियायाः कर्म-साकाङ्क्षत्वादुपस्थितस्य 'द्वे' इत्यस्यैव कर्मसमर्पकत्वन्तदा 'द्विः प्रयोगो द्विर्वचनम्' इति पक्षस्य लाभः । तत्र कारकविभक्तेर्न्याय्यत्वाद् द्वितीयपक्ष एव युक्तः । अधिक-मन्यत्रोक्तम् ।

यत्तु षाष्ठाष्टमिकपदद्वित्वयोर्नित्यतया क्वचित्तस्य विश्रामोऽवश्यं वाच्यः, एवञ्च लाघवेन प्रथमप्रवृत्तावेव विश्रामः कल्प्यते, अन्यथा रूपानन्त्यापत्तिरिति, तन्न, उक्तरीत्या आनन्त्यापत्तेरभावात्, सकृत्प्रवृत्त्यैव वीप्सादिद्योतनसम्भवाच्च । अन्यथा 'परेर्वर्जने' इति द्वित्वस्य वैकल्पिकतया तस्य पुनः प्रवृत्त्यापत्तेः । केचित्तु 'लिटि धातोः' इतिसूत्रे ऽनभ्यासग्रहणाल्लक्ष्ये लक्षणस्येतिन्यायो ऽनित्य इति पुनर्द्वित्वस्य प्रवृत्तिसम्भव इति

१ 'नित्यवीप्सयोः' ( पा० सू० ८-१-४ ) इत्यत्र 'सर्वस्य द्वे' ( पा० सू० ८-१-१ ) इति सूत्र-भाष्ये वाक्यादेर्द्विर्वचनवारणाय 'पदस्येति प्रवृत्य द्विर्वचनं वक्ष्यामि' 'पदस्य' 'पदात्' ( पा० सू० १८-१-१६-१७ ) इति वक्ष्यति, तत्पदग्रहणं न कर्तव्यं भवति' इत्युक्तेरेकाज्द्विर्वचनन्यायेन सर्वावय-वकपदस्य द्वित्वे सिद्धे 'सर्वस्य' इति द्वितीयषष्ठ्युच्चारणेन 'उपपदविभक्तेः' इति न्यायाप्रवृत्त्या स्थाने द्विर्वचनत्वाबाधनात् स्थाने द्विर्वचनत्वपक्षो लभ्यते। तथा च 'द्वे' इत्यस्य संख्येयापेक्षायां शब्दानुशा-सनप्रस्तावात् 'द्वे' शब्दरूपे प्रत्यासत्त्या स्थानिसमानाकारे 'सर्वस्य पदस्य स्थाने भवतः' इत्यर्थः ।

तेन 'पौनःपुन्यम्' 'पौनःपुनिकः' इत्यत्र स्थानिवत्त्वेन प्रातिपदिकत्वात्ष्यञ्-ठञौ सिद्धौ। नच स्थानिनः पदस्याप्रातिपदिकत्वात् स्थानिवत्त्वेन प्रातिपदिकत्वालाभः, द्वित्वात्प्रागेवान्ययत्वात् सुपो लुकि प्रत्ययलक्षणेन 'अप्रत्ययः' इति निषेधाप्रवृत्त्या प्रातिपदिकत्वे स्थानिवत्त्वेनादेशे तत्सौलभ्यात् । तत्र द्विरा-वृत्तशब्दरूपादेश इत्यर्थे द्विरिति वक्तव्ये 'द्वे' इति द्विवचनबलेनानस्तमितावयवभेदसमूहस्यैवादेशस्योप-स्थितपदसमुदायरूपस्य विधानात्प्रत्येकमप्यत्र पदत्वमिति 'अग्नेऽग्ने' 'अक्षन्नक्षन्' इत्यादौ पूर्वरूपादि-सिद्धिः । यदा कस्कादिषु 'कौतस्कुतइत्यस्यपाठेन 'कृताष्टमिकद्वित्वादप्रातिपदिकत्वेऽपि तद्धितोत्पत्तिः' इति ज्ञापने तु 'सर्वस्य' इत्यस्य फलाभावेन 'उपपदविभक्तेः' इति न्यायात् 'द्वे' इत्यनेन संख्येयापेक्षायां उच्चा-रणरूपे संख्येये अपेक्ष्येते तदा 'द्विःप्रयोगो द्विर्वचनम्' इति पक्षेऽपि दोषाभावः । 'ग्राम् पचसि पचसि देवदत्त' इत्यत्राम पकान्तरता तु द्विः प्रयोगपक्षेऽपि समुदाये सुबन्ततदादित्वस्याक्षततया निर्वाह्येति दिक् ।

नवत्वोक्तिरसंगतैव । सकारद्वित्वेनाष्टौ विसर्गद्वित्वेन षोडशेति त्व-न्यदेतत् । यदप्युक्तं त्रैपादिके ऽन्तरङ्ग इत्यादि, तदपि न, 'नार्कुटः' 'नार्पत्यः' इत्यत्र विसर्गवारणाय वृद्धेरसिद्धत्वस्य तत्रैव भाष्ये स्थ-

नोनूयतेर्नोनावेत्यादौ न दोषः' इति भाष्यम् । 'एकस्यैकाचो द्वित्वे कृते एकाज्व्यपदेशो हेतोरचो द्विरुक्तत्वाद्, अनेन न्यायेनाचः पुनः पुनर्द्वित्वा-प्राप्तौ अवयवान्तरस्यैकाच्त्वाभावेन तदप्रवृत्तौ तद् व्यर्थम्' इति च तदा-शयः कैयटेनोक्तः[1] । कैयटादिभिरिति अत्रारुचिबीजं तु भाष्यप्रामाण्येन 'तेषा-मनभिधानम् । 'स्तौतिण्योः–' ( पा० सू० ८।३।६१ ) इति सूत्रस्थः सोषु-प्यतेः सन् 'सोषुपिषते' इति भाष्यप्रयोगोऽपि छान्दस इत्याहुः । रूपान-न्त्यमिति । रूपाधिक्यमित्यर्थः । तदाह नवत्वोक्तिरसङ्गतैवेति । सकारद्वित्वे इति । अच्परयत्वावच्छिन्नं ह्यस्य लक्ष्यम्, तत्रैकस्मिन् धकारे प्रवृत्तावपि तादृशे सकारे लक्ष्यभेदात्पुनः प्रवृत्तिर्भवत्येवेति भावः । एवं संप्रसारणादिविधौ यण्त्वावच्छिन्नमुद्देश्यमिति लक्ष्यभेदाद्यावदुद्देश्यं पुनः प्रवृत्तिर्भवत्येवेति न 'न संप्रसारणे' ( पा० सू० ६।१।३७ ) इत्यादेर्वैयर्थ्यमिति बोध्यम् । तदपि

वदन्ति, तन्न, भाष्यविरोधात्तमेवाह—अनभ्यासेति । अनर्थक इत्यस्य लक्षणस्य सकृत्प्रवृत्तेरिति शेषः । तथाच तन्न्यायमाश्रित्याभ्यासप्रतिषेधो बभूवेत्यादौ पुनर्द्वित्व-वारको न कार्य इति कल्पनेन लाघवस्य सम्भवे तन्न्यायानित्यत्वेऽभ्यासप्रतिषेधस्य ज्ञापकत्वकल्पनम्भाष्यविरुद्धमिति भावः । ननु नोनावेत्यत्र 'सन्यङोः' इति द्वित्वोत्तरं लिटीति द्वित्वापत्तिरतो ऽनभ्यासप्रतिषेध आवश्यको ऽत आह—छन्दसीति । न दोषः = न पुनर्द्वित्वापत्तिः । पुनर्द्वित्वापत्तौ कैयटोक्तिम्प्रमाणयति—एकस्यैकाच' इति । एतेन 'जुगुप्सिषते' इत्यादौ पुनर्द्वित्ववारणायोत्तरार्थमनभ्यासस्येति कथितमिति परास्तम् । उक्तरीतेररुचिबीजम् कैयटादिभिरित्युक्त्या सूचितन्तद्बीजमित्यर्थः । भाष्य-प्रामाण्येन = अभ्यासप्रतिषेधो ऽनर्थक इति भाष्यप्रामाण्येन । तेषाम् = सन्नन्तादि-त्यादिना मूले प्रदर्शितानाम् । अनभिधानमिति । लोक इति शेषः । अत एवाह—स्तौतीत्यादि । इत्याहुरिति । भाष्यानुसारिण इति शेषः । रूपानन्त्यस्य खण्डित-त्वादाह—रूपाधिक्यमिति । ननु 'सुध्युपास्यः' इत्यस्य लक्ष्यस्यैकत्वात्सकारस्यापि तेन शास्त्रेण द्वित्वन्न स्यादत आह—अच्परेति । ननूक्तन्यायाङ्गीकारे 'न सम्प्रसारणे सम्प्रसारणम्' इति सूत्रस्य वैयर्थ्यापत्तिरत आह–एवमिति । अत्र 'सुध्युपास्यः' इत्यादौ बहिरङ्गलक्षणत्वाद्वेत्यनेन संयोगान्तलोपाप्रवृत्तिसम्पादनमसङ्गतं, त्रैपादिकेऽन्तरङ्गे त्रिपाद्या अषिद्धेस्तत्राप्रवृत्तेर्न्याय्यत्वादिति, तदपि नेत्यादिनोक्तमसङ्गतमतो मूलाशय-

[1] सम्प्रत्येता[दृ]शोक्तिः कैयटे नोपलभ्यते ।

१०

ष्टत्वात्, 'संयोगान्तलोपे यणः प्रतिषेधः' इत्यस्य बहिरङ्गत्वेन प्रत्याख्यातत्वात्, स्वयमपि तथैवानूदितत्वाच्च। तस्मादिह यथोद्देशपक्षो ग्राह्यो बहिरङ्गपरिभाषाया अप्रवृत्तये। तथा च भाष्ये—मयः परस्य यणो द्वित्वे दध्यत्रेत्युदाहृतम्। न चैवमपि 'इकोऽसवर्णे—' (पा० सू० ६।१।१२७) इति शाकलेन रूपान्तरमस्त्विति वाच्यम्, समासे तन्निषेधात्। न च नित्यसमास एव तन्निषेध इति वाच्यम्, भाष्ये नित्यग्रहणस्य प्रत्याख्यातत्वात्। यथोत्तरं मुनीनां प्राम्राण्यात्। नन्विह यणेत्र दुर्लभः, सुधीशब्दस्य ध्यायतेः सम्प्रसारणेन निष्पन्न-

---

नेति। यथोद्देशपक्षे इत्यनुक्त्वा सामान्येन यदुक्तं तदपि नेत्यर्थः। तस्मादिहेति। 'यणो मयः' इत्यत्रेत्यर्थः। विसर्जनीयसूत्रभाष्यात्तु कार्यकालपक्षेऽपि त्रिपाद्यां तदप्रवृत्तिरिति लभ्यते। मूलं तु कैयटानुसारेणेति परे।

---

माह—यथोद्देश इत्यादिना। मूले तस्मादित्यत्र यदिहेति तदर्थमाह—यणो मय इति।

भाष्यकारोक्तसिद्धान्तमाह—विसर्जनीयेति। तत्र हि—'नार्कुटो' 'नार्पत्यः' इत्यादौ रेफस्य विसर्गवारणाय 'विसर्जनीयो ऽनुत्तरपदे' इति वार्तिककृतोक्तं, तत्प्रत्याख्यानपरान्तरङ्गपरिभाषाप्रवृत्तिस्तु न युक्ता; पूर्वत्रासिद्धमिति प्रत्यक्षसिद्धमित्येतद्विरोधात्। अत एवोक्तं तत्र 'न वा बहिरङ्गलक्षणत्वात्' इति तेनोभयपक्षेऽपि त्रिपाद्यां बहिरङ्गपरिभाषाया अप्रवृत्तिरेव। नन्वेवं सति मूलविरोधो ऽत आह—मूलं त्विति। परे=भाष्यतत्त्वविदः। मूले—समानाङ्गग्रहणमितीति। अत्र समानपदमेकपरम्। एवञ्च यत्र सम्प्रसारणास्याचश्चैकाङ्गावयवत्वन्तत्र पूर्वरूपमित्यर्थाश्रयणे 'सुध्युपास्यः' इत्यत्र पूर्वरूपापत्तिर्दुर्वारैव, समासोत्तरोत्पन्नसुनिमित्ताङ्गसंज्ञायाः समुदायनिष्ठतया सम्प्रसारणाचोरेकाङ्गावयवत्वस्य सत्त्वात्। यदि तु सम्प्रसारणनिमित्तप्रत्ययनिमित्तैकाङ्गसंज्ञाविशिष्टावयवत्वमित्यर्थस्तदा 'कारीषगन्धीपुत्रः' इत्याद्यसिद्धिः, तत्र सम्प्रसारणस्य प्रत्ययनिमित्तकत्वाभावात्, अतोऽङ्गशब्दस्य सम्प्रसारणनिमित्ताव्यवहितपूर्ववर्तिसमुदायपरत्वमेव वक्तव्यम्। नन्वेवमपि 'हूतो जीनः' इत्यादौ पूर्वरूपोत्तरन्दीर्घो न भविष्यति, सम्प्रसारणत्वस्य स्थान्यलधर्मतया तदादेशे पूर्वरूपनिष्पन्ने ऽतिदेशेन वक्तुमशक्यत्वादिति वाच्यम्; 'हलः' इति सूत्रारम्भसामर्थ्यात्तत्रानल्विधाविति निषेधाप्रवृत्तेः। नचैवमपि शकहूर्थमित्यादौ पुनः पूर्वरूपापत्तिवारणाय समानाङ्गग्रहणमिति वार्तिकवैयर्थ्यमेव। पूर्वरूपनिष्पन्ननिष्ठस्यातिदेशलभ्यसम्प्रसारणत्वस्यालधर्मतया तदादेशे दीर्घे अतिदेशेन तस्य वक्तुमशक्यत्वादिति वाच्यम्, अनयैव रीत्या वार्तिकानारम्भस्य भाष्य

त्वेन 'सम्प्रसारणाच्च' ( पा० सू० ६।१।१०८ ) इति पूर्वरूपापत्ते-रिति, चेन्न, 'सम्प्रसारणपूर्वत्वे समानाङ्गग्रहणम्' इति वार्तिकोक्तेः, सम्प्रसारणस्थानिकस्यातथात्वाच्च । न चैवमपि 'न भूसुधियोः' ( पा० सू० ६।४।८५ ) इति यणिनिषेधः शङ्क्यः, आङ्गत्वेन प्रत्यये परत एव तस्य प्रवृत्तेः, अनन्तरस्येति न्यायेन 'एरनेकाचः–' ( पा० सू० ६।४।८२ ) इति, 'ओस्सुपि' ( पा० सू० ६।४।८३ ) इति च सूत्रद्वयेन प्राप्तस्यैव निषेधाच्च । *धात्रंश इति ।* अत्र रेफस्य द्वित्वं न,

---

संप्रसारणस्थानिकस्येति । स्थाने जातस्येति शेषः । साक्षात्संप्रसारणस्थानि-कपूर्वरूपादेः 'हलः' ( पा० सू० ६।४।२ ) इत्यारम्भसामर्थ्यादल्विधौ स्थानिवत्त्वाङ्गीकारेऽपि पूर्वरूपोत्तरं प्रवृत्तस्य 'हलः' ( पा० सू० ६।४।२ ) इति दीर्घस्य स्थानिवद्भावेन संप्रसारणत्वे मानाभाव इति भावः । द्वित्वं

---

काराभिप्रेतत्वादत आह–सम्प्रसारणस्थानिकस्येति । सम्प्रसारणस्थानिकस्य तत्त्वं 'हलः' इति सूत्रेण ज्ञापितमेवेत्यत आह–स्थाने जातस्येति । ननु 'हलः' इति सूत्रस्य सम्प्रसारणत्वस्याल्धर्मत्वेऽपि तदतिदेशे कर्तव्ये ऽनल्विधाविति निषेधो न प्रवर्तेत इत्य-र्थज्ञापकत्वमेवास्त्वित्यत आह–साक्षादिति । अल्विधाविति । दीर्घे इत्यर्थः । कर्तव्य इति शेषः । एतावतैव हल इति सूत्रस्य चारिर्थ्यमिति भावः । नन्वेवं सति 'सुध्यु-पास्यः' इत्यादौ 'सुधि आ' इति स्थिते ऽपवादत्वात् 'हलः' इति दीर्घे पूर्वरूपं न स्यात्, 'हलः' इति सूत्रस्य कृतार्थतया ऽल्विधावपि स्थानिवद्भावेन सम्प्रसारणादेशस्य सम्प्रसारणत्वमित्यर्थज्ञापकत्वासम्भवात्, सम्प्रसारणाच्चेत्यस्य विध्यभेस्यत्र चारिता-र्थ्यादिति चेन्न, 'निरुतम्' 'दुरुतम्' इत्यस्य 'सुतम्' इत्यादेश्च सिद्धयेऽङ्गस्येत्यस्यावृत्त्या-"अङ्गावयवाद्धलः परं यत्सम्प्रसारणन्तस्याङ्गस्य दीर्घः' इत्यर्थस्याश्रयेण दीर्घस्य पूर्व-रूपात्प्राक् प्रवृत्त्यसम्भवात् ।

---

१ ननु समानाङ्गेत्यस्य सम्प्रसारणघटिताङ्गघटकेऽचि पूर्वरूपमित्यत्र तात्पर्ये 'सुद्ध्युपास्यः' इत्यत्र पूर्वरूपापत्तिः, सुनिमित्तकाङ्गमादायोपास्यघटकोकारस्य सम्प्रसारणघटिताङ्गघटकत्वात् । सम्प्रसारणनि-मित्तप्रत्ययनिमित्तकाङ्गघटकेऽचीत्यपि नार्थः, 'काराषगन्धीपुत्रः' इत्यादावव्याप्तेः, सम्प्रसारणस्य प्रत्यय-निमित्तकत्वाभावात् । नच सम्प्रसारणविशिष्टेऽचि पूर्वरूपमित्यर्थः, वै–स्वाघटिताङ्गघटकत्वसम्बन्धेनेति नोक्तदोषः, 'सुधियौ' इत्यादौ पूर्वरूपापत्तेः । नच स्वघटिताङ्गघटकत्वस्यापि वैशिष्ट्यनियामकतया दोषा-भावः, तथापि 'सुधियोः पुत्रः' इत्यादावलुक्समासे दोषावारणादिति चेन्न, समानाङ्गेत्यस्य सम्प्र-सारणविशिष्टेऽचि पूर्वरूपमित्यत्रैव तात्पर्यात् । वैः–स्वाव्यवहितोत्तरत्व-स्वस्थानियणव्यवहितोत्तरत्वेन दृष्टत्वैतदुभयसम्बन्धेन । तथा च–स्वस्थानियणव्यवहितोत्तरत्वेन दृष्टत्वाभावान्नोक्तदोष इति दिक् ।

द्वित्वप्रकरणे रहाभ्यामिति साक्षच्छ्रुतेन निमित्तभावेन रेफस्य कार्यित्वबाधात्। 'सुध्युपास्यः' इत्यादौ तु स्थानित्वेन निमित्तत्वमिकः 'तस्मादित्युत्तरस्य' ( पा० सू० १।१।६७ ) इत्यादिनिर्दे-

नेति। 'यणो मयः' इति प्राप्तन्नेत्यर्थः। द्वित्वप्रकरणे इति। तथा च भाष्यम्-'रेफास्यानुनासिक-परसवर्ण-द्विर्वचनप्रतिषेधो वक्तव्यः। 'स्वर्नयति' 'कुण्डं रथेन' 'मद्रह्रदः' 'भद्रह्रदः'। न वक्तव्यः। रेफोष्मणां सवर्णा न सन्ति। 'नेमौ रहौ कार्यिणौ, किं तर्हि-निमित्तं द्विर्वचनस्येति'। अन्यथा वचनारम्भे द्विर्वचनमात्रस्य निषेधेन फलभेदे प्रत्याख्यानानापत्तेः। साक्षाच्छ्रुतेन= विशेषशब्दबोधितेन। यत्र यत्र द्वित्वनिमित्तत्वं तत्र सर्वत्र वाक्यान्तरेण 'अनचि' ( पा० सू० ८।४।४७ ) इत्यनेन कार्यित्वप्रसक्तेरनवकाशेन तेन

ननु 'धात्रंशः' इत्यत्र रेफस्यानचीति सूत्रेण द्वित्वाप्राप्त्या द्वित्वन्नेत्यसङ्गतमत आह-यणो मय इतीति। मय इति पञ्चमीति। पक्ष इति शेषः। नन्वेवमपि यत्र रेफस्य द्वित्वनिमित्तत्वप्रसक्तिर्हर्य्यनुभव इत्यादौ यथा तत्रास्तु स्थानिवत्त्वबाधः 'धात्रंशः' इत्यादौ च न तथेति कथम्बाध इत्यत आह-तथाचेति। अस्मिन्प्रकरणे स्थानित्वबाधे च। भाष्यमिति= हयवरट्सूत्रस्थमित्यादिः। आद्यदोषवारणायाह—रेफोष्मणामिति। एतेन 'यरो ऽनुनासिक' इति सूत्रे 'अनुस्वारस्य ययि' इति सूत्रात्सवर्णपदापकर्षो ध्वनितः। तथाच सवर्णोऽनुनासिको नास्तीत्यर्थः। यथाश्रुते रेफस्य रेफ एव सवर्ण इति रेफस्य सवर्णो नास्तीत्यसङ्गतमेव स्यात्। अत एव 'महिष्मान्' इत्यत्र षस्य नानुनासिकः। एतेन 'अनुस्वारस्य ययि' इति सूत्रे 'यरो ऽनुनासिक' इति सूत्रादनुनासिक इत्यस्य सम्बन्धश्च ध्वनितः। अत एव द्वितीयातिप्रसङ्गवारणप्रकारो विशिष्यात्र नोपपादितः। तृतीयातिप्रसङ्गवारणायाह—नेमाविति। रहावित्यत्र हकारोपादानन्दृष्टान्तत्वप्रदर्शनाय यथा हस्य कार्यित्वन्न तथा रेफस्यापि कार्यित्वन्नेति तात्पर्यम्। अन्यथा=एतत्प्रकरणस्थवचनसामान्यप्राप्तद्विर्वचनस्य बाधानङ्गीकारे। ननु कार्यित्वमपि यण्यरशब्दाभ्यां साक्षात् श्रुतमेवेत्यत आह—विशेषेति। अनचीत्यनेन= 'अनचि च' इति सूत्रेण। एतेनानचीत्यस्य निषेधबोधकतया ऽनर्चात्यसङ्गतमिति परास्तम्। अनवकाशेनेत्यनेन निमित्तत्वस्यापवादत्वात्कार्यित्वबाधकता बोधिता। अचानचीत्यस्याचो रहेत्येतद्दृष्ट्या ऽसिद्धत्वात्कथम्बाधकतेति वाच्यम्, तावतापि तद-

१ 'हयवरट्' सूत्रे भाष्ये—'अनुनासिकपरसवर्णयोस्तावत् प्रतिषेधो न वक्तव्यः' 'रेफोष्मणां सवर्णा न सन्ति' इत्युक्त्या 'यरोऽनुनासिकेऽनुनासिको वा' ( पा० सू० ८-४-४५ ) इत्यत्र 'अनुस्वारस्य ययि परसवर्णः' ( पा० सू० ८-४-५८ ) इत्यतः सवर्णग्रहणापकर्षबोधनेन 'यरः स्थाने सवर्णोऽनुनासिक इत्यर्थंलाभादिति भावः।

शाज्ज्ञापकान्न बाध्यत इति कैयटः। तकारस्य तु भवत्येवेत्युक्तम्।

भाष्यप्रामाण्यात्सामान्यत एव द्वित्वकार्यित्वं बाध्यते इति भावः।

न बाध्यत इति। इदं च व्यक्तिपक्षेऽप्यावश्यकम्। अन्यथा 'अकः सवर्णे-' (पा० सू० ६।१।१०१) इत्येतत्पर्यालोचनया 'श्रीशः' इत्यादिविषयकयण्शास्त्राभावकल्पनवत्संग्राहकवाक्ये इकः स्थानित्वश्रवणात्तद्विषयकलक्षणाभावस्यैव कल्पनं स्यादिति स्पष्टम् 'इको यणचि' (पा० सू० ६।१।७७) इत्यत्र कैयटे। कैयट इति। अत्रारुचिर्बीजं तु अत्र स्थानित्वस्य नानवकाशत्वम्, मध्वत्रेत्यत्र निमित्तत्वाप्राप्त्या तत्र स्थानित्वस्य चारितार्थ्यात्। तक्रकौण्डिन्यन्यायोऽप्यनवकाशविषय एव इति स्पष्टं 'तद्धितेष्व-

प्राप्तियोग्ये विषये ऽचारितार्थ्यस्यापवादत्वबीजस्यानपायात्। अनचीत्यस्य वैकल्पिकत्वय। द्वित्वाभावपक्षे चारितार्थ्यात्कथङ्कार्यित्वस्य निमित्तत्वेन बाध इति शङ्काया नावकाशः।

इदम् = ज्ञापकाश्रयणम्। व्यक्तिपक्षेऽप्यावश्यकमिति। अपिना जातिपक्षसमुच्चयः। अयम्भावः—व्यक्तिपक्षे प्रतिलक्ष्यं लक्षणानां भेदेन यणादिकार्यविधायकशास्त्रस्थले सर्वलक्ष्यसङ्ग्रहाय तन्त्रेणोच्चारणमित्यावश्यकम्। एवञ्च 'श्रीशः' इत्यादिविषयकमपि यण्विधायकशास्त्रं स्यादित्यनिष्टापत्तिः, अतो यत्रापवादशास्त्रविषयता तद्विषयकबाध्यशास्त्रस्याकल्पनमेवेति यथा, तथा यणादेशस्थानित्वमिको विशेषतः श्रुतमिति तस्य निमित्तत्वाकल्पनमपि स्यात्, तथाच 'सुध्युपास्यः' इत्यादिलक्ष्याणामसिद्ध्यापत्तिः, अत इकामपि निमित्तत्वं यणादेशे ऽस्तीत्यत्र तस्मादित्युत्तरस्येत्यादीनां ज्ञापकतैव, तथा जातिपक्षेऽपि लक्षणस्य सर्वविषयकत्वम्। अत एव भाष्यकृता 'न ब्राह्मणं हन्यात्' इत्यत्र सर्वब्राह्मणविषयकत्वसिद्धये जातिपक्षाश्रयणमेव दर्शितम्। एवञ्च श्रीशविषयकत्वं यणादेशविधायकशास्त्रे नास्तीति कल्पनीयम्। अन्यथा तत्र विकल्पापत्तिः। एवमिकांन्निमित्तत्वाकल्पनमपि स्यादतो ज्ञापकत्वमावश्यकमिति। एतदेव दर्शयति—अन्यथा = ज्ञापकानाश्रयणे। तद्विषयकेति।

निमित्तत्वविषयकेत्यर्थः। अत्र = यण्विषये। तत्र = इकि। चारितार्थ्यादिति। एतेनेग्विषये येन नाप्राप्तिन्यायविषयताया अभावेऽनेकां निमित्तत्वबाधाप्रसक्त्या पक्षद्वयेऽपि ज्ञापकानुपयोग एवेति ध्वनितम्। नन्वत्र येन नाप्राप्तिन्यायस्य सञ्चारो मया न क्रियते, किन्तु तक्रकौण्डिन्यन्यायविषयतायाः सत्त्वेन तेन न्यायेन बाध उच्यत, इत्यत आह—तक्रेति। स्पष्टमिति। तत्र हि—क्रोष्टुः, 'नार्मतः' इत्यादावन्त्योपधावृद्ध्योर्निषेधमुक्तोक्तन्यायेन तयोर्बाधमाशङ्क्य 'सौश्रुतः' इत्यत्रादिवृद्धेश्चारितार्थ्येन न्यायेन तयोरादिवृद्ध्या बाधस्याप्राप्तिमुपन्यस्यानुशतिकादिगणे पुष्करसच्छब्दपाठस्यादिवृद्धिविषये तयोरप्रवृत्तौ ज्ञापकतोक्ता। एतेन तत्र यथोक्तन्यायेन नास्ति बाधस्तथेहाप्त्वे-

तच्च वा, इत्यतोऽत्र रूपद्वयम् । लाकृतिरिति त्वेकमेव ॥

चाम्' ( पा० सू० ७।२।११७ ) इति सूत्रे भाष्ये । तदप्राप्तियोग्यविषयाभावरूपं चानवकाशत्वमेतद्विषये । न च तक्रकौण्डिन्यन्यायो विधेयविषय एव, विशेषविहितेन सामान्यविहितं बाध्यत इति अभियुक्तव्यवहारादिति वाच्यम्, अपूर्वबोध्यत्वेन निमित्तत्वादेरपि विधेयत्वात् । नहि निमित्तवत्त-

क्त्वयोः सामान्यविशेषभावसत्त्वेऽपि निमित्तत्वस्थानित्वयोरुक्तन्यायेन बाध्यबाधकभावाभाव इति भावः । एतद्विषये = तक्रकौण्डिन्यन्यायविषये । तथा च तक्रकौण्डिन्यन्यायमूलक एव येन नाप्राप्तिन्याय इति सूचितम् । सर्वथा निरवकाशत्वप्रयुक्तन्तु बाधकत्वन्त्वन्यत् ।

परोक्तमुपन्यस्य खण्डयति—नचेति । विधेयविषय एवेति तथाचोभयोरविधेयत्वान्न तक्रकौण्डिन्यन्यायसञ्चारः । व्यवहारादिति । 'तद्धितेष्वचामादेः' इति भाष्यमूलकादित्यादिः । अपूर्वबोध्यत्वेन = अज्ञातज्ञाप्यत्वेन । अपिना कार्यित्वस्य सङ्ग्रहः । तत्त्वम् = निमित्तत्वञ्कार्यित्वञ्च । अत्र केचित्—एवं 'मतिबुद्धि' इति सूत्रे 'राजपूजितः' इत्यत्र 'भूते क्तान्तेन तृतीयान्तस्य समासः' इत्युक्तम् । सा चोक्तिर्भूतवर्तमानकालयोर्भेदं हृदि निधाय तत्र मत्यादिबोधकधातुविहितक्तद्योत्यवर्तमानकालस्य विशेषत उक्तत्वेन सामान्यत उक्तस्य भूतकालस्य बाधं सम्भाव्य, तेनेत्यधिकारे 'उपज्ञाते' इति निर्देशेन कालयोर्बाध्यबाधकभावाभाव इत्युक्तम्, तस्य तेन निर्देशेन विधेयविषय एव विशेषत उक्तस्य सामान्यतो बोधितबाधकतेति लौकिकन्यायस्य सञ्चार इति सामान्यतो ज्ञाप्यत इति तात्पर्यम् ।

तत्र परेत्वाहुः—लौकिकेन तेन न्यायेन बाध इति वक्तुमप्यशक्यम्, युगपद्विषयतायां लौकिकन्यायसञ्चारः । सा चेह विरुद्धत्वान्नास्ति । यथा—द्वन्द्वापवाद एकशेष इति । व्यवहारो—यदीदन्न स्यात्तदा 'चार्थे' इति सूत्रम्प्रवर्तेतेति रीत्या साध्यते । तथा कालयोर्वक्तुमशक्यमित्युक्तं तदेतेन बोध्यते । तत्रापि मत्यादिसम्बन्धित्वेन वर्तमानकालस्यापूर्वबोध्यत्वेन तत्त्वस्य सत्त्वेन तस्य बाधकत्वसम्भवादिति, तन्न, कालानाम्प्रत्ययद्योत्यतया ऽविधेयत्वात् । नच तत्र क्तप्रत्ययवत्कालस्याप्यपूर्वबोध्यत्वेन तत्त्वम्, तस्य सामान्यतो विशेषतश्च लोकसिद्धत्वस्य कालोपसर्जने च तुल्यमित्यनेन प्रतिपादित-

१ अयम्भावः—यथा लोके—यण्निमित्तभूतानामकारादीनां ज्ञानम् "इको यणचि" इति सूत्ररूपशब्दप्रमाणातिरिक्तश्रोत्रेन्द्रियरूपप्रमाणेनैव सिद्धम् । न हि तथा यण्निष्ठविधेयतानिरूपिताकारादिनिष्ठनिमित्ततारूपविषयताया अपि ज्ञानम् 'इको यणचि' इति सूत्रातिरिक्तप्रमाणगम्यमिति मानान्तरागम्यत्वरूपापूर्वबोध्यत्वं निमित्तत्वस्याक्षतमेवेत्याह—निमित्तवदिति । निमित्तभूतवर्णानां ज्ञानं यथा लोकतः सिद्धम्, नहि तथा तत्त्वमपि तद्गतनिमित्तत्वमपि 'इको यणचि' इति सूत्रातिरिक्तमानगम्यमिति भावः ।

हलो यमाम् ( पा० सू० ८।४।६४ ) लोपः स्याद्वेति । 'झयो हः'—

त्वमपि मानान्तरसिद्धमिति दिक्[1] । एकमेवेति । यणन्तरप्राग्वर्तियरोर्द्वित्वप्र-

त्वात्, कालयोर्युगपद्विवक्षायाः कर्तुमशक्यत्वेन बाध्यबाधकभावाप्राप्तेश्चेत्याह—द्विगिति ।

ननु विसर्गस्य द्वित्वेनाधिक्याल्लाकृतिरिति त्वेकमेवेति मूलासङ्गतिरत आह—
यणित्यादि । तथा च—यथा 'सुध्युपास्य' इत्यादौ यणन्तरप्राग्वर्तियरो द्वित्वकृताधिक्यं

१ वस्तुतस्तु तक्रन्यायेन बाध्यबाधकत्वेनाभिमतशास्त्रजन्यबोधीयविषयतो यत्र व्याप्यव्यापकभावस्तत्र बाधकशास्त्रीयव्याप्यविषयताश्रयातिरिक्तत्वेन बाध्यशास्त्रीयविषयताश्रये सङ्कोचः । अत एव 'तद्धितेष्वचामादेः' ( पा० सू० ७-२-११ ) इति भाष्ये तक्रन्यायविषयत्वाभावोपपादनाय 'इह पुनरप्राप्तायामन्त्योपधालक्षणायां वृद्धौ अचामादिवृद्धिरारभ्यते, 'सुश्रुत्'—'सौश्रुतः' इति । पुष्करसद्ग्रहणाद्वा, यदयमनुशतिकादिषु पुष्करसच्छब्दं पठति तज्ज्ञापयत्याचार्योऽचामादिवृद्धावन्त्योपधालक्षणावृद्धि र्न भवतीति' इति भाष्यं सङ्गच्छते ।

अन्यथा उद्देश्यदलप्रविष्टधर्मयोरेव व्याप्यव्यापकभावमादाय न्यायप्रवृत्तौ 'सौश्रुतः' इत्यत्रापि 'तद्धितेष्वचामादेः' इति शास्त्रीयविषयतायाः सत्त्वेन 'अचो ञ्णिति' 'अत उपधायाः' इत्यनयोर्विषयताया असत्त्वेऽपि ञ्णित्प्रत्ययत्व—ञ्णित्तद्धितत्वरूपधर्मयो र्व्याप्यव्यापकभावसत्त्वेन तक्रन्यायेनैव बाधसिद्धया तक्रन्यायविषयाभावेनानुशतिकादिषु पुष्करसच्छब्दपाठसामर्थ्येन बाधकत्वोपपादनं भाष्यकृतोऽसङ्गतं स्यात् । किञ्चोद्देश्यदलप्रविष्टधर्मयोर्व्याप्यव्यापकभावेन बाध्यबाधकभावस्वीकारे 'आट' 'आटतुः' इत्यादौ द्वित्वानापत्तिः, 'लिटि धातोः' 'अजादे र्द्वितीयस्य' इति शास्त्रयोरुद्देश्यदलप्रविष्टधातुत्वाजादिधातुत्वयो र्व्याप्यव्यापकभावसत्त्वेन अजादिधातुत्वरूपव्याप्यधर्मावच्छिन्नातिरिक्तत्वेन धातुत्वावच्छिन्ने सङ्कोचे 'लिटि धातोः' इत्यस्याजादिधातुभिन्नधात्ववयवस्यैकाचो द्वेस्त इत्यर्थे द्वित्वाप्राप्तेः । एवं व्याप्यविषयतावच्छेदकधर्मावच्छिन्नातिरिक्तत्वेन व्यापकविषयतावच्छेदकधर्मावच्छिन्ने सङ्कोचोऽपि न, उक्तदोषतादवस्थ्यात् । तावताऽपि अजादिधातुत्वावच्छिन्नातिरिक्तत्वेनैव संकोचस्य लाभात् । यत्तु—उक्तरूपेण सङ्कोचस्वीकारे 'लिटि धातोरनभ्यासस्य' इति सूत्रीयोद्देश्यतारूपव्यापकविषयतावच्छेदकप्रथमैकाच्त्वरूपधर्मावच्छिन्ने 'अजादे र्द्वितीयस्य' इति सूत्रीयोद्देश्यतावच्छेदकतारूपव्याप्यविषयताऽवच्छेदकाजादिप्रथमैकाच्त्वरूपधर्मावच्छिन्नातिरिक्तत्वेन सङ्कोचे 'लिटि धातोः' इत्यनेन 'आट' 'आटतुः' इत्यादौ द्वित्वं न स्यादिति, तन्न, 'अजादे र्द्वितीयस्य' इति शास्त्रीयविषयताया अजादिप्रथमैकाच्त्वस्यानवच्छेदकत्वेन तदवच्छिन्नातिरिक्तत्वेन तत्सङ्कोचासम्भवात् । तस्मात् विषयतयो र्व्याप्यव्यापकभावमादाय व्याप्यविषयताश्रयातिरिक्तत्वेन व्यापकविषयताश्रये एव सङ्कोचः ।

तथा च—'लिटि धातोः' इति शास्त्रीयधात्ववयवप्रथमैकाच्त्वावच्छिन्नविषयतानिष्ठव्यापकतानिरूपितव्याप्यतायाः 'अजादेः' इति शास्त्रीयाजादिधात्ववयवद्वितीयैकाच्यावच्छिन्नविषयतानिष्ठायाः 'स्वाश्रयाव्यवहितपूर्ववृत्तित्वसम्बन्धेनैव वक्तव्यतया तेन सम्बन्धेन द्वितीयैकाच्त्वावच्छिन्नविषयताश्रयातिरिक्तो यः प्रथमैकाच्त्वावच्छिन्नस्तस्य द्वित्वमिति लिटि धातोरित्यस्यार्थेन 'आट' 'आटतुः' इत्यादौ द्वित्वं सिद्ध्यति, 'अट्' इत्यस्य स्वाश्रयाव्यवहितपूर्ववृत्तित्वसम्बन्धेन अजादिधात्ववयवद्वितीयैकाच्त्वावच्छिन्नविषयताश्रयातिरिक्तत्वात् । एवञ्च प्रकृते—न यणत्व-यत्वादिरूपव्यापकधर्मावच्छिन्ने रेफत्वरूपव्याप्यधर्मावच्छिन्नातिरिक्तत्वेन सङ्कोचस्तक्रन्यायेन वक्तुं शक्यः, किन्तु 'अचो रहाभ्यां द्वे' इति शास्त्रीययरव्यवहितपूर्वत्वाजव्यवहितोत्तरत्वसमानाधिकरणरेफत्वावच्छिन्नव्याप्यविषयताश्रयातिरिक्तत्वेन 'अनचि च' इति

( पा० सू० ८।४।६२ ) इत्यतोऽन्यतरस्यामित्यनुवृत्तेः । एतच्च लण्सूत्रे भाष्ये स्पष्टम् । *माहात्म्यामिति* । अत्र मलोपो नेत्यर्थः । 'हलो यमां यमि सवर्णे लोपः' इति तु न सूत्रितम्, आर्य्यीत्, मूर्ध्नः, शार्ङ्गम्, आर्त्वीः, इत्यादौ रेफात्परस्य लोपापत्तेः ॥

---

मुकरूपभेदाभावादिति भावः । वकारस्तु नात्र, अन्यूनानतिरिक्तस्थानकादेशलाभेनाधिकस्थानकस्याप्रवृत्तेः । लण्सूत्रस्थभाष्यविरोधेनेदृशानामनभिधानमिति तत्त्वम् ॥

---

तथात्र नास्तीति प्रतिपादने तात्पर्यमिति बोध्यम् । वकारस्य दन्त्योष्ठ्यत्वात्स्थानकृतसादृश्यमादाय तत्प्राप्तिशङ्कां वारयति—वकारस्त्विति । तमप उपादानेनातिशयितमान्तर्यं यत्र तस्य प्रवृत्तिर्भवतीति तात्पर्यम् । एवं 'स्थानेऽन्तरतमः' इति सूत्रभाष्ये 'किमुदाहरणमिको यणचि दध्यत्र, मध्वत्र, यथासङ्ख्येनाप्येतत्सिद्धम्' इति उक्तम् । तेनाप्यत्र वकाराभावो बोध्यः । ईदृशानाम् = लस्थानिकलादेशयुतानामनार्षप्रयो-

---

ग्यशास्त्रीयाजव्यवहितोत्तरत्वसमानाधिकरणयत्वावच्छिन्नव्यापकविषयताश्रये संकोच एव, तथा चाजव्यवहितोत्तरत्वयरव्यवहितपूर्वत्वविशिष्टरेफस्य 'हर्य्यनुभवः' 'कृष्णर्द्धिः' इत्यादौ द्वित्ववारणेऽपि अजव्यवहितोत्तरत्वाभाववतः 'मद्रह्रदः' 'धात्रंशः' इत्यादौ रेफस्य 'अचो रहाभ्यां द्वे' इत्यनेन, 'यणो मयः' इत्यनेन च, यरव्यवहितपूर्वत्वाभाववतः 'अर्हेण' इत्यादौ च रेफस्य 'अनचि च' इत्यनेन द्वित्वापत्तिस्तदवस्थैवेति तक्रन्यायातिरिक्तेन माठरपरिवेषणन्यायेन द्वित्वबाधपरा 'नेमौ रहौ कार्य्यिणौ, किं तर्हि निमित्तं द्विर्वचनस्य' इति भाष्योक्तिः । तत्र हकारोक्ति दृष्टान्तार्था, तस्य द्वित्वाप्राप्तेः । हस्यायत्वाद्यथा द्वित्वं न, तथा निमित्ततया बाधाद् रेफस्यापि द्वित्वं नेति भावः । तथा चानेन न्यायेन 'एककार्यविनियोगोद्देशेन प्रवृत्तवाक्यकदम्बघटकव्यापकधर्मावच्छिन्ने तादृशवाक्यकदम्बघटकव्याप्यधर्मावच्छिन्नातिरिक्तत्वेन सङ्कोचः क्रियते । यथा—ब्राह्मणभोजनरूपैककार्यविनियोगोद्देशेन प्रवृत्तं वाक्यकदम्बकम्—'सर्वे ब्राह्मणा भोज्यन्तां माठरकौण्डिन्यौ परिवेविष्टाम्' इति तत्र माठरत्व कौण्डिन्यत्वरूपव्याप्यधर्मावच्छिन्नातिरिक्तत्वेन ब्राह्मणत्वरूपव्यापकधर्मावच्छिन्ने सङ्कोचस्तथा प्रकृते पाणिनेः 'अतः परं वर्णद्वित्वं वक्ष्यामि' इतीच्छया प्रवृत्तं वाक्यकदम्बकम्, 'अचो रहाभ्यां द्वे' 'अनचि च' इत्यादि तादृशवाक्यघटकव्यापकधर्मावच्छिन्ने यरात्मके, यणात्मके च रेफत्वरूपव्याप्यधर्मावच्छिन्नातिरिक्तत्वेन सङ्कोचात् 'अर्हेण, 'मद्रह्रदः', 'धात्रंशः' इत्यादौ न क्वापि रेफस्य द्वित्वप्राप्तिरिति तत्त्वम् ।

१ 'स्थानेऽन्तरतमः' इत्यत्रः तमब्ग्रहणेन स्थानिनोऽत्यन्तसदृश एवादेशो भवतीति लभ्यते । आदेशेऽत्यन्तसादृश्यञ्च—स्थानिविशिष्टधर्मवत्त्वरूपम् । वै० स्ववृत्तित्व-स्वनिष्ठस्थानितानिरूपितादेशताश्रयवृत्तित्व-स्वनिष्ठस्थानितानिरूपितादेशताश्रयेतरयावदादेशावृत्तित्वैतत्त्रितयसम्बन्धेन, तथा च—'लाकृतिः' इत्यत्र दन्तस्थानमात्रजन्यत्वरूपधर्मे स्ववृत्तित्वस्य, स्वनिष्ठस्थानितानिरूपितादेशताश्रयलकारवृत्तित्वस्य, स्वनिष्ठस्थानितानिरूपितादेशताश्रयलकारेतरयावद्यकाराद्यादेशावृत्तित्वस्य च सत्त्वेन दन्तस्थानमात्रजन्यत्ववान् लकार एवादेशः, न तु वकारः, दन्तोष्ठस्थानजन्यत्वे स्ववृत्तित्वस्य, दन्तस्थानजन्यत्वे स्वस्थानिकादेशेतरयावदादेशावृत्तित्वस्य चासत्त्वेन तद्धर्मवतो वकारस्याप्राप्तेः ।

*वान्तो यि* ( पा० सू० ६।१।६९ ) *यकारादाविति*। विशेषणमात्मान्तस्य सञ्ज्ञा स्यादित्येतदर्थकस्य 'येन विधिः' ( पा० सू० १।१।७२ ) इति सूत्रस्यापवादभूतेन 'यस्मिन्विधिस्तदादावल्ग्रहणे' इति वार्तिकेनायमर्थो लभ्यते। *ओदौतोरिति*। पूर्वसूत्रे तयोरेव वान्तौ भति स्थानित्वेन निर्णीतत्वादित्यर्थः। ननु गव्यूतिरित्यत्र 'हलि सर्वेषाम्' ( पा० सू० ८।३।२२ ) इति, 'लोपः शाकल्यस्य' ( पा० सू० ८।३।१९ )। इति वा लोपः स्यादित्याशङ्क्याह *वान्त इति*। *लव्यमिति*। लुनातेरचो यत्। 'सार्वधातुकार्धधातुकयोः' ( पा० सू०

---

आर्त्नी इति। आङ्पूर्वाहतेर्बाहुलकान्निप्रत्ययः। धनुषः कोटी उच्येते। 'आर्तिः पीडाधनुष्कोट्योः' इत्यमरे नकाररहितः पाठो दृश्यते। अर्तिरिति पाठान्तरम्। वार्तिकेत्यनेन तस्य वाचनिकत्वं सूचितम्।

पूर्वसूत्रे इति। वान्तज्ञानाय तत्पर्यालोचनस्यावश्यकत्वादिति भावः।

---

गाणाम्। तत्र भाष्ये 'न पदान्ताः परेणः सन्ति' इत्युक्तम्। आर्षप्रयोगमादायेको यणचीति सूत्रे यथासङ्ख्यनिर्वाहः॥

आर्त्नी इति। प्रयोगे 'आर्त्नी इमे दीर्घे' इति वैदिकप्रयोगानुकरणम्। तत्र निप्रत्ययो बाहुलकात्तदन्तात्कृदिकारादिति ङीप्, द्विवचनम्, छान्दसत्वात्पूर्वसवर्णदीर्घत्वम्। उच्यते इति। तद्भाष्ये तथा व्याख्यानात्। लौकिकप्रयोगे त्वाह—अतिरिति। वाचनिकत्वम्=वार्तिककृता वचनरूपेण पठितम्। यत्तु 'येन विधिः' इति सूत्रे 'आदिरन्त्येन' इति सूत्रादादिरित्यस्य, इतेत्यस्य चानुवृत्तिः। इत्पदञ्चालि लाक्षणिकं, सप्तम्यन्तत्वेन तस्य विपरिणामः, एवं येनेत्यस्यापि सप्तम्यां विपरिणामः, वाक्यभेदश्चाश्रयणीयः, विधिरित्यस्यावृत्तिश्चेति, यस्मिन्नलि विधिस्तदादिविधिर्बोध्य इत्यस्य लाभ इति, तन्न, भाष्यानुक्तत्वात्। किञ्चक्लेशेन तादृशार्थकल्पनापेक्षया वाचनिकत्वकल्पने लाघवमिति भावः।

इति भाव इति। प्राचीनानुसारिणो मूलकारस्येत्यादिः। 'एतेन पूर्वसूत्रपर्यालोचनस्यावश्यकत्वेऽपि तज्जन्यवाक्यार्थबोधस्य तेनोपप्लुतस्य लक्ष्यसंस्कारकवाक्यान्तरस्य पर्यालोचनन्नावश्यकमित्यादौतोरिति वक्तव्यमिति वार्तिकमूलकाद्व्याख्यानादेतादृशार्थलाभ इति ग्रन्थेनास्य विरोध इति परास्तम्॥

---

१ 'ऋतेः' इति पाठः, 'ऋतेर्धातोर्गत्यर्थस्य' इति निरुक्तात्, क्तिप्रत्यये 'ऋच्छतेः' इत्यस्यापत्तेश्च।

७।३।८४ ) इति गुणः । *अवश्यलाव्यमिति* । 'ओरावश्यके' ( पा० सू० ३।१।१२५ ) इति ण्यत् ॥

*क्षय्यमिति* । 'शकि लिङ् च' ( पा० सू० ३।३।१७२ ) इति चात्कृत्याः । *क्षेयमिति* । 'अर्हे कृत्यतृचश्च' ( पा० सू० ३।३।१६९ ) इति यत् । *हर एहीति* । इह 'ओमाङोश्च' ( पा० सू० ६।१।९५ ) इति पररूपं प्राप्तम् ॥

*उरण्रपरः ( पा० सू० १।१।५७ )॥ आन्तरतम्यादिति* । रेफ-शिरस्कस्यार् इत्यस्य रेफद्वारा ऋकारेण स्थानसाम्यादित्यर्थः । *पक्षे द्वित्वमिति* ऋधेर्धस्येति भावः ॥

---

ऋधेर्धस्येति । न च द्वित्वभिन्ने पूर्वत्र कर्तव्ये परमसिद्धमित्यर्थकेन 'पूर्वत्रा-सिद्धमद्वित्वे' इत्यनेन धातुधकारस्य जश्त्वे दस्येति वक्तुमुचितमिति वाच्यम्, फले विशेषाभावेन तदनादरणात् । न ह्यत्र जश्त्वात्पूर्वम् अन-न्तरं वा द्वित्वे रूपे विशेषोऽस्ति, तदनन्तरं जश्त्वप्रवृत्तेः सत्त्वात् । यत्रा पूर्वत्रासिद्धप्रवृत्तौ, तन्निषेधे वा फले विशेषस्तत्रैवास्याः परिभाषात्वेन प्रवृत्तेरित्यन्यत्र विस्तरः । यद्वा धस्य तत्स्थानिकस्येत्यर्थ इति दिक् ॥

---

अस्याः = पूर्वत्रासिद्धीयमद्वित्व इत्यस्याः । यत्तु "द्वित्वे परसवर्णत्वं सिद्धं वक्त-व्यम्, संय्यन्तेत्यादौ त्रियकारकत्वार्थम्" इति भाष्यवार्तिकप्रामाण्येन वर्णद्वित्वेऽस्याः प्रवृत्तिर्न । अत एव 'णत्वं द्वित्वं चतुर्णाम्' इति परममूलसङ्गतिरिति, तन्न, 'वाक्' 'वाक्क्' इति भाष्यीयप्रयोगासङ्गतेः । अत्र चस्य कुत्वे जश्त्वे द्वित्व चर्त्वयोः प्राप्तौ-चर्त्वस्यासिद्धत्वेन द्वित्वे परस्य गस्य चर्त्वे तस्यासिद्धत्वेन खर्परत्वाभावेन पूर्वगकारस्य चर्त्वाप्राप्तौ गस्यैव श्रवणापत्तेः । नचावसाने चर्त्वस्य जश्त्वमिति, वाच्यम्, अपवाद-प्रवृत्तिबाधकद्वित्वविषयतासत्त्वेन चर्त्वाप्रवृत्तेः । रामावित्यादौ वृध्यपवादपूर्वसवर्ण-दीर्घविषयतायाः सत्त्वेन निषेधात्प्राग्वृद्धेरप्रवृत्तिवत् । 'पूर्वत्रासिद्धीयमद्वित्वे' इति परिभाषाया उपस्थितौ लिङ्गन्तु तदधिकारभवशास्त्रत्वम् । यत्र तदधिकारभवशास्त्रत्व-

---

१ 'सर्वस्य द्वे' ( पा० सू० ८-१-१ ) इति सूत्रे भाष्ये तु—'पूर्वत्रासिद्धीयमद्विर्वचने' इति पाठः । पूर्वत्रासिद्धशब्दोऽधिकारपरः, ततो गहादेराकृतिगणत्वात् भवार्थे छप्रत्ययः । ततश्च पूर्वत्रासिद्धमित्यधि-कारे यच्छास्त्रं तत्र 'अद्वित्वे' इत्युपतिष्ठत इत्यर्थः । 'अद्वित्वे' इति 'पूर्वत्र' इत्यस्य विशेषणम् । तथा च—तत्तत्सूत्रैकवाक्यतया द्वित्वभिन्ने पूर्वत्र कर्तव्ये परमसिद्धमित्यर्थं इति पूर्वत्र कर्तव्ये परस्य द्वित्वस्यासि-द्धत्वं भवत्येव । तेन 'द्युभ्याम्' इत्यत्र परत्वात् दिवो वकारस्य द्वित्वे तत उत्वे पूर्ववकारस्य श्रवणापत्ति-र्न, द्वित्वे कर्तव्ये त्रैपादिकासिद्धत्वं नेत्यर्थे तु वकारश्रवणापत्तिर्दुर्वारैव स्यात् ।

लोपो वेति। 'झयो होऽन्यतरस्याम्' (पा० सू० ८।४।६२) इति सूत्राद्विकल्पानुवृत्तेः। एतच्च 'नाज्झलौ' (पा० सू० १।१।१०) इति सूत्रे भाष्यकैयटयोः स्पष्टम्। प्राचस्तु विकल्पानुवृत्तेरनुक्तेर्न्यूनता। यदपि व्याख्यातृभिः 'शरोऽचि' (पा० सू० ८।४।४९) इति ज्ञापकमुपन्यस्य तत्संवादार्थं भाष्यमुपन्यस्तम्—'अनुवर्त्तते विभाषा शरोऽचि यद्वारयत्ययं द्वित्वम्' इति, तन्न, तदुत्तरभाष्य एव उक्तज्ञापकस्य दूषितत्वात्। लोपस्य हि नित्यत्वे 'अचो रहाभ्याम्' (पा० सू० ८।४।४५) इति द्वित्वं लोपापवादः स्यात्। तथा च 'शरोऽचि' इत्यस्य सार्थक्यं स्पष्टमेव। तस्माद्विकल्पानुवृत्तौ ज्ञापका-

नाज्झलाविति सूत्रे इति। 'हयवरट्' सूत्रशेषे चेत्यपि बोध्यम्। अनुक्तेरिति। 'हलो यमाम्' (पा० सू० ८।४।६४) इत्यत्र 'झरो झरि' (पा० सू० ८।४।६५) इत्यत्र चेति भावः। ज्ञापकमिति। उभयत्रापि विकल्पानुवृत्ताविति भावः। लोपस्य हीति। लोपमात्रस्येत्यर्थः। लोपापवाद इति। आरम्भसामर्थ्यादिति भावः। ज्ञापकान्तरमिति। 'अणुदित्' (पा० सू० १।१।६९) सूत्रस्थमण्ग्रहणं हलः परस्य यरो लोपो वैकल्पिक इति सामान्यापेक्षमा

न्तत्राद्वित्व इत्युपतिष्ठत इति तस्या अर्थः। एवन्तदधिकारीयशास्त्रे ऽद्वित्व इत्यस्योपस्थितौ 'सम्भवति सामानाधिकरण्ये' इति न्यायेन द्वित्वभिन्ने पूर्वत्र कर्तव्ये इदमसिद्धमित्यर्थो भवति। एतेनैनाम्परिभाषामाश्रित्य 'झलाञ्जश' इति जश्त्वस्य प्राक् प्राप्त्या 'द्धिधमिति' परममूलम्, ऋधेर्धस्येति मूलग्रासङ्गतमिति खण्डनकारोक्तिः परास्ता॥

हयवरट्सूत्रस्थभाष्यस्योभयविषयकतया प्रवृत्तेरुभयत्र विकल्पानुवृत्तिः सप्रमाणेति प्रदर्शनायाह–हयवरडिति। मूले–ज्ञापकमभिप्रेत्येति ज्ञापकमुपन्यस्येत्यर्थः। तत्र= ज्ञापकतायाम्, संवादार्थं=संमत्यर्थम्। लोपमात्रस्येति। अत्र मात्रपदं कार्त्स्न्ये। लोपापवाद इतीति। अत्रापवादशब्दो बाधकपरः। अपवाद इवापवाद इत्यर्थः। अपवादो यथोत्सर्गस्य प्राप्तिम्प्रतिबध्नाति तथेदमपि लोपयोः प्राप्तिं वारयेत्, नत्वपवादत्वमेव सम्भवति, यत्रोत्सर्गे प्रवृत्तेऽप्यपवादत्वेनाभिमतस्य प्राप्तिस्तत्रापवादत्वव्यवहारस्य मुख्यत्वात्। द्वित्वस्य लोपमात्रबाधकत्वे साधकमाह–आरम्भेति। अण्ग्रहणमिति। एतद्धि संय्यन्तेत्यादावनुनासिकयकारादेर्वित्वार्थं, यदि लोपो नित्यः

१ लोपस्य नित्यत्वे 'संय्यन्ता' इत्यादौ अनुनासिकयकारादेर्ग्रहणेन ग्रहणाद् द्वित्वार्थं कृतस्य परणकारेण प्रत्याहारस्य वैयर्थ्यापत्तिः, तत्राज्ग्रहणेनैव सिद्धेरिति भावः।

न्तरमनुसर्तव्यम् । भाष्यकारादिव्याख्यानमेव वा शरणम् । *द्वित्वलोपयोरिति* । यत्तु—द्वित्वविधानसामर्थ्याद् द्वावेव शिष्येते इति, तन्न, लोपस्य वैकल्पिकत्वेन द्वित्वस्य पक्षे चरितार्थत्वात् । *त्रिधामिति* । 'यणो मयः' लक्षणान्तरेण पुनर्द्वित्वे तु चतुर्थमपि बोध्यम् ॥

*एत्येधत्यूठ्सु* ( पा० सू० ६।१।८९ ) ॥ अत्र एचीत्यनुवर्तते तच्च एतेरेव विशेषणं नत्वेधतेः, अव्यभिचारात् । नाप्यूठः, असम्भवादिति प्राञ्चः । अत्र कैयटः—'एधतेरपि विशेषणम्, मा भवान्प्रेदिधदित्यत्र व्यभिचारात्' । यद्यपीदं कैयटपुस्तकेषु प्रायेण न दृश्यते, तथाऽपि क्वचिद् दृश्यत एव । न च 'णौ चङि' ( पा०सू० ७।४।१

---

श्रयणीयमिति भावः । तस्य 'हलो यमाम्' ( पा० सू० ८।४।६४ ) इति विशेषापेक्षत्वे आह—व्याख्यानमेव वेति । यदि तु 'हलो यमाम्—'इत्यत्र विकल्पं सिद्धं कृत्वा द्वित्वस्य तद्विषये चारितार्थ्येन 'झरो झरि' इत्यत्र तदनुवृत्तौ 'शरोऽचि' ( पा० सू० ८।४।४९ ) इति ज्ञापकमुपन्यस्यते तदा सम्यगेव, परन्तु प्राचां भाष्यसम्मतिलेखः प्रामादिकः, तद्भाष्यस्योभयविषयतया प्रवृत्तेः ।

असम्भवादिति । न च आ अवतीति और्जनस्य और्जनोरित्यादावर्वेः क्वावूठ्याद्गुणे परादिवत्त्वेनोठ्त्वात्सम्भवोऽस्ति । न च 'वृद्धिरेचि' ( पा०

---

स्यात्तदा कृतेऽपि द्वित्वे तस्य लोपेन निवृत्तौ यकारादिद्वयस्यैव श्रवणमिति तत्राज्ग्रहणेन सिद्धावक्लृप्तस्य परणकारसाध्यप्रत्याहारान्तराश्रयणस्य व्यर्थत्वमिति भावः । तस्य=उक्तसूत्रस्थाणग्रहणस्य । सिद्धमिति । अण्ग्रहणादित्यादिः । तद्विषये='हलो यमाम्' इति लोपविषये 'हर्यनुभवः' इत्यादौ । 'शरोऽचि' इति ज्ञापकमिति । एतद्धि चतुर्ण्वित्यादौ द्वित्वस्य निषेधाय । यदि तु 'झरो झरि' इति लोपो नित्यस्तदा जातेऽपि तस्य द्वित्वे लोपेन निवृत्ताविष्टस्य सिध्या निषेधो व्यर्थः स्यादिति भावः । प्राचाम्=प्रकाशकृताम् । तद्भाष्यस्य='अनुवर्तत' इति भाष्यस्य । उभयविषयकतयेति । तेन ज्ञापकेन झरो झरीत्यत्रानुवृत्तौ मध्यस्थत्वेन 'हलो यमाम्' इत्यत्रापि तत्सम्बन्ध इत्युभयविषयकता तस्येति भावः ॥

रत्नाकरोक्तिं खण्डयितुं तन्मतमनुवदन्नाह—नचेति । औरिति । 'गोतो णित्' इति सिद्धस्य रूपस्यायं लेखः । प्रातिपदिकस्वरूपन्तु ओ इति । गुणे इति । तदा

इति ह्रस्वे कृते नाथमेधतिरिति वाच्यम्, एकदेशविकृतस्यानन्यत्वात्। न चैवमपि 'अजादेर्द्वितीयस्य' (पा० सू० ६।१।२।) इति धिशब्द-

सू० ६।१।८८) इति सिद्धिः, 'ओमाङोश्च' (पा० सू० ६।१।९५)। इत्यनेन बाधाद्, अनेन तु सामर्थ्यात्तद् बाध्यत इति वाच्यम्, तस्यानभिधानादित्याशयात्। किञ्च 'ओमाङोः' (पा० सू० ६।१।९५) इत्येतद्बाधककल्पनापेक्षया सामर्थ्येन, लक्ष्यानुरोधेन च 'एचि' इत्यस्यासम्बन्धकल्पनैवोचिता। ह्रस्वे कृते इति। वृद्धेः पूर्वमित्यादिः। वार्णपरिभाषयेति भावः। अनन्यत्वादिति। न च 'अचः परस्मिन्' (पा० सू० १।१।५७) इति स्थानिवत्त्वेनैजादित्वं सुलभम्, पूर्वपरविधित्वात्। पूर्वस्यैव विधौ हि सः।

---

एच्परत्वाभावेन वृद्धेरप्राप्तेः। तद्बाध्यते = ओमाङोश्चेति पररूपम्बाध्यत इति भावः। अनभिधानादिति। 'सिचि वृद्धिः' इतिसूत्रस्थकैयटोक्तिरत्र मानम्। अनभिधाने भाष्यसम्मत्यभावादाह--किञ्चेति। सामर्थ्येन--एचीत्यस्य ऊडंशेऽपि सम्बन्धेनैजादावूठि वृद्धिरिति वाक्यार्थसामर्थ्येन। लक्ष्यानुरोधेनेति। ऊडंशेऽप्येचीतस्य सम्बन्धेनैजादावेवोठि वृद्धिस्वीकारे येन नाप्राप्तन्यायेन ओमाङोश्चेत्येतद्बाधेनात्रैव स्यान्न तु 'विश्वौहः' इत्यादाविति तादृशलक्ष्यसिध्यनुरोधेनेत्यर्थः। असम्बन्धेति। ऊडंशइत्यादि। वार्णेति। वाक्यसंस्कारपक्षे इदम्। मूले-एकदेशविकृतस्येति। एकदेशेन विकृतस्येत्यर्थः। अनन्यत्वादिति स्थानिवद्भावेनेत्यादिः। मत्वत्रैकदेशविकृतमनन्यवदिति परिभाषायाः सञ्चारः, अर्द्धाधिकविकारसत्त्वात्, एजादित्वन्तु न, स्थानि-

---

१ इदमुपलक्षणम् 'इद्धिधदित्यस्यापि कैयटमते-'एचि' इत्यनुवर्तते, तच्चैधतेरपि विशेषणमिति 'प्रेदिधत्' इत्यत्र न वृद्धिः, रत्नकारमते 'उपेतः' इत्यादौ वृद्धिवारणाय कृतस्य 'इणीकारादौ प्रतिषेधः' इति वार्तिकस्य भाष्यकृता 'एचि' इत्यनुवर्त्य प्रत्याख्याततत्वेन वार्तिकसत्त्वे 'प्रेदिधत्' इत्यत्र वृद्धेः प्राप्त्या, भाष्यमते 'एचि' इत्यस्य सम्बन्धे च तदप्राप्त्या फलभेदवारणाय 'प्रेदिधत्' इत्यस्यानभिधानमित्याह--अनभिधानादिति। गुरवस्तु इणीकारादौ इति वार्तिके इणश्विस्यैधतेरप्युपलक्षणत्वेन फलभेदवारणसम्भवात्, 'प्रष्ठौहः' इत्यादौ वृद्धिसिद्धये योगविभागेन एत्येधत्योरेवैचीत्यस्य सम्बन्धबोधकभाष्याच्च 'प्रेदिधत्' इत्यादेरनभिधाने न मानमित्याहुः।

२ अत्र प्रमाणश्च--प्रकृतसूत्रस्थं भाष्यमेव तथाहि-किं पुनरनन्तरस्य विधिं प्रति स्थानिवद्भाव आहोस्वित्पूर्वमात्रस्य' इत्युपक्रम्य 'श्लेष्मा ३ घ्नः' इत्यादौ कार्यार्थत्वात्संज्ञाया व्यवहितस्यात्र प्लुतविधौ स्थानिवत्त्वे प्लुतो न प्राप्नोत्युक्त्वाऽनन्तरस्य विधित्वेऽपि संयोगसंज्ञा न प्राप्नोतीत्याशङ्क्य 'न पूर्वविधिः संयोगः, किं तर्हि पूर्वपरविधिः संयोगः' इत्युक्तम्। पूर्वपरोभयविधेरपि पूर्वविधिशब्देन ग्रहणे तु भाष्यमसङ्गतमेव स्यात्। भाष्याभिमतस्तत्र प्लुतश्च न सिद्ध्येत्। यद्वा पर्याप्तिमानस्यौत्सर्गिकत्वेन पूर्वपर्याप्तोद्देश्यताकविधावित्यर्थलाभाज्ज्ञापकस्य नोपयोगः।

'ऋच्छत्यृताम्' इत्यत्र 'ॠ' ग्रहणन्तु क्वसुप्रत्यये 'आरिवान्' इत्यस्य सिद्धये, इति न तस्य ज्ञापकत्वमित्युपाध्यायाः।

स्थाने धिधिशब्दादेशे सति वस्त्रसोरिव प्रकृतिप्रत्ययविभागसंमोह इति वाच्यम्, द्विः प्रयोगो द्विर्वचनं षाष्ठमिति षाष्ठभाष्ये सिद्धान्तितत्वात्। अन्यथेहैव णिलोपो न स्यात्। जिघांसतीत्यादौ सनः सकारेण विशिष्टस्य द्वित्वे कृते कुत्वं च न स्यात्। न चान्तरङ्गत्वात्

मध्येऽपवादन्यायेनाङ्गुणं बाधित्वा इहैव स्यात्। उपैधत इत्यादौ तु परत्वात्पररूपमेव स्यादिति भावः। संमोह इति। एधतेरादेशाभावेन न स्थानिवत्त्वेन तत्त्वम्। न स्यादिति। न च 'णेरनिटि' (पा० सू० ६।४।५१) इत्यस्य ण्यन्तस्याङ्गस्य लोप इत्यर्थः, स चालोन्त्यपरिभाषयाऽन्त्यस्य, एवञ्च प्रकृते न दोषः। 'सर्वे सर्वपदादेशाः' इति न्यायेनेधीत्यस्येधिधि इत्यादेशसत्त्वेन स्थानिनो ण्यन्ततया आदेशेऽपि स्थानिवद्भावेन ण्यन्तत्वस्य सुलभत्वादिति वाच्यम्, अलोऽन्त्यपरिभाषया, निर्दिश्यमानापरिभाषया च 'णेरनिटि' (पा० सू० ६।४।५१) इत्यस्य ण्यन्तस्याङ्गस्यान्त्यो यो निर्दिश्यमानो णिस्तस्य लोप इत्यर्थेन दोषात्। अन्ते णेरसत्त्वात्। सूत्रन्तु आद्यादित्यादौ चरितार्थमिति भावः। कुत्वं च न स्यादिति। हन्त्यवयवहकाराभावात्। सन्सम्बन्धिसकारवैशिष्ट्याभावे तु स्थानिवत्त्वेन कुत्वं स्यादपीति भावः। अन्तरङ्गत्वादिति। चङ्परणिनिमित्तह्रस्वापेक्षया चङ्-

वद्भावेन अल्विधित्वादिति भावः। एचीत्यस्यैधत्यंशे सम्बन्धेऽपि स्थानिवद्भावेन 'माभवान्प्रेदिधत्' इत्यत्र वृद्धिवारणासम्भव इत्याशङ्कां वारयति-नचेत्यादिना। पररूपमेवेति। तथा चेष्टानिष्टव्यवस्थाया असिद्धिरिति भावः। ननु दृष्टान्ते प्रकृतिप्रत्ययसमुदायस्यादेशो दार्ष्टान्तिके तु न तथेति वैषम्यम्। किञ्च स्थानिवद्भावेनैधतित्वमपि वक्तुं शक्यमत आह-एधतेरिति। तत्त्वम् = एधतित्वम्। दृष्टान्ते प्रकृतिप्रत्ययसमुदायस्यादेश इह तु प्रकृत्यवयवधकारप्रत्ययघटितसमुदायस्यादेश इति वैषम्यं यद्यप्यस्ति तथापि सम्मोहे दृष्टान्तोऽयम्। सर्वे सर्वपदादेशा इतीति। एधीत्यस्य समुदायस्यार्थवत्त्वे नास्ति सर्व इति न्यायसञ्चारः, श्रौतस्तु, धीत्यस्यैव, अजादेर्द्वितीयस्येत्युक्तेः। परिभाषया चेति। द्वयोः परिभाषयोर्बाध्यबाधकभावाभावादेकवाक्यतयैवार्थं व्याख्यातम्। 'पादस्य लोप' इत्यादौ यथा। दोषादिति। णिलोपस्य प्राप्त्यभावरूपदोषात्। असत्वादिति। सम्मोहेन णिबुद्धेरसत्त्वादित्यर्थः। सूत्रन्तु आद्यादिति। अत्र णिति प्रत्यये परतो वृद्धेर्विधानेन णिबुद्धेरविघाताद्भवति णिबुद्धिरिति भावः। मूले-सनः सकारेणेति। 'सन्यङोः' इत्यस्य षष्ठ्यन्ततया सकारविशिष्टस्य 'नटसायांवद्वयअनानि भवन्ति' इति न्यायेनैकाच्पदेन ग्रहणादिति भावः। स्यादपीति।

प्रथमं 'चङि' ( पा० सू० ६।१।११ ) इति द्वित्वे कृते ह्रस्वो न भवत्येवेति वाच्यम्, ओणेर्ऋदित्करणेन बहिरङ्गस्यापि 'णौ चङि' ( पा० सू० ७।४।१ ) इति ह्रस्वस्य प्रथमं प्रवृत्तिरिति ज्ञापितत्वात् । अत्र माधवः—'मा भवान् प्रेदिधत्' इत्यत्र नातिप्रसङ्गः, ण्यन्तस्य शब्दान्तरत्वादेधतिग्रहणेनाग्रहणात् । अत एव हि 'न भाभूपूकमिगमि' ( पा० सू० ८।४।३४ ) इत्यत्र 'ण्यन्तानां च भादीनामुपसंख्यानम्' इत्युक्तम् । तत्रैव शब्दान्तरत्वादप्राप्तावुपसंख्यानमिति कैयट-न्यासकार-हरदत्तादिभिः सर्वैरेवोक्तम् । किञ्च—ण्यधिकस्यापि ग्रहणे 'उपसर्गात्सुनोति' ( पा० सू० ८।३।६५ ) इत्यत्राभिषावयतीत्युदाहृत्य ण्यन्तेनाभेर्योगात्सुनोतिम्प्रत्यनुपसर्गत्वात्कथं षत्वमित्याशङ्क्याभेः प्रकृत्यर्थविशेषकत्वेन समाधानं भाष्यकाराद्युक्तमसङ्गतं स्यात् । न च 'हेरचङि' ( पा० सू० ७।३।५६ ) इति लिङ्गात् 'प्रकृतिग्रहणे ण्यधिकस्यापि ग्रहणम्' इति भ्रमितव्यम्, ज्ञापकस्य कुत्वमात्रविषयकत्वात् । तथा च वार्तिकम्—'हेश्चङि प्रतिषेधानर्थक्यमङ्गान्यत्वात्' ज्ञापकन्तु चङोऽन्यत्र ण्यन्तेऽपि कुत्वभावस्य' इति । तस्माद्युक्तिविरोधाद्भाष्य-वार्तिक-वृत्ति-न्यासादिग्रन्थैः, पूर्वापरस्वग्रन्थेन च विरोधादुपेक्ष्योऽयं कैयट इति । अत्रेदं वक्तव्यम्—अस्तु विशिष्टस्य शब्दान्तरत्वं तावताऽपि प्रकृतिभागस्यैधरूपत्वं केनापगतमित्यवधार्यताम् । नह्युपैधत इत्यादौ तिङन्तस्यैधरूपता नास्तीति प्रकृत्यंशे सा हीयते । तथाच—'उपसर्गात्सुनोति' इति सूत्रे

---

मात्रनिमित्तत्वेनाल्पपदार्थापेक्षत्वादित्यर्थः । भाष्ये तु नित्यत्वमात्रमेव द्वित्वस्योक्तम् । ज्ञापितत्वादिति । इदं च 'णौ चङि—' ( पा० सू० ७।४।१ ) इति सूत्रे भाष्ये स्पष्टम् । असङ्गतं स्यादिति । सुनोतिग्रहणेन सावयतेरपि

---

अपिर्मूलोक्ताभावस्य समुच्चायकः । तथा च मूलोक्तमुख्यन्दूषणमिति ध्वनितम् । शङ्काभिप्रेतमन्तरङ्गत्वमुपपादयति—चङ्परेति । भाष्यं त्विति । एतेन नित्यत्वेनैव निर्वाहेऽन्तरङ्गत्वपर्यन्तानुसरणं व्यर्थमिति भावः ।

मूलोक्तस्वोक्तयोः सप्रमाणत्वसूचनायाह—इदमिति । इदम्=बहिरङ्गस्यापि

वार्त्तिकम्—'सिद्धं त्ववयवानन्यत्वात्' इति । यत्त्वभिषावयतीत्यत्रत्यभाष्यविरोधोद्भावनं तद्विपरीतम्, यतः प्रकृतेः सुनोतिरूपानपायात्, कैयटमते सिद्धा यथोक्तव्यवस्था । त्वन्मते तु रूपान्तरत्वेन ण्यधिकस्याग्रहणादसङ्गतैव प्रागुक्तव्यवस्था स्यात् । को ह्येधयति-सावयत्योर्विशेषः, यदेधतेर्ण्यधिकस्याग्रहणं सुनोतेस्तु ग्रहणमिति । यदपि ण्यन्तभादीनामुपसंख्यानमुपन्यस्तं तदपि नास्माकं प्रतिकूलम्, विशिष्टस्य शब्दान्तरत्वेन प्रकृत्यंशस्य तु णिचा व्यवधानेनोपसंख्यानस्यावश्यकत्वात् । अत एव न तत्रत्यन्यासादिभिः, स्वोक्त्या वा विरोधः । प्रत्युत तवैव विरोधः, षाष्ठे भाष्यवार्तिकयोः 'एत्येधत्योः' (पा० सू० ६।१।८९) इति योगं विभज्य 'एचि' इति विशेषितत्वात् । तस्मादिह वृत्तिग्रन्थो माधवग्रन्थश्चासङ्गत एवेत्यभिप्रेत्य व्याचष्टे—*अजाद्योरिति* ॥

---

ग्रहणेन शङ्काया एवाभावादिति भावः । अवयवानन्यत्वादिति । ण्यन्तावयवस्य सुनोतेः सुनोतिभिन्नत्वाभावादिति तदर्थः । सुनोतिरूपानपायादिति । सुनोतित्वानपायादित्यर्थः । असङ्गतैवेति । ण्यन्तेनाभेर्योगादिति शङ्का, प्रकृत्यर्थविशेषकत्वेन समाधानरूपा च व्यवस्थाऽसङ्गतैव स्यात्, त्वदुक्तरीत्या ण्यधिके षत्वाप्राप्तेरित्यर्थः । तदेवाह—को हीति ॥

---

पूर्वम्प्रवृत्तिरित्येतत् । शङ्काया एवेति । शङ्काया अभावे समाधानमप्यसङ्गतमित्येवकारेण ध्वनितम् । 'सुनोतिरूपेत्यत्र रूपशब्दोऽर्थपरः इति स्वं रूपमित्यत्र यद्यपि प्रतिपादितं तथापि षष्ठ्यर्थान्वयायाह—सुनोतित्वेति । त्वदुक्तरीत्या = ण्यन्तस्य शब्दान्तरत्वमित्युक्तरीत्या । मूले—असङ्गत एवेति । अत्र एवकारेण प्रकृतिभागस्य शब्दान्तरत्वे 'उपैधयते' 'प्रैदिधिषते' इत्यादौ वृद्ध्यभावः स्यादिति ध्वनितम् । वस्तुतस्तु 'इणीकारादौ प्रतिषेधः' इति वार्तिकविरोधात्प्रैदिधदित्यस्यानभिधानमावश्यकमिति तदुपादानेन सर्वोऽपि विचारोऽत्र निष्फल एव । एत्येधत्योरवयवे ऽचीति भाष्यकारीयव्याख्यानन्नूपरञ्जकतया एधत्यंशेऽप्येचीत्यस्य सम्बन्ध इत्यभिप्रायेणेत्याहुः । अपरे तु वार्तिकस्थमिण्ग्रहणमुपलक्षणम् । अत एव भाष्यकृता ऽत्रैत्येधत्योरिति योगं विभज्य तयोरेवैचीति विशेषणं कृतमिति वदन्ति ॥

*अक्षौहिणीति* । ऊहोऽस्त्यस्या ऊहिनी, अक्षाणामूहनीति विग्रहः । परिमाणविशेषविशिष्टा सेना अक्षौहिणी । 'पूर्वपदात्सञ्ज्ञायाम्' ( पा० सू० ८।४।३ ) इति णत्वम् । यत्तु—प्राचा विगृहीतमक्षाणामूहः समूहः सोऽस्त्यस्या इति, तदपि ऊहिनीशब्देन षष्ठीतत्पुरुष इत्येवं परतयैव कथंचिन्नेयम् , ऊहशब्देन समासे तत इनौ तु वृद्धिर्न स्यात्, अन्तरङ्गेण गुणेन बाधात्, अपवादभूताया अपि वृद्धेरूहिनीशब्देन विग्रहे चरितार्थत्वात् । तथा चोक्तं प्राक् 'इण्-ङि-शीनामाद्गुणः सवर्णदीर्घत्वात्' इति ॥

---

विग्रह इति । समस्यमानपदस्वरूपबोधक इत्यर्थः । तत इनाविति । 'अत इनिठनौ' ( पा०सू ५।२।११५ ) इति विहित इत्यर्थः । अन्तरङ्गेणेति । प्रथमप्रवृत्तिकेनेत्यर्थः । समर्थग्रहणेन कृतसन्धिकार्यादेव तद्धितोत्पत्त्या तद्विषये ऽकृतव्यूहपरिभाषाया अप्रवृत्तेः, तस्या असत्त्वाच्चेति भावः । चरितार्थत्वादिति । तद्घटकोहिनीशब्दस्य कल्पितार्थेनाप्यर्थवत्त्वाभावेन तत्रैतत्सूत्राप्रवृत्तेश्चेत्यपि बोध्यम् ॥

---

ननु 'अन्तरङ्गानपि विधीन्बहिरङ्गो लुग्बाधते' इति न्यायविरोधादिति विग्रह इत्यसङ्गतमत आह—समस्यमानेति । 'वाप्यामश्वो वाप्यश्वः' इत्यादौ यथा । स्पष्टार्थमाह—तत इनीति । नन्वसिद्धपरिभाषया जातस्य तत्कालप्रासिकस्य चासिद्धत्वप्रतिपादनेनान्तरङ्गेणेत्ययुक्तमत आह—प्रथमेति । समासे संहितया नित्यत्वेन इन्प्रत्ययोत्पत्तिपर्यन्तविलम्बासम्भवादिति भावः । नन्वकृतव्यूहपरिभाषया प्रथमतो गुणो न भविष्यतीत्यत आह—समर्थग्रहणेनेति । इदमकृतव्यूहपरिभाषायाः सत्त्ववादिमतेन । वस्तुतः सा नास्तीत्याशयेनाह—तस्या इति । तद्घटकेति । प्राचोपपादितो यः समुदायस्तद्घटकेत्यर्थः । कल्पितार्थेनापीति । समासे समुदायस्यैवार्थवत्त्वम्, अवयवस्य कल्पितं तत्त्वं, तच्चात्र नास्तीत्यर्थः, इन्प्रत्ययस्य समासादुत्पत्तेरिति भावः । एतत्सूत्रेति । नचाक्षादूहिन्यामिति वार्तिकं न तु सूत्रमित्येतत्सूत्रमित्यसङ्गतमिति वाच्यम्, तद्धितप्रकरणारम्भे शब्दरत्ने एवोपपादयिष्यमाणत्वात् ॥

---

१ नन्वस्य वार्तिकत्वात् 'सूत्र' इत्युक्तिरसङ्गतेति चेन्न, 'क्रतुक्थादि' ( पा० सू० ४-२-६० ) इति सूत्रे 'वार्तिकसूत्रिकः' इति भाष्योदाहरणात, 'सूत्राच्च कोपधात्' ( पा० सू० ४-२-६५ ) इति सूत्रभाष्ये—'सङ्ख्याप्रकृतेः सूत्रवाचकादिति वाच्यम्' यथा—'अष्टकः'इति, नेह 'माहावार्तिकः' इत्युक्तेः, वार्तिकस्य सूत्रत्वाभावे कर्णधारन्यात् 'वार्तिकसूत्रिकः' इत्युदाहरणस्य 'माहावार्तिकः' इति प्रत्युदाहरणस्य चासङ्गत्यापत्तेश्च । 'स्वरितो वाऽनुदात्ते' ( पा० सू० ८-२-६ ) इति सूत्रभाष्ये च वार्तिकानुपक्रम

'स्वादीरेरिणोः'। इरेरिण्योरिति क्वचित्कोऽपपाठः, स्वैरीति णिन्यन्तस्यास्त्रियां वृद्ध्यभावप्रसङ्गात्। स्वैरिणीत्यत्र तु ङीपः प्राग्भागमादाय वृद्धिर्बोध्या। यत्तु व्याचख्युः—लिङ्गविशिष्टपरिभाषयेति तन्निष्फलम्।

'प्रादूहोढोढ्येषैष्येषु'। अत्रोहशब्दः कैश्चित्प्रक्षिप्तो भाष्यादौ तु न दृश्यत इति प्राञ्चः। इदानीन्तनपुस्तकेषु तु भाष्यवार्तिकयोरूहशब्दो दृश्यत एव। *नानर्थकस्येति*। उपस्थितस्यार्थस्य शब्दं प्रति विशेषणत्वसम्भवे त्यागायोगादिति भावः। सीरदेवस्त्वाह—'व्रश्च' (पा० सू० ८।२।३६) इति सूत्रे राजेः पृथग् भ्राजिग्रहणमिह ज्ञापकमिति। नन्वेतदयुक्तम्, फणादिना राजिना साहचर्यात् तथाभूतस्यैव षत्वार्थतया भ्राजिग्रहणस्योपक्षीणत्वादिति चेत्, विभ्राट् विभ्रागिति रूपद्वयं हि साध्यं तच्च व्रश्चादिसूत्रे 'राजृ' इति पठित्वाऽपि सुसाधम्, एकस्य भ्राजतेर्ऋकारस्य प्रागपि दातुं शक्यत्वात्

ज्ञापकमिति। भ्राजौ राजेऽपि सत्त्वेन राजिग्रहणेनैव सिद्धेस्तद् व्यर्थं सज्ज्ञापकमिति भावः। तथाभूतस्यैवेति। फणादेरेवेत्यर्थः। राजृ इति पठित्वेति। न चैवमनुबन्धनिर्देशाद्राराष्टीत्यादौ यङ्लुकि षत्वं न स्यादिति वाच्यम्, यङ्लुकश्छान्दसत्वात्, 'श्तिपा शपा' इत्यस्यानित्यत्वाच्च, भाष्ये तस्या-

भ्राजौ राजेरपीति। अत्रापिशब्दो भ्राजावित्यस्यानन्तरं द्रष्टव्यः। परोक्तदूषणमुद्धर्तुमाह—नचैवमिति। छान्दसत्त्वादिति। एतेन 'श्तिपा शपा' इति परिभाषासत्त्वे छन्दसि सर्वविधीनां वैकल्पिकत्वेन तदप्रवृत्तिरिति ध्वनितम्। अनित्यत्वात्=‘गुणो यङ्लुकोः' इति सूत्रेण यङ्लुकि गुणविधानेनानित्यत्वात्। सिद्धान्तरीत्याह-भाष्येति। एतेन=तस्या असत्त्वेन। यङ्लुकि=राराष्टीत्यादौ। निर्देशाभावादिति। यत्र गणबोधकशब्दस्य साक्षादुच्चारणं तत्रैव गणेन निर्दिष्टमिति व्यवहारादित्याशयः। अत्र हि—फणादित्वङ्ग्राह्यताऽवच्छेदकन्तु ग्राहकताऽवच्छेदकम्।

'नचेदानीमाचार्याः सूत्राणि कृत्वा निवर्तयन्ति' इत्यभिधानाच्च वार्तिकेऽपि सूत्रत्वस्येष्टत्वात्। यद्यपि—

'अल्पाक्षरमसन्दिग्धं सारवद्विश्वतो मुखम्।
अस्तोभमनवद्यञ्च सूत्रं सूत्रविदो विदुः।'

इति सूत्रलक्षणानाक्रान्तत्वं वार्तिकानाम्, तथापि भाष्ये तादृशव्यवहारदर्शनेन सूत्रत्वव्यवहारोऽप्यपास्तपेः।

ऋभाज इति, 'भ्राजभास' (पा० सू० ७।४।३) इति विकल्पस्य वाचनिकतया ऋकारस्य आत्मनेपदमात्रफलकतया वक्ष्यमाणत्वेन तत्स्थाने ऽकारस्य सुपठत्वाच्च । तस्मात् सीरदेवोक्तं ज्ञापकमपि सम्यगेव । प्रैष्य इति । एषसाहचर्यादेष्योऽपि अनन्ययं गृह्यते । तेन ण्यन्तादिषेः क्तो ल्यपि पररूपमेव, न तु वृद्धिः । प्रेष्य गतः ॥

प्रवत्सतरेति । अत्र कालापानुसारिणो वत्सरशब्दमपि पठित्वा वत्सरे देयमृणं वत्सरार्णमित्युदाहरन्ति । अपरे तु वत्सशब्दमपि पठन्ति, तत्सर्वं भाष्यादिविरुद्धम् ॥

---

नुक्तत्वाच्च । एतेन फणादित्वेन ग्रहणे गणेन ग्रहणाद्यङ्लुकि न स्यादित्यपास्तम्, गणेन निर्देशाभावाच्च । राट् विभ्राट्, इत्यादौ राजृत्वन्तु भूतपूर्वगत्या, राशब्दपूर्वकजृधातोः क्विपि निष्पन्नराजृशब्दे नपुंसके न षत्वम्, सूत्रे राजृ इत्यनुनासिकस्य पाठात् । सुपठत्वाच्चेति । एवञ्च 'भ्राजभास' इति सूत्रे भ्राजिग्रहणं न कार्यमिति बोध्यम् । सीरदेवोक्तमिति । अत्रारुचिबीजन्तु व्रश्चादिसाहचर्येण धातुसञ्ज्ञकराजेर्ग्रहणं स्यादिति भ्राजि ग्रहणस्यावश्यकत्वम् । किञ्च भ्राजन्तर्गतराजेर्न ऋकारानुबन्धत्वं, समुदायानुबन्धत्वादिति । भाष्यादिविरुद्धमिति । तदनुक्तत्वादिति भावः ।

---

तच्च राजत्वमेव । भूतपूर्वगत्येति । अनुबन्धसहितस्य निर्देशे सर्वत्र भूतपूर्वस्य गतिरेव सुप्रसिद्धेति भावः । साम्प्रतिकस्य सत्त्वे भूतपूर्वगत्याश्रयणमशक्यमित्याशयेन ञ्चङ्कामन्यकृतां वारयति—राशब्दपूर्वकेति । रातीति राः तज्जृणातीत्यर्थः । क्विपीति । अत्र क्विप्शब्दः क्विबिवाचरतीत्यर्थपरत्वेन विच्परः, तेनेत्त्वतुकौ न । तुकि बहिरङ्गस्य ह्रस्वत्वस्यासिद्धत्वमपि बोध्यम् । पाठादिति । लाक्षणिकत्वाच्चेत्यपि बोध्यम् । आवश्यकश्चानुनासिकपाठः । अन्यथा राजृ इतिस्वरूपानुपलम्भात् । अत्र = सीरदेवोक्तमिति विशेषोपादानस्थले । आवश्यकमिति । भ्राजन्तर्गतराजेरधातुत्वात्तस्य ग्रहणासम्भवादिति भावः । न ऋकारानुबन्धत्वमिति । तेन राजृग्रहणेन तद्ग्रहणासम्भव

---

१ नन्वत्र सूत्रे भ्राजिग्रहणेन 'विभ्राट्' 'विभ्राक्' इति रूपद्वयं साध्यं तस्य च समानार्थकभ्राजृ–भ्राश्टधातुभ्यां सिद्धेर्भ्राजिग्रहणं व्यर्थमिति चेन्न, विभ्राट् शब्दादाचक्षाणण्यन्तात्कर्तरि क्विपि सौ एकदेशविकृतन्यायेन, स्थानिवत्त्वेन वा भ्राजधातुत्वारोपात् 'विप्ट्' इत्यस्य सिद्धये तत्सत्त्वात् । अत्र भ्राजिग्रहणादेव धातुपाठे 'फणादिव्यतिरिक्तस्य' 'भ्राज' इत्यस्य प्रक्षिप्तः पाठ इति अनुमीयते, तेन 'विभ्राड्' इत्येकमेव रूपमिति भावः ।

२ यदुपदेशप्रयोज्या यस्येत्संज्ञा तदनुबन्धकत्वमेव तस्येति भावः ।

*अन्तादिवच्च* ( पा सू० ६।१।८ )। इहैकः पूर्वपरयोरित्यनुवर्तते, यथासङ्ख्यञ्चेत्यभिप्रेत्याह–*पूर्वस्यान्तवदिति*। स्थानिवत्सूत्रेणैव गतार्थमिदं सूत्रम्। न चाल्विध्यर्थमिदमिति भ्रमितव्यम्, अस्या-

१ 'अन्तादिवत्' इत्यत्र 'तृतीयान्ताद् वतिः, अन्तादिभ्यामवयव्याकाङ्क्षायाञ्च "पूर्वपरयोरिति वर्तते पूर्वस्य कार्यम्प्रति अन्तवद् भवति, परस्य कार्ये प्रत्यादिवद् भवति" इति भाष्यात्, प्रत्यासत्तेश्च 'पूर्वपरयोः' इति यथासङ्ख्यं सम्बद्धयते। तत्र लक्षणया पूर्वपदं पूर्वस्थानिनिष्ठचरमावयवतानिरूपकसमुदायपरम्, परपदम्—परस्थानिनिष्ठाद्यवयवतानिरूपकसमुदायपरम्। अत्र "अन्तादिवच्च" इत्यस्य स्थाने 'तद्वच्च' इति न्यासेनैव सिद्धे सामर्थ्यादन्तादिग्रहणमेव तादृशार्थे लक्षणायां तात्पर्यग्राहकम्। यद्वा अन्तादिपदमेव सामर्थ्यात् पूर्वस्थानिनिष्ठचरमावयवतानिरूपकसमुदाये, परस्थानिनिष्ठाद्यवयवतानिरूपकसमुदाये च क्रमेण लाक्षणिकम्। तथा च–एकादेशनिष्ठचरमावयवतानिरूपकसमुदायः अन्तवत्=पूर्वस्थानिनिष्ठचरमावयवतानिरूपकसमुदायार्थवत्पर्य्याप्तधर्मवान् इव, एकादेशनिष्ठाद्यवयवतानिरूपकसमुदायश्च आदिवत्=परस्थानिनिष्ठाद्यवयवतानिरूपकसमुदायार्थवत्पर्य्याप्तधर्मवान् इव, भवति इत्यर्थः पर्य्यवस्यति। तथाचानेनासंहिताऽवस्थायाम् अन्तादिभ्यां वर्णाभ्यां पृथगवस्थिताभ्याम-न्तघटितसमुदायस्य, आदिघटितसमुदायस्य च ये व्यवहाराः प्रातिपदिकत्व–सुबन्तत्वादयस्ते एकादेशविशिष्टस्याप्यतिदिश्यन्त इति लब्धम्। वै०–स्वनिष्ठान्तावयवतानिरूपकत्वस्वनिष्ठाद्यवयवतानिरूपकत्वोतदन्यतरसम्बन्धेन। एवञ्च–वर्णमात्रवृत्तिधर्माणामत्वादीनां, तद्घटितानामदन्तत्वादीनाञ्चातिदेशे नास्य सामर्थ्यम्। अत एव 'अयजे इन्द्रम्' 'खट्वाभिः' इत्यादावकृत्वादन्तादिप्रयुक्तसवर्णदीर्घैसादयो न। उक्तरीत्या अनेन वर्णमात्रवृत्तिधर्माणां तद्घटितानाञ्चातिदेशो न प्राप्नोतीत्यभिप्रायेणैव वार्तिककृदुक्तवचनस्य"वर्णाश्रये विधावन्तादिवद्भावप्रतिषेधः" इति वार्तिकस्य "न वाऽताद्रूप्यातिदेशात्" इति वाक्येन भाष्यकृतः प्रत्याख्यानं सङ्गच्छते, अस्य सूत्रार्थतात्पर्यलभ्यत्वेनापूर्वत्वाभावात्। वचनस्य वचनान्तरेण प्रत्याख्याने तु भाष्यासङ्गतिरेव स्यात्, स्नुषाश्वश्रून्यायप्रसङ्गात्॥

वस्तुतस्तु एतत्साध्यलक्ष्याणां स्थानिवत्त्वेन सिद्ध्यङ्गीकारेऽपि 'प्राच्छंति' इत्यादौ विसर्गवारणाय ज्ञापकाश्रयणमावश्यकमेव। तथा हि शब्दानित्यत्ववारणायाऽनुमानिकस्थान्यादेशभावस्यार्थवत्येव स्वीकारात् प्रकृते "प्र' इत्यस्य 'ऋच्छ' इत्यस्य 'प्र–ऋच्छ' इति समुदायस्य चार्थवत्त्वेन त्रयाणां स्थानितया 'प्र' इत्यस्य स्थाने 'प्रार्' इत्यादेशस्य 'ऋच्छ' इत्यस्य स्थाने 'आच्छं' इत्यादेशस्य 'प्र-ऋच्छ, इत्यस्य स्थाने 'प्राच्छं' इत्यादेशस्य च न्यायसिद्धतया प्रवृत्तिपदत्वस्य 'प्रार्' इत्यत्रातिदेशेन 'तुल्यवित्तिवेद्यत्व' न्यायेन रेफे पदान्तत्वस्य सिद्धतया विसर्गापत्तेर्दुर्वारत्वात्। नच स्थानिनो भेदेऽप्यानुमानिकस्थान्यादेशभावपक्षे आदेशैक्यमेवेति 'प्र' इत्यस्य स्थाने 'प्राच्छं' इत्यस्यैवादेशत्वेन विसर्गाप्राप्तिरिति वाच्यम्, 'स्व–अश्वः' इत्यत्रापि 'स्व' इत्यस्य स्थाने 'स्वाश्व' इत्यादेशापत्त्या तत्र स्वशब्दत्वातिदेशेन स्वाश्वशब्दात् इरिन् शब्दे परे "स्वादिरेरिणोः" इत्यनेन 'स्वाश्वैरी' इत्यत्र वृद्ध्यापत्तेः। किञ्च–सुधीभिरुपास्य इत्येतदर्थक 'सुधी–उपास्यः' इत्यस्य स्थाने 'सुधीरुपास्यो यस्येत्येतदर्थक 'सुद्ध्युपास्यः' इत्यादेशवारणाय "स्थानेऽन्तरतमः" इति परिभाषासहकारेण 'यदर्थाभिधानसमर्थः तस्यादेशः' इति न्यायाश्रयणेनैव स्थान्यादेशभावनियमस्य वक्तव्यतया 'प्र' इत्यत्र स्थानितायाः, 'प्रार्' इत्यत्रादेशतायाश्च दुर्वारत्वेन–विसर्गापत्तिर्ज्ञापकमन्तरा दुष्परिहरैव। आनुमानिकस्थान्यादेशभावेऽप्यर्थकृतान्तरतम्याश्रयणे तु 'स्वः' इत्यस्य स्थाने 'स्वा' इत्यस्यैवादेशत्वम्, तदर्थाभि-

ष्यल्विधावनिष्टत्वात् । अन्यथा 'अयजे इन्द्रम्' इत्यत्र सवर्णदीर्घो-

गतार्थमिदमिति । पूर्वपरयोरिति द्विवचननिर्देशेनोभयोरपि प्रत्येकं स्थानित्वादिति भावः । एवञ्च प्राच्छंतीत्यादौ विसर्गवारणाय ज्ञापकाश्रयणमपि न कार्यम्, यतस्तत्र स्थानिवत्त्वेन रेफान्ते पदत्वं दुर्लभम्, तस्य तत्स्थानिधर्मत्वाभावात् । आनुमानिकवचनकल्पनया प्र ऋच्छतीत्यस्य प्राच्छदेशे तु समुदाये प्रशब्दधर्माणां स्थानिवत्त्वेन लाभेऽपि प्रारित्यत्र

इति शेषः । यत्र भाष्यकारपठितवचनविरुद्धार्थस्य प्रसक्तिस्तत्रैव भाष्यविरुद्धमिति व्यवहारस्तथात्वत्र नास्तीत्याशयेनाह—तदनुक्तेति ।

ननु 'आद्गुणः' इत्यादौ स्थानषष्ठ्यनिर्देशात्कथं गतार्थतेत्यत आह—पूर्वपरयोरिति । अपिशब्दः प्रत्येकपदोत्तरं योजनीयः । समुदायस्यैव स्थानित्वाभिमतत्वे समाहारद्वन्द्वेनैव निर्दिशेदिति भावः । अत एव कृष्णर्द्धिरित्यादौ रपरत्वसिद्धिः । उभयोः =पूर्वपरयोः । इति भाव इति । मूलकारस्येति शेषः । एवञ्च—स्थानिवद्भावाश्रयणे च ज्ञापकाश्रयणमिति—उभयथर्क्ष्विति निर्देशस्य ज्ञापकत्वाश्रयणम्प्रकाशकारादिकृतन्न कार्यमित्यर्थः । तत्स्थानिधर्मत्वाभावात्=एकादेशस्थानिधर्मत्वाभावात् । समुदायस्य प्रत्येकञ्च स्थानित्वं, नहि तत्र पदत्वमस्तीति भावः । नन्वानुमानिकवचनकल्पनया भविष्यतीत्यत आह—आनुमानिकेति । मूले 'अन्तादिवच्च' इत्यनेन वर्णमात्रवृत्तिधर्मस्यातिदेशो नास्तीत्यर्थे वार्त्तिकम्,—'न वा अताद्रूप्यातिदेशात्' इत्युक्तं तद्वि-

धानसामर्थ्यस्य तत्रैवानुभवसिद्धत्वादिति स्वाश्वशब्दे स्वशब्दत्वाभावान्नोक्तदोषः । नचास्य स्थानिवत्त्वेन गतार्थत्वाङ्गीकारे 'क्षीरपेण' इत्यत्र 'पे' इत्यत्र पवृत्त्येकाजुत्तरपदत्वस्य लाभो न स्यात्, एकाजुत्तरपदत्वस्याच्त्वरूपाल्वव्याप्यधर्मघटितत्वेन "अनल्विधौ" इति निषेधादिति वाच्यम्, एकाच्त्वस्य तत्र स्वतः सिद्धतया उत्तरपदत्वमात्रस्यातिदेशेनादोषात् ।

न च तस्याशास्त्रीयत्वम्, मुखप्रविष्टशास्त्रकारीयसङ्केतविषयताऽवच्छेदकधर्मघटितधर्मस्यैव शास्त्रीयत्वेन वृत्तिचरमावयवत्वरूपोत्तरपदत्वे शास्त्रीयत्वाक्षतेः । न च "अन्तादिवच्च" इत्यस्याभावे "उभयत आश्रयणे नान्तादिवत्" इत्यस्यासङ्गतिः, उभयत आश्रयणे न स्थानिवदित्यस्य स्वीकारेणाक्षतेः । नचैवम् 'प्लायते' इत्यत्रापि "अचः परस्मिन्" इति स्थानिवत्त्वनिषेधे "उपसर्गस्यायतौ" इति लत्वनापत्तिः, उभयत आश्रयणे स्थानिवदिति स्थानिवत्त्वेति कल्पनेन दोषाभावादित्यन्यत्र विस्तरः ।

१ अपिः प्रत्येकमित्युत्तरं योज्यः । अपिना समुदायस्थानित्वसङ्ग्रहः । प्रत्येकं स्थानित्वात् 'कृष्णर्द्धिः' इत्यादौ रपरत्वम्, उभयोः स्थानित्वात् 'सुब्रह्मण्योऽम्' इत्यादौ उभयगुणकः स्वरितादेशश्च सिद्ध्यति ।

२ स्थानिवत्त्वेन गतार्थत्वेन चेत्यर्थः ।

३ प्रत्येकं स्थानिता, पूर्वपरवर्णघटितसमुदाये च । तत्र च पदत्वं नास्तीति भावः । तच पूर्ववर्णस्थानिवृत्तिपदचरमावयवत्वं स्थानिवत्त्वेन सुलभमिति विसर्गवारणाय ज्ञापकावश्यकत्वम्, 'आर्' इत्यादेशे पदचरमावयवत्वेऽपि रेफे तदलाभात् ।

पत्तेः । तथा च वार्तिकम् —'न वा अताद्रूप्यातिदेशात्' इति । न विसर्ग

तद्लाभेन रेफे पदान्तत्वस्य दुर्लभत्वादिति बोध्यम् । न वेति । 'वर्णाश्रये विधावन्तादिवद्भावप्रतिषेधो वाच्यः' इत्यस्य प्रत्याख्यानमेतत्—न वा वक्तव्यं ताद्रूप्यस्य = वर्णमात्रवृत्तिधर्मस्यानेनातिदेशाभावादिति तदर्थः ।

वृणोति—वर्णाश्रय इत्यादिना । वर्णमात्रवृत्तिधर्मानतिदेशे साधकमाह—

अत एवेति । वर्णमात्रवृत्तिधर्मानतिदेशादेव । अत एवेति । उक्तोऽर्थः । एतत्फलम्-तुक्यसिद्धवचनेन ज्ञापकेनान्तादिशब्दौ सौत्रावुपस्थितैकादेशस्थानिपरौ पूर्वपरयोरित्यस्य चानुवृत्तिः, तौ च तद्घटितसमुदायपरौ यथासङ्ख्यञ्च तेनोक्तार्थलाभः ।

१ ताद्रूप्यञ्च एकादेशस्थानिविशिष्टाल्मात्रवृत्तिधर्मत्वम् । वै० स्ववृत्तित्व-स्वस्थानिकादेशावृत्तित्वोभयसम्बन्धेन । एवञ्च—'श्रयजे इन्द्रम्' 'खट्वाभिः' इत्यादौ अक्त्वस्य, ह्रस्वत्वसमानाधिकरणात्त्वस्य चोभय सम्बन्धेन एकादेशस्थानिविशिष्टतया अन्तादिवत्त्वाप्रवृत्तिः । 'क्षीरपेण' इत्यादावच्त्वस्य तु द्वितीयसम्बन्धेन वैशिष्ट्याभावात्ताद्रूप्यत्वाभावेनैकाजुत्तरपदत्वातिदेशात् "एकाजुत्तरपदे णः" इति नित्यं णत्वं सिद्ध्यति । नच परिभाषेन्दुशेखरे—'सोमेन्द्रः' इत्यत्रोत्तरपदाद्यच्त्वस्य ताद्रूप्यत्वमुक्तं तद्विरुद्ध्येतेति वाच्यम्, उक्तपरिष्कारेऽल्मात्रवृत्तिधर्मस्य विशेषणदलप्रविष्टयावत्पदार्थसंकुचितस्यैव ग्रहणेन उत्तरपदादित्व विशिष्टाच्त्वस्य स्वस्थानिकादेशावृत्तित्वेन ताद्रूप्यत्वाक्षतेः, स्वविशिष्टाल्मात्रवृतिधर्मरूपस्य ताद्रूप्यस्य स्वीकाराद्वा, वै० स्ववृत्तित्व—स्वाभाववत्त्वोभयसम्बधेन । अभावश्च—स्वस्थानिकादेशवृत्तित्वं स्वनिष्ठा या अभेदसम्बन्धावच्छिन्नाप्रकारताऽवच्छेदकता तदवच्छेदकत्वञ्चैतदुभयसम्बन्धावच्छिन्नप्रतियोगिताको ग्राह्यः । एवञ्च—'खट्वाभिः' इत्यादावतिदिदिक्षितस्यादभिन्नान्तावयवविशिष्टत्वरूपादन्तत्वस्य घटकीभूतात्त्वे स्ववृत्तित्वस्य, स्वाभाववत्त्वस्य च सत्त्वेन ताद्रूप्यत्वाक्षतिः । तथा हि—स्वं स्थानिखट्वशब्दाकारस्तद्वृत्तित्वं स्वाभाववत्वञ्च वर्तते, स्वस्थानिकादेशवृत्तित्वरूपसम्बन्धस्यासत्त्वेन विशिष्टनिष्ठविशेष्यतानिरूपितान्तावयवनिष्ठप्रकारतानिरूपिताभेदसम्बन्धावच्छिन्नावच्छेदकता अच्छब्दे, तदवच्छेदकताया अत्त्वे सत्वेऽप्युभयसम्बन्धावच्छिन्नस्व ( स्थानि ) प्रतियोगिकाभाववत्त्वस्य सुलभत्वात् । एकाजभिन्नावयवविशिष्टत्वरूपैकाजुत्तरपदत्वघटकाच्त्वे तु न ताद्रूप्यत्वम्, स्ववृत्तित्वस्य सत्त्वेऽपि स्वाभाववत्त्वस्यासत्त्वात्, अच्त्वे स्वस्थानिकैकाररूपादेशवृत्तित्वस्य विशिष्टनिष्ठविशेष्यता निरूपितावयवनिष्ठप्रकारतानिरूपिताभेदसम्बन्धावच्छिन्नाऽवच्छेदकता अचि, तदवच्छेदकताच्त्वे इत्युभयसम्बन्धस्य सत्त्वेनाच्त्वे स्थानिप्रतियोगिकाभाववत्त्वस्य वक्तुमशक्यत्वात् । 'सोमेन्द्रः' इत्यत्रोत्तरपदावयवाभिन्नाच्त्वरूपोत्तरपदाद्यच्त्वघटकाच्त्वे तु ताद्रूप्यत्वमेव, तदच्त्वे स्ववृत्तित्वस्य, स्वाभाववत्त्वस्य च सत्त्वात्, प्रतियोगितानियामकस्य स्वस्थानिकादेशवृत्तित्वस्य सत्त्वेऽपि तदच्त्वस्य मुख्यविशेष्यतावच्छेदकतयाऽभेदसम्बन्धावच्छिन्नप्रकारतावच्छेदकत्वाभावात् ।

ननूक्तरीत्या "अन्तादिवच्च" इत्यनेन वर्णमात्रवृत्तिधर्मातिदेशाप्राप्तावपि अदन्तत्वादेः समुदायवृत्तिधर्मस्यातिदेशे बाधकाभावात् 'खट्वाभिः' इत्यत्रैसापत्तिः, नच "अङ्गस्य" इत्यस्य षष्ठ्यन्तत्वेन 'अतः' इत्यस्य पञ्चम्यन्तत्वेन तदन्तविधेरप्राप्त्या 'अतः परस्य अङ्गसम्बन्धिनो भिस ऐस्' इत्यर्थेनात्वस्याल्मात्रवृत्तिधर्मतया ऐसोऽप्राप्तिः, "अत इनिठनौ" इत्यत्र 'प्रातिपदिकात्' इत्यस्याधिकारात् 'अतः' इत्यस्य पञ्चम्यन्ततया तदन्तविधित्वे खट्वादिशब्दादिन्याद्यापत्तेर्दुर्वारत्वादिति, चेन्न, "षत्वतुकोरसिद्धः" इत्यत्र

इति । एतच्च 'सुखार्तः' इत्यादावपि तुल्यम् । अत्र च कार्यकालपक्षे बहिरङ्गत्वादसिद्धत्वमपि बोध्यम् । न च 'नाजानन्तर्य' इति निषेधः,

---

पूर्वस्य परस्य च समुदायस्यान्तादिभ्यां वर्णाभ्यां पृथगवस्थिताभ्यां ये व्यवहाराः प्रातिपदिकत्व-सुबन्तत्व-प्रत्ययत्वादयस्ते कृतैकादेशस्यापि भवन्तीत्यर्थात् । अत एव तुक्यसिद्धवचनं चरितार्थम् । अन्यथा ऽधीत्येत्यादौ ह्रस्वत्वप्रयुक्ततुक्सिद्धेरसिद्धवचनवैयर्थ्यं स्पष्टमेव । अत एव खट्वाभिरित्यत्रैस् नेति दिक् । अत्र चेति । सुखार्त इत्यत्र, प्रार्च्छतीत्यत्र चेत्यर्थः । आद्ये विशिष्य ऋतशब्दस्य तृतीयासमाससापेक्षत्वेनान्त्ये उपसर्गत्व-धातुत्वादिसापेक्षत्वेन वृद्धेर्बहिरङ्गत्वादिति भावः । अचोरानन्तर्य-

---

दिगिति । दिगर्थस्तु यन्मूलेऽभिहितं स्थानिवद्भावेन गतार्थमिति तदभिप्रायवर्णनमेवैतत् । तथाहि—स्थानिवत्सूत्रमप्राधान्येनालाश्रयणेऽपि न प्रवर्त्तते ऽपठ्येत्यादौ यथा इदञ्च सूत्रमप्राधान्येनालाश्रयणे 'षत्वतुकोरसिद्धः' इति सूत्रे तुग्ग्रहणाज्ज्ञापकात् यद्यपि न प्रवर्तते तथापि यत्राप्राधान्येनालाश्रयणन्तत्र प्रवर्तत एव । अत एव 'क्षीरपेण' इत्यादौ 'पे' इत्यस्यैकाच्विशिष्टोत्तरपदत्वातिदेशाण्णत्वस्य प्रवृत्तिः । स्थानिवत्सूत्रेण तु तस्य नातिदेशः प्राधान्येनालाश्रयणात् । किञ्च तेन स्थानिनिष्ठधर्मस्यैवातिदेशो भवतीति भी ई श्रिय इत्यादौ वर्णयोरेव स्थानिवत्त्वेन भी इति समुदाये धातुत्वानापत्तेरितीयङ् न स्यात् । आनुमानिकस्थान्यादेशभावे 'भी ई' इति समुदायस्य 'भी' इत्यादेशे स्थानिनि समुदाये धातुत्वस्यासत्त्वेन 'भी' इत्यस्य धातुत्वमलभ्यम् । आनुमानिकस्थान्यादेशभावकल्पनेऽपि 'भी ई' इत्येतद्घटकयोः प्रत्येकं स्थानित्वमित्यत्र मानाभावः । प्रत्येकमपि स्थानित्वकल्पने तु स्वशब्दाऽश्वशब्दयोरेकादेशे स्वाश्वशब्दे स्वत्वस्यातिदेशोऽपि स्यादिति तत ईरिन्शब्दे स्वाश्वेरीत्यत्र वृद्ध्यापत्तिः । अस्य सूत्रस्याप्राधान्येनाश्रयणेऽपि प्रवृत्त्यर्थमावश्यकत्वादेव भाष्यकृतामप्रत्याख्यानमिति ।

सन्निहितसुखार्तशब्दमात्रविषयकत्वं तस्य नेत्याशयेनाह—सुखेति । धात्वादीत्यादिना ऽवर्णान्तरत्वस्य परिग्रहः । हरदत्तसम्मतपरिभाषार्थपक्षेऽज्द्वयस्यानन्तर्यमिति, तस्यान्तरङ्गे, बहिरङ्गे वेत्यत्र वाशब्दस्य चार्थकत्वेनान्तरङ्गे, बहिरङ्गे चाचोराश्रयणेऽर्थो वाभिमतः । नाद्यः, अक्षद्युरित्यत्र यणादेशे कर्तव्ये बहिरङ्गस्य ऊठो ऽसिद्धत्वनिषेधानापत्त्या इष्टप्रयोजनसिद्धेः । नान्त्यः, वाशब्दोपादानस्वारस्यविरोधात्, अक्षद्यूरित्यस्यासिद्धेश्च, इत्यत आह—अचोऽज्ञानन्तर्यमिति । मूले—हर-

---

तुग्ग्रहणेन वर्णमात्रवृत्तिधर्मघटितधर्मस्याप्यनेनातिदेशाभावबोधनात् । अन्यथा ह्रस्वत्वस्यातिदेशाभावेऽपि ह्रस्वान्तत्वादित्यातिदेशेन 'अधीत्य' इत्यत्र तुक्सिद्धौ तुग्ग्रहणवैयर्थ्यापत्तेः ॥

सुखप्रतिद्वन्द्विच—विशेष्यताऽनवच्छेदकतारूपम् ।

यत्रान्तरङ्गे बहिरङ्गे वा अचोरानन्तर्यं तत्रेति हरदत्तपक्षे तत्प्राप्तावपि यत्र पश्चात्प्रवर्तमाने ऽजानन्तर्यमिति कैयटमते निषेधाप्राप्तेः। बह्वपेक्षत्वेन बहिरङ्गायां वृद्धावजानन्तर्यसत्त्वे ऽपि पश्चात्प्रवर्तमाने तदभावात्॥

*उपसर्गेणेति।* यत्क्रियायुक्ताः प्रादयस्तं प्रत्येव गत्युपसर्गसञ्ज्ञा इत्युक्तत्वादिति भावः। *प्रार्षभीयतीति*। 'शरो ऽचि' ( पा० सू० ८।४।

मिति। अचो ऽजानन्तर्यनिमित्तमित्यर्थः। पश्चात्प्रवर्तमाने इति। अन्तरङ्ग इत्यर्थः। अत्र च 'षत्वतुकोः' ( पा० सू० ६।१।८६ ) इति सूत्रस्थं तुग्ग्रहणं ज्ञापकम्। अन्यथा ऽधीत्येत्यादौ ल्यप्प्रवृत्तये पूर्वं समासे तत्र जाते संहितायाः नित्यत्वात् ल्यबुत्पत्तिपर्यन्तमप्यसंहितया ऽवस्थानासम्भवेन एकादेशे ल्यपि तुगपेक्षया पदद्वयसम्बन्धिवर्णद्वयापेक्षैकादेशस्य बहिरङ्गतया ऽसिद्धत्वेन तद्वैयर्थ्यं स्पष्टमेव। तत्र पश्चात्प्रवर्तमाने तुक्यचो ऽन्यानन्तर्यनिमित्तककार्यत्वान्न दोषः। अजानन्तर्यमिति। अचो ऽन्यानन्तर्यमित्यर्थः॥

यत्क्रियेति। यदर्थक्रियायुक्ता इत्यर्थः। इत्युक्तत्वादिति। भाष्यकारादि-

दत्तपक्ष इत्यनेनारुचिः सूचिता। तद्बीजन्तु पचावेदमित्यत्राप्यसिद्धमिति परिभाषाया निषेधापत्त्येष्टार्थासिद्धिः। तुक्यसिद्धत्वविधायकवचनस्यावश्यकतया ज्ञापकस्योपपत्तावपि भाष्ये 'असिद्धम्बहिरङ्गमन्तरङ्गे' इत्युक्त्वा, नाजानन्तर्यमिति वक्ष्यामीत्युक्त्वा ऽन्तरङ्ग इत्यस्यानुवृत्तिसूचकाक्षरास्वारस्यमिति। एतच्च 'पश्चात्प्रवर्तमान' इत्युक्त्या मूलकारेणापि ध्वनितम्। अत्र च = परिभाषायाञ्च। तद्वैयर्थ्यम् = तुग्ग्रहणवैयर्थ्यम्। षत्वग्रहणन्तु न ज्ञापकम्, कोऽसिचदित्यत्रेणः पूर्वपदसम्बन्धित्वेन षत्वस्याप्युभयापेक्षत्वेनोभयोः समत्वादित्यन्यत्र स्पष्टम्। अजानन्तर्यमित्यत्र न द्विवचनान्तेनाच्छब्देन समासः, किन्त्वेमवचनान्तेनैवेत्याशयेनाह—अचो ऽन्यानन्तर्यमिति॥

'यत्क्रियायुक्ता' इति वचने 'यस्य क्रिया' इति समास इत्याशयेन व्याचष्टे—यदर्थेति। अस्यार्थस्य सप्रमाणत्वमाह—भाष्यकारादिभिरिति। क्रियायोगे

१ 'हरदत्तमिश्रा हि निमित्तनिमित्तिभावापन्नाज्द्वयनिरूपितपरस्परानन्तर्य्यनिमित्तके ऽन्तरङ्गे, बहिरङ्गे वा बहिरङ्गासिद्धत्वन्नेत्यर्थ इत्याहुस्तदसत्, फलाभावात्, 'पचावेदम्' इत्यन्तरङ्गपरिभाषोदाहरणपरभाष्यविरोधाच्चेति दिक्।

२ नच वेञ् धातोः क्विपि सम्प्रसारणे 'उभ्याम्' इत्यत्र "सम्प्रसारणाच्च" इति पूर्वरूपस्य पदद्वयसम्बन्धिवर्णद्वयानपेक्षत्वेन, पदान्तपदाद्योरेकादेशत्वेन चासिद्धतया तुग्वारणाय तुग्ग्रहणस्य चारितार्थ्यम्, ज्ञापनपरभाष्यप्रमाण्येन पूर्वपदान्तोत्तरपदाद्योरेवैकादेशस्यासिद्धत्वस्वीकारात्, तत्र तुक इष्टत्वाच्च। नचाधिपूर्वकादीधातोर्ल्यपि 'अधीय' इत्यत्र पूर्वान्तवद्भावेन तुगभावाय तुग्ग्रहणम्, ज्ञापकपरभाष्यप्रामाण्येन तादृशानामनभिधानात्।

४९ ) इति द्वित्वनिषेधः। प्रेजत इति। एजृ दीप्तौ। कम्पनार्थस्तु परस्मैपदी। एजते कम्पते इति तु प्राचां व्याख्यानं प्रामादिकमेव। एङ्येङ्त्येव सिद्धे परग्रहणमुत्तरार्थं रूपग्रहणं तु चिन्त्यप्रयोजनम्,

ङिभिरिति शेषः। उत्तरार्थमिति। तेनाद्यर्श्यात्, भिन्द्युः, पचन्ति, इत्यादिसिद्धिः। 'अतो गुण इत्युत्तरार्थम्' इति क्वाचित्कोऽपपाठः। चिन्त्यप्रयोजनमिति। न च शिवायेत्यत्र 'अणोऽप्रगृह्यस्य' ( पा० सू० ८।४।५७ ) इत्यनुनासिकत्वे तदनुकरणे ततः परमोमित्यस्य 'ओमाङोश्च' ( पा० सू० ६।१।९५) इति पररूपे ऽनुनासिकाभावार्थं परस्य यादृशं रूपं तादृशं यथा स्यादिति पररूपग्रहणम्, स्पष्टञ्चेदं 'ऐऔच्' इत्यत्र भाष्ये, कैयटे चेति वाच्यम्, 'तृज्वत्क्रोष्टुः' ( पा० सू० ७।१।९५ ) इति सूत्रभाष्योक्तरीत्या गुणस्य शब्दत्वादिवद्रूपत्वाभावेन रूपग्रहणेनाव्यावृत्तेः। रूपशब्देन च श्रावणज्ञानविषयोऽवयवसंस्थानवान्। अत एव तृज्वत्सूत्रे न हि स्वरो रूपवानित्युक्तम्। वर्णरूपावयवसंस्थानामेव शब्दस्य रूपं तद्वत्तयैव शब्दस्य रूपमिति व्यवहारः स्वरस्तु न तद्वानिति शब्दत्वादिवन्न स शब्दस्य रूपमिति तदर्थः। तत्र सूत्रे रूपातिदेशे स्वरातिदेशो न स्यादित्युपक्रम्येद-

एवोपसर्गसंज्ञाया गतिसंज्ञायाश्च विधानेन प्रत्यासत्त्या ऽस्यार्थस्य लाभः। तेन— 'प्रभूत ऋद्धः' 'प्रर्द्धः' इत्यत्र वृद्धिर्न। तेन = उत्तरार्थस्य परग्रहणस्य करणेन। अद्यर्श्यादिति। अद्य आ ऋश्यादिति छेदः। आङो योगात्पञ्चमी, वैकल्पिकत्वात् 'आङ् मर्यादाभिविध्योः' इत्यसमासः। ऋश्यो = मृगः। 'ओमाङोश्च' इति पररूपम्। भिन्द्युरित्यत्र 'उस्यपदान्तात्' इति, पचन्तीत्यत्र 'अतो गुणे' इति पररूपम्। अपपाठ इति। उक्तप्रयोगाणामसिद्धेरिति शेषः। परोक्तन्दूषणमुपन्यस्य दूषयति— नचेति। पररूप इति। प्राप्त इति शेषः। अनुनासिकाभावार्थमिति। पूर्वसादृश्यात्प्राप्तस्यानुनासिकस्याभावार्थमित्यर्थः। कैयटे = 'इको गुण' इतिसूत्रस्थ इति शेषः। भाष्योक्तरित्येति। तत्र यथा स्वरस्य रूपत्वन्नेत्युक्तं, तथाऽनुनासिकत्वस्यापीति भावः। गुणस्य=आनुनासिक्यहस्वत्वादेः। ननु पृथिव्यादिद्रव्यनिष्ठगुणानां शब्देऽसम्भव एव, यदि तु जातिसंज्ञाक्रियाभिन्नधर्ममात्रमिह रूपपदार्थस्तदा इदमपि स्यादेवेत्यत आह—रूपशब्देनेति। अवयवेति। वर्णरूपेत्यादिः। नचावयवसंस्थानवान्समुदायो नत्ववयवा इति कथमवयवानां रूपत्वमिति वाच्यम्, धर्मधर्मिणोरभेदात्। एतदेव प्रकटयति—वर्णरूपेत्यादिना। तद्वान्=अवयवसंस्थानवान्। शब्दत्वादीति। यथा शब्दत्वन्न शब्दस्य रूपन्तथा स्वरोऽपीत्यर्थः। तत्र सङ्गतिं दर्शयति–तत्र सूत्र इति। एतेन रूपशब्देनानुनासिक्यस्य व्यावृत्तिर्न सम्भवतीति

एङि पर इत्येव सिद्धेः, यथा 'अमि पूर्वः' (पा० सू० ६।१।१०७) इति। *नियोगोऽवधारणमिति*। यदाहुः—

'अनवक्लृप्तौ यदा दृष्टः पररूपस्य गोचरः॥
एवस्तु विषयो वृद्धेर्नियमेऽयं यदा भवेत्॥ १॥ इति

एतेन 'नियोजनं नियोगो व्यापारः' इति व्याख्यानं परास्तम्,

---

मुक्तम्। परः किं गुणको भवतीत्याकाङ्क्षायां स्थानिगुणक इति लभ्यते। तत्रोभयगुणकस्यासम्भवादेकस्थान्यन्तरतमत्वात्तद्गुणकस्यैवोपस्थित्या च तस्यैव सिद्धेश्च। परशब्देन प्रयोगस्थस्योपस्थितस्य ग्रहणम्, प्रयोगे च गुणो भेदक एव। शास्त्रे परमुच्चारितो गुणो ऽभेदको न तु प्रयोगे इति परशब्देनोपस्थितानुनासिकस्यैवैकस्थान्यन्तरतमत्वाद्विधिः। यत्र तु स्थानिद्वयगुणकसम्भवस्तत्र स एव। अत एव स्वरितान्तसुब्रह्मण्याशब्दस्य निपातत्वादुदात्तेन ओंशब्देन 'ओमाङोः' (पा० सू० ६।१।९५) इत्येकादेशः सुब्रह्मण्योऽमिति स्वरित इति 'तस्यादित' (पा० सू० १।२।३२) इति सूत्रे भाष्यकैयटयोरुक्तम्। 'ऐऔज्' इति सूत्रे एकादेशे 'आद् गुणः' (पा० सू० ६।१।८७) इत्यादौ दीर्घग्रहणं कर्तव्यं त्रिमात्रचतुर्मात्रा आदेशा मा भूवन्निति वार्तिककृतोक्तेः 'अकः सवर्णे' (पा० सू० ६।१।१०१) इत्यत्र योगविभागेन 'एकः पूर्वपरयोः' (पा० सू० ६।१।८४) इति यो निर्दिष्टः स दीर्घ इति व्याख्याने पचन्तीत्यत्र दोषमाशङ्क्यैकदेशिनोक्तम्—रूपग्रह-

---

दर्शितम्। एवं तर्ह्युक्तप्रयोगे ऽनुनासिकः स्यादेवेत्यत आह—परः किं गुणक इति लभ्यत इति। अन्तरतमपरिभाषयेति शेषः। तत्र = पूर्वोक्तलक्ष्ये। तद्गुणकस्य = शुद्धस्येति शेषः। परशब्देन तस्योपस्थितौ मानमाह—परशब्देनेति। भेदकः = विभिन्नव्यवहारसम्पादकः। अभेदकः = अस्थिदधीति सूत्रे उदात्तग्रहणाज्ज्ञापकादभेदकः। असम्भवादित्युक्तेः फलमाह—यत्र त्विति। अत एव = सति सम्भवे उभयगुणकस्य स्वीकारादेव। स्वरितान्तेति। 'तत्र साधुः' इति यदन्तस्यान्तस्वरितः। सुब्रह्मण्यशब्दान्तः। ततष्टाप्। स्वरितानुदात्तयोरेकादेशोऽपि आन्तरतम्यात्स्वरित एव। स्वरित इति। स्वरितस्य समाहाररूपतयोभयगुणकत्वात्सम्भवोऽस्तीति भावः। इति सूत्रे भाष्य इति। एतेनैतद्भाष्यप्रामाण्यात् 'एकादेश उदात्तेनोदात्तः' इति सूत्रे ऽनुदात्तस्येत्यनुवर्तत इति ध्वनितम्। भाष्यान्तरविरोधपरिहारायाह—ऐऔजिति। एकदेशिनेति। 'आद्गुणः' इत्यादौ तात्पर्यस्यास्य द्विमात्रस्य संज्ञा, न तु त्रिमात्रचतुर्मात्राणामिति। शङ्काया एवाभावेन तादृशशङ्कायां योगविभागादिप्रदर्शन-

'यदैव पूर्वं ज्वलने शरीरम्' 'ममैव जन्मान्तरपातकानाम्' इत्यादिप्रयोगविरोधात्, उदाहृतवृत्तिस्थश्लोकविरोधात्, 'लङः शाकटायनस्यैव' (पा० सू० ३।४।१११) 'तपस्तपःकर्मकस्यैव' (पा० सू० ३।१।८८) इत्यादिसौत्रप्रयोगविरोधाच्च । यत्तु—श्लोकवार्तिकमिदमित्याहुः, तद्भ्रमसात् ।

*शकन्ध्वादिष्विति* । शकन्ध्वादिविषये तत्सिद्ध्यनुगुणं पररूपं वाच्यमित्यर्थः । अत एवाह—*तच्च टेरिति* । यदि तु 'ओत्' इत्यधिकारादकारस्यैवेष्येत तर्हि मनीषा, इति न सिद्ध्येत् । केचित्तु मनःपतच्छब्दयोः पृषोदरादित्वादन्त्यलोपेऽकारस्यैव पररूपमाहुः । शकानां देशविशेषाणामन्धुः = कूपः शकन्धुः । कर्कीणां राज्ञामन्धुः ।

---

णात् । परस्य यादृशं रूपमित्यादि भाष्ये, तत्तु ह्रस्वत्वस्य रूपत्वाभिमानेन सिद्धान्ते तु स्पष्टार्थमेव रूपग्रहणमिति तत्रैव भाष्ये सूचितम् । 'इको गुण' (पा० सू० १।१।३) इति सूत्रस्थकैयटस्तु चिन्त्य एव । तत्र हि—इक्परिभाषाऽभावे जनेर्गुणो ऽनुनासिकः स्यादिति शङ्किते पररूपेण शुद्धो भविष्यतीति भाष्ये उक्तम्, तस्य मदुक्तरीत्या उपपत्तेः । 'ऐऔज्' इति सूत्रस्थकैयटस्तु पूर्वपक्षोपपादकत्वान्न स्वार्थे साधक इति दिक् ॥

नायक्लसौ यदेति पाठे न च्छन्दो भङ्गः । तद्भ्रमसादिति । वृत्तौ भवमिति व्याख्याने वार्त्तिकशब्दस्य पूर्वनिपातापत्तिरित्याहुः । विषय इति । शकन्ध्वादिष्विति विषयसप्तमीति भावः । अत एवाहेति । ईदृशव्याख्यानतो लब्धमाहेत्यर्थः ॥

आहुरिति । अत्रारुचिबीजन्तु वचनद्वयव्यापारो व्यर्थः, पृषोदरादित्वाट्टिलोपेनैव सिद्धेरिति । देशविशेषाणामिति । देशविशेषशब्दस्य यौगिकत्वेन

---

मेकदेशयुक्तिरिति भावः । अत एवाह—अभिमानेनेति । सिद्धान्त इति । संज्ञासूत्रस्थे 'तपरे गुणवृद्धी' इति सिद्धान्ते इत्यर्थः तत्रैव = ऐऔजिति सूत्र एव । एवन्तर्हि कैयटविरोध इत्यत आह—इको गुणेतीति । चिन्त्य एवेति । रूपशब्देनोक्तरीत्या तस्याव्यावृत्तेरिति शेषः । स्वमते तत्रत्यभाष्यविरोधपरिहारायाह—तत्र हीति ।

खण्डनकारोक्तिङ्खण्डयति—वृत्ताविति । आहुरित्यस्वरसबीजन्तु पूर्वनिपातप्रकरणस्यानित्यत्वेन तथा व्याख्यानमपि युक्तमेवेति ।

नतु शकदेशस्यैकत्वाद्देशविशेषाणामित्यत्र बहुवचनासङ्गतिरत आह—देशविशे-

बदरीवाची तु कर्कन्धूशब्दो दीर्घान्तः 'अन्धूदृम्भू' इत्यादिना उणादिषु वक्ष्यते। अटतीत्यटा पचाद्यच्, कुलस्य अटा कुलटा। ईष उञ्छे, ईष गत्यादिषु, आभ्यां 'गुरोश्च हलः' (पा० सू० ३।३।१०३) इत्यप्रत्यये ईषा। मनस ईषा मनीषा। हलस्य ईषा हलीषा= लाङ्गलदण्डः। मूर्द्धन्योपधः। यस्तु

'प्रभुशङ्करयोरीशः स्त्रियां लाङ्गलदण्डके॥'

इति रभसकोशात् तालव्योपधस्तस्मिन् परे 'आद्गुणः' (पा० सू० ६।१।८७) इत्येव भवति, हलेशा। पतन्नञ्जलिर्यस्मिन् नमस्कार्यत्वादिति पतञ्जलिः। *मार्तण्ड इति।* केचिदत्र सवर्णदीर्घमाहुः। परा मार्ताण्डमास्यत्, पुनर्मार्ताण्डमाभरत्, विश्वो मार्ताण्डोऽव्रजदित्यादिवैदिकप्रयोगास्तेषामनुकूलाः॥

*ओत्वोष्ठयोरिति।* अकारस्य ओत्वोष्ठयोश्चैकत्र[1] समासे स्थितौ सत्यामिदं प्रवर्त्तते। तेनेह न, वृषलस्तु तौष्ठव्रणस्ते इति॥

अव्यक्तशब्दं व्याचष्टे—*ध्वनेरिति।* *अनुकरणस्येति।* परिस्फुटाकारादिवर्णस्येति भावः। तस्य चानुकरणत्वं किञ्चित्साम्येन बोध्यम्। यत्तु प्राचोक्तम्—अतः किम्? दकारान्ते मा भूदिति। यच्च व्याख्यातं

---

जातिवाचकत्वाभावात् 'विशेषणानां चाजातेः' (पा० सू० १।२।५२) इति न निषेध इति बोध्यम्। कुलस्याटेति। कर्मणः शेषत्वविवक्षायां षष्ठी। अन्यथा कर्मण्यणि कुलाटीति स्यादिति भावः।

किञ्चित्साम्येनेति। तदभावे हि भग्नदन्ताद्युच्चारिताव्यक्तशब्दे एव स्याद-

---

षेति। मूले—एकत्र समास इति समास इत्येकत्वस्य विवक्षया ऽस्यार्थस्य लाभः।

किञ्चित्साम्येनेति। ध्वन्यन्तरव्यवच्छेदकत्वेन। तदभावे=अनुकरणस्येत्यस्याभावे। अव्यक्तशब्दे=अव्यक्तशब्दानुकरणे। तत्राव्यक्तत्वङ्कथमत आह—अव्यक्तत्वञ्चेति। चस्त्वर्थे। एतेनानुकार्यस्याच्छब्दाभावेनानुकरणस्य लाभेऽनुकरणस्येति चिन्त्यप्रयोजनमिति कस्यचिदुक्तिः प्रत्युक्ता।

---

१ अवर्णविशिष्टोत्वोष्ठयोः समासे वा पररूपम्। वै॰—स्वाव्यवहितोत्तरत्व—स्वघटितसमासघटकत्वे तदुभयसम्बन्धेन।

दकारान्त इति रूपान्तरोपलक्षणं वटक्, मरुत्, इत्यादेरपीति, तन्निःसारम्, प्रश्नस्य, दान्त इत्युत्तरस्य च निरालम्बनत्वात्। यत्तु व्याचख्युः—'अतो गुणे' (पा० सू० ६।१।९७ इत्यतोऽत इत्यनुवर्त्य शब्दाधिकाराश्रयणात्सिद्धमिति प्रश्नः। यदा जश्त्ववशाद्दान्तत्वं तदाऽपि स्यात्पुनरद्ग्रहणे तु श्रौततान्तत्वस्य विवक्षणान्नेत्युत्तरमिति, तच्चिन्त्यम्, जश्त्वशास्त्रस्यासिद्धत्वेन पररूपस्यैव प्रवृत्तेः, 'नाम्रेडितस्य' (पा० सू० ६।१।९९) इति निषेधे पटत्पटदितीत्युदाहरणस्यासम्बद्धत्वापत्तेश्च। तत्र हि भवदुक्तरीत्या प्राप्तिरेव नास्ति, दान्तत्वात्। एतेनानुकार्यानुकरणयोरभेदविवक्षया विभक्त्यभावेन गवि-

---

व्यक्तत्वं चार्थबोधाजनकत्वेनापि वक्तुं शक्यमित्याहुः। निरालम्बनत्वादिति। अद्ग्रहणं तद्भिन्नव्यावृत्त्यर्थमित्यर्थस्य बालैरपि सुज्ञेयत्वेनातः किमिति प्रश्नस्य, दान्ते मा भूत्, वटक्. मरुदित्यत्र च मा भूदिति उत्तरस्य च निरालम्बनत्वमित्यर्थः। शब्दाधिकारेति। तदाश्रयणाच्चाच्छब्दस्येत्यर्थो भविष्यतीति भावः। तदा ऽपि स्यादिति। एकदेशविकृतन्यायेनाच्छब्दत्वादिति भावः। जश्त्वशास्त्रस्येति। अनुकार्यानुकरणयोर्भेदे पदान्ततया जश्त्वे ऽपीत्यादिः। तदसिद्धत्वेनात एव सत्त्वादिति भावः। ननु पुनरद्ग्रहणाज्जश्त्वासिद्धत्वमपि बाध्यतामत आह—नाम्रेडितेति। उदाहरणस्य = वृत्त्यादिस्थस्य। अनुकार्यानुकरणयोरिति। सर्वत्र जश्त्वप्राप्त्योदाहरणासम्भवा-

---

निरालम्बनत्वमुपपादयति—अद्ग्रहणमिति। एतेनादिति प्रश्नस्य 'अतो भिस ऐस्' इत्यत्रेव ह्रस्वाकारबोधकता वाच्या, तथाचैतदुपादानं व्यर्थम्, 'अतो गुणे' इत्यतस्तदनुवृत्त्यैव सिद्धेरित्यभिप्रायः। दान्ते माभूदित्युत्तरस्य त्वदिति न ह्रस्वाकारबोधकम्, नाम्रेडितेति सूत्रे ऽन्त्यस्य तु वेत्युपादानसामर्थ्यात्किन्तु समुदायानुकरणमेव वाच्यम्, तथा च तान्तानुकरणमेव, न तु दान्तानुकरणमित्यभिप्राय इति मौलन्निःसारमित्येव। निःसारमिति प्रागनुपाख्युक्तिः प्रत्युक्ता। बालानामपि भवदुक्तान्त्यस्य तु वेति ज्ञापकवशादद्ग्रहणमद्भिन्नव्यावृत्त्यर्थमिति ज्ञानम्भविष्यतीत्याशयेनाह—तद्भिन्नेति। 'अतो गुणे' इति सूत्रे ऽत इत्यस्य ह्रस्वाकारबोधकतया ऽनुवर्तमानस्याच्छब्दस्य तन्मात्रबोधकता स्यादत आह—शब्दाधिकारेति। ननु जश्त्वविधायकशास्त्रानुकार्यानुकरणयोरभेदे ऽपदान्तत्वान्न प्राप्तिरत आह—अनुकार्येति। ननु प्रक्रियायाम्पटत्पटेति पररूपोदाहरणम्पटत्पटदिति तदभावस्योदाहरणमुक्तं, नत्वव्यक्तेतिसूत्रप्राप्तियो-

त्ययमाहेतिवदपदत्वात् पटत् इतीत्यत्र जश्त्वं नेति ग्रन्थोऽपि प्रत्युक्तः, उत्तरग्रन्थविरोधात्, जश्त्वस्यासिद्धतया पररूपेणैव बाधाच्च। ननु तदपि नित्यं तथा च कथं पररूपविरहेण प्रयोगः, इति चेन्न, अलौकिकं प्रक्रियावाक्यमिदमिति स्वयमेव व्याख्यातत्वात् संहिताया अविवक्षायां तत्सम्भवाच्चेति दिक् ॥

'अकः सवर्णे' (पा० सू० ६।१।१०१) अचि पर इति। यदा तूष्मणामीषद्विवृतत्वमाश्रित्य 'नाज्झलौ' (पा० सू० १।१।१०) इति सूत्रं प्रत्याख्यायते तदा इहाचीति नानुवर्तनीयम्। अकोऽकि दीर्घ

---

शङ्कायां ह्येतदुक्तं तैरिति बोध्यम्। उत्तरग्रन्थेति। नाम्रेडितस्येत्यस्य पटत्पटदितीत्युदाहरणपरग्रन्थेत्यर्थः। ननु स ग्रन्थो जश्त्वासिद्धत्वेन योज्य इति चेत्तत्राह—जश्त्वेति। तस्यासिद्धतया पररूपेणैव भवितव्यमिति जश्त्वस्याप्रवृत्तिलक्षणो बाधः। एवञ्च यदा जश्त्ववशाद्दान्तत्वमिति ग्रन्थासङ्गतिरिति सेयमुभयतः स्पाशा रज्जुरिति भावः। दिगिति। दिगर्थस्तु अपदान्तादित्यनुवृत्त्यैव जश्त्वविषये व्यावृत्तिसिद्धेः पुनरद्ग्रहणं व्यर्थमेवाप्तेन पुनरद्ग्रहणं श्रौततान्तत्वविवक्षाद्वारा जश्त्वविषये ऽभेदविवक्षायामेव यथा स्यान्न तु भेदविवक्षायां जश्त्वविषय इत्यर्थकमित्यपास्तम्। ममाद्ग्रहणं तु शब्दाधिकारानित्यत्वज्ञापनार्थमिति दिक् ॥

---

व्यस्य तत्र कथनमिति न भवदुक्तदूषणावसर इत्यत आह—वृत्त्यादीति। प्रकृते ऽनुकार्येत्यादि। तदुक्त्याशयं प्रकटयति—सर्वत्रेति। मूले पटत् इतीति पाठः। एतद्धि पूर्वसूत्रस्य प्राप्तियोग्यप्रक्रियावाक्यम्।

ननु समकक्षयोर्बाध्यबाधकभावो भवति, प्रकृते तु जश्त्वशास्त्रस्यासिद्धतया बाधादित्यनुपपन्नमत आह—तस्यासिद्धतयेति। स्पाशेति। स्पशधातोर्बाधनार्थादङि स्त्रियामेतद्रूपम्। खण्डनकारोक्तिनिरासायाह—दिगर्थस्त्वित्यति। नन्वद्ग्रहणं तन्निवृत्त्यादि पूर्वोक्तरीत्या व्यर्थमेवेति भवता कथन्तदुपपत्तिः क्रियते ऽत आह—ममाद्ग्रहणमिति। दिगर्थमध्ये दिगर्थस्तु मया यथा शब्दाधिकारानित्यत्वज्ञापनार्थमित्यु-

---

१ न च अत्र न्यासे यथासङ्ख्येनैव सम्बन्धस्य वक्तव्यया 'होतृ–लृकारः' इत्यत्र दीर्घानापत्तिः, 'ऋलृवर्णयोः' इति वार्तिकेन परस्परं जातेरेवातिदेशविधानेनादोषात्।

२ बाधनार्थात्स्पशधातोः भावे 'उभयतः स्पाशः—बाधो यथा इति व्यधिकरणबहुव्रीहिणा उभयतः स्पाशा' इति सिद्ध्यति। अयञ्च "हल्ङ्याप्" (पा० सू० ६–१–६८) इति सूत्रे भाष्ये उक्तः "सैषोभयतः स्पाशारज्जु र्भवति" इति। यत्तु अङि रूपम् इति, तन्न, भिदादिपाठकल्पने गौरवात्।

इति सुवचम् । वर्णद्वयं द्विमात्रमिति । यत्तु प्राचा व्याख्यातं दीर्घे प्राप्ते ह्रस्व ऋकारः, लृकारश्च विधीयत इति तद्भाष्यकैयटादिविरोधादुपेक्ष्यम् ॥

'एङः पदान्तात्' ( पा० सू० ६।१।१०९ ) ॥ 'ङसिङसोश्च'

---

सुवचमिति । जातिपक्षाश्रयणे यथासङ्ख्येनेष्टसिद्धेरिति भावः । एवं रीत्या यथासङ्ख्यम् 'इको यणचि' ( पा० सू० ६।१।७७ ) इत्यत्रापि बोध्यमिति सूचितम् । तद्भाष्येति । 'तुल्यास्य' ( पा० सू० १।१।९ ) सूत्रस्थभाष्येत्यर्थः । तत्र हि 'अकः सवर्णे' ( पा० सू० ६ । १ । १०१ )

---

क्तन्तथा भवतापि वक्तुं शक्यं यद्यपि, तथापि प्रकाशकारादिकृता कल्पना व्यर्थैवेति ॥

व्यक्तिपक्षे यावद्व्यक्तीनान्तत्तद्व्यक्तित्वेन ज्ञानासम्भवात्सङ्ख्याज्ञानमपि न सम्भवतीत्याशयेनाह-जातिपक्षेति । सूचितमिति । एतेन यदि सुवचमितिमूलकारोक्तिर्जातिपक्षाभिप्राया, तदा परममूले स्थानत आन्तर्यादितिको यणचीतिसूत्रे या ग्रन्थकृतोक्तिः सा व्यर्था, यथासङ्ख्येनैवेष्टसिद्धेरिति परास्तम्, तस्य ग्रन्थस्य व्यक्तिपक्षाभिप्रायकत्वात् । वस्तुतस्तु जातिपक्ष एवेति । तद्भाष्येरयस्य 'ऋति ऋ वा' इत्येतद्भाष्येत्यर्थः प्रतीयते स तु न युक्तः तस्य विशिष्याव्याख्यानादत आह-तुल्यास्येति । अन्यथासिद्धिरिति । तद्वार्तिकसाध्यफलान्यथासिद्धिरित्यर्थः । उद्भावितेति । यदि विजातीयादेशार्थं वार्तिकारम्भस्तदाऽनयोर्विधानमात्रं स्यान्नत्वच्कार्यमित्यनयोरच्त्वमवश्यं वाच्यम्, तथा सति दीर्घ संज्ञा-
नयोर्भविष्यतीति 'अकः सवर्णे इत्यनेनैवेष्टसिद्धिर्वार्तिकवैयर्थ्यमिति रीत्योद्भावितेत्यर्थः ।

---

१ "तुल्यास्य" सूत्रे ( पा० सू० १-१-९ ) भाष्ये हि ऋलृवर्णयोः सवर्णसंज्ञाप्रयोजनखण्डनावसरे ऋवर्णात् लृवर्णे परे दीर्घसिद्धये 'ऋत ऋति ऋ वा' इति न्यस्य 'लृति लृ वा' इति न्यासं कृत्वा कृत्वा ऋत इत्यनुवर्त्य ऋत लृति लृ वेत्यर्थेन समाधायोक्तम्-'सवर्णसंज्ञापक्षे वार्तिकं न कर्तव्यं भवति' इति एतत्पर्यन्तं भाष्यं वार्तिकद्वयमपि दीर्घविधायकमित्यभिप्रायेण । ततो रेफद्वयघटितऋकार-लद्वयघटितलृकारविधायकं वार्तिकद्वयमित्यभिप्रायेण अवश्यं तद्वक्तव्यम् "ऊकालोऽज्झ्रस्वदीर्घप्लुतः" इत्युच्यते । नच ऋकारः, लृकारो वाऽजस्ति, ऋकारस्य, लृकारस्य चाच्त्वं वक्ष्यामि । तच्चावश्यं वक्तव्यम्, प्लुतो यथा स्यात् । होतृ-ऋकारः । होतॄकारः, होतृ३ कार इति होतृ-लृकारः, होत्लृकारः । होत्लृ३कार इति । किं पुनरत्र ज्यायः ? सवर्णसंज्ञावचनमेव ज्यायः । दीर्घत्वमेव सिद्धं भवति इत्युक्तम् । अयम्भावः-विलक्षण ऋकारलृकारयोः प्लुतसिद्धये वर्णसमाम्नाये पाठेनाच्त्वस्यावश्यकत्वम् । एवञ्च-दीर्घसंज्ञाऽपि भविष्यति । तथा च वार्तिकद्वयमकृत्वा सवर्णसंज्ञाविधायकं वचनं कर्तव्यमिति दीर्घत्वमपि सूत्रेण सिद्धं भवति सवर्णसंज्ञापक्षे "तन्न कर्तव्यं भवति" इत्यनेन सूत्रेणैव रेफद्वयवत्तासाम्येन दीर्घस्य विलक्षण-ऋकारस्य शुद्धलृकारस्य दीर्घत्वाभावेन लकारवत्तासाम्येन विलक्षणस्य दीर्घलृकारस्य,कदाचित् विवृतत्व-द्विमात्रत्वसाम्येन उभयत्र दीर्घऋकारस्य सिद्धया वार्तिकन्न कर्तव्यम्, किन्तु सवर्णसंज्ञैव विधेयेति ।

( पा० सू० ६।१।११० ) इत्यस्यारम्भादस्य पदान्तविषयत्वे लब्धे उत्तरार्थं पदान्तादिति स्पष्टार्थमिहैव कृतम् ॥

*'सर्वत्र विभाषा गोः'* ( पा० सू० ६।१।१२२ ) यद्यपि छन्दसीति न प्रकृतं तथाऽपि 'यजुष्युरः' ( पा० सू० ६।१।११७ ) इत्यादिप्रक्रमाच्छन्दस्येवेदमिति सम्भाव्येत, अतः सर्वत्रेत्युक्तम् । तद्व्याचष्टे—*लोके वेदे चेति* । इह 'एङ' इत्यनुवर्त्यैङन्तस्य गोरिति व्याख्येयम्, तेनेह न *चित्रग्वग्रमिति* । प्रतिपदोक्तस्य एङो ग्रहणान्नेह हे चित्रगो-

---

इति सूत्रेणैतद्वार्तिकान्यथासिद्धिरुद्भाविता । आरम्भादिति । अपदान्ताच्चेन् ङसिङसोरेवेति नियमादिति भावः । उत्तरार्थमिति । 'इकोऽसवर्णे' ( पा० सू० ६।१।१२७ ) इत्याद्यर्थम् । स्पष्टार्थमिति । विभक्तौ चेन् ङसिङसोरेवेति नियमशङ्कावारणार्थ मिति भावः ।

इत्यनुवर्त्येति । षष्ठ्या विपरिणमय्येत्यपि बोध्यम् । प्रतिपदोक्तस्येति । पङ्ग्रहणाऽवृत्त्येति भावः, प्रतिपदोक्तपरिभाषया वा । वर्णग्रहणे तदप्रवृत्तिर्ज्ञा-

---

'एङः पदान्तात्' इतिसूत्रे पदान्तादित्यस्याभावेऽपि पदान्तविषयकत्वङ्कथमत आह—अपदान्ताच्चेदिति । विभक्तौ चेदिति । हरय इत्यादिविभक्ताविति नियमव्यावर्त्यंम्भविष्यतीति भावः ।

ननु तत्र 'एङ' इति पञ्चम्यन्तमत आह—षष्ठ्येति । गोरिति षष्ठ्यन्तमिति तेन सामानाधिकरण्यार्थमित्यादिः । वर्णग्रहणे लक्षणप्रतिपदोक्तपरिभाषाया अप्रवृत्तिवादिमताभिप्रायेणाह—अप्रवृत्त्येति । 'ओत्' इति सूत्रस्य 'अदोऽभवत्' इत्यत्र प्रवृत्तिवारणपरभाष्याद्वर्णग्रहणेऽपि सा प्रवर्तत इत्याशयेनाह—प्रतिपदोक्तेति । अनित्यतेति ।

---

१ वस्तुतस्तु ङसिङसोश्चेत्तर्हि अपदान्तादेव इति विपरीतनियमापत्तिः, न च फलाभावः, 'परमहरेः' इत्यादौ 'उत्तरपदत्वे' इति प्रत्ययलक्षणनिषेधाद्ध भाष्यमते भत्वाच्चेतिवाच्यम्, 'पचति, गच्छति' इत्येवं सततमभिधीयते' यत्र व्यापारे स पचतिगच्छतिर्व्यापारस्तस्य 'पचतिगच्छतेः' अत्र 'उत्तरपदत्वे' इति निषेधाविषयत्वात् पदत्वसत्त्वेन पूर्वरूपाभावस्यैव फलत्वात् । नच प्रत्याख्यानपक्षे 'सुप्तिङन्तम्' इत्यस्यानुवृत्त्याऽन्तर्वर्तितिङन्तस्यापि भत्वम्, वार्तिकारम्भ-प्रत्याख्यानपक्षयोः फलभेदप्रसङ्गादितीहार्थमेव 'पदान्तात् इति' इत्युपाध्यायाः ।

२ यद्यपि 'असति बाधके प्रमाणानां सामान्ये पक्षपातः, इति लाघवमूलकेन न्यायेन विशेषापेक्षो नियमो नैव स्यात्, तथापि नियमस्य साजात्यापेक्षत्वेन विभक्त्यंशविषयक एव नियमः स्यादिति 'भवति' त्यादौ पूर्वरूपं दुर्वारं स्यादिति शङ्कामात्रवारणार्थमिति भावः ।

१ अत्र हि 'आदेच उपदेशे' ( पा० ६–१–४१ ) इति सूत्रे उपदेशग्रहणं ज्ञापकम् । तथाहि—अत्रोपदेशग्रहणाभावेऽपि 'लिटि धातोः' ( पा० ६–१–८ ) इति सूत्राद्ध धातोरित्यनुवृत्त्या 'गोभ्याम्'

निर्देशस्तु लाघवार्थः। षट्त्सन्त इति। धुटश्चर्त्वेन तकारः। यत्त्वाहुः—'चयो द्वितीया' इति पक्षे तस्य थ इति, तन्न, चर्त्वस्यासिद्धत्वात्। अत एव धुडभावे 'षट् सन्तः' इत्यत्र टस्य ठो न। टकारनकारविसर्गाणां द्वित्वविकल्पात् षोडश। 'खयः शर' इति सकारद्वित्वे द्वात्रिंशत्। न च तत्र चर्त्वस्यासिद्धत्वं शङ्क्यम्। 'पूर्वत्रासिद्धीयमद्वित्वे' इत्युक्तेः। न च 'शरोऽचि' (पा० सू०

'तस्मात्' (पा० सू० १।१।६७) इत्यस्य परत्वादित्यर्थः। डकारात्सकारे धुडित्यर्थे 'तस्मिन्' (पा० सू० १।१।६६) इत्यस्य प्रवृत्तावुपस्थितडकारस्यागमित्वं 'तस्मात्' इत्यस्य प्रवृत्तावुपस्थितसस्य तत्त्वमित्यसम्भवरूपविरोधे परत्वेन व्यवस्थेति सस्यागमित्वनिर्णय इति भावः। स्पष्टञ्चेदं 'तस्मिन्' (पा० सू० १।१।६६) इति सूत्रे भाष्ये। लाघवार्थं इति। षष्ठ्याः प्रयोग एव कर्त्तव्ये इत्यर्थः। चर्त्वस्यासिद्धत्वादिति। अत एव तुडिति नोक्तम्। अत एवचर्त्वस्यासिद्धत्वादेव। ननु 'धुक् ङः सि' इत्यस्तु सप्तमी च

नास्तीत्यत आह—तस्मिन्निततीति। परिभाषाविषये कार्यकालपक्षेऽपि पाठक्रतमेव परत्वन्नियामकन्तु संज्ञाशास्त्रवत्प्रदेशीयं साधकाभावात्। किञ्च भाष्यकृता—'अधिकारो नाम त्रिप्रकारः कश्चिदेकदेशस्थः सर्वं शास्त्रमभिज्वलयति' इत्यभिहितम्। कश्चित् 'परिभाषारूपः' इति व्याख्या च कैयटेन कृता। तेनाष्टाध्यायीपाठ एव तद्विषये नियामक इत्यभिहितम्। ननु विरोधे सति परत्वेन व्यवस्था स एव तु कथमत आह—डकारादिति। तत्त्वम्—आगमित्वम्। असम्भवः—कार्यित्वनिमित्तत्वयोर्युगपदसम्भवः। निर्णय इति। परत्वात्तस्मादित्यस्य प्रवृत्तौ निर्णयः फलित इत्यर्थः। ननु यदि न षष्ठीनिर्देशस्तर्हि प्रकृतिमात्रस्य प्रयोग एव न स्यादत आह—षष्ठ्या इति। अत एव—चर्त्वस्यासिध्या तकारस्य थकाराभावादेव।

धातोः कर्त्रर्थकसार्वधातुके शप् भवतीत्यर्थेनोभयोर्मध्ये ऽनवयवः शप् भवति यथा, तथा ङः सि धुड् भवतीत्यर्थे ऽनवयवो धुट् स्यादिति तु शङ्का न भवति। आगमलिङ्गस्टकारोच्चारणवैयर्थ्यापत्तेः। अतस्तस्यागमत्वमेव। एवञ्चागमित्वं डकारस्य सकारस्य वेति सन्देहे 'उभयनिर्देशे' इत्यादिना सस्यागमित्वनिर्णयः कृतः, तत्र 'ङः' इत्यस्य पञ्चम्यन्तत्वे पूर्वोक्तः सन्देहो भवति, यदि 'ङः' इति षष्ठ्यन्तन्तदा न सन्देहः, परन्तु धुडागम एव चेत् क्रियते तदा डकारात्पूर्वः सस्यादितीष्टरूपासिद्धिरित्याशयेन 'धुगिति' कृत्वा डकारस्यागमित्वनिर्णयाय सूत्रानुपूर्व्यत्यासङ्कृत्वा शङ्कते—नन्विति। 'धुक् ङः सि' इति न्यासे सकारात्पूर्वं डकारस्योपादानेन विधेयानन्तरोपादानेन च डकारस्यागमित्वनिर्णयो भविष्यतीत्याशयेनानुपूर्व्यत्यासो दर्शितः।

८।४।४९ ) इति द्वित्वनिषेधः शङ्क्यः, तस्य सौत्रद्वित्वमात्रविषयत्वात्। अत एव 'शरः खयः' इति वार्तिकस्य वत्स्सः अप्स्सराः, इत्युदाहरणं भाष्ये स्थितम्। धुटः परादित्वम् 'न पदान्तात्' (पा० सू० ८।४।४२ ) इति ष्टुत्वनिषेधार्थम्। अत एव वक्ष्यमाणस्तुगियथाश्रुतैव, ङ इति च षष्ठ्यन्तम्। परमार्थतो वाक्यशक्त्यङ्गीकारेण पूर्वान्तत्वे परादित्वे वा न शक्तताऽवच्छेदकभेदोऽत आह—धुटः परादित्वमिति। श्चोततिरुपदेशे सादिः। श्चुत्वस्य धुटि सिद्धत्वेऽपि तुक्यसिद्धत्वात्सन् श्चोततीत्यत्र तुन्नेति बोध्यम्।

---

नन्वेवमपि शक्तताऽवच्छेदकानुपूर्वीभेदात्सङ्ख्याया बोधानापत्तिरत आह—परमार्थत इति। एतेन पदानुपूर्वीभेदादिष्टार्थाप्रतीतिः स्यादिति शङ्का न कार्येति दर्शितम्। न शक्तताऽवच्छेदकभेद इति। वाक्यानुपूर्वीभेदाभावादिति शेषः। मूले—ष्टुत्वेनेति। धुट इत्यादिः। अत एव—ष्टुत्वप्रतिषेधस्येष्टत्वादेव। ननु तुगागमे 'चयो द्वितीयाः' इति थकारस्यापत्तिरपि दोषः। नचास्य पदान्तत्वान्न द्वितीयादेशापत्तिरिति वाच्यम्, हलन्ते वक्ष्यमाणरीत्या पदान्तेऽपि क्वचित्प्रवृत्तेरिति चेन्न, तुकि कृते द्वितीयष्टुत्वयोः प्रसक्तौ ष्टुत्वदृष्ट्या द्वितीयादेशस्यासिद्धतया ष्टुत्वस्यापत्तिरेवेत्याशयेनात एवेत्यवधारणस्य करणात् तुडागमे द्वितीयापत्तिरिति त्वन्यत्। केचित्तु—'चयो द्वितीयाः' इत्यस्य।

ऊष्मोदयस्प्रथमं स्पर्शमेके द्वितीयमाहुरपदान्तभाजम्॥

इति प्रातिशाख्यादपदान्त एव वेदे प्रवृत्त्या तदेकवाक्यतया लोकेऽपि व्यवस्थितविभाषाया आश्रयणेनापदान्त एव प्रवृत्तिरित्यभिप्रायेणात एवेत्यवधारणमित्याहुः। अपरे तूष्मोदयं स्पर्शन्द्वितीयमाहुरित्येव द्वितीयेत्यस्य प्रथमसापेक्षतया द्वितीयस्योपादानेन प्रथमलाभे प्रातिशाख्ये प्रथमपदमन्यस्थानिकप्रथमलाभार्थमिति नात्र द्वितीयादेशस्य प्रसक्तिरित्याशयेनावधारणमित्याहुः। तुडेव कर्तुमुचित इति। 'डः सस्य तुट्' इति न्यासः कार्य इत्याशयः।

अट्श्चोततीत्यत्र धुडागमप्राप्तिः सकारसद्भाव एवेत्याशयेनाह—श्चोततीति। सादिः। नकारजेत्याद्यभियुक्तोक्तेरिति शेषः। 'श्चुत्वन्धुटि' इति वार्तिके धुटीत्युपादानस्य फलमाह—श्चुत्वस्येति।

---

1 षट्सन्त इत्यत्र षट्त्वावच्छिन्ननिरूपिता शक्तिः 'षट्' शब्दे शक्तताऽवच्छेदकश्च षट्त्वं तथा चानुपूर्व्या एव शक्तिसत्त्वनियामकतया धुकि कृते यदागमत्यायेन धकारविशिष्टस्यैव शक्ततया तत्र षट्त्वरूपप्रसिद्धानुपूर्व्यभावेन षट्त्वसंख्याया बोधानापत्तिः। एवं 'सन्तः' इत्यनेनापि तदनापत्तिः त्सन्त्वस्य शक्तताऽवच्छेदकस्याभावादत आह—न शक्तताऽवच्छेदकेति। सिद्धान्ते वाक्यस्यैव निराकाङ्क्षबोधकत्वाङ्गीकारेण तत्र धुकि धुटि वा आनुपूर्वीभेदाभावेन न बोधानापत्तिरिति भावः।

हैव न कृतः। यत्त्वाहुः—एवमपि प्रक्रियालाघवार्थम् तुडेव कर्तुमुचित इति, तन्न, 'चयो द्वितीया' इति पक्षे थकारापत्तेः। 'श्चुत्वं धुटि सिद्धं वाच्यम्' अटतीत्यट् श्चोतति, इह धुड् न।

*शि तुक्* ( पा० सू० ८।३।३१ )॥ शीति सप्तमी पूर्वत्र कृतार्थायाः 'नः' इति पञ्चम्याः षष्ठीं कल्पयतीत्याह—*नस्येति*। ननु प्रकृतो धुडेवास्तु किं तुका, मैवम्, 'शश्छोऽटि' ( पा० सू० ८।४।६३ ) इत्यस्य हि पदान्ताज्झयः परस्य शस्य छ इत्यर्थ आकारे स्थितः, एवञ्च धुटः परादित्वात् सञ्छम्भुरित्यत्र च्छो न स्यात्, विपूर्वाद्रपेरौणादिके शप्रत्यये 'मघवञ्श्चोतन्त्यभितो विरप्शम्' इत्यादौ यथा, अतः पूर्वान्तस्तुक् कृतः। नन्वेवं कुर्वञ्छेते इत्यत्र 'पदान्तस्य' ( पा० सू० ८।४।३७ ) इति णत्वनिषेधो न स्यादिति चेन्न, कार्यकालपक्षे बहिरङ्गत्वेन तुकोऽसिद्धत्वात्।

---

षष्ठीं कल्पयतीति। न च 'शि' इति सप्तमीनिर्देशो लाघवार्थः। द्वयोरचरितार्थत्वे लाघवेनान्यविभक्त्युच्चारणं युक्तं न त्वन्यथेत्याशयात्। धुडेवास्त्विति। शीति च षष्ठ्यर्थे इति भावः। विरप्शमिति। छान्दसार्थं[2]

---

लाघवार्थ इति। 'ङः सि' इति सूत्र इवेत्यादिः। अन्यथा—उभयोरचारितार्थ्याभावे। 'शिति चे'ति सप्तमीति शेषः। ननु छान्दसत्वादेव 'विरप्शम्' इति भविष्यतीत्याशङ्कायामाह—छान्दसार्थमपीति। असिद्धत्वन्तु नेति सम्प्रति प्राप्तमसिद्धत्वन्नेत्यर्थः। पक्षद्वये—यथोद्देशकार्यकालभेदेन पक्षद्वये। इदमेवेति—अत्रैवकारेण यत्तु वदन्तीत्यादिना यदभिहितन्तन्न युक्तमित्यभिहितम्। असिद्धत्वादिति। असिद्धमित्यनेनासिद्धत्वादित्यर्थः। इति भाव इति। अत्रारुचिबीजन्तूक्तमेव। यत्तु परममूले ञ्छौ ञ्चछाविति पद्यन्तत्पदचन्द्रिकास्थमनूदितमिति बोध्यम्। एतेन चयो द्वितीया इति छादेशविकल्पेन रूपद्वयाधिक्याच्चिन्त्यमिति खण्डनकृदुक्तिः प्रत्युक्ता। तुगादिविकल्पमात्राभिप्रायकत्वाद्वा।

ननु मूले ञम्प्रत्याहारइत्यस्यानन्तरं संज्ञायामिति कथनस्याभावकन्तत्र चेत्येताव-

---

1 अत्र पक्षे परिभाषादृष्ट्या त्रिपादीस्थान्तरङ्गस्यासिद्धत्वेऽपि अन्तरङ्गदृष्ट्या 'वाह ऊठ्' सूत्रस्थपरिभाषायाः सिद्धतया 'अदृष्टपिशाच'न्यायेनान्तरङ्गेण परिभाषायास्तद्देश एवाकर्षणेन तद्देशमाहात्म्यात्परिभाषादृष्ट्याऽन्तरङ्गस्य सिद्धतया तया बहिरङ्गासिद्धत्वबोधने बाधकाभाव इति प्राञ्चः।

२ लोकेऽपि 'चकञ्चौ चकूशे' इत्यादौ पदान्तादित्यस्य छत्वाभावरूपं फलं बोध्यम्।

यथोद्देशपक्षे 'स्तोः श्चुना' इति योगो विभज्यते 'न' इति वर्तते 'णः' इति च। स्तोः श्चुना योगे णत्वं न स्यात्। नकारार्थमिदम्। सकारग्रहणं वर्गग्रहणं चोत्तरार्थम्। ततः 'श्चुः' इति पूर्वमनुवर्तते। एवं 'नश्च' (पा० सू० ८।३।३०) इति सूत्रे कुर्वन्त्सीदतीत्यत्र 'पदान्तस्य' (पा० सू० ८।४।३७) इति णत्वप्रतिषेधो धुटः परादित्वे प्रयोजनमिति प्राचां ग्रन्थोऽपि यथोद्देशपक्षे बोध्यः। यत्तु वदन्ति—इदं प्रयोजनं बहिरङ्गपरिभाषया गतार्थत्वात्प्रत्युक्तमिति, तत्पाक्षिकम्, त्रिपादीस्थेऽन्तरङ्गे बहिरङ्गपरिभाषेयं न प्रवर्तते इति सुद्ध्युपास्य इत्युदाहरणे स्वोक्त्या सह विरुद्धं चेत्यास्तां तावत्। *सञ्छम्भुरिति*। इह श्चुत्वतुकोरसिद्धतामाश्रित्य 'नश्छवि' (पा० सू० ८।३।७) इति रुत्वं न शङ्क्यम्, छत्वस्यासिद्धत्वात्।

*ङमो ह्रस्वात्* (पा० सू० ८।३।३२)॥ ङम् प्रत्याहारः। सञ्ज्ञायाञ्च कृतं टित्त्वं सामर्थ्यात् संज्ञिभिः सम्बध्यते, तेन यथासङ्ख्यं ङुट्णुट्नुटः प्रवर्तन्ते। नित्यग्रहणं स्पष्टार्थम्, 'हे मपरे' (पा० सू० ८।३।२६) इति 'मय ञो वो वा' (पा० सू० ८।३।३३) इति च विकल्पद्वयस्य मध्ये पाठादेव नित्यत्वलाभात्।

---

मपि बहुशः सूत्रकृतो यत्नदर्शनादिति भावः। णत्वं न स्यादिति। एतदृष्ट्या श्चुत्वस्यासिद्धत्वं तु न, वचनसामर्थ्यादिति भावः। त्रिपाद्यां सर्वथा परिभाषाऽप्रवृत्तौ पक्षद्वयेऽपीदमेव समाधानम्। यथोद्देशपक्षे इति। कार्यकाले तु असिद्धत्वान्न दोषः पूर्वान्तत्वेऽपीति भावः।

सञ्ज्ञायाम्—ङमिति प्रत्याहाररूपायाम्। विकल्पद्वयस्य मध्ये इति। 'विभाषामध्ये च ये विधयस्ते नित्याः' इति 'पूङः क्त्वा च' (पा० सू० १।२।२२) इति सूत्रे भाष्योक्तेरिति भावः। न च तन्मध्ये पाठेन नित्यत्व-

---

न्मात्रेण प्रस्तुतार्थनिर्वाहादत आह—ङमिति प्रत्याहाररूपायामिति। ननु ङमुडित्यत्र टित्वन्दृश्यते तत्रोकारान्तस्य टित्वं तु संज्ञाया इति संज्ञायामिति मूलमसङ्गतमिति चेन्न, उकारस्योच्चारणार्थत्वात्। एतेनोकारान्तस्य टित्त्वं सा च न संज्ञेति संज्ञायामित्यसङ्गतमिति कस्यचिदुक्तिः प्रत्युक्ता। रत्नाकराद्युक्तिं खण्डयति—नचेति। अस्य नित्यत्वापत्तिरित्यत्रान्वयः। विभाषामध्य इत्यपूर्वं वचनमिति शङ्काभिप्रायः।

सुगण्णीश इति । ण्यल्लोपौ न स्थानिवत्, पूर्वत्रासिद्धे तन्निषेधात् । ङमुटः परादित्वं कुर्वन्नास्ते इत्यत्र णत्वप्रतिषेधार्थम्, अत एव

कल्पने तन्मध्यपतितानां 'नपरे नः' ( पा० सू० ८।३।२७ ) इत्यादीनामपि नित्यत्वापत्तिः । स्वरितत्वबलादनुवृत्तस्य पुनर्वाग्रहणान्निवृत्तौ कल्प्यमानायां स्वानन्तर एव तत्कल्पनेनोपपत्तावन्यत्र तत्कल्पने मानाभावात् । तस्मादुत्तरत्र वाग्रहणसामर्थ्यात्पूर्वसूत्रे एव वाग्रहणस्य निवृत्तिरिति भावः । तन्निषेधादिति । 'तस्य दोषः' इत्यस्य तु न प्राप्तिः, लत्वसाहचर्येणादेशणत्वस्यैव ग्रहणात्, पञ्चमीसमासस्यानित्यत्वाच्चेत्यपि बोध्यम्[1] । परादित्वमिति । ततः परस्याच इति व्याख्यानेनेत्यर्थः । ङम इत्यस्य षष्ठ्यन्तत्वमाश्रित्य ङमन्तपदावयवस्य ह्रस्वात्परस्य ङमो ङमुडजादौ पदे

भाष्यकारोक्तस्यापूर्ववचनङ्किन्तु न्यायसिद्धमित्याशयेन समाधत्ते—स्वरितत्वेत्यादिना उक्तार्थमेव स्पष्टयति—तस्मादिति । पूर्वेति । अव्यवहितेत्यादिः । यत्तु 'सुगण्णीशः' इत्यत्र ङमुटः परविधित्वेन स्थानिवद्भावशङ्कैवासङ्गतेतिं, तन्न, 'प्रत्यैषिषन्' इत्यर्थस्पञ्चमीसमासस्यावश्यकत्वात् । अनित्यत्वादिति । प्रविगणय्येति भाष्योदाहरणादस्यानित्यत्वादित्यर्थः । यत्तु प्राचेत्यादिना ऽजादेः पदस्येति व्याख्यानस्य स्वयन्दूषयिष्यमाणत्वान्ङमुटः परादित्वमिति कथनं विरुध्यत इत्यत आह—तत इति । ङम इति पञ्चमी पदस्येत्यनुवृत्तं सामानाधिकरण्येन सम्बन्धाय पञ्चम्या विपरिणम्यते, सा चानवकाशा, अचीति सप्तमी तूत्तरत्र चरितार्थेति सा ऽत्र षष्ठ्यर्थे इति कल्प्यते । एवञ्च ह्रस्वात्परो यो ङम् तदन्तं यत्पदं तस्मात्परस्याच इत्यर्थ इत्याशयात् । मूले—णत्वप्रतिषेधार्थमिति । 'पदान्तस्य' इति णत्वप्रतिषेधस्य सिध्यर्थमित्यर्थः । ङम इत्यस्येति । अस्यान्यथेत्यादिः । षष्ठ्यन्तत्वमिति । अस्मिन्पक्षे पदस्येत्यत्र विभक्तिविपरिणामो न कार्य इति लाघवम् । एवमचीति सप्तम्यपि चरितार्था । ह्रस्वात्परस्य ङमः पदावयवस्याचि पर इति तु नोक्तं 'दण्डिना' इत्यादौ दोषापत्तेः । अस्मिन्पक्षे पदे इत्यनुवृत्तं तद्विशेषणमचीति, तेन तदादिविधिः । यदि तु पदावयवस्य ह्रस्वात्परस्य ङमोऽजादौ पद इत्यर्थ आश्रीयते तदा दण्डिनेत्यत्र दोषः परिहर्तुं शक्य एव । ननु नन्दनानन्नित्यत्र सर्वथा दोष एव, नन्दनशब्दो ल्युडन्तः, अनन्शब्दस्त्वन्प्रकृतिकशत्रन्तः, तेन नन्दनशब्दस्य कर्मधारयः, ङमन्तरूपदन्नन्दन्निति तदवयवस्यान्त्यनकारस्य परादिवद्भावेनाजादिपदमानन्निति तस्मिन्परे ङमुट् स्यादिति चेत् ? न । परममूलोक्तव्याख्यानेऽप्यस्य दोषस्य सत्त्वात् । यदि तूक्तदोषवारणाय पदस्येत्येतत्पदपदार्थे ङमन्ते पदे इत्येतत्पदपदार्थनिमित्तकपदत्वव्यवच्छेदोऽपि विवक्षित इत्युच्यते,

१ 'निष्ठायां सेटि' इत्यत्र सेड्ग्रहणेन तदनित्यत्वं बोध्यम् ।

ङमो ह्रस्वादचि द्वे, इति नासूत्रि, परं णत्वं प्रति पूर्वस्य सिद्धतया णत्वापत्तेरिति प्राञ्चः। यत्त्वाहुः—बहिरङ्गपरिभाषाया गतार्थत्वादुभयमप्यसङ्गतमिति, तदपि पाक्षिकम्, राज्ञ इत्यत्रेव यथोद्देशे त्रैपादिकेऽन्तरङ्गपरिभाषाविरहस्योक्तत्वेन प्राचां ग्रन्थस्य सौष्ठवात्। कथमन्यथा द्वियं त्रियं च स्वयमेवोक्तमिति दिक्॥

---

इत्यर्थेन पूर्वादित्वमेव कुतो न कृतम्। 'पदस्य' (पा० सू० ८।१।१६) इति च 'मादुपधायाः' (पा० सू० ८।२।९) इत्यादाविवावयवषष्ठी। अजादौ पदे इत्युक्तेर्मा अभ्यासे इत्यतः शतरि मननित्यादावनन्त्यस्य नेति भावः। बहिरङ्गपरिभाषयेति। नुटो बहिरङ्गतया ऽसिद्धत्वादित्यर्थः। उभयम्—ङमुटः परादित्वं, द्वे इति सूत्राकरणञ्च। पाक्षिकम्—कार्यकालसम्बन्धि। दिगिति। दिगर्थस्तु तत्परिभाषायास्त्रिपाद्यामभाव एव। किञ्च यदि यदागमा' इति न्यायेनागमानामागमिधर्मवैशिष्ट्यमपि बोध्यते इति तेन

---

तदा तु न कोऽपि दोष इत्यवधेयम्। मूले—अत एवेति। णत्वाभावार्थमेवेत्यर्थः। कार्यकालेति। पररीत्यैवेदम्। एतस्य पाक्षिकमित्यस्य वैकल्पिकमित्यर्थ इति भ्रमस्तु न कार्यो, विकल्पस्याप्रक्रान्तत्वात्। अभाव एवेति। स्पष्टञ्चेदमन्यत्र।

यमुद्दिश्य य आगमो विहितः स आगमीयधर्मवैशिष्ट्येन गृह्यते—तद्धर्मवैशिष्ट्येन गृह्यते—स आगमीयेन शब्देन गृह्यते, तेन शब्देनागमविशिष्टस्य ग्रहणमिति चार्थः। आगमीयधर्मवैशिष्ट्येन गृह्यते आगमोऽपि तेन धर्मेण गृह्यते इत्यर्थे किम्मानमिति चेत्? प्रकृतसूत्रस्थभाष्यग्रन्थ एवेति गृहाण। तत्र हि—'दण्डिना' 'शकटिना' इत्यत्र ङमुट्वारणाय 'पदादिग्रहणं कर्त्तव्यम्' इति वार्तिकस्य पदादित्यस्यानुवृत्तिप्रदर्शनं, 'एवमपि परमदण्डिना परमछत्रिणेत्यत्र प्राप्नोति' इत्याशङ्कायाम् 'उत्तरपदत्वे चापदादिविधौ प्रतिषेधः' इति वचनेन दोषपरिहृत्य 'एवमपि पदादित्यपूर्वं कर्त्तव्यं, यद्धि तत्प्रकृतं प्राक्सुपि कुत्सनादित्येवन्तत्' इति कथनानन्तरम् 'एवन्तर्हि ङम एवायं ङमुट् क्रियते, कथम् पदस्येति वर्तते ङम इति च, नैषा पञ्चमी, का तर्हि? सम्बन्धषष्ठी, पदान्तस्य ङमो ङमुट् भवतीति ह्रस्वादुत्तरस्य अचीति यदि ङम एव ङमुट् क्रियते कुर्वन्नास्ते 'रषाभ्यान्नो णः समानपदे' इति णत्वम्प्राप्नोति, पदान्तस्येति प्रतिषेधो भविष्यति, पदान्तस्येत्युच्यते, नैषः पदान्तः, पदान्तभक्तः पदान्तग्रहणेन आहि

---

१ चिन्त्यमिदम् आगमे आगमिवृत्तिधर्मारोपे रामाणामित्यादौ नुटि आगवृत्तिपदान्तत्वारोपेण 'पदान्तस्य' इति निषेधेन णत्वाभावनापत्तेः। न च पदान्तत्वस्य वर्णमात्रवृत्तित्वेन नुटि पदान्तत्वासम्भवेन दोषाभावः, स्वनडुह्यामित्यादावन्त्यपदादेर्दत्वादिवारणाय कृतस्य 'अलोऽन्त्यस्य' इति सूत्रे 'अलः' इत्यस्य वैयर्थ्यापत्तेः, पदान्तसंयोगसम्भवेन 'मृड्' इत्यादौ संयोगादिलोपानापत्तेश्च।

ननु परमदण्डिनावित्यादौ अन्तर्वर्तिविभक्त्या पदत्वान्नुट् स्यादिति चेन्न, 'उत्तरपदत्वे चापदादिविधौ' इति प्रत्ययलक्षणप्रतिषेधात्। अत एव परमवाचौ, परमगोदुहौ, परमलिहावित्यादौ कुत्व-घत्व-ढत्वादीनि न। यत्तु प्राचा 'ङमि च पदे' (पा० सू० ८।३।२१) इत्यतः 'पदे' इत्यनुवर्त्याजादेः पदस्येति व्याख्यानाद्ङमुण् नेत्युक्तं तदनेन प्रत्युक्तम्, इहैव नलोपं वारयितुमुक्तरीतेरेव तेनाप्यनुसर्तव्यत्वात्॥

---

नकाराद्यवयवनस्यापि पदान्तत्वाण्णत्वनिषेधसिद्धिरित्युच्यते तर्हि ह्रस्वात्परस्य ङमन्तपदस्याचि परे ङमुडित्येवार्थस्तथा सति स्यान्न प्रागुक्तः, स्याच्चातिमहदनिष्टमिति। स्पष्टश्चेदं सर्वं भाष्ये।

प्रत्ययलक्षणप्रतिषेधादिति। इदञ्च प्रकृतसूत्रे भाष्ये स्पष्टम्। अनुसर्त्तव्यत्वादिति। यदि तु स निषेधो 'अपदादिविधौ' इति पर्युदासेन[2] पदान्तत्व-

---

व्यते' इत्युक्तम्। णत्वम्प्राप्नोतीति। आगमस्येत्यादिः। अत्र पदान्तभक्त इत्यादिना उक्तः परिभाषार्थो ध्वनितः। अनुवृत्तस्य पदस्येत्यस्य विशेष्यत्वाभिप्रायेण मूले व्याख्या कृता। तथा सति ह्रस्वादिति प्राधान्यात्पदस्य विशेषणं स्यादेव ङम इति षष्ठ्यन्तमपि तस्य विशेषणं स्यात्। एवं सति यादृशः सूत्रार्थः सम्पन्नस्तमाह—तर्हि ह्रस्वात्परस्य पदस्येति। ङमन्तस्येति शेषः। तथा सति—पदस्य विशेष्यत्वाङ्गीकारे सति न प्रागुक्तः। शङ्काकृतः। महदनिष्टमिति। अस्ति 'पराङात्मा' 'देवदत्तरामानिति वद' इत्यादावतिव्याप्तिः, 'कुर्वन्नास्ते' 'सन्नच्युत' इत्यादावव्याप्तिः, स्यादित्यर्थः। तथा च लक्ष्यानुरोधान्मूलोक्त एवार्थः कार्यः। सर्वमिति। शङ्कासमाधानावसरोक्तम्।

मूले—अत एव—'उत्तरपदत्वे' इति वचनस्वीकारादेव। तत्—तादृशं व्याख्यानम्। अनेन—उत्तरपदत्व इति वचनस्यात्र सञ्चारणेन। इहैव—परमदण्डिनावित्यादावेव। अनुसर्तव्यत्वादिति। एतेन वास्तविकम्परिभाषाश्रयणस्येदम्फलं५।

---

१—ङमन्तपदावयवस्य ह्रस्वात्परस्य ङमो ङमुडजादौ पदे इत्यर्थे आगमानामागमिवैशिष्ट्यरीत्या दोषवारणेऽपि ङम इत्यस्य प्रधानतया पदविशेषणत्वे सति ह्रस्वादित्यपि प्रधानतया पदस्यैव विशेषणं स्यात् एवञ्च ह्रस्वात्परस्य ङमन्तपदस्य ङमुडजादौ पदे इत्येवार्थः स्यान्नतु प्रागुक्तः ङमन्तपदावयवस्यार्थः।

२—पदादिविधिश्च पदादित्वनिमित्तक इति तत्सादृश्यात्तद्भिन्ने तत्सदृशे विधावेवोत्तरपदत्व इत्यस्य प्रवृत्तिः। तत्र सादृश्यञ्च पदविशिष्टधर्मावच्छिन्ननिमित्तकत्वेन, वै० स्वघटकवृत्तित्व-स्वघटकाव्यवहितपूर्वत्व-स्वघटकाव्यवहितोत्तरत्वोभयाभावसामानाधिकरण्योभयसम्बन्धेन। पदादित्वे पदघटकाव्यवहितपूर्वत्वसामानाधिकरण्येऽपि स्वघटकाव्यवहितोत्तरत्वसामानाधिकरण्यं नास्ति पदान्तत्वे पदघटकाव्यवहितोत्तरत्व

समः सुटि ( पा० सू० ८।३।५ ) ॥ यद्यपि मोऽनुस्वारेण सिद्धं तथाप्यनुनासिकत्वत्रिसकारत्वसिद्ध्यर्थमिदम् ॥

निमित्तके विधावेवेति 'न लुमता' ( पा० सू० १।१।६३ ) इति सूत्रे भाष्ये स्पष्टम् । किञ्चोत्तरपदस्य कार्यित्वे एव तत्प्रवृत्तिरत एव माषकुम्भवा-

स्मकदूषणापत्तिवारणमेव फलन्तु नुटप्राप्तिर्नलोपस्थलि नुटोऽसिद्धत्वादिति ध्वनितम् । नचैवं सति यदि प्रतिपदोक्तो निपात ङजिति गृह्यते तर्हि उत्तरार्थम्पदग्रहणमित्युक्तिति सूत्रस्थपरममूलविरोधः । पदे इत्यस्य सम्बन्धं विनापि निर्वाहस्य मूले कृतत्वादिति वाच्यम्, तदन्तं यत्पदमित्यर्थसम्पादनार्थन्तथोक्तमित्याशयात् । वस्तुतस्तु पदस्येत्य-धिकारान्ङम इति पञ्चम्यन्तेन सामानाधिकरण्याद्विभक्तिविपरिणामेनोक्तार्थस्य लाभा-त्तेदप्रयोजनम्, किन्तु विशेषणविशेष्ययोरुभयोः सप्तम्यन्तत्व एव । यस्मिन्विधिरिति परिभाषाप्रवृत्त्याऽजादेः पदस्येति व्याख्यानलाभार्थमेव पदे इत्युत्तरार्थमित्युक्तम् । नचो-त्तरपदत्व इति परिभाषया निर्वाहेऽजादेः पदस्येति व्याख्यानमप्रयोजनमिति वाच्यम्, 'माषकुम्भवापेन' इत्यत्र पदव्यवायेऽपीति निषेधस्य सिध्यर्थं उत्तरपदस्य कार्यित्व एव तस्याः परिभाषायाः प्रवृत्तिरित्यस्य स्वीकारात् । एवमन्योऽपि तत्र विशेष इत्याह— यदि त्विति । कार्यित्व एवेति । नच पदान्तत्वनिमित्तक इति पूर्वोक्तार्थेन माष-

सामानाधिकरण्यस्य सत्त्वेऽपि स्वघटकाव्यवहित पूर्वत्वसामानाधिकरण्यं नास्ति' इत्येक सत्त्वेऽप्युभयं ना-स्तीति रीत्योभयत्रोभयाभावसामानाधिकरण्यम् इत्युक्तसादृश्यं सुवचम् । पर्युदासेन पदान्तस्थानिके एव प्रवृत्तिस्तु न दोषः क्विपिमहच्छब्देन समासे 'महादुहौ' इत्यत्र नाभावापत्तेः ॥

1 ननु 'पूर्वदण्डिप्रियः' इत्यादौ दण्डिशब्दे नलोपाय "उत्तरपदत्वे" इति निषेधाप्रवृत्तये उत्तरपदं मध्य-मपदत्वानाक्रान्तं ग्राह्यमिति माषकुम्भवापेनेत्यत्र मध्यमपदत्वस्यैव सत्त्वेन कार्यित्वनिवेशो विफल इति चेन्न, परमलोम्निशयः, 'परमलोम्निचरः' इत्यादावलुकसमासे लोमशब्दे नलोपाभावाय उत्तरपदत्वे इति निषेधप्रवृत्तये यद्वृत्त्यारम्भकपदसंज्ञाचिकीर्षिता तद्वृत्तिनिरिशष्टत्वरूपमध्यमपदत्वस्य स्वीकारेणादोषात्, वै० स्वघटकत्व-स्वघटकार्थवदव्यवहितपूर्वत्व-स्वघटकार्थवदव्यवहितोत्तरत्वैतत्रितयसम्बन्धेन तथा च 'परमलोम्निशयः' इत्यादौ परमश्च तल्लोम चेत्यर्थककर्मधारयघटकसुपमादाय पदसंज्ञा चिकीर्षितेति तद्घटकार्थ-वदव्यवहितपूर्वत्वाभावान्न लोम न्नित्यस्य मध्यमपदत्वाक्रान्तत्वमिति न दोषः । माषकुम्भवापेनेत्यत्रापि वृत्तिद्वयम्=तत्र माषस्य कुम्भ इति, विग्रहे षष्ठीसमासघटकसुपमादायैव कुम्भेत्यस्य पदसंज्ञाचिकीर्षितेति कुम्भस्य तद्वृत्तिघटकार्थवदव्यवहितपूर्वत्वाभावान्मध्यमपदत्वानाक्रान्तत्वमेवेति तत्र प्रत्ययलक्षणनिषेधाभा-वायकार्यित्वनिवेश आवश्यकः ।

नन्वेवमपि 'अतद्धिते' इत्यस्य प्रत्याख्यानाय भाष्ये पदे परतो यो व्यवाय इति सप्तमीसमास आश्रितः, तत्र 'अतद्धिते' इत्यस्यारम्भपक्षे पदेन व्यवाये इति तृतीयासमासे उभयत्र पदशब्देन सुबन्तस्य ग्रहणे च माषकुम्भवापेन क्षीरपकुम्भेनेत्यादौ गतिकारकोपपदानामिति परिभाषया सुबुत्पत्तेः प्रागेव समासेन माषे-त्यत्र वापेत्यस्य क्षीरेत्यत्र पेत्यस्य च पदत्वाभावेनारम्भप्रत्याख्यानयो फलभेदवारणाय 'पदव्यवायेऽपि इति सूत्रे पदपदस्य पदत्वयोग्यप्रातिपदिकसंज्ञकपरत्वस्यावश्यकत्वेन 'माषकुम्भवापेनेत्यत्र 'उत्तरपदत्वे' इति निषेध

पेनेत्यादौ 'पदव्यवायेऽपि' ( पा० सू० ८. ... ...प्रयासाद्वारेत्तु-
च्चरो तदा प्राचीनोक्तमजादेः पदस्येति व्याख्यानमेव शरणम् । स्पष्टश्चैवं
व्याख्यानं प्रकृतसूत्रे, 'ऊञि च पदे' (पा० सू० ८।३।२१ ) इत्यत्र च भाष्ये ।
तेन निषेधेन सिद्धमिति प्रकृतसूत्रभाष्योक्तिस्त्वेकदेशिन इत्यास्तां तावत् ।

त्रिसकारकत्वेति । न च पुनर्द्वित्वेन तदपि सिद्धम्, लक्ष्ये लक्षणस्येति न्यायात् । अत्र चेदमेव ज्ञापकं बोद्धव्यम् ॥

---

कुम्भवापेनेत्यस्य निर्वाहे कार्यित्व एवेत्यस्य वैयर्थ्यमिति वाच्यम्, किञ्चेत्यादिना भेदेनोपादानेन पक्षभेदसूचनात् । नचैवमपि 'पूर्वंदण्डिप्रियः' इति त्रिपदबहुव्रीहावान्तरतत्पुरुषे दण्डिन्नित्यत्र नलोपार्थम्पदत्वमावश्यकं तद्योगयथोक्तनिषेधाच्च सिध्यतीति वाच्यम्, मध्यमपदत्वानाक्रान्तस्य ग्रहणमित्यस्य निवेशेनादोषात्, नचैवम्पूर्वोक्तकार्यित्वनिवेशवैयर्थ्यमिति शङ्क्यम्, प्रत्यासत्त्या तत्समासीयमध्यमपदत्वानाक्रान्तत्वनिवेशेन माषकुम्भस्य वाप इति समासे कुम्भशब्दस्य पदत्वसिध्यर्थं कार्यित्वनिवेशस्यावश्यकत्वात् । प्रत्यासत्तिफलन्तु 'दधिसेचिशयः' इत्यादावलुक्समासे सेकशब्दे कुत्वाभावः । नचैवम्पूर्वंदण्डिप्रिय इत्यत्रावान्तरतत्पुरुषीयमध्यमपदत्वानाक्रान्तत्वात्पुनरनुपपत्तिः, तत्समासप्रयोजकैकार्थीभावप्रयोज्यसमासीयमध्यमपदत्वनिवेशात् । नचैवं सति परमवाचेत्यादौ विशिष्टाभावादव्याप्तिरिति वाच्यम्, मध्यमपदशब्देन तत्समासीयचरमपदपूर्वत्वानाक्रान्तस्य ग्रहणात् । 'अतद्धित' इत्यस्य प्रत्याख्यानाय पदव्यवाय इत्यस्य पदे व्यवाय इत्यर्थस्य करणेन माषकुम्भवापेनेत्यत्र वापशब्दस्य पदत्वसिद्ध्यर्थं कार्यित्वनिवेशस्यावश्यकत्वाच्च । नच पदपदस्य पदत्वयोग्यपरत्वं शङ्क्यम्, स्वशास्त्रसङ्केतितोत्तरपदलक्षणापेक्षया शास्त्रान्तरसङ्केतितोत्तरपदलक्षणाया उचितत्वमित्याशयात् ।

---

प्रवृत्तावपि कुम्भेत्यस्य पदत्वयोग्यत्वस्य सत्त्वेन णत्वनिषेधसिद्ध्या कार्यित्वनिवेशवैफल्यमिति चेत्सत्यम्, पचाद्यन्ताद्दृढशब्दस्य परमशब्देन समासे तत आचारक्विबन्तात् क्विनि 'तितुत्र' इतीड्भावे 'परमादृति' रित्यत्र 'उत्तरपदत्वे' इति निषेधाप्रवृत्त्या 'न पदान्तात्' इति ष्टुत्वनिषेधाय कार्यित्वनिवेशस्यावश्यकत्वात् । नचात्राह क्विनि 'अतो लोप' इत्यल्लोपस्य स्थानिवत्त्वम्, 'पूर्वत्रासिद्धीये' इति तन्निषेधात् ।

वस्तुतस्तु 'स्वादिषु' इत्येको योगस्तत्र 'सुप्तिङन्तमित्यतः' सुबित्यनुवर्त्य स्वादिषु परतस्तदादि पदं भवति सुबन्तञ्च । ततः 'असर्वनामस्थाने' स्वादौ तदादि सुबन्तञ्च पदन्नेत्यर्थेन 'परमदण्डिनौ' 'परमवाचौ' इत्यादावुत्तरस्य पदत्वाभावान्नलोपादि न । ततः 'भमिति' अत्र सुप्, असर्वनामस्थाने, यचि, स्वादिषु इति सर्वमनुवर्तते, तथा च सर्वनामस्थानभिन्ने यजादौ कप्प्रत्ययावधिकस्वादौ पूर्वं तदादि सुबन्तञ्च भं भवतीत्यर्थः । तेन विमलदिवी, परमवाचेत्यादौ न दोष इति उत्तरपदत्वे इति वार्तिकं प्रत्याख्यातम्भाष्यकृता । तत्र प्रत्याख्यानपक्षे 'परमादृति'रित्यत्र पदत्वप्रतिषेधाप्राप्त्या ष्टुत्वनिषेधः । 'उत्तरपदत्वे' इत्यस्यारम्भपक्षे न कार्यित्वनिवेशवादिमतेऽपि 'परमदुहा, परमलिहा इत्यादौ प्रतिषेधप्राप्त्या आरम्भप्रत्याख्यानयोः फलैक्याय 'असर्वनामस्थाने' यचीति सूत्रे सर्वनामस्थानपदमजादिसर्वनामस्थानभिन्नो यः कप्प्रत्ययावधिकस्वादिप्रत्ययस्तद्भिन्नप्रत्ययमात्रपरम्, तथा च अजादिसर्वनामस्थानभिन्नकप्प्रत्ययाव-

इति

अत्रानुनासिकः ( पा० सू० ८।३।२ )॥ अयमधिकारो विधिर्वेति द्वैतम्¹। आद्ये ऽत्रग्रहणमनर्थकम्, अधिकारादेव रुप्रकरणलाभात्। तुशब्दः त्वधिकारपक्षे परस्मात्कार्यिणो विशेषद्योतनार्थः—परस्य नित्यं रुत्वं, पूर्वस्य तु वाऽनुनासिक इति। विधिपक्षे व्यर्थः। वाग्रहणं स्पष्टार्थम्, 'अनुनासिकात्पर' (पा० सू० ८।३।४) इति ज्ञापकादेव सिद्धेः। न हि विकल्पं विनाऽनुनासिकाभावपक्ष इति सम्भवति। इदमेव ध्वनयितुं वृत्तौ तु वेति शब्दौ नोक्तौ॥

---

अनर्थकमिति। इदमुपलक्षणं प्रतिसूत्रमावृत्तौ गौरवं चेत्यपि बोध्यम्। स्पष्टार्थमिति। अनेन तु ग्रहणमधिकारपक्षेऽपि परस्य रुस्ततः पूर्वस्यानुनासिक इत्यर्थस्य स्पष्टं बोधनार्थं वाशब्दवदिति सूचितम्। विधिपक्षे ऽत्रग्रहणं तु एतद्रुप्रकरणे इत्यर्थलाभार्थम्। वस्तुतोऽत्राधिकारत्वमेवोचितम्, 'मतुवसो रुः' (पा० सू० ८।३।१) इति सूत्रे कृतयोः 'वन उपसङ्ख्यानम्' 'विभाषा भवत्' इत्यनयोरुदाहरणे भाष्ये ऽनुनासिकाद्यनुच्चा-

---

ननु सूत्रे ऽत्र ग्रहणसत्त्वे रुप्रकरण एव सम्बन्धो न तु 'ढो ढे लोप' इत्यत्रेति लभ्यते, इत्यनर्थकमित्यसङ्गतमत आह—इदमिति। उपलक्षणम् दोषान्तरस्यापीति शेषः। तदाह—प्रतीति। इत्यर्थस्येति। सूत्रोपात्तविधेयसम्बन्धे सति निराकाङ्क्षप्रतिपत्तिर्भविष्यतीति भावः। विधिपक्षे मूलानुक्तमत्र ग्रहणस्य प्रयोजनं स्वयमाह—विधिपक्ष इति। अत्र केचित्। यद्यप्युभयत्र पाणिनितात्पर्यमिति लभ्यते, तथापि विधित्वमेवोचितम्, सकृद्विधेयबोधकशास्त्रस्य व्यापारेणाकाङ्क्षाशान्त्या लाघवादिति तन्नेत्याह—वस्तुत इति। परममूले रोरित्यस्यैतत्प्रकरणविधेयस्थानिन इत्यर्थः। तेन लोपस्यापि सङ्ग्रहः। इति सूत्रे कृतयोरिति। एतेन यदुक्तमत्र ग्रहणस्य विधित्वपक्षे प्रयोजनन्तथाकल्पनेऽपि दोष एव। यद्यपि 'वन उपसङ्ख्यानम्' इति छान्दस-

---

धिकत्वादिभिन्नप्रत्यये पूर्वं तदादि सुबन्तत्वपदत्वेत्यर्थात् 'परमलिहा' इत्यादौ आरम्भ-प्रत्याख्यानपक्षयोः पदत्वाप्राप्तिवत् परमाट्तिरित्यत्रापि पदत्वाभावेन परमाट्टिरित्यस्यैवेष्टत्वात् कार्यित्वनिवेशफलं चिन्त्यम्। केचित्तु—आरम्भप्रत्याख्यानयो फलभेदादेतादृशानामनभिधानमेवेत्याहुः॥

1 द्वाभ्यां प्रकाराभ्यामितम्—ज्ञातं द्वीतं तत एव स्वार्थेऽणि द्वैतम्—विरुद्धधर्मद्वयप्रकारकज्ञानविषयीभूतम्, सन्दिग्धमिति यावत्।

'अनुनासिकात्' ( पा० सू० ८।३।४ )॥ ल्यब्लोपे पञ्चमीत्याह— *अनुनासिकं विहायेति*। एवञ्च संसर्गवद् विप्रयोगस्यापि विशेषावगतिहेतुत्वादवत्साऽऽनीयतामित्यत्रेव सम्भावितानुनासिक्यगुणक एव उपस्थितत्वादाकाङ्क्षितत्वाच्चावधित्वेन सम्बध्यत इत्यभिप्रेत्याह— *रोः पूर्वस्मादिति*। *अनुस्वारागम इति*। आगमत्वं च परशब्देनैव लभ्यते 'पूर्वौ तु ताभ्यामैच्' ( पा० सू० ७।३।३ ) इत्यत्र पूर्वशब्देनैचोरिवेति भावः॥

'विसर्जनीयस्य' ( पा० सू० ८।३।३४ ) *खरीति*। एतच्च मण्डूक-

---

रणात्। विधित्वे तु तत्र प्रवृत्तिर्दुर्वारैव। अधिकारत्वे तूत्तरत्रैव प्रवृत्तिः। स्पष्टञ्चेदं वृत्ताविति तत्त्वम्॥

ल्यब्लोपे इति। दिग्योगलक्षणा तु न, अत्रानुस्वारपरानुनासिकः पूर्वस्य तु वेति न्यासेन सिद्धौ 'अनुनासिकात्पर' ( पा० सू० ८।३।४ ) इत्यस्य वैयर्थ्यापत्तेरिति भावः। परशब्देनैवेति। प्रसिद्धावेवकारः॥

मण्डूकेति। एकदेशे स्वरितत्वप्रतिज्ञयेत्यपि बोद्धव्यम्। अत एवावसाने

---

न्तथापि विभाषेति लौकिकमपीति तत्र दोष एवेत्याशयः। उत्तरत्रैवेति। अत एवास्य सूत्रस्य 'मतुवसोः' इत्यनन्तरम्पाठः कृतः॥

परशब्दस्य श्रवणेन दिग्योगलक्षणा पञ्चमीति भ्रान्तिवारणायाह—दिग्योगेति। इति न्यासेनेति। नचैवन्न्यासे 'आतोऽटि नित्यम्' इत्यत्राप्युभयसम्बन्धापत्तिः। नचेष्टापत्तिः, 'महाँ इन्द्रः' इत्यस्मिन्तदुदाहरणे ऽनुस्वारानुपलम्भादिति वाच्यम्, एकदेशे स्वरितत्वप्रतिज्ञयेष्टसिद्धेः अवधारणपरत्वे आगमलिङ्गस्य कित्त्वकित्वादेरभावे परशब्द एवागमलिङ्गमिति लभ्यते, तच्चासम्भवि, पूर्वशब्दस्याप्यागमलिङ्गस्य दर्शनादत आह—प्रसिद्धावेवेति।

नन्वेकयोगनिर्दिष्टानामिति न्यायेनावसानपदसम्बन्धोऽपि स्यादत आह–एकदेश

---

( १ ) नानार्थस्थले शब्दार्थविषयकसंदेहे सति संयोगादयो निर्णायकाः, तदुक्तम्:—

"संयोगो विप्रयोगश्च साहचर्यं विरोधिता।
अर्थः प्रकरणं लिङ्गं शब्दस्यान्यस्य सन्निधिः॥ १॥
सामर्थ्यमौचितीदेशः कालो व्यक्तिः स्वरादयः।
शब्दार्थस्यानवच्छेदे विशेषस्मृतिहेतवः॥ २॥

सामर्थ्यम्–विशेषरूपेणोपादानवैयर्थ्यम्–अभिरूपाय कन्या देयेत्यादौ रूपवते एव दानसम्भवात् तदुपादानवैयर्थ्येनाभिरूपतरायेति प्रतीयते। व्यक्तिः=स्त्रील–पुंस्त्वादि।"

प्लुत्या 'खरवसानयोः' (पा० सू० ८।३।१५) इति सूत्रादनुवर्तते। नन्वनुस्वारस्यानच्त्वात्ततः परस्य द्वित्वं न स्यादेवेत्यत आह—*अनुस्वारविसर्गेत्यादि*। *अकारोपरीति*। यदि त्विकारोपरि पठ्येरन् तर्हि 'पयःसु' 'यशःसु' इत्यादौ इणः परस्येति षत्वं स्यादिति भावः। *अच्त्वादिति*। न चैवं हरिः कर्ता, हरिं स्मरेदित्यादौ यणादिप्रसङ्गः, त्रिपादीस्थत्वेन विसर्गादीनामसिद्धत्वात्। *अनुस्वारस्यापि द्वित्व इति*। अपिशब्दात्ककारस्य। *वचनान्तरेणेति*। 'अचो रहाभ्याम्' (पा० सू० ८।४।४६) इति कृतेऽपि 'यणो मयः' इति भवत्येवेति भावः॥

---

न सः। पूर्वेण सन्निकर्षरूपा संहिता त्ववसाने ऽप्यस्त्येव। अत एव संहिताधिकारेऽवसानकार्यपाठः सङ्गच्छते। षत्वं स्यादिति। अत एव पुंस्वित्यादावुकारं निमित्तीकृत्यानुस्वारव्यवधाने षत्वमाशङ्क्य नुम्स्थानिकानुस्वारस्यैव 'नुम्विसर्जनीय' (पा० सू० ८।३।५८) इति सूत्रे ग्रहणान्नेति भाष्यं सङ्गच्छते। इकाराद्युत्तरं पाठे हि अनुस्वारभिन्नं गृहीत्वा षत्वं दुर्वारं स्यादिति भावः। यणादीति। पूर्वसवर्णदीर्घ आदिशब्दार्थः। अयं पाठोऽनित्यः, 'अड्कुपु' (पा० सू० ८।४।२) इति सूत्रे ऽनुस्वारोपलक्षणनुम्ग्रहणात्। अत एव हरिं जयतीत्यादौ 'झलां जश् झशि' (पा० सू० ८।४।५३) इति नेति बोद्धयम्, इति कश्चित्। भवत्येवेति। एकस्य द्वितीयो-

---

इति। ननु संहिताधिकारादेव तत्र न भविष्यतीत्यत आह—पूर्वेणेति। तत्वाकडारीयत्वाद् बाध्यबाधकभावः, संज्ञिभेदात्। एतेन पूर्वमादाय सन्निकर्षसम्बन्धनितम्। अत एव—उक्तरीत्या तयोः समावेशस्येष्टत्वादेव। सङ्गच्छत इति। अन्यथा 'तोर्लि' इत्यादौ पुनस्तस्य सम्बन्धे मण्डूकप्लुत्यापत्तिरिति भावः। अत एव—अयोगवाहानामकारोपरि पाठादेव। दुर्वारमिति। नचैवं सति नुम्ग्रहणवैयर्थ्यमिति वाच्यम्, 'सुहिन्सु' इत्यत्रानिष्टसम्पादकतया तस्य चारितार्थ्यसम्भवात्। आदिशब्दार्थ इति। एतेनानिष्टापत्तौ तात्पर्यमिति भावः। अत्र पूर्वसवर्णदीर्घस्य प्राप्तिः, द्वितीयेत्वच्त्वेऽपि द्विर्वचनत्वविरहेण न दीर्घस्य प्राप्तिः। वस्तुतस्तु प्रथमेऽपि यणादेशस्यैव प्राप्तिर्नतु दीर्घस्य, अल्विधित्वेन स्थानिवद्भावाभावात्। अत एव—अनित्यत्वादेव 'झलां जश् झशि' इति 'झलां जशोऽन्ते' इत्येतद्दृष्ट्याऽनुस्वारस्यासिद्धत्वात्तस्यागः। यदि जश्त्वं स्यात्तदा।

अयोगवाहा विज्ञेया आश्रयस्थानभागिनः।

इति शिक्षोक्तरीत्या तालव्यत्वेन जकारः स्यात्। कश्चिदिति। अनेनारुचिः

*'पुमः खयि'* (पा० सू० ८।३।६) पुंसः संयोगान्तलोपे कृते ऽव-शिष्टभागस्येदमनुकरणम्। *पर्युदासादिति*। 'इदुदुपधस्य' (पा० सू० ८।३।४१) इति षत्वविधायके सूत्रे इति भावः। अप्रत्ययस्य यो विसर्ग इति वैयधिकरण्येन व्याचक्षाणानां प्राचां मतेनेदम्। वक्ष्य-माणरीत्या सामानाधिकरण्येनान्वये तु षत्वप्राप्ताविति बोध्यम्॥

*ख्याञादेश इति*। आदेशो हि उपदेशे ख्शादिः। असिद्धप्रकरणे णत्वानन्तरं ख्शाञः शस्य यत्वं विकल्प्यते। तेन सुप्रख्येन निर्वृत्तं सौप्रख्यं तत्र भवः सौप्रख्यीयः, यत्वस्यासिद्धत्वात् 'धन्वयोपधाद्वुञ्' (पा० सू० ८।२।१२१) इति वुञ्नेत्यादिप्रयोजनान्याकरे स्थितानि। एवञ्च यत्वस्यासिद्धतयाऽम्परत्वाभावात् 'पुमः खयि' (पा० सू० ८।३।६) इति रुत्वं नेत्यर्थः। *पुंख्यानामिति*। चक्षिङो ल्युट्, ख्या-ञादेशः। नन्वादेश इह दुर्लभः, 'वर्जने प्रतिषेधः' 'असनयोश्च' इति वार्तिकादिति चेत्, सत्यम्, 'बहुलं तणि' 'अन्नवधकगात्रविचक्षणा-

---

च्चारणस्यैकेन साधुत्वबोधनं तयोर्मध्ये परस्य द्वितीयोच्चारणस्यान्येन साधुत्वबोधनमिति भावः॥

वक्ष्यमाणरीत्येति। प्रत्ययरूपो यो विसर्ग इति व्याख्यादर्शरीत्येत्यर्थः। वस्तुतस्तदसङ्गतम्, 'कविभिः कृतम्' इत्यादौ दोषापत्तेः। एतच्चान्वये 'तु' इति तुना ऽरुचिबोधकेन सूचितम्। यदा तु सूतेः सस्य षकारोऽ-न्त्यस्य ह्रस्वो म्सुः प्रत्यय इति 'स्त्रियाम्' (पा० सू० ४।१।३) इति

---

सूचिता। तथाहि—अट्कुप्वाङिति सूत्रस्थनुम्ग्रहणस्य प्रत्याख्यानेन ज्ञापकान्तराभावेन चानित्यत्वे न मानम्, भाष्यानुक्तं चानित्यत्वम् 'झलाञ्जश्' इति जश्त्वापत्तिस्तु 'अभ्यासे चर्च' इतिसूत्रसान्निध्येनानन्त्यझल एव ग्रहणेन वारयितुं शक्येति। एक-स्मिन् लक्ष्ये एकस्य शास्त्रस्य पुनः प्रवृत्तौ लक्ष्ये लक्षणमिति न्यायविरोध इत्याह—एकस्येति। एकेन='अचो रह' इत्यनेन। अन्येन='यणो मयः' इत्यनेन॥

एतत्=व्याख्यादर्शोक्तसामानाधिकरण्यम्। एतच्च=असाङ्गत्यञ्च। सिद्धान्त-रीत्या ऽऽह-यदेति। 'सूतेः सप्रसवे पुमान्' इति तत्रोक्तम् सूतेः सस्य प् इति तदर्थः। मूलकारोक्तं योजयति-पातेरिति। ख्याञादेशे नेति नापूर्वं वचनं किन्त्व-र्थसिद्धमिति प्रतिपादयति-मूले-आदेशो हीत्यादिना। बहुलन्तण्यन्नेत्यादि। तणिति संज्ञाच्छन्दसोः संज्ञा। बहुलग्रहणस्य प्रयोजनमाह-अन्नेत्यादि। अन्नादेः

जिराद्यर्थम्' इति वार्तिके बहुलग्रहणात्समाधेयम्। तथा च ख्शादित्वप्रयोजनगणनवार्तिकम्—रुविधिः—पुंख्यानमिति, णत्वम्—पर्याख्यानमिति, निष्ठानत्वम्—आख्यातम् इति च, शकारेण व्यवधानात् 'कृत्यचः' (पा० सू० ८।४।२९) इति णत्वं न, तथा आख्यातमित्यत्र 'संयोगादेरात' (पा० सू० ८।२।४३) इति नत्वन्न, यत्वस्यासिद्ध्या यण्वत्ताविरहात्। एवञ्च 'न ध्याख्या' (पा० सू० ८।२।५७) इति सूत्रे ख्याग्रहणं न कर्तव्यमिति भावः। न च ख्या प्रकथने, इत्येतदर्थं तदिति वाच्यम्, तस्य सार्वधातुकमात्रविषयत्वात्। अत्र च 'सस्थानत्वं नमः ख्यात्रे' इत्युत्तरवार्तिकं प्रमाणम्, सस्थान इति जिह्वामूलीयस्य प्राचां सञ्ज्ञा, स इह न, 'शर्परे विस-

---

सूत्र-भाष्य-कैयटोक्तव्युत्पत्तिस्तदा सस्य लोपे मस्यैव प्रत्ययत्वमिति व्याख्यादर्शोक्तसामानाधिकरण्येऽपि षत्वाप्राप्तिरेव। पातेर्डुम्सुन्निति व्युत्पत्तिमादाय तु मूलमिति दिक्॥

शकारेणेति। यत्वासिद्धत्वादिति भावः। न कर्तव्यमिति। यत्वासिद्ध्या यण्वत्ताविरहेण नत्वाप्राप्तेरिति भावः। अत्र चेति। ख्यातेः सार्वधातुकमात्रविषयत्वे इत्यर्थः। सञ्ज्ञेति। एवञ्च तदुत्तरभावप्रत्ययेन सस्थानशब्द[1] उच्यते। तेन स्ववाच्यो जिह्वामूलीयो वार्त्तिके लक्ष्यते। कुत्वं कस्मान्न भवतीत्यत्रेवेति भावः। क्शादीति पाठे प्रयोगे चर्त्वप्रवृत्तिरिति भावः।

---

क्ते जग्ध्यादेशाभावः। वधकेत्यत्र 'हन्तेर्ण्वुल्' अनेन वधादेशः। गात्रेत्यत्रेणो गादेशः। विचक्षणे ख्याञादेशाभावः। अजिरे व्यादेशाभावो बोध्यः। यत्वस्यासिद्धतयेति। तद्विधायकशास्त्रस्यासिद्धतयेत्यर्थः। एवञ्च—सस्थानशब्दस्य संज्ञारूपत्वे च।

उच्यते इति। संज्ञाशब्दस्थले शब्दस्वरूपस्यैव प्रवृत्तिनिमित्तत्वादिति भावः। एवञ्च। तथा माधवोक्तौ च। ख्यातेः स्वतन्त्रस्येति शेषः। त्रायेत्यस्य प्राप्तेरिति। एवञ्च मूले परस्मैपदग्रहणमात्वस्याप्युपलक्षणम्।

---

१ सस्थानशब्दस्य संङ्केतसम्बन्धेन सस्थानशब्दवत्परत्वात् प्रकृतिजन्यबोधे प्रकारीभूतो भावस्त्वादिप्रत्ययार्थं इति न्यायेन सस्थानत्वशब्दस्य सस्थानशब्द एवार्थः। सस्थानशब्दस्य च केनाप्यविधानात्तदर्थे जिह्वामूलीये लक्षणेति भावः। एवं कुत्वशब्दस्यापि कुशब्दार्थतया लक्षणया कवर्ग इत्यर्थो बोध्यः।

जनीयः' ( पा० सू० ८।३।३५ ) इत्यस्य प्रवृत्तेरिति भावः। यदि स्वतन्त्रोऽपि धातुरार्द्धधातुके इष्येत तदा जिह्वामूलीयस्य दुर्वारतयेदं वार्तिकमसङ्गतं स्यात्। यत्तु — हरदत्त-माधवादिभिरुक्तम् — ख्याधातुरपि खशादिर्यत्वविधिरप्युभयसाधारणइति, तच्चिन्त्यम्, भाष्ये चक्षिङ एवोपक्रमात्, सार्वधातुकेऽपि ख्शादिप्रयोगापत्तेश्च। न चेष्टापत्तिः, माधवेनार्द्धधातुकष्वेवायं ख्शादिरित्युक्तत्वात्, सार्वधातुकेऽनभिधानस्यैव शरणीकर्तव्यत्वापत्त्या गौरवग्रस्तत्वाच्चेत्यास्तां तावत्। स्यादेतत् — बहवः पुमांसोऽस्मिन् कुले बहुपुम् ख्यातीत्यत्र रुत्वं स्यात्। 'उरः प्रभृतिषु' (पा० सू० ५।४।१५० ) पुम्शब्दस्यैकवचनान्तस्यैव पाठान्नेह कप्। सार्वधातुके च ख्यातेः प्रयोगो निर्बाध एवेति चेत्, इष्टापत्तेः। संहिताया अविवक्षायां तु रुत्वं नेति स्पष्टमेव। यत्तु — प्राचा 'ख्याधातौ नेति केचित्' इत्युक्तम्, तत्र यदि ख्याञादेशे इत्यर्थस्तर्हि केचिदित्यनुचितम्, स्वतन्त्रे धातौ चेत्तर्हि सार्वधातुकविषयेऽपि निषेधः स्यात्। न चेष्टापत्तिः, निर्मूलत्वात्।

*चक्रिँस्त्रायस्वेति।* यत्तु — प्राचा त्राहीत्युक्तम्, तत्र परस्मैपदमयुक्तम्, त्रायतेर्ङित्त्वात्। त्रायत इति त्राः स इवाचरेत्यर्थे कर्तरि क्विबन्तादाचारक्विपि वा बोद्धव्यम्। *प्रशानिति।* प्रपूर्वाच्छाम्यतेः क्विप्, 'अनु-

---

इत्युक्तत्वादिति। एवञ्च माधवो नेष्टापत्तिं कर्तुमर्हं इत्यर्थः। अनभिधानस्यैवेति। ख्शादेरनभिधानस्यैवेत्यर्थः। गौरवेति। ख्शादित्वं स्वीकृत्यानभिधानस्वीकारापेक्षया तदस्वीकृत्यैव ख्यातेरार्धधातुकेऽनभिधानस्यैव स्वीकारे लाघवमिति भावः। रुत्वमित्युपलक्षणं जिह्वामूलीयस्य, षत्वस्य च। नमः ख्याति, निःख्यातीत्यादौ॥

त्रायतेर्ङित्त्वादिति। अत्र त्रायते इत्युक्त्या सत्यपि परस्मैपदे त्रायेत्यस्य प्राप्त्या त्राहीत्यस्यासिद्धिः सूचिता। आचारक्विपि वेति। नामधातौ मूलधात्वादेर्ङित्त्वाद्याश्रित्य 'अनुदात्तङित' (पा० सू० १।३।१२) इत्यादेः प्रवृत्तिर्नेत्यभिमानः। अत एव 'त्राहि मां पुण्डरीकाक्ष' इति सङ्गच्छते

---

अभिमान इति। उपदेशे यो ङि तदन्तत्वानपायेनात्मनेपदस्य दुर्वारत्वात्।

नासिकस्य क्वि' ( पा० सू० ६।४।१५ ) इति दीर्घः, 'मो नो धातोः' ( पा० सू० ८।२।६४ ) इति नः, तस्यासिद्धत्वान्नलोपो न ।

नृन्पे ( पा० सू० ८।३।१० ) पकारोपर्यकार उच्चारणार्थः । तेन नॄः पुनातीत्यादि सिद्धम् । 'उभयथर्क्षु' इत्यत 'उभयथा' इत्यनुवृत्तेर्विकल्पः फलित इत्याशयेनाह—रुः स्याद्वेति ।

कुप्वोः । ( पा० सू० ८।३।३७ )॥ सूत्रे खर्परत्वाद्विसर्गः, जिह्वामूलीयस्य खत्वात् । 'खर्परे शरि' इति विसर्गस्य लोपः, जिह्वामूलीयस्य शत्वात् । 'वा शरि' ( पा० सू० ८।३।३६ ) । इति विसर्ग

---

इति भावः । आर्षं तत्र तदित्यन्ये । शाम्यतेरिति । न तु शान तेजने इत्यतः, तस्य पदान्ते नलोपेन नान्तत्वासम्भवादिति भावः । न च 'अप्रशान्' इति पर्युदासेन नान्तग्रहणेन सिद्धे 'नः' इति व्यर्थमिति वाच्यम् । अस्य लक्षणवशसम्पन्ननान्तत्वेन पर्युदासेनापि लक्षणवशसम्पन्ननकारान्तानामेवापत्तेः ॥

ननु 'कुप्वोः' ( पा० सू० ८।३।३७ ) इत्यत्र जिह्वामूलीयस्य खत्वाद्विसर्गे तस्य सत्वे सश्रवणापत्तिरत आह—सूत्रे इत्यादिशत्वादित्यन्तेन । विसर्गलोपश्च सत्वापवादः । एवञ्च सूत्रे निर्विसर्गपाठ इति भावः । सविसर्गपाठेऽप्याह—'वा शरि' ( पा० सू० ८।३।३६ ) इति । स च सत्वापवादः ।

---

अत एव—उक्ताशयादेव । कथन्तर्हि त्राहि मामित्यस्य सिद्धिरत आह—आर्षमिति । नकारान्तानामेवेति । भूतपूर्वेत्यादिः ।

लोपश्चेति । चो ह्यर्थे । एवञ्च—विसर्गस्य लोपे च । अयोगवाहानां वर्णसमाम्नाये पाठे ऽयमेव निर्देशो ज्ञापक इति बोध्यम् । नच जिह्वामूलीयस्यैव पाठो ज्ञापक

---

१ ननु सूत्रे 'अप्रशान्' इति पर्युदाससमर्पके प्रपूर्वकशान्धातोः क्विपि निष्पन्नस्यैव प्रतिपदोक्ततया ग्रहणं कस्मान्नेत्याशङ्कायामाह—नन्विति । तादृशस्य ग्रहणे 'अप्रशान्' इत्यत्र नलोपप्राप्त्या सौत्रनिर्देशासङ्गत्या न तस्य ग्रहणम् । मान्तस्य तु नत्वासिद्धतया नलोपाप्राप्त्या तादृशनिर्देशः सङ्गच्छते । एतेन सम्बोधने नान्तप्रयोगलाभेन 'नान्तत्वासम्भवादित्युक्तिश्चिन्त्येत्यपास्तम्, नान्तत्वासम्भवादित्यस्य सूत्रे नान्तनिर्देशासम्भवादिति तदर्थात् । न च सूत्रे सम्बुद्ध्यन्तस्यानुकरणेन नान्तनिर्देशसम्भवः, नञ्समासानुरोधेन सुबन्तत्वस्यावश्यकतया नलोपस्याशक्यवारणत्वात् ।

अनुकरणस्वरूपभङ्गभिया शास्त्रीयकार्याप्रवृत्तौ तु न मानमिति भावः ।

एव वा। आदेशयोः रूपानुच्चारणार्थौ। चाद्विसर्ग इति। यत्तु—प्राचा चाद्विकल्प इत्युक्तम्, तन्न, ×क×पाभ्यां मुक्ते विसर्गस्य सत्वप्रसङ्गात् ॥

कानाम्रेडिते। (पा० सू० ८।३।१२) ॥ कान् कानिति वाच्ये आम्रेडितग्रहणं यत्र द्विरुक्तिस्तत्रैव यथा स्यादिह मा भूत्—कान् कान् पश्यसि। अत्रैकः किं शब्दः प्रश्ने, द्वितीयः क्षेपे। कान् = कुत्सितान् पश्यसीत्यर्थः।

कस्कादिषु च (पा० सू० ८।३।४८) ॥ अत्र प्राचा विसर्जनीयस्य×क×पौ नेत्युक्तम् नासौ सूत्रार्थः,×क×पयोरस्वरितत्वात्, नञश्चाप्रकृतत्वात्। किन्त्वार्थिकार्थकथनं तदिति ध्वनयन्नाह—×क× पयोरिति। कौतस्कुत इति। कुतः कुतः आगत इत्यर्थे ऽव्ययात्त्यपि

---

'खर्परे' इति च वैकल्पिकमिति भावः। उच्चारणार्थाविति। तयोरुच्चारणस्य तौ विना असम्भवेन नान्तरीयकतया तयोरुच्चारणं न तु तयोर्विधेयत्वम्, किन्तु तन्मात्रे तयोर्लक्षणा, व्याख्यानादिति भावः। चाद्विकल्प इति। निपातानामनेकार्थत्वाच्चशब्दो विकल्पार्थ इति तदाशयः। सत्वप्रसङ्गादिति। चानुकृष्टविसर्गस्तु सत्वापवाद इति नास्माकं दोष इति भावः ॥

---

इति वाच्यम्, एकदेशानुमत्या सर्वेपान्तथात्वे ज्ञापकत्वसम्भवात्। तयोः—जिह्वामूलीयोपध्मानीययोः। तौ विना—कवर्गपवर्गौ विना। असम्भवेन नान्तरीयकतयेति। अन्तराभवमन्तरीयम्. अन्तरीयमेवान्तरीयम् नित्यसमस्तम्, अन्तरा तदभाववति भवं वर्तमानञ्जा तदभिन्नो बोध्यत इति, तदभाववद्वृत्तिभिन्नत्वरूपव्याप्तिलाभ इति भावः। तयोः=कुप्वोः। तन्मात्रे=जिह्वामूलीयोपध्मानीयमात्रे। तयोः=समुदितयोः। ननु समुदायाद्विधेयसमर्पकविभक्तिसत्त्वेन समुदायस्यैव विधेयत्वं कुतो नेत्यत आह—व्याख्यानादिति। लक्ष्यदर्शनमूलकादिति शेषः। प्राचां व्याख्याने बीजमाह—निपातानामिति। स्वमते दोषम्परिहरति—चानुकृष्टेति। मूले—कान् कानिति। आद्ये किम्शब्दप्रकृतिकद्वितीयान्तम्, द्वितीयन्तु कुत्सितार्थककशब्द-

---

१—'सत्य कुप्वोर्विसर्जनीयजिह्वामूलीयोपध्मानीया वक्तव्याः' इति भाष्यवार्तिके जिह्वामूलीयोपध्मानीयमात्रविधानात्, तत्रोदाहृतलक्ष्यदर्शनाच्चेति भावः।

प्राप्ते गणपाठसामर्थ्यादण् । *सर्पिष्कुण्डिकेति* । 'नित्यं समासे' (पा० सू० ८।३।४५) इत्येव सिद्धे इह पाठस्य प्रयोजनं तु तत्रैव वक्ष्यते । *'सेनासुरा' इति* । यदि हि च्छस्य तुक् स्यात् तर्हि च्छस्य चर्त्वे सति चद्वयं स्यात् । सन्निपातपरिभाषया चर्त्वाप्रवृत्तौ तु च्छकारोपरि चकारः श्रूयेतेति भावः ॥

॥ इति हल्सन्धिः ॥

---

गणपाठसामर्थ्यादिति । एतेन पञ्चम्यन्तात्स्वार्थे तसिल्विधानेनाव्ययादुत्सर्गतः प्रथमैकवचनोत्पादेन पञ्चम्यन्तत्वाभावात् "तत आगतः" (पा० सू० ४।३।७४) इत्यर्थे कथमणित्यपास्तम् । 'अव्ययानाम्' इति टिलोपः । सन्निपातेति । असिद्धविषये ऽपि सा प्रवर्तते । यद्वा पूर्वत्र कर्त्तव्ये ऽसिद्धत्वे ऽपि तत्र कृते उत्तरस्यासिद्धत्वे मानाभाव इति नासिद्धत्वेन सन्निपातपरिभाषाप्रवृत्तिप्रतिबन्धः शङ्क्य इति भावः । वैकल्पिकेष्वपि भावानुष्ठानस्यैवौचित्यं फलाधिक्यायेति तात्पर्यम् ॥

इति हल्सन्धिः ।

---

प्रकृतिकद्वितीयान्तम् ॥ मूले—गणपाठेति । अत एव निपातानामव्ययत्वेऽपि ल्यब् न ।

एतेन = समुदायस्य गणे पाठेन । ननु चर्त्वशास्त्रस्य सिद्धतया कथमत्र सन्निपातपरिभाषाप्रवृत्तिरत आह—असिद्धविषयेऽपीति । प्रवर्तत इति । उपजीव्यविरोधस्यान्याय्यत्वमिति लोकन्यायसिद्धत्वन्तस्या इत्यंसिद्धत्वविषये प्रवृत्तौ बाधकाभाव इति भावः । इदञ्च चर्त्वस्यासिद्धत्वात्कथं सन्निपातपरिभाषाप्रवृत्तिरिति शङ्कामात्रेण । वस्तुतस्त्वस्यात्र न प्राप्तिरित्याह—यद्वेति । ननु 'पदान्ताद्वा' इति विकल्पविषयतासत्त्वेन तुगभावेन सौत्रनिर्देशस्योपपत्तौ कथं ज्ञापकतेत्यत आह—वैकल्पिकेष्वपीति इति ॥

श्रीमद्रत्नप्रकाशिकायां हल्सन्धिविवरणम् ।

# अथ विसर्गसन्धिः ।

शर्परे ( पा० सू० ८।३।३५ ) ॥ सत्वादेरयमपवादः । यदि तु शर्परे नेत्येवोच्येत तर्हि प्रकृते सत्वे निषिद्धेऽपि कुप्वोः ᳲकᳲपौ स्याताम्—वासः क्षौमम्, अद्भिः प्सातमिति । विसर्जनीयवचनात्तु विकारमात्रं बाध्यते इत्याशयेनाह—न त्वन्यादिति । तदेव स्फुटयति । इहेति ।

---

नेत्येवोच्येतेति । 'कुप्वोः' ( पा० सू० ८।३।३७ ) इत्यत्रापि चेन सत्वं नेत्येवानुकृष्यमिति भावः । स्याताम्मिति । सत्वनिषेधे 'खरवसानयोः' (पा० सू० ८।३।१५) इति विहितविसर्गस्य सत्त्वादिति भावः । विकारमात्रमिति । तत्सामर्थ्याच्चानेन तस्यैव प्रत्यापत्तावपि न ताविति भावः । एतेनैतद्विहितस्य स्थानेऽपि तौ स्याताम्, किञ्चास्यैव तौ स्यातां 'खरवसानयोः' इति विहितस्य त्वेतयोरसिद्धत्वात् 'विसर्जनीयस्य' ( पा०

---

ननु 'शर्परे' इति सूत्रे विसर्जनीयपदाभावे 'कुप्वोः' इति सूत्रे चाद्विसर्जनीय इत्यस्य कथं लाभः? इत्यत आह—कुप्वोरिति । चकारेण नेत्यस्यानुकर्षः । तत्राभावस्य प्रतियोगिसाकाङ्क्षत्वात्पूर्वसूत्रे यो निषेधः प्रतियोगित्वेन क्लृप्तस्तस्यैवात्रापि प्रतियोगित्वम् । एवञ्च स्थानिनो विसर्गस्यैवावस्थानमिति भावः । ननु नेत्यनेन विसर्जनीयस्य स्थाने प्राप्तं विकारमात्रम्बाध्यतामत आह—सत्वनिषेध इति । येन नाप्राप्तिन्यायेनास्य सत्वमात्रनिषेधकता स्यादिति भावः । विहितस्येति । एतेन 'विसर्जनीयस्य सः' इति सूत्रप्राप्तियोग्यता सूचिता । तत्सामर्थ्यात्=विसर्गस्य विसर्गविधानसामर्थ्यात् । चो ह्यर्थे । अनेन='शर्परे' इति सूत्रेण । तस्यैव=खरवसानयोरिति सूत्रविहितविसर्जनीयस्यैव । प्रत्यापत्तावपीति । प्राप्तस्य विकारस्य निरसनपूर्वकस्वरूपावस्थानेऽपीत्यर्थः । खण्डनकृदुक्तं दोषं परिहरति—एतेनेति । उक्तव्याख्यानेनेत्यर्थः । एतद्विहितस्य=शर्परे इति सूत्रविहितस्य । तौ=जिह्वामूलीयोपध्मानीयौ । एतयोः=उक्तयोः । स्यादिति 'शर्परे' इति सूत्रविहितस्य तु न सत्वप्राप्तिः, अस्यासिद्धत्वादिति भावः । परास्तमिति । अनेन नापूर्व आदेशः क्रियते, किन्तु 'खरवसानयोः' इति विहितस्यैवावस्थानम्बोध्यते । एवञ्च 'कुप्वोः' इत्यस्य 'विसर्जनीयस्य सः' इत्यस्य च 'खरवसानयोः' इति विहितविसर्गादेशत्वमेवेति तदुक्तम्परास्तमित्यर्थः ।

सोऽपदादौ ( पा० सू० ८।३।३८ ) ॥ *अपदाद्योरिति* । सूत्रे तु व्यत्ययेनैकवचनम् । यदि तु खर् विशेष्यतेऽपदादौ खरीति तदा यथाश्रुतं साधु, किं तु 'खरि इति मण्डूकप्लुत्याऽनुवर्त्यमिति क्लेशः । न चानुवृत्तेरुत्तरत्राप्यावश्यकता, खरं विना विसर्गस्य दुर्लभत्वेन तदनुवृत्तेर्निष्फलत्वात् । पाश-कल्प-क-काम्येष्विति वृत्तिः । सम्भव-प्रदर्शनमेतन्न तु परिगणनम्, अन्यस्यासम्भवात् । *प्रातः कल्पमिति* ।

---

सू० ८।३।३४ ) इति सत्वमेव स्यादित्यपास्तम् । अर्थाधिकारेण 'खरव-सानयोः' पा० सू० (८।३।१५) इति विहितविसर्गस्यैवातिदेशाच्च । 'विस-र्जनीयस्य सोऽशर्परे' इति तु न सूत्रं कृतम्, 'वा शरि' ( पा० सू० ८।३।३६ ) इत्यनेन सत्वस्य विकल्पेन सिद्धावपि 'कुप्वोः' ( पा० सू० ८।३।३७ ) इत्यत्राशर्परे इत्यनुवृत्त्या तयोः शर्परे ऽप्रवृत्तावपि 'कुप्वोः' ( पा० सू० ८।३।३७ ) इति सूत्रे चाद्विसर्गलाभानापत्तेः ॥

व्यत्ययेनेति । सौत्रत्वादिति भावः । इति क्लेश इति । किञ्च ÷ पुस्तरेत्यादौ पत्वादिवारणाय 'कुप्वोः' ( पा० सू० ८।३।३७ ) इत्यनुवर्त्य तदन्तर्गते खरीति व्याख्याने सुतरां क्लेश इत्यपि बोद्धव्यम् । अन्यस्यासम्भवादिति । अयं

---

अर्थाधिकारेणेति । प्रकृते शब्दाधिकारे सागाभाव इति भावः । अतिदेशा-च्चेति । 'कुप्वोः' इति सूत्रेणेति शेषः । एवञ्च 'कुप्वो' रिति सूत्रं सत्वापवाद इति यद्यपि, तथापि 'शर्परे' इत्यस्य सूत्रस्य कुप्वोरित्यत्रानुवृत्तिं कृत्वा वाक्यभेदेन शर्परयोः कुप्वोर्विसर्जनीयस्य विसर्जनीय इति व्याख्येयमिति न कोपि दोषः । लाघवानुरोधि-नीमन्यकृतां शङ्कान्निरस्यति—विसर्जनीयस्येति । सत्वस्य विकल्पेनेति । स इत्य-स्यैव विधेयसमर्पकस्य पूर्वत्र सत्वादिति भावः । सिद्धावपि । 'हरिः शेते' 'हरिश्शेते' इत्यादेरित्यादिः । अनुवृत्त्येति । अशर्परयोः कुप्वोरिति व्याख्यानेनेति शेषः । अना-पत्तेरिति । विधेयबोधकविसर्जनीयपदाभावादिति शेषः ।

नच 'कुप्वोः' इति सूत्रे चकारो न पाठ्यः, 'विसर्जनीय' इत्येव पठनीयन्तावतापि लाघवमेवेति वाच्यम्, अशर्पर इत्यत्र प्रसज्ये प्रतिषेधे वाक्यभेदस्यापत्तिः पर्युदासे तु हल्परयोः कुप्वोरित्यर्थस्यापत्तिरिरयनिष्टापत्तेः । एवं मध्यपठितस्य वा शरीत्यस्यापि हल्परशर्य्येव प्रवृत्त्यापत्तावनिष्टापत्तिरिति यथाश्रुतस्यैवौचित्यात् ।

ननु खरीत्यस्यानुवृत्तिपक्षे क्लेशमात्राभिधानस्मूलकारकृतमसङ्गतम्, पूस्तरे त्यत्र दोषस्य स्फुटत्वादत आह—किञ्चेति । आदिना मधः पक्षीत्यादेः सङ्ग्रहः ।

अधिकरणशक्तिप्रधानस्यापि प्रातःशब्दस्येह वृत्तिविषये शक्तिमत्परत्वम्, दोषाभूतमहः, दिवाभूता रात्रिरितिवत्। *गीः काम्यतीति।* इह 'इणः षः' (पा० सू० ८।३।३९) इति षत्वन्न, तत्रापि 'काम्ये रोरेव' इत्यस्यानुवृत्तेः। यदि तु तत्रैवेदं पठ्येत तर्हि षत्वमात्रप्रतिषेधेऽपि पूर्वेण सत्वं स्यात्॥

'इणः षः' (पा० सू० ८।३।३९)॥ पूर्वस्यापवादः। इदं सूत्रम्, 'सः इति च द्वयमपि उत्तरत्रानुवर्तते। यथा सम्भवमिणः परस्य षोऽन्यस्य स इति विवेकः। *पुरः प्रवेष्टव्या इति।* पॄ पालनपूरणयोः 'भ्राजभास' (पा० सू० ३।२।१७७) इत्यादिना क्विप्,

---

भावः। अपदे इत्येव 'कुप्वोः' (पा० सू० ८।३।३७) इत्यनुवर्त्य 'यस्मिन्विधिः' इति परिभाषया कपवर्गादौ अपदे इत्यर्थेन सिद्धे आदिग्रहणमपदस्यैवादिरित्यर्थलाभार्थम्। सेनोरः कायतीति विग्रहे सुबुत्पत्तेः पूर्वं समासे ऽप्युरःकेणेत्यादौ न सत्वम्, आदिग्रहणसामर्थ्येन तलुग्धावधारणेन च पदत्वयोग्यप्रातिपदिकानवयवस्यैव ग्रहणादिति। शक्तिमत्परत्वमिति। अव्ययत्वं तु भूतपूर्वगत्या बोद्धव्यमिति भावः। षत्वं नेति। सत्वं नेत्यपि बोद्धव्यम्। तत्रापि=षत्वविधावपि। एवञ्चात्र पाठात्तत्रानुवृत्तेश्चोभयमपि नेति बोद्धव्यम्।

---

सुतरामिति। मण्डूकप्लुतिप्रयुक्तं सूक्त एव, कुप्वोरिति सूत्रे श्रूयमाणा सप्तमी औपश्लेषिकाधारे ऽस्ति, 'सोऽपदादौ' इति सूत्रे तु सा निर्धारणे इति कल्पनात्कुप्वोरित्यस्यानुवृत्त्या च सुतरामित्यर्थः। मूले–अन्यस्येति। प्रत्ययान्यस्येत्यर्थः। ननु सुबुत्पत्तेः प्राक्समासे 'उरः केऽणः' इत्यत्रान्यस्यापि सम्भवोऽस्तीतीदमसङ्गतमत आह–अयम्भाव इति। नन्वादिग्रहणमपदाद्योः कुप्वोरित्यर्थमस्त्वित्यत आह–तलुग्धेति। सामर्थ्यलब्धेत्यर्थः। 'उरः केणः' इत्येतदवयवककारस्य तु यदि सुबुत्पत्त्यनन्तरं समासः स्यात्तदा पदावयवत्वं स्यादिति सम्भावनया न सत्वमिति भावः। न च पाशबादीनामपि तद्धितान्तप्रातिपदिकावयवत्वमस्त्येवेति तेषामसङ्ग्रहापत्तिरिति वाच्यम्, एवं सति वैयर्थ्यमिति तदारम्भसामर्थ्येन तद्धितान्तप्रातिपदिकभिन्नं यत्पदत्वयोग्यप्रातिपदिकं तदनवयवस्य ग्रहणमित्याशयात्। नन्वीषद्समाप्त्याद्यन्वयाच यदि शक्तिमत्परत्वङ्कल्प्यते तदा कथमव्ययत्वमत आह–अव्ययत्वमिति। ननु रोरेवेति नियमेन षत्ववत्सत्वव्यावृत्तिरपीष्टेति तन्मात्रोपादाने न्यूनतेऽत आह–सत्वमिति।

तदन्ताज्जस्। जसन्ततां स्फुटीकर्तुं पूः पुरावित्युपन्यस्तम्॥

'इदुदुपधस्य' (पा० सू० ८।३।४१)॥ इदुतौ उपधे यस्य समुदायस्य तस्यावयवो यो विसर्जनीय इति वैयधिकरण्येन सम्बन्धः।

समुदायस्येति। 'अलोऽन्त्यात्' (पा० सू० १।१।६५) इति सूत्रे अन्त्यवयवाचकान्त्यशब्देन समुदायस्याक्षेपेण उपधात्वस्य समुदायनिरूपितत्वादिति भावः। इदुदुपधस्य विसर्गान्तस्य पदस्येति सामानाधिकरण्येना-

ननु 'इदुदुपध' इति बहुव्रीहिसमासे ऽन्यपदार्थत्वेन विसर्गस्योपस्थितत्वात्कथं समुदायस्य लाभोऽत आह—अलोऽन्त्यादितीति। एवञ्च विसर्गापेक्षया समुदायस्य शीघ्रोपस्थितिकत्वेन पदार्थोपस्थितिकाले तस्यैवान्यपदार्थत्वं कल्पनीयमिति भावः। लाघवादाह—इदुदुपधस्येति। अन्ये इत्यरुचिस्तु पदाधिकारस्य विशेषणत्वमित्यर्थ-

१ उपधात्वस्य स्वघटकत्व—स्वघटकान्त्यालव्यवहितपूर्वत्वैतदुभयसम्बन्धेन समुदायविशिष्टतया अन्त्यशब्देनाक्षिप्तसमुदाय एवोपधात्वनिरूपक इति भावः।

२ ननु 'इदुदुपधसमुदायावयवो यो विसर्गस्तस्य षत्वमित्यर्थे' 'अयः कुण्डलसोमसुत्' इत्यादावपि षत्वापत्तिरत आह—इदुदुपधस्येति—'सम्भवति सामानाधिकरण्ये वैयधिकरण्यमन्याय्यम्' इति लाघवमूलकन्यायात् सामानाधिकरण्येनैवान्वय इति भावः। अत एव 'स्थपतिर्निषादः स्याच्छब्दसामर्थ्यात्' (मी० ६–६–१–५१) इति जैमिन्युक्तिः सङ्गच्छते। तथाहि—'वास्तुमध्ये रौद्रं चरुं निर्वपेत् यत्र रुद्रः प्रजाः शमयेत्' इत्येतामिष्टिं प्रकृत्योच्यते—

'एतया निषादस्थपतिं याजयेत्' इति निषादस्थपतिं प्रति सन्देहः—किमधिकृतानामन्यतमः, उतान्य एवेति। अन्यतम इति ब्रूमः। स हि समर्थः, विद्वत्त्वादग्निमत्त्वाच्च अन्योऽविद्वत्त्वादनग्नित्वादसमर्थ इति। ननु निषादस्थपतिशब्दस्तत्र नोपपद्यते। उच्यते न नोपपद्यते, निषादानां स्थपतिरिति षष्ठीसमासो भविष्यति, श्रेष्ठो निषादानाम् अत्र श्रेष्ठः शब्दः स्वामिपर्यायः, यद्येऽधिकृताभिप्रायेण निर्धारणषष्ठ्यसम्भवात् 'न निर्धारणे' इति षष्ठीसमासनिषेधाच्च तस्मादधिकृताधिकारमेतच्छास्त्रमिति। एवं प्राप्ते ब्रूमः—स्थपतिर्निषादः स्यात्,

शब्दसामर्थ्यात्। निषाद एव स्थपतिर्भवितुमर्हति, कस्माच्छब्दसामर्थ्यात्। निषादं हि निषादशब्दः शक्नोति वक्तुं श्रवणेनैव। निषादानां स्थपतिं तु लक्षणया ब्रूयात्। (मीमांसकैः समासे शक्त्यस्वीकारात्। षष्ठीतत्पुरुषे पूर्वपदस्य सम्बन्धिनि लक्षणा स्वीक्रियते) श्रुतिलक्षणविषये च श्रुतिर्न्याय्या, न लक्षणा। समानाधिकरणसमासस्तु बलीयान्। तत्र हि स्वार्थे शब्दौ वृत्तौ भवतः। द्वितीया च विभक्तिरतन्त्रेणोभाभ्यां सम्बध्यते। तत्र षष्ठ्यर्थं कल्पयन् अश्रुतं गृह्णीयात् तस्मान्निषाद एव स्थपतिः स्यात् 'लिङ्गदर्शनाच्च' (मी० द० ६–१–५२) लिङ्गं दृश्यते।

कूटं दक्षिणा इति निषादस्य द्रव्यं दर्शयति कूटं हि निषादानामेवोपकारकं नार्याणाम्। एवं स्वसेव तन्निषादानामिति इति शाबरभाष्यम्। तुल्ययुक्त्या लक्षणाश्रयणेन बहुव्रीहिरपि निरस्तः। अनेन सति सम्भवे लाघवात् समानाधिकरण्येनैवान्वय इति स्पष्टमुक्तम्। ननु षष्ठीसमासे, बहुव्रीहौ वा यथा लक्षणाश्रयणे गौरवम्, तथा अत्रैवर्णिकस्यानाहिताग्नेस्तावद्विद्यायामधिकारकल्पनेऽतिगौरवमिति चेन्न, अपूर्वविद्याऽध्यापनस्योत्तरकालकल्प्यत्वेन तादृशगौरवस्य फलमुखतया अदोषादित्यन्यत्र विस्तरः।

'अप्रत्ययस्य' इति तु अप्रत्ययो यो विसर्ग इति सम्बद्ध्यते, सम्भवति सामानाधिकरण्ये वैय्यधिकरण्यस्यान्याय्यत्वात् । न च विसर्गस्य प्रत्ययत्वमप्रसिद्धमिति वाच्यम्, अग्निः करोतीत्यादौ स्थानिवद्भावेन तत्प्रसिद्धेः । न चातिदेशं प्रति त्रिपाद्या असिद्धत्वं शङ्क्यम्, 'अप्रत्ययस्य' इति निषेधेनैव सिद्धत्वज्ञापनात् । अत एवाग्निरित्यादौ रोर्विसर्गः सिद्ध्यति, अन्यथा ऽपदान्तत्वान्न स्यात् । विसर्गविधिस्तु पुनरित्यादौ चरितार्थः । ज्ञापकं च विशेषापेक्षम् ।

---

न्वयः । षत्वन्तु 'अलोऽन्त्यस्य' (पा० सू० १।१।५२) इत्यनेन विसर्गस्येत्यन्ये । व्याख्यादर्शोक्तरीत्याऽऽह–अप्रत्ययो य इति । तत्प्रसिद्धेरिति । विसर्गस्य प्रत्ययत्वप्रसिद्धेरित्यर्थः । न स्यादिति । रोरसुप्त्वेन पदत्वाप्रवृत्तेरिति भावः । चरितार्थ इति । ननु तत्रापि पुनर् स् इत्यवस्थायां जातपदत्वस्यातिदेशेनैव सुलोपे कृते आनयनमिति को विशेषः । न चैकदेशविकृतन्यायेन सिद्धिः, अग्निरित्यत्रापि समत्वात् । न चाग्निरित्यत्रादेशस्यातिदेशलभ्यकार्यस्य चासिद्धत्वम्, अत्र तल्लभ्यकार्यस्यैवेति विशेष इति वाच्यम्, सर्वथा अतिदेशापेक्षणेन तस्याकिञ्चित्करत्वात् । किञ्च[२] रुत्वासिद्धत्वेना-

---

प्रतिपादकभाष्यविरोध इति । लक्षणामकृत्वा सामानाधिकरण्येन सम्बन्धे वक्ष्यमाणदोषापत्तिरत आह–व्याख्यादर्शोक्तेति । रोरसुप्त्वेनेति । अतिदेशाप्रवृत्तावित्यादिः खण्डनकाराद्युक्तिं खण्डयितुं शङ्कते–नन्विति । अतिदेशेन=प्रत्ययलक्षणेन । एवञ्चैतदृष्ट्या खरवसानयोरित्यस्यासिद्धतयाऽतिदेशस्य प्रवृत्तिर्न स्यादिति भावः । लौकिकेन न्यायेन सिध्या शङ्कान्निराचष्टे–नचेति । समत्वादिति । रुत्वस्य सिध्यर्थं प्रवृत्तं यत्पदत्वन्तस्य तेन न्यायेन रेफान्तेऽपि लाभस्य तुल्यत्वादित्यर्थः । एवञ्च ज्ञापकानुपयोग इति तात्पर्यम् । 'अणुरपि विशेषोऽध्यवसायकरः' इत्याशयिकामाशङ्कान्निराचष्टे–नचाग्निरिति । आदेशस्य=रुत्वस्य । अतिदेशलभ्येति । परम्परयेत्यादिः । कार्यस्य=विसर्गस्य । अकिञ्चित्करत्वादिति । यद्यतिदेशस्यापेक्षा न भवेत्तदा ज्ञापकानुसरणाभावो न्याय्यः स्यात्तथा तु नास्तीति भावः । रुत्वासिद्धत्वेनेति । पदसंज्ञाप्रयोजकशास्त्रदृष्ट्येत्यादिः ।

---

१ लौकिकन्यायेनैव सिद्धौ 'अप्रत्ययस्य' इत्यनेन स्थानिवत्सूत्रदृष्ट्या त्रिपाद्या नासिद्धत्वम्, इति ज्ञापने फलाभाव इति भावः ।

२ ननु स्वप्रवृत्तये सिद्धे आदेशे अतिदेशं प्रवर्त्य चरितार्थो विसर्गविधिरतिदेशदृष्ट्या असिद्धे

कारहकारयोर्लोपः, तकारस्य ढत्वञ्च निपात्यते, न त्वसिद्धकाण्डस्थढत्वस्येह प्रवृत्तिः, 'दादेर्धातोः' ( पा० सू० ८।२।३२ ) इति घत्वेन बाधात्। न च इडभावो ढत्वञ्च निपात्यतां घत्वष्टुत्वढलोपास्तु भविष्यन्त्येवेति वाच्यम्, तथा सति परिदृढय्येत्यत्र 'ल्यपि लघुपूर्वात्' ( पा० सू० ६।४।५६ ) इति णेरयादेशो न स्यात्। पारिदृढीकन्येत्यत्र 'अणिञो' ( पा० सू० ४।१।७८ ) इति ष्यङ् च स्यात्, ढलोपस्यासिद्धत्वेन गुरूपोत्तमत्वादिति भाष्ये स्थितम्। यत्तु—प्राचा व्याख्यातं दृंहेरेवेदं निपातनम्, दृह वृद्धाविति तु प्रकृत्यन्तरम्, तस्य निष्ठायामागमशास्त्रस्यानित्यत्वादिडभावे 'वा द्रुह' (पा० सू० ८।२।३३ ) इत्यत्र 'वा' इति योगविभागात् पक्षे घत्वाभावे ढलोपे च प्रत्युदाहरणमिदं द्रष्टव्यमिति, तन्न, उभयोरपि निपातना-

---

द्युक्तिरेव, 'न पदान्ताः परेऽणः सन्ति' इति 'लण्' सूत्रस्थभाष्यविरोधाच्च।

इडभावो ढत्वञ्चेति। चेन नलोपसङ्ग्रहः। ढलोप इति। 'ढो ढे लोप' ( पा० सू० ८।३।१३ ) इत्येतद्दृष्ट्या ष्टुत्वन्तु नासिद्धम्, सामर्थ्यादिति भावः। भाष्ये स्थितमिति। 'दृढः स्थूल' ( पा० सू० ७।२।२० ) इति सूत्रे शेषः। द्रष्टव्यमितीति। ष्यङि णेरयाभावे चेष्टापत्तिरिति भावः। उभयोरपीति। त्वद-

---

देश्युक्तिरित्यर्थः। भाष्यान्तरसंवादादपि तस्यैकदेश्युक्तित्वमित्याह—न पदान्ताः परेण इति। अत्रेदम्बोध्यम्, अनेन सूत्रेण लघ्वलघूच्चारणयोर्लोपः क्रियते यदि हलीति प्रकृतसूत्रे नोच्येत तदा 'देवा इह' इत्यत्रालघूच्चारणस्य यस्य लोपः स्यादित्याशयेन परममूले—'हलि किम् देवायिह' इत्युक्तम्। लोपः शाकल्यस्येति सूत्रन्तु 'देवा इह' इत्यत्र लघूच्चारणस्य यस्य लोपविधायकत्वेन चरितार्थम्। एतद्विषये यकारस्य यत्र वैकल्पिको लोपस्तत्रैतद्विषयकशास्त्रारम्भान्नित्यो लोपो हल्ग्रहणाभावेऽपि न प्रवर्तत इति। एतेन वैकल्पिकलोपविषये नित्यलोपस्वीकारे विकल्पस्य वैयर्थ्यापत्तिरिति परास्तम्॥

भाष्ये स्थितमित्यत्र भाष्ये 'ढ्रलोपे' इति सूत्रस्थङ्ग्राह्यमिति भ्रमानुत्पत्तये आह—दृढः स्थूलेतीति। द्रष्टव्यमिति योक्तिः सा दृढ इति प्रक्रियोक्तप्रत्युदाहरणस्योपपादनाय प्रसादस्य, तस्माद्दृढशब्दाण्णौ ततो ल्यपि 'ल्यपि लघुपूर्व' इति सूत्रमेव प्रवर्तते इति। तदभिप्रेतमित्याह—अस्येति। मते इति शेषः। एतेनेयमुक्तिरप-

भ्युपगमात्। तदाह वामनः—अथ दहिः प्रकृत्यन्तरमस्ति तस्याप्येतन्निपातनं नलोपवर्जमिति। युक्तश्चैतत्, अन्यथा हि अस्माद् णेरच् न स्यात्, ष्यङ् च स्यात्।

*उत्वमेवेति।* सिद्धासिद्धयोरतुल्यबलत्वेन 'विप्रतिषेधे परम्' (पा० सू० १।४।२) इत्यस्याप्रवृत्तौ निष्प्रतिपक्षत्वादुत्वमेव भवतीत्यर्थः। तदुक्तम्—'पूर्वत्रासिद्धे नास्ति विप्रतिषेधोऽभावादुत्तरस्य' इति, एतेन विभक्तिकार्यं प्राक्, पश्चादुत्वमत्वे, इत्यादि व्याख्यातम्।

सूत्रे सु इति पृथक्पदं लुप्तषष्ठीकमित्याह—*एतत्तदोर्यः सुरिति।* एतत्तदर्थगतसङ्ख्याभिधायी यः सुस्तस्येत्यर्थः। एतत्तदोर्विहित इति

---

वलम्बभूतेन वृत्तिकृतेति शेषः। तदाह—वामन इति। अत्रारुचिबीजन्तु दहेर्नकारहकारलोपार्थमिति भाष्यविरोधः। अनिदितो दहेस्तु दहितमित्येवेष्यत इति कैयटविरोधश्चेति। किञ्च—प्रसादोक्तरीत्या दहेरपि इडभाववढत्वयोः सिद्धाविण्निषेधप्रकरणे दढ इति निपातनस्य व्यर्थत्वमित्यलम्।

अभावादुत्तरस्येति। आहार्याभावारोपादित्यर्थः।

---

सिद्धान्ता इति ध्वनितम्। अत एवाह—त्वद्वलरुचेति। अत्रारुचीति। वामनोक्तावरुचिबीजन्त्वित्यर्थः। भाष्यविरोध इति। नकारहकारलोपार्थमित्युपादानेऽनिदितो न निपातनमिति स्पष्टमेवेति भाष्यविरोध इत्यर्थः। वामनेन—उभयोरपीति यद्यप्युक्तम्, तथापि प्रक्रियाकृता तथा नोक्तम्, अत स्वस्योभयोरपीति नेष्टमिति प्रसादानुयायिशङ्कां वारयति—किञ्चेति। अलमिति। योगविभागस्याप्रमाणत्वानित्यत्वस्य चाप्रमाणत्वम्। सर्वावलम्बभूतदढस्थूलेतिभाष्यविरोधश्चेत्यस्यार्थः।

ननूत्तरस्याभावादित्यसङ्गतमष्टाध्याय्यान्ततत्सत्त्वोपलम्भादत आह—आहार्येति। 'पूर्वत्रासिद्धम्' इति शास्त्रप्रामाण्यादिति शेषः। वस्तुतो विद्यमानेऽपि शास्त्रे इच्छाया प्रतियोगितासम्बन्धेनाभाव आरोप्यत इति तस्याभावज्ञानस्याहार्यत्वम्।

---

१ 'एतत्तदोः' इत्यत्र सम्बन्धे षष्ठी, स च सम्बन्धो न स्थानपदार्थनिरूपितः, असम्भवात्, किन्तु प्रत्यासत्त्या सुपपदार्थनिरूपित एव। स च नानन्तर्यस्वरूपः, तस्य षष्ठीवाच्यत्वाभावात्। नचानन्तरादिपदाध्याहारेण तदर्थनिरूपितः, 'रामः स गच्छति' इत्यादौ तच्छब्दाव्यवहितपूर्वस्य सोर्लोपापत्तेः। न च परपदाध्याहारेण तदर्थनिरूपितसम्बन्ध एव षष्ठ्यर्थः इति नोक्तदोषः, दिग्वाचकपदयोगे पञ्चम्या एव विधानेन षष्ठ्यसम्भवात्। नच सम्बन्धसामान्ये षष्ठीं विधाय परपदार्थनिरूपितसम्बन्धे लक्षणा, 'सुपां सुलुक्' इत्यत्र सुपां सुविधानेन विभक्तौ लक्षणाया निरस्तत्वात्। न च 'छन्दोवत् सूत्राणि भवन्ति' इति 'वृद्धिरादैच्' (पा० सू० १-१-१) इतिसूत्रस्थभाष्यप्रामाण्याच्छान्दसत्वात् 'व्यत्ययो बहुलम्'

व्याख्याने तु परमस ददाति, परमैष ददातीत्यादौ न स्यात् । अर्थद्वारकसम्बन्धाश्रयणे लिङ्गन्तु 'अनञ्समासे' इति बोध्यम् ।

*अकोःकिमिति* । साकच्कयोः शब्दान्तरत्वादप्रसङ्ग इति प्रश्नः । एषक इति । 'अकोः' इति प्रतिषेध एव 'तन्मध्ये पतितस्तद्ग्रहणेन गृह्यते' इति परिभाषां ज्ञापयतीति भावः ।

---

लिङ्गमिति । विहितविशेषणे, तद्वैयर्थ्यं स्पष्टमेवेति भावः ।

---

तद्वैयर्थ्यम्—अनञ्समासग्रहणवैयर्थ्यम् । तद्धि 'असः शिवः' इत्यादौ लोपाभावार्थं कृतम् । यद्यत्र विहितविशेषणं स्यात्तदाऽसोस्तच्छब्दाद्विधानाभावेन लोपाप्राप्त्या तद्वैयर्थ्यं स्पष्टमेव । वस्तुतस्तु विहितपदाध्याहारेण तद्योगे पञ्चमीकल्पनायामक्लृप्तकल्पनापेक्षया ऽनन्तरपदाध्याहारेण तन्निरूपितसम्बन्धे षष्ठीत्येवोचितमत एवात्र 'इतिभाव' इत्युक्तम् । इदमेवानञ्समासग्रहणम् 'नञ्समास उत्तरपदार्थप्रधान' इत्यत्र ज्ञापकम् । अन्यथा नञर्थाभावस्य विशेष्यत्वे उत्तरपदस्योपसर्जनत्वेन त्यदाद्यत्वाप्रा-

---

(पा० सू० ३-१-८५) इति पञ्चम्यर्थे षष्ठी 'सोऽपि मन्ये पतितः स्यात्' इत्यादिभाष्यप्रयोगाच्चाव्यवहितपरत्वस्यैव ग्रहणेन 'स ब्राह्मणो गच्छति' इत्यादौ ब्राह्मणपदोत्तरसोर्लोपाभावोऽपि सिद्धयतीति वाच्यम्, वासुदेववाचकाशब्दघटिते 'स स् अः' इत्यत्र सोरुत्वे गुणे पूर्वरूपे च 'सोगंच्छति' इति प्रयोगे पूर्वान्तवद्भावेन पूर्वरूपविशिष्टे सोशब्दे तच्छब्दत्वेन सोशब्दाव्यवहितोत्तरसोर्लोपापत्तेस्तादवस्थ्यात् । एतेनान्तरादिपदाध्याहारेऽपि हलव्यवहितपूर्वत्वविशिष्टस्यैतच्छब्दानन्तरस्य सोरेतच्छब्दात्परस्यैव सम्भवेन तत्साहचर्यात् तच्छब्दादपि परस्यैव सोर्ग्रहणेन 'रामः स गच्छति' इत्यादौ न दोषः । इत्यपास्तम् । तस्मात्तदर्थमाह–एतत्तदर्थगतेति–तथा च स्वार्थगतसङ्ख्याभिधायित्वं षष्ठ्यर्थः इति भावः । नन्वेवमपि 'सोर्गच्छति' इत्यत्र दोष एव तत्र तच्छब्दार्थस्य अशब्दार्थस्य चाभेदेन अपदोत्तरसोरपि तच्छब्दार्थभूतो यो वासुदेवरूपोऽर्थः तद्गतसङ्ख्याभिधायित्वादिति चेन्न, एतत्तत्पदविशिष्टस्य सोर्लोप इत्यर्थेन सर्वदोषोद्धारात् । वै. स्वान्तपर्याप्तप्रयोजकतानिरूपितप्रयोज्यतावद्बोधीयधर्मितानिरूपितसङ्ख्यानिष्ठप्रकारताप्रयोजकत्वसम्बन्धेन । 'सोः' इत्यत्र 'बुद्धिविशेषविषयतावच्छेदकत्वोपलक्षितधर्मावच्छिन्नाभिन्नो वासुदेवः' इति बोधेन पदार्थयोरैक्येऽपि प्रयोजकभेदेन प्रयोजकताया भेदात् तत्पदपर्याप्तप्रयोजकतानिरूपितप्रयोज्यतावद्बोधीयवासुदेवत्वावच्छिन्नधर्मितानिरूपितसङ्ख्यानिष्ठप्रकारताप्रयोजकत्वस्य तत्पदविहितसोरेव सत्त्वेन अपदविहितसोर्लोपाप्राप्तेः । पर्याप्तत्वनिवेशेन 'तत्कल्पम्' गच्छति इत्यादावपि न दोषः, बोधीयधर्मितायास्तत्पदपर्याप्तप्रयोजकतानिरूपितप्रयोज्यतावत्त्वाभावात् । यद्वा एतत्तद्विशिष्टस्य सोर्लोप इत्यर्थः।वै.–स्वाव्यवहितोत्तरत्व-स्वार्थगतसङ्ख्याभिधायित्व-स्वनिष्ठोद्देश्यतानिरूपितविधेयतावत्त्वैतत्रितयसम्बन्धेन । यत्तु–एतत्तत्पदविशिष्टस्य सोर्लोपः, वै. स्वाव्यवहितोत्तरत्व–स्वार्थतावच्छेदकावच्छिन्नधर्मितानिरूपितसङ्ख्यानिष्ठप्रकारताप्रयोजकत्वमित्युभयसम्बन्धेन । 'सोः' इत्यत्र अपदोत्तरसोः तत्पदार्थतावच्छेदकबुद्धिविशेषविषयतावच्छिन्नधर्मितानिरूपितसङ्ख्यानिष्ठप्रकारताप्रयोजकत्वमस्तीति तन्न, तत्पदजन्यबोधीयधर्मितायाः बुद्धिविशेषविषयतावच्छिन्नत्वासम्भवात्, उपलक्षणीभूतस्य तद्धर्मस्य बोधीयविषयताया अनवच्छेदकत्वादिति दिक् ।

बहुलग्रहणेति । अत एव लोपं विना पादपूरणेऽपि क्वचिद्भवति । सास्मा अरम्, सः अस्मै इति च्छेदः ।

इति स्वादिसन्धिः

इति पञ्चसन्धिप्रकरणम् ।

---

सास्मा अरमिति । सोऽस्मा अरमिति सन्धावपि पादपूर्तेः । न च 'प्रकृत्यान्तः पादम्' (पा० सू० ६।१।११५) इति पूर्वरूपस्याभावेन न पादपूर्त्तिः । 'सोऽयमागात्' इत्यादाविवात्रापि प्रातिशाख्येन सिद्धेः । एवञ्चावधारणपरतया न व्याख्येयम् । 'सोऽहमाजन्म' इत्यादौ बहुलग्रहणेन क्वचिदप्रवृत्त्याऽपि सिद्धेरिति तात्पर्यम् ॥

इति भट्टोजिदीक्षितपौत्रहरिदीक्षितकृते मनोरमाव्याख्याने लघुशब्दरत्ने पञ्चसन्धिप्रकरणम् ।

---

त्या हल्ङ्यादिलोपस्य दुर्वारतया तद्वैयर्थ्यमेव स्यात् । पूर्वरूपस्येति । अवादेशस्य चेत्यपि बोध्यम् । इत्यादाविवेति । अत्र यथा 'अव्यादवद्यादवक्रमुरव्रतायमवन्त्ववस्युषु च' इति सूत्रप्राप्तस्य प्रकृतिभावस्याभाववदित्यर्थः । केचित्तु 'सो ऽहमाजन्म' इत्यादिसिध्यर्थमवधारणपरतया व्याख्याने 'सस्मा अर' मित्यत्र सुलोपानापत्तिः यदि बहुलग्रहणानुवृत्त्यैव तत्साध्यते, तदा तेनैव सो ऽहमाजन्मेत्यादेरपि सिद्धाववधारणपरतया व्याख्यानस्य वैयर्थ्यमित्याहुः, तन्न, छन्दस्यभावदर्शनेन लौकिके प्रयोगे शास्त्राप्रवृत्तिकल्पनमन्याय्यमित्याशयात् । किञ्च ÷ लोके लोपे सत्येव पादपूरणे लोपो भवति नान्यत्रेत्यर्थस्य स्पष्टप्रतिपत्त्यर्थमत्रावधारणपरतया व्याख्यानं प्राचामनुरोधेन कृतम् । वस्तुतो बहुलग्रहणेनैव सर्वेष्टसिद्धाववधारणपरतया व्याख्यानन्न कार्यमित्याह— एवञ्चेति । बहुलग्रहणेनोक्तप्रयोगसाधने चेत्यर्थः । अस्य तात्पर्यमित्यत्रान्वयः । सिद्धेरिति । लोपाभावस्य सो ऽहमाजन्मेत्यादौ सिद्धेरित्यर्थः । तात्पर्यमिति । अत एवेति वदतो मूलकृत इति शेषः । एवञ्च परममूलस्याचामनुरोधेनैतदेव ध्वनयितुं तत्र सत्येवेत्यवधारणन्त्विति 'तु' शब्दो ऽरुचिबोधक उपात्त इति बोध्यम् ।

इति श्रीमदगस्त्यकुलवंशावतंससर्वपण्डितसार्वभौमभवदेवमिश्रात्मजभैरवमिश्रकल्पितायां रत्नप्रकाशिकायां पञ्चसन्धिविवरणम् ।

# अथाजन्तपुँल्लिङ्गप्रकरणम् ।

*अर्थवदधातुः । प्रत्ययं प्रत्ययान्तञ्चेति* । सूत्रे तन्त्रादिना उभयं विवक्षितमिति भावः । तथा हि—प्रत्ययस्यैव पर्युदासे 'कृत्तद्धित' इति सूत्रेण तद्धितान्तस्य संज्ञाविधानं व्यर्थं स्यात् । न च तत्रापि तदन्तञ्च ग्राह्यमिति वाच्यम्, 'अर्थवत्' इत्यनुवृत्तिसामर्थ्यात्तदन्तग्रहणात् । प्रशंसायां हि मतुप् । एकार्थीभावेन लौकिके प्रयोगे प्रसिद्धत्वञ्च

व्यर्थं स्यादिति । न च 'अस्यापत्यम्' 'इः' इत्यादौ प्रत्ययत्वप्रयुक्तनिषेध-बाधनेन तच्चरितार्थम्, 'अ अस् इ' इत्यवस्थायां प्रवृत्तसंज्ञाया 'एकदे-शविकृत'न्यायेन सुलभत्वात्। एकार्थीभावेनेति । न चैतत्प्रत्ययमात्रस्य,

सूत्रे तन्त्रादिनेति । सकृदुच्चरितः शब्दोऽनेकार्थपरो यत्र तत्र तन्त्रेति व्यव-हारः । उभयम्=प्रत्ययपदस्प्रत्ययान्तपरमित्येतदुभयम् । तद्धितान्तस्येति । कृद्ग्र-हणन्तु लिडित्यादौ धातुपर्युदासात्प्रातिपदिकसंज्ञासिद्धये आवश्यकमिति भावः । नचा-त्रापि लिह् क्विवित्यवस्थायां जातायाः संज्ञाया एकदेशविकृतन्यायेन लिह् इत्यत्र सौलभ्यमिति वाच्यम्, फलाभावेन तदानीमप्रवृत्तेः, परत्वान्नित्यत्वादन्तरङ्गत्वाच्चापृक्त-लोपस्य प्राक्प्राप्तेश्च । वस्तुतः 'इदन्तद्धितग्रहणमत्र नियमार्थम् , कृद्ग्रहणन्तु प्रतिषि-द्धार्थम्', 'भिद्' छिदित्यत्र निषेधस्य प्रसङ्गात्, इति कैयटेनोक्तम् कृत्तद्धितग्रहणं निय-मार्थमिति भाष्यव्याख्यावसरे, इति तदनुरोधेन यथोद्देशपक्षाश्रयणे तु कृद्ग्रहणमपि तदन्तप्रतिषेधे ज्ञापकमेव । इत्यादाविति । आदिना अधुनेत्यस्य सङ्ग्रहः । असहाय-तया व्यपदेशिवद्भावेनास्य तद्धितान्तत्वम्, कृत्तद्धितेति तु साजात्याल्लब्धम् । इत्य-वस्थायामिति । तदा तादृशसमुदायस्य प्रत्ययभिन्नतया तद्धितग्रहणं विनापीष्ट-सिद्धेः । वस्तुतोऽत्र सूत्रे ऽधातुग्रहणमप्रत्ययग्रहणञ्च न कार्यम् , कृत्तद्धितग्रहणन्तु धातोः प्रत्ययान्तस्य चेत्कृत्तद्धितान्तस्यैवेति नियमार्थन्तेनेष्टसिद्धेरिति । एकदेशवि-कृतन्यायेनेति । शास्त्रीयेन स्थानिवद्भावेनेत्यर्थः ।

न चेति । न हीत्यर्थः । एतत्—प्रशस्तार्थवत्त्वम् । प्रत्ययमात्रस्य=केवलकृत्त-द्धितमात्रस्य । एवञ्च तत्र तदन्तविधिलाभार्थमुपात्तनियमार्थन्तयोरुपादानमिति कल्प-

(१) वस्तुतस्तु—अर्थविकारे अर्थाधिकविकारे तद्बाधकाभावात्तन्न्यायाप्रवृत्त्या आनुमानिकस्थान्या-देशभावमादाय प्रातिपदिकत्वमुपपाद्यम् ।

प्रशंसामूलम्। न च 'अर्थवत्' इत्यस्य पूर्वसूत्रे चरितार्थता, धातुप्रत्ययपर्युदासेनैव तल्लाभात्। तस्मात्प्रत्ययान्तं च वर्जयित्वेत्युचितमेव।

---

तन्मात्रे एकार्थीभावाभावादिति भावः। एकार्थीभावश्च ÷ यस्य प्रातिपदिकसंज्ञा चिकीर्षिता तन्मात्रवृत्तिरेव ग्राह्यः, तेन 'पञ्चनावप्रियः' इति समासघटकपञ्चनावेत्यस्य तद्धितान्तत्व-समासत्वयोरपि न प्रातिपदिकत्वम्, प्रियशब्दान्त एव तत्रैकार्थीभावो न तु तन्मात्र इत्यदोषात्। न

---

नायान्तु न प्रशस्तार्थवद्विषयको नियमः, किन्तु वृत्त्याऽर्थबोधकत्वमर्थवत्त्वमेव पूर्वसूत्रे धातुप्रत्ययपर्युदासाद्विवक्षितन्ताद्दशार्थवद्विषयकमेव, अत एव भाष्ये–'अप्रत्ययः' इति किम्? 'काण्डे' 'कुड्ये' अप्रत्यय इति शक्यमवक्तुम्, कस्मान्न भवति काण्डे कुड्ये इति? कृत्तद्धितग्रहणं नियमार्थम्भविष्यति, कृत्तद्धितान्तस्यैव प्रत्ययान्तस्य प्रातिपदिकसंज्ञा भवति नान्यस्य' इति नियमप्रदर्शनेनाप्रत्ययग्रहणप्रत्याख्यानं सङ्गच्छते। तन्मात्रे=प्रत्ययमात्रे। भावाभावादिति। अर्थवद्वितीयाभावादिति शेषः। यत्तु 'वाग्दृषद्प्रियः' इत्यादौ तद्धितान्तस्य प्रातिपदिकत्वापत्तिमुद्भाव्य सुप्राग्वर्तितद्धितान्तमात्रस्याप्रयोगेण प्रशस्तार्थवत्त्वाभावान्न दोष इति समाधानम्, तत् तु न युक्तम्, सुप्प्रकृतिमात्रस्य कृत्तद्धितान्तस्य क्वापि प्रयोगस्यादर्शनेनासम्भवापत्तेः। यदि त्वर्थबोधकवृत्तिप्रकृतिकसुबन्तसमुदायघटकत्वमित्यर्थस्तदा 'वाग्दृषद्प्रियः' इत्यादावप्यस्त्येव तत्, इत्यतिप्रसङ्गवारणासम्भवः, कृत्तद्धितमात्रेऽपि भवदुक्तस्यार्थबोधकवृत्तिप्रकृतिकसुबन्तसमुदायघटकत्वस्य सत्त्वेनैताद्दशार्थकरणेऽपि तदन्तग्रहणालाभश्च स्यात्। वाग्दृषदमिति समाहारे टजन्तस्य प्रयोगदर्शनाच्च, काल्पनिकस्य तस्याविशिष्टत्वाच्च। तन्मात्रवृत्तिरेवेति। प्राशस्त्यार्थकमतुप्प्रत्ययबलादेतल्लभ्यते। तद्धितान्तत्वेति। समासान्तानामलौकिकविग्रहवाक्यावयवत्वसिद्धान्तेन टजन्तस्य तद्धितान्तत्वस्य समाससंज्ञाप्युत्तरपदनिमित्तिकाऽस्तीति समासत्वस्य च सत्त्वमिति भावः। एतेन समासग्रहणकृतनियमेनाव्याप्तिः सूचिता।

नचैकार्थीभावो ऽर्थवत् द्वितीयसत्त्व एव, प्रकृते तु टचो निरर्थकतया कथन्तदन्ते एकार्थीभावस्य सत्त्वमिति वाच्यम्, तस्यानर्थकत्वेऽपि तत्प्रकृतेरर्थवत्त्वेन तत्रैकार्थीभावस्य सत्त्वेन टचस्तादृशसमुदायावयवत्वात्तत्राप्येकार्थीभावस्य सत्त्वमित्याशयात्। अत एव बहुगोमत्केत्यादावपि कबन्ते एकार्थीभावव्यवहारः। नचार्थवद्वितीयसत्त्व एव चेदेकार्थीभावव्यवहारस्तदाऽत्यन्तस्वार्थिककान्ते कथमेकार्थीभावव्यवहार इति वाच्यम्, तस्यार्थवत्तद्धितान्ततुल्यतया आरोपेण तन्मात्रेऽप्येकार्थीभावस्य व्यवहारात्। न प्रातिपदिकत्वमिति। अतस्तादृशटजन्तान्न टाप्, यदि तु यस्य समुदायस्य टिदन्तत्वन्तदर्थम्प्रत्युपसर्जनस्य एव ङीपोऽप्रवृत्तिरित्याश्रीयते तदा ङीबापत्तिरपि

यदि तु प्रत्ययो न पर्युदस्येत तर्हि 'सात्पदाद्योः' इति सूत्रे सातिग्रहणं च क्विबन्ते दोषः, तत्र धातोरेव विशिष्टार्थबोधकत्वेन अर्थवद्द्वितीया-

दोषः। एतेन 'अधातुरतिप्प्रातिपदिकम्'. तिबिति सुपः पकारेण प्रत्याहारः, तन्त्रेण तिपन्तिवन्तञ्च वर्जयित्वेत्यर्थः। समासश्चेति द्वितीयसूत्रम्। यद्वा ऽविभक्तिप्रातिपदिकम्, समासश्चेत्येवास्त्विति परास्तम्, उक्तदोषापत्तेः। किञ्च ÷ तिप्प्रत्याहार आद्यन्त्यासे प्रत्यासत्त्या सिपः पकारेण गृह्येतेति थसाद्यन्ते ऽतिव्याप्तिः। व्याप्तिन्यायश्चेद्विवक्षित-स्तदा कपः पकारेण तदापत्तिः। एवञ्च टाबादिकबन्तानाम्प्रातिपदिकत्वाय तद्धितस्त्री-प्रत्ययग्रहणङ्कार्यम्। टापष्टाशब्दमारभ्य कपः पकारेण प्रत्याहारेण टाब्ग्रहणं वा कार्य-मिति गौरवम्। वक्ष्यमाणरीत्या दश दाडिमानीत्यादिसमुदायस्य व्यावृत्तयेऽर्थवद्ग्रहण-स्याऽवश्यकत्वाच्च। किञ्चाहन्नित्यस्य वक्ष्यमाणरीत्या ऽतिबन्तत्वेन तत्र नलोपापत्ति-वारणायाधातुग्रहणमप्यावश्यकम्।

केचित्तु वृत्तिमदर्थवत् प्रातिपदिकमित्येव लक्षणं कार्यम्। एवञ्च सूत्रद्वयाकरणेन लाघवम्। अर्थवदित्यत्र मवदुक्तम्प्रशस्तार्थवत्त्वं विवक्षितमतो न 'पञ्चनावप्रियः' इत्यादौ दोषः। नचाव्युत्पन्नानां प्रातिपदिकसञ्ज्ञा न स्यादिति वाच्यम्, सर्वत्र प्रकृत्यादिकल्पनेन व्युत्पन्नत्वस्यैव कल्पनात्। यद्यपि पचतकीत्यादिभ्य एवं सति सुबुत्पत्तिः प्राप्नोति, तथाप्येतादृशानां नपुंसकत्वाभ्युपगमेन सुपां लुका सिद्धम्। नचैवमेधतके इत्यादौ नपुंसकह्रस्वापत्तिरिति वाच्यम्, 'सप्तम्यधिकरणे च' इति ज्ञापकेन विभक्त्यन्तप्रातिप-दिकस्य ह्रस्वत्वाभावज्ञापनात्। 'सुपो धातु' इति सूत्रे प्रातिपदिकपदोपादानमात्रेण सिद्धे धातुग्रहणेन धात्वर्थविशेष्यकवृत्तौ प्रातिपदिकत्वाभावस्य ज्ञापनाच्च। न चैवस्प-चतिकल्पमित्यादौ प्रातिपदिकसंज्ञा न स्यादिति वाच्यम्, धात्वधिकारीयप्रत्ययान्त-वृत्तौ प्रातिपदिकत्वाभावस्य ज्ञापनात्। 'भोक्तुं पाकः' इत्यादौ धात्वधिकारीयप्रत्यय-सत्त्वेऽपि धात्वर्थविशेष्यकबोधाजनकतया न क्षतिः। सर्वत्र व्युत्पत्तिपक्षस्यैवाङ्गीकारेण निपातस्यानर्थकस्येति वार्तिकमपि न स्वीकार्यमित्याहुः तन्न, वृत्तिपदस्य कृदन्तादि-बोधकतया तद्वत्त्वस्य तत्र वक्तुमशक्यत्वात्। किञ्चैको 'द्वौ' 'बहवः' इत्यादाविवा-न्वितार्थकविभक्तिकल्पनापेक्षयाऽनुवादकविभक्तेन्र्याय्यतया पचतकः पचतकीत्या-दिभ्यो द्विवचनबहुवचनयोरेवोत्पत्त्या लुका तयोरपहारासम्भवेन श्रवणापत्तेः, किञ्च— विभक्त्यर्थप्रधानस्य लिङ्गसंख्याभ्यां योगो नास्तीत्यस्य भाष्यसम्मतत्वेन पचतीत्यादि-भ्यः परस्य सोर्लुकापहारस्य वक्तुमशक्यत्वाच्च। किञ्च सप्तम्यधिकरणे चेति निर्देशेन सामान्यतो विभक्त्यन्तप्रातिपदिकस्य ह्रस्वत्वन्नेति कल्पनेऽन्तरङ्गानपीति न्यायेन प्रति कुलमित्यादौ पूर्वं सुपो लुकि ह्रस्वत्वानापत्तिः। किञ्च ÷ 'पुत्रीयति' इत्यादौ क्यजन्तस्य धातुसञ्ज्ञया सुपो लुग्भवति, तस्य धात्वधिकारीयप्रत्ययान्तत्वन्तु नास्तीति धातुग्रहणस्य

व्यर्थं स्यात्। 'अर्थवत्' इति किम्? धनं वनमित्यादौ प्रतिवर्णं संज्ञा

भावेन पृथगर्थानामेकोपस्थितिजनकत्वरूपैकार्थीभावाभावादिति वाच्यम्, अलौकिके वाक्ये कल्पितैकार्थीभावस्य तत्राप्यारोपेणादोषात्। व्यर्थं

चारितार्थ्येन ज्ञापकत्वासम्भवः। यदि च वृत्तिमदित्यत्र व्यपदेशिवद्भावेन वृत्तेर्वृत्तिमत्त्वम्मतुपस्त्यागेन वृत्तिरित्येवाश्रीयते तदा प्राथमिकदोषोद्धारेऽपि टिघुभादिशब्दस्याव्युत्पन्नत्वेनैपाऽप्रातिपदिकसञ्ज्ञानापत्तिरिति दिक्॥

तेनेत्यनेनोक्तमर्थं स्पष्टप्रतिपत्तये आह–प्रियशब्दान्त एवेति। तत्र 'पञ्चजावप्रियः' इत्यादौ अयम्प्रियशब्दान्तनिष्ठैकार्थीभाव एवोत्तरपदनिमित्तकद्विगुप्रयोजकः, न तु नौशब्दान्ते अन्यस्यैकार्थीभावस्य स्वीकारः, वृत्तिधर्माणामेकार्थीभावफलानाम्प्रियशब्दान्तनिष्ठेन तेनैवोपपत्तेरिति भावः। प्रियशब्दान्ते इत्यस्य प्रियशब्दप्रकृतिकसुबन्ते इत्यर्थः। अदोषादिति। प्रशस्तार्थवत्त्वानापतिरूपदोषाभावादित्यर्थः। दोष इति। प्रातिपदिकसञ्ज्ञाया अप्राप्तिरूपदोष इत्यर्थः। दोषमुपपादयति—तत्रेत्यादिना धातोरेवेति। 'यः शिष्यते' इति न्यायेनावशिष्टः श्रूयमाणो लिहृइत्यादिशब्दे एव लेहनकर्त्रादिबोधके इति भावः। अलौकिके वाक्ये लिह क्विबित्यत्र अस्य वाक्यत्वञ्च शक्तशब्दसमुदायत्वरूपम्, तस्यार्थबोधनात्र प्रयोगाभावेन नैकोपस्थितिजनकत्वस्य सद्भावोऽत आह–कल्पित इति। तत्र = लुप्तक्विबन्ते। अदोषादिति। वास्तविकस्य विशिष्टार्थबोधकत्वस्य तत्राभावेन प्रातिपदिकत्वाभावापत्तिरूपदोषाभावादित्यर्थः।

---

१ यत्किञ्चित्पदजन्यपृथगुपस्थितिविषयार्थकत्वेन लोके दृष्टानां शब्दानां विशिष्टविषयैकशक्त्यैवोपस्थितिजनकत्वमेकार्थीभाव इति फलितोऽर्थः। नन्वेवम् 'औपगवः' इत्यादावेकार्थीभावासिद्धिः, वृत्तिघटकप्रत्ययस्य पृथगर्थानुपस्थापकत्वादिति चेन्न, यत्किञ्चिच्छक्तिविशिष्टत्वमेकार्थीभावत्वमिति स्वीकारेण्णादोषात्, वै०–स्वपर्याप्त्यधिकरणघटितत्व–स्वनिरूपकेतरनिरूपितशक्तिपर्याप्त्यधिकरणघटितत्व–स्वज्ञानप्रयोज्यज्ञानविषयीभूतशक्तिपर्याप्त्यधिकरणत्वैतत्त्रितयसम्बन्धेन। शक्तिपदेन वृत्तिघटकपदनिष्ठा शक्तिर्ग्राह्या। यथा 'राजपुरुषः' इति वृत्तौ राजपदनिष्ठराजत्वावच्छिन्ननिरूपितशक्तिपर्याप्त्यधिकरणराजपदघटितत्वम्। स्वम्–राजपदनिष्ठा राजत्वावच्छिन्ननिरूपिता शक्तिस्तन्निरूपको राजरूपोऽर्थस्तदितरः पुरुषरूपोऽर्थस्तन्निरूपिता शक्तिः पुरुषपदनिष्ठा 'तत्पर्याप्त्यधिकरणं पुरुषपदं तद्घटितत्वं तस्याः, राजपदनिष्ठशक्तिज्ञानप्रयोज्यज्ञानम्–राजपुरुषत्वावच्छिन्ननिरूपितशक्तिज्ञानम्, तद्विषयीभूता शक्तिविशिष्टशक्तिस्तत्पर्याप्त्यधिकरणत्वञ्च तत्रास्तीति लक्षणसमन्वयः। लिडित्यादावपि लेहनत्वावच्छिन्ननिरूपितशक्तिमादाय लक्षणसमन्वयः। तथा हि–लेहनत्वावच्छिन्ननिरूपितशक्तिपर्याप्त्यधिकरणं लिडिति, 'लिह आस्वादने' इत्युक्ते ,लेहनत्वावच्छिन्ननिरूपितशक्तिमत्त्वात्, स्वनिरूपकेतरः कर्तृरूपोऽर्थस्तन्निरूपितशक्तिपर्याप्त्यधिकरणं लिडित्येव, 'यः शिष्यते स लुप्यमानार्थाभिधायी' इति न्यायात् तत्पर्याप्त्यधिकरणघटितत्वं व्यपदेशिवद्भावेन लेहनत्वावच्छिन्ननिरूपितशक्तिज्ञानप्रयोज्यशक्तिज्ञानं लेहनकर्तृत्वावच्छिन्ननिरूपितशक्तिज्ञानं तद्विषयशक्तिपर्याप्त्यधिकरणत्वमपि तत्रेत्यदोषः।

मा भूत् । तस्याश्च सत्यां स्वादयः स्युः । ननु सङ्ख्याकर्मादेरभावात् न भविष्यन्तीति चेन्न, 'एकवचनमुत्सर्गतः करिष्यते' इति सिद्धान्तात् हुं—फडादिभ्य इव सोर्दुर्वारत्वात् । न च अर्थवद्ग्रहणपरिभाषयाऽन-

स्यादिति । अनेन प्रत्ययपर्युदासे मानमुक्तम् । सातेः प्रातिपदिकत्वे हि तत औत्सर्गिकैकवचने तस्यापि सुबन्तत्वेन पदत्वे पदादित्वादेव निषेधसिद्धेस्तद्वैयर्थमिति भावः । सोर्दुर्वारत्वादिति । तस्य च समुदायप्रातिपदिकत्वेन तदवयवत्वाल्लुक् । समुदायसंज्ञा चान्तरङ्गत्वादवयवेभ्यः प्रातिपदिकत्वात्सुपि सति प्रवर्तते, इति तस्य तदवयवत्वमक्षतम् । पचति, ध्वनतीत्यादौ नावयवानां सा, धातुप्रत्ययान्तपदयोस्तदवयवपरत्वेन तत्र

एतेन यदेकार्थीभावेनेत्यादिमूलोक्तमनूद्य, तन्न, 'औपगवो वृक्षः' इत्यादौ सुब्विशिष्टस्यैव तथात्वेनाव्याप्त्यापत्तेः । किञ्च—समासग्रहणं व्यर्थम्, वाक्ये एकार्थीभावविरहेण तस्य नियमार्थत्वायोगात् । किञ्च—'भोक्तुम्' 'भुक्त्वा' 'शुक्लतरः' 'पाचकतमः' इत्यादावव्याप्तिः, तुमुन्नन्तादेः प्रत्ययान्ततया ऽस्य सूत्रस्य, अप्रशस्तार्थवत्वेनाग्रिमसूत्रस्य चाप्राप्तेः । एकार्थीभावः स्वार्थिकेषु नेति हरदत्तग्रन्थे स्पष्टम् । तस्मात्सूत्रद्वयसाधारणं यदन्वय-व्यतिरेकाभ्यां प्रत्ययभिन्नत्वे सति अर्थप्रत्यायनयोग्यत्वमप्रशस्तार्थवत्त्वमिति रत्नाकरोक्तन्तदपास्तम् ।

प्रशस्तसमीपत्वेनारोपितप्रशस्तार्थवत्त्वस्य औपगवादौ सुबरहिते सत्वात्, समासग्रहणस्य नियमार्थत्वमप्येवमेवोपपादनीयम् । अनेन व्यर्थं स्यादित्यन्तग्रन्थेन सातेरुपादानेनापूर्ववचनकल्पनापेक्षया क्लृप्तप्रत्ययपदस्यावृत्तावेव तस्य तात्पर्यग्राहकत्वं युक्तमिति भावः । औत्सर्गिक इति । सङ्ख्याकर्मादेरभावादित्थमुक्तम् । तस्यापीति । सातेरपीत्यर्थः । अपि प्रकृतिसमुच्चायकः । नचैवम्प्रकृतिप्रत्यययोः समासापत्तिः, बहुचश्छित्त्वसामर्थ्येन प्रकृतिप्रत्यययोः समासाभावस्य कल्पनात् । इति भाव इति । मूलकारस्येति शेषः । एवमभिधानेनारुचिर्ध्वनिता, सा वस्तुतस्त्वित्यादिना ऽग्रे स्फुटा । तस्य च सोश्च, न केवलेति निषेधविषयतायाः सत्त्वेन सोरुत्पत्तिरुचितैवेति भावः । प्रातिपदिकावयवत्वन्तस्योपपादयति—समुदायेत्यादिना । एतेन प्रत्येकं सोरुत्पत्तौ तच्छ्रवणापत्तिरिति दूषणम्परिहृतम् । नन्वेवन्तत्र लुक्प्रवृत्ता-

१ वस्तुतस्तु—अवयवशक्त्यसहकृतसमुदायशक्त्या बोधकवृत्तिस्थले रथन्तरादौ, वाक्यशक्तिनये वाक्ये च दोषवारणाय कृत्तद्धितसनादिसमासैकशेषान्यतमविधायकशास्त्रप्रयोज्यसाधुत्वसमानाधिकरणशक्तिविशेषरूप एवैकार्थीभाव इति बोध्यम् ।

२ 'गौः' इत्यत्र 'यावद् गकारे वाक् न तावदौकारे' इति भाष्येण, अनुभवेन च समुदायापेक्षयाऽवयवस्य प्रथमोपस्थितत्वेनान्तरङ्गत्वात्प्रातिपदिकत्वम् । तदाह—समुदायसंज्ञा चेति । अस्य प्रवर्तते इत्यत्रान्वयः ।

र्थके न स्यादिति वाच्यम्, तस्या विशिष्टरूपोपादानविषयत्वात् ।

तन्निषेधात् । तस्मादव्युत्पन्नप्रातिपदिकावयवेभ्यस्तदुत्पत्तिरापाद्या । धन-शब्दस्य धिनोतेर्धनमिति व्युत्पत्तिपक्षे तु वनाद्युदाहरणं बोद्धयम्, ध्वनितश्चेदं भाष्यकैयटयोः । तस्मान्नलोपाद्यापत्तिर्दोषः । इदमव्ययेभ्य इव तेभ्योऽपि सुप एकवचनाभ्युपगमेन । यदि तु तदुत्पत्तिः सत्येव गमके, यथाऽव्ययेभ्य उत्पत्तौ 'अव्ययादाप्सुपः' इति गमकम्, नान्यत्र, 'एकव-चनम्' इति महासञ्ज्ञाकरणात् । प्रकृते तु न तथा गमकम् । अत एव 'ङ्याप्' ( पा० सू० ४।१।१ ) इति सूत्रे प्रातिपदिकाधिकाराभावे तिङन्ते-भ्यस्तदुत्पत्तिमाशङ्क्यैकत्वादीनामुक्तत्वान्नेति समाहितं भाष्ये, त्वद्रीत्यौ-

वपि धात्ववयवादुत्पन्नस्य श्रवणापत्तिरत आह-पचतीति । तन्निषेधादिति । प्राति-पदिकसञ्ज्ञाप्राप्तिनिषेधादित्यर्थः । अत्र धात्ववयवादुत्पन्नस्यापि लुकापहारस्तु नोक्तः, अधातुरिति पर्युदासात् । प्रत्ययावयवस्याप्येवं श्रवणापत्तिः । समुदायस्य प्रातिपदि-कावयवत्वन्तु न, 'अप्रत्यय' इति पर्युदासात् । न च यदि धातुप्रत्ययपदयोस्तदवयवे लक्षणा, तदा तयोरेव निषेधो न स्यादिति वाच्यम्, प्रागुक्तकृत्तद्धितग्रहणकृतनिय-मेन तयोर्वारणात् । तस्मात् = व्युत्पन्ने उक्तरीत्या दोषवारणात् । आपाद्या = आपादनार्हा । एतेन भाष्योक्तं धनं वनमिति प्रत्युदाहरणमेतयोरव्युत्पन्नत्वाभिप्रायेणेति ध्वनितम् । व्युत्पत्तिपक्ष इति । अत्र ह्येवं व्युत्पत्तिर्यास्केनोक्ता, वनशब्दे तु नोक्ता । अत एव वनशब्द एव दोषस्य मुख्यतया भाष्ये प्रथमतस्तल्लेखः । इदम् = अव्युत्पन्ने एव दूषणमित्येतत् । ध्वनितमिति । एतस्यैवोदाहरणत्वप्रदर्शनेन ध्वनितमित्यर्थः । नलोपाद्यापत्तिरिति । अत्रादिपदेन वनशब्दे वकारस्य 'लोपो व्योः' इति लोपापत्तिः, धनशब्दावयवधिकारस्य जश्त्वापत्तिश्च दोषः । इदम्=प्रतिवर्णम् प्रातिपदिकसंज्ञापत्तौ सुबुत्पत्त्यापत्तिरूपं दूषणम् ।

अभ्युपगमेनेत्युक्तिसूचितमर्थं स्पष्टप्रतिपत्तये आह–वस्तुतस्त्विति । अत्र यदीति क्वचित्पाठः । तदुत्पत्तिः=सुबेकवचनोत्पत्तिः । अत्र सुबिति कथनेन सप्तानामपि विभक्तीनामेकवचनानीति पक्षः सूचितः । इदमुपलक्षणम्–औत्सर्गिकैकवचनस्यापि । अन्यत्रानुत्पत्तौ हेतुमाह–एकवचनमिति । महासञ्ज्ञाकरणमन्वर्थत्वाय । यदि गम-काभावेऽपि तदुत्पत्तिः स्यात्तदा महासञ्ज्ञाकरणमनर्थकं स्यादिति भावः । एवमर्थनिय-मादिप्रकारत्रयं वक्ष्यमाणमपि सत्येव गमके इति च बोध्यम् । प्रकृते = धनं वन-मित्यादौ । अत एव = गमकं विना त्वदनुत्पत्तेरेव । त्वद्रीत्या=साधकाभावेऽप्यौ-त्सर्गिकैकवचनोत्पत्तिरिति प्रकारेण । अत एव प्रकृतसूत्रे भाष्ये– निपातस्यानर्थकस्य प्रातिपदिकसञ्ज्ञा वक्तव्या, खञ्जति, निखञ्जति, लम्बते, प्रलम्बते, किम्पुनरत्र प्रातिप-

'अधातुः' इत्यादिपर्युदासबलेन यद्यप्यर्थवत्त्वं लभ्यते, तथाऽपि उत्सर्गिकमेकवचनं दुर्वारमेव।

अत एवाग्रे भाष्येऽर्थवत्पदस्य दश दाडिमानीत्यादिपदसमुदायो निरर्थको व्यावर्त्यत्वेन प्रदर्शितः। तत्र हि 'सुपो धातु' इत्यस्य प्राप्तिरिति तदेवास्य मुख्यं व्यावर्त्यम्। पचतः कल्पमित्यादौ तत्प्रवृत्तौ रूपस्सूत्रस्थं भाष्यं गमकम्। समासग्रहणकृतनियमस्तु अर्थवत्समुदायविषयक[1] इति भाष्ये स्पष्टमिति न तेनास्य व्यावृत्तिरिति दिक्।

दिकसञ्ज्ञया प्रार्थ्यते प्रातिपदिकादिति स्वाद्युत्पत्तिः सुबन्तमिति पदसंज्ञा 'पदस्य पदात्' इति निघातो यथा स्यात्। नैतदस्ति प्रयोजनम्, सत्यामपि प्रातिपदिकसञ्ज्ञायां स्वाद्युत्पत्तिर्न प्राप्नोति, किङ्कारणम्? न हि प्रातिपदिकसञ्ज्ञायामेव स्वाद्युत्पत्तिः प्रतिबद्धा, किन्तर्ह्येकत्वादिष्वप्यर्थेषु स्वादयो विधीयन्ते न चैषामेकत्वादयः सन्ति' इत्यादिमुक्तम्। अत एव च प्रकृतसूत्रशेषे भाष्ये–'काण्डे' 'कुड्ये' इत्यत्र पूर्वान्तवत्त्वेन प्रातिपदिकत्वाद्ध्रस्वत्वमाशङ्क्य' 'ह्रस्वो नपुंसके प्रातिपदिकस्य' इति न्यासान्तरेण तद्वारणम्प्रदर्शितञ्च तु तत्र सुबुत्पत्तिर्दर्शिता। उक्तार्थे साधकान्तरमाह–अत एवेति। प्रातिपदिकावयवा नामव्यावर्त्यत्वादेव। एतेनार्थवदिति व्यपदेशाय वर्णानाञ्चा सूदित्युपक्रमभाष्यमेकदेश्युक्तिरिति सूचितम्। निरर्थकः=परस्परान्वितार्थबोधाभावेन निरर्थकः। मुख्यमिति। इदमपि यथाश्रुतरीत्या। वस्तुतस्तु वक्ष्यमाणसिद्धान्तरीत्या प्रत्ययस्य, 'पञ्चगवधनः' इत्याद्येकदेशस्य पञ्चगवेत्यादेश्च व्यावर्त्यत्वमस्त्येव।

ननु 'पचतः कल्पम्' इत्यादौ गमकाभावेऽपि स्वाद्युत्पत्तिवद्धनाद्यवयवादपि स्यादेवेति कस्यचिच्छङ्कां वारयति–पचत इति। भाष्यङ्गमकमिति। तत्र हि–'पचतः कल्पम्' इत्यादौ लिङ्गसङ्ख्यायोगाभावादमोऽभावमाशङ्क्य 'क्रियाप्रधानमाख्यातम्' क्रिया चैका, न द्वित्वादिमती, तिङन्ताद्भेदानवगतेः, क्लीबत्वञ्च स्वभावादिति समाधाय 'पचतः' इत्यादौ द्विवचनानुपपत्तिमाशङ्क्य साधनापेक्षत्वेन समाधाय, कल्पबाद्यन्तात्सुबुत्पत्त्यभावमाशङ्क्य 'एकवचनमुत्सर्गतः करिष्यते' 'तस्य द्विबह्वोरर्थयोर्द्विवचनबहुवचने अपवादौ भविष्यतः' इति तत्रोक्तम्। अयम्भावः तिङन्ताद्भेदानवगमेऽपि शब्दशक्तिस्वभावात्स्वगतैकत्वमादाय कल्पबाद्यन्तादौत्सर्गिकमेकवचनम्भवति, तेषामभावे तु साधनापेक्षन्द्विवचनादि भवति द्व्यादिभ्यस्तु नौत्सर्गिकैकवचनम्, किन्तु न केवलेति समयपरिपालनायानुवादकविभक्तिर्भवति। अत एव बहुषु द्वयोरेकस्य निर्जां त्रयाणामित्यादिनिर्देशाः सङ्गच्छन्ते। अन्यत्र त्वौत्सर्गिकैकवचनमेवेति। ननु 'दशदाडिमानि षडपूपाः' इत्यादिसमुदायस्य समासग्रहणकृतनियमेन वारणम्भविष्यतीत्यत आह–

1 अर्थवान् यः समुदायस्तद्विषयक इत्यर्थः। दश दाडिमानीत्यादिसमुदायस्तु नार्थवानिति न तेनास्य व्यावृत्तिरिति भावः।

रार्थं तदित्युक्तम् । एतच्च 'सुप्तिङन्तम्' (पा० सू० १।४।१४) इति सूत्रे भाष्ये ध्वनितम् । यत्त्वाहुः—पर्युदासो नार्थवत्त्वं गमयति, अनर्थकयोरपि धातुप्रत्यययोर्दर्शनात् । अधीते, यावकः इति अधिपूर्वस्यैवेङः प्रयोगात् विशिष्ट एव अर्थवान्, न तु केवलः, इङ् अध्ययने इत्याद्यर्थनिर्देशस्तु अवयवे समुदायार्थारोपात् । एवं कन्नप्यनर्थकः,

पयप्यर्थवत्त्वमिति । व्याख्यानादर्थवत्त्वेनैव साहश्यं गृह्यत इति भावः । उक्तमिति । एतेनेदमुक्तमेव पुनर्दार्ढ्यायोच्यत इति सूचितम् । भाष्ये इति । एवं हि तत्र भाष्यम्—'अर्थवदिति वर्त्तते, कृत्तद्धितान्तं चैवार्थवत्, न केवलाः कृतस्तद्धिता वेति' 'कृत्तद्धित—इति सूत्रेऽन्तग्रहणं न कार्यम्' इति । 'अर्थवद्ग्रहणानुवृत्तिसामर्थ्यादेव येदशार्थलाभः' इति कैयटः । समुदायार्थारोपादिति । तेन तन्मात्रस्य क्रियावाचित्वनिबन्धनधातुत्वसिद्धिरिति

समासेति । अर्थवत्समुदायेत्यादि । ननु पूर्वसूत्रे पर्युदासबलादर्थवत्त्वलाभादर्थवत्पदाभावे ऽग्रिमसूत्रे तदसम्बन्धादनर्थको योऽसूर्यादिसमासस्तस्य प्रातिपदिकसञ्ज्ञार्थञ्च समासग्रहणमिति कथमर्थवत्समुदायविषयकत्वन्तस्येति, चेन्न, असूर्यमित्यादेः समाससञ्ज्ञासिद्ध्ये ज्ञापकाश्रयणमावश्यकं, तत एव प्रातिपदिकसञ्ज्ञाया अप्यनुमानम्भविष्यतीति तत्र समासग्रहणमर्थवत्समुदायविषयकमित्याशयात् । तल्लाभश्च नियमस्य सजातीयापेक्षत्वेन भवति । दिगिति । दिगर्थस्तु वस्तुतस्त्वित्यादिनोक्त एव ।

नन्वधातुरिति पर्युदासादर्थवत्त्वेन सादृश्यलाभ इति कुतः असत्त्वार्थकत्वेनापि सादृश्यसम्भवादत आह—व्याख्यानादिति । बहुलक्ष्यसंस्कारमूलकाद्व्याख्यानादित्यर्थः । यतो अत्रार्थवत्त्वेन सादृश्यं विवक्षितमतः 'सुप्तिङन्तं पदम्' इति सूत्रस्थ भाष्यमपि सङ्गच्छते । 'तस्मिन्' सूत्रे ऽन्तग्रहणेन सञ्ज्ञाविधौ प्रत्ययग्रहणे तदन्तग्रहणंनेति ज्ञापनोत्तरं—'कृत्तद्धितसमासाश्च' इत्यन्तग्रहणङ्कर्तव्यम्, न कर्तव्यम्, अर्थवदिति वर्तते, न केवलाः कृतस्तद्धिता वा' इति भाष्ये उक्तम् । तत्रान्वयव्यतिरेकगम्यार्थवत्ता केवलानामपि कृत्तद्धितानामस्तीति 'न केवला' इत्यसङ्गतमित्याशङ्कायाम् 'अर्थवद्ग्रहणानुवृत्तिसामर्थ्याल्लौकिकार्थप्रत्यासन्नो ऽभिव्यक्ततरो यो ऽर्थः प्रत्ययान्तेषु लक्ष्यते स आश्रीयते' इति कैयटेनोक्तम् । तत्र सामर्थ्यवर्णनमनुवृत्त्यभावेऽपि तस्य लाभश्चेद्भवति तदा धातुपर्युदासात्तस्य लाभो भविष्यतीति तदभिप्रायकमेवेति । इत्युक्तमित्येतावन्मात्रकथनेऽपि पौनरुक्त्यभावो न लभ्यत इत्यत आह—एतेनेति । तेन=आरोपेण

१ अनर्थकनिपातस्य प्रातिपदिकसञ्ज्ञाविधानाय 'अनर्थकस्य प्रातिपदिकसञ्ज्ञा वक्तव्या' इति वार्तिकमूलादित्यर्थः ।

यावच्छब्दादपि तदर्थप्रतीतेः। 'ओषधेश्च विभक्तावप्रथमायाम्' 'अकर्तरि च कारके' इति विभक्तिकारकग्रहणाभ्यां 'नञिवयुक्त' न्यायस्यानित्यत्वकल्पनाच्चेति। अत्रेदं वक्तव्यम्—धातुरनर्थक इति तावद्व्याहतम्, क्रियावाचकत्वं विना धातुत्वायोगात्। आरोपितं तदिति चेत्, सत्यम्, तावतैवेष्टसिद्धेः। प्रकृतिप्रत्ययविभागस्तत्तदर्थविभागश्च

भावः। तत्=क्रियावाचकत्वम्। तत्तदर्थविभागश्चेति। तस्य तस्येति कृतद्विर्वचनेन[1] षष्ठीसमासे, स सोऽर्थविभाग इति कर्मधारये वा विभक्तिलुकि इदं साधु। एतेनान्यान्यप्रादुर्भावादिति 'अपादाने पञ्चमी' (पा० सू० २।३।२८) इति सूत्रस्थभाष्यप्रयोगोऽपि व्याख्यातः। सुबन्तत्वमपि द्विःप्रयोगपक्ष इव स्थाने द्विर्वचनपक्षेऽप्याद्यान्यशब्दे प्रकृतित्वबुद्ध्याऽन्त्यस्-

तन्मात्रस्य=इद्मात्रस्य ननु तदर्थस्येव वाच्यं, तावतैव प्रक्रान्तयोः प्रकृतिप्रत्यययोर्बोधसम्भवेन तत्तदर्थेति वाच्यम्, न च स्पष्टम्प्रकृतिप्रत्यययोर्बोधनाय द्वन्द्वनिर्देशोऽयमिति वाच्यम्, एकशेषप्रसङ्गादत आह—तस्येति। कृतद्विर्वचनेन वीप्सायामित्यादिः। षष्ठीसमासे अर्थविभागशब्दस्यार्थशब्दस्य वेति शेषः। एकदेशान्वयापत्तिभिया आह—स स इति। अत्रापि स स इति वीप्सायामेव द्विर्वचनम्। इदम्=तत्तदर्थविभाग इति पदम्। उक्तरीत्या साधुत्वे उपष्टम्भकं सूचयन्नाह—एतेनेति। उक्तप्रकारेणेत्यर्थः।

ननु प्रत्ययग्रहणपरिभाषया कृतद्विर्वचनस्य षष्ठ्यन्तत्वसुबन्तत्वयोरभावात्कथं षष्ठीसमासस्य, कर्मधारयस्य वा प्रसक्तिरत आह—सुबन्तत्वमपीति। अपिना षष्ठ्यन्तत्वपदत्वयोः परिग्रहः। द्विःप्रयोगपक्ष इवेति। यद्यपि समासग्रहणकृतनियमेन समुदायस्याप्रातिपदिकत्वन्तथापि कस्कादिगणे कौतस्कुत इत्यस्य पाठेन तद्धितोत्पत्तिर्भवतीति ज्ञापनवदाद्योच्चारणविषये यस्माद्विहितस्तत्वबुद्धिः अन्त्यस्यशब्दादौ सुप्त्वषष्ठीत्वबुद्धिरित्यपि कल्पनीयम्, उक्तापादाने 'पञ्चमी' इतिसूत्रस्थभाष्यप्रयोगादिति यथेत्यर्थः। वस्तुत उक्तप्रयोगाभ्यां स्थाने द्विवचनपक्ष एव ज्ञाप्यतामित्याशयेनाह—

[1] 'नित्यवीप्सयोः' इत्यनेन द्वित्वे तस्य तस्य अर्थः 'तद् अस् तद् अस् अर्थ स्' इति विग्रहे तत्तदर्थः तस्य विभागस्तत्तदर्थविभागः, इति षष्ठीसमासे साधु। न च द्वित्वनिष्पन्नसमुदाये षष्ठ्यन्ततदादित्वाभावात् समासाभावः, स्थाने द्विर्वचनपक्षे स्थानिवद्भावेन तत्त्वस्य लाभात्। नच स्थाने द्विर्वचने सुपो लुगनापत्तिरादेशघटकस्यासः सुप्त्वे मानाभावादिति वाच्यम्, अनस्तमितावयवकभेदस्यैवादेशत्वेन सुपो लुकि बाधकाभावात्। न च द्विः प्रयोगपक्षेऽपि समुदायस्य सुबन्ततदादित्वाभावात् समासाप्राप्तिः, आद्यतच्छब्दे प्रकृतित्वबुद्ध्याऽन्त्यासुशब्दे षष्ठीत्वबुद्ध्या षष्ठ्यन्ततदादित्वस्य सौलभ्यात्। शेखरकृता तु 'तत्तदर्थविभागः' इत्यत्र लुप्तषष्ठीकं तदित्यव्ययम्, अत एव 'त्यदादीनि' इति नैकशेष इत्युक्तम्।

सर्वः कल्पित एव । परमार्थतस्तु स्फोट एवार्थवानिति सिद्धान्तात् । उक्तञ्च *हरिणा*—

शब्दे प्रत्ययत्वबुद्ध्या सूपपादम् । सर्वं इति । धातूपसर्गविभागः, वृत्तिष्वेकार्थीभावश्चैवमेवेति भावः । स्फोट एवेति । पदरूपो वाक्यरूपो वेत्यर्थः । लोकानां तत्रैव शक्तिग्रहेण बोधादिति भावः । अत एव तस्य परमार्थत्वम्, लोके बोधजनकत्वात् । शास्त्रेण प्रकृतिप्रत्ययविभागव्युत्पादनेन विशिष्ट-

स्थाने द्विर्वचनपक्षे ऽपीति । अस्योपमानत्वेन निर्देशो युक्तत्वस्य सूचनाय । यद्यप्यस्मिन् पक्षे स्थानिवद्भावेन सुबन्तत्वं सूपपादम्, तथापि त्वदुक्तरीत्यैव निर्वाह इत्याशयेनाह—आद्येति । अत्राद्यशब्दः सुलभत्वध्वननाय । नन्वस्मिन्पक्षे समुदाये स्थानिवद्भावेनोक्तरीत्या वा सुबन्तत्वबुद्धिर्भवतु, तथापि तदवयवे सुप्त्वबुद्धिर्न स्यात्, वत्सादिषु प्रकृतिप्रत्ययविभागसम्मोहो यथा । अत एव 'आटिटत्' इत्यत्र स्थाने द्विर्वचनपक्षे णिलोपानापत्तिरूपन्दूषणमभिहितम् । तथाच—'सुपो धातु' इत्यस्य कथं प्रवृत्तिरिति चेन्न, उक्तभाष्यप्रयोगेणानस्तमितादेशत्वस्य समुदाये कल्पनेनादोषात् । एवञ्चाकृते द्विर्वचने स्थानिनि, समुदायावयवे वा या या बुद्धिः, सा सा ऽधुनापीति सुब्लुकः सिद्धिः । अत एवाऽग्रेऽग्रेवृक्षान् वृक्षानपचन्नपचन्नित्यादौ पूर्वरूपणत्वप्रतिषेधङमुडागमादीनां सिद्धिः । अत एवास्मिन्पक्षे तावेव सुप्तिङौ, यौ ततः परौ, सैव प्रकृतिराद्या, समुदायपदत्वमेतेन, इति षाष्ठे 'एकाच' इति सूत्रे भाष्यकृतोक्तम् ।

सर्वपदार्थमाह—धातूपसर्गेति । एवमेव = कल्पित एव । स्फोटः = स्फुटत्यर्थो ऽस्मादिति स्फोटः वाचकः शब्दः, स च हृदयप्रदेशे ऽभिव्यक्तः कर्णपिधानेन सूक्ष्मतरवाय्वभिघातेन स्वमात्रश्राव्यः, प्रणवापरपर्यायनादशब्दबोध्यः आन्तरो व्यञ्जकतत्तद्वर्णप्रतिबिम्बयुक्तो अभिधीयते । अधिकमन्यत्र स्फुटम् । यद्यप्यष्टौ स्फोटा अन्यत्रोक्तास्तथापि निष्कर्षे वाक्यस्फोटस्यैवावस्थानमित्यत्रान्ते लेखः । तस्य परमार्थत्वे साधकमाह—लोकानामिति । व्युत्पित्सूनामित्यर्थः । प्रयोज्यप्रयोजकवृद्धव्यवहारेणाचग्रहस्य तत्रैवोत्पत्तेः । नन्वेवं शास्त्रेण तस्याप्रतिपादनेन शास्त्रानार्थक्यम्प्राप्नोतीत्यत आह—शास्त्रेणेति । पाणिनीयेनेति शेषः । पदस्यैवेति । तद्द्वारा वाक्यस्य चेत्यपि बोध्यम् । प्रतिवाक्यं सङ्केतग्रहासम्भवाल्लघुतर उपायः शास्त्रेण बोध्यत 'शाखाचन्द्र' न्यायेन । एवञ्च तत्तदवयवस्य तत्तदर्थानाञ्च प्रदर्शनं वाचकस्य समुदायस्य विशिष्टा-

१ ध्वनिव्यङ्ग्यो नित्योऽर्थवाचकः शब्दः 'स्फुटत्यर्थोऽस्मात्' इति व्युत्पत्त्या 'स्फोटः' इत्युच्यते । स च न तात्त्विकरूपेण प्रत्यक्षविषयः, किन्तु पदादिरूपेणैवेति पदादीनामप्यर्थवत्त्वव्यवहारः । वास्तविकवाचकत्वन्तु अक्षिगोलकगतेन्द्रियस्याप्रत्यक्षत्वेऽपि प्रत्यक्षज्ञानजनकत्वमिव स्फोटस्यैवेत्यन्यत्र विस्तरः ।

उपायाः शिक्षमाणानां बालानामुपलालनाः ।
असत्ये वर्त्मनि स्थित्वा ततः सत्यं समीहते ॥१॥ इति ।

कथमन्यथा इङो द्विर्वचनमडादयश्च स्युः । तथा च प्रत्याहाराह्निके ( अर्थवन्तो वर्णाः ) इति प्रघट्टके 'अध्येति' 'अधीते' इत्यत्रेकारोऽर्थवानिति भाष्ये स्पष्टमेवोक्तम् । एवं कन्प्रत्ययोऽप्यर्थवानेव, स्वार्थिकानां प्रकृत्यर्थेनैवार्थवत्त्वात् । कल्पनामात्रमिदमिति चेन्न, उक्तोत्तरत्वात् । नैषा कल्पना शास्त्रकृत्सम्मतेति चेन्न, 'द्वितीयतृतीयचतुर्थतुर्याणि' इति सूत्रे पूरणात्स्वार्थेऽन्प्रत्ययस्य पूरणार्थताया भाष्यकारैरेवोक्तत्वात् । 'प्रत्ययः' ( पा० सू० ३।१।१ ) इति महासञ्ज्ञां कुर्वतः सूत्रकृतोऽपि सम्मतमेवेदम् । यदपि 'ओषधेश्च' इत्यादि, तदपि न, अनित्यत्वेऽप्यौत्सर्गिकप्रवृत्त्या इष्टसिद्धेः । इष्टस्थलेऽप्यप्रवृत्तौ न्यायस्य निर्विषयत्वापाताच्च, अनित्यत्वज्ञाप-

---

पदमिव तत्तदर्थबोधनद्वारा विशिष्टे पदे विशिष्टार्थबोधकत्वमेव बोध्यते । 'उपलालनाः' इत्यस्य भवन्तीति शेषः, न तु वास्तवा इति भावस्तदाह-असत्ये इति । आरोपिते इत्यर्थः । लोकानान्तत्तच्छब्दजन्यबोधानुपयोगित्वात्तत्त्वम् । सत्यं विशिष्टशक्त्या बोधकं पदादीत्यर्थः । स्युरिति । अधिजगे, अध्यागीष्टेत्यादौ । अर्थवत्त्वादिति । आरोपितार्थवत्वादित्यर्थः । शास्त्रकृत= भाष्यकृदादिः । सम्मतेति । तद्धितविषये इति शेषः । औत्सर्गिकप्रवृत्तौ हेतुमाह—इष्टस्थलेऽपीति । (चः) पञ्चम्यर्थहेतुत्वानुवादकः । कथञ्चिदिति । अनेन

---

र्थस्य च बोधनतात्पर्यकमेवेति भावः । स च समुदायो बौद्ध एव परम्परया बोध्यते । अर्थोऽपि बौद्ध एव । अतएव वन्ध्यासुत इत्यादेरुपपत्तिः । क्रियापदरहितस्य बोधकत्वाभावादाह—भवन्तीति । उपलालनाः इति । वञ्चनस्थानापन्ना मिथ्याभूता इत्यर्थः ।

पर्यवसितार्थमाह—नत्विति । तस्यारोपितत्वमुपपादयति—लोकानामिति । मुख्यार्थवत्त्वाभावादाह—आरोपितेति । गौतमादिभ्रमापगमायाह—भाष्यकृदादि । किन्तु प्राधान्याद्भाष्यकृत एवात्रादावुल्लेखः । अत्र निर्विसर्गः पाठो युक्तः, शास्त्रकृच्छब्दस्य मूले समस्तत्वात् । ननु प्रत्याहाराह्निक इत्यादिना स्पष्टमित्यन्तेन भाष्यकारमतस्य दर्शितत्वान्नैषेति शङ्काया अनुत्थितिरत आह—तद्धितविषय इति । तथाच तद्धितविषये प्रत्याहाराह्निकेनोक्तमिति शङ्काया उत्थितिरिति भावः । वचनस्यौत्सर्गिकी प्रवृत्तिर्गमकसापेक्षेति प्रकृते गमकाभावात्कथम्प्रवृत्तिरत आह—औत्सर्गिकेति ।

नस्य कथञ्चिदावश्यकत्वे अर्थवद्ग्रहणस्यैव ज्ञापकत्वसम्भवाच्च । उत्तरार्थस्यापि इह किञ्चित् 'त्रपो' इति न्यायेन इह करणस्य सफलत्वौचित्यात्, 'ओषधेश्च' इत्यादौ विभक्तिकारकग्रहणयोरेवेत्थं सति प्रत्याख्यानसम्भवाच्चेति दिक् । 'अधातुः' इति किम् ? 'अहन्' नलोपो मा भूत् । न च कार्यकालपक्षे प्रत्ययान्तत्वेन पर्युदासोऽ-

तदनावश्यकत्वमेवेति ध्वनयति । ननूत्तरत्र चरितार्थस्य कथं ज्ञापकत्वमत आह—उत्तरार्थस्यापीति । 'इकोऽचि' (पा० सू० ७।१।७३) इति सूत्रेऽज्ग्रहणस्योत्तरार्थतामुक्त्वा भाष्ये उक्तम्-इह किञ्चित् 'त्रपो' इति, 'न लुमता' इति निषेधानित्यत्वज्ञापनद्वारा 'त्रपो' इत्यत्र गुणः फलमिति तदर्थः । इत्थं सतीति । लघुना ऽनेनैवानित्यत्वज्ञापनमाश्रित्य न्यायानुसरणेन तयोः प्रत्याख्यानसम्भव इति भावः । नलोप इति । सुबुत्पत्तिस्तु नोक्ता, 'भूवादयो'

अत्र गमकान्तरानुक्तेश्चकारस्य प्रयोगो ऽनुपपन्न इत्यत आह—चः पञ्चम्यर्थेति । पातादिति । पञ्चम्यर्थेत्यर्थः । एवञ्च चकारो व्यर्थ एवेति तात्पर्यम् । अनेन= कथञ्चिदितिपदेन । एतेन तज्ज्ञापनस्य भाष्यसम्मतन्दृढतरफलञ्चास्तीति ध्वनितम् । 'इह किञ्चित्त्रपो' इति न्यायसत्ताम्प्रदर्शयति—इकोचीत्यादिना । यद्यप्युत्तरार्थन्तथाऽप्युत्तरार्थस्योत्तरत्रैव करणमुचितमिह करणंकिञ्चित्फलसाधकन्तत्किम् ? त्रपो इतीति, तदर्थः । अनित्यत्वेति । एतेन तस्य निषेधस्य पाक्षिकी प्रवृत्तिरिति प्रदर्शितम् । तत्फलन्त्वेड्ह्रस्वादितिसूत्रस्थभाष्ये 'त्रपु' इति प्रयोग एव ।

इत्थं सतीति अर्थवद्ग्रहणस्यैव ज्ञापकत्वसम्भवे सतीत्यर्थः । लघुनेति । एकफलद्वयसाधकत्वसम्भवे ऽनित्यत्वज्ञापनमात्रफलकं यत्तद्द्वयं तद्व्यर्थमिति तात्पर्यम् । ननु धातोः प्रातिपदिकसञ्ज्ञायान्ततः सुबुत्पत्त्यापत्तिर्वक्तव्या, द्वयोः सञ्ज्ञयोराकडारीयान्यत्वेन समावेशेऽपि परत्वात्सुब्विधायकशास्त्रस्य तत्प्रवृत्तेर्न्याय्यत्वात् । लडादयः पुत्रीयतीत्यादौ सावकाशाः, 'भूवादयः' इतिधातुसञ्ज्ञापि 'श्रियौ' इत्यादावियङादिसम्पादकत्वेन चरितार्थेति, नलोपमात्रस्य फलत्वेन प्रदर्शनमफलमत आह—सुबुत्पत्ति-

१ ननु 'नलोपोऽतिङः' इति न्यासेनादोषः । नच 'पचेरन् पचेरन् यस्मिन् व्यापारे स पचेरन्पचेरो व्यापारः' इत्यत्र तिङन्तावयवत्वान्नलोपानापत्तिः, तिङन्ततदादिभिन्नावयवस्य पदान्तस्य नस्य लोप इत्यर्थेन समुदायस्य तिङन्ततदादिभिन्नतया नलोपसिद्धेः । नच 'अ अहन्' यस्मिन् व्यापारे सः 'आहा' इत्यत्र परादिवद्भावेन तिङन्ततदादित्वस्य सत्त्वेन दोषः, समासग्रहणनियमपरभाष्येणेदृशानामनभिधानात् । अन्यथेदृशेषु प्रत्ययान्ततदादित्वस्योक्तरीत्या सत्त्वेन 'अर्थवत्' इत्यनेन प्रातिपदिकत्वाप्राप्त्या समासग्रहणस्य विध्यर्थत्वेन नियमानुपपत्तिः । नच 'सर्वस्मिन्' इत्यत्र नलोपापत्तिः, उच्चारणसामर्थ्यात् ।

**स्त्विति वाच्यम्, प्रत्ययलक्षणेनोक्तपर्युदासाप्रवृत्तेः 'न ङिसम्बुद्ध्योः'**

**इत्यस्य लविधौ, तिबादिविधौ चोपस्थितेर्निरवकाशतया अपवादैस्तिबादिभिर्बाधात्।** कार्यकालपक्षे इति। **न च यथोद्देशेऽपि प्रत्ययान्तत्वस्य भावित्वेनाकृतव्यूहपरिभाषाया फलाभावेन च सञ्ज्ञाया अप्रवृत्तिरिति वाच्यम्, अकृतव्यूहपरिभाषाया अनित्यत्वात्, असत्वाच्च, भविष्यति कि-**

रिति। निरवकाशतयेति। अस्य सर्वथेत्यादिः। एतेन पूर्वं लडादीनामुत्पत्तिरिति ध्वनितम्। एतेनापवादविषये बाध्यप्रातिपदिकसञ्ज्ञायाः कथम्प्रवृत्तिरिति शङ्काया नावकाश इति ध्वनितम्। अपवादशब्दोऽत्र बाधकपरः। तिबादिभिरित्यादिशब्देन तत्स्थानिकलडादेरपि सङ्ग्रहः। येन नाप्राप्तिन्यायस्य नात्र विषयता, सम्प्रति प्रातिपदिकसञ्ज्ञाया अप्राप्तिविषये चारितार्थ्याभावात्। गमकाभावादौत्सर्गिकैकवचनोत्पत्तिरपिनोक्ता। ननु नलोपवारणस्य यथोद्देशपक्षेऽपि सम्भवेन विशिष्यात्र कार्यकालपक्षस्यैवोपादानं फलमित्याशङ्कां वारयितुमुपक्रमते—न चेत्यादिना। अत एव भाष्ये ऽप्रत्यय इत्यत्र पर्युदासप्रसज्यप्रतिषेधयोराशङ्काङ्कृत्वा अन्त्ये राजा तक्षेत्यादौ प्रत्ययलक्षणेन प्रतिषेधः प्राप्नोतीति शङ्कायां 'न ङि' इति ज्ञापकान्न दोष इति साधारण्येनोक्तिः सङ्गच्छत इति भावः। **फलाभावेनेति।** तस्मिन्काल इत्यादिः। **अप्रवृत्तिरिति।** तदानीमिति शेषः। मूलस्योक्तभाष्यस्य च तात्पर्यन्दर्शयितुमादौ कैयटादिरीत्याऽऽह—**अकृतेति।** **अनित्यत्वादिति।** प्रकृतिप्रत्यापत्तिवचनेनानित्यत्वादित्यर्थः। स्वसिद्धान्तरीत्याह—

नच 'हे सर्वस्मिन्शयः' इत्यत्र नलोपस्यासिद्धतया संयोगसंज्ञया गुरुत्वेन 'गुरोरनृतः' इति प्लुत एव फलम्, 'न लोपः सुप्' इति सूत्रे भाष्ये सञ्ज्ञायाः 'दण्डिदत्तौ' 'दत्तदण्डिनौ' इति क्लेशसाध्यफलदानेन सञ्ज्ञापदेन घिसञ्ज्ञाया एव ग्रहणेन संयोगसञ्ज्ञायां नलोपासिद्धत्वाप्राप्तेः 'नलोपः सुप्यतः' इति न्यासेन दोषाभावाच्चेति, चेन्न, एवं सति 'अधातुः' इति पर्युदासाकरणस्येष्टत्वात्, यथाश्रुतन्यासानुरोधेनैतद्ग्रन्थसत्त्वाच्चेति दिक्।

१ ननु 'भूवादयः' ( पा० सू० १–३–१ ) इत्यस्य, 'अर्थवत्' ( पा० सू० १–२–४५ ) इत्यस्य चाकडारीयबहिर्भूतत्वेन 'आकडारात्' ( पा० सू० १–४–१ ) इत्यस्य विषयाभावेनोभयोः समावेशे सुबापत्तिरपि वक्तुमुचितेति नलोपमात्रापत्तिरसङ्गता। न च 'भूवादयः' इत्यस्य वैयर्थ्यम्, 'भुवौ' इत्यादौ उवङादिसम्पादनेन चारितार्थ्यादित्याशङ्कायामाह—उपस्थितेरिति—अयम्भावः—'कार्यकालं सञ्ज्ञापरिभाषम्' इति पक्षे आवृत्त्या सञ्ज्ञाशास्त्राणां विधिशास्त्रैः सहैकवाक्यता जायते। तथा च—उवङादिविधायकशास्त्रे उपस्थित 'भूवादयः' इत्यस्य चारितार्थ्येऽपि लट्तिबादिविधायकशास्त्रे उपस्थितस्य 'भूवादयः' इत्यस्य वैयर्थ्येन तिबादिभिस्सुपो बाधान्नलोपापत्तिरेवोक्ता। नच प्राथम्याल्लडादिभिरित्येव वक्तव्यम्, तिप आदिः=प्रथमः लडादिरिति यावत् इति, तिप् आदिर्यस्य इति वा विग्रहे समासेनोभयोः संग्रहात्।

वस्तुतस्तु—उपस्थितेर्वैयर्थ्ये तदभाव एव स्यात्, उपस्थितिं कल्पयित्वा शास्त्रबाधकल्पनापेक्षयोपस्थित्यभावकल्पनस्यैव न्याय्यत्वात्। तथा च सुबापत्तिरपि वक्तुं शक्या। भाष्ये 'नलोपो मा भूत्' इति तूपलक्षणमित्युपाध्यायाः।

इति निषेधेन ज्ञापितत्वात् । कथमन्यथा राजेत्यादौ नलोपः स्यात् ।

श्चित्फलमित्यभिसन्धिमात्रेणात्र पक्षे सञ्ज्ञायाः प्रवृत्ते प्रगृह्यसञ्ज्ञाप्रकरणे कैयटेनोक्तत्वाच्च । यथोद्देशपक्षेण पर्युदासे लक्ष्यसिद्धेः शङ्कासमाधाने अत्र निर्दले । न हि व्यवस्थितयोः पक्षयोरन्यतरेण लक्ष्ये सिद्धे पक्षान्तरेण शङ्काऽप्युचितेत्यर्थस्य प्रगृह्यसंज्ञाप्रकरणे भाष्ये ध्वनितत्वादिति कश्चित् । कथमन्यथेति । न च राजेत्यादौ कृदन्तत्वात्प्रवृत्तिः,

असत्त्वेति । पूर्वोक्तन्द्वितीयहेतुन्निराचष्टे—भविष्यतीति । अत्र पक्षे=यथोद्देशपक्षे । यथाश्रुतभाष्यस्य प्रकारान्तरेण सङ्गमने मूलकारोक्तरीत्या तद्योजनमुचितमित्याशयेनाह—यथोद्देशेति । पर्युदासे=लाघवादधातुरिति पर्युदासे । लक्ष्यसिद्धेः=अहन्नित्यस्य राजेत्यस्य च लक्ष्यस्य सिद्धेः । शङ्कासमाधाने=नच कार्यकालपक्षे इत्यादिना शङ्कासमाधाने । निर्दले = निःसारे । शङ्केति । दोषस्येत्यादिः । अत एव भाष्यकृता पर्युदासपक्षे राजा तक्षेत्यत्र दोषशङ्का न कृतेति बोध्यम् । तत्र=अहन्नित्यत्र । तिङुत्पत्तेः प्राक् प्रातिपदिकसञ्ज्ञाया व्यावर्तकतया धातुपर्युदासस्य सार्थक्यम् । राजेत्यस्य तु प्राक्प्रवृत्तप्रातिपदिकसञ्ज्ञया सुबुत्पत्त्या नलोपस्य प्रवृत्त्या च सिद्धिः । पर्युदासेत्युपादानन्तु यदि प्रसज्यप्रतिषेधः स्यात्तदा 'निषेधांश्च बलीयांसः' इति न्यायेन प्रत्ययोत्पत्तेः प्रागपि निषेधविषये बाध्यप्रातिपदिकसञ्ज्ञायाः प्रवृत्तिर्न स्यादित्याशयेन । एतेन कैयटोक्तिरपि पर्युदासपक्षे न ङीत्यस्य ज्ञापकत्वोपपादनपरा निस्सारेति दर्शितम् । न ह्योति । अत्र हि शब्दो यत इत्यर्थे वर्तते । पक्षयोः=कार्यकालयोर्यथोद्देशपक्षयोः ।

भाष्ये ध्वनितत्वादिति । तत्र हि ÷ 'अग्नी इत्याह' इत्यत्र प्राक् प्रगृह्यसञ्ज्ञायास्तस्य स्थाने 'गुरोरनृत' इति प्लुते 'ईदूदेत्' इति तपरकरणात्पुनः प्रगृह्यसञ्ज्ञा प्रकृतिभावफलिका न प्राप्नोति, प्लुतसञ्ज्ञाकृतस्य प्रकृतिभावस्य स्वप्रवृत्तिरप्लुतवदुपस्थित इत्यप्लुतवद्भावस्य विधानात्, प्रगृह्यसञ्ज्ञाविधायकसूत्रदृष्ट्या प्लुतस्यासिद्धत्वन्तु न भवति; कार्यकालपक्षे प्रगृह्यसञ्ज्ञायाः प्लुतप्रगृह्येत्येतदेकवाक्यतया स्वरसन्धिस्थत्वसम्पत्त्या सिद्धः प्लुतः स्वरसन्धिष्वित्यनेन सिद्धत्वस्य बोधनादित्याशङ्क्य यथोद्देशपक्षाश्रयणेन समाहितं तेनास्य ध्वनितत्वादित्यर्थः । कश्चिदिति । अत्रारुचिबीजन्तु यथो-

१ यथोद्देशपक्षेणेति—अत्र शास्त्रे पक्षद्वयम् ÷ यथोद्देशपक्षः, कार्यकालपक्षश्च । तत्र यथोद्देशपक्षे लङादेः प्रागेव धातुसञ्ज्ञा प्राप्नोतीति तद्वारणाय 'अधातु' इति पर्युदासे 'अहन्' राजा, इत्यादिलक्ष्याणां सिद्धेः पक्षान्तरमादाय शङ्कादिकमसङ्गतम् इत्याह यथोद्देशपक्षेणेति ।

२ कश्चिदिति अनेनारुचिःसूचिता तत्र बीजन्तु अर्थवदिति सूत्रे भाष्ये 'अप्रत्ययः' इत्यस्य पर्युदासत्वम्, प्रसज्यप्रतिषेधत्वं वेत्याशङ्क्य आद्ये पूर्वान्तवद्भावेन प्रातिपदिकत्वात् 'काण्डे' 'कुण्ड्ये' इत्यत्र दोषं प्रदर्श्य प्रसज्यप्रतिषेधाश्रयणेन 'राजा' तक्षा, प्रत्ययलक्षणेन प्रत्ययो नेति प्रतिषेधो प्राप्नोति, नैष दोषः,

अप्रत्ययः किम् ? 'हरिषु' 'करोषि' अत्र सुप्सिपोर्मा भूत्। अभ-

त्त्रापि 'अप्रत्ययः' इत्यस्य सम्बन्धात्। अत एव 'दाक्षी', दिदृक्षू' इत्यादौ परादिवद्भावेन न सुपो लुक्। न च लुग्लोपविषयमेव ज्ञापकम्, असति बाधके प्रमाणानां सामान्ये पक्षपात इत्यर्थस्यापि ज्ञापनात्। अन्यथा

देशपक्षे यद्यप्युक्तरीत्या निर्वाहस्तथापि पक्षान्तरे सम्बुद्धिपदस्योक्तार्थज्ञापनपरत्वम्भाष्यकृदुक्तमनुपपन्नमेवेति।

वस्तुतस्तु पर्युदासाश्रयणेऽपि कार्यकालपक्षे ज्ञापनमावश्यकमेव। नच स्वाश्रयाप्रत्ययान्तत्वेन तत्सिद्धिः ? अतिदिश्यमानधर्मविरुद्धस्वाश्रयधर्मप्रयुक्तकार्याभावस्यातिदेशस्वभावसिद्धत्वादत एव राजानित्यादौ न स्वाश्रयाप्रत्ययान्तत्वविधायकप्रातिपदिकत्वेन नलोपः। एवञ्च शङ्कासमाधाने निर्दल।

अन्यथेति। अन्यथा--प्रत्ययलक्षणापर्युदासस्य प्रवृत्तौ कथंस्यादिति योजना। राजेत्यादेरुत्तरसूत्रेण सिद्धेः कथमन्यथेत्यनुपपन्नमित्याशङ्कानिराचष्टे—नचेत्यादिना। अत एव=उत्तरसूत्रेऽप्यप्रत्यय इत्यस्य सम्बन्धादेव। न सुपो लुगिति। एतयोस्तद्धितान्तकृदन्तत्वे पूर्वान्तवद्भावेनैकदेशविकृतन्यायेन च बोध्ये। ज्ञापकम् = 'न ङिसम्बुद्ध्योः' इति ज्ञापकम्। ज्ञापनादिति। अधातुग्रहणेनेति शेषः। अन्यथा='नङि' इतिसूत्रस्य विशेषापेक्षज्ञापकत्वे। यत्तु 'दाक्षी' 'दिदृक्षू' इत्यत्रोभयत आश्रयणे नान्तादिवदिति निषेधाद्दोषाभावेन नोत्तरसूत्रेऽप्रत्यय इत्यस्य सम्बन्ध इति तत् तुच्छम्, पूर्वान्तवद्भावेन प्रातिपदिकत्वस्य, परादिवद्भावेन सुप्त्वस्य बुद्ध्या लोपस्य प्रवृत्तिरित्येकत्रोभयोर्नाश्रयणमिति भवदुक्तन्यायविषयताया अभावात्। अप्रत्यय इत्यस्य सम्बन्धे तु तत्र प्रत्ययपदङ्कृत्तद्धितातिरिक्तप्रत्ययपरम्। एवञ्च कृत्तद्धितातिरिक्तप्रत्ययान्तभिन्नस्य प्रातिपदिकसञ्ज्ञेत्यस्य फलिततयाऽस्य तत्त्वबुद्ध्या सा नेति भावः। नचात्र ई इत्यादेः परादिवद्भावेन कृत्तद्धितातिरिक्तप्रत्ययत्वबुद्धावपि स यस्माद्विहितस्तदादित्वम्पूर्वान्तवद्भावेन वाच्यमित्युभयत आश्रयणमेकदैवेति निषेधः स्यादिति वाच्यम्, 'दाक्षी' इत्यादावेवैकदेशविकृतन्यायेन क्षान्ते यस्माद्विहितस्तत्त्वस्य बुद्ध्या परादिवद्भावेन ईकारादौ तदन्यप्रत्ययत्वबुद्ध्या निषेधस्य प्रवृत्तेः।

नन्वत एवेत्याद्युक्तमसङ्गतम्, 'सप्तम्यधिकरणे च' इति निर्देशेन विभक्त्येकादेशस्या-

आचार्यप्रवृत्तिर्ज्ञापयति न प्रत्ययलक्षणेन प्रतिषेधो भवतीति। यदयं 'न ङिसम्बुद्ध्योः' इति प्रतिषेधं शास्ति इत्युक्तम् तत्र यथोद्देशपक्षे प्राप्तनलोपवारणाय 'न ङिसम्बुद्ध्योः' इत्यस्य चारितार्थ्येन कार्यकालपक्षाभिप्रायेण तज्ज्ञापनासङ्गत्यापत्तिरेव वस्तुतस्तु यथोद्देशपक्षेऽपि प्रसज्यप्रतिषेधाश्रयणे ज्ञापकत्वस्यावश्यकत्वमेव उपसञ्जनिष्यमाणन्यायेन यथोद्देशेऽपि प्रातिपदिकत्वाप्रवृत्त्या उभयपक्षाभिप्रायेण ज्ञापकपरभाष्यप्रवृत्तेरिति कश्चिदित्युक्तिरसङ्गतैव।

सूत्रोपस्थितङिसम्बुद्धिमात्रविषयता स्यादिति राजपुरुषासिद्धिः। स्पष्टा चेयं रीतिः 'सार्वधातुकमपित्' (पा० सू० १।२।४) इत्यत्र भाष्ये, प्रकृतसूत्रभाष्ये चेदं स्पष्टम्। अत्र सुप्तिङोरिति। तयोः प्रातिपदिकत्वे तत्सा-

न्तत्वस्याभावस्य ज्ञापनादित्यस्य वक्ष्यमाणतया पूर्वान्तवद्भावेन कृत्तद्धितान्तत्वस्य वक्तुमशक्यत्वादिति चेन्न, उपायस्योपायान्तरा दूषकत्वमिति न्यायेन वक्ष्यमाणज्ञापकम्परित्यज्यात्राप्रत्यय इत्यस्य झटितिस्मृतत्वेन तेनैव वारणस्य सुकरत्वप्रदर्शनायेत्थमभिधानात्। पूर्वोक्तरीत्या क्षान्ते यस्माद्विहितस्तत्वम्परादिवद्भावेन द्विवचनत्वम्, अत एवेदूदेदिति प्रगृह्यसञ्ज्ञेत्यवश्यं वाच्यमिति, यथा तथैव तदतिरिक्तप्रत्ययबुद्धिरपि भविष्यतीत्यस्य स्पष्टप्रतिपत्त्यर्थमेवमभिधानाच्च। आवश्यकश्चोत्तरसूत्रेऽप्रत्यय इत्यस्य सम्बन्धः। अन्यथा प्रकृतसूत्रभाष्ये राजा तक्षेत्यत्र प्रत्ययलक्षणेन प्रत्ययान्तत्वात्प्रातिपदिकसञ्ज्ञायाः कार्यकालपक्षे प्रतिषेधमाशङ्क्य 'न ङिसम्बुद्ध्योः' इत्यस्य प्रत्ययलक्षणेनाप्रत्यय इति पर्युदासाप्रवृत्तौ ज्ञापकत्वप्रदर्शनङ्कृत तद्विरोधः स्यात्। सम्बुद्धौ प्रतिषेधस्य 'हे सुराजन्' इत्यत्र समासत्वात्प्राप्तप्रातिपदिकसञ्ज्ञायाः कार्यकालपक्षेऽपि सत्त्वेन नलोपनिषेधायावश्यकत्वात्। अतस्तद्भाष्यसङ्गमनायोत्तरसूत्रे समासांशेऽप्रत्यय इत्यस्य सम्बन्धेन समासानवयवप्रत्ययान्तभिन्नसमासस्य ग्रहणमित्यर्थो यथा तथा कृदाद्यंशेपीत्याशयः कल्प्यः। अत एव समासग्रहणस्य नियमार्थत्ववर्णनपरभाष्यग्रन्थोऽपि सङ्गच्छते। अन्यथा 'सुराजा' 'सुतक्षा' इत्यत्र कार्यकालपक्षे नलोपाय समासत्वात्प्रातिपदिकसञ्ज्ञाविधायकत्वेन समासग्रहणस्य चरितार्थतया तदसङ्गतिः स्पष्टैवेति। सामान्य पक्षपात इत्यस्य यथान्यत्रोपस्थितसामान्यधर्माक्रान्ते कार्यसिद्धिः। स्वविषये इष्टस्य च सिद्धिस्तादृशार्थंज्ञापकत्वमित्यर्थः। अन्यथा स्वविषये यथा चारितार्थ्यन्तन्मात्रज्ञापकतापि स्यादिति राजपुरुषादिपदे पूर्वपदस्य प्रत्ययान्ततया प्रातिपदिकत्वानापत्तौ नलोपानापत्तिरित्यर्थः। नच तादृशविशेषापेक्षत्वे राजा तक्षेत्यस्याप्यसिद्धेर्जागरूकत्वाद्राजपुरुषपर्यन्तानुधावनमफलमिति वाच्यम्, सूत्रोपस्थितेति विशेषणस्य विशेषत उपादानेन सम्बुद्धिसञ्ज्ञाविधायकं यत् 'एकवचनं सम्बुद्धिः' इति सूत्रन्तस्यापि क्रोडीकारेणैकवचनविषयतायान्तात्पर्यन्नतु सम्बुद्धिसञ्ज्ञकमात्रविषयतायामित्यभिप्रायात्। एवञ्च ङिसुविषयकता स्यादित्यस्य फलितत्वेन राजा तक्षेत्यस्य सिद्धिर्भविष्यतीति पष्ठ्यन्ते दोषोपपादनं युक्तमेव। तथाच ज्ञापकसामान्यस्य यः स्वभावः स्वातिरिक्ते फलनिष्पादकत्वरूपः सोऽपि यथा 'नङि' इत्यस्य निर्वहति तथैव ज्ञापनं युक्तमिति भावः।

एवम्प्रकारस्य ज्ञापकविषयेऽन्यत्र प्रबलसत्त्वप्रदर्शनायाह—स्पष्टा चेयमिति। इयं रीतिः=ज्ञापकानां सजातीयापेक्षत्वमङ्गीकृत्य स्वविषये चारितार्थ्यमिति रीतिः। इत्यत्र भाष्य इति। तत्र हि—सार्वधातुकपदस्य प्रयोजननिरूपणावसरे तदभावे

त्ययान्तः किम् ? तत्रैव विभक्तिविशिष्टयोर्मा भूत् । न चान्तव-

मर्थ्यादौत्सर्गिकैकवचने तच्छ्रवणापत्तिः । विभक्त्यर्थस्य लिङ्गं प्रति स्वरूपायोग्यत्वेन न नपुंसकत्वाश्रयो विभक्तिलुक् । तत्सत्त्वे तु पदादित्वेन षत्वनिषेधापत्तिर्दोष इति भावः । तत्रैवेति । अत्राप्यौत्सर्गिकैकवचनापत्तिः, 'सुपो धातु' इति लुगापत्तिश्च, पचेरन्नित्यादौ नलोपापत्तिश्चेति भावः ।

'कर्ता' 'हर्ता' इत्यादौ तृजादेरपि ङित्वप्राप्तिशङ्काया आर्द्धधातुकेषु चङ्ङादिषुङित्करणरूपज्ञापकेन निरासङ्कृत्वा सजातीयापेक्षत्वेन धातुभ्यो विहिता ये प्रत्ययास्तद्विषयकत्वशङ्का सार्वधातुके अव्याप्त्यापत्त्याऽर्द्धधातुकत्वेन साजात्यमादाय नियमकरणेन निरस्य यद्येवङ्कल्प्यते तदा चङ्ङौ लुङ्विकरणानां ज्ञापकौ, नजिङ्वर्तमानकालानाम्, अथ औणादिकानाम्, नङ्शब्दो घञर्थानां ज्ञापको भविष्यति । तथाच तृजादेङित्वापत्तिरिति सार्वधातुकग्रहणङ्कर्तव्यमित्यभिहितम् । एवञ्च यथा बाधकसत्त्वात्तत्र न सामान्यापेक्षत्वङ्किन्तु विशेषापेक्षत्वेन चारितार्थ्यमित्युक्तं तथा अत्रापि बाधकसत्त्वे विशेषापेक्षत्वन्तदभावे तु सामान्यापेक्षत्वम्भविष्यतीति तात्पर्यम् । भाष्ये स्वेदमिति । अत्र चरत्त्वर्थे । इदम्—प्रत्ययलक्षणेन प्रतिषेधाभावे नङीतिसूत्रस्य ज्ञापकत्वम् । स्पष्टम्=कण्ठरवेणोक्तम् ।

ननु सुप्सिपोः प्रातिपदिकत्वे पदत्वापत्तौ षत्वानापत्तिरूपो दोषः सुबुत्पत्तावेव वाच्यः, स तु न सम्भवति गमकाभावेन सुबुत्पत्तिरेव न सम्भवतीत्यत आह—तयोरिति । तत्सामर्थ्यादिति । प्रातिपदिकसञ्ज्ञासामर्थ्यादित्यर्थः । तथाचेदमवगमकमिति भावः । अन्येन तूक्तयोर्लुकापहारङ्खण्डयति—विभक्त्यर्थस्येति । अत एव 'ह्रस्वो नपुंसक' इति सूत्रभाष्ये 'काण्डे' 'रमते' इत्यनयोरर्थयोः सुबर्थक्रियारूपयोर्लिङ्गसङ्ख्याभ्यां योगो नास्ति, विचित्रत्वात्पदार्थशक्तीनामित्यभिहितम् । तत्सत्त्वेत्विति । नपुंसकत्वसत्त्वेत्वित्यर्थः । अत्र तुना प्रागुक्तभाष्यविरोधापत्तिरूपाऽरुचिर्ध्वनिता । मूले—तत्रैवेति । हरिपु करोषीत्यत्रैवेत्यर्थः । नन्वत्र नौत्सर्गिकैकवचनापत्तिर्गमकाभावात् । न च पूर्ववत् प्रातिपदिकसञ्ज्ञासामर्थ्यमिति शङ्क्यम्, फिट्स्वरप्रवृत्त्या साफल्यात् सुबिति पकारस्य प्रत्याहारनिष्पादकतया सिबादेः पित्वस्याङित्वसम्पादकतया चारितार्थ्यसम्भवात् । न च समासस्येत्यन्तोदात्तविधानसामर्थ्यात्सखण्डेषु फिट्स्वराप्रवृत्तिरिति वाच्यम्, पदसञ्ज्ञकपूर्वोत्तरभागकसमुदायविषयेऽप्रवृत्तिज्ञापनेन तस्य साफल्यादत आह—सुप इति । तिङन्ते दोषमाह—पचेरन्निति । आदिना सर्वस्मिन्नित्यस्य सङ्ग्रहः ।

१ लिङ्गनिष्ठप्रकारतानिरूपितविशेष्यताकशाब्दबोधं प्रति प्रातिपदिकपदजन्योपस्थितेरेव कारणतया प्रातिपदिकार्थे एवान्वयितावच्छेदकधर्मवत्त्वेनेत्यर्थः ।

द्भावेन क्राण्डे, कुड्ये, इत्यादौ प्रातिपदिकत्वं स्यादेव । तथा च 'ह्रस्वो नपुंसके' इति ह्रस्वत्वं सोरुत्पत्तिश्च स्यादिति वाच्यम्, कार्य[1]-कालपक्षेणेष्टसिद्धेः । यथोद्देशेऽपि 'विभक्त्येकादेशो नान्तवत्' 'सप्तम्यधिकरणे च' इत्यादिनिर्देशात्, 'ह्रस्वो नपुंसके' इति सूत्रे प्रातिपदिकग्रहणं वा उक्तार्थे सामान्यापेक्षं ज्ञापकमस्तु ।

---

स्यादेवेति । पूर्वं विभक्त्युत्पत्तरेव जातस्यातिदेशेन विभक्त्यन्ते बुद्धिरिति भावः । यथोद्देशेऽपीति । अपिना कार्यकालपक्षे[2]ऽपि । न हि तत्र पक्षे उपदेशेनैवैकवाक्यता नातिदेशेनेत्यत्र मानमस्ति, अतिदेशैकवाक्यतयैव ह्रस्वप्राप्तेः सुवचत्वात् । प्रातिपदिकग्रहणं वेति । नपुंसकवृत्तित्वस्य प्रातिपदिकधर्मत्वान्नपुंसके वर्तमानस्येत्यर्थेनैव प्रातिपदिकलाभे सिद्धे तस्य व्यर्थत्वादिति भावः । उक्तार्थे = विभक्त्येकादेशस्यान्तवत्त्वाभावे । सामान्यापेक्षमिति । अन्यथा ह्रस्व एव न स्यात्स्वाद्युत्पत्तिस्तु स्यादेवेति भावः । यद्यपीदं प्रातिपदिकग्रहणं सत्त्वप्र[3]धानप्रातिपदिकग्रहणार्थम्, तेनात्र न ह्रस्वः,

---

मूले—इष्टसिद्धेरिति । प्रत्ययान्तपर्युदासेनेष्टसिद्धेरित्यर्थः । अतिदेशेन= अन्तवत्त्वातिदेशेन । एतेन लक्ष्ये लक्षणं सकृदेव प्रवर्तत इति न्यायाविषयत्वन्ध्वनितम् । अत्रातिदेशेनेतिकथनेनौपदेशिकप्रातिपदिकत्वस्याप्रवृत्तिः सूचिता । परादिवत्त्वेनैकारे प्रत्ययत्वस्यैकदेशविकृतन्यायेन कान्ते तत्त्वस्य सत्त्वेन प्रत्ययान्तत्वस्यार्थसमाजग्रस्तत्वेन तन्निषेधात् । ननु 'ह्रस्वो नपुंसके' इति सूत्रस्थपूर्वोक्तभाष्यादिलिङ्गत्वेन निर्देशस्योपपत्त्या न तस्य ज्ञापकत्वमिति चेन्न, अभ्युपेत्यवादेन मूलकृता तथाभिधानात् । प्रातिपदिकग्रहणस्य ज्ञापकत्वमुपपादयति--नपुंसकेति । नपुंसकवृत्तित्वं वाच्यवाचकभावसम्बन्धेन । लाभे सिद्धे=लाभे जाते । अन्यथा = सामान्यापेक्षज्ञापकत्वानङ्गीकारे । अप्रत्ययः किमित्यारभ्यास्त्वित्यन्तो मौलग्रन्थोऽयुक्त एवेति ध्वनयितुमाह--यद्यपीत्यादि । सत्त्वप्रधानेति । कल्पितसत्त्वप्रधानकेत्यर्थः । एवञ्च यदर्थं शास्त्रे

---

१ परादिवद्भावेन प्रत्ययान्ततया 'अप्रत्ययः' इत्यनेन निषेधादिति भावः ।

२ ननु कार्यकालपक्षे परादिवद्भावेन प्रत्ययान्ततया प्रातिपदिकत्वाप्राप्त्या 'विभक्त्येकादेशः' इति ज्ञापनस्य नोपयोग इति चेन्न, 'अन्तादिवच्च' इत्यनेन पूर्वान्तवद्भावेन प्रातिपदिकसञ्ज्ञायां एवातिदेशेनास्यापि सञ्ज्ञाशास्त्रतया सञ्ज्ञाशास्त्रेषु पक्षद्वयस्य सत्त्वात् कार्यकालपक्षे 'अन्तादिवच्च' इत्यस्य 'ह्रस्वो नपुंसके प्रातिपदिकस्य' इत्यनेनैकवाक्यतयैव ह्रस्वत्वस्य प्राप्त्या तत्पक्षेऽपि ज्ञापकत्वस्यावश्यकतेति भावः । एतदेवादाय विधिशास्त्रस्य कार्यकालपक्षे सञ्ज्ञाविधायकशास्त्रेणैवैकवाक्यता न सञ्ज्ञातिदेशबोधकेन इत्यत्र मानमस्तीति । इति तत्त्वम् ।

३ सत्वप्रधानत्वञ्च—यस्य ह्रस्वत्वं चिकीर्षितं तत्पर्याप्तप्रयोजकतानिरूपितप्रयोज्यतावती या उप-

यत्तु वदन्ति—प्रत्ययपर्युदासो न कर्तव्यः, प्रत्ययान्तपर्युदासेनैव गतार्थत्वात्। व्यपदेशिवद्भावेन तस्यापि प्रत्ययान्तत्वादिति, तन्न,

मूलोक्तार्थे ज्ञापिते चारितार्थ्यं दुर्निरूपञ्च। सङ्ख्याकर्माद्ययोगात्स्वाद्युत्पत्तिरपि न, औत्सर्गिकमेकवचनमपि न, गमकं विना तदुत्पत्तेः। 'सुपो धातु' इति लुगपि न, धातुसाहचर्येण सुप्तिङितरसं[२]मभिव्याहृतस्यैव तेन

नपुंसकङ्गणः प्रसिद्धस्तादृशस्य प्रातिपदिकस्य तादृशेऽर्थे वर्तमानस्य ह्रस्व इति सूत्रार्थः। 'ननु मूलोक्तमुपायान्तरमस्त्वित्यत आह'—मूलोक्तार्थ इति। दुर्निरूपञ्चेति। तथाच ज्ञापकतयैवायुक्तेति भावः। प्रागुक्तदोषान् क्रमेणोद्धरति—सङ्ख्येति। गमकं विना=साधकं विना। यथाऽव्ययेभ्यः स्वाद्युत्पत्तौ 'अव्ययादाप्सुप' इति गमकन्तशान्न नास्तीति भावः। प्रत्ययान्तपर्युदासस्य 'हरिषु' 'करोषि' इत्यादौ समुदायप्रातिपदिकत्वापत्तौ लुगापत्तिरिति प्रयोजनन्निरस्यति—धातुसाहचर्येणेति। धात्ववयवस्य यादृशस्य सुपो लुग्भवति तादृशस्यैव प्रातिपदिकावयवस्य तस्य लुग्भविष्यति साहचर्यात्। ननु साहचर्यं सादृश्यं तच्च साधारणधर्मप्रयोज्यमेवान्यत्र स्पष्टं प्रकृते तु तादृशो धर्मः कः? इत्याकाङ्क्षायामाह—सुवित्यादि। समभिव्याहृतस्येत्यनन्तरं 'सुपः' इति शेषः।

स्थितोयाप्रधानता तादृश्याप्रधानतानिरूपिता याऽप्रधानता तदसमानाधिकरणा या लिङ्गान्वयितावच्छेदकधर्मावच्छिन्नोपस्थितीयप्रधानता तादृशप्रधानताप्रयोजकत्वम्।

१ 'प्रातिपदिकस्य' 'विभक्त्येकादेशो नान्तवत्' इत्यत्र ज्ञापकत्वे स्वांशे चारितार्थ्याभाव इति भावः।

२ अत्र 'सुप्तिङ्भ्यामितरो यस्तत्समभिव्याहृतस्य सुपो लुक्' इत्यर्थे सुप्तिङितरप्रकृतिसमभिव्याहृतस्य 'हरिभ्याम्' इत्यादौ सर्वस्यैव सुपो लुगापत्तिः। सुप्तिङ्भिन्नो य इतरः=सुप्तिङ्निष्ठतद्व्यक्तित्वावच्छिन्नप्रतियोगिताकभेदवान्। सुप्तिङ्भिन्नौ सुप्तिङाविति यावत् तत्समभिव्याहृतस्य सुपो लुक् इत्यर्थः। तथा च 'राजन् अस् पुरुष स्' इत्यत्र स् भेदस्य असि, अस्भेदस्य च स्शब्दे सत्त्वेन तयोः परस्परसमभिव्याहारस्यापि सत्त्वाल्लुक् सिध्यति। यद्वा सुप्तिङ्पदं स्वविशिष्टपरम् वै० स्वेतरत्व-स्वप्रकृतिघटकेतरत्वोभयसम्बन्धेन। तथा च 'पुत्र अम् क्यच्' इत्यत्र सुब्विशिष्ट उक्तसम्बधेन क्यच् इति तत्समभिव्याहृतस्य सुपो लुक्। 'राजन् ङस् पुरुष सु' इत्यत्र ङस्विशिष्टः पुरुष इति, सुब्विशिष्टो राजन् इति, तत्समभिव्याहृतयोर्लुक् 'काण्डे' इत्यत्र तु नास्ति सुविशिष्टसमभिव्याहार इति लुगभावः। न च पदान्तरसम्बन्धे 'काण्डे' इत्यत्रापि लुगापत्तिः, समभिव्याहारस्य नियतपूर्वापरभावरूपत्वात् पदान्तरसम्बन्धस्य चानियतत्वात्।

'काण्डे' इत्यत्र तु एकस्यैव सुपः सत्त्वेन एरूपसुपः सुप्तिङ्समभिव्याहाराभावान्न लुक्। केचित्तु सुप्तिङ्पदं स्वप्रकृतेरप्युपलक्षणम्, एवञ्च सुप्तिङ् तत्प्रकृतिभिन्नो यस्स्वघटकस्तत्समभिव्याहृतस्य सुपो लुगित्यर्थः। पुत्रीयति, इत्यादौ उभयभिन्नक्यच्समभिव्याहारेण, 'राजपुरुषः' इत्यत्र स्—पुरुषोभयभेदवद्राजसमभिव्याहारेण, अस् राजन् उभयभेदवत्पुरुषसमभिव्याहारेण च द्वयोः सुपोर्लुक्सिद्धः। उपाध्यायास्तु धातुसाहचर्येण वृत्तिविशिष्टस्यैव सुपो लुक्। वै० स्वघटकत्व-स्वविधायकशास्त्रघटकपदप्रयोज्यविषयताश्रयत्वाभ्याम्, इति न कापि दोष इत्याहुः।

प्रत्ययग्रहणे यस्मात्स विहितस्तदादेर्ग्रहणात्, केवलस्य च अतथा-

लुग्विधानात् । एवं च प्रत्ययान्तपर्युदासो न कर्तव्य इति सूत्रशेषे भाष्ये ध्वनितम् । पञ्चेत्, सर्वस्मिन्नित्यादौ नकारोच्चारणसामर्थ्येन न नलोपः,

व्यधिकरणे षष्ठ्यौ, प्रथमपञ्चम्यन्तार्थः सुप इत्यत्र या षष्ठी तत्प्रकृत्यर्थस्य विशेषणम् । स चार्थस्तत्प्रकृतिकत्वमेव । एवञ्च सुप्तिङितरसमभिव्याहृतप्रातिपदिकप्रकृतिको यः सुप् तस्य लुगिति फलितम् । अस्ति चायन्धर्मः पुत्रीयतीत्यादौ, तिङितरः क्यच् तत्समभिव्याहृतप्रातिपदिकम्पुत्रशब्दस्तत्प्रकृतिकत्वन्धात्ववयवस्येति लुकः प्रवृत्तिः । तथा राजपुरुष इत्यादावप्यस्ति, सुप्तिङितरेत्यत्र सुपस्तत्तद्व्यक्तित्वेन निवेशात् । सुप्तिङ्पदञ्च तदन्तपरम् । चालनीन्यायो ऽत्र बोध्यः । एवञ्च राजन्शब्दप्रकृतिकसुबन्तभिन्नः पुरुषशब्दस्तत्समभिव्याहृतप्रातिपदिकं राजन्निति तत्प्रकृतिकत्वं ङसो यथा, तथा ङसन्तभिन्नराजन्शब्दसमभिव्याहृतप्रातिपदिकम्पुरुषेति तत्प्रकृतिकत्वं सोरित्युभयोर्लुकः सिद्धिः । अत्र सुप्तिङितरसमभिव्याहृतत्वञ्च तेन पूर्वोत्तरभावरूपम्, पुरुषाश्वावित्यादौ लुग्भिन्नो अकारस्तत्समभिव्याहारस्य पूर्ववृत्तित्वरूपस्य पुरुषशब्दे सत्त्वेन तत्प्रकृतिकस्य ङ्याम एव लुगापत्तेः । नापि तदर्थान्वितस्वार्थबोधकत्वं समभिव्याहारः, अत्यन्तस्वार्थिकतद्धितान्तावयवस्य सुपो लुगनापत्तेः, 'राजपुरुषः सुन्दर' इति वाक्यावयवस्य राजपुरुषशब्दप्रकृतिकसुपो लुगापत्तेश्च । किन्तु सुप्तिङितरसमभिव्याहृतत्वन्तद्घटितवृत्तिघटकत्वरूपं विवक्षितम् । एवञ्च सुप्तिङितरघटितवृत्तिघटकप्रातिपदिकप्रकृतिकसुपो लुगिति सूत्रार्थः । नचैवमपि 'राजपुरुषः' इत्यत्र समुदायप्रकृतिकसुबन्तभिन्नो राजन्शब्दः, पुरुषशब्दो वा तद्घटिता वृत्तिः समुदायरूपा राजपुरुष इति तद्घटकत्वस्य तद्विषयकप्रतीत्यविषयत्वस्य तत्रैव सत्त्वेन तत्प्रकृतिकसुपो लुगापत्तिरिति वाच्यम्, वृत्तिघटकत्वञ्च स्वाविषयकप्रतीत्यविषयत्वमात्रम्, किन्तु स्वाविषयकप्रतीत्यविषयवृत्तिकत्वे सति वृत्त्यविषयकप्रतीतिविषयत्वरूपमिति न कश्चिद्दोषः । अत्र तिङोऽभिधानं तिङन्तावयवकाच्समभिव्याहृतस्य सुपः पुत्रीयतीत्यादौ लुकः प्रसिद्धत्वसूचनाय । वस्तुतः सुबितरेत्येवास्तु, एवञ्च हरिषु करोषीत्यादौ लुगप्राप्तिः स्फुटैवेति भावः ।

सूत्रशेषे = प्रकृतसूत्रशेषे । ध्वनितमिति । तत्र हि—अप्रत्यय इत्यत्र 'किम्पुलयस्पर्युदासः यदन्यत्प्रत्ययादिति आहोस्वित्प्रसज्योऽयम्प्रतिषेधः प्रत्ययो नेति, कश्चात्र विशेषः, अप्रत्यय इति चेत् रतिवेकादेशे प्रतिषेधोऽन्तवत्त्वात्काण्डे कुड्ये, अस्तु तर्हि प्रसज्यप्रतिषेधः ? प्रत्ययो नेति, न प्रत्यय इति चेदूङेकादेशे प्रतिषेधः आदिवत्वात्' इत्युक्तम् । परस्य कार्ये प्रतिषेधे कर्त्तव्ये परादिवद्भावः स्यात्तथाच प्रतिषेधापत्तिरिति भावः । एवञ्च ब्रह्मबन्धूरिति न सिध्यति इत्यप्पक्षद्वये दोषमभिधाय, द्वितीयपक्षे, 'आचार्यप्रवृत्तिर्ज्ञापयति उत्पद्यन्ते ऊङन्तात्स्वादय इति, यदयञ्चोऽप्यात्वोरिति

त्वात्। अन्यथा त्वदुक्तरीत्या सुप्तिङोरपि तदन्तत्वात् पदत्वं स्यात्। तथा च हरिषु, करोषि, इत्यादौ षत्वं न स्यात्, 'सात्पदाद्योः' इति निषेधात्। अधातुप्रत्ययाविति सिद्धे नञ्द्वयोपादानं

तथाप्येतावक्लिष्टकल्पनापेक्षया लाघवात्प्रत्ययान्तपर्युदास एवोचित इति भावः। अतथात्वादिति। यस्माद्विहितस्तदादित्वस्याशास्त्रीयत्वेन व्यपदेशिवद्भावालभ्यत्वादिति भावः। निषेधादिति। यद्यपि व्यपदेशिवद्भावेनैकाच्त्वादेरिवास्याप्यशास्त्रीयस्यातिदेशेन लाभसम्भवः, अत एव भवतीत्यादौ भवतेः शब्निरूपिताङ्गत्वसिद्धिः, व्यतिसे इत्यादौ 'से' इत्यस्य पदत्वसिद्धिश्च, हरिस्यादौ कार्यकालपक्षे तद्धितान्तत्वनिबन्धनप्रातिपदिकत्वसिद्धिश्च, युवापत्ये तत इञन्तत्वनिबन्धनफक्सिद्धिश्च। तथाप्यसहायं एव व्यपदेशिवद्भावो

विभक्तिस्वरस्य प्रतिषेधं शास्ति' इत्यनेन दोषोद्धारं कृत्वा अथवा पुनरस्तु पर्युदासः, ननु चोक्तमप्रत्यय इति चेत् तिवेकादेशो प्रतिषेधो ऽन्तवत्त्वादिति, प्रसज्यप्रतिषेधेऽप्येष दोषः, द्वे ह्यत्र प्रातिपदिकसञ्ज्ञे अवयवस्यापि, समुदायस्यापि, गृह्यते च प्रातिपदिकाप्रातिपदिकयोरेकादेशः प्रातिपदिकग्रहणेन, तस्मादुभाभ्यामपि वक्तव्यं स्याद्ध्रस्वो नपुंसके यत्तस्येति। किञ्च नपुंसके, नपुंसकं यस्य गुणः, प्रातिपदिकस्येत्युक्तन्तेन ध्वनितमित्यर्थः। तत्र कैयटः—यत्तस्येति विभक्त्यन्तञ्च शक्तिसङ्ख्याप्रधानम्, नच तयोर्लिङ्गयोगः नवान्तवद्भावेनार्थः। शक्योऽतिदेष्टुमिति, न भवति ह्रस्व इति।

नन्वेवमपि पचेरन्नित्यादौ दोष एवेत्यत आह—पचेरन्निति। लाघवात्=ज्ञानलाघवात्। केवलस्यातथात्वादिति मूलमसङ्गतम्, यस्माद्विहित इत्येतद्घटितपरिभाषाया अधिकग्रहणाभाव एव प्रयोजनन्तु व्यपदेशिवद्भावस्य तया बाध इति केनचिदुक्तन्तदसङ्गतमिति सूचयन्नाह—यस्माद्विहित इति। किञ्चैतादृशे विषये मन्त्रेषु, सर्वेषामित्यादौ षत्वनिषेधाकरणेन व्यपदेशिवद्भावो नेत्यपि बोध्यम्। उक्तज्ञापकाननुसन्धानेन शङ्कते—यद्यपीति। अत एव=अशास्त्रीयस्याप्यतिदेशादेव। व्यतिसे इत्यादाविति। आदिना 'व्यतिध्वे' इत्यस्य सङ्ग्रहः। फगिति। 'यञि-

१ शास्त्रीयत्वञ्च मुखप्रविष्टशास्त्रकार्यीयसङ्केतविषयतावच्छेदकधर्मघटितधर्मत्वम्। मुखप्रविष्टत्यस्य निवेशात् 'एकाच्त्वादेरिवास्याप्यशास्त्रीयस्य' इति वक्ष्यमाणग्रन्थेन न विरोधः। अत्र मुखप्रविष्टत्वञ्च विशेष्यतानवच्छेदकत्वम्।

२ असहायत्वञ्च—मुख्यधर्मवदसमभिव्याहृतत्वे सति, मुख्यधर्मवदघटितत्वे सति, मुख्यधर्मवदघटकत्वे सति मुखप्रविष्टधर्मवत्त्वम्। मुख्यधर्मश्चातिदिश्यमानधर्मो बोध्यः। प्रथमविशेषणेन 'सभासंन्नयनघटकसकाराकारगतस्याद्यामादित्वस्य भाशब्दाकारे नारोपः। द्वितीयेन भासन्नयनवृत्तिवृद्धत्वस्य

स्पष्टार्थम् । महासञ्ज्ञाकरणं श्रुत्यनुरोधात् । तथा चाथर्वणे पठ्यते—

---

न तु ससहाये, तेनेतरावयवे तदप्रवृत्तिः । स्पष्टा चेयं रीतिः 'आदेच उपदेशे' ( पा० सू० ६।१।४५ ) इत्यत्र कैयटे । अत एव समासन्नयने व्यपदेशिवद्भावेनाकारस्य नादित्वं, दरिद्राधातावैकारस्य नान्तत्वम् , तथा सति वृद्धत्वप्रयुक्तश्छः, इवर्णान्तत्वप्रयुक्तोऽच्प्रत्ययश्च स्यात् । ततोऽत्र न किञ्चिद्वैषम्यम् । लोकेऽपि बहुपुत्रसत्त्वे नैकस्मिन् ज्येष्ठकनिष्ठादिव्यवहारः, विजातीयकन्यादिसत्त्वे त्वेकस्मिन्नपि तथा व्यवहारो भवत्येवेति बोध्यम् । अत एव हरिष्वित्यादौ सोः पदत्वञ्च । 'निजौ चत्वार एकाच' इति भाष्यं त्वेकस्मिन्नित्यस्यापर्यालोचनयैकदेशयुक्तिरिति तात्पर्यम् । वस्तुतस्तु पर्युदासेनैवार्थवत्त्वे लब्धे अर्थवद्ग्रहणादत्र सूत्रेऽपि विभक्तीतरानपेक्षयाऽर्थ-

---

लोश्च' इत्यनेनेति शेषः । सामान्येनोक्तस्यापि स्पष्टप्रतिपत्त्यर्थम्प्रकृते आह—तेनेति । इयं रीतिरिति । तत्र हि—ढौकितेत्यादौ नान्तरीयकत्वादुपदेशसत्त्वेऽपि न व्यपदेशिवद्भावेनैजन्तत्वमिति तेनोक्तम् । अतएव = असहाय । एव = व्यपदेशिवद्भावस्य प्रवृत्तिस्वीकारादेव तथा सति=ससहायेऽप्यनयोर्व्यपदेशिवद्भावस्य प्रवृत्तिस्वीकारे । सा च=परिभाषा । लोकन्यायसिद्धेति । लोके यादृशी व्यवस्था तादृश्येवात्र शास्त्रे तत्परिभाषाविषये । इत्याहलोक इति । अत एव=ससहाये तदप्रवृत्तेरेव । नन्वेवं सति निज्धात्ववयवेकारमात्रे व्यपदेशिवद्भावः ससहायत्वान्न स्यादिति 'निजौ चत्वार एकाच' इति भाष्यमनुपपन्नमत आह–निजौ चत्वार इतीति । तात्पर्यमिति । प्रत्ययपर्युदासाङ्गीकर्तुर्मूलकृत इति शेषः । एतेनारुचिर्ध्वनिता, तामुद्भावयति–वस्तुतस्ति वत्यादिना । अत्र=सूत्रेऽपीति । अपिनोतरसूत्रसङ्ग्रहः । तेनैकरूपता

---

समासन्नयने नारोपः । तृतीयेन समासन्नयनवृत्तिप्रातिपदिकस्वस्य भासन्नयने आरोपाभावः । चतुर्थेन रामशब्दे जराशब्दान्तत्वारोपेण न जरसादेशः ।

वस्तुतस्तु मुख्यधर्मवदघटकत्वे सति मुखप्रविष्टधर्मवत्त्वमेवासहायत्वम् । आद्येन 'हरिषु' इत्यत्र सुशब्दे सुबन्ततदादित्वारोपो न । अन्त्येन रामशब्दे जराशब्दान्तत्वारोपो न । न चैवं समासन्नयनघटकभाशब्दाकारे आदित्वारोपेण वृद्धत्वापत्तिः, मुखप्रविष्टधर्मवत्त्वाभावात् । मुखप्रविष्टधर्मवत्त्वाभावादेव समासन्नयनवृत्तप्रातिपदिकत्वस्य भासन्नयनशब्दे आरोपेण न दोष इत्युपाध्यायाः । मुखप्रविष्टत्वञ्चात्र स्वघटकनिष्ठा या अवयवत्वव्याप्यधर्मावच्छिन्नाविशेष्यता तन्निरूपितप्रकारतावच्छेदकत्वम् । यथा अदन्तत्वे अत्त्वम् । अदन्तत्वञ्चाम–अदभिन्नान्तावयवघटितत्वम् । तत्र स्वघटकावयवत्वव्याप्यात्त्वावच्छिन्नान्तनिष्ठविशेष्यतानिरूपितान्निष्ठप्रकारतावच्छेदकत्वम् , अत्त्वे वर्तते इति लक्षणसमन्वय ऊहनीयः ।

1. अत्र मनोरमाकृता 'अर्थवत्', सूत्रे वृत्तिमत्त्वरूपमर्थवत्त्वमाश्रीयते । वृत्तिश्च शक्तिलक्षणान्यतररूपा । 'कृत्तद्धितसमासाश्च' इत्यत्र 'शास्त्रीयार्थवद्ग्रहणेऽर्थवद्ग्रहणानुवृत्तिवैयर्थ्येन तदनुवृत्तिसामर्थ्याल्लौकिकार्थप्रत्यासन्नोऽभिव्यक्ततरो योऽर्थः प्रत्ययान्तेषु लक्ष्यते स आश्रीयते' इति पदसञ्ज्ञासूत्रस्थां

'को धातुः ? किं प्रातिपदिकम् ? कः प्रत्ययः' ? इति । डित्थादीन्यव्युत्पन्नानीहोदाहरणम् । अव्युत्पत्तिपक्षस्य चेदमेव ज्ञाप-

बोधकत्वमर्थवत्त्वं गृह्यते । एकार्थीभावेन लौकिके प्रयोगे प्रसिद्धत्वमिवेद-

द्वयोर्भवति, मूलरीत्यातु वैरूप्यं स्फुटमेव । ननु भवदुक्तार्थवत्त्वमलौकिकविग्रहवा-

---

वैयटोक्तिमनुसृत्यार्थवद्ग्रहणानुवृत्तिसामर्थ्यात्' एकार्थीभावेन लौकिकप्रयोगे प्रसिद्धत्वरूपमर्थवत्त्वम् । अत एव वृत्तिमत्त्वरूपार्थवत्त्वस्य केवलप्रत्ययेऽपि सत्त्वात्तस्य प्रातिपदिकत्ववारणाय 'अप्रत्यय' इति पाणिन्युक्तः पर्युदासः सङ्गच्छते ।

अत्र शेखरकाराः—पूर्वोत्तरसूत्रे विभिन्नार्थवत्त्वग्रहणे अर्थवदित्यत्र गुरुभूतशब्दाधिकाराश्रयणम्, 'अप्रत्ययः' इति पर्युदासकरणम्, लक्षणद्वयमाश्रयणमिति बहुगौरवं पर्यालोच्य पूर्वोत्तरसूत्रसाधारण्येन 'विभक्तीतरानपेक्षया लोकेऽर्थविषयकबोधजनकत्वमर्थवत्त्वम्' इति मन्यन्ते, तथा च 'अप्रत्यय' इति न कर्तव्यम् 'हरिषु' इत्यत्र सुप्रत्ययस्य प्रकृतिसापेक्षतयैवार्थबोधजनकत्वेन प्रातिपदिकत्वाप्राप्तेः, शब्दाधिकारः लक्षणद्वयञ्च नेति लाघवम् । रामादीनाञ्च विभक्तीतरघटाद्यनपेक्षया लोकेऽर्थविषयकबोधजनकत्वेन प्रातिपदिकत्वं सिद्ध्यति । यद्यपि शेखरे एतत्सञ्ज्ञाफलभूतविभक्तीतरेत्याद्युक्तम्, तथापि तस्योपलक्षणत्वेन तत्रोक्तत्वादत्र नोक्तम्, नच विभक्त्यपेक्षया इत्येव वक्तव्ये विभक्तीतरानपेक्षयेति व्यर्थम्, 'दधि' 'मधु' इत्यादेः प्रातिपदिकत्वानापत्तेः विभक्त्यनपेक्षयार्थबोधकत्वात् । न च 'खट्वा' 'पक्तिमम्' 'साकुटिनम्' इत्यादीनां क्रमेण विभक्तीतर-टाप्-मप्-अण्समभिव्याहारेणैवार्थबोधजनकतया प्रातिपदिकत्वाप्राप्त्या टाबाद्यनापत्तिः विभक्तीतरेत्यत्र विभक्तिपदस्य प्रत्ययमात्रोपलक्षणत्वात् । नन्वेवमपि 'पचाञ्चक्रे' इत्यत्र पचामित्यस्य प्रातिपदिकत्वानुपपत्तिः विभक्तीतर 'चक्रे' पदसमभिव्याहारापेक्षयैवार्थबोधजनकत्वात् । नच पचामित्यस्य प्रातिपदिकत्वाभाव इष्ट एव 'लकारः कृत्' 'कृत्प्रातिपदिकम्' इति प्रातिपदिकसञ्ज्ञा, तदाश्रयं प्रत्ययविधानं प्रातिपदिकत्वाश्रयत्वात्स्वाद्युत्पत्तिर्भविष्यति । यद्येवं सुपः श्रवणं प्राप्नोति । अव्ययादिति लुग्भविष्यति । कथमव्ययत्वम् ? अव्ययत्वं मकारान्तत्वात् । इति 'आमः' (पा० सू० २-४-८१) इति सूत्रस्थभाष्यप्रामाण्यात् प्रातिपदिकत्वस्येष्टत्वात् । नच मान्तं कृदन्तमव्ययम् इत्यर्थे 'प्रशाम्' इत्यादेरव्ययत्वापत्तिः, 'आचार्यप्रवृत्तिर्ज्ञापयति' न प्रत्ययलक्षणेनाव्ययसञ्ज्ञा भवतीति यदयं स्वरादिषु 'प्रशाम्' शब्दं पठति इति भाष्येणैव समाहितत्वादिति चेन्न, प्रत्ययेतरो यः पदेतरस्तत्समभिव्याहारानपेक्षयेत्यस्य निवेशेनादोषात् । न चैवं 'पचनावप्रियः' इत्यत्र पचनावेत्यस्य प्रातिपदिकत्वेन टाबापत्तिः 'प्रिय' इत्यस्य पदत्वेन तदितरानपेक्षत्वादिति वाच्यम्, प्रत्ययेतरो यः स्ववृत्तिसमासत्वाभाववत्पदेतरस्तत्समभिव्याहारानपेक्षयेत्यस्य निवेशेन स्ववृत्तिसमासत्वाभाववत्पदमुदासीन तदितरप्रियपदसमभिव्याहारापेक्षयैवार्थबोधकत्वात् । अत्र च स्वपदेन यस्य प्रातिपदिकत्वं चिकीर्षितं तद्ग्रहणम् । ननु 'स्युरुत्तरपदेत्वमी, निभसङ्काशनीकाशप्रतिकाशोपमादयः' 'अमर का० २ व०-१० कोशप्रमाणेन 'निभ' इत्यादीनाम् 'तिङश्च' इति कल्पप्प्रत्यये 'पचामासतुः कल्पम्' इत्यादेः उपपदसापेक्षत्वेन 'कारः' इत्यादेश्च प्रातिपदिकत्वानापत्त्या 'तन्निभः' पचामासतुः कल्पम्' 'कुम्भकारः' इत्यादीनामसिद्धिः । नच प्रत्ययेतरो यः स्ववृत्तिसमासत्वाभाववत्पदेतरः पूर्वपदेतरश्च इति निवेशेनादोषः, तथा सति 'हरिषु' इत्यादौ 'सु' इत्यादेः प्रातिपदिकत्ववारणाय 'अप्रत्यय' इति पर्युदासकरणापत्त्या त्वदुक्तलाघवभङ्गापत्तेः । नच पूर्वपदशब्देन समासावयवस्य ग्रहणान्नोक्तदोषः एवमपि 'पचामासतुः कल्पम्' इत्यत्र

कमिति प्राञ्चः। यत्तु—व्युत्पत्तिपक्षेऽपि निपातार्थमनुकरणार्थं चेद-मिति हरदत्तेनोक्तम्, तच्चिन्त्यम्, तत्रापि प्रकृत्यादिकल्पनसम्भ-वात्। वस्तुतस्तु व्युत्पत्तिपक्षेऽपि 'बहुपटवः' इत्याद्यर्थं सूत्रम्। न चैवं 'बहुच्पूर्वः' इत्येव सूच्यतामिति वाच्यम्, 'मूलकेनोपदंशम्' इत्यादौ कृदन्तत्वेनातिप्रसाङ्गात्। न च समासग्रहणं नियमार्थमिति

---

मप्यलौकिके आरोपितमस्ति इति 'दक्ष अस् इ' इत्यवस्थायां प्रातिप-दिकत्वाक्षतिः। तदा प्रत्ययस्य प्राप्तिरेव न, इति केवलप्रत्ययपर्युदासो व्यर्थः। ध्वनितं चेदं प्रत्ययपर्युदासानुक्त्या भाष्ये। 'सुप्तिङन्तम्' इति सूत्रस्थभाष्यकैयटयोरप्यत्रैव तात्पर्यमिति बोध्यम्। इत्याद्यर्थमिति। अन्य-था विभक्त्यन्तस्योदात्तता स्यात्, प्रातिपदिकत्वे तु पूर्वं विभक्तिलुकि टकारोकारस्योदात्तत्वे पुनर्जसि टकाराकारोदात्तत्वसिद्धिरिति भावः। कृदन्तत्वेनेति। न च समासविकल्पविधानस्य वैयर्थ्यम्, समासे एकस्य-

---

क्यस्य नास्तीति तस्यैषा न स्यादत आह—एकेति। उक्तपर्युदासलभ्यार्थे विभक्ति-पदमेतत्साध्यप्रत्ययोपलक्षणन्तेन टावादिप्रकृतिसङ्ग्रहः। स्वोक्तार्थस्य भाष्यकाराभि-मतत्वसूचनायाह—ध्वनितमिति। सुप्तिङन्तमिति सूत्रभाष्ये—'कृत्तद्धित' इति सूत्रे-ऽन्त इत्यस्यार्थवद्ग्रहणानुवृत्त्या लाभप्रतिपादनपरभाष्यस्योत्तरसूत्रे एकार्थीभावेन लौकिके प्रयोगे प्रसिद्धत्वातात्पर्यकत्वं यन्मूलकारसम्मतन्तदपि नेत्याह—सुप्तिङन्त-मिति। अत्रैव = उभयोरप्यर्थवत्त्वमेकरूपमेवेत्यत्रैव। अधिकमन्यत्र स्पष्टम्। अन्यथा = बहुपटव इति समुदायस्य प्रातिपदिकसञ्ज्ञाया अस्वीकारे। स्यादिति। 'चितः' इति सूत्रे 'सप्रकृतेः' इति वार्तिकादिति शेषः। समासेति। 'तृतीयाप्रभृति'

---

समासाभावे 'आसतुः कल्पम्' इत्यस्य प्रातिपदिकत्वानापत्तेः, 'पधनावप्रियपुत्रः' इत्यादौ पधनावेत्यस्य प्रातिपदिकत्वापत्तेश्च। नच पूर्वपदशब्देन सुबन्तस्य ग्रहणेन 'हरिषु' इत्यत्र 'हरि' इत्यस्य सुबन्तत्वा-भावेनादोषः 'चथा इव पुमान् चथा' इति कन्लुबन्तघटिते 'चथासु' इत्यत्र चथा इत्यस्यान्तर्वर्तिवि-भक्त्या सुबन्तत्वेन 'सु' इत्यस्य तत्त्ववारणाय प्रत्ययपर्युदासकरणापत्तिरिति चेन्न प्रत्ययेतरत्वे सति स्ववृ-त्तिसमासत्वाभाववत्पदेतरत्वे सति स्वादिष्विति पदत्वानाश्रयसुबन्तभिन्नं यत्तत्समभिव्याहारानपेक्षया शक्त्या, लक्षणया वा लोकेऽर्थविषयकबोधजनकत्वप्रकारकतात्पर्यीयविशेष्यतापर्याप्त्यधिकरणत्व-मर्थवत्त्वमिति परिष्कारेणादोषादित्यन्यत्र विस्तरः। परे तु गुरुतरलक्षणेन प्रत्ययपर्युदासखण्डनापेक्षया पर्युदासं स्वीकृत्य उभयत्रापि वृत्त्यार्थविषयकबोधजनकत्वमेवार्थवत्त्वं ग्राह्यम्। न च 'कृत्तद्धितानाञ्चा-र्थवन्नकेवलाः कृतस्तद्धिता वा इति भाष्यविरोधः' 'सञ्ज्ञाविधौ' इति परिभाषया कृत्तद्धितान्तस्यैवार्थवत्प्राति-पदिकसञ्ज्ञं भवति न केवलाः कृतस्तद्धिता वा प्रातिपदिकसञ्ज्ञका इत्यर्थे भाष्यतात्पर्येण तद्विरोधाभावादि-त्यन्यत्र विस्तरः।

निस्तारः, अर्थवत्सूत्रारम्भं विना समासग्रहणस्य नियमार्थत्वायोगादिति दिक् ।

*कृत्तद्धितसमासाश्च* । 'अर्थवत्' इत्यनुवर्तते । तत्सामर्थ्यात्तदन्तविधिः । न हि जहत्स्वार्थायां वृत्तौ कृतां तद्धितानां चार्थोऽस्ति । भूतपूर्वगतिलभ्यस्तु न प्रशस्तः । अजहत्स्वार्थायामपि न प्रत्ययमात्रेणार्थपर्यवसानमित्यभिप्रेत्याह—*कृत्तद्धितान्ताविति* । लिट्, धुक्, इत्यादौ 'अधातुः' इति, कर्तेत्यादौ अप्रत्ययान्तमिति पर्युदासे प्राप्ते कृदन्ते विधिरयम् । *नियमार्थमिति* । न च प्रत्ययान्तत्वेन पर्युदासे प्राप्ते विध्यर्थमस्त्विति शङ्क्यम्, वाक्यस्याप्रत्ययान्तत्वात् । प्रत्ययग्रहणे यस्मात्स विहितस्तदादेरेव ग्रहणात् । ननु स्त्रीप्रत्यये तदादि-

---

रश्रवणं समासाभावे प्रातिपदिकत्वे तु पूर्वोत्तरपदयोर्भिन्नस्वरश्रवणमिति विशेषात्, दधि उपदंशमित्यादौ पक्षे प्रकृतिभावप्रवृत्तेरपि फलस्य वक्तुं शक्यत्वाच्च ।

तत्सामर्थ्यादिति । अन्यथा सञ्ज्ञाविधित्वान्न स्यात् । न प्रत्ययमात्रेणेति । प्रकृतेरपेक्षणादिति भावः । अधातुरिति । कर्तृरूपार्थस्याधिकस्य भाने ऽपि क्रियावाचकत्वाक्षत्या धातुत्वाक्षतेरिति भावः । स्त्रीप्रत्यये इति । अनुपस-

---

इत्यनेनेत्यादिः । एकस्वरश्रवणमिति । समासस्येत्यनेनैकस्यान्तोदात्तस्वरस्य श्रवणमित्यर्थः । फिष् इत्यस्य तु सखण्डेऽप्रवृत्तिरिति भावः । लौकिकप्रयोगे स्वरस्य दुर्लक्ष्यत्वादाह—दधीति । पक्षे = समासाभावपक्षे । प्रकृतिभावेति । 'न समासे' इति निषेधस्य तदाऽप्राप्तेरिति भावः । न च दधि उपदंशमित्यत्र दधिशब्दात्तृतीयासत्त्वेन तदन्तस्य भुजिक्रियायां सम्बन्धात्कथमत्र णमुलिति वाच्यम्, त्वरायां 'द्वितीयायाञ्च' इति णमुलो ऽत्र सत्त्वात् । अत एव 'कृद्ग्रहणे' इति परिभाषायाङ्कृत्प्रकृत्यर्थनिरूपितकारकस्य ग्रहणेऽपि विशिष्टस्य कृदन्तत्वनिर्वाहः ॥

प्रकृतेरपेक्षणेति । एतेन विभक्तीतरानपेक्षत्वाभावः सूचितः । ननु लिट् धुगित्याभ्याञ्जायमानशाब्दबोधः कर्तुः प्राधान्येन भानाच्च प्रधानीभूतक्रियावाचकत्वमिति कथमत्र धातुत्वमत आह—कर्तृरूपेति । अक्षतेरिति । क्रियामात्रेत्यस्यप्राधान्येनेत्यस्य वा धातुसञ्ज्ञाविधावनिवेशाद्धातुत्वाक्षतेः । अतएव 'अत्वसन्त' इति सूत्रे धातुपर्युदासस्य सार्थक्यम् । 'स्त्रीप्रत्यये' इति परिभाषाया न तावन्मात्रत्वमिति न्यून-

नियमो निषिद्धः, एवं च राजकुमारीत्यादौ विध्यर्थमस्त्विति चेन्मैवम्, अन्तरङ्गस्यापि हल्ङ्याादिलोपस्य लुग्विषयेऽप्रवृत्त्या श्रूयमाण एव सुपि समासप्रवृत्तेः। तत्र चाप्रत्ययान्तत्वेन प्रवृत्तायाः सञ्ज्ञाया एकदेशविकृतन्यायेन विभक्तिलुक्यपि सुलभत्वात्। अत एव गोमत्प्रिय इत्यादौ नुमादयो न। लुकः प्रागन्तरङ्गप्रवृत्तौ तु स्युरेव। नन्वेवमपि असमर्थसमासे दशदाडिमादिवदनर्थके त्विध्यर्थमस्त्विति चेन्न, 'अर्थवद्' इत्यस्यानुवृत्तेरुक्तत्वात्। कथं तर्हि असमर्थसमासे

---

र्जनस्त्रीप्रत्यय इत्यर्थः। तस्य येन केनापि रूपेण ग्रहणे तन्निषेध इत्यभिमानः शङ्कितुः। राजकुमारीति। नन्वत्र प्रातिपदिकत्वस्य न फलम् लिङ्गविशिष्टपरिभाषयैव तत्कार्यसिद्धेरिति चेन्न, प्रातिपदिकत्वतद्व्याप्यधर्माणां लिङ्गप्रत्ययरहिते दृष्टानां तद्विशिष्टेऽनयातिदेशेन तस्या अत्राप्रवृत्तेः। न हि ङब्रहिते राजकुमीरेत्यादौ तदस्ति, ङ्याब्ग्रहणं त्वन्यार्थमिति वक्ष्यते। शङ्कित्रभिमानानुसारेणैवोत्तरयति—अन्तरङ्गस्यापीति। सुलभत्वादिति। यथोद्देशे इदम्। यदि त्वस्य निषेधस्य प्रत्ययग्रहणपरिभाषाशेषत्वं एवं च यथा सा प्रत्ययग्रहणे एव न तु प्रत्ययाप्रत्ययग्रहणे इति 'उगितश्च' इति सूत्रे भाष्ये स्पष्टम्, तथाऽयं निषेधोऽपि स्त्रीप्रत्ययमात्रग्रहणे न तु स्त्रीप्रत्ययास्त्रीप्रत्ययग्रहणे इत्युच्यते तदा न दोषः, समुदायस्य प्रत्ययान्तत्वाभावादिति

---

ताभङ्गयाह—अनुपसर्जनेति। तस्य=स्त्रीप्रत्ययस्य। तन्निषेधः=तदादिनियमनिषेधः। अभिमान इति। परिभाषायाः स्त्रीप्रत्ययमात्रग्रहणे प्रवृत्तिरिति कल्पनाक्ष प्रमाणमिति तद्भावः। तत्कार्येति। प्रातिपदिकत्वकार्येत्यर्थः। तद्विशिष्टे—स्त्रीप्रत्ययविशिष्टे। स्त्रीप्रत्ययमात्रस्य ग्रहणमत्र नास्तीत्येव वक्तव्येऽन्तरङ्गस्यापीत्याद्युक्तिर्विफले स्यत आह—शङ्कित्रेति। शेषत्वमिति। एतेनास्यामपि परिभाषायाङ्ग्रहणपदसम्बन्ध इति सूचितम्। फलितार्थमाह—एवञ्चेति। सा=प्रत्ययग्रहणपरिभाषा। प्रत्ययग्रहण एव=प्रत्ययमात्रग्रहण एव। अत एव गोमतो निष्क्रान्ता 'निर्गोमती' इत्यत्र 'उगितश्च' इति ङीप्सिद्धिः। इत्युच्यते इति। अत एव पुरुषोऽस्ति ते युवते इति समुदायस्य तिप्रत्ययरूपतद्धितान्तत्वात्प्रातिपदिकसञ्ज्ञा न। यदि समासग्रहणकृतनियमेनैतद्व्यावृत्तिरित्युच्यते, तदा 'भवत्या परमगतिः' इत्यत्र 'कर्तृकरणे कृता बहुलम्' इति समासाभावरूपफलम्बोध्यम्। न दोष इति—न प्रातिपदिकत्वासिद्धिरूपो राजकुमारीत्यत्र दोष इत्यर्थः। ध्वनितञ्चेदमर्थवत्समुदायानां समासग्रहणन्नियमार्थमित्युक्त्या भाष्यकृता। अत एवाह—दिगिति।

सञ्ज्ञेति चेद्धर्मिग्राहकमानादेवेति गृहाण। 'असूर्यललाटयोः' इत्यनेन हि असूर्यशब्दे उपपदे खश् विधीयते। उपोच्चारितं पदं चोपपदम्। पदं च 'सुप्तिङन्तम्' इति। नियमशरीरमाह—*यत्र सङ्घाते इत्यादि*[1]।

---

दिक्। असमर्थसमासे इति। असूर्यम्पश्या इत्यादावित्यर्थः। धर्मिग्राहकेति। प्रातिपदिकसञ्ज्ञा धर्मः[2], तद्धर्मी असमर्थसमासः, ग्राहकं मानं खश्विधायकम्। अन्यथा परस्परासम्बन्धेनैकार्थीभावाभावात्समासो दुर्लभः स्यात्। असूर्यशब्दे इति। तत्प्रकृतिके[3] सुबन्त इत्यर्थः। सुपीत्यधिकारात्, उपपदमिति महासञ्ज्ञाकरणाच्च। तदेतदाह=पदं चेत्यादि। शशशृङ्गादिपदानां च बौद्धे तस्मिन् शक्तिरिति न तदर्थमपि समासग्रहणमिति बोध्यम्। यत्र सङ्घाते इतीति। अर्थवतीति शेषः, सजातीयापेक्षनियमस्यौचित्यादिति बोध्यम्। प्रत्ययो नेत्यस्य पूर्वभागप्रकृतिकप्रत्ययो नेत्यर्थः, तेन राजा

---

इत्यादाविति। अत्र नञो हस्यर्थे सम्बन्धादसामर्थ्यन्द्रष्टव्यम्। खश्विधायकसूत्रस्य मानत्वमुपपादयति—अन्यथेति। समास इति। असूर्येत्यादावित्यादिः। ननूपपदं विभक्त्यन्तत्वत्वसूर्यशब्द एवेत्यत आह—तत्प्रकृतिक इति। सुप्चात्र द्वितीयैव, प्रकृत्यर्थस्य कर्मसाकाङ्क्षत्वाल्ललाटसाहचर्याच्च। तस्मिन्निति—शशादिशृङ्गे। एतैरत्यन्तासतो बुद्धिसत्ताविशिष्टस्यार्थस्य बोधनात्। स्वभाष्यनुरोधेनबौद्धस्यार्थस्य स्वीकारात्। अधिकमन्यत्र स्पष्टम्। येषां रथन्तरादिशब्दानामथवा अत्यन्तनिरर्थकास्तेषामप्यन्यत्र दृष्टार्थारोपेण प्रातिपदिकत्वात्सुबुत्पत्त्या साधुत्वान्वाख्यानंबोध्यम्। ननु यदि समासग्रहणेन मौलो नियमो बोध्यते तदा पूर्वसूत्रस्यस्यार्थवत्पदस्य दशदाडिमानीत्यादिसमुदायव्यावृत्तिप्रदर्शनपरभाष्यविरोध इत्यत आह—अर्थवतीति। तत्र [illegible]कमाह—सजातीयेति। उत्तरसूत्रेऽप्यर्थवत्पदानुवृत्तेः। 'पञ्चनावप्रियः' इत्यादौ पञ्चनावेत्यादेस्तदभावस्य प्रयोजनत्वमन्यत्राभिहितमेव। खण्डनकारीयन्दोषमुद्धरति—प्रत्ययो नेत्यस्येति। इदं साजात्यप्रदर्शनाय। न दोषः—न समुदायस्य

---

१ पदत्वयोग्यपूर्वोत्तरावयवकार्थवत्समुदायस्य चेत्समासस्यैवेति नियमाकारः। पदत्वयोग्यत्वञ्च सङ्केतसम्बन्धेन प्रातिपदिकपदवत्त्वम् स्वातन्त्र्येण प्रयोगार्हार्थवत्त्वं वा। उत्तरस्यापि पदत्वयोग्यस्य ग्रहणात् 'पुत्रकाम्या' इत्यादौ न दोषः। प्रकृतिसमभिव्याहारेणैव काम्येत्यस्यार्थविषयकबोधजनकत्वात्।

२ असूर्यशब्दवृत्तिप्रातिपदिकसञ्ज्ञारूपो धर्मः। स्वनिष्ठविधेयतानिरूपितोद्देश्यतावच्छेदकतावत्त्वसम्बन्धेन, अत्रत्यासमर्थसमाससञ्ज्ञायां वर्तते। यतः 'कृत्तद्धित' इति सूत्रीयप्रातिपदिकसंञ्ज्ञानिष्ठविधेयतानिरूपितोद्देश्यता समाससञ्ज्ञावन्निष्ठा, तदवच्छेदकता समाससञ्ज्ञानिष्ठेति तादृशावच्छेदकतावत्त्वं तत्र।

३ तत्प्रकृतिक इति—सः प्रकृतिर्यस्मिन्सुबन्ततदादौ तस्मिन्नित्यर्थः। एतेन सुबन्ते तत्प्रकृतिकत्वं बाधितमित्यपास्तम्।

पूर्वोभाग इत्युपलक्षणम् ÷ उत्तरस्तु प्रत्ययो नेत्यपि बोध्यम्, अन्यथा जन्मवानित्यादौ सञ्ज्ञा न स्यात्, तद्धितग्रहणस्य औपगवादौ कृतार्थत्वात्। पूर्वोभागः पदमिति किम्? बहुज्विशिष्टस्य प्रातिपदिकसञ्ज्ञा यथा स्यात्, तेन 'बहुपटवः' इत्यत्र प्रथमजसो लुकि बहुपटुशब्दस्य चित्स्वरे पुनर्जसि उपोत्तमोदात्तत्वं सिद्ध्यति। यद्वा प्रकृति-

---

इत्यानित्यादौ न दोषः। जन्मवानित्यादाविति। तत्र पूर्वभागस्य पदत्वादिति भावः। ननु तद्धितग्रहणसामर्थ्यं तत्राह–तद्धितेति। तत्र पूर्वभागस्य भत्वात्पूर्वो भागः पदमित्यत्र च पदशब्देन पदसञ्ज्ञकग्रहणमिति भावः। नन्वत्र पक्षे गवित्ययमाहेत्यादौ दोषः, गो इत्यादीनां सुबन्तत्वाभावेन पदत्वाभावात्। वृषणवसुरित्यादिसमासे पूर्वभागस्य भत्वेन तत्साजात्येन पूर्वो भागः पदमित्यर्थलाभासम्भवश्चेत्यत आह–यद्वेति। प्रकृतसूत्रे भाष्ये तु

---

प्रातिपदिकत्वापत्तिरूपो दोषः। तत्र–जन्मवानित्यादिसमुदाये। तत्र = औपगवादौ। कृत्रिमाकृत्रिमन्यायेन हि पदमित्यत्रेति। एतेन शक्तस्यान्यमते पदत्वस्य सुप्रसिद्धत्वेऽपि न क्षतिः। अत्र पक्षे = परममूलोक्तनियमाकारपक्षे। दोषः। इदं समुदायस्य प्रातिपदिकत्वापत्तिरूपो दोषः। वस्तुतः साजात्य प्रदर्शनमुक्तरूपेण न सम्भवतीत्याह–वृषणवस्वित्यादिना। ननु यद्वेति मूलोक्तद्वितीयनियमस्वीकारे डित्थाद्यव्युत्पन्नानां सञ्ज्ञानापत्तिः, अर्थवत्सूत्रन्तु 'बहुपटवः' इत्यादौ चरितार्थम्। नच प्रकृतिप्रत्ययभावानापन्नपदसङ्घातविषयको नियमो ऽस्त्विति वाच्यम्, 'गवित्ययमाह' इत्यत्र 'वृषणवसुः' इत्यत्र च यो दोष उक्तस्तस्य तदवस्थत्वात्। किञ्च लाघवार्थवत्समुदायस्य चेत्समासस्यैवेत्येवास्तु। गवित्ययमाहेत्यादावनुकरणस्यानुकार्येणार्थेनार्थवत्वाद्व्यावृत्तिः, तथा 'राजा' 'हयान्' इत्यादेश्च नियमेन सा न। नियमस्यार्थवत्समुदायविषयकत्वस्वीकारादेव 'जन्मवान्' 'बहुपटवः' इत्यादीनां सङ्ग्रहः।

नचैवं सरूपसूत्रस्थभाष्ये 'समुदायादेकविभक्तावेकशेष' इति पक्षे भिक्षा आम् इति स्थितिरुक्ता तद्विरोध इति वाच्यम्, तस्य भाष्यस्यैकदेश्युक्तित्वात्। किञ्च परममूलोक्तधर्मेण न सर्वसमाससाजात्यम्, अलुक्समासे पूर्वभागस्याप्रकृतित्वात्। विभक्तिपूर्वभागे तत्र प्रकृतित्वमस्तीति चेत्; उत्तरस्तु प्रत्ययो नेत्येतद्विरोधादिति चेत्सत्यैवाह–प्रकृतसूत्र इति। अत्र भाष्यकारीयवाक्ये तन्त्रेण सकृदुच्चरितस्याप्यर्थवत्समुदायपदस्यार्थवतां यः समुदायः स्वयमर्थवांश्च, तत्परत्वविवक्षया षष्ठीतत्पुरुषस्य फलमव्यु-

---

१ प्रकृतिप्रत्ययभावापन्नत्वञ्च प्रत्ययविशिष्टत्वम्। वै० स्वान्तत्व–स्वविशिष्टघटितत्व स्वविशिष्टघटितत्वैतत्त्रितयसम्बन्धेन। द्वितीयसम्बन्धघटकवैशिष्ट्यञ्च–स्वनिष्ठविधेयतानिरूपितोद्देश्यताश्रयत्व स्वा-

प्रत्ययभावानापन्नसङ्घातविषयको नियमोऽस्तु । न चाद्यपक्षे

अर्थवत्समुदायानां समासग्रहणं नियमार्थमित्युक्तम् । अत्र तन्त्रेण[2] षष्ठीतत्पुरुषः कर्मधारयश्च, तत्र षष्ठीसमासे अर्थवदित्यस्य स्वातन्त्र्येणापि प्रयोगार्हार्थवदित्यर्थः । गवित्ययमित्यादावनुकरणस्यानितिपरस्यापि प्रयो-

त्पन्नडित्थादिसङ्ग्रहः, एवमर्थवतः प्रकृतिप्रत्ययसमुदायस्य च सः । कर्मधारयफलन्तु समासग्रहणस्य नियमार्थत्वोपपत्तिः । अन्यथा ऽर्थवतामनर्थको यः समुदायो ऽर्थकसमासो ऽश्राद्धभोजी ब्राह्मणो ऽलवणभोजी चेत्यादिस्तेषाम्प्रातिपदिकसञ्ज्ञानिष्पादकत्वेन समासग्रहणचारितार्थ्येन नियमत्वानुपपत्तिरेव । किञ्च कर्मधारयासत्त्वे पञ्चगवधनाद्येकदेशस्यार्थवत्समुदायरूपसमासत्वात्तत्रापि स्यादिति तद्व्यावृत्तिरपि । एतस्य कर्मधारयस्य लाभस्तु नियमस्य सजातीयापेक्षत्वमित्यनेन । नन्वेवम्बहुपटवादौ दोष एवेत्यत आह—तन्त्रेति । अर्थद्वयविवक्षायाम् । स्वातन्त्र्येणापीति । अत्रापि पारतन्त्र्यसमुच्चायकः । स्वातन्त्र्यञ्च तावन्मात्रस्याप्यर्थबोधनाय पृथक्प्रयोगयोग्यत्वम् । प्रयोगार्हार्थवदित्यस्य प्रयोगार्हार्थवदित्यर्थः । ननु गवित्ययमित्यादेरधुना व्यावृत्तिर्न

न्तनिष्ठोद्देश्यतानिरूपितविधेयताश्रयत्वैतदन्यतरसम्बन्धेन । तृतीयसम्बन्धघटकवैशिष्ट्यञ्च=स्वाघटकत्व-स्वनिष्ठविधेयतानिरूपितोद्देश्यताश्रयाघटकत्व—स्वनिष्ठविधेयतानिरूपितोद्देश्यतावच्छेदकीभूतैकार्थीभावानाश्रयत्व—स्वान्तनिष्ठोद्देश्यतानिरूपितविधेयताश्रयाघटकत्वैतच्चतुष्टयसम्बन्धेन । आद्यसम्बन्धः स्वरूपकीर्तनपरः । द्वितीयसम्बन्धस्तु—'बहुपटु अस्' इत्यस्य, 'जन्मवत्' इत्यादेश्चैकदेशस्य प्रकृतिप्रत्ययभावापन्नत्वकरणाय । तृतीयसम्बन्धनिवेशस्तु 'राजन् अस् पुरुष स्' इत्यादिष्वतिप्रसङ्गवारणाय । तृतीयसम्बन्धेऽन्त्यसम्बन्धन्धाभावे 'बहुपटवः' इत्यत्राव्याप्तिः । प्रथम-द्वितीययोरभावेऽपि तत्रैवाव्याप्तिः स्यात् । तृतीयसम्बन्धाभावे 'परमगार्ग्यायणः' इत्यत्र फक्प्रत्ययवैशिष्ट्यमादाय 'परमगार्ग्यायण' इत्यस्य भाष्याभिमतप्रातिपदिकत्वं न स्यात्, परमशब्दमादाय स्वविशिष्टाघटितत्वाभावात् । स्वनिष्ठविधेयतानिरूपितोद्देश्यतावच्छेदकीभूतैकार्थीभावानाश्रयत्वनिवेशे तु भाष्यप्रयोगात् समस्तपरमगार्ग्यघटकगार्ग्य शब्दमादाय 'यञञोश्च' इत्यनेन सामर्थ्यविशिष्टाद्गार्ग्यरूपप्रातिपदिकैकदेशात् फग्विधानेन फङ्निष्ठविधेयतानिरूपितोद्देश्यतावच्छेदकीभूतसामर्थ्यस्य परमगार्ग्यशब्दे सत्त्वेन परमशब्दस्यैकार्थीभावानाश्रयत्वाभावेन न दोष इत्यन्यत्र ।

२ 'अर्थवत्समुदायानां समासग्रहणं नियमार्थम्' इति भाष्ये 'अर्थवत्समुदायानाम्' इत्यस्य तन्त्रेणोच्चारणम् । तथा च बोद्धुरावृत्त्या 'अर्थवतां समुदायाः अर्थवत्समुदायाः' 'अर्थवन्तः समुदायाः । अर्थवत्समुदायाः' इति विशेष्यविशेषणभावेन अर्थवदभिन्ना येऽर्थवतां समुदायास्तेषाञ्चेत् समासस्यैवेति नियमः फलति । तत्रार्थवतामित्यत्रार्थवत्पदं स्वातन्त्र्येण प्रयोगार्हार्थवत्परम् । 'अर्थवन्तः समुदायाः' इत्यत्रार्थवत्पदं निरूप्यनिरूपकभावापन्नविषताप्रयोजकपरम् । तथा च षष्ठीसमासमात्राश्रयणे नियमेनैव 'दश दाडिमानि' इत्यादिसमुदायव्यावृत्त्या भाष्यविरोधवारणाय कर्मधारयाश्रयणमिति । समुदायस्यानर्थकत्वान्न दोषः । कर्मधारयमात्राश्रयणे तद्धितादिग्रहणवैयर्थ्यापत्तिरित्युभयथाश्रयणम् ।

राजपुरुषावित्यादौ पुरुषावित्यादेः सञ्ज्ञा स्यादिति वाच्यम्, अर्थवत्त्वेनैव वारणात्। प्रत्ययार्थो हि विशिष्ट एवान्वेति, न तूत्तरपदार्थमात्रे येन पुरुषावित्यस्यार्थवत्त्वं स्यात्। नियमफलमाह—तेनेत्यादि। नन्वेवमपि मूलकेनोपदंशमित्यादौ वाक्यस्य सञ्ज्ञा दुर्वारा, कृद्ग्रहणे

---

गसत्त्वेन तत्त्वमस्त्येव। प्रकृतिप्रत्ययसमुदायस्य तु न व्यावृत्तिः, प्रत्ययस्य स्वातन्त्र्येण प्रयोगार्हार्थवत्त्वाभावात्। सरूपसूत्रे भाष्ये सुबन्तानामित्यनेनेदमेवोपलक्ष्यते इति स्पष्टमेव कैयटेनोक्तमिति बोध्यम्। पुरुषावित्यादेरिति। तत्पूर्वभागस्य 'उत्तरपदत्वे च' इति निषेधेनापदत्वात्। परस्य तत्प्रकृतिकप्रत्ययत्वाभावादिति भावः। अर्थवत्त्वेनैवेति। उत्तरपदस्य कार्यित्वाभावेन तन्निषेधाप्रवृत्तेश्चेत्यपि बोध्यम्। वाक्यस्येति। कृदन्तत्वा-

---

स्याद्गो इत्यादेरिति शब्दसमभिव्याहारेणैव प्रयोगादत आह—गावित्ययमिति। तत्त्वमिति। तावन्मात्रस्य पृथक्प्रयोगार्हत्वम्। 'खाट्कृत्य' इत्यादौ यथा। 'बहुपटवः' 'पुत्रकाम्य' इत्यादेः सङ्ग्रहमाह—प्रकृतीति। अभावादिति। निरुक्तस्वातन्त्र्यमात्रस्य सत्त्वेन विशेषणाभावप्रयोज्यविशिष्टाभावस्य तत्र सत्त्वमिति भावः। नचैवङ्कुम्भकाराद्युपपदसमासासङ्ग्रहः, उपपदासन्निधानेनोत्तरपदस्याप्रयोगादिति वाच्यम्, वेदव्यासाद्यवयवस्य व्यास इत्यस्य प्रयोगदर्शनेनारण्यकदण्डवत्स्वरूपयोग्यत्वरूपयोग्यताया अनपायात्। एषाम्प्रातिपदिकसञ्ज्ञा तु पूर्वसूत्रेण कृदन्तत्वेन वा स्वोक्तार्थस्य सप्रमाणत्वध्वननायाह—भाष्य इति। सरूपसूत्रे इति पाठः क्वाचित्कः। अर्थवत्सूत्रभाष्ये एव सुबन्तानामिति प्रतीकमुपादायैतच्चोपलक्षणमित्यादिना भेदसंसर्गद्वारकेतिशब्देन तेन कथनात्। इदमेव—स्वातन्त्र्येणापि प्रयोगार्हार्थवतामित्येव। पदार्थयोर्विभागेनापि प्रयोगे कृते सतीतरसंसर्गाकाङ्क्षाभेदससर्गः स द्वारभूतो यस्य विशिष्टार्थवस्त[illegible] तद्युक्तानामिति तद्वाक्यार्थः।

ननु मूले पुरुषावित्यादेः सञ्ज्ञाप्राप्तिरुद्भाविता स न सङ्गच्छते समुदायस्तत्प्रत्ययान्तपर्युदासेन व्यावृत्तिः स्यादत आह-परस्येति। आवित्यस्येत्यर्थः। प्रत्ययान्तपर्युदासबोध[illegible]देऽपि प्रत्ययपदेन यस्माद्विहितस्तदादेरित्यस्योपस्थितिरस्त्येवेति भावः। अत एव भाष्ये दशदाडिमानीत्यादिवाक्यस्यानर्थे कस्यार्थवत्पदव्यावर्त्यत्वोक्तिः सङ्गच्छते। यत्तु परस्येत्यनेन नियमस्याद्यस्याप्रवृत्तिर्ध्वन्यते तस्मिन्नुत्तरस्तु प्रत्ययो नेत्यस्य निवेशोऽपि परस्य तत्प्रकृतिकप्रत्ययान्तत्वाभावादिति व्याख्यानं, तत्तु स्वीयसिद्धान्तविरुद्धम्। यत्र सञ्ज्ञाते पूर्वो भागः पदमित्यर्णेनैव नियमाप्रवृत्तिकाभात्। न च 'उत्तरपदत्वे च' इति निषेधेन पुरुषेत्यस्य पदत्वन्नास्तीति वाच्यम्, उत्तरपदस्य कार्यित्व एव

गतिकारकपूर्वस्यापि ग्रहणात्, इति चेन्मैवम्, समासग्रहणकृतनियमेन परत्वाद्बाधात्। एवं च 'कृत्तद्धित' इति सूत्रे कृद्ग्रहणपरिभाषा नोपतिष्ठत एव निष्फलत्वादिति तत्त्वम्। *यत्तु वदन्ति*—समा-

दिति भावस्तदाह—कृदिति। न चास्य भुजौ करणत्वेनोपदंशं प्रति न कारकत्वम्, मूलकस्योपदंशे कर्मत्वेनान्वयो विभक्तिस्तु प्रधानानुरोधिकरणत्वकृता तृतीयैवेति तं प्रत्यपि कारकत्वमित्याशयात्। परत्वाद्बाधादिति। नियमस्यार्थतो निषेधेऽपि तात्पर्येणार्थवत्सूत्रापवादस्यास्य परत्वेन कृदन्तत्वप्रयुक्तस्यापि निषेधे तात्पर्यादिति भावः। निषेधानां बलवत्त्वाच्चेत्यपि बोद्ध्यम्। निष्फलत्वादिति। स्पष्टं चेदं 'पुंयोगात्' इति सूत्रे भाष्यकैयटयोः।

तस्य निषेधस्य कार्यित्व एव तस्य निषेधस्य प्रवृत्त्यङ्गीकारात्। कृदन्तत्वं वाक्यस्य परिभाषयोपपादितं, तच्च सङ्गच्छते, यत्क्रियायुक्त इति न्यायस्थल इव प्रत्यासत्त्या कारकस्यापि तद्घटकार्थक्रियासम्बन्धिन एव ग्रहणेनास्य भुजिप्रत्येवकारकत्वादित्याशङ्कान्निवारयति—नचेत्यादिना। समाधानं सूचयति—मूलकेति। अपिभुजिनापि सम्बन्धं व्यनक्ति। अन्वयः। शाब्द इति शेषः। प्रधानेति। तिङन्तार्थक्रियायाः समुदायजन्यशब्दबोधे विशेष्यतया भानादस्याः प्राधान्यम्। प्रधानानुरोधीति। प्रधानेतरयोर्यत्र द्रव्यस्य क्रिययोः पृथक् शक्ति गुणाश्रया तत्र प्रधानमनुरुध्यत इति न्यायात्। सम्प्रत्यपीति—उपदंशप्रतीत्यर्थः।

ननु नियमशास्त्रस्य निषेधमुखेन प्रवृत्तिरिति पक्षे निर्वाहेऽपि विधिमुखेन प्रवृत्तिरिति सिद्धान्तिते पक्षे कथन्निर्वाहोऽत आह नियमस्येति। अर्थतः = प्रयोजनतः। निषेधेऽपि तात्पर्ये 'उभयप्राप्तौ कर्मणि षष्ठ्याः प्रतिषेधेऽकादिप्रयोगे ऽप्रतिषेध' इति वार्त्तिकं सङ्गच्छते। इति भाव इति। परत्वादिति वदतो भाव इत्यर्थः। वस्तुतो निषेधे तात्पर्ये 'निषेधाश्च बलीयांसः' इति 'कमेर्णिङ्' इति सूत्रपठितवार्तिकरीत्याबलवत्त्वसम्भवे परत्वादित्येतन्न युक्तमित्याशयेनाह—निषेधानामीति इत्यपीति। अपिना विधिमुखेन प्रवृत्तिरिति पक्षे नियमस्य यत्र प्रवृत्तिस्तत्र सामान्यशास्त्रस्य तात्पर्यसङ्कोचः क्रियत इत्यपि पक्षोऽस्तीति प्रकृते बाध्यसामान्यचिन्तयाऽर्थवत्पदस्यार्थवत्पदसमूहान्यपरत्ववत्कृदंशस्यार्थवत्पदसमूहान्यकृदन्तपरत्वमित्यपि सम्भवतीति निषेधस्य यत्फलन्तस्यार्थतो लाभस्तथाच न प्रकृतेऽतिप्रसङ्ग इति बोध्यम्। स्वोक्तार्थः सिद्धान्तसम्मत एवेति ध्वनयितुमाह—स्पष्टञ्चेदमिति। तत्र हि—'गतिकारकोपपदानाङ्कृद्भिः

१—नियमशास्त्राणां विधिमुखेन प्रवृत्तिपक्षे अर्थवत्पदार्थे स्वातन्त्र्येण प्रयोगार्हार्थवत् पूर्वोत्तरभागघटितसमुदायभिन्नत्वेन सङ्कोचे सङ्कुचितस्यैवात्रानुवृत्त्या 'मूलकेनोपदंशम्' इत्यत्र कृदन्तत्वनिमित्तकप्रातिपदिकसञ्ज्ञाया अप्राप्तिरित्यपि बोध्यम्।

सग्रहणं न नियमार्थम्, किन्तु विद्ध्यर्थमेव। अर्थवत्त्वं हि वृत्तिमत्त्वम्। वृत्तिश्च द्विधा। शक्तिर्लक्षणा च। न च सा समासेऽस्तीति। अत्रेदं वक्तव्यम्—सिद्धान्ते तावदेकार्थीभावाभ्युपगमाद्वृत्तिर्नास्तीति बाधितमेव। मीमांसकमतेऽपि लक्षणाऽस्त्येव। यदाहुः—

न च सा, समासे इति। नापि वाक्ये इति बोद्धव्यम्। एकार्थीभावेति। एकोपस्थितिनियामिका समुदायशक्तिरेवात्रैकार्थीभाव इति भावः। एवं समासे वृत्तिः सिद्धा। वाक्येऽपि शक्तिरस्ति, विशेषणविशेष्यभावांशे तच्छक्तेरर्थ-

सह समासवचनम्प्राक् सुबुत्पत्तेः' इति परिभाषाया प्रयोजनम्प्रथमतः 'साङ्कूटिनम्' 'व्यापक्रोशी' इत्येतदभिहितम्। अत्राद्ये 'अभिविधौ भाव इनुण्' इतीनुण् प्रत्यय 'अणिनुण' इत्यण्प्रत्ययस्य सुपश्च प्रसङ्गे अण्प्रत्ययस्य स्वार्थिकत्वेन सुबुत्पत्तेः प्रागन्तरङ्गत्वादुत्पत्तिर्भवति यदि, तदा कूटिन्नित्यस्यैवादिवृद्धिः स्यात्। सुबुत्पत्तेः प्राक् समासे तु अन्तरङ्गत्वात्पूर्वं समासः। अण्प्रत्ययस्त्विनुणन्तत्वसापेक्षत्वाद्बहिरङ्ग इति विशिष्टादेवाण्प्रत्ययः। यदि समासे सुबुत्पत्तेरपेक्षा तदा सुबुत्पत्तेः प्राक् समासाप्राप्त्या सुपश्च प्राक्पूर्वोक्तरीत्याऽण्प्रत्यय रूपासिद्धिः स्फुटैव। द्वितीये तु 'कर्मव्यतिहारे णच् स्त्रियाम्' इति णचि समासोत्तरं 'णचः स्त्रियामञ्' इति विशिष्टादञि रूपसिद्धिः अन्यथाऽस्यापि पूर्ववदसिद्धिः स्यात्। ततः सत्यामप्येतस्याम्परिभाषायां प्रत्ययग्रहणपरिभाषाया ऽवयवादुत्पत्तिः प्राप्नोतीत्याशङ्कायाः कृद्ग्रहणे गतिकारकपूर्वस्यापि ग्रहण' मिति परिभाषाया निराकरणे कृते गतिकारकोपपदानामिति परिभाषायाः 'साङ्कूटिनम्' इत्यादिप्रयोजनन्तर्हि न स्यादकृत एव समासे कृद्ग्रहणे परिभाषाया सङ्घातात्तद्धितोत्पत्तिरित्याशयेन—'नैतदस्याः परिभाषायाः प्रयोजनम्भवति, एतयैव सिद्धम्' इति भाष्यकृतोक्तम्। अस्याः = गतिकारकोपपदानामिति परिभाषायाः। एतया = कृद्ग्रहणपरिभाषया। ततो न सिद्ध्यति, किङ्कारणमप्रातिपदिकत्वादित्याशङ्क्य कृदन्तत्वात्प्रातिपदिकसञ्ज्ञा भविष्यतीति समाधाने परेण कृते सति, कृद्ग्रहणपरिभाषा प्रातिपदिकसञ्ज्ञायां नोपतिष्ठते, 'मूलकेनोपदंशम्भुङ्क्ते' इति वाक्येऽपि लुक् प्रसज्येतेत्युक्तम्। तत्राप्रातिपदिकत्वादिति प्रतीकमुपादाय 'प्रत्ययग्रहणे यस्मादिति परिभाषासत्त्वञ्चकृदन्तत्वार्थवत्सूत्रेणापि न समासग्रहणकृतनियमेन सङ्घातस्य प्रातिपदिकसञ्ज्ञानिषेधात्' इति कैयटेनोक्तम्। सुब्लुगिति समासग्रहणकृतनियमेन कृदन्तत्वप्रयुक्तसञ्ज्ञाया अपि बाधोऽवश्यं वाच्यः, एवञ्च फलाभावान्नैतत्परिभाषोपस्थितिस्तत्रेति भावः। अत्र समासग्रहणकृतनियमेन बाधस्य प्रकारस्तूपपादित एव। एतेन प्रघट्टकेन स्वोक्तार्थः सिद्धान्तसम्मत इति स्पष्टमेव।

अत्र मूले—यस्त्वित्यादिना। नैयायिकमतानुवादे न्यूनतापरिहारायाह—नापि वाक्य इति। वृत्ति सिद्धा = शक्तिरूपा वृत्तिः सिद्धा। न्यूनतामेवाचष्टे—वाक्ये-

सर्वत्रैव हि वाक्यार्थो लक्ष्य एवेति च स्थितम् ॥ इति ।

अथ नैयायिकरीत्योच्यते, तदपि न, 'बहुपटवः' इत्याद्यसिद्धेः । तद्धितग्रहणं तद्विशिष्टपरमिति चेन्न, पचतकीत्यादावतिव्याप्तेः । किञ्चैवं कृद्ग्रहणपरिभाषया मूलकेनोपदंशमित्यादावतिव्याप्तिर्दुर्वारैवेत्यास्तां तावत् । चकारो अनुक्तसमुच्चयार्थः, तेन, 'निपातस्यानर्थकस्य प्रातिपदिकसञ्ज्ञा वक्तव्या' इति गतार्थम् । येषां द्योत्योऽप्यर्थो नास्ति तदर्थमिदम्—अवद्यति । अनुकरणेषु तु अनुकार्येण सहाभेदविवक्षायामर्थवत्त्वाभावादेव न प्रातिपदिकत्वम्—'भू सत्ता-

---

वत्सूत्रभाष्यादावुक्तत्वात् लक्षणेति । वृत्तौ वाक्ये चेति भावः । असिद्धेरिति । समास इव तद्धितेऽपि शक्तिलक्षणयोरभावादिति भावः । पचतकीत्यादाविति । न च पूर्ववर्तित्वोत्तरवर्तित्वाभ्यामेव वैशिष्ट्यं निवेशनीयम्, विनिगमनाविरहेण मध्यवर्तित्वस्यापि ग्रहणापत्तेरित्याशयात्, किञ्च बहुपटवस्तिष्ठन्तीति वाक्यस्यापि सञ्ज्ञापत्तिः । एवम् = समासग्रहणस्य निय-

---

ऽपीति । अत एवाह—वृत्तौ वाक्ये चेतीति । समास इवेति । तद्धीत्येत्यादिः । तद्धितेऽपि = तद्धितविशिष्टेऽपि । मूलेऽतिव्याप्तेरिति । तस्यापि तद्धितविशिष्टत्वात्प्रातिपदिकसञ्ज्ञाया आपत्तेरित्यर्थः । इष्टापत्तिस्तु कर्तुमशक्या पचतकि भवतीत्यादौ 'तिङ्ङतिङः' इति निघातापत्तेरित्यभिमानः । प्रातिपदिकसञ्ज्ञायाम्फिट्स्वरापत्तिरिति तु न चित्तः सप्रकृतेर्ग्रहणेनान्तोदात्तत्वस्येष्टत्वात् । तद्धितवैशिष्ट्यम्—अन्यतरसम्बन्धेन तद्धितविशिष्टप्रकृतिघटितसमुदायत्वम्, मध्यवर्तित्वम्—स्वनिष्ठावयवत्वनिरूपितावयवित्वम् । एवञ्चोक्तातिव्याप्तिर्दृढैव । नन्वत्र लक्ष्यानुरोध एव विनिगमकोऽस्त्वित्यत आह—किञ्चेति । सञ्ज्ञापत्तिरिति । तथाच सुब्लुक्स्यात् ।

ननु प्रत्ययग्रहणपरिभाषया यथा भवन्मते प्रकृत्यादिप्रत्ययान्तस्य ग्रहणम् भवति तथा मया प्रत्ययादिप्रकृत्यन्तस्यापि ग्रहणमिति कल्प्यत इति न भवदुक्तो दोष इत्यत आह मूले—किञ्चैवमिति । अत्र यद्देवमिति तद्विशिष्टपरमिति, चेदित्यर्थकमिति

---

1 लक्ष्यानुरोधात्, व्याख्यानाच्च तद्धितविशिष्टं प्रातिपदिकसञ्ज्ञकं भवति, इत्यर्थाश्रयणे तु न कोऽपि दोषः । वै०स्वनिष्ठचरमावयवतानिरूपकत्व स्वनिष्ठाद्यवयवतानिरूपकत्वैतदन्यतरत्व—स्वनिष्ठविधेयतानिरूपितोद्देश्यताश्रयनिष्ठाद्यवयवतानिरूपकत्व-स्वनिष्ठविधेयतानिरूपितोद्देश्यताश्रयनिष्ठचरमावयवतानिरूपकत्वैतदन्यतरत्वोभयसम्बन्धेन । नचैवमपि 'पेत्' इति तिङन्तादकचि 'अकेत्' इत्यत्र दोषः, तत्र प्रातिपदिकत्वस्येष्टत्वे बाधकाभावात् ।

याम्' इति यथा । भेदविवक्षायां तु सञ्ज्ञा स्यादेव–'भ्रुवो-वुक्' इति यथा ।

मार्थत्वाभावे । न चार्थवत्त्वाभावाद्वारणम्, न्यायनये उत्तरसूत्रे तदसम्बन्धात् । 'तृतीयाप्रभृतीनि' इति तु स्वरे विशेषार्थम् । अभेदविवक्षायामिति । सादृश्यमूलाभेदविवक्षायामित्यर्थः । अनुकरणं च स्वसादृश्येनानुकार्यमुपस्थापयति, तथोपस्थितस्य शाब्देऽन्वयप्रतियोगित्वं व्युत्पत्तिवैचित्र्यात् । एवं च वृत्त्यार्थबोधकत्वरूपार्थवत्त्वाभाव इति भावः । अत एव 'भू सत्तायाम्' इत्यादिनिर्देशाः सङ्गच्छन्ते तदाह–भू इति । अपदं न प्रयुञ्जीतेत्यस्यापरिनिष्ठितमित्यर्थः । अस्य चास्मादेव लिङ्गात्परिनिष्ठितत्वम् । भेदवि-

भ्रमवारणायाह–समासग्रहणस्येति । अर्थवत्त्वाभावादिति । तन्नये विशिष्टे शक्तिलक्षणयोरभावादिति भावः उत्तरसूत्रे = 'कृत्तद्धित' इति सूत्रे कृदन्तादिष्वपि तन्नये वृत्यसत्वादिति भावः । ननु यदि मूलकेनोपदंशमिति वाक्यैरपि प्रातिपदिकसञ्ज्ञायां सुब्लुक् तर्हि 'तृतीयाप्रभृतीनि' इति समाससंज्ञाविधानङ्किमर्थमत आह–तृतीयेति । स्वरे विशेषार्थमिति । उदात्तादिस्वरकृतो यो विशेषस्तदर्थम् । एवं स्वरेऽधिको विशेषः । दधि उपदंशमित्यादौ 'न समास' इत्येतत्प्रवृत्तिकृतो यो विशेषस्तदर्थमित्यर्थः । यदि तु 'ज्ञापकसिद्धन्न सर्वत्रे' ति परिभाषामाश्रित्य कृद्ग्रहणपरिभाषाया अनित्यत्वादिष्टसिद्धिरित्युच्यते, तदा क्लेश इति बोध्यम् । ननु विरुद्धधर्मवत्त्वादनुकार्यानुकरणयोरभेदः कथमत आह–सादृश्यमूलकेति । वृत्त्याऽनुपस्थितस्य तर्हि शाब्दबोधविषयत्वङ्कथमतआह–तथोपेति । शाब्देऽन्वयप्रतियोगित्वम्–शाब्दविषयसंसर्गप्रतियोगित्वम् । व्युत्पति वैचित्र्यात्–कार्यकारणभावे वैचित्र्यात् । अनुकार्यविषयकशाब्दबुद्धित्वावच्छिन्नम्प्रत्यनुकरणजन्यार्थोपस्थितित्वेन कारणतायाः स्वीकारात् । एवञ्च = उक्तरीत्यानिर्वाहे च । अत एव = उक्तरीत्याऽनुकरणस्य प्रातिपदिकत्वाभावादेव । एवञ्च भू सत्तायामित्यादिनिर्देश एवाभेदविवक्षाज्ञापक इति भावः । ननु 'अनुकरणञ्चानितिपरम्' इति गति सञ्ज्ञायान्निपातत्वादव्ययसञ्ज्ञायां लुका रूपसिद्धिरिति चेन्न, कृञो योग एव तत्प्रवृत्तेरङ्गीकारात् । नन्वपदस्य कथम्प्रयोगोऽत आह–अपदमिति । एतत्पक्ष इति भेदविवक्षापक्षे इत्यर्थः । यथार्थो वृत्तिविषयस्तथा शब्दोऽपीत्यर्थः । अनुकरणन्द्विविधिम्–व्यक्तशब्दसमानानुपूर्वीकम्, अव्यक्तशब्दसदृशं च एतदुभयसाधारणन्तत्वं स्वसदृशशब्दमात्रतात्पर्यकोच्चारणविषयत्वम् । व्यक्तशब्दानुकरणस्थलेऽनुकार्यस्योपस्थितस्यार्थोपस्थापकतास्ति । अव्यक्तानुकरणात्तूपस्थितस्य सा नास्तीति विशेषः । एवञ्चार्थविशिष्टशब्दमात्रतात्पर्यकत्वध्वनितात्पर्यकत्वे अनुकरणयोरनुकार्ये

१—अभेदानुकरणस्य चेत्यर्थः ।

*लिङ्गविशिष्टस्येति* । लिङ्गबोधकप्रत्ययविशिष्टस्यापीत्यर्थः । परिभाषायाः प्रयोजनन्तु अयस्कुम्भी, 'अतः कृ-कमि' इति सत्वम्, तद्धि कंसादिषूत्तरपदेषु विधीयते । किञ्च, कुमारीमाचष्टे कुमारयति । 'णाविष्ठवद्' इति टिलोपः ।

---

वक्षायामिति । अर्थवच्छब्दोऽपि वृत्तिविषय एवैतत्पक्षे इति भावः । अयं पक्षो 'मतौ छः सूक्त' (पा. सू १।२।५९) इति सूत्रे भाष्ये । अनयोश्च लक्ष्यानुरोधात् व्यवस्थेति दिक् ।

विशिष्टस्यापीत्यर्थं इति । प्रातिपदिकत्व-तद्व्याप्यधर्माणां लिङ्गप्रत्ययविशिष्टे अतिदेशादिति भावः । स्पष्टं चेदं 'बहुव्रीहेरूधस'(पा.सू. ३।१।२५) इत्यत्र भाष्ये । इयं च प्रातिपदिकसामान्यग्रहणे, तद्विशेषग्रहणे च तद्भूल यन्नाह-अयस्कुम्भीति,किञ्चेत्यादि च । उत्तरपदेष्विति । अत्र च ङ्यन्तमुत्तरपदमिति भावः । टिलोप इति । इदमुपलक्षणं पुंवत्त्वस्य, णित्त्वस्य । सामान्यग्रहणेऽपि

---

तूभयधर्माभाव इति विरुद्धधर्माभ्यामनुकरणमनुकार्याद्भिन्नमिति भेदविवक्षाबीजम् । एवञ्चोभाभ्यां शाब्दबोधो वृत्त्या भवति वृत्त्यार्थवत्त्वमस्त्येवेति भवत्येव प्रातिपदिकसञ्ज्ञा । 'भुवो वुग्' इति निर्देशस्त्वत्र ज्ञापकः ।

'प्रातिपदिकग्रहणे' इति परिभाषया लिङ्गविशिष्टस्यापीत्यस्य-लिङ्गबोधकप्रत्ययविशिष्टस्यापीत्यर्थः, तत्र तद्विशिष्टस्य ग्रहणे मानमाह-प्रातिपदिकत्वेत्यादिना । स्पष्टमिति । तत्र हि-'कुण्डोध्नी' इत्यत्र नद्यन्ताद्बहुव्रीहेरित्यर्थो 'नघृतश्च' इति सूत्रस्येत्यर्थाभिप्रायेण कबापादितः । यदि नद्यन्ते बहुव्रीहिस्वरस्य प्रातिपदिकत्वस्य व्याप्यस्यातिदेशः परिभाषया क्रियते तदाऽपादनसङ्गतिरितिऽनद्यन्तप्रकृतिकसुबन्तोत्तरपदकाद्बहुव्रीहेरित्यर्थेन परिहार इति त्वन्यत् । ननु 'अयस्कुम्भी' इत्यत्र प्रकृतिभागमादाय 'अतः कृकमी' इत्यस्य प्रवृत्तिर्भविष्यतीति न परिभाषोपयोगोऽत आह मूले-तद्धीति । उत्तरपदस्येत्यस्य लाभस्तु 'नित्यंसमासे' इति सूत्रात्समास इत्यस्य, अनुत्तरपदस्थस्येत्यस्य वानुवृत्त्या विसर्गान्तस्य पूर्वपदत्वलाभे उत्तरपदस्याक्षेपेण प्रत्यासत्त्या कंसादिरूपन्तद्गृह्यत इति परिभाषाया उक्तार्थकत्वमावश्यकमिति भावः । एतादृशार्थस्वीकारं विना न 'अयस्कुम्भी' इत्यत्र 'अतः' इति सूत्रस्य प्रवृत्तिरित्येतदुपपादयति-अत्र चेति । पुंवद्भावस्य टिलोपबाधकत्वाभिप्रायेण-इदमिति । ननु प्रकृते कुमारीशब्द औपधिजातिवाची गृह्यत इति भाषितपुंस्कत्वाभावान्न पुंवद्भावस्य प्राप्ति-

---

१—अर्थ इवेत्यर्थः । भेदानुकरणपक्षे अनुकरणे अर्थनिरूपितवृत्तिरिव अनुकार्यशब्दनिरूपितापि वृत्तिरस्तीति भावः एतत्तत्त्वं पूर्वं निरूपितमिति तत एव द्रष्टव्यम् ।

एवं चाक्षिनयन्त्यहानि इत्यत्र आचारे क्विबपि फलम् । ङ्या-

प्रवृत्तेरैवान्यया परिभाषया ङ्याब्ग्रहणवैयर्थ्यं भाष्ये शङ्कितम् । न च दृष्टा माला, दृष्टा गौरीति समुदायस्यानुपसर्जनस्त्रीप्रत्यये तदादिनियमाभावात् ङ्याबन्तत्वेन ततः सुबुत्पत्त्यर्थं तदस्तु । लिङ्गविशिष्टपरिभाषया तु नात्र सिद्धिः, ङ्याब्रहितस्य 'दृष्टा माल'[1] इत्यादेः समुदायस्य प्रातिपदिकत्वाभावेन तदतिदेशाप्रवृत्तेः । एवं चाम् दृष्टा माला देवदत्तेत्यादावेकपदान्तरितत्वेनैकान्तरतापत्तिरिति वाच्यम्, एतद्भाष्यप्रामाण्येन, प्रातिपदिकसाहचर्येण च पृथगर्थोपस्थापकविभक्त्यन्तानवयवकङ्याबन्तस्यैव ग्रहणेनादोषात्[2], प्रत्येकमपि पदत्वसत्त्वेनैकान्तरत्वाभावाच्च । उत्तरसङ्ख्या-

रत आह—पिचव्येति । एवञ्चोपलक्षणत्वावश्यकत्वेन वयोविशेषविशिष्टवाचकत्वेऽपि तस्य प्रकृते नानुपपत्तिः परिभाषायां ज्ञापकस्य 'कुमारः श्रमणादिभिः' इति निर्देशस्य विशेषविषयत्वाद्विशेषग्रहण एवेति भ्रमवारणायाह—सामान्येति—मूले—'इत्येवसिद्धे' इति यत्तदसङ्गतमित्यभिप्रायिकामाशङ्कान्निराचष्टे नचेत्यादिना । तदस्तु= ङ्याब्ग्रहणमस्तु ।

नन्वस्तु दृष्टा मालेति समुदायात्सुस्तथापि हल्ङ्यादिलोपेन सिद्धमत—आह—एवञ्चेति । समुदायात्सुबुत्पत्त्या एकपदत्वे चेत्यर्थः । एकान्तरतापत्तिः—'आम एकान्तरम्' इति सूत्रेणैकपदान्तरितत्वप्रयुक्तस्य निघातनिषेधस्यापत्तिः । एतद्भाष्येति । ङ्याब्ग्रहणस्योक्तनियमार्थत्वप्रतिपादनपरभाष्येत्यर्थः । पृथगिति पृथगर्थोपस्थापको विभक्त्यन्तोऽनयवो यस्य समुदायस्य तस्य ग्रहणमित्यर्थः । समासघटकस्य चित्रगवीत्यादिसमुदायस्थस्य व्यावृत्तये आह—पृथगिति । अजेत्यादिसङ्ग्रहाय—विभक्त्यन्तेति । पूर्वोक्तं यदाम् इत्यस्य प्रवृत्तिरूपम्फलन्तद्विघटयति—प्रत्येकमपीति ।

१ नच मालवृत्तिप्रातिपदिकत्वस्य लिङ्गबोधकप्रत्ययविष्टे 'दृष्टा माला' समुदाये आरोपः स्यादत एव भाष्ये 'दीर्घमुखमानिनी' इत्यत्र दीर्घमुखीमानिन् शब्दात् ङीपि मानिन्वृत्तिमानिन्शब्दत्वस्य 'मानिनी' इत्यत्रातिदेशेन 'अमानिन्' इति प्रतिषेधः साधित इति चेन्न, अस्य स्त्री ई दृषद् ई 'दृषदी' इत्यत्र दृषद्वृत्तिप्रातिपदिकत्वारोपेणापत्यार्थे ढगापत्त्या प्रातिपदिकमात्रवृत्तिविषयताप्रयोजकपदप्रतिपाद्यतावच्छेदकलिङ्गबोधकप्रत्ययनिष्ठविधेयतानिरूपितोद्देश्यताश्रयवृत्तिधर्माणां लिङ्गबोधकप्रत्ययविशिष्टे आरोप इत्यर्थात् ।

वै० स्वघटितत्व—स्वनिष्ठविधेयतानिरूपितोद्देश्यताश्रयघटितत्व—स्वविशिष्टाघटितत्वैतत्त्रितयासम्बन्धेन । सम्बन्धघटकवैशिष्ट्यञ्च—स्वाघटकत्व—स्वप्रकृत्यघटकत्वैतदुभयसम्बन्धेन । उद्देश्यताश्रयत्वधापर्याप्त्यापि, अत एव 'अयस्कर्णी' इत्यत्र विशिष्टान् ङाप्यपि सत्वं सिद्ध्यति । 'दृष्टा माला' इति समुदाये स्वविशिष्टाघटितत्वं नास्तीति नारोपः ।

२ दृष्टा माला इत्यनयोः पृथगर्थोपस्थापकत्वेन तद्घटिताऽदृशसमुदायस्य न ङ्याबन्तग्रहणेन ग्रहणमिति भावः ।

ङ्भ्यां प्रागिति। तेन लोहिनिका आर्यका च सिद्ध्यति। तथा हि—स्वार्थिकत्वेनान्तरङ्गः परश्च 'लोहितान्मणौ' इति कन् ङीपं बाधेत, ततो लोहितिकेत्येव स्यादिष्यते तूभयम्। ङीब्ग्रहणसामर्थ्यात्तु ङ्यन्तात्कनि रूपद्वयं सिद्धम्, 'वर्णादनुदात्तात्' इत्यस्य वैकल्पिकत्वात्। आर्यशब्दात्तु 'न सामिवचने' इत्यत्र ज्ञापयिष्यमाणोऽ-

---

याः पूर्वसङ्ख्याबाधकत्वात्। नियमार्थं तु न, त्यूङन्ते दोषापत्तेः। कुत्साद्यर्थकस्वार्थिकानां 'कुत्सिते' इति सूत्रस्थभाष्योक्तरीत्या ङ्याबन्तादुत्पत्तेः सिद्धत्वादत्यन्तस्वार्थिके फलमाह—तथा हीत्यादीना। स्वार्थिकत्वे=अत्यन्त स्वार्थिकत्वेन। परश्चेत्यभ्युच्चयः। एवञ्च 'लोहिताल्लिङ्गबाधनं वा' इति

---

बाधकत्वादिति। गौणी मुख्या वा उत्तरसङ्ख्या पूर्वसङ्ख्याया बाधकेति 'अइउण्' सूत्रीयभाष्यसिद्धान्तादिति भावः। नचैवम् आमतिसुन्दरपुरुष इत्यत्र तस्य सूत्रस्य प्रवृत्तिर्न स्यादिति वाच्यम्, एकान्तरमिति पदे स्वरितत्वकल्पनेनाधिकं कार्यमिति 'स्वरितेनाधिकार' इति सूत्रार्थात्प्रकृतैकपदेन समासात्मकैकपदस्यापि ग्रहणमित्यर्थेना दोषात्। ननु प्रकृतसूत्रस्थं ङ्याब्ग्रहणं स्त्रीप्रत्ययान्ताच्चेन्ङ्याबन्तादेवेति नियमार्थमस्त्वित्याशङ्कां निराचष्टे—नियमार्थन्त्विति। त्यूङन्त इति। तिंप्रत्ययान्ते, ऊङन्ते चेत्यर्थः। 'युवतिः' 'श्वश्रूः' इत्यादिसङ्ग्रहाय नियमार्थता तस्य नोक्ता। नन्वेतयोः सुबुत्पत्तौ किम्मानमिति चेन्न, 'युवतीः पश्य' 'युवतिका' 'युवतितरा' इति भाष्यप्रयोगस्य, 'श्वशुरः श्वश्र्वा' इति सौत्रनिर्देशस्य च मानत्वात्। एवमूङन्ताद्विभक्त्युत्पत्तौ 'नोङ्धात्वोः' इति सूत्रमपि ज्ञापकम्। नच ङ्याबन्तात्तद्धितोत्पत्तिस्वीकारे 'यूनीतिः' इति स्यादिति वाच्यम्, तद्धितपदस्य तिप्रत्ययान्यतद्धितपरत्वात्।

भाष्योक्तरीत्येति। इयं रीतिरग्रे स्फुटा। फलमिति। येषाङ्कुत्साद्यर्थद्योतकत्वेन स्वार्थिकता, तेषु 'कुत्सिते' इति भाष्योक्तरीत्या फलाभावेपि, य एतद्भाष्योक्तन्यायाविषयास्तेषु फलमित्यर्थः। 'कुत्सिते' इति सूत्रभाष्योक्तन्यायाविषयतासूचनायाह—अत्यन्तेति। अन्तरङ्गस्य बलवत्त्वाद्बहिरङ्गशास्त्रमतुल्यबलमिति 'परश्च' इत्यनुपपन्नमत आह—अभ्युच्चय इति। विप्रतिषेधाभावस्वीकृत्य वाद इत्यर्थः। एवञ्च=ङ्याब्ग्रहणस्य परममूलोक्तार्थसाधकत्वेनावश्यकतया चेत्यर्थः। नन्वस्तूक्तरीत्या कना पूर्वमुत्पत्तिस्तथापि कन्प्रकृत्याऽर्थशब्दान्मध्येटाबुत्पत्त्येष्टसिद्धिर्भविष्यतीत्यत

---

१ 'न हि त्रिपुत्रो द्विपुत्रव्यवहारं लभते' इति दर्शनादिति भावः। वस्तुतस्त्विदमयुक्तम्, समानाधिकरणसङ्ख्ययोरेव बाधकत्वाङ्गीकारात्।

त्यन्तस्वार्थिकोऽपि कन् आब्ग्रहणसामर्थ्यात् पूर्वं न प्रवर्त्तते। तेन 'उदीचामातः स्थाने यकपूर्वायाः' इति इत्वविकल्पः सिद्ध्यति।

स्यादेतत्—एवं सति बहुगोमत्केति न सिद्ध्येत्, कपः प्रागुगिल्लक्षणङीप्प्रसङ्गादिति चेन्मैवम्, अकृत एव समासे ऽलौकिकप्र-

न वक्तव्यमिति भावः। विकल्पः सिद्ध्यतीति। अन्यथा ऽऽर्येशब्दात्कनि समुदायोत्तरटापैव लिङ्गसम्बन्धबोधनसम्भवादेकाज्द्विर्वचनन्यायेन समुदायादेव टापि कनः पूर्वं टाबभावे आतः स्थानिकत्वाभावाद्विकल्पासिद्धिरिति भावः।

ङीप्प्रसङ्गादिति। अन्यपदार्थस्य स्त्रीत्वादिति भावः। अकृत एवेति। इदं

आह—अन्यथेति। उक्तनियमाभाव इत्यर्थः। न चात्रैकाज्द्विर्वचनन्यायोपन्यसनन्निष्फलकुत्सार्थेनेकार्थीभावापन्नस्याऽर्यशब्दस्य निष्कृष्य तस्य स्त्रीत्वेन योगालम्भवेनैव तत्त्वाबभावस्योपपादयितुं शक्यत्वादिति वाच्यम्, अस्य कनोऽत्यन्तस्वार्थिकतया तादृशयुक्तेरभावात्।

इदम् = अकृते एवेत्यादिना यदुक्तन्तत्। एवञ्च यस्य स्त्रीत्वेन योगोऽन्यपदार्थबोधकन्तत्तस्योगिदन्तत्वाभावान्न ङीपः प्राप्तिरिति भावः। आवश्यकश्चायमर्थोऽन्यथा 'बहुकुमारीक' इत्यादौ कबुत्पत्तेः प्रागुपसर्जनह्रस्वत्वस्य प्रवृत्तिः स्यात्। अलौकिकप्रक्रियावाक्ये समासान्तप्रवृत्तौ तु अन्यपदार्थविशेषणतापन्नार्थप्रातिपदिकान्तस्य स्त्रीप्र-

१ 'अनत्यन्तगतौ क्तात्' ( पा० सू० ५-४-४ ) इत्यनेन प्रकृत्यर्थक्रियया क्तार्थकारकस्य साकल्येनासम्बन्धे कन् विधीयते। यथा 'छिन्नकम्, ईषच्छिन्नमित्यर्थः'। 'न सामिवचने' ( पा० सू० ५-४-५ ) इत्यनेन 'सामिकृतम्' इत्यत्र पूर्वेण प्राप्तः कन् निषिध्यते। तत्र सामिशब्दस्यार्धवाचितया तेनैवानत्यन्तगतेरुक्तत्वात् कनोऽप्राप्त्या इदं सूत्रं व्यर्थं सत् 'प्रातिपदिकात्कन् भवति स्वार्थे' इति वचनं ज्ञापयति इति ज्ञापितवचनेन प्राप्तकन्निषेधाय स्वांशे सूत्रस्य चारितार्थ्यम्। द्योत्यार्थरहितो ज्ञापितकन् एवात्यन्तस्वार्थिक इत्युच्यते।

२ 'एकाचो द्वे' ( पा० सू० ६।१।१ ) इति सूत्रे भाष्ये 'निज्, इज्, नि, इ' इति चत्वार एकाचः। तत्र इज् शब्दस्य द्वित्वे रूपासिद्धिः। निशब्दस्य इशब्दस्य, वा द्वित्वे रूपासिद्धिः, 'नेनिज्' 'नेनिजति' इत्यादौ जकारेण व्यवधानाज्जुसाधप्राप्त्या दोषश्चेत्युक्त्वा 'सिद्धन्तु तत्समुदायैकाच्त्वात् शास्त्राहानेः' इत्युक्तम्। अयम्भावः—एकाचो द्विरुच्यते, चत्वारश्चैकाचः, तत्रैकस्यैकाचो द्वित्वे लक्ष्ये लक्षणन्यायेनापरस्य द्वित्वाभाव इति शास्त्रस्यापरदेशाऽवच्छेदेन त्यागो भवति यदा तु 'निज्' इत्यस्य द्वित्वं तदा चतुर्णामेकाचां द्वित्वमुक्तं भवतीति न शास्त्रत्यागस्तस्मात् 'निज्' इत्यस्यैव द्वित्वम्। तद्वदत्राऽपि प्रकृत्यर्थगतस्त्रीत्वे द्योत्ये टाब् विधीयते। यदा 'आर्य' शब्दादेव टाप्स्यात्तदा कन्विशिष्टप्रकृत्यर्थगतस्त्रीत्वद्योतकता न स्यादिति शास्त्रं हीयेत। विशिष्टात्तु टापि उभयार्थगतस्त्रीत्वद्योतकत्वद्योतकत्वलाभात् शास्त्रं न हीयेत इति भावः।

क्रियावाक्ये एव उत्तरपदस्यावयवीभूय समासान्तः प्रवर्तते इति वक्ष्यमाणत्वात् । स च विभक्तेः पुरस्तादित्येके । परस्तादिति पक्षे तु तद्धितान्तत्वात् सुब्लुकि पुनः सुपि चाकृते समास इति सिद्धान्तः। तस्मादन्तरङ्गादपि तद्धितात्प्राङ् ङ्याप्पोः प्रवृत्त्यर्थं ङ्याब्ग्रहणमिति स्थितम् ।

'गोस्त्रियोः' (पा०सू०१।२।४) इति सूत्रे भाष्ये स्पष्टम् । समासान्ता इत्यत्र 'तादर्थ्यात्ताच्छब्द्यम्' इति हि तत्र भाष्यम् । अलौकिके प्रक्रियावाक्ये एवेत्यस्य प्रवर्तत इत्यनेनान्वयः । क्व प्रवर्तते तत्राह-उत्तरपदस्येति । अनन्तरमिति शेषः । अवयवीभूयेत्यस्य प्रक्रियावाक्यस्येत्यादिः । एतत्स्वरूपकथनम् । अवयवत्वे प्रमाणमाह—समासान्त इति । तच्छब्दवाच्यत्वादिति भावः । समासस्यैवायमन्तावयव इति "अन्तः" पा. सू. ६।२।८२ इति सूत्रे भाष्ये स्पष्टम् । इत्येके इति । अत्रारुचीजं तु समासार्थवाक्यस्य 'अन्तः' इति 'गोस्त्रियः' इति सूत्रस्थभाष्यस्य वाच्यार्थविरोधः । न हि सुब्रहितं समासार्थं किन्तु तद्विशिष्टमेव । किं च ततः पूर्वं कपि ततः समाससंज्ञायां सुब्लुकि टापि बहुचर्मिकेत्यादावापः सुपः परत्वादित्वापत्तिः[1] तत्र विभक्त्यन्तेऽन्यपदार्थबोधकत्वारोपेण तदन्ते[2]ऽसत्त्वात्सुब्लुकः

स्ययान्तत्त्वाभावान्न ह्रस्वस्य प्राप्तिः । उत्तरपदस्येत्यादिकथनस्य प्रकृतानुपयुक्तत्वशङ्कां वारयति—एतत्स्वरूपेति । तच्छब्देति । चरमावयववाच्यत्वादित्यर्थः । यद्यस्य चरमावयवत्वं विवक्षितमभविष्यत्तदा समासादित्येवावक्ष्यत् । समासस्यैव= सामासार्थवाक्यस्यैव । एवकारेणोत्तरपदावयवत्वमतनिरासो ध्वनितः । नचास्योत्तरपदानवयवत्वे द्विपुरीत्यत्र समुदायस्य कथं स्त्रीत्वमिति वाच्यम्, लिङ्गस्य लोकाश्रयत्वेन खट्वादिशब्दवत्समुदायस्य स्त्रीवाचकत्वस्वीकारात् । इति सूत्र इति । स्वरविधायक इति शेषः । अत्र–पुरस्तादिति पक्षे सूत्रस्थभाष्येति । तादर्थ्यात्ताच्छब्द्यमित्युक्तभाष्येत्यर्थः । नहि सुपः पुरस्तादिति पक्षस्वीकारे भाष्यकारीयवाक्यवाच्यार्थविरोधमात्रमेव दोषः, किन्तु लक्ष्यासिद्धिरपीत्याह—किञ्चेति । ततः पूर्वम्—सुपः पूर्वम् । ननु सुब्लुकः पूर्वमेव कबन्तात्टापि कृते लुकः प्रवृत्त्या न टापः सुपः परत्वमत आह—तत्रेति । तदन्ते=कबन्ते । असत्त्वादिति । तन्मते कबन्ते स्त्रीबोधकत्वस्य

१ सुपः पूर्वं कपि 'बहु अस् चर्मन् क अस्' इति जाते सुब्लुकि टापि च 'बहुचर्मिका' इति तथा चान्तर्वर्तिविभक्त्या टापः सुपः परत्वेनेत्वानापत्तिरिति भावः । ननु सुब्लुकः पूर्वमेव टापि टाबपेक्षया सुप एव परत्वमिति न दोष इत्याशङ्कयखण्डयति तत्रेति ।

२ सति सुपि कबन्तेऽसत्त्वादित्यर्थः ।

पूर्वं कबन्ताट्टाबिति वक्तुमशक्यमिति । परस्तादिति पक्षे त्विति । न च विशिष्टस्य सुबन्तत्वाभावेन सुबन्तात्तद्धित इति सिद्धान्ताविरोधः, तेषामतिरिक्तार्थाभावेन परिपूर्णम्पदमिति न्यायाविषयतया तस्य सिद्धान्तस्य समासान्तविषयेऽभावात्। एवञ्च समासान्तेषु 'ङ्याप्प्रातिपदिकात्' इत्यस्यासम्बन्ध एव, तस्यामवस्थायां[2] वाक्यस्य प्रातिपदिकत्वादिति भावः। तद्धितान्तत्वादिति। प्रातिपदिकत्वेनेति शेषः। पुनः सुपि चाकृते इति। प्रत्ययलक्षणेन सुबन्तत्वात्समास[3]सञ्ज्ञा । कपस्तद्वाक्यावयवत्वेन तद्ग्रहणेन तदन्तस्य ग्रहणम्। सुपि च कृते इति काचित्कः पाठः प्रामादिकः। यद्यपि तत्र पाठे अलौकिकविग्रहवाक्येऽपि अन्यपदार्थान्तर्भावेन एकार्थीभावारोपात् स्त्रीत्वसत्त्वेन पूर्वं टापि ततः सुपि, आपः सुपः

वक्तुमशक्यत्वादित्यर्थः। आरोपितस्यान्यत्रारोपे मानाभावादिति भावः। परस्तादिति पक्षे त्विति। तुना न पूर्वोक्तभाष्यावाच्यार्थोपपत्तिरेव फलं, किन्तु विशेषान्तरमर्पयत्याह–पुनः सुपि चाकृत इति। तथाच 'बहुचर्मिका' इत्यस्य सिद्धिः स्पष्टैव। विशिष्टस्य–वाक्यस्य। समाधत्ते–तेषामिति। समासान्तानाम्। यद्यपि प्रत्ययेतिमहासंज्ञाकरणेन प्रकृत्यर्थेनार्थवत्त्वमस्ति, तथापि तदतिरिक्तोऽर्थो नास्त्यत एवात्यन्तस्वार्थिकत्वव्यवहारस्तेषाम्। एवञ्च=उक्तन्यायस्य समासान्तविषये अभावे च। तद्धितान्तत्वस्य सुब्लुगप्रयोजकत्वादाह–प्रातिपदिकत्व इति।

ननु यदि पुनर्न सुप्तदा समाससंज्ञैव कथमत आह–प्रत्ययेति। ननु यदि प्रत्ययलक्षणेन समाससंज्ञां स्वीकरोषि तदा समासान्तम्परित्यज्य सा स्यादिति कथं समासान्तस्य समासग्रहणेन ग्रहणमत आह–सुपि चेति। समुदायस्य=सुबन्तसमुदायस्य। तद्ग्रहणेन = समासग्रहणेन। तदन्तेति–समासान्तप्रत्ययान्तेत्यर्थः। अत्र क्वचित्कपस्तद्वाक्येत्यादिपाठः। उक्तार्थमेव शङ्कासमाधानाभ्या-

१ 'स्वार्थेन परिपूर्णं पदमर्थान्तरमाकाङ्क्षते' इति न्यायस्वरूपम। अत्र मानञ्च 'कुत्सिते' (पा०सू० ५-३-७४) इति सूत्रस्थभाष्यम्। 'स्वार्थमभिधाय शब्दो निरपेक्षो द्रव्यमाह समवेतम्, समवेतस्य लिङ्गम्, वचनम्, विभक्तिञ्च' इति। एतेन क्रमेण स्वार्थ-द्रव्य-लिङ्ग-संख्या कारकाभिधानमुक्तम्। ततः 'अभिधाय तं विशेषानपेक्षमाणश्च 'कृत्स्नयात्मानम् प्रियकुत्सनादिषु पुनः प्रवर्ततेऽसौ विभक्त्यन्तः' इत्यभिहितम्। इदमुक्तम्भवति। शब्दः स्वार्थद्रव्यलिङ्गसङ्ख्याकारकरूपमात्मीयमर्थं कृत्स्नमपेक्षमाणः, विभक्त्यन्तः सन् प्रियकुत्सनाद्यर्थैः सम्बद्ध्यते। एतेन स्पष्टमेव 'स्वार्थेन परिपूर्णम्पदमर्थान्तरमाकाङ्क्षते' इति न्यायो ध्वनित इति।

२ अलौकिकविग्रहवाक्ये एव समासान्तप्रवृत्त्या तदानीं ङ्याबन्तत्वप्रातिपदिकत्वयोरसम्भवादिति भावः।

३ कपः प्राग्भागस्येत्यर्थः।

परत्वाभावाद्बहुचर्मिकेत्यत्रेत्वसिद्धिरस्ति, तथापि तदुत्पत्तिपर्यन्तं समाससञ्ज्ञाया अप्रवृत्तौ मानाभावात्। न च सुबन्तत्वाभावः, अनेन सुपा समुदायस्य सुबन्तत्वेऽपि उत्तरपदमात्रस्य तत्त्वाभावात्। पूर्वपदस्य सुबन्ततायाः प्रत्ययलक्षणेनैवोपपाद्यत्वात्। एवञ्च पूर्वं तत्करणे फलाभावः, बहिर्भूतसङ्ख्याकारकसापेक्षसुपस्तस्यामवस्थायां तदनभिव्यक्त्याऽप्रवृत्तेश्च। वस्तुतस्तु तद्धितान्तत्वनिमित्तप्रातिपदिकसञ्ज्ञासमकालमेव विरोधाभावेन तत्पूर्वभागस्य समाससञ्ज्ञेति बोध्यम्। यौगपद्यासम्भव एव शास्त्राणां क्रमप्रवृत्त्यङ्गीकारादिति दिक्।

न्दृढयति नचेत्यादिना। उत्तरपदत्वे चेति। प्रत्ययलक्षणस्य प्रतिषेधादुत्तरपदस्य सुबन्तत्वसिद्धये सुबुत्पत्तिरवश्याभ्युपेयेति तद्भावः। अनेन = समुदायोत्तरज्ञायमानेन। तत्त्वाभावादिति। सुबन्तत्वाभावादित्यर्थः। नच 'उत्तरपदत्वे' इति निषेधोऽस्त्येवेति वाच्यम्, उत्तरपदस्य यत्र कार्यित्वन्तत्रैव तत्प्रवृत्तेरङ्गीकारात्। एवञ्च = प्रत्ययलक्षणेनोपपत्तौ च। पूर्वमिति—समाससंज्ञातः पूर्वमित्यर्थः। तस्यामवस्थायाम् = समाससंज्ञाप्रवृत्तिप्राक्कालिकावस्थायाम्। तदनभिव्यक्त्या = संख्याकारकानभिव्यक्त्या। पूर्वोक्तः शास्त्रप्रवृत्तिक्रमोऽभ्युपगमवादेनेत्याशयेनाह—वस्तुतस्त्विति। दिगिति।

दिगर्थस्तु यत्तु सरूपसूत्रस्य भाष्यात्समासान्तानामुत्तरपदावयवत्वमिति लभ्यते। तत्र हि—'कृतद्वन्द्वानामेकशेष' इति पक्षे ऋक्च, ऋक्च, ऋचावित्यत्र 'ऋक्पूः' इति समासान्ते कृतेऽसारूप्यादेकशेषो न स्यादिति दूषणमुक्तं तस्यावसरे समासान्तानामुत्तरपदावयवत्वपक्ष इति मूलोक्तः समुदायावयवत्वपक्षो ऽयुक्त एवेति तन्न समासान्तानामलौकिके प्रक्रियावाक्ये प्रवृत्तिस्वीकारोऽपि कृतद्वंद्वानाञ्चेदेकशेषः, तदा 'ऋग्भ्याम्' इत्यत्राप्यकारप्रत्ययस्य पूर्वंप्रवृत्तिः स्यादिति रूपासिद्धेः स्फुटत्वात्। नचैवमपि ऋक्च ऋक्च ऋचौ समासान्ते कृते 'असारूप्यादेकशेषो न प्राप्नोति' इति भाष्याक्षरास्वारस्यमिति वाच्यम्, कृतद्वंद्वानामेकशेषपक्षे तस्य भाष्यस्य प्रवृत्तत्वादिति तस्य द्वन्द्वे कृते लुकि च समासान्तप्राग्भागस्य विभक्तिपरत्वाभावस्तद्विशिष्टस्य न सारूप्यमित्याशयात्। किञ्च यदि प्राग्भागस्य सारूप्यमादायैकशेषस्य प्रवृत्तिस्तदा 'ऋचे' इति स्याट्टापः प्रसङ्गादिति ऋचावित्यस्यासिद्धिप्रतिपादने तात्पर्यात्। यदि समासपदस्य 'तादर्थ्यात्ताच्छब्द्यम्' इति न्यायेन समासालौकिकवाक्ये लक्षणाकल्पनायाङ्गौरवमिति तदपि

१ 'बहु अस् चर्मन् अस्' इति विग्रहे कपि 'बहु अस् चर्मन् अस् क' इति जाते तद्धितान्तत्वात्प्रातिपदिकत्वे सुब्लुकि पुनः समुदायात् चिकीर्षितात्सुपः पूर्वमेवान्तरङ्गत्वाट्टापि ततः समुदायात्सुपि च कृते समाससंज्ञा इति मतेऽपि यद्यपि 'बहुचर्मिका' इत्यत्र इत्वप्रवृत्तौ सुपः प्राक् कप्पक्षे इव बाधकं नास्ति तथापि तत्सुपः समाससंज्ञानपेक्षितत्वेन तदप्रवृत्तौ मानाभाव इति भावः।

यत्त्वाहुः—आब्ग्रहणं स्पष्टार्थमिति, तदनेन प्रत्युक्तम्। वस्तुतस्तु ङ्यापोर्ग्रहणं मास्तु, सुबन्तात्तद्धितोत्पत्तिरिति निष्कर्षः। सुपः प्रागेव च ङ्यापौ प्रवर्त्तेते, स्वार्थादिप्रयुक्तकार्याणां क्रमिकत्वस्वीकारादित्यवधेयम्।

सुङ्स्योरिति। सोरुक्कारो 'अर्वणस्त्रसौ' इत्यत्र विशेषणार्थः।

---

यत्त्वाहुरिति। ङीग्रहणन्तु लोहिनिकेत्यर्थमिति तद्भावः। अनेनेति। आर्यकेत्यस्य साधनेनेत्यर्थः।

सुबन्तात्तद्धितोत्पत्तौ, प्रागेव ङ्यापोः प्रवृत्तौ च बीजमाह—स्वार्थादीति। स्वार्थद्रव्यलिङ्गसङ्ख्याकारकेत्यर्थः। स्वार्थः–प्रवृत्तिनिमित्तम्, विशिष्टबुद्धौ विशेषणज्ञानस्य कारणत्वात्पूर्वं जात्यादिज्ञानम्, ततो धर्मित्वेन प्रधानत्वाल्लिङ्गादिभिरप्याकाङ्क्षितत्वात्तदाश्रयज्ञानम्, ततः स्वमात्रापेक्षत्वाल्लिङ्गस्य ज्ञानम्, ततो विजातीयक्रियापेक्षकारकापेक्षया सजातीयपदार्थापेक्षसङ्ख्यायाः प्रथममुपस्थित्या तज्ज्ञानम्, ततः कारकरूपविभ-

---

न उत्तरपदावयवत्त्ववादिसत्तेऽपि समासतत्पुरुषादिपदस्य समासतत्पुरुषादिसम्बन्ध्युत्तरपदे लक्षणाकल्पनाया अविशेषादिति यद्यप्युक्ततेति सिद्धान्तग्रन्थमनूद्य बहुचर्मिकेत्यत्र सुपः प्राक् समासान्तप्रवृत्तावसुप इति प्रतिषेधादित्वानापत्तिरिति दूषणाभिधानन्तत्तस्थवीयः। सुपः प्रागिति पक्षस्य गर्भस्रावेणैव गतत्वात्। यच्च 'प्रियपथः' 'प्रियगव' इत्यत्रालौकिके प्रक्रियावाक्ये समासान्तानाम्प्रवृत्तावात्ववृद्ध्योः प्रवृत्त्यापत्तिरिति तदपि न, 'सुपो धातु' इति लुग्विषये विभक्तिनिमित्तककार्याप्रवृत्तेः सुप्रसिद्धेरिति।

यन्मूले आब्ग्रहणस्यैव स्पष्टार्थत्वमुक्तन्तत्र बीजमाह—ङीब्ग्रहणं त्विति। ङ्यापोर्विषये व्यवस्थायाः समत्वादाह—मूलकारो वस्तुत इत्यादि। क्रमेण बोधे बीजमाह—स्वार्थ इत्यादिना। जात्यादीति। आदिना गुणक्रिययोः परिग्रहः। स्वमात्रेति। सङ्ख्याकारकयोस्तु भिन्नपदार्थापेक्षत्वमिति तयोरुपस्थितेरादौ न सम्भव इति भावः।

---

१ वैजात्यञ्च सर्वनामपरामर्शायोग्यत्वेन, लिङ्गान्वयिताऽवच्छेदकधर्माभाववत्त्वेन वा बोद्धव्यम्। आर्यकेत्येकमेवेति—अयम्भावः। 'स्वार्थेन परिपूर्णं पदम्' इति न्यायप्राप्तायाः सुबन्तात्तद्धितोत्पत्तेरनुवादकमेव ङ्याब्ग्रहणम्, सुबन्तात्तद्धितोत्पत्तिस्वीकारे अर्थोपस्थितिक्रमेण ङ्यापोः सुपः प्रागेव प्रवृत्त्या ङ्याबन्तादेव तद्धितोत्पत्तिः कृता भवतीत्युक्तं ङ्याब्ग्रहणं न्यायसिध्यर्थानुवादकमेव। तथा च न्यायस्य सार्थकतद्धिते एव प्राप्त्याऽत्यन्तस्वार्थिकानामर्थोपस्थितिक्रमेण ङ्यापः प्रागेव प्रवृत्तिः स्यादिति 'आर्यिका' इत्येकमेव स्यात् टापः प्राक् कप्रत्ययस्यैव प्रवृत्त्या आतः स्थानिकाकाराभावात्। 'लोहिनिका' 'लोहितिका' इति रूपद्वयन्तु भाष्यकारादिभिः स्वीकृतम्। तच्च "लोहिताल्लिङ्गबाधनं वा" इति वार्तिकेनैव साध्यम्, 'आर्यका' इति रूपन्तु प्रमाणाभावादसाधु एवेति दिक्।

असीत्युक्ते ह्रसकारादावित्यर्थः स्यात्, तथा च 'वाजमर्वत्सु पय उस्रियासु' इति न सिध्येत्। ङसेरिकारो 'युष्मदस्मद्भ्यां ङसोऽश्' इत्यत्र अस्य ग्रहणं मा भूदिति। यदि तु 'एकवचनस्य च' इत्यत्र

कन्यर्थाकाङ्क्षा, तन्निवृत्तौ हि बहिर्भूतकुत्सादियोग इति 'कुत्सिते' (पा. सू. ५।३।७४) इति सूत्रे भाष्ये स्पष्टम्। एवञ्च ज्ञानक्रमानुरोधेनैव तत्तत्प्रयुक्तकार्यप्रवृत्तेरौचित्येन क्रमिकत्वं स्पष्टमेव। यद्यपि लोकानां बोधो न क्रमेण, तथाऽपि शास्त्रप्रक्रियायां शास्त्रकृत्कल्पितोऽयं क्रमः ÷ अर्थवदुद्देशेन प्रातिपदिकत्वविधानात्, प्रतिपदिकोद्देशेन लिङ्गादौ ङीबादिविधानादिति बोध्यम्। अत एव 'घकालतनेषु' इति चरितार्थम्। स्पष्टञ्चेदम्—'अचः परस्मिन्' इत्यत्र भाष्यकैयटयोः। एवञ्चैतन्न्यायसिद्धार्थानुवाद एव ङ्याब्ग्रहणम्। अत्यन्तस्वार्थिकानारभ्य तस्य निवृत्तेरुक्तन्यायविषयाभावाच्च समासान्तेषु न दोषः। अत्यन्तस्वार्थिके कन्यार्यिकेत्येव, यद्यभिधानमस्ति। लोहिनिकेत्येतत्सिध्यर्थं च 'लोहिताल्लिङ्गबाधनं वा' इति कार्य[2]मेवेति भावः। स्पष्टञ्चेदं सूत्रशेषे

तज्ज्ञानमिति। पूर्वमाकाङ्क्षितत्वेनेत्यादिः। आकाङ्क्षेति। इतरान्वयार्थमिति शेषः। लिङ्गादौ ङीबादीति। उभयत्रादिना ङ्याबन्तात्स्वादेः परिग्रहः। अत एव=परिपूर्णस्यैवान्यत्रान्वयादेव। फलितार्थमाह—एवञ्चेति। उक्तन्यायेनेष्टसिद्धौ चेत्यर्थः। अनुवाद एवेति। एतेन सूत्रभाष्ययोरविरोध इत्येतदभिहितम्। यत्तु ङ्याब्ग्रहणसामर्थ्यलब्धनियमाकारे यत्तद्धितपदन्तस्य तद्धितसामान्यपरत्वमिति बुध्या मौलग्रन्थोपरि 'यद्येवन्तर्हि बहुगोमतीका इति स्यादिति दूषणाभिधानं, तन्न युक्तं, तत्रत्यतद्धितपदस्य सार्थकतद्धितपरत्वादित्येतद् ध्वनयन्नाह—अत्यन्तेति। तस्य—ङ्याब्ग्रहणस्य। निवृत्तौ हेतुमाह—उक्तन्यायेति। तेषामर्थाभावेनोक्तन्यायविषयताया अभावादित्यर्थः। इत्येवेति। एतेनार्यकेत्यस्य सिध्यर्थन्तत्रापि ङ्याब्ग्रहणसम्बन्ध इति निरस्तम्। कार्यमेवेति। अत एव भाष्ये सामान्यतो नियमाभिप्रायेण समासान्तेषु दोषः। बहुगोमतीकेति स्यादिति। परेण दोषोद्भावने कृते "न दोषः तेऽपि स्वार्थिकाः" ततः 'परत्वात्समासान्ताः' इत्युक्तम्। ततः 'कथं हरिणिकेति, प्रकृत्यन्तरं सः कथं लोहिनिकेति वक्ष्यत्येतत्, लोहिताल्लिङ्गबाधनं वा" इति प्रतिपादितम्। एवञ्चैनिका आर्यका

१ अन्यथा प्रातिपदिकादेव स्वार्थिकतरबाद्युत्पत्तौ घपरकसुपोऽभावेन तत्रालुग्विधानं व्यर्थं स्यादिति भावः।

२ ङ्याब्ग्रहणस्य न्यायसिद्धार्थानुवादकत्वेऽत्र न्यायविषयाभावेनान्तरङ्गत्वात्कनि 'लोहितिका' इत्येव स्यादिति कनः प्राक् "वर्णात्" इति ङीपि रूपद्वयसिद्धये वार्तिकं कार्यमिति भावः।

'पञ्चम्या' इत्यनुवृत्तेः परिशेषादन्यस्य ङसोऽत्र ग्रहणं भविष्यतीत्युच्यते, तर्हि 'टाङसिङसाम्' इत्येतदर्थः । जश्शसोर्जकारशकारौ 'जसः शी' 'तस्माच्छसो नः' इत्यनयोर्विषयविभागार्थौ । अन्यतरस्य निरनुबन्धकत्वमेवास्तु इति चेन्न, जसो जकाराभावे औ इत्यस्याऽव् स्यात् । ततश्च प्रत्ययस्य वकारान्ततापि सम्भाव्येत । एवं शसः शकाराभावे औटो ङित्वं सम्भाव्येत, अतोऽसन्देहार्थं तत्करणौचित्यात् । औटष्टकारः सुडिति प्रत्याहारार्थः । टाटकारस्तु 'टाङसि' इति विशेषणार्थः । ङेप्रभृतीनां ङकारो 'घेर्ङिति' इति

---

भाष्ये इत्यन्यत्र विस्तरः । पञ्चम्या इत्यनुवृत्तेरिति । तृतीयाव्यावृत्तये इति भावः । टाङसीति । तत्रेकारानुच्चारणे इष्टस्य यथासङ्ख्यस्यानापत्तिरिति भावः । ङित्वमिति । ततश्च टिलोपः स्यादिति भावः । विशेषणार्थं इति । तत्फलन्तु 'सुपां सुलुक्' इति सूत्रेणाकारादेशे इनादेशाभावः । घेर्ङितीति । न च 'घेः सुपि गुणः' इत्येवास्तु 'जसि च' इति नियमात्तु नाङिति प्रवृत्ति-

---

इत्यनयोरभाव एवेत्याशयवानाह—स्पष्टश्चेदमिति । अन्त्यन्तस्वार्थिकतरबादेरपि ङ्या-बन्तादनभिधानमेव ।

तृतीयेति । एतेन तदनुवृत्तिरवश्यङ्कर्त्तव्येति सूचितम् । तत्र—टाङसीति सूत्रे । इष्टस्येति । सौत्रत्वादेकशेषस्याभावेपीत्यादिः । यदि त्वत्र विधिसूत्रस्थक्रममादाय प्रवृत्तिरित्युच्यते तदा 'ङसिङ्योः स्मात्स्मिनौ' इति सूत्रे ङसित्युच्चारणे षष्ठ्येकवचनस्य ग्रहणापत्तिर्दोषो बोध्यः । मूले—विभागार्थाविति । उभयोरनुच्चारणे इष्टस्य विषयविभागस्यालाभः स्यात् । नन्वेकस्योच्चारणमस्तु तावतापि तादृशविषयविभागो भविष्यतीत्याशयेनाह—अन्यतरस्येति । सम्भाव्येतेति । 'यदि तु 'नाज्झलौ' इति सूत्रनिर्देशान्न वकारान्तत्वन्तदा प्रतिपत्तिगौरवमिति भावः । ततः=ङित्वसम्भावनायाम् । टिलोप इति । ङित्वसामर्थ्यादभत्वेपि टिलोपो लिहाविस्यादौ स्यादित्यर्थः । आकारादेश इति । 'या सुरथा रथीतमा' इत्यादिमन्त्रे यौ सुरथाविति प्राप्ते 'सुपाम्' इति सूत्रेण प्रश्लेषेणाकारादेशोऽपि विधीयत इति भावः । इत्येवास्त्विति । घेरित्येवास्त्वि-

---

१ ननु "नियमात्तु नाङि प्रवृत्तिरिति कथनेन 'ङिद्भिन्ने गुणश्चेज्जस्येव' इति नियमाऽऽकारः प्रतीयते, स चासम्भवी, इदानीं ङित्प्रत्ययाभावादिति चेन्न, अनुनासिकवर्णाघटितं यद्गुणाद्येकवचनं तदितरविभक्तौ गुणश्चेत्तर्हि जस्येवेति नियमेनादोषात्, तादृशमेकवचनञ्च 'ए' असि, 'अस्' इति तदितरविभक्तौ नियमेन गुणाभावः सिद्ध्यति । अनुनासिकवर्णाघटितेत्यस्यानिवेशेऽमोऽपि गुणाद्येकवचनत्वेन तत्र गुणः स्यादिति तद्वारणाय तत् । नच सप्तम्येकवचनेऽपि गुणानापत्तिः, इष्टापत्तेः ।

विशेषणार्थः। पकारस्तु प्रत्याहारार्थः। एवञ्च सर्वेषां सफलत्वेऽपि 'सञ्ज्ञार्थाः' इति प्राचो ग्रन्थोऽसङ्गत एव। सम्यग्ज्ञानं सञ्ज्ञा तदर्थाः विशेषणार्था इति यावदिति भङ्क्त्वा व्याख्यानेऽपि क्लिष्टत्वमेवेत्युपेक्षितम्।

*'सुपः'*। 'तिङस्त्रीणि त्रीणि' इति सूत्रात् त्रीणि त्रीणि इति पदं 'तान्येकवचन' इत्यादि सूत्रं च सम्पूर्णमनुवर्तत इति व्याचष्टे—सुपस्त्रीणि त्रीणीत्यादिना। *एकश इति*। एकैकमित्यर्थः। 'सङ्ख्यैकवचनाच्च' इति वीप्सायां प्रथमान्ताच्छस्। यत्तु—प्राचा एकैकश इत्युक्तम्, तदयुक्तम्, शसैव वीप्साया उक्तत्वेन द्विर्वचनायोगात्, येन नाप्राप्तिन्यायेन द्विर्वचनापवादः शस् इति सिद्धान्तात्।

यत्त्वाहुः—'सर्वस्य द्वे' (पा.सू.८।१।१) इत्यत्र एकैकशो ददातीति भाष्यप्रयोगात् 'तान्येक' इति सूत्रे एकश इति सूत्रकारनिर्देशाच्चोभयं

---

रिति वाच्यम्, पतय इत्यर्थं 'जसि च' इत्यस्यावश्यकत्वात्।

तान्येकेति। तत्रानुवृत्ततानीत्यस्य लब्धव्याकरणान्तरोक्तप्रथमादिसञ्ज्ञानीत्यर्थः।

---

त्यत्र तात्पर्यम्। इतरांशस्यानुवृत्त्या लाभात्। नियमादिति। सुपि चेज्जस्येवेति नियमादित्यर्थः। इत्यर्थमिति। अत्र हि 'पतिः समास एव' इति नियमाद्घित्वाभावेन घेरित्यस्याप्राप्तेरिति भावः। न च 'ह्रस्वस्य गुण' इति सूत्रस्य नियमार्थत्वकल्पनेनान्यत्र गुणो न भविष्यतीति वाच्यम्, हे सखे इत्यर्थन्तस्यावश्यकत्वात्। 'आण्नद्याः' इति सूत्रे ङितीत्यस्य सम्बन्धार्थं ङितीत्यावश्यकमिति ङकार आवश्यक इति भावः। मूले—प्राच इति। प्रक्रियाकृत इत्यर्थः। व्याख्यानेऽपीति। तट्टीकाकारकृत इति शेषः।

तत्र—'सुप' इति सूत्रे। एवञ्च व्याकरणान्तरोक्तार्थस्य क्रोडीकार एव तानीत्युपादानस्य फलमिति ध्वनितम्। एतेन तानिपदघटितसम्पूर्णसूत्रानुवृत्तिप्रदर्शनमत्रासङ्गतं, तानीत्यस्य प्रकृते ऽनुपयोगादिति यत्तदेवासदिति सूचितम्। नच तासां संज्ञानामप्रकान्तत्वात्कथन्तच्छब्देन तासां लाभ इति वाच्यम्, तच्छब्दस्य बुद्धिस्थपरामर्शकत्वात्। प्रथमादीति। आदिना द्वितीयादिसङ्ग्रहः। ताश्च संज्ञाः स्त्रीलिङ्गाः, 'प्रथमायाश्च द्विवचने' इति निर्देशात्। उभयमिति। शसि परे वा द्विर्वचनमिति वचनस्य ज्ञापनादिति शेषः।

साध्विति; तन्न, उदाहृतभाष्यस्यान्यविषयत्वात् । 'यत्र तद्धिते-नानुक्ता वीप्सा भवति तत्र द्विर्वचनम्' इत्युपक्रम्य हि 'तद्यथा एकैकशो ददाति' इति भाष्ये उदाहृतम् । व्याख्यातं च कैयटेन अल्पार्थोऽप्येकशब्दोऽस्ति तस्य वीप्सायां द्विर्वचने 'बह्वल्पार्थात्' इति शस्प्रत्यय इति । न चैषोऽर्थः प्रकृते सम्भवतीत्यास्तां तावत् ! *रामं इति* । सञ्ज्ञाशब्दोऽयमव्युत्पन्न इति पक्षे ऽर्थवत्सूत्रेण प्रातिप-

---

वीप्सायां द्विर्वचने इति । शसः कारकाभिधानेन, मङ्गलामङ्गलरूपार्थापेक्षणेन च बहिरङ्गतया द्विर्वचने कृते शस् इति भावः । यद्यपि क्वचिदुक्तार्थानामपि प्रयोगो भवति, तथाऽपि यत्र तद्धितेनानुक्ता वीप्सा भवति तत्र द्विर्वचनं यथैकैकशो ददातीत्यादिभाष्योक्त्या, अल्पार्थैकशब्दाद्वीप्सायां द्विर्वचने 'बह्वल्पार्थात्' इति शसिति कैयटोक्त्या च प्रकृते तद्दुरुपपादमेव । न चैवं 'ऋषिसहस्रमेकां कपिलामेकैकशः सहस्रकृत्वो दत्त्वा तया ते सर्वे सहस्रदक्षिणाः सम्पन्नाः' इति 'अइउण्' सूत्रस्थभाष्ये 'एकैकशः' इति प्रतियोगासङ्गतिरिति वाच्यम्, एकेति प्राधानार्थकसम्बोधनसत्त्वेनैकश इत्यस्य प्रत्येकमित्यर्थकत्वेनादोषात् । एतद्भाष्यप्रामा-

---

अर्थापेक्षणेनेति । एतत्प्राचामनुरोधेनोक्तमधिकापेक्षं बहिरङ्गमित्यस्य स्वमतेऽभावात् । यदुक्तम्मूले शसैव वीप्साया उक्तत्वेनेत्यादि, तदेवायुक्तमुक्तार्थानामपि 'द्वौ व्यतिलुनीते' इति प्रयोगदर्शनादिति खण्डनकारोक्तिं खण्डयति—यद्यपीत्यादिना । तद्दुरुपपादमिति । तद्धितेनैव वीप्सोक्तिसम्भवादिति भावः । एवम्=उक्तरीत्या । एकैकश इति । प्रयोगस्यासाधने ऋषिसहस्रमित्यत्र कर्मधारयसमासः सहस्रमृषय इत्यर्थः । एतद्वाक्यं वित्तेन क्रीत्वा पुनर्दत्त्वेति रीत्या ऽन्यत्र व्याख्यातम् । सहस्रदक्षिणा इत्यस्य सहस्रन्दक्षिणा गोरूपा येषान्दातॄणामित्यर्थः । एतेन सहस्रगोदानकर्तारस्तेषामिति सूचितम् । असङ्गतिरिति । कैयटोक्तरीत्या असङ्गतिरित्यर्थः । अत एव तद्भाष्यप्रयोगादत्यन्तस्वार्थिकोऽपि शसस्तीत्यनुमीयते । अत एव 'प्रायशः' इत्यस्यापि सिद्धिरिति स्वार्थिकशसन्तस्य द्विर्वचनमिति तद्भावः । उक्तस्य भाष्यप्रयोगस्यान्यथोपपत्तिमाह—एकेतीति । नच त्यदादीनां सम्बोधनाभावात्कथमेतदिति वाच्यम्, 'हे सः' इति भाष्यीयप्रयोगदर्शनेन तस्य निषेधस्यौत्सर्गिकत्वात् । ननु स्वार्थिकमत्र द्वित्वमित्येव कल्पना ऽत्रास्त्वित्यत आह—एतद्भाष्येति । परोक्तं यत्स्वार्थिकः शसिति तत्तु सर्वथा नोचितम्, तथा कल्पने तस्य शसो ऽन्तरङ्गत्वेनादौ प्रवृत्त्या ततो द्विर्वचने ऽनिष्टरूपापत्तेः । वस्तुतस्तु यदुपष्टम्भा-

दिक्सञ्ज्ञा। 'करणाधिकरणयोश्च' इत्यधिकारे घापवादेन 'हलश्च' इति घञा रमन्तेऽस्मिन्निति व्युत्पादने तु 'कृत्तद्धित' इति सूत्रेणेति विवेकः।

'सरूपाणामेकशेष एकविभक्तौ'। एकविभक्तौ यानीति। विभक्तिः सारूप्ये उपलक्षणम्[1], न त्वेकशेषे निमित्तम्। एवं चानैमित्तिकत्वेनान्तरङ्गोऽयमेकशेषः सुबुत्पत्तेः प्रागेव प्रवर्त्तते। यद्येतन्नारभ्येत तर्हि प्रत्येकं विभक्तिः स्यात्, द्वन्द्वश्च प्रवर्तेत, आरब्धे त्वेकशेषेऽनेकसु-

ण्येन स्वार्थिकद्विर्वचनकल्पनापेक्षया मदुक्तस्यैव न्याय्यत्वात्। किञ्च नायं[2] भाष्यप्रयोगः, किं तु गौण्यप्युत्तरा[3] सङ्ख्या पूर्वां सङ्ख्यां बाधते इत्यत्र श्रौतो वा स्मार्त्तो वाऽयं व्यवहारो दृष्टान्तत्वेनोक्तो भगवतेति तत्र छान्दसत्वान्न दोषः। 'एकैकशः पितृसंयुक्तान्' इत्यादिवदिति दिक्। रमन्तेऽस्मिन्निति। योगिन इति शेषः।

न्नवतामेतादृशी कल्पना तदेव शिथिलमित्याह—किञ्चेति। गौण्यपीति। उत्तरा=मुख्या, यथा पूर्वसङ्ख्याया बाधिका तथा गौण्यपीत्यर्थः। तत्र=एकैकश इति प्रयोगे। दिगिति। दिगर्थस्तु लोके यत्र तद्धितमात्रेण वीप्साया अनभिधानन्तत्रोभयोस्सत्त्वं, नतु केवलशसो यथैकैकश इत्यत्र मापश इत्यादौ तु तावन्मात्रेणापि वीप्साभिधानान्न द्वित्त्वमिति भाष्याशय इति। योगिन इति। एतेनागस्तिसंहितोक्ता।

'रमन्ते योगिनो यस्मिन्नित्यानन्दे चिदात्मनि।
इति रामपदेनासौ परम्ब्रह्माभिधीयते'॥

१ न तु विशेषणमिति भावः। उपलक्षणत्वञ्च स्ववृत्तिप्रतियोगिसमानाधिकरणविभिन्नकालिकाभावप्रतियोगित्वरूपम्। यथा 'काकवन्तो देवदत्तस्य गृहाः' इत्यत्र स्वं गृहं तद्वृत्तिर्यः प्रतियोगिसमानाधिकरणविभिन्नकालिकोऽभावः काको नास्ति इति तत्प्रतियोगित्वं काकस्येति काक उपलक्षणम्। प्रकृते स्वं सारूप्यं तद्वृत्ति यो: प्रतियोगिसमानाधिकरणविभिन्नकालिकोऽभावः स्वाव्यवहितपूर्वत्वसामानाधिकरण्यसम्बन्धेन विभक्तिर्नास्ति इत्याकारकस्तत्प्रतियोगित्वं विभक्तेरिति उपलक्षणत्वं सुलभम्। यन्निरूपितमुपलक्षणत्वं चिकीर्षितं तत् स्वम्। तथा च अविद्यमानत्वे सति व्यावर्तकत्वमुपलक्षणत्वम्। विद्यमानत्वे सति व्यावर्तकत्वं विशेषणत्वमिति च फलितम्।

२ "ऋषिसहस्रमेकांकपिलामेकैकशः" इत्यादिरित्यर्थः।

३ यथा दानक्रियागतसहस्रसंख्याम् एकस्यां गवि आरोप्य सहस्रसंख्याकगोदानफलभाक्त्वव्यवहारः तथा अकारादेरेकत्वेऽप्यावृत्त्या अटश्ब्दादावनेकात्त्वव्यवहारः स्यादिति दृष्टान्तत्वेनोक्तः स्मार्तः श्रौतो वा प्रयोगः इत्यर्थः। अत्रारोपिताऽपि सहस्रसंख्या मुख्यामेकत्वसंख्यां बाधत इत्युक्तं गौण्यपीति।

वन्तविरहाद् द्वन्द्वस्याप्राप्तिरेव फलिता भवतीति भावः । सरूपाण्येवेति[1] । एतच्चोत्तरसूत्रस्थैवकारस्येहानुकर्षणाल्लभ्यते । तेन मातृशब्दयोर्जननीवाचिपरिच्छेत्तृवाचिनोर्नैकशेषः, मातृभ्यामित्यादौ सारूप्येऽपि

इति भाव इति । एतावतैव द्वन्द्वापवाद एकशेष इति व्यवहार इति भावः । एतेनैकशेषारम्भफलमपि निरूपितम्—द्वन्द्वनिवृत्तिरूपम् । उत्तरसूत्रस्थस्येति । 'वृद्धो यूना' इतीत्यर्थः । अनुकर्षणादिति । अनु=पश्चात्कर्षणादाकर्षणादित्यर्थः । क्वचिदपकर्षणादित्यपि पाठः । नैकशेष इति । भ्यामादावपीत्यर्थः । भ्यामि स्त्रीपुंसयोस्ताभ्यामित्यनुप्रयोगस्य समत्वात् । एतेनानुप्रयोगविरोधादत्र नैकशेष इत्यपास्तम् । 'पुमान्स्त्रिया' इत्येकशेषो-

इति व्युत्पत्तिर्दर्शिता--

एतावता---पूर्वोक्तरीत्या । द्वन्द्वाप्राप्त्युपपादनेन अनुकर्षणशब्दस्यानुवृत्तिपरत्वमन्यत्र दृष्टमित्याशयेनाह–अन्विति । एतेन यौगिकोऽयं शब्द इति सूचितम् । यत्तु यत्र द्विवचनादौ वैलक्षण्यन्तत्र माभूदेकशेषः, भ्यामादौ तु भवत्येवेति मतं, तन्न युक्तमित्याशयेनाह–भ्यामादावपीति । अपिना औजसादिसमुच्चयः । परोक्तङ्खण्डयति–भ्यामीति । अनुप्रयोगविरोधादिति । औजसादिष्वनुप्रयोगविरोधादित्यर्थः । तावित्युक्ते पुमर्थस्यैवाभिव्यक्तिः, ते इत्यनेन तु स्त्रिया एवेति शिष्यमाणपदप्रतिपाद्ययोरर्थयोः समभिव्याहृतपदप्रतिपाद्यार्थाभेदान्वयाभावेन नैकशेष इति परोक्तङ्खण्डितम् । ननु 'मातृमातारौ' इत्यादावेकशेषवारणायैवकारापकर्षो व्यर्थः । प्रकृतसूत्रे प्रवृत्ते-

1 सरूपाणामिति निर्धारणे षष्ठी । तथा च सरूपाणामित्यस्य सारूप्यवदारब्धसमुदायघटकानामित्यर्थः। तत्रापकृष्टैवकारार्थस्य न घटकपदार्थेऽन्वयः, सरूपारब्धसमुदायघटकानामेवैकः शिष्यते इत्यर्थेऽपकर्षणवैयर्थ्यापत्तेः । नापि समुदाये, सरूपारब्धसमुदायमात्रघटकानामित्यर्थेऽप्युक्तापत्तेः । नापि सरूपे, सरूपमात्रारब्धसमुदायघटकानामित्यर्थेऽपि जननीपरिच्छेतृवाचिनोर्मातृशब्दयोरेकशेषावारणेन तद्वैयर्थ्यात् । नापि सारूप्ये, सारूप्यमात्रवदारब्धसमुदायघटकानामित्यर्थे मृगीहरितवर्णविशिष्टवाचिनोर्हरिणीशब्दयोस्तद्धितादौ वैरूप्येणैकशेषानोपत्तेरिति चेन्न, सारूप्यपदार्थे एवान्वयेन विभक्त्यव्यवहितपूर्वत्वावच्छेदेन सारूप्यमेव येषां दृष्टं तेषामेकः शिष्यते इत्यर्थेनादोषात् । यद्वा एवंपदं शब्दविशिष्टसमुदायघटक एकः शिष्यते इत्यर्थे एव तात्पर्य्यग्राहकम् । वै० स्वारब्धत्व–स्ववृत्तिरूपविशिष्टरूपवदनारब्धत्वोभयसम्बन्धेन । रूपे रूपवैशिष्ट्यञ्च—स्वभिन्नत्व–स्वाश्रयप्रकृतिकविभक्तिवृत्त्यानुपूर्वीमद्विभक्त्यव्यवहितपूर्ववृत्तित्वोभयसम्बन्धेन । तथा च मातत्वंरूपविशिष्टंरूपं मातात्वंम् , स्वभिन्नत्वस्य स्वाश्रयप्रकृतिकविभक्तिवृत्त्यानुपूर्वीमदौविभक्त्यव्यवहितपूर्वत्वस्य च मातात्वंरूपे सत्त्वेन तादृशरूपवदारब्धत्वस्यैव जननीपरिच्छेतृवाचकमातृमातृसमुदाये सत्त्वेन नैकशेषः । नच जरात्वरूपवैशिष्ट्यस्य जरस्त्वरूपे सत्त्वेन तद्रूपवदनारब्धत्वस्य जराजरासमुदायेऽसत्त्वेनैकशेषानापत्तिः, स्वभिन्नत्वसम्बन्धमपहाय स्वविशिष्टभिन्नत्वसम्बन्धस्य दानेनादोषात् । वै० स्वसामानाधिकरण्य–स्वाश्रयप्रकृतिकविभक्तिवृत्त्यानुपूर्वीमद्विभक्त्यव्यव-

ऽपि न। तत्राप्येकविभक्तौ सरूपाण्येवेत्यनुवृत्तेः[1]। अत एव 'प्रातिपदिकैकशेषे मातृमात्रोः प्रतिषेधो वक्तव्यः' इति वार्तिककृतोक्तम्। ननु[2] वार्तिके प्रातिपदिकैकशेष इत्ययुक्तम्। विभक्त्यन्तानामेकशेषेऽपि जननीमातृधान्यमात्रर्थके मातृभ्यां देहि मातृभ्यां चेत्यत्र प्रतिषेध आवश्यकः। न[3] च

स्तेन वारणे ऽप्युत्तरसूत्रप्रवृत्तेर्दुर्वारत्वादत आह—पुमानिति। अनुवृत्तेरिति। अपकृष्टैवकारसहितस्य 'एकविभक्तौ सरूपाणि' इत्यस्यानुवृत्तेरित्यर्थः। अत एव सरूपाण्येवेत्यनुवृत्तेरित्युक्तम्। तादृशस्यानुवृत्तौ मानमाह—अत एवेति। एवसहितस्य तस्यानुवृत्तेरेव। वार्तिककृतोक्तमिति। तथाच स्वोक्तार्थे वार्तिककृदुक्तिस्तात्पर्यग्राहिका। स्वोक्तार्थन्द्रढयितुं शङ्कते-नन्विति। मात्रर्थक इति वाक्ये इति शेषः। अत्रेत्यस्य सम्बन्धो वा। चेन देहीत्यस्य सम्बन्धः। तेन समानविभक्तिकत्वमेवेति

हितपूर्ववृत्तित्वोभयसम्बन्धेन। एवञ्च जरात्वरूपविशिष्टभिन्नत्वस्य जरस्त्वेऽभावेन, घटत्वादौ सत्त्वेन च जराशब्दे दोषाभावः। संज्ञाभूतसर्वशब्द-सर्वनामसर्वशब्दयोरेकशेषाप्राप्तावपि न दोषः, तत्रैकशेषस्यानिष्टत्वात्। नचैवं द्व्येकशब्दयोरेकशेषापत्तिरिति वाच्यम्। शब्दविशिष्टसमुदायघटक एकः शिष्यते इत्यर्थेन सर्वदोषवारणात्। वै० स्वारब्धत्व–स्ववृत्तिरूपविशिष्टरूपवदनारब्धत्व–स्ववृत्तिरूपाभाववदनारब्धत्वैतत्त्रितयसम्बन्धेन। रूपे रूपवैशिष्ट्यञ्च स्वविशिष्टभिन्नत्व स्वाश्रयप्रकृतिकविभक्तिवृत्त्यानुपूर्वीमद्विभक्त्यव्यवहितपूर्ववृत्तित्वोभयसम्बन्धेन। स्वविशिष्टत्वञ्च–स्वसामानाधिकरण्य–स्वाश्रयप्रकृतिकविभक्तिसजातीयविभक्त्यव्यवहितपूर्ववृत्तित्वोभयसम्बन्धेनेति तृतीयसम्बन्धाभावात् द्व्येकशब्दयोर्नैकशेष इति दिक्।

२ यत्रानुप्रयुज्यमानसर्वनामपदार्थस्य एकशेषत्वेन चिकीर्षितानां पदानाम्मध्ये यस्य कस्याप्येकशेषे तदर्थेऽभेदान्वयस्तत्रैवैकशेषः। यथा 'तौ वृक्षौ' 'ते वृक्षाः' इत्यत्र कस्यापि वृक्षशब्दस्यैकशेषे तदर्थे तत्पदार्थस्य पुँस्त्वविशिष्टस्यान्वयः स्यादिति तत्रैकशेषोऽनेन। 'तौ पीलू' इत्यत्र वृक्षवाचकमेव यदा पीलुशब्दद्वयं तदा कस्यापि एकशेषे तत्रापि अनुप्रयुज्यमानतत्पदार्थान्वयोऽभेदेन सम्भवतीत्येकशेषः स्यात्, यदा तु एको वृक्षवाचकोऽपरः फलवाचकस्तदा फलवाचकैकशेषे तस्य नपुंसकविशिष्टार्थोपस्थापकतया पुंस्त्वविशिष्टतत्पदार्थस्य तत्राभेदान्वयासम्भवेन नैकशेष इति कस्यचिन्मतं तदभिप्रायेणाह—अनुप्रयोगस्य-समत्वादिति। स्त्रीत्वविशिष्टार्थोपस्थापकस्य पुंस्त्वविशिष्टार्थोपस्थापकस्य वा मातृशब्दस्यैकशेषे तदर्थे 'ताभ्याम्' इति पदार्थस्याभेदान्वयसम्भवादेकशेषः स्यात्, पुंस्त्वविशिष्टस्य स्त्रीत्वविशिष्टस्यापि तत्र तत्पदार्थत्वात्। यदा तु 'तौ' इत्यस्यानुप्रयोगस्तदा स्त्रीत्वविशिष्टार्थोपस्थापकमातृशब्दैकशेषे तदर्थेऽभेदान्वयासम्भवेन औजसादिषु नैकशेषः। एतन्मतेऽपि भ्यामि 'ताभ्याम्' इत्यनुप्रयोगसाम्यादेवकारापकर्षं विनैकशेषो दुर्वार एव स्यादिति भावः।

१ एवकारसहितस्यानुवृत्तेरेवेत्यर्थः। अन्यथा तेनैकशेषे वार्तिकवैयर्थ्यापत्तिरिति भावः।

२ ननु प्रातिपदिकैकशेष इत्यस्य 'इति चेन्न' इत्यत्रान्वयः।

३ 'नच' इत्यस्य वाच्यमित्यनेनान्वयः। इष्टापत्तौ हेतुमाह 'किन्तु' इत्यारभ्य 'भाष्योक्तेः' इत्यन्तेन तथा च "अथ मतमेतदिति" भाष्योक्तेरलुवन्तैकशेषपक्षे एकशेषस्येष्टापत्तिरिति नच वाच्यमित्यर्थः। तत्र हेतुमाह—सूत्रव्याख्यानेति।

तत्पक्षे इष्टापत्तिः। 'किमुच्यते प्रातिपदिकानामेकशेष इति न पुनर्यस्यापि विभक्त्यन्तानामेकशेषस्तेनापि प्रतिषेधो वक्तव्यस्तस्यापि ह्येतानि क्वचिद्विभक्त्यन्तानि सरूपाणि मातृभ्यां चेति। अथ मतमेतद्विभक्त्यन्तानां सारूप्ये भवितव्यमेकशेषेण' इति भाष्योक्तेरिति वाच्यम्। सूत्रव्याख्यानपक्षभेदेनैकलक्ष्यस्य साधुत्वासाधुत्वयोरनौचित्यात्। अत एवाथ मतमेतदिति प्रतीकमुपादायाभ्युपगमवादेन त्वेतदुच्यते इति कैयटादिभिर्व्याख्यातमिति चेन्न। ईदृशविरुद्धमभ्युपेत्यैव वार्तिके तदुक्तेः। अत एव तदुत्तरमेवं च कृत्वा चोद्यते इत्युक्तं भाष्ये। अस्य प्रातिपदिकानामेकशेष इत्यादीति शेषः। अनेन चास्य पूर्वपक्षवार्तिकत्वं स्फुटमेवोक्तम्। तत्र

---

ध्वनितम्। नचेति वाच्यमिति परेणान्वयः। तत्पक्षे–विभक्त्यन्तानामेकशेष इति पक्षे। इष्टापत्तिरिति। प्रातिपदिकशेष इत्यस्य विशिष्टोपादानेन तत्पक्षे सूत्रस्य प्रवत्तिरिष्टैवेति भावः। इष्टापत्तौ भाष्यकारोक्तिप्रमाणयति–किमुच्यत इत्यादिना। न पुनरिति वाक्यालङ्कारे, न निषेधे, तस्यापि एवं रीत्या सूत्रव्याख्यातृमतेऽपि लक्ष्यस्य प्रकृते तु लक्ष्यं वाक्यमेव।

एतदर्थे भाष्यं साधकमाह–अत एवेति–लक्ष्यभेदानौचित्यादेव। एतेन प्रातिपदिकेति विशेषणोपादानमयुक्तमिति सिद्धम्। ईदृशविरुद्धमिति। एकलक्ष्यस्य व्याख्याभेदेन साधुत्वाऽसाधुत्वरूपविरुद्धमित्यर्थः, तथाचाभ्युपगमवादोऽयमिति भावः। वस्तुतस्तथा व्याख्यानेऽपि प्रतिषेधो वक्तव्य एवेत्यत्र तात्पर्यन्तद् ध्वनयन्नाह–अत एवेति। वार्तिककारस्याभ्युपगमवादत्वादेवेत्यर्थः। तदुत्तरम्–भवतीत्युत्तरम्। चोद्यत इत्यस्य किं कर्मेत्याकांक्षायामाह–अस्येति। एतेन 'किमुच्यते' इत्यादि चोद्यान्तरं नेति ध्वनितम्। अनेन—एवञ्च कृत्वेत्यनेन भाष्येण। अस्य–प्रातिपदिकेतिशब्द·

---

१ एकस्मिन्पक्षे एकशेषस्य, पक्षान्तरे तदभावस्य च स्वीकारेण मातृमातृभ्याम्, इत्येकस्य लक्ष्यस्य साधुत्वमसाधुत्वञ्चेति विरोधमित्यर्थः।

२ सदसद्विवेकेनासदपि स्वीकृत्येत्यर्थः तथा चैकदेशिना तदुक्तमिति तदसङ्गतमेवेति भावः।

३ वार्तिके 'प्रातिपदिक' इत्यस्याभ्युपगमवादेनोक्तत्वादेव भाष्ये तदुत्तरम् ''इति प्रातिपदिकानामेवैकशेषे दोषो भवति'' इत्युक्त्युत्तरम् '' एवञ्च कृत्वा चोद्यते '' इत्युक्तम्, चोद्यते इत्यत्र कर्माकाङ्क्षायामाह–अस्येति–चोद्यते–इत्यस्य। ' प्रातिपदिकानामेकशेषे मातृमात्रोः ' इत्यादिभाष्ये यदुक्तं तदेवास्य कर्मेत्यर्थः। अयम्भावः–''अथ मतमेतद् विभक्त्यन्तानां सारूप्ये भवितव्यमेकशेषेणेति प्रातिपदिकानामेवैकशेषे दोषो भवति। एवञ्च कृत्वा चोद्यते, इति भाष्ये उक्तम्। अत्र 'एवञ्च कृत्वा चोद्यते' इत्यस्यायमर्थः–कस्यचिदेतन्मतं यद् विभक्त्यन्तानां सारूप्ये एकशेषो भवति तन्मतानुसारेण तत्पक्षे एव दोषं मत्वा वार्तिके प्रातिपदिकैकशेष इत्युच्यते इति न तु सिद्धान्ते प्रातिपदिकैकशेषे इत्युक्तिः। तथा च प्रातिपदिकैकशेषपक्षे, सुबन्तैकशेषपक्षे च मातृमात्रोरेकशेषो नैव भवतीति रत्नाशयः।

४ एवञ्च कृत्वा चोद्यते इति कथनेनेत्यर्थः।

मातृग्रहणं विभक्तौ[1] विरूपाणामुपलक्षणम्। अयं[2] च पूर्वपक्षः प्रातिपदिकैकशेषस्य 'एकविभक्तौ' इति पदाभावे एवोपपत्तिं[3] मत्वा कृतः। तदभावे हि यानि सरूपाणि तेषामेकशेष एवेत्यर्थ एव प्राप्नोति। प्रयोगमात्राऽवच्छेदेन सारूप्यस्य हरिणहरितप्रकृतिकहरिणीशब्दादौ तद्धिते वैरूप्येणासम्भवात्प्रयोगसामानाधिकरण्येनैव सारूप्यस्य ग्राह्यतया तस्यात्रापि सत्त्वात्प्राप्तस्य स निषेधः। अत एवाग्रे विभक्तेः सारूप्ये उपलक्षणत्वमाश्रित्य तत्पक्षस्थापनेन तत्खण्डनं कृतमित्येवकारापकर्षो भाष्ये ध्वनित.। तं विना तावन्मात्रेण तत्खण्डनायोगात्। एतेन 'एकविभक्तौ'

घटितवार्तिकस्य। ननु तस्मिन्वार्तिके मातृशब्दस्यैवोपादानं न्युनम्? यातृशब्दघटिते यातृभ्यां यातृभ्याञ्च देहीति वाक्ये ऽप्युक्तरीत्या दोषस्य सत्त्वादत आह—तत्र मातृग्रहणमिति। उक्तरीत्योपलक्षणत्वावश्यकत्वे प्रातिपदिकैकशेष इत्यपि विभक्त्यन्तानामेकशेषपक्षस्याप्युपलक्षणमिति निगूढाशयः। अयञ्च पूर्वपक्षः—प्रातिपदिकैकशेष इत्यारभ्य कृतः पूर्वपक्षः।

ननु विभक्ताविति पदाभावे प्रयोगमात्रावच्छेदेन सारूप्यस्य विवक्षा कुतो नेत्याशङ्कायामाह—प्रयोगेति। प्रयोगसामानाधिकरण्येन क्वचित्प्रयोग इत्यर्थकमेतत्। ग्राह्यतयेति। तेन 'हरिण्यौ' 'हरिण्यः' इत्यस्य सिद्धिः। पुंवद्भावकृतन्तद्धिते वैरूप्यन्द्रष्टव्यम्। तस्य—सामानाधिकरण्येन सारूप्यस्य। अत्रापि—मातृमात्रादावपि। प्राप्तस्य एकशेषस्येति शेषः। अत एव—तदभावे एव तदुपपत्तिम्मत्वा पूर्वपक्षस्य सत्त्वादेव। अग्रे—अथानेन पक्षेणार्थः स्यादित्यादिस्थले। विभक्तेरिति। अत्रैकपदानुपादानेनैकपदोपादानं स्पष्टार्थमिति ध्वनितम्। एकस्यामपि विभक्तौ यानि विरूपाणि न तेषामेकशेष इत्यस्य स्पष्टतया लाभार्थम् वा। वस्तुतस्तु विभक्तौ यानि सरूपाण्येवेत्युक्तौ 'स्वसारौ' 'स्वसारः' इत्यत्रैकशेषो न स्यात्, स्वसरि च स्वस्रोश्चेत्यत्र वैरूप्यदर्शनात् 'कमलौ' 'कमलः' इत्यादावेव स्यात्, कृते त्वेकपदे एकसङ्ख्यावाचकविभक्तावित्यर्थलाभाद्भिन्नार्थकविभक्तौ वैरूप्येऽपि भवत्येव सः। तत्पक्षस्थापनेन—प्रातिपदिकानामेकशेष इति पक्षस्थापनेन। तत् खण्डनम्—मातृमात्रोः प्रतिषेधो वक्तव्य इत्येतद्वार्तिकखण्डनम्। त विना—एवकारापकर्षं विना। तावन्मात्रेण—विभक्तेः सारूप्योपलक्षणत्वमात्रेण। तत्खण्डनेति। मातृशब्दयोर्भ्यामादौ सारूप्यसत्त्वादिति भावः। एतेनेति। प्रत्याख्यानपरभाष्यप्रामाण्यादपकर्षस्यावश्यक-

१ कस्याञ्चिद्विभक्तौ विरूपाणां देवरपत्नीवाचकयातृशब्द—यानकर्तृवाचकयातृशब्दादीनामित्यर्थः।
२ प्रातिपदिकैकशेषे मातृमात्रोः प्रतिषेधो वाच्य इति पूर्वपक्ष इत्यर्थः।
३ बाधनिराकरणपूर्वकं युक्तिभिर्व्याख्यानमित्यर्थः।

**औजसादिषु वैरूप्यात्। एक एवेति। एतच्च सहविवक्षायामेव प्रवर्तते।**

**इत्यावर्त्यैकविभक्तौ सरूपाणामेकविभक्तौ विवक्षितायामेकशेष इत्यर्थे यस्यां विभक्तावेकशेषस्तस्यां विभक्तौ सरूपाणामित्यर्थस्य प्रत्यासत्त्या लाभेन भ्यामादावेकशेषो नौजसादाविति वार्तिकं व्यर्थमिति तदाशय इत्यपास्तम्। वार्तिकमते भ्यामादावपि तदभावस्य प्राप्तत्वाच्चेति दिक्। एतच्चेति। एकशे-**

त्वेनावृत्तेरफलत्वेनेत्यर्थः। 'ननु' वृक्षौ वृक्षा इत्यादावेकशेषानापत्तिः? वृक्षौ च वृक्षाश्चेत्यत्र प्रथमायामेव वैरूप्यदर्शनादत आह—विवक्षितायामिति। विभक्ताविति पदं विशेषणत्वमात्रतात्पर्यकन्तूपलक्षणत्वतात्पर्यकमित्याशयेनाह—यस्यामित्यादि। प्रत्यासत्त्येति। अस्मिन्नर्थे तात्पर्यग्राहकमेकपदमिति तद्भावः। तदाशय इति। राम राम औ इति स्थितिप्रदर्शनकृदाशय इत्यर्थः। तदुक्तं = भ्यामादावेकशेष इतितत्खण्डयति—वार्तिकमत इति। प्राप्तत्वादिति। विभक्तिविशेषबोधकशब्दमनुपादाय मातृमात्रोरित्येव यतो वार्तिककृतोक्तन्ततः प्राप्तत्वादित्यर्थः।

एकशेषशब्दस्य पुंस्त्वादेकशेषपरामर्षोपपदे तच्चेति नपुंसकोपादानन्तदसङ्गतमि-

१ वस्तुतस्तु एवकारापकर्षे न मानम्। जननीपरिच्छेत्तृवाचिनोर्मातृशब्दयोः भ्यामादावेकशेषः, औजसादिषु न इत्येव पक्षो ज्यायान्। तथाहि—जननी-परिच्छेत्तृवाचिमातृशब्दविषयैकशेषप्रतिषेधो यथा प्रातिपदिकशेषे उक्तो न तथा पक्षान्तरेषु, तेषु यत्र विभक्त्यन्तानां सारूप्यं तत्रैकशेषस्येष्टत्वेन यत्रासारूप्यं तत्रैकशेषाप्राप्त्या वार्तिकानुत्थानात्। वार्तिकारम्भे तु विभक्तावित्यस्याश्रानेन प्रातिपदिकावस्थायां सारूप्यस्य सत्त्वेन यत्र विभक्त्यन्ते वैरूप्यं तत्राप्येकशेषप्राप्त्या तन्निषेधार्थं वार्तिकमिति प्रातिपदिकैकशेषे इत्युक्तिः सङ्गतैव। इत्थश्च 'इष्टविरुद्धमभ्युपेत्यैव वार्तिके तदुक्तेः' इति भाष्यस्यैकदेश्युक्तित्वकल्पनमेवोचितम्।

नच प्रातिपदिकैकशेषपक्षे वार्तिकसत्त्वे सर्वत्रैव निषेध इति भ्यामादावपि मातृमातृभ्यामिति प्राप्नोति विभक्त्यन्तैकशेषपक्षे तु वैरूप्यात्तत्र न प्राप्नोतीति फलभेदः।

अत एवोक्तम् 'सूत्रव्याख्यानभेदेन साधुत्वासाधुत्वयोरनौचित्यात्' इति वाच्यम्, उक्तफलभेदवारणाय 'अथमतमेतद् विभक्त्यन्तानां सारूप्ये भवितव्यमेकशेषेण' इति भाष्योक्तेर्वार्तिकस्य सर्वनामस्थानमात्रविषयकत्वस्वीकारेण दोषाभावात्। नच 'एकविभक्तौ'इत्यावर्त्यापि यस्यां विभक्तौ सारूप्य तत्रैकशेष इत्यर्थेन वार्तिकार्थोपसङ्ग्रह इति वाच्यम्, तावताप्यक्षतेः। यत्तु—'मातृमातारौ' इत्यत्र 'पुमान् स्त्रिया' इत्येकशेषवारणाय तत्रापि 'एकविभक्तौ सरूपाण्येव' इत्यनुवर्तते इति तन्न, 'तल्लक्षणश्चेद्' इत्यनुवृत्त्यैव तत्र तदप्रवृत्तेः। अर्थकृतवैरूप्यस्यापि तत्र सत्त्वात्। अत एव हंसस्य स्त्री हंसी, हंसी च हंसश्च इत्यत्र नैकशेषः प्रयोगरूपार्थभेदात्।

न च "मातृमात्रोः प्रतिषेधः" इति वार्तिके 'मातृमात्रोः' इत्यत्रैकशेषाकरणादेवाकारोऽपकृष्यते इति कल्प्यते इति वाच्यम्, 'मात्रोः प्रतिषेधः' इत्युक्तौ समानार्थकस्यापि मातृशब्दस्यैकशेषनिषेधापत्तेः अनुकरणस्वरूपभङ्गापत्तेश्च। 'मातृमात्रोः' इत्युक्तौ तु मातृग्रहणसामर्थ्याद् भिन्नार्थकयोरेव ग्रहणमिति न दोष इत्यलम्।

इतरेतरयोगद्वन्द्वस्य विषय इति यावत् । यत्र ह्यनेकस्यार्थस्य मिलि-

षविधायकं चेत्यर्थः । ध्वनितं चेदं पृथक् सर्वेषां विभक्तिपराणामेकशेष इति पक्षे विभक्त्यन्तानामेकशेष इति पक्षे च, 'द्वन्द्वप्रतिषेधो वक्तव्यः' इत्याशङ्क्य 'अनवकाश एकशेषो द्वन्द्वं बाधिष्यते' इति ग्रन्थेन भाष्ये। इतरेतरेति। 'एकवच्चास्यान्यतरस्याम्' इत्यनेनैकशेषविषयपदानां समाहारेऽवृत्तिबोधनादिति भावः । इतरान्वय इति । एकरूपेणैकरूपावच्छिन्ने इतरत्रान्वय

त्याशयेनाह—एकशेषेति । इदम्—सहविवक्षायामेव प्रवर्तत इत्येतत् । सहविवक्षापदार्थस्तु विशेष्यविशेषणभावानापन्नानेकस्य युगपदेकपदार्थसम्बन्धबोधनेच्छा । यद्यसहविवक्षायामप्येकशेषः स्यात्तदा तत्र द्वन्द्वाप्रसक्त्या ऽनवकाशत्वप्रदर्शनमसङ्गतं स्यादिति भावः । इतरेतरेति । यन्मूले ऽभिहितन्तत्समाहारस्य व्यावृत्तये तत्र साधकमाह—एकवदित्यादिना । समाहारे ऽवृत्तिबोधनादिति । यदि समाहारेऽप्येकशेषः स्यात्तदा तदिदं वस्त्रमित्यस्य समाहारविवक्षायान्तानीमानि वस्त्राणीत्यस्येतरेतरयोगविवक्षायां सिद्धौ विकल्पेनैकवद्भावस्य विधानं व्यर्थं स्यादिति भावः । एतेन समाहारद्वन्द्वविषयेऽप्येकशेषो भवति । अन्यथा घटघटमित्यादिसमाहारविवक्षायां स्यात् । अनभिधानेन तद्वारणन्तु न चमत्कृतिकारि । अन्यथा घटघटावित्यस्याप्यनभिधानेनोपपत्तावेकशेषारम्भो ऽनर्थकः स्यात् । नच घटघटमित्यतो यथा समाहारस्य प्रतीतिस्तथा घटमित्यस्मान्नेति कथन्तत्रैकशेष इति वाच्यम् ? प्रकरणादिना तत्प्रतीतिसम्भवात् । अत एव व्यक्तिपक्षेऽपि 'न ब्राह्मणं हन्यात्' इत्यस्य वाक्यस्य सर्वब्राह्मणविषयकत्वसिद्धिरिति परास्तम् । व्यक्तिपक्षे यङ्कञ्चिद्ब्राह्मणमहत्वा ऽन्यत्र कृती स्यादित्यनेन दोषमभिधाय जातिपक्षमवलम्ब्य समाधानपरभाष्यविरोधापत्तेश्च । घटघटमित्यस्य वारणं त्वनभिधानेनैव । 'दिक्षु समाहारो नास्त्यनभिधानात्' इति यथा मूले अनेकार्थस्य मिलितस्येतरान्वयो यत्र स द्वन्द्वस्य विषय इत्युक्तं, तद्यथाश्रुतन्न युक्तम्, राजपुरुषमित्यत्रातिप्रसङ्गाद्वतो मिलितस्येत्यस्य परस्परविशेषणविशेष्यभावानापन्नत्वे सति किञ्चिन्निष्ठविषयतानिरूपितविषयताश्रयानेकस्येत्यर्थः । अत एवाह—एकरूपेणेति । यथा 'धवखदिरौ छिन्धी' इत्यादौ धवखदिरयोः समूहान्वितयोः कर्मत्वेन छेदनान्वयः ।

१ समाहारविषये एकशेषं कृत्वा एकवद्भावस्य इतरेतरयोगविषये एकशेषे कृते द्विवचनादेश्च विकल्पेन सिद्ध्या 'नपुंसकमनपुंसकेन' इति सूत्रे विकल्पेनैकवद्भावविधानाज्ज्ञापकादितरेतरयोगद्वन्द्वविषये एवैकशेष इति तदभावे एकशेषानापत्तिरिति भावः । नच समाहारविषये एवैकशेष इति ज्ञापनेनापि विकल्पेनैकवद्भावविधानं चरितार्थमिति वाच्यम्, तथा सति 'हलि सर्वेषाम्' इति निर्देशासङ्गत्यापत्तेः समाहारविषयैकशेषे एकवचनस्यैव प्राप्तेः । नच 'सर्वेषाम्' इत्यत्रैकशेषाभावेऽपि सर्वशब्दार्थसमूहगतोद्भूतावयवभेदविवक्षया बहुवचनान्तत्वोपपत्तेरिति वाच्यम् ,"यजुष्येकेषाम्" इति निर्देशेन समाहारविषयकत्वस्य ज्ञापयितुमशक्यत्वात् ।

तस्येतरान्वयः स तथाभूतोऽस्य विषयः । इदं च 'इदितो नुम् धातोः' इति लिङ्गाल्लभ्यते न्यायाच्च । तथा हि—यः शिष्यते स लुप्यमानार्थाभिधायीति स्थिते श्रूयमाणैकशब्दोपस्थितं सर्वमविशेषादैकरूप्येणैवान्वेतुमर्हति । यद्वा पूर्वसूत्राद् 'द्वन्द्वे प्रसक्ते सतीति' व्याख्येयम् ।

इत्यर्थः । इदित इति । अत्र ह्यभेदेन परस्परान्वयाद्भेदघटितसाहित्यनिमित्तैकशेषाप्रवृत्तिरिति भावः । एकरूप्येणैवेति । पुष्पवन्तपद इवेति भावः । द्वन्द्वे प्रसक्ते इति । विभक्त्युत्पत्तौ सत्यां तत्प्रसक्तिर्बोद्धया ।

'चैत्रमैत्रयज्ञदत्तगृहैर्मण्डितमिदन्नगरम्' इत्यत्र द्वन्द्वार्थस्य गृहपदार्थे ऽन्वयोऽस्ति तत्र न तेषामेकङ्गृहमित्यनुपपत्तिरत आह—एकरूपावच्छिन्नेति । यदुक्तम्प्राग्विशेषणविशेष्यभावानापन्नेति तत्र मानमाह मूले—इदश्चेति । भेदघटितेति । यत्रानेकपदार्थस्यान्वयितावच्छेदकविभिन्नरूपेण धवत्वखदिरत्वाभ्यामेवेतरान्वयस्तत्रैव समूहान्वितस्येतरान्वयोस्ति, तत्रैव द्वन्द्वस्य साधुत्वमिष्यते । पदार्थतावच्छेदकभेद एव द्वन्द्वस्य साधुतानियामकः । 'ब्राह्मणवसिष्ठन्यायेन' इत्यत्र ब्राह्मणत्ववसिष्ठत्वयोर्यथा । पुष्पवन्तपद इवेतीति । 'एकयोक्त्या' 'पुष्पवन्तौ दिवाकरनिशाकरौ' इत्यमरे द्वन्द्वेन पर्यायप्रदर्शनात्तत्र द्विवचननिर्देशादेकयोक्त्येरयुक्तेश्च समूहस्य शक्यतालाभेन 'पुष्पवन्तौ नमस्कुर्मः' इत्यत्र यथा समूहान्वितयोश्चन्द्रसूर्ययोः कर्मत्वेन नमस्कारान्वयित्वन्तथा सर्वत्र द्वन्द्वस्थले एकार्थीभावापन्नसमुदायोपस्थाप्यानेकस्यैकधर्मावच्छिन्ने ऽन्वयो द्रष्टव्यः । एकशेषोऽपि तादृशस्थल एवेष्यते । तत्राप्येकपदोपस्थाप्यानेकस्य समूहान्वितस्येतरान्वयो भवति । यत्र त्वेतादृशसहविवक्षाभावे द्विर्वचने ऽचीत्यादौ भाष्ये एकशेषनिर्देशादित्युक्तिस्तत्रैकशेषशब्दस्तत्परो लक्षणयेति बोध्यम् । समाहारद्वन्द्वादितरेतरयोगस्थले विशेषस्तु द्वन्द्ववाच्यस्य समूहस्योद्भूतावयवभेदकस्य भानम् । अत एव द्विवचनबहुवचनयोर्यथायोगमुपपत्तिः । लिङ्गन्यायाभ्यामुक्तार्थस्य झटिति प्रतिपत्तिर्न सम्भवतीत्याशयेन—मूले यद्वेति । तत्रैकशेषस्य द्वन्द्वापवादत्वप्रदर्शकवाक्यस्य नैतस्यामवस्थायामुभयोः प्राप्तिसत्त्वेन, किन्तु द्वन्द्वस्यैकशेषप्रवृत्त्युत्तरकालिकतल्लक्ष्याधिकरणकाभावप्रतियोगिप्राप्तिकत्वेनैव वाच्यम्, तस्य त्वेकशेषस्य यस्यामवस्थायाम्प्राप्तिस्तदा सुपोऽभावान्न द्वन्द्वस्य प्रसङ्ग इत्यत आह—विभक्त्युत्पत्ताविति ।

१—"जॄविशिभ्यां झच्" (उणा ३-४-१३) इति बाहुलकादवतेर्झचि पुष्पस्यावन्तौ इति विग्रहे समासे शकन्ध्वादित्वात्पररूपे "पुष्पवन्तौ" इति । तथाचोक्तम् अमरे "एकयोक्त्या पुष्पवन्तौ दिवाकरनिशाकरौ" इति । एकया शक्त्या पुष्पवन्तशब्दः युगपद् दिवाकरनिशाकरयोरुपस्थापकः ।

तथा च 'पुष्पवन्तौ नमस्कुर्मः इत्यत्र चन्द्रत्वावच्छिन्नम्, सूर्यत्वावच्छिन्नञ्च नमस्कुर्म इत्येवबोधो नत्वेकधर्मावच्छिन्नं परित्यज्य, तथा एकशेषस्थलेऽपि बोध्यमितिभावः ।

स्यादेतत्—द्वन्द्वे कृते सतीत्यर्थोऽस्तु, मैवम्, पन्थानौ 'पन्थानः' इत्यादौ समासान्तापत्तेः। 'करौ' 'कराः' इत्यादौ एकवद्भावापत्तेः, सर्वे सर्वेषामित्यादौ 'द्वन्द्वे च' 'विभाषा जसि' इत्यनयोरापत्तेश्चेति दिक्। यत्तु प्राचा—राम राम औ इति स्थिते इत्युक्तम्, एकविभक्तौ परत इति च, तत्रेत्थमुक्तिसंभवः—राम राम इत्यत्र अवयवयोरिव समुदायस्यापि प्रातिपदिकसञ्ज्ञाऽस्ति, मिलितेनार्थवत्त्वात्। न चार्थवत्त्वेऽपि समासग्रहणस्य नियमार्थत्वान्नैवमिति वाच्यम्, यत्र समुदाये पूर्वो भागः पदं तद्विषयको नियम इत्युक्तत्वात्, 'बहुपटवः' इत्याद्यनुरोधेन नियमस्य सजातीयविषयताया

एकवद्भावापत्तेरिति। एवं चेतरेतरयोगविषयाभावेनैकशेषानापत्तिरिति भावः। इत्यनयोरिति। 'जसः शी' इत्यत्र 'वा' इति वक्तव्ये 'विभाषा जसि' इति तूद्भूतावयवभेदविवक्षया बहुवचने, एकशेष-द्वन्द्वयोरभावात्तत्र विकल्पवारणायोत्तरार्थं चेति भावः। सजातीयेति। स्वातन्त्र्येण प्रयोगार्ह-

पदश्च—समाहास्य विषयतायाः सत्त्वेनैकशेषप्रतिबन्धकसत्त्वे च। नन्वस्मिन्पक्षे "जसः शी" इतिसूत्रे एव वा ग्रहणं कार्यन्तेन सर्वत्र विकल्पो भविष्यति तावतैव सिद्धौ "विभाषा जसि" इति पृथक्सूत्रकरणमेकशेषे कृते समासनिमित्तकार्यन्नेत्यर्थे ज्ञापकमस्तु। तथाच-सर्वे इत्यादौ न मूलोक्तदोषापत्तिः 'हलि सर्वेषाम्' इत्यत्र सुट् चोक्तार्थस्य ज्ञापको भविष्यतीत्यत आह-जसः शीत्यत्रेति। उद्भूतावयवभेदविवक्षया-उद्भूतः प्रकटो ऽवयवानाम्भेदो यस्य समूहस्य तादृशसमूहस्य सर्वादिशब्दवाच्यत्वविवक्षया। तत्रेति। तादृशसमूहवाचकसर्वादिशब्दघटिते जस्परकलक्ष्ये इत्यर्थः। विकल्पवारणायेति। भवत्सम्मतवाशब्दघटितन्यासेन विकल्पवारणायेत्यर्थः। उत्तरार्थम्। 'प्रथमचरम' इत्यादिसूत्रेषु 'विभाषा जसि' त्यस्यानुवृत्तय इत्यर्थः। यच्चोक्तं सुट् चोक्तार्थज्ञापक इति तदपि न, तेन निर्देशेन द्वंद्वे प्रसक्ते सतीति व्याख्यानमेव ज्ञाप्यतामपूर्वस्य ज्ञापकसिद्धस्य वचनस्य कल्पनापेक्षया ज्ञाप्यार्थस्यास्मत्सम्मतव्याख्यानेन सिद्धौ लाघवात् उद्भूतावयवभेदसमूहवाचकसर्वशब्दादामि सुटः प्रवृत्त्या तस्य निर्देशस्योपपन्नत्वाच्च। मूले-प्राचेति। प्रक्रियाकृतेत्यर्थः। सम्भव

१ सर्वशब्दो हि समुदायबोधकः। तत्र यदा समुदायद्वयस्य, तत्त्रयस्य वा विवक्षा तदा एकशेषे द्विवचनबहुवचने। एवं समुदायस्यैकत्वेऽपि अवयवगतसंख्याया विवक्षायामपि द्विवचनबहुवचने, तदा च नैकशेषादेः प्राप्तिः, उद्भूतावयवभेदविवक्षया एकस्यैव समुदायस्य बोधकत्वात्।

औचित्याच्च। तथा चैकाद्विर्वचनन्यायेन समुदायप्रातिपदिकादेव द्विर्वचनाद्युत्पत्तिः, तावताप्यवयवार्थानां सङ्ख्यान्वयेनानुग्रहसम्भवात्। नन्वेवं रामकृष्णावित्यादिष्वपि द्वन्द्वं विनैव समुदायाद्विभक्तिः स्यादिति चेन्मैवम्, द्वन्द्वविधावनेकं सुबन्तमित्यस्यानुवृत्त्या एकाज्द्विर्वचनन्यायस्य बाधादिति दिक्, इत्थमुक्तिसम्भवे सत्यपि 'समुदायादेकविभक्तौ परतः' इति पक्षः किमर्थमुपेक्षित इति चेच्छृणु— अस्मिन्पक्षे 'मातृमातारौ' इत्यादावप्येकशेषः स्यात्। नन्वेकविभक्ता-

त्वेन साजात्येऽपि न दोषः। एतत्पूर्वभागस्य विभक्त्युत्पत्तिमनपेक्ष्य स्वातन्त्र्येण प्रयोगानर्हत्वात्। अनुग्रहसम्भवादिति। अत एव न प्रत्येकं तदुत्पत्तिः। बाधादिति। अन्यथा द्वन्द्वोच्छेदो नलोपाद्यसिद्धिश्चेति भावः। यानि सरूपाण्येवेति। तेषामेकविभक्तौ परत एकशेष इति शेषः। मानाभावादिति। भाष्येऽनुक्तत्वादिति भावः। किञ्चावृत्तौ प्रत्यासत्तिन्यायेन यस्यां विभक्तावेकशेषस्तस्यां विभक्तौ यानि सरूपाण्येव तेषामित्यर्थापत्त्या भ्यामादावेकशेषापत्तिः, 'प्रातिपदिकैकशेषे मातृमात्रोः प्रतिषेधो वक्तव्यः'

इति। अस्य प्रसादकृतोक्त इति शेषः। अवयवयोरिवेति। नचावयवयोः प्रातिपदिकत्वस्वीकारेऽन्तरङ्गत्वात्प्रत्येकं सुबुत्पत्तिरपि भविष्यति तथा च नियमविषयतायाः सत्त्वात्समुदायस्य प्रातिपदिकसंज्ञा न भविष्यतीति वाच्यम्, समुदायोत्तरोत्पन्नसुपा स्वार्थसङ्ख्यान्वयसमर्पणे प्रत्येकं सुबुत्पत्तेरप्रवृत्तिरित्याशयात्। अर्थवत्त्वादिति। अर्थस्य प्रकाशनादित्यर्थः। सजातीयेति। पदसंज्ञकपूर्वभागघटितत्वेन साजात्यस्य विवक्षणादिति भावः। सिद्धान्तभूतार्थेपि प्रक्रियोक्तस्योपपत्तिमाह— स्वातन्त्र्येणेति। अनुग्रहेति। प्रत्येकार्थस्यापि समुदायघटकतया सङ्ख्यान्वयित्वस्य सम्भवरूपानुग्रहेत्यर्थः। अतएव—तादृशानुग्रहादेव, अन्यथा एकाज्द्विर्वचनन्यायबाधाकल्पने द्वन्द्वोच्छेद इति, तथाच द्वन्द्वविधानसामर्थ्यात्तत्र तस्य बाधस्य कल्पनेति भावः। ननु द्वन्द्वविधानसामर्थ्येन 'चार्थे' इति सूत्रे सुबिति निवृत्तमित्येव कल्प्यतान्तावतापि तस्य सार्थक्यम्भविष्यतीत्यत आह—नलोपाद्यसिद्धिरिति। राजसैनिकावित्यादावित्यादिः। आदिना वाक्त्वचमित्यादौ कुत्वादेः सङ्ग्रहः। आवृत्त्योक्तव्याख्यानेपि वाक्यापरिसमाप्त्या न्यूनतापत्तिरत आह—तेषामिति।

ननु यद्यपि कण्ठरवेण भाष्यकृता आवृत्तिर्नोक्ता तथापि मातृमात्रोः प्रतिषेध इत्यनेन ध्वनितेति कल्पयाम इत्यत आह—किञ्चावृत्ताविति। इत्यर्थापत्त्येति। न चास्मिन्पक्षे एवकारापकर्षवैयर्थ्यम्, मातृमातारावित्यस्यैवकारापकर्षव्यावर्त्यस्य सम्भ-

वित्यावर्त्य एवकारं चानुकृष्य, एकविभक्तौ यानि सरूपाण्येवेति व्याख्येयमिति चेन्न, आवृत्तौ मानाभावात्, विभक्तेरेकशेषस्य विशेषणत्वे फलाभावाच्च, न च पयः पयो जरयतीत्यादिव्यावृत्तिः फलम्, सहविवक्षायामित्यस्यावश्यकत्वात्, अन्यथा पयः पयोनयतीत्यत्र गौण-मुख्यकर्मणोरेकशेषापत्तेः। 'देवदेवः' इत्यादावतिप्रसङ्गाच्च।

इति वार्तिकेन भ्यामादावपि तदभावस्यैवेष्टत्वानुमानात्। फलमिति। समुदायादेकविभक्तेरभावाद्विभक्तेर्लुका लुप्तत्वाच्चेति भावः। सहविवक्षायामिति। सा च समुदायस्यैकार्थनिरूपितैककारकावेश एव भवतीति भावः। गौणमुख्यकर्मणोरिति। उभयोरपि कर्मत्वेन तत्र समुदायादेकविभक्तेः कर्तुं शक्यत्वेन विभक्तिपदेन व्यावर्त्यासम्भवेन सहविवक्षायामित्यावश्यकमिति भावः। नन्वत्रापि लुकि विभक्तिपरत्वाभाव इत्यरुचेराह—देवदेव इति। असहविवक्षायामप्येकशेषे तत्पुरुषादिविषयेऽपि तदापत्तिरिति भावः, तत्रापि समुदायादेकविभक्तेः सत्त्वात्। नन्वनेकबोधकैकविभक्त्याश्र-

वात्। भ्याम्येकशेषस्य प्रवृत्ताविष्टापत्तिं निरस्यति—प्रातीति। तदभावस्य—एकशेषाभावस्य। आवृत्तौ एकविभक्तौ यानि सरूपाण्येव तेषामेकविभक्तावेकशेष इत्यर्थो भविष्यति। तत्राद्यवाक्यार्थस्य 'पयः पयो जरयती' इत्यत्रासत्त्वमुपपादयति—समुदायादिति। द्वितीयासत्त्वमाह—विभक्तेरिति। सहविवक्षया अभावम्प्रकटयति—सा चेत्यादिना। एकार्थेति। वेदनादीत्यर्थः। एककारकावेशे—एककारकशक्तिवैशिष्ट्ये[1]। शक्तिश्च कर्तृत्वादिरूपा विवक्षिता, एतेन प्रकृते ऽसम्भवो ध्वनितः। एव भवतीति। क्रियान्वयित्वं यत्र तत्रैवंविधैव सहविवक्षा वाच्येति भावः। मूले—अन्यथेति। अंशद्वयसद्भाव एवैकशेषस्य प्रसङ्ग इति नियमास्वीकार इत्यर्थः। कर्तुं शक्यत्वेनेति। मूलोक्तरीत्या समुदायस्य प्रतिपदिकत्वादिति भावः।

नचात्र यद्येकशेषस्तदा द्वयोर्गौणमुख्यकर्मणोरेकद्वितीयया कथमभिधानमिति वाच्यम्, तन्त्रेण तस्योपपत्तेः। आवश्यकमिति। तस्य लाभस्तु तिष्येतिसूत्राद्द्वन्द्वइत्यस्यानुवृत्त्या भविष्यति एवञ्च वृत्तिर्न्यर्थैवेति निष्कर्षः। अत्र—पयः पयो नयतीत्यत्र। लुकीति—उभयोर्नपुंसकत्वादित्यादिः, नलुमतेत्यस्यानित्यत्वेनाप्रवृत्तिस्तु प्रामाणिकप्रयोगस्थल एवेति तात्पर्यम्। नन्वत्रापीत्यादि वदता द्वन्द्वे इति नानुवर्तनीयमिति ध्वनितमिति तद्रीत्यैवातिप्रसङ्गो देवदेव इत्यत्रेत्याह—असहेति। तत्पुरुषादीति। देवस्य देवो देवदेव इत्यर्थकतत्पुरुषादीत्यर्थः। आदिना इदितो नुमिति बहुव्रीहेः सङ्ग्रहः। तत्रापि—

1 एककारकेति एकसम्बन्धस्योपलक्षणम्, 'रामयोर्धनम्' इत्यादावपि सहविवक्षाया दृष्टत्वात्।

प्रत्युत आवृत्त्या उभयविशेषणत्वे भिक्षाणां समूहो भैक्षमिति न सिद्ध्येत्, तथा हि—भिक्षा ३ अ इति स्थितेऽन्तरङ्गानपि विधीन् बहिरङ्ग इति लुकि कृते विभक्तिपरत्वाभावादेकशेषो न स्यात्, लुप्ते प्रत्ययलक्षणाभावात्। किञ्च रामावित्यादौ परत्वान्नित्यत्वाच्च

वृद्धावपि भैक्षसिद्धिरस्तीत्यत आह—तथा हीत्यादि। एकशेषारम्भे एकशेषं विना तादृशस्य ज्ञानासम्भव इति भावः। विभक्तिपरत्वाभावादिति। परत्वा-न्नित्यत्वाच्चादिवृद्धौ सारूप्याभावाच्चेत्यपि बोद्धव्यम्। अविरविकन्यायेन समाधानं तु लक्षणैकचक्षुष्कैर्दुर्ज्ञेयम्। नच समर्थग्रहणेन परिनिष्ठित-

तत्पुरुषादिघटितवाक्येपि। खण्डनकृदुक्तिं खण्डयितुं तदुक्तिमनुवदति। नन्वनेके-त्यादि। नचानयैव रीत्या सर्वत्र निर्वाहे एकशेषारम्भस्य तन्मते वैयर्थ्यमिति वाच्यम्, सर्वत्रैकशब्देनैवानेकार्थो बोधनीय इति नियमाभावाद्। घटघटावित्यादिपाक्षिकप्राप्ति विषयानिष्टवारणाय तदारम्भात् तदुक्तिं खण्डयति—एकशेषारम्भ इति। नचानेक-भिक्षाशब्दस्य 'स्त्रीप्रत्यये चानुपसर्जनेन' इति परिभाषया प्रत्ययान्तत्वेन कथं समु-दायादाणिति वाच्यम्, स्त्रीप्रत्ययमात्रग्रहणे तस्याः परिभाषायाः प्रवृत्तेरुक्तत्वात्। तादृ-शस्य=अनेकबोधकस्यैकस्य। परोक्तं खण्डयति—नचेति। समर्थग्रहणं हि परिनिष्ठित-परन्त्वाप्रवृत्तनित्यविध्युद्देश्यताऽवच्छेदकानाक्रान्तत्वरूपम्। इत्थञ्च यथा सन्धिकार्या-त्प्राङ् नास्ति तथैकशेषविधायकशास्त्रस्य प्रवृत्तेः प्रागपि नास्तीति तद्भावः।

---

१ "द्विगोर्लुगनपत्ये" (पा. सू. ४-१-८८) इति सूत्रे भाष्ये 'पञ्चकपाल्यां संस्कृतः' इति विग्रहमात्रं न तु ततः प्रत्ययः, अनभिधानात्। किन्तु 'पञ्चसु कपालेषु संस्कृतः' इति तद्धितार्थद्विगोरेव प्रत्यये 'पञ्चकपालः' इति सिद्ध्यतीत्युक्त्वा दृष्टान्तत्वेनोक्तम्। "द्वयोः समानार्थकयोरेकेन विग्रहः, अपरस्मादुत्पत्तिर्भविष्यत्यव्यविकन्यायेन। तद्यथा 'अवेर्मांसम्' विगृह्य अविकशब्दादुत्पत्तिर्भवति 'आविकम्' इति। एवं पञ्चसु कपालेषु संस्कृत इति विगृह्य 'पञ्चकपालः' इति भविष्यति। पञ्चकपाल्यां संस्कृत इति विगृह्य वाक्यमेव भविष्यति इति। अविशब्दादनभिधानादण्न भवति। तथैव एकशेषविषयभिक्षाशब्दादण् प्रत्ययो न स्यात्, अभिधानात्। किन्त्वनेकभिक्षार्थकभिक्षाशब्दादेवाण् स्यादिति तु वक्तुमशक्यम्, कस्याभिधानत्वम्, कस्यानभिधानत्वमिति लक्षणैकचक्षुष्कैरस्माभिर्दुर्ज्ञेयत्वात्, अव्यादिशब्दादनुत्पत्तौ तु भाष्यमेव मानम्।

' अव्यविकन्यायेनेति, पाठः अविश्चाविकश्च अव्यविकौ तयोः शब्दयोर्न्यायः अव्यविकन्यायः। क्वचित् 'अविरविकन्यायेन' इति पाठः। तत्र 'अविः' इत्यस्य दृष्टान्तत्वेनोपादानम्। यथा अविशब्दो न स्वयं प्रत्ययं लभते, किन्तु तेन 'अवेर्मांसम्' इति विग्रहमात्रम्, प्रत्ययस्तु अविकशब्दादेवेति। यद्वा प्रथमा-न्तानुकरणम् 'अविर्' इति—ततश्च प्रथमान्तानुकरणाविशब्दस्याविकशब्देन द्वन्द्वे षष्ठीसमासे अविरविक-न्यायः, अनुकरणाविर्शब्दात्परस्य सोर्लुक्यपि नानुकरणघटकस्य सोर्लुक्, प्रकृतिवदनुकरणमित्यस्यानित्य-त्वादित्यलम्।

कस् । लक्ष्यानुरोधाद्व्यवस्थेति भावः । यथोत्तरामिति । तथा चायत्वे

तन्निमित्तकादेशनिवृत्तये क्रियमाणं 'आख्यानात्कृतस्तदाचष्टे कृल्लुक् प्रकृतिप्रत्यापत्तिश्च' इति वचनमित्यर्थः ।

अत्रेदं चिन्त्यम्—लुक्यपि प्रत्ययलक्षणसत्त्वाद्राजो, ऐनेय इत्यादावि-विवाकृतपरिभाषाया अत्राप्राप्तिः । 'न लुमता' इति निषेधस्तु प्रत्यये परतो जायमानपूर्वकार्यं एवेति स्पष्टमेव । तस्मात्पुष्ययोगं जानाति पुष्येण योजयतीत्येतत्साधके 'पुष्ययोगे ज्ञि' इति वचने भाष्यकृत्कृत-

'यथालक्षणमप्रयुक्ते' इत्युक्तम्' 'उत्पुच्छयतेरप्रत्ययः' इत्यनेन पुतच्छादयतीति विग्रहे पृषोदरादित्वात्पुतशब्दान्तलोपे छदधातोर्डप्रत्यये निष्पन्नो यः पुच्छशब्दस्तस्मादाख्याने णिजिति दर्शितम् । तन्निमित्तकादेशेति । 'हनश्च वधः' इत्यनेनाप्सन्नियोगेन वधादेशस्य विधानात्सन्नियोगशिष्टत्वमात्रेण वधादेशस्य कृन्निमित्तत्त्वम् ।

इदं चिन्त्यमिति—वक्ष्यमाणं चिन्तनीयम्, दृष्टान्ते हलङ्यादिलोपे यस्येति लोपे जातेऽपि प्रत्ययलक्षणेन यथा निमित्ताविनाशबुद्धिस्तथा कृल्लुक्यपि सन्नियोगावि-नाशबुध्या अकृतेति परिभाषायाः प्रवृत्तिर्न भविष्यतीत्यभिहितम् । पूर्वं कार्यं एवेति । लुप्तप्रत्ययपरतो यः पूर्वस्तत्प्रकृतिभूतो लब्धाङ्गसंज्ञकस्तदुद्देश्यकं कार्यमाङ्गमनाङ्गं वा तस्मिन्कर्तव्ये तेन प्रत्ययलक्षणस्य प्रतिषेधादिति भावः । यद्यप्यत्र जायमानं कार्यम्पूर्वस्यैव तथापि प्रत्ययसन्नियोगेन तद्विधानत्वतु तस्मिन्परतः पूर्वस्येति तत्रोक्त-मिति तस्य निषेधस्यायमविषयः । तस्मात्—मूलोक्तज्ञापकासम्भवात् । 'पुष्ययोगे ज्ञि' इति ज्ञीति सम्पदादिक्विबन्ताज्ज्ञावभिधायकान् ज्ञौ रूपम् । यद्यपि 'नक्षत्रयोगे ज्ञि' इति वार्तिके पाठः तथापि तत्सङ्ग्राहकवाक्यमिति तस्माल्लक्ष्यसंस्कारकवाक्यमेतादृश-कल्पनीयमित्याशयेनैवमुक्तम् । नक्षत्रवाचिशब्दपूर्वपदकयोगशब्दान्तात्प्रातिपदिकाज्जा-नात्यर्थे णिच्, कृल्लुक्, प्रकृतिप्रत्यापत्तिः, प्रकृतिवच्च कारकमिति तदर्थः । अत्र

नस्यादेशा भवन्तीत्यङ्गस्य न भविष्यति । यथैवमुत्पुच्छयतेरप्रत्यये उत्पुडिति प्राप्नोति उत्पुदिति चेष्यते, तथा वान्छयतेरप्रत्यये वान्, वांछौ, वांछः इति न सिध्यति, यथालक्षणमप्रयुक्तेरित्युक्तम् ।

१ 'राजा' इत्यत्र सुलोपे, 'ऐनेयः' इत्यत्र 'यस्येति च' इतीकारलोपे जातेऽपि प्रत्ययलक्षणेन निमित्तसत्त्वमेवेति अकृतपरिभाषाया अप्राप्त्या दीर्घनकारयोर्यथा निवृत्तिर्न भवति, तथा 'कंसं घातयति, इत्यत्रापि कृत्प्रत्ययस्य लुक्यपि प्रत्ययलक्षणेन निमित्तसत्त्वात् परिभाषया वधादेशनिवृत्तिर्न स्या-दित्यनित्यत्वे प्रकृतिप्रत्ययापत्तिर्ज्ञापिका न स्यात् । न च न लुमतेति निषेधेन प्रत्ययलक्षणाभावः, वधादे-शस्य अप्प्रत्ययसन्नियोगशिष्टत्वेऽपि परत्वेन कृत्प्रत्ययनिमित्तकत्वाभावेन प्रत्यये परे कार्ये एव प्रवर्तमानस्य न लुमतेति निषेधस्य विषयाभावात् । अत एव 'राजपुरुषः' इत्यत्र नलोपः सिध्यति इत्याह—चिन्त्यमिति ।

२ 'हेतुमति' [ पा० सू० ३–१–२६ ] इति सूत्रे भाष्ये 'नक्षत्रयोगे ज्ञि' नक्षत्रयोगे जानात्यर्थे कृदन्ताण्णिण् वक्तव्यः, कृल्लुक्, प्रकृतिप्रत्ययापत्तिः, प्रकृतिवच्च कारकं भवतीति वक्तव्यम् । पुष्ययोगं

भाष्यकारोक्त्यैव व्यवस्थेति भावः।

यत्तु प्राचोक्तम्—बहुव्रीहौ सर्वादेः सर्वनामता न स्यात्, प्रियसर्वाय। सूत्रकारमते बहुव्रीहौ न सर्वनामता। भाष्यकारमते गौणत्वमात्रे। 'त्वत्कपितृको' 'मत्कपितृक' इत्यत्र समासावयवयोर्युष्म-

---

प्रकृति प्रत्यापत्त्यनुवृत्तिर्ज्ञापिका। तत्र हि 'चजोः' इति घिति परतः कुत्वमिति। भाष्यकारोक्त्येति।

'अकृत्स्वरौ तु कर्त्तव्यौ प्रत्यङ्गं मुक्तसंशयम्'।

इति च तदुक्तिः। एतदेवाभिप्रेत्य 'घिन्विकृण्व्योर च' इति सूत्रे किमर्थमत्वं विधीयते, वलोप एवास्त्वित्याशङ्क्यात्वे ऽल्लोपे तस्य स्थानिवत्त्वेन गुणाभावाय तत्। न च वलोपे ऽपि 'न धातु' इति गुणनिषेधः सिद्ध इति वाच्यम्, तत्प्रत्याख्यानपक्षे गुणप्राप्तेरित्युक्तम्। अनेन सूत्रमतात् प्रत्याख्यानवादिमतं प्रबलमिति प्रत्याख्यानवादिसंमतलक्ष्यमेव कथंचित्सूत्रमतेऽपि साध्यं न तु विपरीतं सति सम्भवे। अन्यथा सूत्रमप्रमाणमेवेति च, प्रत्याख्यानं सूत्रसंमतमिति च ध्वनितम्। सूत्रकृत्खण्डितप्राचीनऋषिवाक्यानामप्रामाण्यवत्सूत्रकारवचः खण्डनप्रवृत्तभाष्यवार्त्तिकवचनैस्तदंशे सूत्रकारवचसो ऽप्यप्रामाण्यकल्पनैवोचितेति दिक्।

---

कुत्वनिमित्तस्य विनाशोन्मुखत्वात्कुत्वं न स्यात् एतदेवाह—तत्र हीति। अत्र घिति परे कुत्वस्य विधानमिति 'न लुमता' इति निषेधस्य प्राप्तिरस्तीति भावः। प्रत्यङ्गमिति। प्रत्यवयवमित्यर्थः, स्वरः, 'स्वाङ्गशिटाम्' इति विहितः। मुक्तसंशयमिति क्रियाविशेषणघटितपाठान्तरम्। तदुक्तिः=भाष्यकारोक्तिः, स्मृतिद्वयप्रामाण्याद्विकल्पस्तु नेत्याशयेनाह—एतदेवेति। 'यथोत्तरम्मुनीनाम्प्रामाण्यम्' एव। तदिति उत्कमत्वविधानमित्यर्थः। तत्प्रत्याख्याने = न धात्विति सूत्रस्य प्रत्याख्याने। अनेन= उक्तरीत्याऽत्वविधानप्रयोजनकथनेन, कल्पनैवेति। एतेन विकल्पकल्पनानिरासः। इष्टार्थत्वं न स्याद् इष्टार्थत्वन्त्वस्तु न तत्र विवादः। अत एव तत्र तत्रापाणिनीयन्तु भवतीति भाष्यकारोक्तिः सङ्गच्छते। एवञ्च 'न बहुव्रीहौ' इति सूत्रमुपसर्जनप्रतिषेधानुवादकमेवेत्याशयेनाह—दिगिति।

---

जानाति पुष्येण योजयति, मघाभिर्योजयति इत्युक्तम्। अत्र प्रकृतिप्रत्ययापत्तिरित्यस्यानुवृत्त्या 'चजोः' इति कुत्वं न भवति तस्य चानुवृत्तिं विनाऽपि चजोरित्यस्य परनिमित्तकतया न लुमतेत्यस्य प्रवृत्त्या प्रत्ययलक्षणाभावेन कुत्वाभावस्य स्वत एव सिद्धया तदनुवृत्तिर्व्यर्था सती परिभाषाया अनित्यत्वे ज्ञापिका स्यादिति भावः।

दस्मदोः सर्वनामत्वादनङ्कार्यत्वेनाकच्स्यात् स मा भूत्, कमत्यय एव स्यादित्येतदर्थमिदं सूत्रमिति न्यासकृन्मतमिति, अत्रेदं वक्तव्यम् :—किं बहुव्रीहौ सञ्ज्ञा नेति विवक्षितम् ? उत तदवयवानां सर्वादीनामिति, नाद्यः, समासावयवयोर्युष्मदस्मदोरित्युत्तरग्रन्थविरोधात्, समुदाये प्राप्तिविरहाच्च। न च तदन्तविधिना प्राप्तिः, बहुव्रीह्यवयवानां उपसर्जनतया सर्वादिबहिर्भावेन तदन्ते प्राप्तेर्दूरापास्तत्वात्। अत एव न द्वितीयोऽपि। न चोपसर्जनानां पाठात् पर्युदासो वार्तिककृतोक्तो न तु सूत्रारूढ इति वाच्यम्, अन्वर्थसञ्ज्ञाबलेन सूत्राक्षरैरेव तल्लाभात्। एतेन सूत्रकारमते बहुव्रीहौ न सर्वनामतेत्यपि परास्तम्। बहुव्रीहावेवेति तस्यार्थः। भाष्यकारमते इत्याद्यपि न, विशेषोपादानेन हि सूत्रकार-वार्तिककारयोर्मतमन्यादृशमिति प्रतीयते, देवदत्तो वामेनाक्ष्णा पश्यतीत्युक्ते दक्षिणेन न पश्यतीतिवत्, तच्च न, सूत्रवार्त्तिकमतेऽपि गौणपर्युदासस्येष्टत्वात्।

---

किमिति। बहुव्रीहौ नेत्यस्य द्वेधा व्याख्यानसम्भवादिति भावः। उत्तरग्रन्थेति। न्यासकारस्यापि सूत्रलभ्यार्थप्रतिपादने एव तात्पर्यादिति भावः। प्राप्तेरिति। प्राप्तेरभावे निषेधो व्यर्थ एवेति भावः। अत एवेति। अवयवानामुपसर्जनत्वेन सर्वादिबहिर्भावादेवेत्यर्थः। अन्वर्थेति। सर्वेषां नामेत्येवंरूपेत्यर्थः। तस्यार्थं इति। सोऽनुचितोऽन्वर्थसञ्ज्ञया गौणमात्रे तदप्रवृत्तेस्तत्सम्मतत्वादिति शेषः। सूत्रेति। तन्मतेऽन्वर्थत्वेन, वार्त्तिकमते

---

द्वेधेति 'न बहुव्रीहौ' इति सूत्रे सर्वादीनीत्यनुवृत्त्या बहुव्रीहौ यानि सर्वादीनि तेषामिति, तेषामन्येषाञ्च यो बहुव्रीहिस्तस्य वा सर्वनामसंज्ञा नेत्येवं द्वेधेत्यर्थः। 'ननूत्तरग्रन्थस्य मतान्तराभिप्रायकत्वात्तद्विरोधो न क्षतिकरो ऽत आह—न्यासकारस्यापीति। प्रतिपादने एवेति। स्वन्मत इति शेषः, भवन्मतेऽवयवस्यैव निषेधे तात्पर्यम्। न्यासकृतः समासावयवयोर्युष्मदस्मदोरिति दर्शनादिति वक्तव्यम्। एवञ्चाद्यपक्षे तद्विरोधः स्पष्ट एव। तस्यार्थं इत्यस्यानन्तरं हेत्वनुपादानाकाङ्क्षाशान्तिरत आह—सोऽनुचित इत्यादि। तत्सम्मतत्वात् = सूत्रकारसम्मतत्वात्, 'ननु 'संज्ञोपसर्जनप्रतिषेधः' इति वार्तिककृतोक्तम् तु सूत्रकृतेति सूत्रवार्तिकेत्यनुपपन्नमत आह—तन्मत इति। सूत्रकृन्मत इत्यर्थः। न्यासकृतापीत्यादि मूलोक्तोऽन्यदीयो ग्रन्थ इति

यत्तु—त्वत्कपितृक इत्यादि तदित्थं प्राचा व्याख्यातम्—त्वं पिता यस्य, अहं पिता यस्येति विगृह्य बहुव्रीहिसमासे कृते समासावयवयोः समासान्तःपातिनोर्युष्मदस्मदोः सर्वार्थवाचकत्वेन सर्वनामसञ्ज्ञकत्वादज्ञाताद्यर्थविवक्षायां 'अव्ययसर्वनाम्नाम्' इत्यकच्प्रसज्येत, तस्य स्मैप्रभृतीनामिवाङ्गाधिकारविहितत्वाभावेनाङ्गसञ्ज्ञानपेक्षत्वात्, ततश्च त्वकत्पितृक इत्याद्यनिष्टं प्रसज्येतेति। न्यासकृता ऽपि अन्वर्थसञ्ज्ञाबलादेव सञ्ज्ञानिरासे कृते ऽकज् न भविष्यतीत्याशङ्क्य समुदायो हि विशेषे वर्तते, पूर्वपदन्तु सर्वार्थताया अनपेतमेवेत्युक्तम्, तदेतत्सर्वं प्रामादिकमेव। तथा हि—जहत्स्वार्थायां वृत्तौ समासावयवयोरर्थ एव नास्ति, अजहत्स्वार्थायामपि स्वार्थविशिष्टान्यपदार्थवृत्तित्वेनोपसर्जनत्वं स्पष्टमेव, एवञ्च समासान्तः पातिनोर्युष्मदस्मदोः सर्वार्थवाचकत्वेनेत्यादिग्रन्थः, समुदायो हीत्यादिन्यासग्रन्थश्च पक्षद्वये ऽपि व्याहतः। किञ्चैवं अतिसर्वायेत्यत्र स्मायादेशो दुर्वारः, अङ्गाधिकारे तदन्तग्रहणात्। त्वदुक्तरीत्या सर्वशब्दस्य सर्वार्थतान-

---

तु वचनेनेत्यर्थः। स्वोक्तार्थे न्यासकृद्ग्रन्थसंवादमाह—न्यासकृतापीति। अनपेतमेवेति। समुदाये एकार्थीभावाङ्गीकारेण समुदायस्यान्यपदार्थोपसर्जनत्वे ऽप्यवयवस्य तत्त्वे मानाभाव इत्यभिमानः। व्याहत इति। अजहत्स्वार्थायामपि अवयवार्थस्यान्यपदार्थविशेषणतयैवोपस्थित्योपसर्जनत्वाक्षतेरितरार्थविशेषणत्वेनोपस्थितिविषयत्वस्यैवोपसर्जनत्वपदार्थत्वादिति भावः। सर्वशब्दस्येति। उत्तरपदभूतस्यापीत्यर्थः। युक्तिमदिति। न चोत्तरपदे लक्षणा

---

भ्रमनिवारणायाह—स्वोक्तेति। अत्र स्वशब्दार्थो व्याख्याता प्रसादकारः। तत्त्वे= उपसर्जनत्वे। अभिमान इति। एतद्बीजमग्रे स्फुटम्। यदुक्तम्प्रागभिमान इति तद्बीजम्प्रकटयन्व्याघातमुपपादयति—अजहदित्यादिना। विशेषणतयैवेति। परार्थाऽभिधानं वृत्तिरिति सिद्धान्तादिति भावः। पूर्वोक्तमुपसर्जनत्वं बहुव्रीहावेवेति सामान्यत उपसर्जनत्वस्य स्वरूपमाह—इतरार्थेति। 'नन्ववर्णान्तादङ्गात्परस्य सर्वनाम्नो विहितस्य ङे: स्मै इत्यर्थाङ्गीकाराच्च किञ्चेत्यादिनोक्तदोष इत्यत आह—मूले नहीति। नचेति। तथा च तदीयग्रन्थे पूर्वपदग्रहणं व्यर्थम्, विनिगमकाभावेनोभयपदयोस्तुल्यत्वादिति भावः। खण्डनकृदुक्तं विनिगमकं खण्डयति—न चेत्यादिना। विशेषणेति। सुन्दर-

पायात्। न हि पूर्वपदे सर्वार्थता उत्तरपदे तु नेति युक्तिमत्। अपि चैवं गौणत्वे सर्वादीनां सर्वार्थवाचकत्वं नास्तीति स्वोक्त्या सह विरोधः स्यादिति यत्किञ्चिदेतत्।

यदपि व्याचख्युः—त्वं पिता यस्येत्यादौ विग्रहवाक्ये प्राप्ता सञ्ज्ञा निषिध्यते इति, तदपि न, विग्रहवाक्यं हि लौकिकमलौकिकं वा विवक्षितम्? नाद्यः, प्रक्रियावाक्येऽयं निषेधो न तु लौकिक इति कैयटग्रन्थविरोधात्, प्रकृतसन्दर्भगतपूर्वापरस्वग्रन्थविरोधाच्च। न द्वितीयः, तस्य युष्मद् सु पितृ सु इत्याकारकत्वेन त्वं पितेत्याकारकत्वायोगात्।

यदपि व्याचख्युः—नन्वतिसर्वादौ सञ्ज्ञा न प्रवर्तते, त्वत्कपितृकादौ तु प्रवर्तत इत्यत्र किं विनिगमकन्तत्राह—अनङ्गकार्यत्वेनेति। अङ्गशब्दः समुदायपरः। तेनातिसर्व इत्यत्राङ्गस्य सञ्ज्ञाऽपेक्षिता सर्व-

---

पूर्वपदं तात्पर्यग्राहकमिति मते तद्युक्तिमदिति वाच्यम्, तन्न मते हि पूर्वपदं निरर्थकं स्वार्थप्रतिपादकं वा? नाद्यः, नैरर्थक्येन सर्वार्थकत्वाभावादेवाप्राप्तेः। नान्त्यः, पूर्वपदार्थे विशेषणान्वयापत्तेः, विनिगमनाविरहेण पदद्वयेऽपि लक्षणौचित्याच्च, एकार्थीभाववादिभिस्तथा वक्तुमशक्यत्वाच्च। एवञ्च तद्घटकावयवानां सर्वनामत्वाभाव एवोचित इति दिक्। स्वोक्त्येति। एतत्प्रकरणस्थयेत्यर्थः।

---

दिविशेषणान्वयापत्तेरित्यर्थः। पक्षद्वयसाधारणन्दोषमाह—विनीति। 'ननु प्रत्ययानां सन्निहितपदार्थगतस्वार्थबोधकत्वमिति व्युत्पत्तिरुत्तरपदस्य लक्षणा साधिकास्त्वित्यत आह—एकार्थीभावेति। तन्मते समुदायेन शक्त्यैव अवरसम्मतलक्ष्यार्थस्य प्रतिपादनादिति भावः। तद्घटकेति। बहुव्रीहिघटकेत्यर्थः। उचित इति। तथा च, बहुव्रीहाविति व्यर्थमेवेत्याह—दिगिति। स्वोक्तिर्न प्रकरणान्तरस्थेति विस्मृतिशङ्कापि न कार्येत्याह—एतत्प्रकरणेति।

---

१ यत्तु—'अन्यथा समुदायोत्तरविभक्तेः पूर्वपदप्रकृतिकत्वाभावेन तल्लक्षितार्थस्य विभक्त्यर्थेऽनन्वयापत्तिरिति भावः' इति। तेन पदद्वये लक्षणायां स दोषो नेति प्रतीयते, तन्न, पदद्वये लक्षणेत्यस्य यथा 'उत्तरपदे लक्षणा पूर्वपदं तात्पर्यग्राहकम्' इत्युच्यते तथा पूर्वपदे लक्षणा उत्तरपदं तात्पर्यग्राहकम्, इत्यपि वक्तुं शक्यमित्यर्थ एव, न तु पदद्वयात्मकसमुदाये लक्षणेति, तत्र तन्मते शक्तेरभावात्। तथा च पदद्वये लक्षणायामनन्वयापत्तिरूपो दोषो नेति चिन्त्यमेव।

नाम्नोऽङ्गात् स्मायादिविधानादवयवमात्रस्य सत्यपि सर्वनामत्वे दोषाभावात्। समुदाये च समुदायार्थं प्रति सर्वादेरुपसर्जनत्वात् तदन्तस्य सञ्ज्ञा न भवतीति युक्तम्, इह तु अवयवमात्रस्य सा चिकीर्षिता न समुदायस्य, अवयवश्च स्वार्थमात्रप्रधान इति स्यात् प्रसङ्ग इति वैषम्यमस्तीत्याशय इति, तदपि न, अङ्गाधिकारे तदन्तविधेः सर्वसम्मतत्वेनावयवमात्रे सत्यपि सर्वनामत्वे दोषो नास्तीत्युक्तेर्व्याहतत्वात्, अङ्गाधिकारपरिभाषया स्मै स्यादि इति स्वग्रन्थविरोधाच्च। अथायमाशयः—प्राक्प्रवृत्तापि सञ्ज्ञा अर्थान्तरोपसङ्क्रमे सति गतेति, तर्हि अकजपि गच्छतु। ननु कार्यकालपक्षे स्मायाद्यर्थं पुनः सञ्ज्ञाऽपेक्षिता सा च दुर्लभेत्याशय इति चेत्, अस्त्वेवम्, न त्वसौ प्रकृतग्रन्थार्थः, न्यासग्रन्थविसंवादेन इति न्यासकृन्मतमिति वाक्यशेषविरोधात्। न्यासग्रन्थस्त्वनुपदमेवोदाहरिष्यते। यदपि व्याचख्युः—अङ्गमप्रधानं बाध्यं तद्विरुद्धमनङ्गं बाधकमित्यर्थः। तथा च कप्रत्ययापवादत्वादकच् स्यादित्यर्थ इति, तदपि क्लिष्टं व्यर्थं च,

---

स्वग्रन्थेति। तैरप्यलौकिक एवं निषेधस्योक्तेरिति भावः।

अर्थान्तरोपसङ्क्रमे सति गतेति। तेनातिसर्वायेत्यादौ न दोषः, पुनः सञ्ज्ञा तु दुर्लभा, सञ्ज्ञोपसर्जनानां निषेधात्। पाठात्पर्युदासेन तदन्तग्रहणेनापि न संज्ञा। अर्थान्तरसङ्क्रमात्पूर्वन्तु स्मैभावस्य न प्रवृत्तिः। अकच्प्रवृत्तिस्तु ततः प्रागस्त्येवेति तन्निवृत्तये इदं सूत्रमित्यभिमानः। गच्छत्विति। निमित्तापायपरिभाषयेति भावः। दुर्लभेति। उपसर्जननिषेधादिति भावः। इत्यर्थं

---

पुनः प्रसादकृदुक्तिं खण्डयति मूले—यदपीति। तैरप्येति। प्रकाशकृद्भिरपीत्यर्थः। पुनरिति। समाससंज्ञोत्तरकालमित्यर्थः। न संज्ञेति = न संज्ञाकार्यमित्यर्थः। समुदायघटकस्य तदन्तस्य चेति शेषः। न प्रवृत्तिरिति। लुग्विषयतायाः सत्त्वादिति शेषः। अभिमानपदोपादानसूचितामरुचिम्प्रकटयति- निमित्तापायेति। एतेन यत्सूत्रारम्भस्य फलं 'स्वत्कपितृकः' इत्यादिरूपसिद्धिरिति सा अधुनापि जातेति सूत्रवैयर्थ्यमेवेति भावः। प्राक् प्रवृत्ता संज्ञा गतेति न ब्रूमो येन भवदुक्ता प्रतिबन्दिः स्यादित्याशयेन शङ्कते मूले—'ननु कार्यकालेति। दुर्लभेति। अतिसर्वायेत्यादाविति शेषः। मूले—विरोधादिति। अनङ्गकार्यत्वेनेति हेतूक्त्याऽऽनर्थक्यापत्तेश्चेत्यपि

न्यासग्रन्थासम्मतञ्च । तथा हि—त्वत्कपितृको मत्कपितृक इति वृत्तिग्रन्थं व्याख्याय न्यासकार उज्जगाद—ननु च अन्वर्थसञ्ज्ञाकरणादेवात्र सञ्ज्ञानिरासे कृतेऽकज् न भविष्यति । न ह्यत्र सर्वार्थता सम्भवति, विशेषविषयत्वात्, नैतदस्ति, समुदायो हि विशेषे वर्तते पूर्वपदं तु सर्वार्थताया अनपेतमेव, भवतु तर्हि अनयोरनन्तरयोरेतत्सूत्रविषयता, प्रियविश्वायेत्यादेस्तु नोपपद्यते, न हि प्रियविश्वादयः सर्वेषां नामानि, नापि तदवयवभूतानां विश्वादिशब्दानां किञ्चित्सर्वनामकार्यमुपपद्यते, स्मैप्रभृतीनामङ्गकार्यत्वात् । विश्वादिशब्दानामनङ्गत्वात् । एवं मन्यते—त्वत्कपितृको मत्कपितृक इत्यत्राकज्मा भूद् इत्येतदर्थं तावदेतदारब्धव्यम्, प्रियविश्वायेत्यादावपि विस्पष्टार्थं भविष्यतीति । अनेन हि न्यासग्रन्थेनाङ्गसञ्ज्ञानपेक्षत्वमेवार्थो लभ्यते, स च स्वोत्प्रेक्षितव्याख्यायां दूरोत्सारित एव ।

यदपि व्याचख्युः—यद्यपि सूत्रवार्तिककृतोरप्येतन्मतं तथाऽपि न्यासकृता विवृतत्वाद् न्यासकृन्मतमित्युक्तमिति, तदपि स्थवीयः, वार्तिककृता अस्यार्थस्यास्पृष्टत्वात्, न्यासकृता समासे कृते सतीत्यादिवदता त्वदुक्तार्थस्य दूरत्यक्तत्वेन तद्विवृतत्वाभावाच्च ।

---

इति । अनङ्गकार्यत्वेनेत्यस्यार्थ इति भावः । क्लिष्टमिति । तत्त्वं तु स्पष्टमेव । न्यासग्रन्थासम्मतिमुपपादयन्ननङ्गकार्यत्वेनेत्यस्य वैयर्थ्यमुपपादयति—तथा हीति । विशेषविषयत्वादिति । अन्यपदार्थविशेषणत्वादित्यर्थः । समुदायो हीति । तस्यैव तद्विशेषणत्वमित्यभिमानः । अनन्तरयोरिति । त्वत्कपितृकमत्कपितृकयोरित्यर्थः । अङ्गसञ्ज्ञानपेक्षत्वमेवार्थ इति । एवञ्चानुपदोक्ते यदपीति पक्षे कप्रत्ययापवादत्वस्याकचि प्रसिद्धत्वादेवोक्तरीत्या तदुक्तिर्व्यर्थेति बोध्यम् ।

इत्यादि वदतेति । वृत्तिग्रन्थव्याख्यावसरे इति शेषः ।

---

बोध्यम् । तत्त्वम्=क्लिष्टत्वम् ।

विशेषविषयत्वमुपपादयति—अन्यपदार्थेति । तस्यैव । वृत्तिग्रन्थेति पूर्वोक्तरीत्या सूत्रस्यार्थद्वयमुक्त्वा प्रियविश्वायेत्याद्युदाहृत्य 'त्वत्कपितृको' मत्कपितृक' इत्यत्राकज्न भवतीति वृत्तिग्रन्थेत्यर्थः ।

यदप्याहुः—न्यासकृच्छब्देन सूत्रकार एव विवक्षित इत्यादि, तदपि न, सूत्रकारमते बहुव्रीहावित्यादिपूर्वग्रन्थेन सह विरोधात्, भाष्यकारमते त्विति ग्रन्थेन तस्य विच्छिन्नत्वाच्च ; तस्मादिह प्राचः प्रक्रियाग्रन्थास्तद्व्याख्यातृग्रन्थाश्चापातरमणीया एवेत्यास्तां तावत्।

यदि तु प्रक्रियाग्रन्थोऽपि कथञ्चिद्भाष्याविरोधेन व्याख्येय इत्याग्रहस्तर्हीत्थं व्याख्यायताम्—'ननु प्रियविश्वायेत्ति गौणतया गतार्थम्, अतो निष्कर्षमाह—सूत्रकारमत इति। बहुव्रीहाविति। चिकीर्षिते सतीति शेषः। गौणत्वमात्र इति। मात्रशब्दोऽवधारणे गौणत्वे एव न तु ततः प्राक्। तथा च सूत्रं प्रत्याख्यातमिति भावः। न्यासकृन्मतस्य तु अतिफल्गुत्वात् स्वरूपव्याक्रियैव पराक्रियेत्याशयेनाह—त्वत्कपितृक इत्यादि'। एतच्च प्राचीनतत्तद्ग्रन्थपरिशीलनशालिभिर्विभावनीयम्। प्रकृतमनुसरामः। *सञ्ज्ञाकार्यमिति*। सर्वनामसञ्ज्ञाप्रयुक्तं स्मायादिकमित्यर्थः। *अन्तर्गणकार्यमिति*। 'अद्ड्डतरादिभ्यः' 'त्यदादीनामः' 'तदोः सस्सौ' इत्यादिकमित्यर्थः। *तृतीयासमासार्थेति*। इह 'पूर्वसदृश' इति विहितः समासो गृह्यते, प्रतिपदोक्तत्वात्, न तु 'कर्तृकरणे कृता' इति, तेन त्वयका कृतमित्यत्र निषेधो न।

---

प्रतिपदोक्तत्वादिति। यदन्तत्वमादाय सर्वनामत्वप्राप्तिस्तमुच्चार्य विहितत्वाद्। वाक्यमपि तत्सम्बन्ध्येव, प्रत्यासत्तेरिति भावः। तेन करोतिद्वारा सामर्थ्यें मासेन कृताय पूर्वस्मै मासपूर्वस्मै इति समासे, तत्सम्ब-

---

ननु यत्किञ्चित्पदोपादानेन तृतीयेत्याद्युच्चारणेन विहितत्वम्प्रतिपदोक्तत्वङ्कर्तृकरण इत्यस्यापि दुर्वारमत आह-यदन्तत्वमिति। तेन त्वयकासदृशस्त्वकत्सदृश इत्यत्र निषेधो न, अनेनायं निषेधोऽपि समुदायस्येति भाष्यीयसिद्धान्तार्थो ध्वनितः। तृतीयासमासे इति सूत्रे विभाषादिगिति सूत्रात्समास इत्यनुवृत्त्यैव सिद्धे, पुनस्तत्र समास इत्यस्योपादानमसमास इति पदच्छेदाय, तेन समासभिन्नस्य समाससदृशस्य लौकिकविग्रहवाक्यस्य लाभ, इत्याशयेनाह-वाक्यमपीति। उभयोर्व्याख्यातावाह-तेनेति। इति समास इति। तृतीयातत्कृतेति सूत्रविहितसमास इत्यर्थः,

समुदायस्येति । तत्रैव द्वन्द्वशब्दस्य मुख्यत्वान्न तु द्वन्द्वे यानि-सर्वादीनीति सम्बन्धः, कारकाणां क्रिययैवान्वयात् । न च द्वन्द्वे विद्यमानानि यानीति सम्बन्धः, विद्यतिक्रियाध्याहारे गौरवात्, निषेद्धव्याया भवतिक्रियाया एव प्राधान्येन तदन्वयस्यैव न्याय्यत्वाच्च । किञ्च—त्यदादीनां द्वन्द्वो नास्ति, एकशेषेण बाधितत्वात्, ततः प्राचीनास्त्वदन्तास्तत्र काकचोर्न विशेषः, न च दक्षिणोत्तरपूर्वाणामित्यत्रेष्टमपि पुंवद्भावं निषेद्धु-मिदं किं न स्यादिति वाच्यम्, 'सर्वनाम्नो वृत्तिमात्रे' इति मात्र-ग्रहणं हि क्वचित्सर्वनामत्वेन दृष्टानां सम्प्रति सञ्ज्ञाभावेऽपि पुंवद्भा-वार्थम्, अत एव 'दक्षिणपूर्वायै' इत्यत्र सञ्ज्ञाभावेऽपि पुंवद्भावः, तस्माद् न्यायबलात् फलबलाच्च समुदायग्रहणमेवोचितम् । यद्यपि

---

न्धिनि वाक्ये च न । तत्र वाक्यस्य प्रतिपदोक्तसमाससम्बन्धिन एव ग्रहणे फलान्तरमप्याह—त्वयकेति । तृतीयासमासमात्रस्य ग्रहणे हि तदर्थे वाक्ये यत्र क्वापि स्थितस्य सर्वादेः सञ्ज्ञा नेत्यर्थेऽत्रापि स्यादिति भावः । न्याय्यत्वाच्चेति । किञ्चावयवमात्रनिषेधे 'प्रयोजनं सर्वनामाव्यय-सञ्ज्ञायाम्' इति 'येन विधिः' इति सूत्रस्थभाष्यप्रामाण्येन तदन्तस्य सञ्ज्ञायां वर्णाश्रमेतराणामिति भाष्यप्रयोगानुपपत्तिः । न ह्यत्र सर्वार्थवाचकत्वंनास्तीति वक्तुं शक्यम्, मानाभावात्, लोकव्युत्पत्तिसि-द्धस्य तस्यानेन निषेद्धुमशक्यत्वात् । नापि तस्य सर्वादिपाठो निषिध्यत इति युक्तम्, तस्याऽप्रक्रान्तत्वादविधेयत्वाच्च । न च निषेधवैयर्थ्यम्, अवयवकुत्साबोधकाकज्व्यावृत्त्या चारितार्थ्यात् ।

---

न त्वत्र पूर्वसदृशेत्यस्य प्रवृत्तिः, तस्य यत्र हेतौ तृतीया तत्र चरितार्थतया करोतिद्वारा सामर्थ्येन प्रवृत्तिरिति भावः । तत्र = सूत्रे, तयोर्मध्य इत्यर्थो वा । तदर्थे=समासार्थे । मूले यदुक्तं न्याय्यत्वादिति तद्बलस्यावयवनिषेधे फलाभावस्य किञ्चेत्यादिनोपपादनेऽपि यत्फलबलादिति तस्यानुपपादनान्न्यूनतापरिहारायाह—किञ्चावयवेति । नन्वनेन निषेधात्सर्वार्थवाचकत्वं नास्तीति ब्रूम इत्यत आह—न ह्यत्रेति । मानाभावादिति । संज्ञानिषेधेऽपि स्वीयसर्वार्थवाचकसर्वादित्वानपायादिति भावः । ननु तस्यैव निषेधः किन्न स्यादत आह लोकेति । तस्य = सर्वार्थवाचकत्वस्य । तस्य = द्वन्द्वान्तर्गतेतरशब्दस्य ।

त्वच्छब्दस्तान्त इति पक्षेऽवयवनिषेधेऽपि फलं सुवचम्। तथाऽपि

तदेव स्वनयन्नाह—फलबलाच्चेति। फलं सुवचमिति। तथा दक्षिणोत्तरपूर्वाणामित्यादावयवनिषेधेन कप्रत्यये समुदायसञ्ज्ञाभावोऽपि फलम्। द्वन्द्वावयवमात्रे सुन्दरादिविशेषणान्वयाभाववत् कुत्सादिविवक्षाया अभावः। समुदाये तद्विवक्षायान्तु समुदायोत्तरप्रत्ययेन तदुक्तेर्नावयवात्तदुत्पत्तिरिति चिन्त्यमेतत्। समुदायनिषेधे तु द्वन्द्वस्य सञ्ज्ञिनोऽधिकरणत्वविवक्षया सप्तमी बोध्या। यद्वा इयं सप्तमी प्रथमार्थे,[1] 'अकच्स्वरौ तु कर्तव्यौ प्रत्यङ्गं मुक्तसंशयम्' इति भाष्योक्तैतत्प्रकर-

तस्य = पाठस्य। यद्यपीत्यादिना = मूलोक्तप्रयोजनङ्खण्डयति। द्वन्द्वावयवेत्यादिना। मात्रपदं कार्त्स्न्ये, तेन समाहारेतरेतरयोगयोः सङ्ग्रहः। अभाव इति। उभयत्र समूहस्य विशेष्यतयाऽवयवस्य तद्विशेषणत्वेन पदार्थैकदेशत्वान्न तत्र विशेषणान्वय इति भावः। तद्विवक्षायाम् = कुत्साद्यर्थान्वयविवक्षायाम्। तदुक्तेरिति। अवयवगतकुत्सादेरप्युक्तेरित्यर्थः। एवञ्च 'उक्तार्थानामप्रयोगः' इति न्यायेनावयवेभ्यस्तदुत्पत्तिर्नेति भावः। यद्ययम्प्रकारो भवता नाद्रियते तदा भवन्मते प्रत्येकङ्कप्रत्ययोऽपि स्यात्। चिन्त्यमेतदिति। शास्त्रस्याऽल्पविषयता स्यादिति कथनेन परोक्तफलस्य स्वीकरणमिति यत्तच्चिन्त्यमित्यर्थः। त्वच्छब्दस्योक्तरीत्या तान्तस्य सत्त्वमस्तु तथापि तस्य सर्वादौ पाठे प्रमाणाभावः। बहूनामसम्मतश्च सः। एवञ्चावयवनिषेधे फलाभाव इत्यपि बोध्यम्। ननु यद्यन्द्वन्द्वात्मकसमुदायस्यैव सर्वनामसंज्ञानिषेधस्तर्हि द्वन्द्व इति सप्तम्यनुपपन्नेत्यत

1 'अकच्स्वरौ' इति वचनेन द्वन्द्वावयवानां सर्वनामप्रयुक्ताकच्स्वरस्येष्टत्वबोधनेन प्रथमार्थसप्तम्या 'द्वन्द्वः सर्वनामपदाभिन्नो न' इत्यर्थ इति लभ्यते। ननु द्वन्द्वे सर्वनामपदभेदस्य स्वत एव सत्त्वात् भेदविधानं व्यर्थमिति चेन्न, 'सर्वादीनि' इत्यत्र तदन्तविधिना सर्वाद्यन्तानि सर्वनामपदाभिन्नानि, इत्यस्यैव बोधने तत्प्राप्ताभेदस्यानेन निषेधात्। प्रायः सर्वत्र संज्ञाशास्त्रैः शब्दार्थयोस्तादात्म्यमेव बोध्यते। अत एव 'वृद्धिरादैच्' 'रामेति द्व्यक्षरं नाम मानभङ्गः पिनाकिनः' इत्यादौ वाच्यवाचकयोः सामानाधिकरण्येन प्रयोगः संगच्छते। वस्तुतस्तु 'व्यत्ययो बहुलम्', (पा. सू ३–१–८५) इत्यनेन छन्दसि एव प्रथमार्थे सप्तम्यादेर्वक्तुं शक्यतया 'आकाशे त्रिदिवे नाको लोकस्तु भुवने जने। पद्ये यशसि च श्लोकः शरे खड्गे च सायकः॥ इत्यादौ वाचकत्वादिरूपार्थे सप्तम्या बहुशो दर्शनेन 'न बहुव्रीहौ', 'द्वन्द्वे च', इत्यादावपि वाचकत्वं 'सप्तम्यर्थं स्वीकृत्य बहुव्रीहिद्वन्द्वादिनिष्ठवाच्यतानिरूपितावाचकतावत्सर्वनामपदं न, इत्यर्थः कार्य्यः। न च वाचकत्वरूपार्थे सप्तमीविधायकाभावः, वाचकत्वस्य विषयतया वैषयिकाधारे 'सप्तम्यधिकरणे च', इति सप्तमीविधानात्। लक्षणा तु न, विभक्तौ लक्षणायास्तिरस्कृतत्वात्। किञ्च शब्दार्थयोस्तादात्म्याङ्गीकारे अग्न्यादिशब्देन मुखदाहादिवारणाय विकल्पात्मकज्ञानविषयत्वरूपतादात्म्यकल्पने गौरवम्। विकल्पज्ञानन्तु 'शब्दज्ञानानुपाती वस्तुशून्यो विकल्पः', (पात. द. पा. १–सू. ९) इति पतञ्जलिनोक्तम्। वस्तुतस्तथात्वमनपेक्षमाणो योऽध्यवसायः स विकल्पः। यथा 'पुरुषस्य चैतन्यम्', अत्र भेदरूपषष्ठ्यर्थाभावेऽपि विकल्पज्ञानविषयभेदसम्बन्धे षष्ठी। वस्तुतस्तु चैतन्यस्वरूप एव पुरुषः, इति दिक्।

शास्त्रस्याल्पविषयता स्याद् न्यायश्च विरुध्येतेति भावः । सुड्प्रसङ्ग

णविषयस्मृत्यन्तरेण, तद्विषये 'न बहुव्रीहौ' इत्येतत्साहचर्येण वा एतत्प्रकरणस्थसप्तमीनिर्देशानां तदर्थकत्वौचित्यात् । किञ्च ÷ 'विभाषा जसि' इत्यनेन फलाभावादवयवनिषेधाभावे तत्साहचर्येणार्थाधिकारानुरोधेन च 'द्वन्द्वे च' इत्यस्याप्यवयवनिषेधकत्वाभावः । एतेन सप्तमीनिर्देशसामर्थ्याद्, बहुलक्ष्यसंस्कारानुरोधाच्च विद्यमानानीत्यध्याहारेण समुदायस्यावयवानां चायं निषेधः, तत्र समुदायस्य व्यपदेशिवद्भावेन निषेधः । आधाराधेयभावेऽपि व्यपदेशिवद्भावस्य 'अनद्यतने लङ्' 'तुल्यास्य' 'प्रत्ययस्थात्' इत्यादिसूत्रस्थभाष्यादौ

आह—समुदायनिषेधे त्विति । तद्विषयेति । भाष्योक्तिविषयेत्यर्थः । तदर्थकेति । प्रथमार्थकत्वेत्यर्थः । द्वन्द्वे चेत्यस्य समुदायस्य संज्ञाव्यावर्त्तकत्वमप्रकारान्तरेण साधयति—किञ्चेति । फलाभावादिति । शीभावे कर्तव्ये एव तेन विकल्पविधानं शीभावस्य च सर्वनाम्नो विहितस्य जसः स्थाने प्राप्तिरिति समुदायस्य तेन विकल्पेन संज्ञाविधाननिषेधस्य विकल्पे विधिविकल्पस्य फलितत्वेन परममूले उक्तसंज्ञा वा स्यादित्युक्तमत एवात्र निषेधाभावेनेत्युक्तिसङ्गतिरिति भावः । तत्साहचर्येणेति । विभाषा जसीत्युत्तरसूत्रसाहचर्येणेत्यर्थः । सूत्रान्तरसाहचर्यन्न व्यवस्थानियामकमित्याशयेनाह—अर्थाधिकारेति । खण्डनकृदुक्तिङ्खण्डयति—एतेनेति । 'अकच्स्वरौ तु कर्तव्यावित्युक्तम्' किञ्चेत्याद्युक्तप्रकारद्वयेनेत्यर्थः । सामर्थ्यादिति । यदि समुदायस्यैव संज्ञानिषेधोऽभिप्रेतः स्यात्तदा द्वन्द्वस्येत्येव वदेदिति भावः । विद्यमानानीति । अत्र बहुवचनं समूहावयवाभिप्रायम् । 'ननु द्वन्द्वे द्वन्द्वस्य वर्तमानत्वङ्कथम्, अभेदे आधाराधेयभावविरहादत आह—तत्रेति । तयोर्मध्ये इत्यर्थः । ननु भष्यावादौ व्यपदेशिवद्भावस्यावयविभावस्याश्रयणस्थल एव प्रसिद्धिरत आह—आधाराधेयेति । अनद्यतन इत्यादि । आद्ये—अद्योऽभुक्ष्महीत्यत्र व्यामिश्रे लुङेव यथा स्यादित्येवमर्थमनद्यतन इत्यत्र बहुव्रीहिनिर्देशः कर्तव्यः । अविद्यमानाऽद्यतनेऽनद्यतन इत्यभिधाय, यद्येवमद्यतनेऽपि लङ् प्राप्नोति न ह्यद्यतने ऽद्यतनो विद्यत इति पूर्वपक्षे अद्यतनेऽप्यद्यतनो वर्तते कथम् । व्यपदेशिवद्भावेनेत्युक्तम्, द्वितीये आस्यशब्दस्य मुखमात्रपरत्वोपक्रमे किमास्योपादाने प्रयोजनमिति पूर्वपक्षः, सिद्धन्त्वास्ये तुल्यदेशप्रयत्नं सवर्णमिति न्यासपक्षे कृतः । ततः प्रयत्नविशेषणमास्योपादानम्, सन्ति हि आस्याद्बाह्याः प्रयत्नास्ते हापिता भवन्ति, इति समाधाने एकमपि व्यपदेशो न प्रकल्पते, आस्ये येषां तुल्यो देश इति व्यपदेशिवद्भावेन व्यपदेशो भविष्यतीत्युक्तम् । तृतीये कादित्यत्र सङ्घातग्रहणं वर्णग्रहणं वेति विचारे सङ्घातग्रहणमिति पक्षे एतिकेति न सिध्यतीति पूर्वपक्षे वचनसामर्थ्याद्भविष्यतीति

इति। वर्णाश्रमेतराणामित्यादाविति भावः। न च निषेधसामर्थ्यम्, अनाङ्गस्य त्रतसिलादेर्व्यावृत्त्या चरितार्थत्वात्।

*जसाधारमिति*। यद्यपि शीभावेन जस् अपह्रियते, तथाऽपि औपचारिकमाधारत्वं बोद्धव्यम्। यद्वा—जसः, इः जसिः, तस्मिन्, सौत्रः सप्तम्या लुक्, इत्यर्थतो व्याचष्टे—जसाधारमिति।

*'जराया जरसन्यतरस्याम्'*। *विभक्ताविति*। एतच्च—'अष्टन आ विभक्तौ' इत्यतोऽनुवर्तते। तेन जराया इदं जारमित्यादौ नातिव्याप्तिरिति भावः। *पदेति*। पदमङ्गं च विशेष्यम्, विशेषणेन च तदन्तविधिरिति भावः। *तदनुसारिभिरिति*। इनातोः पूर्वविप्रतिषेध एकसूत्रोपात्तत्वात् स्यादेशोऽपि ग्रहीतुमुचित इति तेषामाशयः। अत एव—

---

स्पष्टत्वात्। तत्फलं च वर्णाश्रमेतराणामित्यादावयवसर्वनामत्वप्रयुक्तोऽपि नाकजित्यपास्तम्। इतरकशब्देन समासेऽतिभवकानित्यादाविव तच्छ्रवणस्य दुर्वारत्वेन तन्निषेधे फलाभावाच्चेति दिक्। व्यावृत्त्येति। समुदायात्प्राप्तस्येति शेषः।

यद्यपीति। जसीत्याधारसप्तमीति भावः। जस इरिति। इकारेण ईकारग्रहणं बोध्यम्।

---

परेणोक्ते अस्ति वचने प्रयोजनम्, किम्? कारिकेति अत्राप्येकादेशे व्यपवर्गाभावान्न प्राप्नोति, अन्तादिवत्त्वावेन व्यपवर्ग इत्युक्तम्। तत्फलमिति। तादृशव्याख्यानफलमित्यर्थः। अपिः=समुदायप्रयुक्तत्वपरामर्शकः। अवयवस्य सर्वनामसंज्ञानिषेधो यादृशरूपव्यावृत्तये भवता स्वीक्रियते, तादृशरूपन्तादृशव्याख्यानेऽपि दुर्वारमिति भवदीयन्तादृशव्याख्यानन्निष्फलमित्याह—इतरकशब्द इति। एतेनावयवस्य संज्ञानिषेधे प्रमाणाभावमाशङ्क्याकचि न भवतीति भाष्योक्तिरेव तत्र मानमिति कथनं परास्तम्। तस्य भाष्यस्य समुदायस्य संज्ञानिषेधे फलप्रदर्शनपरत्वात्। दिगर्थस्तु न बहुव्रीहावितिसूत्रवद् द्वन्द्वे चेति सूत्रमप्युपसर्जनप्रतिषेधानुवादकमेव। इतरेतरयोगद्वन्द्वेऽप्युद्भूतावयवभेदसमूहस्य विशेष्यत्वसिद्धान्तादिति। समुदायादिति। ज्ञापिताद्वाचनिकाद्वा तदन्तविधेरित्यादिः।

आधारसप्तमीति। आधारवाचकसप्तमीत्यर्थः। तथाच विद्यमानयोरेव पदार्थयोराधाराधेयभावस्य प्रसिद्धतया जसाधारमित्यनुपपन्नमिति भावः। ह्रस्वेकारात्मकसर्वनामकार्यस्याप्रसिद्धेराह—इकारेणेति।

वीतजन्मजरसः परं शुचि ब्रह्मणः पदमुपैतुमिच्छताम्।

इति भारविप्रयोगमसमञ्जसमिति मत्वा 'वीतजन्मरजसः' इति पठनीयमिति तैरुक्तम्। *एतच्चेति*। भाष्यकृता हि 'टाङसि' इति सूत्रे इनात्तौ प्रत्याख्याय नादेशमदादेशं च विधाय नादेशे परे एत्वं योगविभागेन साधितम्—'बहुवचने झल्येत्' 'ओसि च' तत 'आङि' आङि च परे ऽत एत्वं स्यात्, रामेण। तत 'आपः सम्बुद्धौ च' एकारः स्यात् सम्बुद्धौ 'आङि' 'ओसि' च। न चैवमनेनेत्यत्र हलि लोपः स्यादिति वाच्यम्, अनादेशस्य नकारे परे विशिष्य विधानात्। तथा हि—'अनापि' नकारे आपि च परेऽन् स्यादित्यर्थः। सूत्रे 'अ' इति नान्तस्य नपुंसकनिर्देशः। न च ङसेरदादेशे कृते पररूपं स्यादिति वाच्यम्, अकारोच्चारणसामर्थ्याद्दीर्घसम्भवादिति। तथा च 'जराया जरसन्यतरस्याम्' इति सूत्रे उक्तम्—गोनर्दीयस्त्वाह—अतिजरैरिति भवितव्यं सन्निपातपरिभाषयेति। एवञ्च पूर्वविप्रतिषेधेनेत्यादि सर्वं भाष्यविरुद्धमित्यर्थः॥

*'पद्दन्नो'*। अत्र शस्प्रभृतयो निमित्ततयोपात्ताः। ते च पदाद्यादेशानुरूपान् प्रकृतिविशेषानाक्षिपन्तीत्याह—*पाददन्तेति*। यद्यपि

---

प्रत्याख्यायेति। प्रत्याख्यानेन चेदं ध्वन्यते—वक्ष्यमाणक्लेशपरिहारार्थ एवेकारो न तु फलान्तरेऽभिनिवेष्टव्यमिति। आदादेशे त्वदिति च्छेद एव सूत्रतात्पर्यमिति॥

ते चेति। ये निमित्ततयोपात्तास्ते शस्प्रभृतय इत्यर्थः। अनुरूपानिति। स्वार्थबोधनसमर्थान्स्वसदृशवर्णवतश्चेत्यर्थः। वस्तुतो 'वा शोकष्यञ्' इति

---

ननु भाष्यकृतेकारस्य प्रत्याख्यानमपि सूत्रकाररीत्या वृत्त्युक्तरूपमस्त्वित्यत आह—प्रत्याख्यानेनेति। वक्ष्यमाणः—योगविभागादिरूपः। एतेन 'यथोत्तरम्मुनीनाम्प्रामाण्याद्भाष्यकारसम्मतलक्ष्यातिरिक्तस्य रूपस्यासाधुत्वमिति ध्वनितम्।

मूले—अत्र शस्प्रभृतय इत्यादिना स्थानिलाभोपाय उक्तस्तत्र वाक्यभेदेन ते चेत्यादिना स्थानिलाभप्रदर्शनमधिकमेकवाक्यतयाऽप्युपपादनस्य कर्तुं शक्यत्वादेव चैवं कथनं यत्तदोर्नित्यसम्बन्धप्रदर्शनार्थमेवेत्याशयेनाह—ये निमित्तेति। आनुरूप्यप्रयोजकधर्मन्दर्शयति—स्वार्थेत्यादिना। अर्थविशिष्टस्य शब्दस्यात्र शास्त्रे कार्यित्वे

'शीर्षश्छन्दसि' इत्यतोऽत्र 'छन्दसि' इत्यनुवर्तते तथाऽपि भाषायामपि क्वचिद्भवति 'मासश्छन्दसि' इति वार्तिके छन्दोग्रहणाद् ज्ञापकाद् इति वक्ष्यते। *प्रामादिकमिति*। तथा हि—'आस्नो वृकस्य वर्तिकामभीके' इति मन्त्रे मुखादित्यर्थः, औचित्यात्। 'वृकस्य चिद्वर्तिकामन्तरास्यात्' इति मन्त्रान्तरसंवादाच्च। एवं हव्या जुह्वान आसनि, आसन्यं प्राणमूचुरित्यादावपि। व्याख्यातं च तथैव वेदभाष्येषु। अत एव हरदत्तेनापि काशिकायाः प्रामादिकत्वमाविष्कृतमिति ध्येयम्।

*'अल्लोपोऽनः'*। अत्र प्राञ्चः—अन्नन्तस्य भस्याङ्गस्याकारस्य लोपः स्यादिति। तथा सति तक्ष्णा इत्यादौ तकाराकारस्यापि लोपः स्यात्। भस्याङ्गस्यानोऽकारस्य इति व्याख्याने तु 'अनसा' 'मनसा' इत्यादौ स्यात्। तत्रावृत्त्यादिना ऽन्नन्तस्य भस्यानोऽकारस्येति व्याख्यानेऽपि अनस्तक्ष्णेत्यादौ अतिव्याप्तिरेवातो व्याचष्टे—

वव्यवस्थार्थमेवेति बोध्यम्। अनुवर्त्तते इति। अस्येति प्राञ्च इति शेषः। ज्ञापकादिति। तन्निवृत्तेरिति भावः। अत एव भाष्ये तदनुवृत्तिर्नोक्ता।

नाश्रयणादत्रार्थोपादानम्। चरणादिशब्दव्यावृत्तये स्वसदृशेति। अनेकधर्मस्य सादृश्यप्रयोजकस्य सम्भवे तत्त्यागोऽनुचित इति भावः। नच पदाद्यादेशानां वैकल्पिकतया चरणशब्दस्य पदादेशेऽपि पक्षे चरणशब्दस्य शसादौ प्रयोगः सिद्ध एवेति स्वसदृशवर्णवत इति व्यर्थमिति वाच्यम्, 'पदङ्घ्रिश्चरणोऽस्त्रियाम्' इति कोशाच्चरणशब्दस्य नपुंसकत्वमप्यस्तीति यथायथपदादेशश्चरणशब्दस्यापि स्यात्तदा 'तानि पदि पूजयेति प्रयोगस्याप्यापत्तिरिति स्वसदृशेत्यस्यावश्यकत्वात्। किञ्चोदकशब्दस्येवाप्शब्दस्याप्युदन्नादेशे स्त्रीलिङ्गत्वस्यापि न सम्भवेनास्मान्नान्तलक्षणङीबापत्तिरपि स्यात्। ननु स्वमते छन्दसीत्यस्यानुवृत्तिर्नास्तीत्यनुवर्त्तत इत्यनुपपन्नमत—आह अस्येतीति। अत्र स्यान्तः पृथक्पदम्। अत एव=छन्दोग्रहणवैयर्थ्यापत्तिदोषादेव।

१ न हि पादादीनां स्थाने पदादय आदेशा अनेन विधीयन्ते किन्तु द्विविधा हि शब्दाः पादादयः पदादयश्च। तत्र प्रयोगनियामकमिदम्। तेन शसादिषु पादादेः पदादेश्च प्रयोगः। अन्यत्र पादादेरेव। नचोभयोः प्रयोगश्चेत्तदा शसादिष्वेवेति नियमेन। अन्यत्रैकस्य प्रयोग इति लभ्यते तथा चान्यत्र पदादेरेव प्रयोगोऽस्तु न पादादेरिति वैपरीत्यमेव कुतोनेति वाच्यम्, 'हिमकाषिहतिषु च' (पा० सू० ६-३-५४) इत्यादिना पच्छब्दस्य प्रयोगविधानेनान्यत्र पादादेरेव प्रयोगात्।

अङ्गावयव इत्यादि । भस्येत्यनेनाक्षिप्तः प्रत्ययविशेषोऽङ्गञ्चेति द्वयमनो विशेषणम्, अन् तु अकारस्य, अतो नोक्तदोष इति भावः । एतच्च

तथा सतीति । प्राचीनसंमतव्याख्यादरे इत्यर्थः । भस्येत्यनेनेति । अङ्गस्येत्येतत्सहितेनेत्यर्थः । एतेन भत्वस्य वृषणोऽप्रत्ययवस्वश्वशब्दयोरपि विधानात्तेन न प्रत्ययाक्षेप इत्यपास्तम् । अङ्गञ्चेति । अधिकारलब्धमिति भावः । ननु भत्वस्य तत्सूत्रे 'यस्मात्प्रत्ययविधिः' इत्यनुवृत्त्याऽङ्गनिष्ठत्वेन तेनङ्गनिष्ठयजादिपरत्वाक्षेपेण तदवयवस्य तत्त्वालाभः । किं चानो विशेषणेऽपि 'विधौ परिभाषोपतिष्ठते नानुवादे' इति निर्दिष्टपरिभाषानुपस्थितेरनस्तक्षणेत्यादौ दोषो दुर्वार इति चेत्तत्राह—एतच्चेति । तथा च भाष्यम्–'एवं तर्हि कार्यकालं संज्ञापरिभाषं यत्र

मूले–अत्र प्राञ्च इति । काशिकाकृदादयः, तथा सतीति । एतादृशव्याख्याने सतीत्यर्थकं यदुक्तन्तस्य वैयर्थ्यन्दोषोपपादनमात्रस्योचितत्वादतआह–प्राचीनेति । एतेन यद्यपि मया तस्यादरः कृतस्तथापि तद्दुष्टमिति ध्वनितम् । एतेन = अङ्गस्येत्येतत्साहित्यकथनेन । अत एव मूले अङ्गञ्चेतीत्यभिहितम् । अङ्गस्येत्यस्याप्रकान्तत्वशङ्कानिरासायाह–अधिकारेति । एवं सति वृषणश्च इत्यत्राल्लोपाभावोऽपि द्रष्टव्यः । अत्राङ्गस्येत्यस्याधिकारलब्धत्वकथनेन यस्येत्यस्यापि तथैव लाभ इति ध्वनितम् । नन्वत्राङ्गस्य भस्येत्यस्य च यद्यप्यधिकाराल्लाभस्तथाप्यङ्गस्य भस्यान इत्येवार्थः स्यान्न तु प्रत्ययविशेषस्य ततो लाभः । आक्षेपेणेति चेत्कोऽसावाक्षेपः अनुमानं वा भसंज्ञासूत्रेणैवाक्यता वा । तत्राद्यः पक्षो न युक्तः, इत्याशयेनाशङ्कते–नन्विति । अनुमानमत्र प्रत्ययविध्युपादानम्, असर्वनामस्थानयजादिस्वादिपरं भाङ्गपदोद्देश्यत्वादित्येवङ्कार्यम् । तदवयस्य तत्त्वालाभ इति । तस्य पक्षतावच्छेदकत्वन्न तु पक्षत्वमित्रि भावः । किञ्च पदभेदेनोद्देश्यताभेदान्न पदयोर्द्वित्वेन हेतुतावच्छेदकत्वमिति भत्वादिनैव तत्त्वं वक्तव्यम् । एवञ्च वृषण्वस्वश्वयोरित्यनेन ययोर्भसंज्ञा तयोरपि भत्वावच्छिन्नोद्देश्यत्वसत्त्वेन तत्र निरुक्तसाध्याभावेन व्यभिचारः । एवं पदशब्दोद्देश्यत्वस्य राजभ्यामित्यत्रैव व्यभिचारः । न द्वितीयः, यथोद्देशपक्षे संज्ञाशास्त्रस्य पृथगेव वाक्यार्थबोधेनैकवाक्यताया लाभात्, कार्यकालपक्षे ऽपि वाक्यैकवाक्यता न पदैकवाक्यतेति निरुक्तार्थालाभाच्च । प्रत्ययस्याङ्गांशे उत्थिताकाङ्क्षतया तद्विशेषणताया न्याय्यत्वाच्चेति । परोक्तमन्विशेषणत्वमभ्युपगम्याप्याह–किञ्चेति । दोषः—अतिव्याप्तिः । भाष्यमिति । एवञ्च भाष्यन्तस्मिन् सूत्रे 'अनन्त्यविकारे ऽन्त्यसदेशस्य', इति परिभाषायाः प्रयोजनखण्डनावसरे प्रवृत्तम् । ननु प्रत्ययस्याङ्गसाकाङ्क्षत्वमेवाङ्गस्येति सूत्रभाष्ये परस्परमपेक्षं प्रत्ययसंज्ञाभावादित्यनेन दर्शितमित्यविशेषणत्वङ्कथमत्रोक्तमत

'ष्यङः सम्प्रसारणम्' इति सूत्रे भाष्ये स्पष्टम् ।

कार्यं तत्रोपस्थितमिदं द्रष्टव्यं 'भस्य' इत्युपस्थितमिदं भवति 'यचि भम्' इति तत्र यजादिपरतयाऽकारं विशेषयिष्यामः, अतो चाकारम्, यजादिस्वादिपरस्यानोऽकारस्येति'। तस्यायं भावः — कार्यकालपक्षे 'भस्य' इति श्रुते भपदार्थजिज्ञासायां 'यचि भम्' इत्युपस्थितेन शक्तिग्रहे वृत्ते एतद्वाक्यार्थबोधकाले लक्ष्यानुरोधेन तन्त्रादिन्यायाश्रयणाद् यचीत्यस्यान्विशेषणता ऽपि। विधौ परिभाषेति न्यायस्तु 'इको गुणवृद्धी' 'अचश्च' इति व्यतिरिक्ते नास्त्येव, 'उदात्तस्वरितयोर्यणः' इत्यादावुदात्तस्वरितस्थानिकयण इत्यर्थस्येष्टत्वादिति। एतच्च स्त्रीप्रत्यये इत्वप्रकरणे निरूपयिष्यामः।

यदि तु अदमुयङित्यर्थमनन्त्यविकार[2] इति परिभाषाऽऽवश्यकी

आह—तस्यायम्भाव इति। श्रुते=अधिकारतो लब्धे। जिज्ञासायामिति। एतेन भपदस्य श्रवणमात्रेण, कृत्रिमाकृत्रिमन्यायेन यस्येयं संज्ञा कृता तस्यार्थस्योपस्थितिसत्त्वात्पुनर्वाक्यार्थबोधस्य नापेक्षेति निरस्तम्। कार्यकालपक्षेण काल्यते स्वसन्निधिम्प्राप्यते इति व्युत्पत्त्या कार्यविधायकशास्त्रघटकसंज्ञाशब्दघटितं यत्संज्ञासंज्ञिभावसम्बन्धबोधकं शास्त्रं तस्य जिज्ञासां जनयित्वोपस्थितिः कार्यते इत्येव, 'भस्येत्युपस्थितमिदम्भवति' यचि भमिति भाष्येण लभ्यते। तच्छास्त्रोपस्थितिमात्रेण विधायकशास्त्रवाक्यार्थबोधासम्भव इति, पुनस्तत्र संज्ञासूत्रेण वृत्तिग्रहो भवति। स च प्रकृतोपयोग्येव शास्त्रान्तरे पुनस्तथा जिज्ञासायाम्पुनरप्येवमेव कल्पनेति, एतद्वाक्यार्थबोधकाले अन्विशेषणतापीत्यपीना ऽङ्गविशेषणतायाः समुच्चयः। एवञ्चोभयविशेषणत्वं सकृदुपस्थितिमात्रेण न सम्भवत्यतस्तन्त्रादिन्यायाश्रयणम्। अत एव भस्याङ्गस्यानो ऽकारस्यासर्वनामस्थानपरस्येति व्याख्यानस्योपपत्तिः। यदुक्तम्प्राग्विधावित्यादि तत्रेत्याह—विधाविति—एतच्च = तस्याः परिभाषायाः सार्वत्रिकत्वन्नास्तीत्येतच्च। तत्र विधीयत इत्यस्याध्याहारेण तद्वि-

1 परिभाषोपस्थाप्यार्थस्य साक्षाद् उद्देश्येन वा सहान्वये परिभाषायाश्चारितार्थ्ये सति उद्देश्यविशेषणे स्वोपस्थाप्यार्थान्वयनियामिका परिभाषा न भवतीत्यर्थः। तथा च 'वृद्धिर्यस्याचाम्'इत्यादौ 'इको गुण' इत्यस्य नोपस्थितिरिति शालीयादिसिद्धिः। अत एव 'इको यण्' इत्यादौ स्वोपस्थाप्यार्थस्य विधयान्वयेन चरितार्था परिभाषा 'उदीचामातः स्थाने' इत्यत्र न प्रवर्तते इति स्थाने ग्रहणं चरितार्थम्, अन्यथा तद्वैयर्थ्यं स्पष्टमेव। वस्तुतस्तु स्थाने ग्रहणं स्पष्टार्थम्। 'विधौ परिभाषा'इति प्रवादस्तु 'अचश्च' 'इको गुण' इति सूत्रद्वयविषये 'विधीयत' इत्यध्याहारमूलक एव। अत एव 'उदात्तस्वरितयोर्यणः' इत्यादौ 'षष्ठीस्थाने' इत्यस्योपस्थितिरित्यन्यत्र विस्तरः।

२ अन्त्यवृत्तिविकाराप्रयोजकेन शास्त्रेण अन्त्यसदेशानन्त्यसदेशयोरेकप्रयोगे युगपत्प्राप्तावन्त्यसदेशस्यैवादेश इति तदर्थः। यथा 'अदमुयङ्' अन्त्यसदेशानन्त्यसदेशयोर्दकाराकारयोर्मुत्वप्राप्तावन्त्यसदेशस्यैव मुत्वम्। अन्त्यसदेशत्वञ्च यस्य कार्यं चिकीर्षितं तद्वर्णान्त्यवर्णयोरज्व्यवधानशून्यत्वम्। तेन 'अदमुयङ्' इत्यत्र रेफेण व्यवधानेऽपि न क्षतिः।

'रषाभ्याम्' । पद इतीयतैव सामर्थ्यादेकपदत्वे लब्धेऽपि समा-

तयैवानस्तक्ष्णेत्यादौ व्यावृत्तिः । अत्र सान्तमहत इत्यादौ चानेकक्लिष्टक-ल्पनापेक्षया परिभाषास्वीकार एवोचितः । भाष्यन्तु वार्तिकोक्तफलानां अन्यथासिद्धिप्रदर्शनमात्रपरम् । अत एव यान्येतस्याः परिभाषायाः प्रयोजनानि तदर्थमेश परिभाषा कर्तव्येति भाष्ये उपसंहृतम् । यत्तु÷'न सम्प्रसारणे' इति सूत्रे नैतस्याः परिभाषायाः सन्ति प्रयोजनानि' इति भाष्यं तत्तु 'न सम्प्रसारणे' इत्यादेरेव ज्ञापकात्प्रयोजनाल्पत्वसूचकमि-त्युच्यते तदाऽस्तु अङ्गविशेषणमेव तदित्याहुः ॥

सामर्थ्यादिति । निमित्तनिमित्तिनोरपदस्थयोरसम्भवादिति भावः । अखण्डमिति । तत्त्वञ्च÷निमित्तानधिकरणनिमित्तिमत्पदाघटितत्वम् । तेन मातृभोगीण इत्यत्र णत्वसिद्धिः । केवलभोगीनेत्यस्य प्रत्ययमात्रस्य

पदताया उचितत्वादिति भावः । अत्रेदन्तत्त्वं, तस्यायम्भाव इत्यत्र तच्छब्दोपादानेन 'ष्यङः सम्प्रसारणम्' इति सूत्रस्थभाष्यमेकदेश्युक्तिः, प्रत्ययस्याङ्गांशे उत्थिताकाङ्क्ष-त्वेन तद्विशेषणत्वस्यैव न्याय्यत्वात्, आकडाराधिकारीयभपदसंज्ञाविषये यथोद्देशप-क्षस्यैव सिद्धान्तितत्वाच्च । तथा च प्रकृतविषये दोषाभावो ऽनन्त्यविकार इति परिभाष-यैव सम्पादनीय इति ।

मूले सामर्थ्यादित्यस्य पदपदोपादानेत्यादिः, अत एवाह—निमित्तेत्यादि । तेन विभिन्नपदस्थानाम्मातुर्नमनमित्यादौ णत्वाभावः सिद्धः । नन्वेकपदस्थत्वं यत्र निमित्त-निमित्तिनोस्तत्र णत्वमित्येतल्लब्धन्तावता रामनामेत्यत्रातिप्रसङ्गवारणासम्भव इत्यत आह—तत्त्वञ्चेति । न च निमित्तिमत्त्वं विधीयमानस्य णकारस्य, न तु नकारस्येति कथन्निमित्तस्थानिनोरेकपदस्थत्वस्य लाभ इति वाच्यम्, स्वप्रयोज्यकार्योद्देश्यत्वस्य षष्ठ्यर्थत्वमाश्रित्येति प्रत्ययस्य स्वीकारात् । निमित्तानधिकरणनिमित्तिमत्पदघटितं यत्त-द्भिन्नं यत्पदन्तदवयवत्वं यत्र द्वयोस्तत्र णत्वमित्यर्थः । तेन=निमित्तिमति पदत्वविशे-षणेन । तत्त्वाभावादिति । पदत्वाभावादित्यर्थः । 'आत्मन्विश्व' इत्यनेन खप्रत्ययस्य मातृभोगशब्दाद्विधानेन तदर्थविशिष्टस्वार्थबोधकत्वमेव तस्य, न तु भोगशब्दमात्रार्थ-

१ ननु 'समानपदे' इत्यस्य निमित्तनिमित्तिनोरेकपदस्थत्वे णत्वमित्यर्थे मातुर्नमनमित्यादौ णत्वा-भावेऽपि 'रामनाम' इत्यादौ णत्वापत्तिर्दुर्वारैवात आह—तत्त्वमिति । तथा च निमित्तानधिकरणनिमित्ति-मत्पदम् 'नाम' इति तद्घटितत्वान्न णत्वम् । नन्वेवमपि 'रामनरेण' 'परमाग्निभ्रेण' इत्यादौ निमित्तान-धिकरणनिमित्तिमत्पदस् उदासीनम् 'नाथ' इत्यादि तदघटितत्वात् णत्वापत्तिरिति चेन्न, 'निमित्तविशि-ष्टस्य नस्य णत्वम्' इत्यर्थेनादोषात् । वै. स्वोत्तरत्व-स्वाघटितपदाघटकत्वोभयसम्बन्धेन एवञ्च राम—परमशब्दघटकरेफमादाय द्वितीयसम्बन्धाभावात् नराग्निशब्दघटकनकारस्य न णत्वम् । प्रथमसम्बन्धा-

न ग्रहणं यत्समानमेव = अखण्डमिति यावत्, तत्र यथा स्यात्तेन समासे न भवति—रामनाम। यूष्ण इति। यूषो मण्डः।

मुद्गामलकयूषस्तु भेदी दीपनपाचनः।

इति दर्शनात्। इति पक्षे त्विति। एतेन पञ्चमीसमासस्य पाक्षिकतां ध्वनयति। तथा हि। भाष्ये बेभिदिता, माथितिकः, अपीपचन्निति प्रयोजनत्रयमुक्तम्, तच्चान्यथा सिद्धम्, एकाच उपदेशे

वा तत्त्वाभावात्। अत एव 'आत्मन्विश्वजन' इति सूत्रस्थम् 'आचार्यादणत्वं च' इति चरितार्थम्। सुपर्वणेत्यादिसिद्धये निमित्तानधिकरणेति। पदं चात्र लोके विभक्तीतरानपेक्षतया ऽर्थबोधकत्वेन हृद्यम्, तेन गन्धर्वगानमित्यादौ सुबुत्पत्तेः प्राक् समासेऽपि णत्वं न। क्षुभ्नादिषु नृनमनशब्दस्तु संज्ञाभूतोऽखण्ड इति तस्य ऋवर्णात्परस्य णत्वे ज्ञापकता भाष्योक्ता नासङ्गतेत्याहुः॥

विशिष्टस्वार्थबोधकत्वमिति वक्ष्यमाणपदत्वाभावः स्पष्ट एव। अत एव=उक्तस्य समानपदत्वस्याश्रयणादेव। चरितार्थमिति। तावन्मात्रेणातिप्रसङ्गवारणासम्भवादणत्वमित्यावश्यकमिति भावः। इत्यादिसिद्धये = णत्वघटितप्रयोगस्य सिद्धये। नन्वत्र पदत्वम्पारिभाषिकसुप्तार्थवत्त्वमात्रम्? नाद्यः, गन्धर्वगानम् रामनअनमित्यादौ सुबुत्पत्तेः प्राक् समासेनोत्तरपदस्य पारिभाषिकपदत्वाभावाण्णत्वापत्तेः। नापि द्वितीयम्, रामेणेत्यादावेव णत्वासिद्धेरत आह—पदञ्चात्रेति। अत्र=उक्तसमानपदत्वलक्षणे। अर्थबोधकत्वम् = अर्थबोधजनकसमुदायघटकत्वम्, तच्च विभक्तिसहकारेण यस्य बोधकता तद्घटके खप्रत्यये ऽप्यस्तीति 'मातृभोगीणः' इत्यत्र णत्वाप्राप्तिरतो ऽभावद्वयनिवेशः। तेन = उक्तरूपस्य पदत्वस्य लक्षणघटकत्वेन। निमित्तानधिकरणत्वन्निमित्तानवयवकत्वन्तच्च मातृभोगीण इत्यत्र भोगशब्देऽस्तीति तदनवयवकत्वरूपन्तद्घटितत्वसमुदायस्य नास्तीत्यत्र णत्वञ्च स्यादतो—निमित्तमदिति। ननु 'वर्णैकदेशा वर्णग्रहणेन न गृह्यन्ते' इति पक्षे ऋकारात्परस्य णत्वे क्षुभ्नादिगणे नृनमनशब्दपाठस्य ज्ञापकता भाष्ये उक्ता सा निरुक्तस्याखण्डपदत्वस्याश्रयणे कथं सङ्गच्छेत, तत्र भवत्सम्मताखण्डपदत्वस्याभावेन णत्वप्राप्त्यभावादाह—क्षुभ्नादिष्विति। संज्ञाभूतोऽखण्ड इत्यनेन पूर्वोक्तरसमुदायस्य संज्ञात्वसूचनेन 'पूर्वपदात्संज्ञायामगः' इति सूत्रस्य प्रवृत्तिर्ध्वनिता। 'छन्द-

भावात् नराग्नीध्रशब्दघटकरेफं निमित्तीकृत्य नराग्निशब्दघटकनकारस्य णत्वाभावः। नचैवं क्षुभ्नादिषु नृनमनशब्दस्य पाठवैयर्थ्यम्, ईदृशसमानपदत्वविवक्षासूचनद्वारा विधेरप्राप्तिबोधकत्वार्थकतयैव तच्चारितार्थ्यात् 'पूर्वपदात्' इत्यत्र 'समानपदे' इत्यस्यासम्बन्धेन तत्प्राप्तणत्वस्य वारणार्थत्वाच्च।

इत्यत्र विहितविशेषणादेव बेभिदितेत्यत्र इण्निषेधो न। मथितं पण्यमस्येति विग्रहे ठकि ठस्येकादेशे 'यस्येति च' इत्यल्लोपे 'इसुसु-

मण्ड इति। तद्विशेष इत्यर्थः। बेभिदितेति। बेभिद्यतेर्यङन्तात्तृचि अल्लोपयल्लोपयोः 'एकाच उपदेशे' इति निषेधादिण् न स्यात्। पञ्चमीसमासे त्वल्लोपस्य स्थानिवत्त्वान्निषेधाप्रवृत्तिरिति भावः। एवमितरयोः कादेश-जुसोरभावो बोध्यः। विहितविशेषणेति। एवं च स्थानिवत्त्वं विनाऽपि

स्यृदवग्रहादित्यस्य तु न प्राप्तिरत्रावग्रहस्यादर्शनात्। भाष्योक्तेति। 'एओङ्' सूत्रे इत्यादिः। वस्तुतस्तु यदीयमखण्डा न शब्दान्ता संज्ञा तदा संज्ञात्वभङ्गापत्त्या तत्र णत्वाभावस्य सिद्धौ गणे तस्य पाठो व्यर्थ एव स्यादिति तस्य यौगिकत्वमेवास्ति न तु संज्ञात्वम्। नचैवं सति पाठस्य वैयर्थ्यमाशङ्कनीयम्, तेन निरुक्तस्याखण्डपदत्वस्य 'रषाभ्याम्' इति सूत्रे सत्तास्तीति बोधनद्वारा विध्यप्राप्तिरेव बोध्यते। अत एवाह—इति भाव इति। नन्वेतादृशाखण्डपदत्वमेव यदि णत्वप्रवृत्तिसम्पादकं तदा सर्वनाथरघुणेत्यत्र निमित्तानधिकरणनिमित्तिमन्नाथपदघटितत्वस्य समुदाये सत्त्वाण्णत्वं न स्यादिति चेन्न, पदे निरुक्ताखण्डत्वन्निरुच्य नकारे तत्स्थत्वनिवेशापेक्षया लाघवान्नकार एव निमित्तानधिकरणनिमित्तिमत्पदावयवत्वविशेषणविवक्षासत्त्वेनादोषात्। नचैवमपि रघुनरेणेत्यत्र नरशब्दावयवस्य नस्य णत्वन्दुर्वारमिति वाच्यम्, निमित्ति-मत्त्वमित्यत्र निमित्तिमत्त्वन्नकारे निविष्टन्तच्च स्वोत्तरत्वसम्बन्धेन रेफषकारान्यतरत्व-रूपमेव, एवञ्च यस्य स्वपदेनोपादानन्तत्र तस्यैव प्रत्यासत्त्या निमित्तानधिकरणेत्यत्र निमित्तपदेन ग्राह्यतया नरशब्दाद्यनकारस्य परेण रेफेण निमित्तत्वव्यवहार एव नेति यद्रेफव्यक्तिमादाय निमित्तत्वव्यवहारस्तस्य नकारस्य तद्व्यक्त्यनधिकरणत्वस्य नरशब्दे सत्त्वेनादोषात्।

ननु मण्डशब्दस्य तण्डुलैर्निर्मिते द्रवे प्रसिद्धेर्मुद्गामलकयूषस्विति परवाक्यविरोधो यूषो मण्ड इति व्याख्याने प्राप्नोतीत्यत आह—तद्विशेष इति। एवञ्च यथा तण्डुलजलनिर्मिते यूषव्यवहारस्तथा मुद्गैः कृतेऽपि यूषव्यवहारस्यायुर्वेद एव सुप्रसिद्धतया न परवाक्यविरोध इति भावः। मूले पाक्षिकतामिति। तस्यानित्यत्वादनाश्रयणेऽपि तत्साधनीयकार्यस्य प्रकारान्तरेण सिद्धतामित्यर्थः। तामेवाह—तथा होत्यादिना। तस्यानित्यत्वे प्रमाणन्तु 'निष्ठायां सेटि' इति सूत्रे इटि कृते एव णिलोपो न तु ततः प्रागिति कालावधारणार्थकसेड्ग्रहणमिति वक्ष्यते स्पष्टञ्चेदङ्कदन्ते मूले। निषेधादिति। भिदिरेव द्विःप्रयोगासत्त्वेन तस्योपदेशे एकाच्त्वादिति भावः। पञ्चमीसमासात्='अचः परस्मिन्पूर्वविधौ' इति सूत्रे पूर्वविधिशब्दे पूर्वस्माद्विधिरिति पञ्चमीसमासात्। इतरयोः=माथितिकः अपीपचन्नित्यनयोः। तदप्रवृत्तिरिति।

कान्तात्कः' इति कादेशस्तु न भविष्यति, ठस्याभावात् । न च स्थानिवद्भावेन ठत्वम्, अल्विधित्वात् । 'ठस्येकः' इत्यत्र हि स्थान्या-

तदप्रवृत्तिः सिद्धेति भावः । विहितविशेषणत्वं चास्य 'एकाचो द्वे' इत्यत्र भाष्ये ध्वनितम् । तत्र हि यङ्लोपे बेभिदितेत्यत्र यङन्तात्तृचि इट्प्रतिषेधमाशङ्क्यैकाचोऽङ्गादिति व्याख्यानेन परिहृतम् । तद्भाष्यस्य यथाश्रुतत्वे बिभित्सतीत्यादौ दोषवारणायोपदेशग्रहणस्यैकाजंशेऽपि सम्बन्धे बेभिदितेत्यादावपि परिहारासम्भवेन तस्य विहितविशेषणत्वे तात्पर्यमावश्यकम् । प्रत्ययविधानावधेरेव प्रायेणाङ्गत्वादङ्गादित्यनेनेदं सूचितम्, विहितविशेषणे च बिभित्सतीत्यादावदोषेणैकाजंशे उपदेशग्रहणसम्बन्ध इति तदाशयः । न भविष्यतीति । स्थानिवत्त्वं विनापीति शेषः । अल्विधित्वादिति । 'ठस्येकः' इत्यत्र स्थानिनि[1], प्रत्ययेषु च

इण्निषेधाप्रवृत्तिरित्यर्थः । यत्तु — पञ्चमीसमास आवश्यक इति तेनैवेष्टसिद्धौ विहितविशेषणाश्रयणे प्रमाणाभाव इति, तन्न, बिभित्सतीत्यस्य सिध्यर्थन्तस्यावश्यकत्वात्, भाष्यकारसम्मतत्वाच्च, इत्याशयेनाह—विहितविशेषणत्वञ्चेति । परिहृतमिति । अत्र ह्यावृत्त्या व्यपकमङ्गस्यैकाजिति निषेधाप्रवृत्तिरिति भावः । यथाश्रुतत्वे—एकाचोऽङ्गात्परस्य वलादेरार्धधातुकस्येड् न स्यादित्यर्थकत्वे । दोषवारणाय । इण्निषेधानापत्तिरूपदोषवारणायेत्यर्थः । सम्बन्ध इति । तथा सति य उपदेशे एकाच्ततः परस्याङ्गसंज्ञानिमित्तस्येड् न स्यादित्यर्थः । बेभिदितेत्यादावपीति । सौलभ्यार्थकैवकारार्थकोऽत्रापिशब्दः, तस्य एकाचोऽङ्गादिति भाष्यस्य आवश्यकमिति । तस्य = भाष्यस्य, दोषवारणाय प्रवृत्तत्वेन यथा दोषपरिहारो भवति तदर्थकत्वन्तस्यावश्यकमिति भावः । नन्वङ्गादित्येतावन्मात्रेण कथन्तस्य लाभोऽत—आह—प्रत्ययविधेति । यस्मात्प्रत्ययविधानन्तदादेरित्यर्थः । अङ्गसंज्ञाविधायकसूत्रे तथोपादानादिति प्रत्ययविधानावधेरेकाचः परस्येति व्याख्येयमिति तात्पर्यम् । यस्मात्प्रत्ययविधानन्तद्भिन्नस्य तदादेरप्यङ्गत्वम्भवामीत्यादौ दृष्टमतः—प्रायेणेति । इदमिति । विहितविशेषणमित्यर्थः । अदोषेणेति । इट्प्रतिषेधानापत्तिरूपदोषाभावेनेत्यर्थः । न च विहितविशेषणपरतया तस्य भाष्यस्य योजने गोधुक्शब्दादाचारक्विबन्तादिट्प्रतिषेधो न स्यादिति वाच्यम्, तत्र दुहित्यस्याङ्गत्वाभावेन यथाश्रुतेऽपि निषेधाप्राप्तेः, हलन्तेभ्य आचारे क्विपो ऽनभिधानाच्च । स्थानिवत्त्वमिति 'अचः परस्मिन्' इति स्थानिवत्त्वमित्यर्थः ।

ठस्येक इत्यत्राकारान्तस्य ठस्यस्य स्थानित्वेनाश्रयणमिति कथमल्विधित्वमत आह—

1 'ठस्येकः' इति सूत्रे स्थानिबोधकतयोपात्ते 'ठस्य' इत्यत्र; प्रत्ययेषु = तत्तद्विधिसूत्रघटकेषु ठक्-

देशयोरकार उच्चारणार्थः । अपीपचन्नित्यपि णिलोपस्य, चङन्त्य-कारयोरेकादेशस्य च स्थानिवद्भावं विनापि सिद्धम् । विदिसाह-

---

सर्वत्राकारो न विवक्षितः, आदेश एव तु विवक्षितः, अन्यथा निषादकर्षू-शब्दात् 'ओर्देशे' इति ठञि व्यञ्जनमात्रस्य व्यञ्जनरूपकादेशे 'क'शब्दस्य लाक्षणिकत्वात् 'केऽणः' इति ह्रस्वानापत्तिरिति भावः । स्थान्यादेशयोरिति । इकादेशस्थानिभूतप्रत्यये, आदेशविधायके सूत्रे चेत्यर्थः । स्पष्टञ्चेदं 'ठस्येकः' इत्यत्र भाष्यकैयटयोः । इदमुपलक्षणम् — सन्निपातपरिभाषयाऽपि कादेशवारणं बोध्यम्, स्पष्टञ्चेदं 'ठक्छसोश्च' इति वार्त्तिकभाष्ये ।

---

ठस्येक इत्यत्रेति । प्रत्ययेषु=ठकारादिप्रत्ययेषु, एतेन ठचो व्यावृत्तिः । अन्यथा = मूलोक्तरीत्या स्थान्यादेशयोरेव तस्याविवक्षायाम् । लाक्षणिकत्वादिति । स्थानिबोधकं यट्ठस्येति तत्र व्यञ्जनमात्रस्य विवक्षितत्वे तस्य स्थाने ककाररूपव्यञ्जनादेशे पूर्वकालस्थिताकारान्तस्य कशब्दस्य लक्षणद्वयानुसन्धानप्रयोज्यप्रतिपत्तिकरस्वरूपत्वादित्यर्थः । अत्र ह्रस्वत्वस्य प्रवृत्तावव्ययात्त्यप्सूत्रस्थभाष्यमेव मानम् — तत्र हि निषादकर्षूर्नाम देशः, 'नैषादकर्षुकः' 'दाक्षिकर्षुकः' इत्युक्तम्, दाक्षिकर्षुर्नाम वाहीकग्रामः, 'तत्र भव' इति ठञ् 'इसुसुक्तान्तात्कः' 'केऽणः इति ह्रस्वः । उक्तकल्पनायामपि मूलं नासमञ्जसमित्याह—इकादेशस्थानिभूतेति । स्पष्टमिति । तत्र हि ठस्येत्यत्र प्रतिषेधो वर्णस्य ग्रहणं सङ्घातस्य वेति विचारे प्रथमपक्षे 'धात्वन्तस्य प्रतिषेधो वक्तव्यः' 'पठति' पठितुम्' अस्तु तर्हि सङ्घातग्रहणम्, सङ्घातग्रहणञ्चेदुणादिमाथितिकानां वक्तव्यः,—उणादिनान्तावत् 'कण्ठः' 'शण्ठः' इति, इह च मथितम्पण्यमस्य 'माथितिकः' इति अकारलोपे कृते तान्तादिति कादेशः प्राप्नोति, वर्णग्रहणे पुनः सति अल्विधिरयम्भवति, तस्माद्विशिष्टग्रहणम्, तस्माद्विशिष्टस्य ठकारस्य ग्रहणङ्कर्त्तव्यम्, तस्माद्विशिष्टस्येति तद्धितस्य ठादेरिति कर्त्तव्यम्, एवञ्च ठादेरिति वचनादल्विधित्वात्स्थानिवद्भावात्कादेशाप्रसङ्गः । अस्तु तावद्वर्णग्रहणम्, ननु चोक्तण्ठादेशे वर्णग्रहणञ्चेद्धात्वन्तप्रतिषेध इति, नैष दोषः; अङ्गादिति वर्तते, अर्थवशाद्विभक्तिविपरिणाम इति कैयटः । एतेन वर्णमात्रस्य स्थानित्वमिति प्रतिपादितम् । इदमिति । अल्विधित्वेन समाधानमित्यर्थः । सन्निपातेति । अकारादिसन्निपातेन जातस्य तान्तत्वस्य तद्विघातकादेशप्रत्यनिमित्तत्वमिति भावः ।

---

ठञादिषु च अकारो विधेयघटकतया न विवक्षितः, किन्तूच्चारणार्थ एव । नन्वेवम् प्रत्ययेषु ठकारमात्रस्य विधेयत्वे प्रयोगेष्वकारश्रवणानापत्तिः, 'ठस्येकः' इति सूत्रेणादन्तस्यैवेकेऽथादेशस्य विधानात् । तथा नेकादेशस्यैवादन्तत्वं स्वीकृत्य ठक्ठञादिष्वकारघटितस्य विधेयत्वं न स्वीकार्यमिति लाघवमिति भावः । न च स्थान्यादेशयोरकार उच्चारणार्थ इति मूलविरोधः, इकादेशस्थानिभूतठक्ठञादिघटकेषु, इकादेशविधायकसूत्रे 'ठस्य' इत्यत्र चाकारो न विवक्षित इति तस्यार्थात् ।

चर्यादभ्यस्तापि लङ एव झेर्जुस् विधानात् । न च सिचा साहचर्या-ल्लुङ एव किं न स्यादिति वाच्यम्, पूर्वसाहचर्यात्परसाहचर्यस्य बलीयस्त्वादिति दिक् ।

---

बलीयस्त्वादिति । एतच्च 'यस्य विभाषा' 'वित्तो भोग' इति सूत्रस्थ-कैयटे स्पष्टम् । एतत्सर्वं 'अपरविधाविति तु वक्तव्यम्' इति वार्त्तिकस्थ-कैयटानुरोधेन । दिगिति । दिगर्थस्तु एतदर्थं पञ्चमीसमासस्यावश्यकत्वम्, तथा हि—परसाहचर्यस्य बलवत्त्वे मानाभावः, विप्रतिषेधसूत्रे कार्य-शब्देन शास्त्रीयस्यैव ग्रहीतुमौचित्येनात्र तदप्राप्तेः ।

---

एतच्च=परसाहचर्यस्य बलीयस्त्वञ्च । कैयटे स्पष्टमिति । तत्रत्यभाष्ये भगवता बहव इमे विदयः पठ्यन्ते, तत्र न ज्ञायते कस्य नित्यन्नत्वम्, कस्य विभाषा, कस्य इडिति प्रश्ने ÷ 'वेत्तेस्तु विदितो निष्ठा विद्यते विन्न इष्यते ।
विन्तेर्विन्नश्च वित्तश्च वित्तो भोगेषु विन्दतेः ॥ इत्युक्तम्' ॥

एतेन 'विद सत्तायाम्' इत्यस्मान्नत्वम् 'विद विचारणे' इति धातोर्निष्ठायान्नत्व-विकल्पः उन्दिना परेण साहचर्यात् । यद्यपि नुदविदेति सूत्रे नुदधातुस्तौदादिक आदौ पठितस्तथापि शब्दपरविप्रतिषेधादुन्दिरत्र व्यवस्थाहेतुर्नुदिरिति कैयटः । 'विद्लृ लाभे' इत्यस्मात्तु प्रतिषेधो भोगप्रत्यययोः, 'विद ज्ञाने' इत्यस्मात्तु इटा व्यवधाना-न्नत्वाभावः । यस्तु तुदादौ पठ्यते तस्मात् 'विभाषा गमहनविदविशाम्' इति क्वसु चये इड्विकल्पात्तस्य विभाषेतीण्णिषेधः, विभाषेति सूत्रे हनसाहचर्यादादादिकस्य तु न ग्रहणम्, पूर्वसाहचर्यात्परसाहचर्यस्य बलवत्त्वादिति भावः । ननु 'विप्रतिषेधे परङ्कार्यम्' इति सूत्रे कार्यशब्दोपादानेनाप्राप्तस्यापूर्वस्य विधेयस्य ग्रहणमिति परसाहचर्यस्य बल-वत्त्वाश्रयणमशक्यमत आह—एतत्सर्वमिति । अनुरोधेनेति । अयम्भावस्तेन हि पूर्वविधाविति न्यासपक्षे य आयन्धिन्वन्तीत्यादिप्रयोगस्तस्यानिर्वाह इति मनसि निधाय यद्वार्त्तिकम्प्रवृत्तम् 'अपरविधौ' इति त्विति तस्य युक्तत्वमित्याशयेन तादृशन्यासान्तरे निमित्तापेक्षया परत्वाश्रयेण बेभिदितेत्यादिसिद्धिरुक्ता । न तु पूर्वविधाति न्यासेनैव तेषां सिद्धिरित्यभिहितन्तद्गीत्येति, वस्तुतस्तु पूर्वविधाविति न्यासेनैव सर्वेष्टसिद्धिर्भवति, पञ्चमीसमासस्य वक्ष्यमाणप्रयोजनानुरोधेनावश्यकत्वात् ।

यद्यप्यस्मिन् पक्षे हे गौरित्यत्र स्थानिवद्भावेनैङ्ह्रस्वादिति लोपः प्राप्नोति, तथापि पञ्चमीसमासमाश्रित्य यः स्थानिवद्भावस्तस्यानित्यत्वे 'एङ्ह्रस्वात्' इति सूत्रे एङ्ग्रहणसामर्थ्याद्वा तत्र स्थानिवत्त्वाप्राप्त्या दोषः परिहर्तुं शक्य इत्याशयेन दिगर्थमाह-दिगर्थस्त्विति । एतदर्थम्=अपीपचन्निति रूपसिद्ध्यर्थम् । शास्त्रीयस्यैव=शास्त्रविधेयस्यैव, अत्र=साहचर्यविषये । तदप्राप्तेरिति । विप्रतिषेधशास्त्राप्राप्तेरित्यर्थः

पूर्वत्रासिद्धे नेति । एतच्च न्यायसिद्धमित्यवोचाम, त्रिपाद्या असिद्धत्वेन तत्रत्ये कार्ये कर्तव्ये 'अचः परस्मिन्' इत्यतिदेश

'नित्यः परयणादेशः परश्चासौ व्यवस्थया ।
युगपत्सम्भवो नास्ति बहिरङ्गेण सिध्यति' ॥

इति 'अचः परस्मिन्' इति सूत्रस्थभाष्योक्तरीत्या पूर्वसाहचर्यस्यान्तरङ्गत्वेन तस्यैव ग्रहीतुमौचित्याच्च । 'विभाषा गमहनविदविशाम्' इत्यत्र लुग्विकरणपरिभाषानुग्रहाय परसाहचर्याश्रयणं नुदविदोन्दत्रा इत्यत्राप्यन्तरङ्गपरिभाषाऽनित्यत्वाद् व्याख्यानेन परसाहचर्याश्रयणमिति बोध्यम् । प्रत्यैषिषन्नित्यादौ लङि 'उभे अभ्यस्तम्' इति सूत्रस्थभाष्यसंमते एवमपि

सामान्यतः परत्वाश्रयणेऽपि न विप्रतिषेधशास्त्रस्य प्राप्तिरित्याशयेनाह—नित्यः परेत्यादिभाष्योक्तरीत्येति । पद्व्या मृद्व्येत्यादेरचः परस्मिन्निति सूत्रारम्भाभावेऽपि सिद्धिर्यथोक्ता तद्रीत्येत्यर्थः । अन्तरङ्गत्वेनेति । पूर्वोपस्थितत्वरूपमत्रान्तरङ्गत्वम् । नन्वेवं सति 'विभाषा गम' इति सूत्रविषये परसाहचर्याश्रयणपरभाष्यविरोध इत्यत आह—विभाषेति । तथाच लुग्विकरणपरिभाषानुरोध एव तत्र परसाहचर्याश्रयणबीजम्, न तु तस्य बलीयस्त्वेनेति भावः । ननु यदि पूर्वसाहचर्य्यस्यान्तरङ्गत्वन्तदा 'नुदविद' इति सूत्रविषये कथम्भवन्मते लक्ष्यसिद्धिरत आह—नुदेति । परिभाषा पूर्वोपस्थितविषये प्रवर्तते, या 'बहिरङ्गान्तरङ्गयोरन्तरङ्गम्बलीयः' इत्येषा परिभाषा सा । अनित्यत्वादिति । 'ओमाङोश्च' इति सूत्रस्थाङ्ग्रहणादित्यादिः । व्याख्यानेन = पूर्वोक्ताकरसम्मतव्याख्यानेन । प्रत्यैषिषन्निति । अत्र प्रतिपूर्वकात् प्रश्लिष्टेकारात्मकाद् धातोः सन्, तदन्ताल्लङ् । एवमपि = परसाहचर्यस्य बलवत्त्वाश्रयणेऽपि । ननु परसाहच-

१ भाष्ये 'अचः परस्मिन्' इति सूत्रप्रयोजननिरूपणावसरे 'इदं तर्हि प्रयोजनम्'—'पद्व्या' 'मृद्व्या' इति, परस्य यणादेशे कृते पूर्वस्य न प्राप्नोति, ईकारयणा व्यवहितत्वात्, स्थानिवद्भावाद्भ भवति । किं पुनः कारणं परस्य तावद् भवति न पूर्वस्य, नित्यत्वात्' इत्युक्तमित्याह—'नित्यः परयणादेशः' इति ततः 'आरभ्यमाणे त्वस्मिन् योगे नित्यः पूर्वयणादेशः । कृतेऽपि परयणादेशे प्राप्नोत्यकृतेऽपि । परयणादेशोऽपि नित्यकृतेऽपि पूर्वयणादेशे प्राप्नोत्यकृतेऽपि । परश्चासौ व्यवस्थया' इत्युक्तम् उभयोर्नित्यत्वेन समबलतया प्रयोगः, गतपरतया परयणादेश एव स्यादित्याह—परश्चासौ व्यवस्थयेति । ततः 'न चास्ति यौगपद्येन सम्भवः । कथञ्च सिध्यति । बहिरङ्गेण सिध्यति' इत्युक्तम् । अयम्भावः—प्रसङ्गे आदेशविधानात् आदेशसमये स्थानिनोऽसत्त्वम्, निमित्तत्वञ्च सत्त्वे, सत्त्वासत्त्वे चैकत्र युगपद्ध विरुद्धे इति युगपदुभयोर्यणादेशः स्यादिति सम्भवो नास्तीति क्रमिकशीघ्रोपस्थितिकत्वेनान्तरङ्गतया पूर्वयणादेश एव स्यादिति परस्य बहिरङ्गतया रूपं सिध्यति नास्ति सूत्रस्य प्रयोजनमित्याह—युगपत्सम्भवो नास्ति बहिरङ्गेण सिध्यतीति । एवञ्चोक्तस्थले यथा पूर्वोपस्थितिमात्रेणान्तरङ्गत्वं तथा पूर्वसाहचर्य्यस्यापि पूर्वोपस्थितिमात्रेणान्तरङ्गतया तत्साहचर्य्यस्यैव ग्रहणमुचितमिति भावः ।

वैयर्थ्यापत्तेः। अन्ये तु सामान्ये नपुंसकमिति कथंचित्समादधुः ।

'न षट' । स्त्रियां यदुक्तं तन्न भवतीति व्याख्यानादनन्तरो ङीविव व्यवहितष्टाबपि निषिध्यत इत्याशयेनाह—ङीप्टापौ नेति । राः पुंवदिति । रैशब्दस्य स्त्रीलिङ्गताया अपि स्मरणादिति भावः । तथा च क्षीरस्वामी—रात्येनं राः, स्त्रीत्येके इति । स्त्रियां नौस्तरणिस्तरिरित्यमरः ।

इत्यजन्ताः स्त्रीलिङ्गाः ॥

---

निषेध इति भावः । कथंचिदिति । अनेन सीताविरहिणो रामस्य वाक्ये सीताया एव विवक्षितत्वेनेदमप्यप्रयोजकमिति सूचितम् । नञ्घटितमनित्यमिति तु भाष्यानुक्तत्वान्न लक्ष्यसंस्कारोपयोगि ।

॥ इत्यजन्ताः स्त्रीलिङ्गाः ॥

---

ब्राह्मणाय' 'अतितन्व्यै' 'अतिलक्ष्म्यै' इत्यत्र च नदीसंज्ञासिद्ध्यर्थं 'प्रथमलिङ्गग्रहणञ्च' इति वार्तिककृतोक्तम्, यः शब्दः प्रथमं स्त्रीत्वविशिष्टार्थमाह पश्चात्तु प्रकारान्तरेणार्थान्तरं लिङ्गान्तरयुक्तम्प्रतिपादयति तस्यापि नदीसंज्ञा भवतीति तदर्थः । तर्त्तर्हि 'वक्तव्यञ्च वक्तव्यम्,अवयवस्त्रीविषयत्वात् सिद्धम् अवयवोऽत्र स्त्रीविषयस्तदाश्रया नदीसञ्ज्ञा भवतीत्येवंरीत्या तस्य वार्तिकस्य प्रत्याख्यानङ्कृत्वा अवयवस्त्रीविषयत्वात्सिद्धमिति चेदियङुवङ्स्थानप्रतिषेधे यण्स्थानप्रतिषेधप्रसङ्गो ऽवयवस्येयङुवङ्स्थानत्वात्—'आध्यै' 'ब्राह्मण्यै' इत्याशङ्क्य सिद्धन्त्वङ्गरूपग्रहणात् । यस्याङ्गस्येयङुवङौ भवतस्तस्येदङ्ग्रहणञ्चैतस्याङ्गस्येयङुवङौ भवत इत्युक्तमिति प्रतिपादितम्, एवञ्च प्रकृष्टा धीर्यस्या यस्य वा प्रधीरित्यत्रावयवस्य धीशब्दस्य नदीसञ्ज्ञा ऽस्त्येवेति भावः । रामस्य वाक्ये इति । रावणकृतसीतापहारे रामविलापोऽयम्, सीताया इति । 'हे सुभ्रु' इत्यस्य 'हे सीते' इत्यर्थं एव कवितात्पर्यम् । इदमपि—सामान्ये नपुंसकत्वमपि । केचित्तु + सुभ्रु क्रियाविशेषणमित्याहुः, तच्चिन्त्यम्, 'हे' इत्यस्यानन्वयापत्तेः, धात्वर्थफलाभेदान्वयविवक्षायाङ्क्रियाविशेषणानाङ्कर्मत्वक्लीबत्वयोरङ्गीकाराच्च । वस्तुतस्तु हापितः इति विधिना त्वयाऽहं हापितस्त्याजितः हे सुभ्रु त्वङ् क्वासि इत्येवं बहु विलापेत्यर्थः । एवञ्च विरहपीडितत्वादनवधानतया तथोक्तौ विरहस्य पुष्टता गम्यत इति काव्यगुणत्वेन यत्परममूले प्रमाद एवायमित्यनेनानवधानलक्षणः प्रमादो ऽभिहितः स एव समाधियुक्त इति बोध्यम् । अत्र प्राचीनोक्तं समाधानन्निरस्यति—नञ्घटितमिति ।

इत्यजन्तस्त्रीलिङ्गविवरणम् ।

# अथाजन्तनपुंसकलिङ्गाः ।

'अतोऽम्' । स्वमोरिति । अमोऽम्विधानं लुग्बाधनार्थम् । अम् स्यादिति । एतच्च प्राचामनुरोधाद्व्याख्यातम्, संयोगान्तलोपो झल इत्यभिप्रायेण वा । वस्तुतस्तु 'म्' इत्येव पदच्छेदो लाघवात् । तत्र सोर्मे कृते ज्ञानमिति सिद्धम् । द्वितीयैकवचने तु 'आदेः परस्य' इत्यकारस्य मकारे कृतेऽन्त्यस्य मस्य संयोगान्तलोपे सिद्धमिष्टम् । यत्तु वदन्ति—एवं सति 'सुपि च' इति दीर्घत्वं स्यादिति, तन्न, सन्निपातपरिभाषाविरोधात् । यदपि दीर्घविधौ सा न प्रवर्तत इति,

---

झल इत्यभिप्रायेणेति । एकवाक्यतया झल एव लोप इत्यभिप्रायेणेत्यर्थः । संयोगान्तलोप इति । झल्ग्रहणस्य तत्रापकर्षेऽपि वाक्यभेदेन सम्बन्धः । तेन च पूर्ववाक्यस्य यण्व्यतिरिक्ते ऽझल्यपि क्वचित्प्रवृत्तिरिति भावः । सन्निपातेति । ह्रस्वाकारसन्निपातेन जातस्य तद्विघातकत्वायोगादिति भावः ।

---

वक्ष्यमाणरीत्या 'म्' इति छेदेऽपीष्टसिद्धिरित्यभिप्रायेणाह—एकेति । तेन च = संयोगान्तस्य झलो लोप इति वाक्येन च । पूर्ववाक्यस्य = संयोगान्तस्य लोप इति वाक्यस्य । क्वचिदिति । एतच्च 'यणः प्रतिषेधो वाच्यः' इत्यनेन फलाभेदायोक्तम् । सन्निपातपरिभाषाप्रवृत्तिमुपपादयति—ह्रस्वाकारेति । जातस्येति । मादेशस्येत्यर्थः । मूले भाष्यकृता ध्वनितत्वादिति । तत्र हि श्नमः शित्करणङ्किमर्थमिति विचारे शकाराभावे 'नान्नलोपः' इत्यस्य यज्ञानामित्यत्रातिप्रसङ्गमाशङ्क्य दीर्घे जाते नास्ति लोपस्य प्राप्तिरिति पूर्वपक्षिणा शङ्किते 'परत्वाद्दीर्घम्बाधित्वा नलोपः स्यादि'ति सिद्धान्तिनोक्तम् । तत्र कैयटः—अग्नीनामित्यत्र दीर्घस्य, हिनस्तीत्यत्र नलोपस्य चरितार्थतया परत्वान्नलोपः स्यात् । यद्यपि लोपात्परत्वात्सुपि चेति दीर्घः सम्भवति, तथापि सन्निपातपरिभाषया न भविष्यति, नामीति दीर्घे तु सन्निपातपरिभाषा न प्रवर्तते, आरम्भसामर्थ्याद् । यद्यपि 'कष्टाय क्रमणे' इति निर्देशेन 'सुपि च' इति दीर्घेऽपि सन्निपातपरिभाषाया अनित्यत्वादप्रवृत्तिरिति लभ्यते, तथाप्यन्यत्रानित्यत्वे न मानमिति तात्पर्यम् । अत एव परिभाषेन्दुशेखरे यादेशः सुपि चेति दीर्घत्वेऽस्येत्युक्तम्, वस्तुतस्तु 'एङ्ह्रस्वात्' इति सूत्रे 'हे कुल' इत्यादेः साधनाय वैयधिकरण्येनान्वयरूपस्य प्रयासस्य भाष्ये कृतत्वेनास्मिन्पक्षे तस्य वैयर्थ्यापत्त्या 'म्' इति छेदो भाष्यविरुद्ध

तदपि न, 'रुधादिभ्यः श्नम्' 'श्नान्नलोप' इति सूत्रयोः 'सुपि च' इति दीर्घत्वे सन्निपातपरिभाषाप्रवृत्तेर्भाष्यकृता ध्वनितत्वात्, कैयटेनोपपादितत्वाच्च । यदप्याहुः—अतिजरसमिति न सिद्ध्येदिति, तदपि न, द्वितीयैकवचने हि 'अतोऽम्' इति बाधित्वा परत्वाज्जरसि कृते सन्निपातपरिभाषया लुकोऽप्रवृत्तौ रूपसिद्धिः स्पष्टैव,

परत्वाजरसीति । परे तु ÷ जराया इति सूत्रोक्तेनाजरांसीत्यत्र 'नुम्जरसोः प्राप्तयोर्विप्रतिषेधेन जरस्' इति भाष्यप्रामाण्येन पूर्वविप्रतिषेधात् पूर्वं विभक्त्यादेशप्रवृत्तिरधिकविभक्त्यर्थापेक्षजरसादेशापेक्षया विभक्त्यादेशानामन्तरङ्गत्वाद्वा ऽवश्यं वाच्या । अन्यथा शिभावात्पूर्वमेव जरसः प्रवृत्तौ नुमा तस्य विप्रतिषेधविचारासङ्गतिः स्पष्टैव । अत एव 'टाङसि'इति सूत्रे कैयटेनोक्तम् ÷ भाष्यकारस्तु सन्निपातपरिभाषया जरसादेशमनभ्युपयन्नतिजरेणातिजरादिति भाष्यं न त्वतिजरसिन अतिजरसादिति गौरवमुद्भावितवान्' इति, भवद्रीत्या परत्वात्पूर्वं जरसादेशे इनाद्यप्राप्त्या तदभावपक्षे तस्याः प्राप्त्या परिभाषया जरसादेशमनभ्युपयन्नित्यस्यासङ्गतिः स्पष्टैवेत्युच्यते तदाऽत्राप्यन्तरङ्गत्वादतोऽमि तया जरसभाव एवोचितः । न च तत्र नाकारान्तसन्निपातलक्षणमेवाजादित्वम्, किं तु तदभावेऽपि, यथा तु सन्निपातलक्षणविधिप्रवृत्तिं विना न यस्य प्रवृत्तियोग्यता तत्रैवेति वाच्यम्, मानाभावात्, 'टाङसि' इति सूत्रस्थेनातिजरेणेत्येतद्विषयककैयटेन विरोधाच्च । एवं च जराशब्दविषयं परत्वादि-

इति बोध्यम् । मूलन्दूषयति—परे त्वित्यादिना । प्राप्तयोरिति । कुण्डानि अतिजरस इत्यत्र चरितार्थयोरित्यादिः । पूर्वम् = जरसादेशात्पूर्वम् । पक्षान्तरमाह—अधिकेति । अधिका व्यापिका या विभक्तिर्यस्मिन्निमित्तत्वेन स अधिकविभक्तिर्जरस् तदपेक्षयेत्यर्थः । अन्तरङ्गता चेति पाठः । अन्यथा=उक्तरीत्यनङ्गीकारे । असङ्गतिरिति । तदा तस्यासर्वनामस्थानत्वेन मः प्राप्त्यभावेन विप्रतिषेधविचारासङ्गतिः, मम तु जर-

१ अस्य यदीति शेषः । "विभक्त्यादेशेभ्यः परत्वाज्जरस्" इति प्राचीनाः, 'अजरांसि' नुम्जरसोः प्राप्तयोर्विप्रतिषेधेन जरस् इति भाष्योक्तेः । 'जरसादेशाद् विभक्त्यादेशाः पूर्वविप्रतिषेधेन' इति नवीनाः । वस्तुतस्तु विभक्तिसम्बन्धिकार्य्यमात्रात्प्रागेव जरस्, क्वचित् "विप्रतिषेधे" इति सूत्रबलेन परत्वाज्जरस्, यथा 'अजरांसि' इत्यादौ श्यादेशात्परत्वाज्जरस् । क्वचित्पूर्वविप्रतिषेधेन जरस, यथा÷ जरसा' 'जरसे' अत्र परानपि याडादीन् बाधित्वा पूर्वविप्रतिषेधेन जरस् । अत एव 'जरसोऽवकाशः 'जरसा' जरसे' इति भाष्यं संगच्छते । अन्यथा तत्रापि परत्वाद् याडादीनां प्राप्त्याऽवकाशप्रदर्शनं विरुध्येत । यद्वा "आङि चापः" इत्येत्वं नित्यत्वात्, "याडापः" इति याटं प्रदिपदविधित्वेन शीघ्रोपस्थितिकतयाऽन्तरङ्गत्वात्,

प्रथमैकवचने तु अतिजरमित्येवेष्यते, सन्निपातपरिभाषया जरसादेशस्याप्रवृत्तेः। अत इति तकार उच्चारणार्थः। भसंज्ञायामिति।

---

नादीन्बाधित्वा जरसित्यादिमूलमत्रत्यमनोरमा च प्राचामनुसारेणेति तदाह—एकवचने त्विति। तत्रापीत्यर्थः। अत इतीति। न तु तपरसूत्रप्रवृत्त्यर्थं इत्यर्थः, नपुंसके ह्रस्वावश्यम्भावाद्व्यावर्त्याप्रसिद्धेरिति भावः।

---

सादेशात्प्राक् शिभावे तस्य सर्वनामस्थानत्वात्तत्सङ्गतिः। अत्रापि = द्वितीयैकवचनेऽपि। अत इति तपरत्वस्य दीर्घव्यावृत्तिर्न फलम्, ह्रस्वो नपुंसक इति ह्रस्वस्यैव सत्त्वादत आह—अत इतीति। ननु अतोऽमिति सूत्रे 'म्' इति छेदे पूर्वोक्तरीत्या सन्निपातपरिभाषाप्रवृत्तिसम्पादनद्वारा तपरकरणञ्चरितार्थमित्युच्चारणार्थं इत्यसङ्गतमिति चेन्न, तस्य ग्रन्थस्यामितिच्छेदाभिप्रायकत्वात्। एतेन स्वस्यामितिच्छेद एवाभिमत इति ध्वनितम्। पूर्वोक्तार्थं स्पष्टयति—न त्विति 'ननु विभक्तित्वस्यापेक्षायामपि तस्य नपुं-

---

„ङेराम्" इत्याममपि नित्यत्वाज्जरसादेशो बाधेत। नचैवम् "जराया जरस्" इति सूत्रे भाष्ये "नुमोऽनङ्जरसौ भवतो विप्रतिषेधेन" नुमोऽवकाशः, 'त्रपुणी' 'जतुनी' 'तुम्बुरुणी' जरसोऽवकाशः 'जरसा' 'जरसे' इहोभयं प्राप्नोति—'अतिजरांसि ब्राह्मणकुलानि' अनङ्जरसौ नुमो विप्रतिषेधेन' इत्युक्तं तद्विरुध्येत 'अजर अस्' इत्यवस्थायां नुमोऽप्राप्तया श्यादेशमेव परत्वाद् बाधित्वा जरसादेशे ततः श्यादेशानन्तरं नुमः प्राप्त्या जरसादेशस्य च जातत्वात् नुम्जरसोर्विप्रतिषेधोक्तेरसङ्गत्यापत्तेरिति वाच्यम्, 'अजर अस्' इति दशायाम् परमपि जरसादेशं बाधित्वा नित्यत्वात् श्यादेश एव कस्मान्नेति शङ्कां मनसि निधाय श्यादेशस्येव जरसादेशस्यापि नित्यत्वप्रदर्शनाय श्यादेशे कृते नुमपेक्षया परत्वाज्जरसादेश एव स्यादिति जरसादेशस्य नित्यत्वबोधनाय तद्वार्तिकप्रवृत्त्याऽसङ्गतेरभावात्। नच जरसादेशात् प्राङ् नित्यत्वाद् श्यादेशेऽपि 'अजरांसि' इत्यस्य सिद्धेर्विचारवैफल्यम्, श्यादेशानन्तरं नित्यत्वान्नुमेव स्यादिति रूपासिद्धिप्रसङ्गात्। न च नुमपेक्षया जरसोऽपि नित्यत्वम्, नुमि कृते निर्दिश्यमानस्य विभक्त्यव्यवहितपूर्वत्वाभावेन जरसोऽप्राप्तेः। एवञ्च श्यादेशस्य जरसादेशस्य च नित्यत्वेन समतया श्यादेशं बाधित्वा परत्वाज्जरसादेशे ततः श्यादेशे नुमि च 'अजरांसि' इति रूपं सिध्यतीति भाष्याशय इति न तद्विरोधः।

"टाङसि" इति सूत्रस्थेन 'अतिजरेण' इत्येतद्विषयकेण "सन्निपातपरिभाषया जरसादेशमनभ्युपगन्" इति कैयटेनापि न विरोधः, 'अतिजर आ' इति स्थिते जरसभावपक्षे इनादौ कृते कस्मान्न जरसिति शङ्कया तत्कैयटप्रवृत्तेरिति प्राचीनमतमेव ज्याय इति दिक्।

१ अन्ये तु—नपुंसके ह्रस्वस्यैव सत्त्वेन तपरकरणं व्यर्थं सत् 'अपरनिमित्तकत्वमन्तरङ्गत्वम्' इति ज्ञापयति। तथा च अश्व आश्वेति समाहारद्वन्द्वे सुपो लुकि सवर्णदीर्घं बाधित्वा अपरनिमित्तकत्वरूपान्तरङ्गत्वेन "ह्रस्वो नपुंसके" इति ह्रस्वे ततः सवर्णदीर्घे लक्ष्ये लक्षणन्यायेन पुनर्ह्रस्वाप्राप्त्या 'आ' इति रूपं सिध्यति। अत एव "ऊकालोऽच्" इति सूत्रे समाहारद्वन्द्वेन लाघवसत्त्वेऽपि 'उकाल' इति न कृतम्, उश्च ऊश्च ऊ३श्चेति समाहारद्वन्द्वे सुपो लुकि अपरनिमित्तकत्वरूपान्तरङ्गत्वेन ह्रस्वत्वे सवर्णदीर्घे लक्ष्ये लक्षणन्यायेन ह्रस्वाप्राप्तेः। अपरनिमित्तकत्वरूपान्तरङ्गत्वाभावे तु अन्तर्भूतनिमित्तकत्वेनान्तरङ्गत्वाद्दीर्घे ततो ह्रस्वे 'ऊकाल' इति निर्देशासङ्गतिः। विस्तरस्त्वन्यत्र द्रष्टव्यः।

'सुडनपुंसकस्य' इति पर्युदासेनासर्वनामस्थानत्वादिति भावः।

'यस्य'। इश्च अश्च यं तस्य। तदाह–इवर्णावर्णयोरिति। औङः श्यामिति। विभक्तित्वापेक्षया श्यामिति स्त्रीलिङ्गनिर्देशः।

'जश्शसोः'। जसा साहचर्यात् शसपि सुबेव गृह्यते, तेनेह न, कुण्डशो ददाति।

---

ननु तकारस्योच्चारणार्थत्वे 'म्' इति च्छेदे सन्निपातपरिभाषया दीर्घ-वारणं कथमिति चेन्न, यादृशशब्दसन्निपातेन सोरादेशस्तस्य विनाशेना-दोषात्। अत एव दाक्षिरित्यादौ अङ्गसंज्ञा अकारान्तप्रकृतिप्रत्ययसन्निपा तकृताऽनया परिभाषयाऽल्लोपस्य निमित्तं न स्यादित्याशङ्क्य अनित्य-त्वेन भाष्ये समाहितमतस्तस्य सन्निपातस्य शब्दोपात्तत्वाग्रहाभावात्। भाष्यकृता तु मादेशे सन्निपातपरिभाषया सम्बुद्धिलोपाप्राप्तिभिया 'अम्' इत्येव च्छेदमङ्गीकृत्य 'एङ्ह्रस्वात्' इत्यत्र व्यधिकरणान्वयहल्पदानुवृत्ति-रूपगौरवं फलमुखत्वान्न दोषावहमित्यनुसृतम्, परिभाषाऽनित्यत्वेन तु न समाहितम्,तस्यागतिकगतित्वात्। किं च तस्यानित्यत्वे दीर्घापत्तिः। इदमपि तत्रैव भाष्ये ध्वनितमित्यलम्। विभक्तित्वापेक्षयेति। तद्गतविभक्तित्वाश्रयणेन विभक्ताविति विशेष्यापेक्षयेत्यर्थः। सुबेवेति। निरनुबन्धकपरिभाषया

---

लुक्त्वेन स्त्रीत्वस्योपपादनासम्भव इत्यत आह–तद्गतेति। साहचर्यपरिभाषावन्निरनु-बन्धकपरिभाषाया अपि प्रवृत्तिः स्यादिति शङ्कां वारयति–निरनुबन्धकेति। तद-नुच्चारण एवेति। ज्ञापकसाजात्यादिति शेषः। तेन प्राचीनोक्तसंज्ञाकरणेन सन्नि-पातपरिभाषयेति अस्य तृतीयान्तस्य जरसभावेऽन्वयः। मूले सान्तेति पृथक्पदमिति। इदमत्र बोध्यम्–पृथक्पदञ्च न बहुव्रीहिसंज्ञकम्, किन्तु समासात्मकलुप्तषष्ठीकपद द्वयसमुदायरूपम्, अत एव 'हंस' इत्यत्र न दीर्घः। सेति संयोगस्य समानाधि करणं विशेषणम्, तदन्तसंयोगस्य लाभः, अङ्गस्येति तु प्रकृतन्तदन्तपदार्थे चरमावयवेऽ न्तपदार्थश्च सान्तसंयोगस्य विशेषणमिति सम्बुद्धिभिन्नसर्वनामस्थानपरकाङ्चरमा वयवाभिन्नसान्तसंयोगस्य यो नकारस्तदुपधाया इत्यर्थात्। ननु सर्वनामस्थानस्य सान्तसंयोगविशेषणत्वेन निर्दिष्टपरिभाषया हंस इत्यादौ न दोष इति चेन्न, प्रत्ययस्या-

---

१ तकारस्योच्चारणार्थत्वे शब्दतो ह्रस्वाकारस्य मादेशे निमित्तत्वाभावेन सन्निपातपरिभाषायाश्च शब्दोपात्तसन्निपातविघातमादायैव प्रवृत्तिरित्याशङ्क्य खण्डयति नन्वित्यादिना। शब्दानुपात्तत्वेऽपि स्वरूपेणाऽदन्तप्रकृतिप्रत्ययसन्निपातमादाय जाताऽङ्गसंज्ञा "यस्येति च" इति लोपे निमित्तं न स्यादिति भाष्येण सन्निपातस्य शब्दोपात्तत्वे एव परिभाषाप्रवृत्तौ मानाभाव इति भावः।

'शि'। शीत्यविभक्तिको निर्देशः। महासंज्ञाकरणं पूर्वाचार्यानुरोधात्। *अन्यतमस्य त्विति*। एवं च 'सामान्यादिष्वन्यतमत्' इत्यादिप्रयोगाः प्रामादिका एवेति भावः। *सोरमादेशे इति*। यत्तु प्राचोक्तम्—स्वमोरमादेशे वा जरसिति, तद्भाष्यविरुद्धम्। एवं च अजरसं वर्तते इति, हे अजरसमिति चापशब्द एव। अजरसं पश्येति तु प्रयोगः साधुः। किं तु अमादेशे कृते जरस् इति प्राच उक्तिरेवासाध्वी, परत्वाज्जरसो न्याय्यत्वात्, पूर्वविप्रतिषेधे प्रमाणाभावाच्च।

'*सान्त महतः संयोगस्य*'। सान्तेति पृथक्पदं लुप्तषष्ठीकम्, संयोगस्येत्यनेन समानाधिकरणमिति व्याचष्टे- *सान्तसंयोगस्येति*। *उपधाया इति*। उपधाग्रहणं पूर्वमात्रोपलक्षणम्, पारिभाषिकार्थस्येहासंभवात्। *मासश्छन्दसीति*। मासित्यस्य तकारः स्यात् भादौ प्रत्यये छन्दसीति वाक्यार्थः, माद्भिः शरद्भिर्दुरोदरं तव इत्युदाहरणम्।

'*ह्रस्वो नपुंसके*'। इह ह्रस्वश्रुत्या 'अचः' इत्युपस्थितम्, तेन

---

तद्धितशसोऽपि ग्रहणमिति न वाच्यम्, येनानुबन्धेन सानुबन्धकत्वं तदनुच्चारण एव तत्प्रवृत्तेः। अनुरोधादिति। तेन स्वशास्त्रस्य प्रामाण्यज्ञापनमिति भावः। तद्भाष्येति। सन्निपातपरिभाषया विभक्त्यादेशे जरसभावस्य 'जरायाः' इति सूत्रे भाष्ये स्पष्टमुक्तेरिति भावः। पश्येति त्विति। तुनाऽत्रा-

---

ङ्गांशे उत्थिताकाङ्क्षत्वेन तद्विशेषणत्वस्य न्याय्यत्वात्। अत एवानन्त्यविकार इति परिभाषया हंसशिरांसीत्यादिप्रयोजनान्युपपद्यन्ते 'ष्यङः सम्प्रसारणम्' इति सूत्रभाष्ये, निमित्तस्य कार्यिविशेषणत्वकल्पनेनोक्तपरिभाषायाः प्रयोजनान्यथासिद्धिप्रदर्शनन्तु शिष्यबुद्धिवैशद्यार्थम्, अत एव परिभाषाया आवश्यकत्वाभिप्रायेण तत्सूत्रव्याख्यानशेषे उदात्तनिर्देशात्सिद्धमित्युपसंहारः कृतो भगवता। तया परिभाषया 'हंसो' 'त्र्यंम्बक' इत्यत्र दोषपरिहारस्तु न सम्भवति, अन्त्यसदेशानन्त्यसदेशयोर्युगपत्प्राप्त्यभावेन तस्याः प्राप्त्यभावात्। न च हंस इत्येतत्सिद्धये या रीतिरुक्ता तयैव हंसशिरांसीत्यत्र दोषाभावे सिद्धेऽनन्त्यविकार इति परिभाषायास्तत्र सद्भागे विफल इति वाच्यम्, 'सान्त' इति सूत्रस्य यथाश्रुतार्थपक्षाभिप्रायकत्वात्। पारिभाषिकार्थस्य अन्त्यालव्यवहितपूर्वस्य श्रीपायेत्यत्र सन्निपातपरिभाषया दोषाभावप्रतिपादनं यत्परसमूहे कृतन्नदुपपादनमवर्णमाश्रित्येत्यादिना मूले कृतन्तन्नोपपद्यते, यादेशोपजीव्यस्य ह्रस्वकारस्य दीर्घेणैव

प्रातिपदिकस्य विशेषणात् तदन्तविधिरित्याह—*अजन्तस्येति* । प्राति-पदिकस्याच इति तु न व्याख्यातम् , सम्भवति सामानाधिकरण्ये वैयधिकरण्यस्यान्याय्यत्वात् , सुवाग्ब्राह्मणकुलमित्यादौ अतिव्याप्तेश्च । *सन्निपातेति* । अवर्णमाश्रित्य कृतो यादेशः कथं तल्लोपे निमित्तं स्यात् ? एतच्च 'एओङ्' सूत्रे, 'इको गुणवृद्धी' इति सूत्रे च भाष्ये ध्वनितं कैयटेन प्रतिपादितं शब्दकौस्तुभे निष्कर्षं प्रापितमिति तत

---

रुचिर्बोधिता । तद्बीजं तूक्तम् । अवर्णमिति । ह्रस्वत्वविशिष्टमवर्णमित्यर्थः । यादेशेऽत इत्यनुवृत्तस्तत्र यद्यपि 'कष्टाय' इति निर्देशप्रापितदीर्घेण ह्रस्वत्वांशो निवर्तितस्तथाप्यवर्णत्वमादेशे ऽनुवर्तते, तदपि चेल्लोपेन निवर्तेत तर्हि परिभाषाविरोधः स्पष्ट एवेति भावः। भाष्ये इति। गाधातोष्टे गुणेन अकारे आर्धधातुकोपदेशेऽदन्तत्वाभावादतो लोपाभावेऽपि पररूपेण सामगस्य सिद्धौ गापोष्टकः कित्करणाल्लिङ्गादाकारस्य गुणो नेति व्यर्थं तत्रेग्ग्रहणमिति भाष्ये उक्तम्। कैयटेनेति । सामागायेत्यत्रासति टकः कित्त्वे एकादेशस्य पूर्वान्तत्वेन ग्रहणात् आकारस्य धात्ववयवत्वेनातो लोपः स्यात्, कित्त्वे तु 'आतो लोप' इत्यालोपे धात्वनवयवत्वादप्रवृत्तिरित्याशङ्क्य सन्निपातपरिभाष-

---

निवर्तनात्तस्यासत्त्वेन 'आतो धातोः' इत्यनेन तदनिवर्तनादतो भावं व्यनक्ति—ह्रस्वत्व-विशिष्टमित्यादिना । तत्र श्रीपायेत्यत्र अवर्णत्वम् अत्वजातिः अनुवर्तते । अस्ति-ग्रहणादिति पूर्वान्तवद्भावलभ्यधात्ववयवत्वस्याचः परस्मिन्नित्यनेनाकारेऽतिदेशादि-त्यर्थः । इत्याशङ्क्येति । तद्व्यावृत्त्या चरितार्थकठकः कित्त्वं कथमाकारस्य गुणो नेत्यर्थे ज्ञापकम्भविष्यतीति भावः। सन्निपातपरिभाषयेति। एतत्परिभाषाप्रवृत्तिश्चोक्तरीत्यैव। अकित्त्वेऽपीति । एतेन कित्वस्य ज्ञापकतोपपादिता । कौस्तुभोक्तरीत्योक्तां ज्ञापकता-ङ्खण्डयति—परे त्वित्यादिना। व्याप्यात्वजातीति। व्याप्याऽत्वजातिर्यस्मिन्नित्यर्थः। यादेशो लोपस्य निमित्तमित्यर्थः परिभाषया न लभ्यते। 'जातिः पदार्थः' इति पक्षे तपर-सूत्रस्य जातिपक्षप्राप्तसवर्णग्रहणवारकत्वस्यैव सत्त्वेन यत्र यत्र तपरकरणन्तत्र सर्वत्र व्याप्यजातिनिर्देश एव बोध्यते । एवञ्च प्रकृते 'ङेर्यः' इत्यस्य प्रवृत्तौ तादृशव्याप्यजातिविशिष्टसन्निपातो निमित्तन्तस्य दीर्घेणैव निवर्तनात्तद्विघातकत्वस्य लोपस्यास्तीति भावः ।

ननु परिभाषायाः सन्निपातलक्षणो विधिः स्वनिमित्तसन्निपातस्य साक्षात्परम्परया यद्विघातकन्तस्यानिमित्तमित्यर्थोऽस्त्विति परिभाषाप्रवृत्तिः स्यादेवेत्यतस्तत्परिभाषार्थं-माह—सन्निपातपरिभाषायाश्चेति । परिभाषाघटकतत्पदस्य यच्छब्दसाकाङ्क्षत्वेन

एवाधार्यम् । एवं च याधातौ शुभंयाशब्दस्य क्लीबस्य ङयि शुभंय इति माधवेनोदाहृतं तन्नादर्तव्यमिति भावः ।

'स्वमोर्नपुंसकात्' । अयं लुक् पूर्वविप्रतिषेधेन त्यदाद्यत्वस्य,

---

याऽकित्त्वेऽपि न आतो लोप इति तेन प्रतिपादितम् । शब्दकौस्तुभे इति । पूर्वोक्तभावश्च तत्रोक्तः । परे तु व्याप्याऽत्वजाति-यञादिसन्निपातनिमित्तो दीर्घो न स्वसन्निपातविघातकलोपनिमित्तम् । सन्निपातपरिभाषायाश्च सन्निपातलक्षणविधिप्रवृत्तेः प्राक् तन्निमित्तभूतो यः सन्निपातस्तद्विघातकस्य स्वातिरिक्तस्य स्वयमनिमित्तमित्यर्थ इत्याहुः ।

---

यद्व्यक्तिसन्निपातनिमित्तककार्यमभिन्नकार्योपजीव्यञ्जातन्तस्य तस्य निमित्तस्य ताद्दशसन्निमक्तार्थ विघातकत्वेत्यर्थं एव लभ्यते । एवञ्च न सूक्तोक्तरीतिमादाय परिभाषायाः सञ्चारः, किन्तु यञादिप्रत्ययत्वावच्छिन्नसन्निपातनिमित्तो दीर्घो लोपे निमित्तञ्च भवतीत्येव परिभाषायाः प्रवृत्तिर्भवतीत्याशयः ।

---

१ 'सामगाय' इत्यत्र दीर्घेण ह्रस्वत्वविघाते जातेऽपि अत्वजातेः सत्त्वेन तत्सन्निपातविघातकः "आतो धातोः" इत्यालोपः सन्निपातपरिभाषया न भवति । अन्यथा "इको गुण" इति सूत्राभावे आकारस्य गुणे पररूपे पूर्वान्तवत्त्वेन धातोरकारस्य सत्त्वेन लोपः प्राप्नोति । "आतो लोपः" इत्यालोपे 'सामगः' इत्यस्य सिद्धौ तु 'सामगाय' इत्यत्र धातोराकाराभावेन लोपो न प्राप्नोतीति फलभेदसत्त्वेन टकः कित्करणेन आकारस्य गुणो न स्यादिति भाष्योक्तज्ञापकासङ्गतिः स्यादिति भावः ।

२ मूले 'श्रीपाय' इत्यत्र ह्रस्वत्वसमानाधिकरणात्वजात्याश्रयमाश्रित्य कृतस्य यादेशस्य "कष्टाय" इति निर्देशेन सन्निपातपरिभाषाया अप्रवृत्त्या दीर्घादेशे निमित्तत्वेऽपि अत्वजातिविनाशके आलोपे संनिपातपरिभाषाया अप्रवृत्तौ मानाभावेन तस्य निमित्तत्वं न स्यादित्युक्तं तत्खण्डयन्नाह—परे त्विति । अयम्भावः—जातिपक्षे तपरसूत्रस्य जातिपक्षप्राप्तसवर्णग्रहणवारकत्वमवश्यं वाच्यम् । तथा च यत्र यत्र तपरकरणं तत्र तत्र अत्वव्याप्यह्रस्वत्वम्, इत्वव्याप्यह्रस्वत्वमित्येवंरूपेण ह्रस्वत्वादिरूपव्याप्यजातिमेव बोधयति । तच्च ह्रस्वत्वं तत्तज्जातिव्याप्यं नाना । तथा च यादेशे निमित्तस्य ह्रस्वत्वसमानाधिकरणात्वस्य दीर्घेणैव हननाल्लोपस्य यादेशसन्निपातनिमित्तकत्वाभावेन यादेशमुपजीव्यत्वेनाश्रित्य परिभाषया लोपवारणमशक्यम् । तस्माद् व्याप्यात्वजातिः=अत्वव्याप्यं ह्रस्वत्वम् व्याप्यात्वजातिश्च यञादिश्चेति व्याप्यात्वजातियञादी तयोर्यः सन्निपातस्तन्निमित्तो यो दीर्घः स संनिपातविघातकलोपनिमित्तं न स्यादित्येवंरीत्या लोपो वारणीयः । सन्निपातपरिभाषायाश्च 'सन्निपातनिमित्तकविधिप्रवृत्तेः प्राक् तादृशविधिनिमित्तभूतो यः सन्निपातस्तस्य साक्षात् विघातकं यत्स्वातिरिक्तं शास्त्रं तस्य निमित्तं न भवति इत्येवार्थः । प्रकृते सन्निपातलक्षणो विधिर्दीर्घः तत्प्रवृत्तेः प्राक् तन्निमित्तभूतो यो ह्रस्वत्व–यञाद्योः सन्निपातस्तस्य विघातकं यत्स्वातिरिक्तम्=दीर्घातिरिक्तम् लोपरूपं कार्यम् तस्य स्वयं निमित्तं न स्यादिति लोपाभावः सिध्यति । ह्रस्वत्वयञादिसन्निपातमादाय जायमानो दीर्घादेशः स्वसन्निपातविघातके स्वस्मिन्नपि निमित्तं न स्यादिति दीर्घादेशानापत्तिरित्युक्तं स्वातिरिक्तेति । सूत्रारम्भसामर्थ्यात् स्वेन स्वसंनिपातविघातः सह्य एवेति भाव इत्यन्यत्र विस्तरः ।

किमः कादेशस्य च बाधकः । परत्वाद्धि स्यदाद्यत्वेऽम्भावेन तं कुलमिति स्यात् ।

*वृद्ध्यौत्वेति* । अतिसखीनि कुलानीत्यत्र 'सख्युरसम्बुद्धौ' इति णिद्भावाद्वृद्धिः प्राप्ता, वारिणेत्यत्र तु 'अच्च घेः' इत्यौत्वम्, प्रियक्रोष्टूनीत्यादौ तृज्वद्भावः प्राप्तः । ननु नुम्नुटोः को विशेषस्तत्राह—*नामीति* । नुमस्तु अङ्गभक्तत्वात् तस्मिन् सति दीर्घो न स्यादिति भावः ।

*'तृतीयादिषु'* । *पुंवदिति* । अर्थान्नुम्ह्रस्वयोः प्रतिषेधोऽयम् । प्रवृत्तिनिमित्तभेदादिति । पीलुशब्दस्य हि वृक्षत्वव्याप्यजातिर्वृक्षे प्रवृत्तिनिमित्तम्, फले तु फलत्वव्याप्यजातिर्वृक्षविशेषप्रभवत्वं वा । उभयथाऽपि पुंनपुंसकयोर्नैकं प्रवृत्तिनिमित्तमिति भावः ।

*'अस्थिदधि'* । *अतिदध्नेति* । दधि अतिक्रान्तेनेत्यर्थः । यत्तु—प्रियदध्नेति 'उरःप्रभृतिषु' दधिमधुशलीति पाठात् नित्यः कप् प्राप्तः, भाष्यकारप्रयोगादेव प्रियदधिशब्दे न भवतीत्याहुः, तच्चिन्त्यम्,

---

पूर्वविप्रतिषेधेनेति । 'अन्तरङ्गानपि' इत्यस्योपलक्षणमिदम् । अत्रत्यवार्तिकानुरोधेन त्वेतदुक्तम् । 'त्यदादिभ्यश्चेति वक्तव्यम्' इति हि तत्र वार्तिकम् । तं कुलमिति स्यादिति । द्वितीयैकवचन इति शेषः, प्रथमैकवचने तु सं कुलमिति स्यादिति बोध्यम् । नुम्ह्रस्वयोरिति । पुंसि विहितस्य भावस्यातिदेश्यस्याभावात् ह्रस्वनुमोर्निषेधोऽतिदेशसामर्थ्याद् व्याप्तिन्याया-

---

ननु लुकः सर्वापेक्षया बलवत्त्वस्य सिद्धान्तसिद्धतयाऽतुल्यबलत्वेन पूर्वविप्रतिषेधेनेत्ययुक्तमत आह—अन्तरङ्गेति । मूलासङ्गतिम्परिहरति—अत्रेति । तत्र=भाष्ये । अत्र तुना न्यायसञ्चारेणैव समाधानमुचितन्न तु विप्रतिषेधशास्त्रेणेति ध्वनितम् । मूलासङ्गतिं शेषपूरणेन परिहरति—द्वितीयेति ।

ननु पुंवद्भावेन पुंसि यत्कार्यं विहितन्तद्भाव एव लभ्यते, न त्वभावातिदेश इत्यत आह—पुंसीति । अभाववद्व्याप्तिदेशे हेतुमाह—व्याप्तिन्यायादिति । स्वराभावस्या

---

१ वस्तुतस्तु वार्तिकमपूर्वमेव, अन्यथा 'यदि लुङ् न स्यात्तदा त्यदाद्यत्वेऽम् स्यात्' इति सम्भावनया चतुर्थबाधबीजेनामोऽपवादत्वेन लुकोऽप्रवृत्तौ रूपासिद्धिः ।

२ नेति वक्तव्ये पुंवद्ग्रहणसामर्थ्यादित्यर्थः । लाघवादाह—व्याप्तिन्यायेति—विनिगमनाविरहात्पुंसि यस्य यस्य नपुंसककार्यस्याभावः प्राप्नोति तस्य तस्य सर्वस्याप्यत्राभावोऽतिदिश्यत इति भावः ।

भाष्ये तादृशपाठस्य बहुषु पुस्तकेष्वनुपलम्भात्। स्त्रियान्तु 'प्रियदध्न्या' 'प्रियदध्न्यै' इति केचित्, तन्न, सन्निपातपरिभाषया बहिरङ्गपरिभाषया च ङीपोऽप्रवृत्तेः, तस्मात् पुंसीव स्त्रियामपि अतिदध्नेत्यादिकमेव बोद्धव्यम्।

*सुधिनी इति*। परत्वान्नुमा इयङ् बाध्यते। *सुधियेति*। पुंवत्त्वपक्षे नुमोऽभावादियङ्। बह्व्यः श्रेयस्यो यस्य तत् बहुश्रेयसी कुलम्, अत्र नपुंसकह्रस्वत्वं न, 'ईयसो बहुव्रीहेर्न' इति ह्रस्वमात्रस्य प्रतिषेधादिति श्रीपतिपुरुषोत्तमविश्वरूपादयः। अन्ये तु उपसर्जनह्रस्व एव निषिध्यते, नपुंसकह्रस्वत्वं तु स्यादेव 'बहुश्रेयसि' बहुश्रे-

---

श्रयणाच्चेति भावः। 'नविषयस्य' इति स्वरस्य तु न निषेधः, भिन्नकर्तृकत्वात्, विषयपदेन नपुंसकत्वाभावेऽपि तत्प्रवृत्त्यङ्गीकाराच्च। नुमोऽभावादिति। ह्रस्वाभावेन नाभावाभावाच्चेयङिति भावः। उपसर्जनह्रस्व एवेति। 'ईयसो बहुव्रीहौ पुंवत्' इति हि भाष्ये पठितम्, ईयसः परस्य स्त्रीप्रत्ययस्य बहुव्रीहौ विद्यमानस्य पुंवत्=पुंविषयस्य ईकारस्य यथा न ह्रस्वस्तथाऽस्यापीति तदर्थः। ईयसन्ताद्विहितो यः स्त्रीप्रत्ययस्तदन्तान्तबहुव्रीहौ पुंवदिति तु नार्थः, बहुव्रीहेः पुंवत्त्वेऽपि उपसर्जनस्य श्रेयसीशब्दस्य स्त्रीप्रत्ययान्तत्वानपायेन उपसर्जनह्रस्वस्य दुर्वारतापत्तेः। एवं च प्रत्यासत्त्या स्त्रीप्रत्ययत्वनिमित्तकगोस्त्रियोरित्यस्यैव तेनाभावातिदेश इति भावः। तदेवार्थताऽत्र पठितम्। न च नेत्येव सिद्धे पुंवद्वचनं व्यर्थम्, वार्तिकेषु

---

ष्यतिदेशो भविष्यतीति शङ्कां वारयति—नविति। भिन्नेति। पाणिनिभिन्नशान्तनवकर्तृकत्वादित्यर्थः। ननु पाणिनिना यथा "भयामन्त" इति सूत्रेणान्याचार्यविहितप्रत्ययाद्यनुवादेनायादेशविधानङ्कृतन्तथात्रान्यविहितस्वराभावस्याप्यतिदेशः स्यादत आह—विषयपदेनेति। ह्रस्वान्तस्य स्त्रीविषयस्येत्यतो विषयपदानुवृत्त्यैव सिद्धे पुनर्विषयपदोपादानसामर्थ्येनातिदेशिकलिङ्गान्तरयोगाय तस्य प्रवृत्तिरित्यर्थो भविष्यतीति भावः। न्यूनताम्परिहर्तुमाह—ह्रस्वाभावेनेति। एतेन नुमोऽभावेऽपि परत्वान्नाभावेने यङादेशस्य बाधापत्तिरिति कस्यचिदुक्तिः प्रत्युक्ता। उपसर्जनह्रस्वस्यैव यथा बाधकस्तथोपपादयति—ईयस इत्यादिना। प्रत्यासत्त्या=तत्र पाठात्तच्छेषत्वस्य झटिति प्रतीतिरित्येवम्प्रत्यासत्त्या। तदेव=तद्वार्त्तिकमेव। एवञ्चानुपूर्वीन्यत्यास एवात्र न स्वयंभेद इति "ईयसो बहुव्रीहेर्न" इति वचनन्निर्मूलमिति शङ्का न कार्येति सूचितम्। अन्योक्तसाधकन्निरस्यति-नचेति। व्यर्थमिति। एवञ्च तृतीयादिष्विति

यसिनी' इत्याद्याहुः । स्नुः प्रस्थः सानुरस्त्रियामित्युभयलिङ्गः सानुशब्दः, तस्य नपुंसकत्वे रूपमाह—*स्नूनि सानूनीति* । पुंसि शम्भुवत् । प्रियक्रोष्टूनीति । यत्तु प्राचा ÷ प्रियक्रोष्टॄणीत्युक्तम्, तत्पूर्वविप्रतिषेधपरभाष्यवार्त्तिकविरुद्धम् ।

---

लाघवगौरवविचाराभावस्य तत्र तत्र भाष्ये ध्वनितत्वादिति बोध्यम् ।

इत्याहुरिति । अत्रारुचिबीजं तु 'ईयसश्च' इति सूत्रे भाष्ये 'ईयस उपसर्जनस्त्रीप्रत्ययस्य दीर्घत्वं वक्तव्यम्—बहुश्रेयसी, पुंवद्वचनात्सिद्धम्' इत्युक्तम्, तेनास्य नपुंसकह्रस्वनिवृत्त्यर्थत्वं लभ्यते । अन्यथा वचनेन वचनप्रत्याख्यानासङ्गतिः, मम तु मते नपुंसकह्रस्वनिवृत्त्यर्थमावश्यकं तदिति युज्यते एव तेनास्य प्रत्याख्यानम् । दीर्घत्वं हि प्रत्यासत्त्योपसर्जनह्रस्वत्वापवादः, सामान्यतो ह्रस्वमात्रापवादत्वे हि प्रत्याख्यानासङ्गतिरिति दिक् । पूर्वविप्रतिषेधपरभाष्येति । अङ्गाधिकारे तदन्तविधेः सत्त्वेन तदन्तग्रहणेन 'यदागमाः' इति न्यायेन नुम्विशिष्टस्य ग्रहणेऽपि सूत्रे षष्ठीनिर्देशा-

---

सूत्रस्थपुंवदिति पदे इवात्रापि तथास्त्विति भावः । वार्तिकेष्विति । एतद्विशेषोपादानेन सूत्रेषु लाघवगौरवविचारार्थं वार्तिककारस्य भाष्यकारस्य च प्रवृत्त्या तत्र तथाकल्पनमुचितमिति ध्वनितम् ।

अत्र आहुरित्युपादानविषये । तदिति । पुंवद्वचनमित्यर्थः । तेन = तादृशभाष्येण । अस्य = उपक्रान्तदीर्घत्ववचनस्य । ननु दीर्घत्वविधायकवचनस्याप्युभयबोधकत्वमस्त्वित्यत आह—दीर्घत्वं हीति । प्रत्यासत्त्या उपसर्जनपदोपादानरूपप्रत्यासत्तिनिमित्तेन प्रत्याख्यानपरभाष्यप्रामाण्येन पुंवद्भावबोधकवचनस्थले न प्रत्यासत्तिर्विवक्षिता, अत्र तु सा विवक्षितेति भावः । नचैवम्पुंवद्भावेन ह्रस्वमात्रबाधवत् 'जश्शसोः शिः' इत्यादिबाधोऽपि स्यादिति बहुश्रेयसिनी बहुश्रेयसीनीत्यादिरूपाणामसिध्यापत्तिरिति वाच्यम्, ह्रस्वप्रकरणे पाठे तत्तदभावबोधकत्वस्यैव कल्पनात् । अत एवाह—दिगिति । मूले—पूर्वविप्रतिषेधेति । वृध्यौत्त्वेति पूर्वविप्रतिषेधसूचकभाष्येत्यर्थः ।

ननु पूर्वविप्रतिषेधादस्तु नुमागमस्तथापि 'पुनः प्रसङ्गविज्ञान'न्यायेन निर्दिश्यमानपरिभाषया चोक्तरूपं स्यादेवेति शङ्कानिरासायाह—अङ्गाधिकार इति । सूत्रे षष्ठीनिर्देशाभावेनेति कथनेन तस्याः परिभाषाया अत्र विषयतैव नास्तीति सूचि-

---

१ 'ईयसो बहुव्रीहौ पुंवत्' इति वचनेन 'ईयस उपसर्जनस्त्रीप्रत्ययस्य दीर्घत्वं वक्तव्यम्' इति वचनं भगवता प्रत्याख्यातम् । उपसर्जनह्रस्वमात्रस्य पुंवद्भावेनापि निषेधे प्रत्याख्यातवैफल्यं स्यात् । मन्मते तु नपुंसकह्रस्वनिवृत्तये पुंवद्वचनस्यावश्यकतया तेन तत्प्रत्याख्यानं संगच्छत इति नपुंसकह्रस्वस्याप्यनेन निषेधः सिध्यतीति भावः ।

यत्तु व्याचख्युः—'विभाषा तृतीयादिष्वचि' इत्येतद्विषयको विप्रतिषेधः, भाष्ये प्रियक्रोष्टुने अरण्यायेत्यस्यैवोदाहृतत्वादिति, तन्न, उदाहरणस्य सङ्कोचकत्वे मानाभावात्। यदाहुः—न चोदाहरणमादरणीयमिति। किं च पूर्वविप्रतिषेधस्य वैकल्पिकतृज्वद्भावमात्रविषयकत्वे तत्र तृज्वद्भावग्रहणं व्यर्थमेव स्यात्, प्रियक्रोष्टुनेत्यादेर्विप्रतिषेधं विनापि पक्षे सुसाधत्वात्। न च प्रियक्रोष्ट्रेत्यादिनिवृत्तिस्तत्फलम्, पुंवद्भावपक्षे तस्य दुर्वारत्वात्, स्वयमपि तथोदाहृत-

भावान्निर्दिश्यमानस्य नुमा व्यवधानमित्यस्याभावेऽपि पूर्वविप्रतिषेधसामर्थ्यात्सकृद्गतिन्यायेन पुनस्तृज्वत्त्वाभावः। अत्रानयोर्यौगपद्यासम्भवेन विरोध इति भावः। इत्यस्यैवेति। अन्यथा प्रथमोपस्थितसर्वनामस्थानोदाहरणत्यागो निर्बीजः स्यादिति भावः। पक्षे = तृज्वत्त्वाभावपक्षे। उदाहृतत्वाच्चेति। न च 'प्रियक्रोष्टृणे' इत्यादिव्यावृत्त्या चारितार्थ्यम्, 'प्रियक्रोष्टु ए' इत्यवस्थायां नुम्तृज्वत्त्वयोः प्राप्तयोः परत्वात्तृज्वत्त्वे सकृद्गतिन्यायेन नुमभावसिद्धेः। पुनः प्रसङ्गविज्ञानाश्रयेण वचनारम्भापेक्षया सकृद्गतीत्याश्रित्य वचनानारम्भस्यैव लघुत्वादिति भावः। पुंवद्भावाभावादिति।

तम्। एतेन नुम्नित्यः, तृज्वद्भावस्तु कृते नुमि तेन व्यवधानान्न प्राप्नोतीत्यनित्य इति नित्यानित्ययोरतुल्यबलत्वेन विप्रतिषेधासङ्गतिरिति कस्यचिदुक्तिः प्रत्युक्ता। अत्रानयोः=वार्तिकबोध्यलक्ष्यनुम् तृज्वत्त्वयोः। असम्भवेनेति। स्वस्वनिमित्तानन्तर्यविघातकत्वेनेत्यादिः। अन्यथा 'तृज्वत् क्रोष्टुः' इति सूत्रविहितबाधकत्वस्यापि कल्पने मूले उदाहृतत्वाच्चेत्यन्तेन भवदुक्त्या पूर्वविप्रतिषेधपरवचनस्य चारितार्थ्यं न सम्भवतीति प्रतिपादितन्तत्रान्यकृतशङ्कां वारयति–नचेति। वचनेति। पूर्वविप्रतिषेधवचनेत्यर्थः। भाषितेत्यादिसमाहारे द्विगौ तस्य स नपुंसकमिति नपुंसकत्वविधानादिति भावः। प्रियक्रोष्टूनीत्येवेत्येवकारेण नित्यतृज्वद्भावविषयकत्वन्तस्येति लभ्यते, तच्चायुक्तम्,

१ 'तृज्वत्' इति सूत्रे यदि षष्ठ्यन्तं पदं स्यात्तदा निर्दिश्यमानपरिभाषोपस्थित्या नुमा व्यवधानान्नुमि कृते निर्दिश्यमानक्रोष्टुशब्दस्य विभक्त्यव्यवहितपूर्वत्वाभावेन तृज्वद्भावो न स्यादिति वक्तुं शक्यम्, तथा तु नात्रेति तृज्वद्भावः स्यादिति मतं खण्डयितुं निर्दिश्यमानपरिभाषानुपस्थित्या तृज्वद्भावाभावसाधकस्य 'नुमा व्यवधानम्' इति वचनस्य विषयाभावेऽपि पूर्वविप्रतिषेधसामर्थ्यादत्र सकृद्गतिन्यायाश्रयणेन तृज्वद्भावो नैव स्यादिति भावः। वस्तुतस्तु 'तृज्वत्क्रोष्टुः' इति सूत्रे 'क्रोष्टुः' इति षष्ठ्यन्तमेव। अत एव 'अङ्गस्य क्रोष्टुस्तृज्वद्भवति' इति भाष्यं सङ्गच्छते। क्रोष्टुशब्दान्ङसि तृज्वत्त्वे 'क्रोष्टुः' इति षष्ठ्यन्तं सिध्यति। तथा च निर्दिश्यमानपरिभाषयोपस्थितौ निर्दिश्यमानस्य विभक्त्यव्यवहितपूर्वत्वाभावे नैव तृज्वद्भाववारणं बोध्यम्।

त्वाच्च । न च समाहारद्विगौ पञ्चक्रोष्टुनेत्यादौ पुंवद्भावाभावात् तत्र तृज्वद्भावनिवृत्तिः फलमिति वाच्यम्, एवमपि भाष्योदाहरणासामञ्जस्यात् । उपलक्षणं तदिति चेत्, हन्तैवं प्रियक्रोष्टूनीत्यत्रोपलक्ष्यतां भाष्योदाहृतप्रातिपदिकांशानुग्रहायेति दिक् ।

*सुल्वेति* । पुंवत्त्वपक्षे नुमभावाद्यण् । *सुलुनेति* । 'ओः सुपि', इति यणं बाधित्वा परत्वान्नुम् । *यदिगन्तमिति* । एतच्च—रा दाने इति धातौ अतिरि ब्राह्मणकुलमिति प्रक्रम्य माधवेन स्पष्टीकृतम् । अन्ये तु सुधीशब्दो भाषितपुंस्कः, स एवेदानीमिगन्तः, एकदेश-

---

भाषितपुंस्कत्वाभावादिति भावः । इत्यत्रैवेति । इत्यत्रापीत्यर्थः । प्रातिपदिकांशेति । प्रातिपदिकांशस्याप्यनुग्रहायेत्यर्थः ।

इति दिगिति । दिगर्थस्तु यद्यपि चतुर्थ्यन्तोदाहरणपरभाष्यप्रामाण्यात् पुंवत्त्वपक्षेऽनभिधानेन तृज्वत्त्वाभावकल्पना न्याय्या, भाष्यकृता हि सूत्रत्रयस्य प्रत्याख्यानायाश्रितस्य शब्दानां नियतविषयकत्वस्य सूत्रारम्भेऽप्यावश्यकत्वद्योतनाय पूर्वविप्रतिषेधवार्तिके तदुदाहृतम्, तथाऽपि न चोदाहरणमादरणीयमिति न्यायेन सर्वनामस्थानविषयकताऽप्यस्य न्याय्या, उदाहृतातिरिक्तोदाहरणाभाव इत्येवं परतया नादरणीयमिति तदर्थ इति बोध्यम् । एकदेशविकृतस्येति । स च न्यायोऽशास्त्रीयस्याप्यति-

---

प्रागुक्तभाष्यीयप्रयोगविरोधात् अत आह—इत्यपीति । प्रातिपदिकांशस्यापीति । अपिना तदवयवस्य परिग्रहः । अत एव भाष्ये कृशक्रोष्टुनेत्यस्योपादानेऽपि मूले 'प्रियक्रोष्टुने' इत्युदाहृतम् । एतच्च मूलग्रन्थसङ्गमनायोक्तम् । वस्तुतस्त्वेवङ्कल्पनोचिता, भाष्यकृतोऽज्ञानकल्पनापत्तेरतो दिगर्थमाह—दिगर्थस्त्विति । अभावकल्पनेति । अभावस्यैव कल्पनेत्यर्थः । तदुदाहृतमिति । चतुर्थ्यन्तमुदाहृतमित्यर्थः । अस्य= उक्तवार्तिकस्य । न्याय्या = स्वार्थसिद्ध्यर्थमारब्धस्याहावस्य पान्थोपकारकत्वे ऽधिकाभ्युदयवदेषा न्याय्या । न चोदाहरणेति ग्रन्थस्योदाहरणत्यागः कार्य इत्यर्थो यद्यप्यागतः प्रतीयते तथापि तदुदाहरणप्रदर्शनान्यथानुपपत्त्या स नोचित, इत्याशयेनाह—उदाहृतेति । ननु सुधीशब्दनिष्ठस्य भाषितपुंस्कत्वस्य सुधुशब्देऽतिदेश एकदेशविकृतन्यायेनेति वक्तव्यन्तच्च नोचितम्भाषितपुंस्कत्वस्याशास्त्रीयत्वादत आह—स चेति ।

---

१ अपिना 'पञ्चक्रोष्टुने' इत्यादेः सङ्ग्रहः । वस्तुतस्तु उपलक्षणत्वं न युक्तम्, भाष्यकारीयाज्ञानकल्पनापेक्षया अनभिधानस्यैवौचित्यादिति गुरवः ।

२ व्याख्यातारस्तु प्रथमोपस्थित 'प्रियक्रोष्टूनि' इत्यस्य त्यागे बीजाभावेन 'प्रियक्रोष्टुने' इत्युदाहर-

विकृतस्यानन्यत्वादतः पुंवद्भावो भवतीत्याहुः। तथा च रूपमालादौ पुंवद्भाव उदाहृतः। तस्मादेजन्तेषु क्लीबेषु पुंवद्भावो माधवमते नास्ति,

---

देशकोऽशास्त्रीयविकारे चेति 'प्राग्दीव्यत' इति सूत्रस्थभाष्यसम्मतत्वादिति भावः। पुंवद्भाव इति। तेन 'सुन्दरभार्यः' इत्यादौ जातनिवृत्तेरपि दृष्टत्वेनात्रापि तेन जातह्रस्वनिवृत्तिः।

ननूपजीव्यविरोधेन ह्रस्वानिवृत्तिः, अत एव 'समासस्य' इति सूत्रे भाष्ये 'यतोऽनावः' इत्यनाव इति प्रतिषेधो 'हल्स्वरप्राप्तौ व्यञ्जनविद्यमानवत्' इत्यस्य ज्ञापक उक्तः। नाव्यमित्यादौ आदिर्नकारो न स्वरयोग्यो यश्चाकारस्तद्योग्यो नासावादिरित्यनाव इति निषेधोऽनर्थकः। न चादिरेव नकार उदात्तगुणविशिष्टान्तरतमाज्रूपोऽस्तु, यदन्तस्य द्व्यच्कस्यादिरुदात्तगुणकरूपो भवतीति च 'यतोऽनावः' इत्यस्यार्थ इति वाच्यम्, एवं हि निमित्तभूतद्व्यच्कत्वविनाशादुपजीव्यविरोधेनाद्युदात्ताप्राप्तेरिति

---

विकारे चेतीति। चकारेण शास्त्रीयविकारसमुच्चयः। भाष्यसम्मतत्वादिति। तत्र हि 'दीव्यतिशब्दैकदेशदीव्यच्छब्दानुकरणमित्युक्त्वा किमर्थं विकृतनिर्देशः क्रियते एतदेव ज्ञापयत्याचार्यो भवत्येषा परिभाषा एकदेशविकृतमनन्यवदिति' अत एव शमावित्यादौ मकाराद्यन्ते यस्माद्विहितस्तत्त्वस्यातिदेशेन पदत्वस्य सिद्धिः। ननु पुंवद्भावेन जातस्य ह्रस्वत्वस्य निवृत्तिरित्येतदयुक्तम्, 'भुक्तवन्तम्' इति न्यायविरोधादित्यत आह—जातनिवृत्तेरिति। जातस्य स्त्रीप्रत्ययस्य निवृत्तेरित्यर्थः।

उपजीव्यविरोधेन=पुंवद्भावस्य प्रवृत्ताविह यदुपजीव्यमिगन्तत्वं तद्विरोधेन। अत एव=उपजीव्यविरोधस्यान्याय्यत्वादेव। अनाव इति प्रतिषेधस्य ज्ञापकत्वमुपपादयति नाव्यमित्यादावित्यादिना। यत्र यत्रोदात्तादिविधानन्तत्रगुणविधानस्याशक्यत्वात्तद्धर्मविशिष्टधर्मिविधानमेवेत्याशयेनाशङ्क्य निराचष्टे— नचेति। अन्तरतमाज्रूपः स्थानतो ऽन्तरतमलृकाररूपादेशनिवर्त्योऽस्तु। एवं हि=नकारस्य स्थाने तादृशादेशकल्पने हि। निमित्तभूतेति। यतो ऽनाव इति सूत्रप्रवृत्तिनिमित्तभूतेत्यर्थः। तदाशयः=उक्तस्यानाव इति प्रतिषेधस्य ज्ञापकत्वप्रतिपादनाशयः।

---

णदानपरभाष्यादस्य वैकल्पिकतृज्वद्भावविषयकत्वमिति प्राचामाशयः, न तु 'प्रियक्रोष्टूनि' इत्युदाहरणादानेनेति 'न चोदाहरणमादरणीयम्' इति भाष्यबलेन तत्खण्डनमयुक्तम्, किन्तु 'प्रियक्रोष्टुने' इत्यस्य 'पञ्चक्रोष्टुने' इत्युपलक्षणापेक्षया भाष्योक्तप्रियक्रोष्टुघटितस्य 'प्रियक्रोष्टूनि' इत्यस्यैवोपलक्षणत्वं युक्तम्, उपस्थितप्रातिपदिकांशत्यागे मानाभावादित्याहुः।

1 इगन्तमङ्गमुपजीव्य जायमानः पुंवद्भावः तद्विघाते न प्रवर्तेतेति भावः। न च स्वातिरिक्तस्येति निषेधेन परिभाषाया अप्राप्तिः, यत्र सन्निपातविरोधेन तद्विघातकशास्त्रवैयर्थ्यं तत्रैव तन्निवेशात्।

मतान्तरे त्वस्ति । अतः मधवा-मराया-सुनावेत्यादि प्राचोदाहृतमपि नातीव दुष्यति ॥

इत्यजन्ता नपुंसकलिङ्गाः ॥

---

तदाशय इति चेन्न, माधवाद्यनुरोधेनास्य ग्रन्थस्य सत्त्वात् ।
इत्यजन्ता नपुंसकलिङ्गाः ।

---

माधवाद्यनुरोधेनेति । अयमाशयः ÷ यदि नुटि कृतेऽप्यात्वन्तदा सन्निपातपरिभाषा नुड्विषये न प्रवर्तते इति वक्तव्यम्, नचैवं सति रामाणामित्यादौ नुपि चेत्येव दीर्घे नामीत्यस्योपन्यासो व्यर्थः स्यादिति वाच्यम् , नित्यत्वेन तदुपन्यासात् । एवञ्च यथा ऽनित्यायास्तस्याः कार्यसम्पत्त्यर्थं प्रवृत्त्यप्रवृत्तिमध्ये आत्वायाप्रवृत्तिकल्पना तथेहापि पुंवद्भावेन जातह्रस्वनिवृत्तये तस्या अप्रवृत्तिकल्पना स्यादिति ।

इत्यजन्तनपुंसकविवरणम् ।

---

१ माधवाद्यनुरोधेनेत्यस्यायमभिप्रायः÷'माधवेन यथा नुड्विधायके संकोचसामान्याभावः स्वीकृतस्तथा पुंवद्भावविधायकेऽपि स्यादिति 'सुधी' शब्दस्य पुंवद्भावः' इति केनचिदुक्तमिति शेषः । अन्यथा माधवमते पुंवद्भावस्वीकारे 'तस्मादेजन्तेषु क्लीबेषु पुंवद्भावो माधवमते नास्ति' इति मूलग्रन्थेन विरोधः स्यात् ।

# अथ हलन्तपुँल्लिंगाः ॥

*लिडिति* । 'लिह आस्वादने' क्विप् । *लिट्सु, लिट्त्स्विति* । हस्य जश्त्वेन डः, तस्य 'खरि च' इति चर्त्वेन टः, तस्यासिद्धत्वात् 'डः सि' इति धुट्, चर्त्वं तकारः । 'न पदान्ताट्टोः' इति ष्टुत्वनिषेधः । 'चयो द्वितीया' इति तु नेह प्रवर्तते, चर्त्वस्यासिद्धत्वात् । एतेन ते च प्रत्याहारा एकचत्वारिंशदिति प्राचो ग्रन्थं व्याचक्षाणैर्यदुक्तं लिट्सु लिठ्स्विति ट्ठाभ्यां रूपद्वयमिति तत् प्रत्युक्तम् । तथा च प्रातिशाख्येऽपि 'ऊष्मोदयं प्रथमं स्पर्शमेके[1] द्वितीयमाहुरप-

घुडिति । ''डः सि' इति सूत्रेऽनुवृत्तं पदस्येति व्यधिकरणं पदावयवस्य सस्येत्यर्थ इति भावः । एके द्वितीयमिति । अत्रत्यवार्तिककार[2] इत्यर्थः । अपदान्तभाजमिति । इदमचर्त्वभाजमित्यर्थोपलक्षकम् । पदान्ते प्रायो जश्त्वप्राप्त्या चर्त्वं विना चयोऽलाभात् । तथा चेति वदता मूलकृता अस्या-

यत्तु—'ङिः सि धुट्' इति सूत्रे सप्तमीनिर्देशत्वेन सादेः पदस्येत्यर्थकल्पनात्कथमत्र धुडिति कस्यचिदुक्तिः सा नोचिता, विशेषणबोधस्य सप्तम्यन्तस्य तदादिबोधकत्वं सप्तम्यन्तविशेष्यबोधकसन्निधान एवेति सिद्धान्तादितीह पदस्येति व्यधिकरणमेवेत्याह—डः सीतीति । 'एके' इत्येतदर्थंस्यान्यत्रविशिष्टस्याभियुक्तत्वसूचनायाह—अत्रत्येति । अपदान्तभाजमित्यपदान्तशब्दस्य भावप्रधाननिर्देशेन पदान्तत्वपरतया पदान्तत्वरहितमित्यर्थः स्यात्तथाच सुगण्ठ्षष्ठ इत्यस्य सिद्धिरतस्तदर्थमाह—इदमचर्त्वेति ।

धातुपदस्य दादेरिति सूत्रे स्थितस्य धातुप्रकृतिककर्तृक्विबन्तदामलिहादिव्यावृत्त्या तस्य चारितार्थ्येनोपदेश इत्यर्थलाभप्रयोजकत्वञ्च स्यादत आह—मूले धातोरित्यावर्तते इति । अयम्भावः + सौत्रन्धातोरिति पदमेकाच इत्युत्तरसूत्रस्य तद्वाद्शब्दावयवाद्याह इत्यस्यैकाचः सत्वेन दस्य धकारवारणायावश्यकमिति प्रकृतसूत्रेऽप्युपकारकोऽस्तु ताव-

१ ऊष्मा उदयः=परो यस्य स्पर्शवर्णस्य तमपदान्तभाजं स्पर्शम्, एके=अन्ये, द्वितीयम्=प्रथमस्पर्शस्थाने खफादिकमाहुरित्यर्थः । तथा च पदान्तस्य 'लिट्सु' इत्यत्र द्वितीयादेशकरणमसङ्गतमिति भावः ।

२ एवञ्च लाघवान्यायप्राप्तस्यैवानुवादकम् 'अपदान्तभाजम्' इति । तस्माद् यत्र जश्त्वाप्राप्तिस्तत्र पदान्तेऽपि 'सुगण्ठ्षः' इत्यादौ चर्त्वं विनैव स्पर्शस्य लाभाद् द्वितीयादेशो भवत्येव ।

दान्तभाजम्' इति श्लोकेऽपदान्तेत्यादिविशेषणं सङ्गच्छते ।

'दादेर्धातोर्घः । धातोरित्यावर्त्तते । तत्रैकमतिरिच्यमानमुपदेशकालं लक्षयतीत्याशयेनाह—उपदेश इति । आवृत्तिफलं पृच्छति—उप-

---

र्थस्य सूचनात् । अत एव 'सुगण्ठ् षष्ठः'इत्यादौ भवत्येव, ढुगादीनां जश्त्वं प्रत्यसिद्धत्वेन तदप्राप्त्या चर्त्वस्याप्यभावादिति भावः ।

धातोरित्यावर्तते इति । इदं प्राचामनुरोधेन । दादेरित्यावर्तते इति युक्तम्, धातोरित्यनेन हि औपदेशिकस्य धातोरित्यर्थेन दामलिहो व्यावृत्तावपि अधोगिति न संगृह्येत । दादेर्दादेरित्यनेनोपदेशकालिकदादेरित्यर्थकेनोभयं सिध्यति । उपदेशकालमित्यस्य तात्कालिकं लक्षयतीत्यर्थः । उपदेशे दादेरिति तु फलितोऽर्थः । वाच्यार्थत्वे षष्ठ्यन्तस्य सप्तम्या विपरिणामोऽपि कर्तव्यः स्यादिति गौरवम् । धातोरित्यस्यैव लक्षणया तथार्थकस्य दादेरित्यनेनान्वयेऽपि न क्षतिरित्याशयेन तु मूले धातोरित्युक्तम् । अत एव भाष्ये—घत्वस्यासिद्धत्वाद् धुगित्यत्र ढत्वं प्राप्नोतीत्याशङ्क्यापवादत्वेन समाधायाथवा एवं वक्ष्यामि—हो ढोऽदादेरिति, ततो

---

ताप्युपदेशकाल इत्यर्थलाभः स्यादत आवृत्तिर्युक्तेति प्राचाम् हरदत्तादीनाम् । प्राचामित्युक्तिबीजम्प्रकटयति—धातोरिति । न संगृह्येतेति । तथाचाव्याप्तिरस्त्येवेति भावः । कालमात्रे लक्षणायामपीष्टासिद्धिरत आह—तात्कालिकमिति । एवञ्चोपदेशकालपदे बहुव्रीहिरिति स्वीकार्यम्, उपदेशकालिकदादित्ववतो धातोरिति सूत्रार्थः। वाच्यार्थत्वे= मूलवाक्यवाच्यार्थपरत्वे । सप्तम्या तदन्तेन, अपिना आवृत्तिलक्षणायाः समुच्चयः । मूलसङ्गतिम्परिहरन्नाह—धातोरित्यस्यैवेति । अत एव = दादिपदस्यैवौपदेशिकदादित्ववत इत्यर्थकत्वादेव । एतेन स्वोक्तव्याख्या भाष्यकारसम्मतेति दर्शयति—अपवादत्वेनेति । दादेरितिं । विशेषत उपादानेन विधीयमानढत्वस्यावकाशत्वेन ढत्वस्य बाधकमिति भावः । अथवेति । संहितया सूत्रपाठाभिप्रायेण होढोऽदादेरिति पृथक्करणम्, तथाच दुहूधातोर्दादित्वान्न ढत्वप्राप्तियोग्यतेति धुगित्यत्र घत्वमेव भविष्यति । अस्मिन्पक्षे घत्वमुत्सर्गः, ढत्वमदादिधातोर्विहितमपवाद इति घत्वसर्थाद्दादिधातोरेव भविष्यतीति दादिपदं यथाश्रुतार्थकमनर्थकमिति भावः । ततो धातोरितीत्यस्य धातोर्घ इत्यर्थः । नन्वेवन्न्यासे द्रुहधातोः 'वा द्रुह' इति सूत्रविहितघत्वाभावपक्षे

---

१ दादेरित्यस्योपदेशकालमात्रार्थकत्वेऽनन्वयापत्त्या सप्तम्यन्तेन विपरिणमय्यार्थकल्पने गौरवमिति तत्कालिके लक्षणया उपदेशकालिकाभिन्नस्य दादेरित्यर्थेनान्वयः सिध्यतीति भावः । औपदेशिकत्वञ्च= धातुपाठपठितसजातीयत्वम् ।

धातोरिति दादेरिति वर्तते नेति निवृत्तमित्युक्तम् । द्रुहेस्तु 'वा द्रुह' इत्यनेन ढत्वस्यापि विधानात् ध्रुडित्यादौ न दोषः इति तदाशयः । तत्र धातोरिति सूत्रे भाष्यकृतदादेरित्यनुवृत्तेः फलान्तराभावेन तदुपदेशवद्दादिलक्षकं सामर्थ्यात्, अर्थाधिकारानुरोधाच्च पूर्वत्र निषेध्यसमर्पकेऽप्येवम् । अत एव नामधातुविषये दामलिडित्यादौ ढत्व-घत्वाभावौ सिद्धौ, एवं च तदेकवाक्यतयाऽपवादत्वपक्षेऽपि दादिपदस्योपदेशकालिकदादिलक्षकतोचिता । आवृत्त्याश्रयणं तु बालानां स्फुटं तत्प्रतिपत्तय इति बोध्यम् । न चोपदेशे इत्येव कुतो नोक्तम्, गौरवापत्तेः । धातोरिति तु

ढत्वन्न स्यादत आह–द्रुहेस्त्विति । तत्रोपात्तौ वाशब्दस्समुच्चयार्थं इति व्याख्यास्यत इति भावः । तदाशयः = भाष्याशयः तत्र = अन्त्यपक्षे, फलान्तराभावेन= अदादिव्यावृत्तिरूपफलाभावेन असिद्धत्वेनादादौ तस्याप्रवृत्तिः सिद्धैवेति भावः । तत् = दादिपदम् । नन्वेवमुत्तरसूत्रेऽनुवृत्तिसामर्थ्यात्तल्लाक्षणिकमस्तु पूर्वसूत्रे तु दादिव्यावर्तकत्वेन चरितार्थमिति दामलिडित्यादौ ढत्वन्न प्राप्नोतीत्यत आह–अर्थाधिकारेति । चस्त्वर्थे । एवम्=औपदेशिकदादिरववल्लक्षकम् । अत एव = उक्तार्थलाक्षिकत्वादेव, यद्यप्यन्यत्रोपदेशोद्देशपदविषये सङ्कीर्णता दर्शिता तथाप्यत्र दादिपदसामर्थ्याद्भेदः कल्प्यत इति भावः । एवञ्च = उक्तरीत्येष्टसिद्धौ च । तदेकवाक्यतया = उत्तरपदैकवाक्यतया । उचितेति । द्वयोः पक्षयोः फलैक्यस्यौचित्यप्रयोजकत्वम् । नन्वेवमावृत्तिकथनविरोधोऽत आह–आवृत्त्येति । स्फुटप्रतिपत्तये उपदेशे इत्येव वाच्यमिति कस्यचिच्छङ्कान्निरस्यति–नचेति । गौरवेति । पदगौरवेत्यर्थः । नन्वेवमुपदेशे दादिर्धातुरेवेति धातोरिति व्यर्थमत आह—धातोरिति त्विति इत्यादि·

१ 'धातोर्घः' इत्यस्य दादिधातौ चारितार्थ्येनादादावुभयोः प्राप्त्या घत्वविधेरसिद्धत्वेन ढत्वसिद्ध्या तदनुवृत्तेः दादिभिन्ने घत्ववारणरूपफलान्तराभावेनेत्यर्थः ।

अत्रायं सारः—मनोरमाकृता 'धातोः' इत्यस्यावृत्तिं कृत्वा|एकस्य धातोरित्यस्यौपदेशकालिकस्येत्यर्थं लक्षणया कृत्वा दादेरित्यत्रान्वयेन औपदेशकालिकस्य दादेर्धातोरित्यर्थो मन्यते । रत्नकृता च यदि आवृत्तिराश्रीयते तदा 'दादेः' इत्यस्यैवावृत्त्या औपदेशिकदादेरित्यर्थो विधेयः, आवृत्त्या लब्धार्थस्यावृत्तपदार्थ एव प्रत्यासत्त्यान्वयौचित्यात् । धातोरित्यस्यावृत्त्या तथार्थकत्वे औपदेशिकधातोरित्यर्थ एव स्यादिति 'दामलिट्' इत्यत्र घत्वं न स्यात् । 'अधोक्' इत्यत्र तु घत्वासिद्धिरेव स्यात् । वस्तुतस्तु 'हो ढोऽदादेः' 'धातोर्घः' इति न्यासे 'दादेः' इत्यस्यानुवृत्तिसामर्थ्याद्यथा औपदेशिकदादौ लक्षणा, तथा यथाश्रुतन्यासेऽपि तत्पक्षफलैक्याय दादिपदस्यैवौपदेशिकदादेरित्यर्थकत्वमिति दिक् ।

२ वस्तुतस्तु 'दादेः' इत्यास्यानुवृत्तिर्धातोरवयवो यो दादिरिति वैयधिकरण्येनान्वयलाभाय । नचावृत्तिमकृत्वा पूर्वत्र वैयधिकरण्येनान्वयेऽपि 'अधोक्' इत्यादेः सिद्धावनुवृत्तिवैयर्थ्यम्, अर्थाधिकारानुरोधात्पूर्वत्रापि तथार्थकत्वेन धात्ववयवो यो दादिस्तदवयवभिन्नस्यैव हस्य ढत्वविधानेन 'दामलिक्' इत्यत्र ढत्वाभावस्यैवेष्टापत्त्या फलसम्भवेनानुवृत्तेश्चारितार्थ्यात् । अत एव भाष्ये 'एवमपि 'घो दादेः' इत्युच्यते, तत्रेदं न सिध्यति, अधोक्, क तर्हि स्यात् मा स्म धोक्, नैष दोषः, धातोरिति, न च दादि·

देशे किमिति । अव्याप्त्यतिव्याप्तिपरिहारः फलमित्याह—अधोगित्यादिना ।

'एकाचो बशो भष्'। झलीति निवृत्तमिति । यत्तु प्राचोक्तम्—

तद्धाडित्यादिव्यावृत्तये उत्तरत्रावश्यकम् । अव्याप्तीति । अधोगित्यादौ सा । ननु धातोरवयवो यो दादिरित्यर्थे इदं सिद्धम्, वैयधिकरण्यं च गर्दभयतेः प्रत्यये गर्धबित्यादौ भष्भावायोत्तरसूत्रे आवश्यकम्, दोग्धेति व्यपदेशिवद्भावात्सिद्धम्, स्पष्टं चेदं भाष्येऽत आह—अतिव्याप्तीति । दामलिडित्यादौ सा । न च प्रागुक्तभाष्योत्तरमधोक्सिद्धये वैयधिकरण्यान्वयपर्यन्तं भाष्यकृतोऽनुधावनं व्यर्थमिति वाच्यम्; दादेरिति वर्तते इत्यस्योक्तमाशयमजानत 'एवमपि यो दादेरित्युच्यते, तत्राधोक् न सिद्ध्यति, इति शङ्कायामुत्तरसूत्रार्थमपि प्रसङ्गान्निर्णेतुं दादिपदलक्षणायामधोगित्यस्यासाधारणफलत्वाभावं दर्शयितुं च तथोक्तेः । अत एवाग्रे वैयधिकरण्यस्योत्तरार्थमावश्यकत्वोक्त्येहार्थमनावश्यकत्वं भाष्ये ध्वनितं सङ्गच्छत इत्यलम् ।

व्यावृत्तये=इत्यादौ भष्भावलक्ष्यत्वस्य व्यावृत्तये । अधोगित्यादावपि नाव्याप्तिरित्याशङ्कते—नन्विति । यदि दादिपदमौपदेशिकदादित्ववल्लक्षकं तदोत्तरभाष्यविरोध इति शङ्कां निरस्यति—नचेति । प्रागुक्तभाष्येति । घत्वस्यासिद्धत्वादित्यादि निवृत्तिमित्यन्तभाष्येत्यर्थः । व्यर्थमिति । आवश्यकं दादिपदलक्षणयैवेष्टसिद्ध्या तद्व्यर्थमिति भावः । तथोक्तेरिति । वैयधिकरण्येनान्वयोक्तेरित्यर्थः, अत एव=पूर्वसूत्रे सामानाधिकरण्येनोक्तरीत्या ससम्बन्धेऽपीष्टसिद्धेरेव ।

समानाधिकरणा षष्ठी दादेर्धातोरिति । का तर्हि ? अवयवयोगे एषा षष्ठी धातोर्यो दादिरवयव इति ' इति वैयधिकरण्येनान्वयद्वारा समाधानोक्तिः संगच्छते । दादिपदस्यौपदेशिकार्थकत्वे तु सामानाधिकरण्यान्वयेनैव सिद्धे भाष्योक्तिरसङ्गता स्यात् । तस्माल्लक्षणया तथार्थकल्पनं न युक्तम् , अत एवात्र 'धातोः' इत्यस्य सार्थकयम् । अन्यथा औपदेशिकदादित्वविशिष्टस्य धातोरेव सम्भवेन व्यभिचाराप्रसक्त्या धातोरित्यस्य वैयर्थ्यमेव स्यादिति सुधीभिराकलनीयम् । केचित्तु—'धातोर्दाद्धः' इति न्यासेन धात्ववयवदकारात्परस्य प्रत्यासत्त्या धात्ववयवस्य पदान्तस्य हस्य घ इत्यर्थेन सिद्धिमाहुः । सामर्थ्याद् दकारात्परत्वं इकारस्यैकवर्णव्यवधानेनापि ग्राह्यम् । यत्तु 'अधोक्' इत्यादौ आगमविशिष्टे धातुत्ववत् दादित्वस्यापि लाभसम्भवेन वैयधिकरण्यान्वयपरोक्तिरेकदेश्युक्तिरिति तन्न, वर्णत्वव्याप्यधर्मघटितधर्मातिदेशे यदागमपरिभाषाया अप्रवृत्तेरित्यन्यत्र विस्तरः ।

१ ननु 'दधस्तथोश्च' ( पा० सू० ८–२–३८ ) इति सूत्रे भाष्ये 'तथोश्चापि ग्रहणं शक्यमकर्तुम् , कथम् , झलि झषन्तस्येत्युच्यते, तथोश्चायं झलि झषन्तो भवति नान्यत्र' इत्युक्तं तद्विरुध्येत झलीत्यस्य निवृत्ताविति चेत् ; न, झलायोः स्ध्वोरिति विशेष्यविशेषणभावेन भष्भावविधानात् तद्भिन्ने झलि अस्याप्रवृत्त्या 'झलीति निवृत्तम्' इत्यस्य स्ध्वभिन्ने झलि, इति=इदं सूत्रं निवृत्तम्=न प्रवर्तते इत्यर्थः । एवञ्च नानेन 'झलि' इत्यस्य निवृत्तिर्बोध्यते इति न भाष्यविरोध इति भावः ।

प्रातिपदिकसंज्ञस्य तु झलि परतः पदान्ते चेति, तत्प्रामादिकमेव, 'अधोक्' 'अधोग्' 'अजर्घाः' इत्याद्यसिद्ध्यापत्तेः, प्रातिपदिकग्रहणस्याप्रकृतत्वाच्च, तत्र झलो निमित्तत्वानुपयोगाच्च। 'घुग्भ्याम्' 'घुक्षु' इत्यादौ पदान्त इत्येव सिद्धेः। यदपि तत्पौत्रेण व्याख्यातम्—झलि परे प्रातिपदिकसंज्ञस्यैवेत्यादि, तदपि निर्मूलं निष्फलं चेत्युपेक्ष्यम्। *भष्भाव इति।* जश्त्वचर्त्वयोरसिद्धत्वात्ताभ्यां प्रागेवेति भावः। *षत्वचर्त्वे इति।* चर्त्वस्यासिद्धत्वात् पूर्वं षत्वम्, ततश्चर्त्वमिति भावः।

*'वा द्रुह'।* द्रुहेर्दादित्वात् नित्यं प्राप्तेऽन्येषामप्राप्ते उभयत्र विभाषेयम्। ननु द्रुहादयो दिवादिषु अनेनैव क्रमेण पठ्यते, तत्र वा द्रुहादीनामित्येवास्तु, दिवाद्यन्तर्गणस्य पुषादेरन्तर्गणो रधादिः, तदन्तर्गणो द्रुहादिरस्तु, मैवम्, तथा हि सति यङ्लुकि न स्यात्, 'निर्दिष्टं यद्गणेन च' इति निषेधात्—द्रोध्रुक्, द्रोध्रुट्।

तत्प्रामादिकमिति। घुग्भ्यामित्यादेः पदान्तत्वादेव सिद्धेरिति भावः। उपेक्ष्यमिति। एतेन 'एकाचो बशः' इति सूत्रे 'ह्रस्वादङ्गात्' इत्यतोऽङ्गादित्यनुवर्तते, अङ्गं च द्विविधम्—धातुरूपं प्रातिपदिकरूपं च। तत्र धातोः पदान्त एव, प्रातिपदिकस्य झलि पदान्ते चेति प्राचामाशय इत्यपास्तम्, स्वरितत्वकल्पनविभक्तिविपरिणामादीनां निर्मूलत्वान्निष्फलत्वाच्च, तद्धोट् तद्धाड्भ्यामित्यादावतिव्याप्तेश्चेति दिक्।

निषेधादिति। भष्भावस्तु एकाज्ग्रहणेऽपि 'अजर्घाः' इति भाष्योदाहरणेन निषेधानित्यत्वाद्भवतीति भावः। शितपा शपेति भाष्यानुक्तत्वादप्रमाणं वैचित्र्याय तु तथा नोक्तमित्यन्ये।

यन्नवदीयव्याख्यानफलं तदन्यथासिद्धमित्याह—घुग्भ्यामिति। [illegible] निरस्यति—एतेनेति=निष्फलत्वकथनेन। वस्तुतः स्वरितत्वाभावादाह—कल्पनेति।

ननु यदि शितपा शपेत्याश्रीयते, तर्हि भष्भावोऽपि न स्यादत आह—भष्भावस्त्विति। स्वसिद्धान्तरीत्याह—शितपा शपेति। वैचित्र्यायेति। लघुना शब्देनेष्टार्थस्य लाभेऽपि क्वचित् स्पष्टप्रतिपत्तये गुरुभूतशब्दोच्चारणमपि साधिष्ठस्येव वैचित्र्य-

१ ननु जातेऽप्यत्र भष्भावे जश्त्वेन सिद्धमिति चेन्न, तकारं द्रुह्यते इत्यर्थेऽन्तर्भावितण्यर्थकात् तकारोपपदाद् 'द्रुह् परितापे' इति दैवादिकात् क्विपि निष्पन्नतद्रूपपदादाचारार्थक्यङन्तधातोः क्विपि 'तद्धाट्' इत्यत्र दोषापत्तेरित्याशयात्। आदिना तथान्यदपीति यद्धाडित्यस्य संग्रहः।

'इग्यणः'–यणः स्थाने इति । विधिप्रदेशेषु सूत्रशाटकवद्भाविसंज्ञाश्रयणमिति भावः ।

'वाह ऊठ्' । 'वसोः सम्प्रसारणम्' इत्यतोऽनुवृत्तं सम्प्रसारणमूठो विशेषणम्, तेन 'अलोऽन्त्यस्य' इति न । यत्तु प्राचा–'वा'-शब्दस्येत्युक्तम्, नासौ सूत्रार्थः, किन्तु कथंचित्फलितार्थकथनपरतया नेयम् । छन्दस्येवेति । 'छन्दसि सहः' 'वहश्च' इति सूत्रे छन्दसीत्यनुवृत्तेरिति भावः । यत्तु–ऊठि कृते सवर्णदीर्घः भूहः, भूहेत्यादि प्राचोक्तं तद्भाष्यविरुद्धम् । तथा हि–उठ्ग्रहणं मास्तु, सम्प्रसारण-

---

सूत्रशाटकवदिति । अस्य सूत्रस्य शाटकं वयेत्यादौ 'यदि वातव्यो न शाटको यदि शाटको न वातव्यः' इति विरोधमाशङ्क्य 'मन्ये स वातव्यो यस्योतस्य शाटक इत्येषा संज्ञा भवति' इति भाष्ये उक्तम् । तथा प्रकृतेऽपि यणः स्थाने स भवति यस्य सम्प्रसारणशब्देन[2] जातस्य सम्प्रसारणसञ्ज्ञा भवतीत्यर्थ इति भावः । तेन दिव उतो न सम्प्रसारणत्वम् ।

फलितार्थेति । सम्प्रसारणपूर्वत्वाभ्यां फलितेत्यर्थः । ऊठि कृते इति ।

---

मिति भावः । तथा मूलोक्तरीत्या न्यायस्य स्वरूपन्दर्शयति–अस्येत्यादिना । तेन= सम्प्रसारणशब्देन जातस्येति व्याख्यानेन ।

ननु परममूलोक्तोदाहरणे ऊठि कृते न सवर्णदीर्घस्य प्राप्तिरत आह–भूवादिति । अनकारान्तोपपद इत्यर्थं भ्रमवारणाय–भत्वेति, एतेन सर्वत्र तदभाव इति कस्यचिदुक्तिः प्रत्युक्ता, यावता विना ऽनुपपत्तिस्तावत एव ज्ञाप्यत्वात् । मूले अथवा ऊहतेरिति । एतच्च समाधानं वायूह इत्येतद्विषयम् । न च 'प्रौह' इत्यत्राप्यस्त्विति

---

१ वस्तुतस्तु " वहश्च " इत्यत्र छन्दोग्रहणं नानुवर्तते, " विभाषा पूर्वाह्ह " (पा० सू० ४ ३-२४) इति सूत्रे भाष्ये " प्रष्ठौह आगतम् , प्रष्ठवाड्रूप्यम् " इति लौकिकप्रयोगदर्शनात् । न च ण्यन्तेन सिद्धिः, णिलोपस्य स्थानिवद्भावेनोठोऽप्राप्तेः ।

२ अयम्भावः—प्रदेशेषु यण इगित्येव सिद्धे सम्प्रसारणग्रहणेन सम्प्रसारणजातस्य ग्रहणमिति भाष्योक्त्याह सम्प्रसारणशब्देन जातस्येति । नन्वेवमपि सम्प्रसारणपदशक्तिज्ञानमन्तरा "वाक्यार्थबोधे पदार्थोपस्थितिः कारणम् " इति न्यायेन "वसोः सम्प्रसारणम्" इत्यादीनां वाक्यार्थबोधो न स्यात्, वाक्यार्थबोधं विना सम्प्रसारणशब्देन जातत्वज्ञानं न स्यात् । शक्तिज्ञानाभावेन संप्रसारणशब्देन जातत्वज्ञानाभावे वाक्यार्थबोधो न स्यादित्यन्योऽन्याश्रयस्तदवस्थ एवेति चेन्न, सम्प्रसारणशब्दस्य सम्प्रसारणपदप्रयोज्यविधेयताश्रये, यणस्थानिकेक्त्वावच्छिन्ने च एकवृन्तगतफलद्वयन्यायेन खण्डशः एकशक्तिस्वीकारेण यत्र सम्प्रसारणपदं विधेयताप्रयोजकम् यथा " वसोः सम्प्रसारणम् " इत्यादौ तत्र 'भूमौ पङ्कजमुत्पन्नम् ' इतिवत् सम्प्रसारणपदप्रयोज्यविधेयताश्रयांशस्य मोषेण यण्स्थानिकेक्त्वावच्छिन्नमात्रस्योपस्थि-

मेव विधीयताम्, तस्य लघूपधगुणे कृते 'वृद्धिरेचि' इति वृद्धौ सिद्धं 'विश्वौहः' इत्यादि, एवं स्थिते क्रियमाणं बहिरङ्गपरिभाषां ज्ञापयति, सत्यां हि तस्यां बहिरङ्गस्य सम्प्रसारणस्यासिद्धत्वादन्तरङ्गो गुणो न स्यादिति भाष्ये स्थितम्। नन्वनकारान्तेऽकारान्तोपसर्गे चोपपदे रूपे विशेषः स्यादिति चेन्मैवम्, भाष्यकारोक्तज्ञापकबलेनैव तादृशस्थले ण्विप्रत्ययाभावस्यानुमानादिति कैयटहरदत्तादयः। एतेन 'वार्यूहः' 'प्रौहः' इत्यादिप्रयोगा अपि परास्ताः। अथवा ऊहतेः क्विप् इत्यवधेयम्।

*'वसुस्रंसु'*। वसुः प्रत्ययः, तेन तदन्तं ग्राह्यम्। 'ससजुषो रुः' इति सूत्रात् 'स' इत्यनुवर्तते, तच्च वसोरेव विशेषणम्, न तु स्रंसुध्वंस्वोः, अव्यभिचारात्। नाप्यनडुहः, असम्भवादित्यभिप्रेत्याह — *सान्तवस्वन्तस्येति। पदान्ते इति।* झलीति तु प्राचः प्रमादः, स्रस्तमित्यादावतिव्याप्तेः।

*'सहेः साडः सः'*। सहेरिति किम्, 'सह डेन वर्तत इति सडः,

---

भूवाट्शब्दे इति शेषः। क्रियमाणमिति। उठ्ग्रहणमित्यर्थः। तादृशस्थले इति। भत्वविषये इत्यर्थः। भूवाडित्यादि तु भवत्येव। ऊहतेरिति। एतद्वार्यूह इत्येतद्विषयम्।

अव्यभिचारादिति। स्रंसुध्वंस्वोर्विच् तु नास्त्यनभिधानात्। अतः संयोगान्तलोपे तत्र व्यभिचार इत्यपास्तम्। अत एव भाष्यकृता सस्येत्यन-

---

वाच्यम्, अस्याकारान्तस्योहशब्दस्याकृदन्तत्वात्प्रादूहोढो इत्यत्रोढसाहचर्येण कृदन्तस्यैव ग्रहणात् अर्थवत एव तत्र ग्रहणाच्च। अस्यानर्थक्यन्तु स्पष्टमेवात आह—एतदिति।

ननु स्रंसुध्वंस्वोरपि विचि हल्ङ्यादिलोपसंयोगान्तलोपयोः कृतयोः सकारान्तत्वाभावाद्व्यभिचारसम्भवादव्यभिचारादित्यसङ्गतमत आह—स्रंस्वित्यादि। अत

---

तिरिति सम्प्रसारणशब्देन जातत्वज्ञानमन्तरापि यण्स्थानिकेक्त्वावच्छिन्नविषयकशक्तिज्ञानस्य "इग्यणः सम्प्रसारणम्" इत्यनेन बोधनसम्भवात् "वसोः सम्प्रसारणम्" इत्यस्य तावदंशविषयकशक्तिज्ञानमादाय वाक्यार्थबोधसम्भवात्। यत्रोद्देश्यदलप्रविष्टं सम्प्रसारणपदं तत्र तु उभयांशोपस्थित्या 'द्युभ्याम्' इत्यादौ "हलः" इति दीर्घो न, सम्प्रसारणपदप्रयोज्यस्वोपलक्षितयण्स्थानिकेक्त्वावच्छिन्ने शक्तिबोधनाद्दोष इति दिक्।

यस्य नाम्नि डशब्दोऽस्ति यथा मृड इति, मडस्यापत्यं माडिः ।
इति हान्ताः ।

'दिव औत्' । *प्रातिपदिकस्येति* । अव्युत्पन्नस्य, 'दिवेर्डिविः' इति न्यासोहितसूत्रेण व्युत्पन्नस्य वा, न तु 'दिवु क्रीडायाम्' इति धातोः, निरनुबन्धकग्रहणे न सानुबन्धकस्येति परिभाषया । तेनाक्षद्यूरित्यादौ न भवति । औतस्तकार उच्चारणार्थः । *सुद्युभ्यामिति* । उकानुवृत्तौ पपिवान् इत्यत्रैव दत्वशङ्का कृता, अनुवृत्तौ चानडुद्भ्यामित्यत्रैव दत्वाभावशङ्का कृतेति दिक् ।

न्यासोहितेति । न्यासकृदूहितेत्यर्थः । निरनुबन्धकेति । डिवः प्रत्ययस्य सानुबन्धकत्वेऽपि तदन्तस्यातथात्वादिति भावः । इदं चात्र सूत्रे, भूवादिसूत्रे च भाष्ये स्पष्टम् । उच्चारणार्थ इति । न तु स्वरितार्थः । उच्चारणा

एव=अनुवर्तमानसग्रहणस्य वसुमात्रविशेपणत्वस्य तादृशस्थले विचोऽनभिधानस्य। भिप्रेतत्वादेव । ननु नचोदाहरणमादरणीयमिति न्यायेन वस्वन्तोदाहरणमुपलक्षणमस्त्वित्यत आह--अनुवृत्ताविति । यद्युपलक्षणत्वमभिप्रेतं स्यात्तदा प्रथमस्परित्यज्याग्रिमकथनं सन्दर्भविरुद्धं स्यादिति भावः ।

न्यासपदस्य ग्रन्थाभिधायकत्वेन न्यासो हि नेत्यसङ्गतमत आह--न्यासकृदिति । अतथात्वादिति । सानुबन्धकत्वाभावादित्यर्थः । डकारस्य प्रत्ययोपदेशमादायेत्संज्ञाप्रवृत्त्या तदनुबन्धत्वमेवेति ध्वनितम् । अक्षद्यूरित्यत्र निरनुबन्धकपरिभाषया दोषाभावप्रतिपादनमसङ्गतं तत्रत्यस्योर्दिव्प्रकृतिकत्वविरहादेवाप्राप्तेरिति तु न शङ्कनीयम्, अङ्गाधिकारे तदन्तग्रहणस्य सम्भवात् । अत एव परमद्यौरित्यत्र भवति सूत्रप्रवृत्तिरत एवाह--इदञ्चेति । एतेन सा परिभाषा भाष्यप्रामाण्यादप्रत्ययग्रहणेऽपि प्रवर्तते इति ध्वनितम् । उच्चारणार्थ इति । शब्द उच्चारणमेवार्थं इत्येवकारगर्भबहुव्रीहिसञ्ज्ञक-

१ न च "नचोदाहरणमादरणीयम्" इति भाष्योक्तेः विजन्तयोः 'स्रन्' 'ध्वन्' इत्यनयोरप्युपलक्षणं तदित्यनभिधाने न मानम्, 'सः' इत्यस्यानुवृत्तौ "वसुस्रंसु" इति सूत्रे स्रंसुध्वंस्वोः प्रथमोपात्तत्वात्, उपलक्षणतयोपस्थितत्वाच्च 'स्रन्' 'ध्वन्' इत्यादौ दत्वाभावफलसत्त्वाच्चपरिहाय 'अनडुद्भ्याम्' इत्यत्र दत्वाभावफलशङ्काकरणेनानभिधानं कल्प्यते इति न "नचोदाहरणम्" इत्यस्य विषय इत्यभिप्रायात् । न च तयोर्दत्वस्यानिष्टत्वादेव न शङ्केत्यनभिधानासिद्धिः, अभिधाने सम्भवव्यभिचारसत्त्वेन तस्यापि तद्विशेषणतयाऽनिष्टत्वस्य दुर्निश्चेयत्वादिति दिक् ।

२ यस्य यदुपदेशप्रयुक्तेत्संज्ञा तस्य तदनुबन्धकत्वमेवेति भावः । अत एव "अनुबन्धकग्रहणे न सानुबन्धकस्य" इति परिभाषया भाष्ये धातोरग्रहणोक्तिः संगच्छते । अन्यथा प्रातिपदिकस्याप्यग्रहणापत्तौ सूत्रवैयर्थ्यापत्या धातोरग्रहणपरा भाष्योक्तिरसङ्गतैव स्यात् ।

रस्य सम्प्रसारणत्वात् 'हल' इति दीर्घः प्राप्तः 'उत्' इति तपरत्व-सामर्थ्यान्न भवति। यत्तु प्राचोक्तम् ÷ 'दिवो वा आत्वमपि' इति तदुपेक्षितम्, मुनित्रयानुक्तेर्निष्फलत्वाच्च। द्यामिति रूपं द्योशब्द-स्यैवेति बोध्यम्। इति वान्ताः।

'षट्चतुर्भ्यश्च'। बहुवचननिर्देशादर्थप्राधान्यं विवक्षितम्, अर्थाच्चामः परत्वं शब्दद्वारकम्, तेन तदन्तविधौ सत्यपि परमचतुर्णामित्यादावेव भवति, न तु बहुव्रीहौ। तदेतद्वक्ष्यति गौणत्वे तु नुट्

र्थानामित्सञ्ज्ञायामपि प्रत्ययग्रहणमिति वार्तिकेन तदप्रवृत्तिरिति भावः। सम्प्रसारणत्वादिति। अतद्भावितस्यापि सञ्ज्ञेति पक्षे इदम्।

शब्दद्वारकमिति। न चैवं तद्वाचकशब्दात्परत्वमेवार्थात्परत्वमित्यायातम्, ततश्च प्रियपञ्चन् आमित्यत्रापि तद्वाचकपञ्चन्शब्दात्परत्वमस्त्येवेति दोष-स्तदवस्थ इति वाच्यम्, एतत्सामर्थ्येन प्रधानीभूतषडर्थवाचकशब्दात्पर-रत्वं विवक्षितमित्यभिमानात्।

इदं प्राचामनुरोधेन, द्विवचननिर्देशे गौरवात्समाहारेण सर्वत्र सूत्रेषु निर्देशादर्शनाच्च षट्सञ्ज्ञकानां बहुत्वाच्च बहुवचनोपपत्तेः। किं च 'न षट् स्वस्रादिभ्यः' इत्यादौ शब्दबाहुल्याभिप्रायेण बहुवचनस्यैव 'तिसृभ्यो जसः' इत्यादौ प्रयोगबाहुल्याभिप्रायेण तद्वच्चेहापि बहुवचनं वक्तुं युक्तम्।

स्तत्रैवकारव्यवच्छेद्यं स्पष्टयति—नत्विति। तदप्रवृत्तिः=स्वराप्रवृत्तिः। ननु सुद्युभ्या-मित्यत्र दीर्घप्रवृत्तिसञ्चार एवासङ्गतः सम्प्रसारणशब्देन जातस्यैव संप्रसारणशब्देन ग्रहणादत आह—अतदिति।

अत्र पक्षे इत्युपादानम्भाष्यकारसिद्धान्तविरुद्धत्वेन तस्य पक्षस्य स्वानभिमत-त्वसूचनाय अथ प्रत्ययस्य शब्दादेव परत्वाच्चत्वर्थादिति शब्दस्य द्वारत्वकल्पना कृता। तथा च प्रियपञ्चन्शब्दे दोष इत्याशङ्क्य निराचष्टे—नचैवमित्यादिना।

इदम्=बहुवचननिर्देशेनार्थविशेषस्य कल्पनम्, ननु द्विवचननिर्देशे गौरवात्समा-माहारद्वन्द्वेनैकवचननिर्देश एवास्त्वित्यत आह—समाहारेणेति। ननु सर्वत्र तथानि-र्देशाभावेऽपि 'स्तोश्चुना श्चुः' इति सूत्रे तथानिर्देशो दृश्यत एवेत्यत आह—षट्संज्ञ-कानामिति। ननु संज्ञिनाम्बहुत्वेऽप्येकवचनं वृद्धिर्यस्याचामादिरित्यादौ दृश्यत एवेत्यत आह—किञ्चेति। ननु बहुवचनस्योक्तरीत्योपपत्तावपि गौणस्य वारणा

१ बहुवचननिर्देशसामर्थ्येनेत्यर्थः।

नेष्यते इत्यादिना । द्वित्वामिति । 'अचो रहाभ्याम्' इत्यनेन । रान्ताः । कमला लक्ष्मीः । लान्ताः ।

---

किं च 'नामि' इति सूत्रे भाष्ये "आमि" इत्येव सूत्रमस्तु, न च नित्यत्वात्पूर्वं दीर्घे ह्रस्वाश्रयो नुट् न स्यात्, ह्रस्वान्ताद् नुडित्येतत्सामर्थ्येन भूतपूर्वगत्या ह्रस्वान्तत्वमादाय तत्प्रवृत्तेः । न च नृणामित्यत्र चारितार्थ्यम्, नैकमुदाहरणं योगारम्भं प्रयोजयति, नृनद्यापे इत्येव ब्रूयात् । न च तिसृ-

---

स्यादिति चेन्न, विहितविशेषणाश्रयणेन तस्यापि सम्भवात् । तद्वद्धेति । बहुवचनवद्धेत्यर्थः । अत्र=इम इति सूत्रे ।

---

१ एकमुदाहरणम्=एकानुपूर्व्यवच्छिन्नोदाहरणम् व्यापकधर्मावच्छिन्नोद्देश्यताकशास्त्रं न प्रयोजयतीत्यर्थः । तथा च नृत्वावच्छिन्नोदाहरणं तद्व्यापकह्रस्वत्वावच्छिन्नोद्देश्यताकं शास्त्रं न प्रयोजयेदिति भावः एतेन "आग्नेयम्" इत्याद्येकलक्ष्यप्रयोज्यस्य "अग्नेर्ढक्" इत्यादिसूत्रकरणस्य नासङ्गतिः ।

२ ननु 'आमि' इति न्यासे "ह्रस्वनद्यापः" इति कल्पे 'नृ आम्' इति स्थिते प्रतिपदोक्तत्वात् 'नृ च' इति दीर्घे नुटोऽप्राप्तस्तथा यणि 'न्राम्' इति, दीर्घाभावे 'नृणाम्' इति रूपद्वयम्, "नृनद्यापः" इति पक्षे तु एकदेशविकृतन्यायेन दीर्घेऽपि नृशब्दतयोभयत्र नुटि 'नृणाम् इत्येकमेव रूपमिति फलभेदः । किंच नृशब्दादाचारक्विबन्तात् कर्तरि क्विपि तुकि 'नृत् आम्' इत्यत्र नुडापत्तिः, एवं नृशब्दस्य ऋशब्देन समासे 'नॄ आम्' इत्यत्र ह्रस्वग्रहणे 'न्राम्' इति रूपं नृग्रहणे च 'नॄणाम्' इति फलभेद इति चेन्न, 'नृनद्यापः' इति भाष्यस्य 'नृन्नद्यापः' इत्यत्र तात्पर्यात्, तपरकरणसामर्थ्याच्च ह्रस्वान्तनृशब्दस्यैव ग्रहणेन दोषाभावात् । न च 'नृताम्' इत्यत्र यदागमपरिभाषया ह्रस्वान्तनृशब्दत्वस्य सत्त्वेन दोषतादवस्थ्यम्, वर्णमात्रवृत्तिधर्मानयने तदप्रवृत्तेः ।

ननु 'हुझल्भ्यो हेर्धिः' (पा० सू० ६-४-१०४) इति सूत्रे भाष्ये 'रुदिहि' इत्यत्र धित्वं कस्मान्न भवतीति शङ्कायाम् 'अथवा' निर्दिश्यमानस्यादेशा भवन्ति' इत्येवं न भविष्यति । यस्तर्हि निर्दिश्यते तस्य कस्मान्न भवति, इटा व्यवहितत्वात् । यद्येवम् 'भिन्धकि' 'छिन्धकि' इत्यत्र धित्वं न प्राप्नोति । एवं तर्हि धित्वे कृतेऽकज् भविष्यति परत्वाद् धित्वम् । "धित्वे कृतेऽकज् भविष्यति" इति भाष्योक्त्या अकज्विशिष्टस्य निर्दिश्यमानत्वाभावबोधनेन प्रकृते निर्दिश्यमानपरिभाषोपस्थित्याऽकज्विशिष्टस्यादेशो न स्यादत आह-निर्दिश्यमानस्येति । कैयटस्तु "अवश्यं खल्वप्युत्तरार्थं किमो ग्रहणं कर्तव्यम् "कुतिहोः" "क्वाति" इति । कादेशः खल्वप्यवश्यं साकच्कार्थो वक्तव्यः, कः, कौ, के, इत्येवमर्थम्" इति भाष्यमुपादाय न तु निर्दिश्यमानस्या देशा भवन्तीति साकच्कस्य कादेशो न प्राप्नोति, न च शक्यं वक्तुं किमः क इति वचनसामर्थ्याद्भवतीति, किम इति स्थानिनिर्देशस्योच्चरार्थत्वात् । एवं तर्हि तन्त्राश्रयणात्साकच्कस्यापि भवतीत्यदोष इत्युक्तवान् 'त्यदादीनामः' इति सूत्रे । नन्वेवं साकच्कस्य निर्दिश्यमानत्वाभावे 'अनाप्यकः' इति सूत्रे 'अकः' इत्यस्य वैयर्थ्यापत्तिरिति चेन्न, अकज्विशिष्टस्यानिवर्तको य आदेशस्तद्विषये निर्दिश्यमानन्यायस्याप्रवृत्तिज्ञापनेन चारितार्थ्यात् । एवञ्च 'अनाप्यकः' इति सूत्रेण इदकं शब्दघटकेद्भागस्यानादेशविधानेनादेशस्याकज्विशिष्टस्यानिवर्तकतया परिभाषाया अप्रवृत्त्या प्राप्तादेशवारणाय 'अकः' इति चरितार्थम् । तेन इदकम् शब्दात्सौ 'अयकम्' इति सिध्यति । निर्दिश्यमानपरिभाषाप्रवृत्तौ तु अयादेशो न स्यात् ।

'मो नो धातोः' । पदान्त इति । झलीति तु यद्यपि प्राचाऽनुवर्तितम्, तथाऽपि काशिकादावभावात् निष्फलत्वाच्चोपेक्ष्यम् ।

'किमः कः' । ननु इम इत्येव सूत्र्यताम्, त्यदादीनामिमो अः

---

णामित्यत्र चारितार्थ्यम्, षडित्यत्र त्रेरित्यनुवृत्त्या सिद्धेः' इत्युक्तम् । गौणेऽस्याप्रवृत्तौ प्रियचतसृणामित्यत्र चारितार्थ्येन भाष्यासङ्गतेः । त्रन्न-द्याप इति न्यासे तु न भाष्यतात्पर्य्यम्, त्रिशब्दानुवृत्तिपरभाष्यासङ्गतेः, नैकमुदाहरणमित्यस्यासङ्गतेश्च, गौणे नुटोऽप्रवृत्तिसाधकभाष्यान्तराभावाच्च । न चैवं पदां दतामित्यादौ भूतपूर्वगत्याश्रयणेऽतिप्रसङ्गः, ह्रस्वत्वञ्चाम—मात्राकालिकात्त्वम्, तत्र सामर्थ्याद् विशेषणभूतमात्राकालिकत्वांशे एव भूतपूर्वगत्याश्रयणम्, न तु विशेष्यभूतात्त्वांशेऽपीत्यदोषादिति दिक् ।

इम इति । अत्र 'त्यदादीनामः' इत्यनुवर्तते तदाह—त्यदादीनामिति । अत

---

अनुवर्तत इति । अत एव क्विबन्तनियमादावतिप्रसङ्गो न । नन्वनुवृत्तिकल्पना-प्रयुक्तगौरवमत आह—अत एवेति । तदनुवृत्तिसत्त्वादेवेत्यर्थः । एवङ्कल्पनायां लाघवमप्यस्तीत्याशयेनाह—किंसर्वनामेति । ननु किम्शब्दस्य द्वेः प्राक् पाठस्य करणकथनमसङ्गतम्, त्यदादीनि चेत्यत्र व्यभिचारादिति चेन्न, सर्वत्र तादृशनियमाभावेऽपि 'त्यदादीनाम' इति सूत्रे त्यदादिपदस्य द्विपर्यन्तबोधकत्वमेव भाष्यकारेष्टयाऽस्तीत्यर्थाधिकारानुरोधादत्रापि तथा भविष्यतीत्यतस्तथापाठकल्पनमुचितमित्याशयात् । इमाविति । विभक्त्या सहैकादेशेऽपि परादिवद्भावेन विभक्तिपरत्वमस्तीति भावः । अङ्ग-

---

अत एव 'भिन्धकि' इत्यत्र च तन्मध्यपतितन्यायेन हकिशब्दे हित्वातिदेशेनानेकाल्त्वात्सर्वस्य ध्यादेशे 'अकज्विशिष्टस्य निवर्तकत्वात् निर्दिश्यमानपरिभाषाप्रवृत्त्या अकचि कृते 'भिन्धकि' इत्यत्र धित्वं न प्राप्नोति' इति भाष्यमपि संगच्छते । एवम् 'अनेषकः' इत्यत्र सत्वञ्च सिद्धम् । 'सर्वकदा' इत्यत्र 'सर्वस्य सोऽन्यतरस्यां दि' इति दादेशो न, अकज्विशिष्टस्यापहारकत्वेन निर्दिश्यमानपरिभाषाप्रवृत्तेः ।

वस्तुतस्तु तन्मध्यपतितन्यायेन तद्विशिष्टस्तद्ग्रहणेन गृह्यते । वै० स्वपर्य्याप्तोद्देश्यतानिरूपितविधेयताश्रयत्व-स्वघटकाव्यवहितोत्तरत्व—स्वघटकाव्यवहितपूर्वत्वैतत्त्रितयसम्बन्धेन । 'भिन्धकि' इत्यत्र 'तिङश्च' इत्यकचो विधानात् तिङन्ततदादिपर्य्याप्तोद्देश्यतानिरूपितविधेयताश्रयतया तिङन्तपर्य्याप्तधर्मारोपेऽपि हकिशब्दे हित्वारोपे मानाभावेन निर्दिश्यमानपरिभाषया धित्वाप्राप्त्या 'धित्वं न प्राप्नोति' इति भाष्योक्तिर्युक्तैव । इदकम् शब्देऽकचस्तु 'अव्ययसर्वनाम्नाम्' इत्यनेन विधानात् सर्वनामपर्य्याप्तोद्देश्यतानिरूपितविधेयताश्रयतया तन्मध्यपतितन्यायेन निर्दिश्यमानत्वस्यातिदेशात् 'अनाप्यकः' इति प्राप्तानादेशवारणाय 'अकः' इति चरितार्थम् । तन्मध्यपतितन्यायेन बोधितस्य निर्दिश्यमानग्रहणेन ग्रहणे मानन्तु 'अकः' इत्यादिपर्युदास एव । 'सर्वकदा' इत्यत्रापि सादेशो भवत्येव ।

एवञ्च 'भिन्धकि' इति भाष्यानुरोधेन साकच्कापहारकादेशविषयेऽकज्विशिष्टे निर्दिश्यमानत्वं न,

स्याद् इति व्याख्यास्यते, किंशब्दश्च द्वेः प्राक् पठिष्यते, 'नानर्थक' इति निषेधादारम्भसामर्थ्याच्चाऽलोन्त्यविधिर्न भविष्यति तत् किं कादेशेनेत्याशङ्क्याह—*अकच्सहितस्यापीति*। टेरत्वे 'ककः' इति स्यात्। 'कुतिहोः' इत्याद्यर्थं च किम इत्यवश्यं वक्तव्यमिति भावः। नन्वेवं

---

एव सिद्धान्ते उपसर्जने नेति भावः। द्वेःप्रागिति। तेन द्विपर्य्यन्तानां त्यदादित्वेऽपि न दोषः। 'किंसर्वनामबहुभ्य' इत्यत्र किंग्रहणं न कार्यमिति भावः। न चेमौ इत्यत्रा—प्यापत्तिः, 'अङ्गकार्ये कृते' इति निषेधात्। आरम्भसामर्थ्याच्चेति। 'त्यदादीनामः' इत्यनेनैवान्त्यादेशे सिद्धे इम इत्यारम्भसामर्थ्यादित्यर्थः। कक इति स्यादिति। मम तु तन्मध्यपतित इति न्यायेन साकचकस्य किंशब्दत्वात्सिद्धम्। निर्दिश्यमानस्येति परिभाषा तु नात्र प्रवर्तते, कादेशविधानसामर्थ्यात्। नच सुवन्तात्तद्धितोत्पत्त्यनन्तरं परत्वात्कादेशे कृतेऽकचि 'कक' इत्येव स्यादिति वाच्यम्, प्रातिपदिकादित्यधिकारात्सुपः शब्देन निमित्तत्वेनानाश्रयणादङ्गसंज्ञानिमित्तप्रत्ययानपेक्षणेन चाऽकचोऽन्तरङ्गत्वादिति भावः। किम इत्यवश्यमिति। 'कुतिहोः' 'क्वाति' इत्यत्रादेशे कद्वयश्रवणापत्तिः। उतिहोरिति न्यासे उकारस्या-

---

कार्यमत्रात्वम्मत्वञ्च बोध्यम्। नच 'अचः परस्मिन्' इत्येकादेशस्य स्थानिवद्भावेन न विभक्तिपरत्वमिम् इत्यस्येति वाच्यम्, विभक्तावित्यस्याङ्गविशेषणत्वात्। नानर्थकपरिभाषाया भाष्यकृता प्रत्याख्यानादाह—मूले आरम्भेति। इदमुपलक्षणम्, लक्षणप्रतिपदोक्तपरिभाषयापि तत्रातिप्रसङ्गवारणसम्भवात्। मम तु 'किमः कः' इति क इति समुदायरूपादेशविधानसामर्थ्यादित्यर्थः। अत्र किम्शब्दोपादानसामर्थ्यादिति तु नोक्तम्, तस्योत्तरार्थत्वात्। ननु यदर्थमयम्प्रयासस्तस्य प्रकारान्तरेण दुर्वारतया प्रयासवैयर्थ्यमित्याशङ्कान्निराचष्टे—नचेति। सुबन्तादिति। कुत्सित इति सूत्रस्थभाष्यास्वारस्यात्थालाभादिति भावः। यद्यपि जायमानस्तद्धित उक्तरीत्या सुबन्ताद्भवति तथापि शब्दतस्तथा नोक्तमित्याशयेन समाधत्ते-प्रातिपदिकादित्यादिना। अनाश्रयणादिति। सुप इत्यर्थासम्भव इति शेषः। ननूक्तरीत्या तस्य लाभः स्यादेवेत्यत आह—अङ्ग-

---

'अनाप्यकः' इत्यत्राग्रहणेन साकच्कानपहारकादेशविषयेऽकज्विशिष्टे निर्दिश्यमानत्वं तिष्ठतीत्यादिकल्पना व्यर्था। 'निर्दिश्यमानस्येति परिभाषा तु नात्र प्रवर्तते' इति शब्दरत्नकारोक्तेस्तु परमकिंशब्दात्कुत्सा विवक्षायामकचि तस्य किंशब्दपर्य्याप्तोद्देश्यतानिरूपितविधेयताश्रयत्वाभावेनाकज्विशिष्टे तन्मध्यपतितन्यायेन निर्दिश्यमानत्वाबोधनात् निर्दिश्यमानपरिभाषयाऽकज्विशिष्टस्यादेशो न प्राप्नोतीति कादेशविधानसामर्थ्यात् परमककिंशब्दघटककिंशब्दस्यादेशे कर्तव्ये परिभाषा न प्रवर्तते इत्यर्थः। तथा च 'नात्र प्रवर्तते' इति शब्दरत्ने 'अत्र' पदेन परमककिंशब्दस्य ग्रहणमिति भाव इत्यन्यत्र विस्तरः।

गणकार्यत्वाभावादुपसर्जनत्वेऽपि स्यात्, मैवम्, त्यदादीनामित्यनुवर्त्य वचनविपरिणामेन त्यदादेः किम इति व्याख्यानात्, अनुवृत्तिसामर्थ्याच्चेह सूत्रे द्विपर्यन्ता इति नियमस्य त्यागात्। उत्सर्ग इति। तेन 'तदोः सः सौ' इति सूत्रे ऽनन्त्ययोरिति किम्, 'हे स' इति भाष्यम्, 'भो अच्युत' इति च न विरुद्ध्यत इति भावः। नास्तीत्यत्र मूलं तु प्रचुरप्रयोगादर्शनमेव। यत्त्वाहुः—

इदमस्तु सन्निकृष्टं समीपतरवर्ति चैतदो रूपम्।
अदसस्तु विप्रकृष्टं तदिति परोक्षे विजानीयात्॥ १॥

इति वचनादेवंविधस्यार्थस्याभिमुखीकरणानर्हत्वादिति, तदा-

---

न्त्यादेशत्वापत्तिरेतदर्थं 'नानर्थके' इत्यारम्भे गौरवम्। अङ्गवृत्तपरिभाषया क्वेत्यत्र गुणस्य वारणे च क्लेश इतिभावः। किमो द्वेरनन्तरं पाठेऽपि दोषाभावमाह—अनुवृत्तीति। इति च न विरुध्यत इति। यद्यप्ययं प्रयोगो निपातमादाय सिध्यति तथापि 'विभाषा भवत्' इति वार्त्तिकं न विरुध्यत इति तात्पर्यम्। विप्रकृष्टस्यापीति। परोक्षस्य चेत्यपि बोध्यम्। पिपर्त्योरिति। अयं निर्देश एवास्यांशस्य ज्ञापक इत्याहुः। अनादेशः स्यादिति। तत्र कृते सक्-

---

संज्ञेति। उत्तरार्थत्वमुपपादयति—कुतिह्योरिति। उतिह्योरिति। अत्र उ इति लुप्तप्रथमान्तं तादौ हादौ चेम उः स्यादिति प्रथमस्य, अति चेम उः स्यादिति द्वितीयस्यार्थो भविष्यति स च न युक्त इत्याह—उकारस्येति। गुणस्य = 'ओर्गुणः' इति गुणस्य, च क्लेश इत्यत्र यश्चकारस्तस्य क्लेशपदोत्तरं योजना कार्या, अङ्गवृत्तपरिभाषाया भाष्यकृता लक्ष्यसिध्यर्थमनाश्रितत्वाद्भवता तस्या इहार्थङ्कल्पनायाङ्क्लेश इति भावः। पूर्वग्रन्थाविरोधायाह—किम इति। अयम्प्रयोगः=भो अच्युत इति प्रयोगः। वार्तिकमित्यस्य मतुवसोरितिसूत्रमित्यादिः। मूले इदमस्त्वित्यादिः। अत्र विषयपदाध्याहारेण सन्निकृष्टं वस्त्विदमो विषय इत्यर्थः। एवमदस इत्यस्यापि अभिमुखीकरणेत्यादि, सम्यक् ज्ञापनं हि सम्बोधनविभक्त्यन्तशब्दप्रयोगस्य फलन्तच्च दूरदेशस्थत्वेऽपरोक्षत्वे चोचितमिति भावः। न्यूनताम्परिहर्तुमाह—परोक्षस्य चेति। अस्यांशस्य = अनभ्यासविकार इत्यंशस्य, नन्वनादेशोत्तरम्भवतु स्मैभावस्ततो हलि लोपेनेष्टसिद्धिः स्यादत आह—तत्र कृत इति। ननु नित्यत्वमनित्यापेक्षया बलवत्त्वप्रयोजकमिह तु अनादेशस्य स्मैभावे कृतेऽपि प्राप्तिरित्युभयोर्नित्यत्वमिति नित्यत्वादित्यनु-

---

१ "नानर्थकेऽलोन्त्यविधिः" इत्यंशे ज्ञापकं तु 'नाम्रेडितस्यान्त्यस्य तु वा' इति सूत्रेऽन्त्यग्रहणमेव। अन्यथा "अलोन्त्यस्य" इति परिभाषयैवान्त्यस्य पररूपादेशे सिद्धेऽन्त्यग्रहणवैयर्थ्यं स्पष्टमेव।

पाततः, सन्निकृष्टादिशब्दानामिव इदमादीनामपि सम्बोध्यसमर्पकत्वे बाधकाभावात्, विप्रकृष्टस्यापि बुद्ध्या सन्निधापितस्य बहुशः सम्बोधनदर्शनाच्च । तथा च भट्टिः—

'हापितः क्वासि हे सुभ्रु बह्वेवं विललाप स' इति ।

*'अनाप्यकः'* । *प्रत्याहार इति* । न तु टाप्, विभक्ताविति विशेषणादिति भावः । *अनभ्यासविकार इति* । तेन 'भृञामित्' 'अर्तिपिपर्त्योश्च' इतीत्त्वेऽल्लोन्त्यविधिरस्त्येव—बिभर्ति पिपर्ति । ननु स्मायादेशात्परत्वादनादेशः स्यादित्याशङ्क्याह—*नित्यत्वात् ङेः स्मै इति* । कार्यं विधातुमिति अपूर्वं बोधयितुमित्यर्थः । 'ईषदर्थे क्रियायोगे' इति श्लोके तु ईषदर्थादयो न विधीयन्ते, किं त्वनूद्यन्ते, तेन एनादेशो न । एतेन—

नक्तं भीरुरयं त्वमेव तदिमं राधे गृहं प्रापय ।

इत्यपि व्याख्यातम्, भीरुत्वस्यानुवाद्यत्वेन विवक्षितत्वात् । मान्ताः ॥

---

इतिन्यायेन पुनः स्मै न स्यादिति भावः । नित्यत्वादिति । लक्ष्यानुरोधेन बाधकाबाधितप्रसङ्गस्यैवात्र ग्रहणाच्चऽनादेशो नित्य इति भावः । अपूर्वं बोधयितुमिति । अज्ञातज्ञापनमेवोभयत्रापि विधानम्, न तु प्रवर्तनाविषयत्वमित्यर्थः । न विधीयन्ते = नाज्ञाता बोध्यन्ते । अनुवाद्यत्वेनेति । सखीवाक्यमिदम्, तत्र कृष्णे आरोपितभीरुत्वं भाविकाभिव्यवहारसङ्गोपनायानु-

---

पपन्नमत आह—लक्ष्येति । प्रसङ्गस्य = कृताकृतप्रसङ्गस्य । अत्र = प्रकृतप्रयोगे । ज्ञापनमेवेति । एवकारेण इदमैव यत्र कथनन्तत्रेत्यस्यानादरो ध्वनितः, उभयत्रापि कार्यं विधातुङ्कार्यान्तरं विधातुमित्यनयोर्नाग्रह इति । अत एव 'वन्यद्विपेनोन्मथिता त्वगस्य' 'अथैनमद्रेस्तनया शुशोच' इत्यस्योपपत्तिरिति भावः । ननु विधानस्य परित्यक्तत्वान्न विधीयन्त इत्यनुपपन्नमत आह—नाज्ञातेति । यत्तु—नन्दस्य निदेशत इति तस्य पद्यस्य व्याख्यानन्तदसङ्गतं चिरकालिकरहःकेलीनान्तात्पर्यविषयत्वानुपपत्तेरत आह—सखीवाक्यमिति ।

---

[1] भीरुत्वस्य ज्ञाततया भीरोरेव परामर्शकस्य 'इमम्' इतिपदस्याज्ञातार्थबोधकत्वाभावेनाज्ञातज्ञापनविषयार्थकत्वाभावान्नादेश इति भावः । यत्र यम्प्रति किञ्चिद् बोध्यते तेन न किञ्चित् पूर्वं बुद्धश्चेत्तदा तत्रादेशः । अत्र मूलं मृग्यम्, 'इदमोऽन्वादेशे' इति सूत्रे भाष्ये तु "अन्वादेशश्च कथितानुकथितमात्रम् ।

*सुगाणीति* । 'अनुनासिकस्य क्विझलोः' इति दीर्घः, न च तस्मिन् कर्तव्येऽल्लोप-णिलोपयोः स्थानिवद्भावः शङ्क्यः, दीर्घविधौ तन्निषेधात्, क्वौ विधिं प्रति निषेधाच्चेति भावः । एतेन सुगण्णीश इति प्राचो ग्रन्थं गणयतेः क्विबिति व्याचक्षाणा उपेक्ष्या इति ध्वनयति । तदीयो ग्रन्थोऽपि समर्थनीय इत्याग्रहे तु इत्थं समर्थ्यताम्—सर्वलोपित्वेन क्विबिवाचरतीति क्विप् । क्विप्शब्दादाचारक्विबन्तात् कर्तरि क्विप् तेन विजित्यर्थः । णान्ताः ॥

*उपधादीर्घ इति* । 'सर्वनामस्थाने चासम्बुद्धौ' इत्यनेन । ङौ *सम्बुद्धौ चेति* । प्राचामनुरोधेनेत्थं व्याख्यातम् । ङ्यन्तस्य सम्बुध्यन्तस्य च पदस्येति षष्ठ्यन्ततया व्याख्यानं तूचितम्, एवं हि प्रत्यय-

---

वाच्यत्वेनैव विवक्षितमिति भावः । नन्दनिर्देशात इति नन्दनीयनिर्देशादित्यर्थकं बोध्यम् ।

दीर्घविधाविति । न पदान्तसूत्रे सपादसप्ताध्यायीस्थदीर्घस्यापि ग्रहणमित्यर्थस्य 'चिण्णमुलोः' इति सूत्रे भाष्ये ध्वनितत्वादिति भावः । उपेक्ष्या इति । दीर्घप्राप्तेरिति भावः ।

व्याख्यानं त्विति । तुनाऽरुचिर्बोधिता । सप्तम्यन्तपाठेऽपि 'न लुमता'

---

ननु पूर्वत्रासिद्धे न स्थानिवदित्याश्रयणेन दीर्घग्रहणस्यापि प्रत्याख्यानाद्दीर्घविधावित्यनुपपन्नमत आह—न पदान्तसूत्र इति । दीर्घस्यापीति । अपिना त्रैपादिकस्य परिग्रहः । ध्वनितत्वादिति । तत्र हि—शंशमयतेः 'अशंशमि' 'अशंशामि' 'शंशमम् शंशामम्' शंशाममित्यत्र विकल्पेन दीर्घसिध्यर्थं यङ्लोपे उपसंख्यानमिति वार्तिककृतोक्तम्, तदभिप्राये 'यश्चात्र णिश्चिण्णमुल्परो न तस्मिन्नङ्गमित्युक्त्वा लोपे कृते चिण्णमुल्परो भवतीत्याशंक्य स्थानिवद्भावान्न चिण्णमुल्परः । ननु च प्रतिषिध्यते स्थानिवद्भावः, दीर्घविधिम्प्रति स्थानिवदिति समाहितम् । अत्र ' न पदान्त' सूत्रोपन्यासेन सपादसप्ताध्यायीस्थदीर्घस्यापि तेन दीर्घशब्देन ग्रहणम्भवतीति ध्वनितत्वादित्यर्थः । 'वरे यलोपस्वरवर्जन्द्विर्वचनादीन्न न वक्तव्यानि' इत्यत्र वर्ज्यकोटौ दीर्घस्यापि तस्य वाक्यस्योपलक्षणतया सङ्ग्रहः कार्यः ।

पाठेऽपीति । अस्य लाघवमस्तीत्यत्रान्वयः । तथाच षष्ठ्यन्ततया व्याख्यानपक्षे

---

न्वादेशश्च कथितानुकथितमात्रं द्रष्टव्यम् । तदुद्देश्यं विजानीयादिदमा कथितमिदमैव यदानुकथ्यत इति' इत्युक्तम् । नानेनाज्ञातज्ञापनस्थले एवान्वादेश इति लभ्यते ।

लक्षणं सुलभमिति तदर्थं निषेधसामर्थ्यानुसरणक्लेशो न कर्तव्यः । पूर्वस्मादपि विधौ स्थानिवत्त्वमाशङ्क्याह—न चेति । षाष्ठीमिति । 'वाह ऊठ्' इत्यत्र ज्ञापितत्वेन तद्देशस्थत्वादिति भावः । इत्यासिद्धत्वादिति । नियमसूत्राणां विधिरूपेण प्रवृत्तिः, सामान्यशास्त्रतात्पर्यसङ्कोचकता

इति निषेधानित्यत्वेन 'वा नपुंसकानाम्' इत्यस्य सिद्धिरिति लाघवमस्तीति । औचित्यमेव दर्शयति—एवं हीति । सामान्यशास्त्रेति । प्राप्तस्य पुनर्विधानसामर्थ्येन सामान्यशास्त्रस्य संकोचस्तदितरपरतारूप इत्यर्थः । सङ्कोचश्च—नलोपविधौ 'पूर्वत्रासिद्धम्' इत्यस्यानुपस्थितिरूपः । अर्थवत्सूत्रे चार्थवत्पदेनार्थवत्समुदायाग्रहणरूपः । एवं चास्य विधित्वं स्पष्टम् । इदमेव च नियमस्य विध्यपेक्षया गुरुत्वम् । निषेधवादिनोऽप्यस्यावश्यक-

निषेधसामर्थ्यं यद्यपि नाश्रयणीयन्तथापि 'वा नपुंसकानाम्' इति वचनारम्भः कार्य इति गौरवं, सप्तम्यन्ततया व्याख्याने तु निषेधवचनारम्भेण 'न लुमता' इत्यस्याऽनित्यत्वमात्रङ्कल्प्यन्तावतैव 'न ङिसम्बुध्योः' इति वचनस्य प्रवृत्तिर्भविष्यति, 'वा नपुंसकानाम्' इति नापूर्वमिति लाघवात्सप्तम्यन्ततया व्याख्यानमुचिततरमिति भावः । प्राप्तस्य 'नलोपः प्रातिपदिकान्तस्य' इति सूत्रेऽनुवर्तमानं पूर्वत्रासिद्धमित्यनेन सुबादिविधौ प्राप्तस्यासिद्धत्वस्य संकोचस्य स्वरूपमाह—तदितरपरतेति । तथाच पूर्वत्रासिद्धमिति नलोपातिरिक्तविषयकमिति लब्धम् । एवञ्च यथा फलितन्तथाह—सङ्कोचश्चेत्यादिना । दृष्टान्तप्रदर्शनेनोक्तार्थदार्ढ्यायान्यत्रापि सामान्यशास्त्रतात्पर्यसङ्कोचमाह—अर्थवत्सूत्रेति । एवञ्च पूर्वत्रासिद्धमित्यस्य नलोपाविषयत्वसिद्धौ च । अस्य = 'नलोपः सुप्' इति सूत्रस्य । इदमेव च—नियमशास्त्रस्य सामान्यशास्त्रतात्पर्यसङ्कोचकत्वरूपमेव च । न केवलन्नियमशास्त्राणां विधायकत्ववादिमत एवैषा कल्पना, किन्तु तेषान्निषेधरूपेण प्रवृत्तिरिति वादिमतेऽपीत्याह—निषेधवादीति । अस्य =

१ नियम्यशास्त्रस्येत्यर्थः ।

२ व्यर्थीभूतशास्त्रीयोद्देश्यतावच्छेदकरूपव्यापकरूपावच्छिन्नेतरतारूप इत्यर्थः । प्रकृते च पूर्वत्वविशिष्टसुबादिविधित्वव्यापकं पूर्वविधित्वं तदितरत्वेन पूर्वत्रेत्यत्र संकोचे नलोपविधायके 'पूर्वत्रासिद्धम्' इत्यस्यानुपस्थितिरेव फलतीत्याह—अनुपस्थितिरूप इति । तथा च 'पूर्वत्र' इत्यनेन नलोपासिद्धत्वाप्राप्त्या 'नलोपः सुप्स्वर' इत्यस्य सुबादिविधौ नलोपासिद्धत्वविधानेन विधित्वम् । सुबादिविधिभिन्ने च केनाप्यसिद्धत्वाप्राप्त्या फलितार्थतयाऽस्य प्रतिषेधत्वव्यवहारोऽपि ।

३ नलोपविधायके पूर्वत्रेत्यस्यानुपस्थितौ चेत्यर्थः ।

४ ननु नियमशास्त्रस्यापि विधित्वे विधिनियमयोर्भेदमङ्गोऽत आह—इदमेव चेति—इतरसंकोचकत्वमेव नियमे गुरुत्वमिति तदेव भेदकमिति भावः ।

५ निषेधमुखेन प्रवृत्तिपक्षेऽपि नियम्यशास्त्रे संकोचस्यावश्यकत्वमित्यर्थः । अन्यथा = संकोचा-

त्वम् अन्यथा विकल्पापत्तेः। सामान्यशास्त्रसङ्कोचे चान्यत्र तद्भावस्या-प्यर्थतः सिद्धेरर्थसिद्धं तमादाय नियमशास्त्रेषु प्रतिषेधत्वव्यवहारोऽपि। कृतद्धितेतिसूत्रस्थसमासग्रहणकृतनियमेन बाध्यसामान्यचिन्तया कृदंश-स्यापि सङ्कोच इति मूलकेनोपदंशमित्यादौ न कृदन्तत्वप्रयुक्तं प्रातिपदि-कत्वम्। पञ्च पञ्चनखा भक्ष्या इति शास्त्रेणापि प्रापकप्रमाणरागप्राप्तभक्ष-णस्य तदितराविषयत्वरूपसंकोचकल्पनम्, तेनान्येषां भक्षणाभावो गम्यते,

इतरसङ्कोचस्य। अन्यथा=सामान्यशास्त्रस्य निषेधविषयविषकत्वस्यापि कल्पने। विक-ल्पापत्तेरिति। षोडशिग्रहणाग्रहणयोरिव विकल्पापत्तेरित्यर्थः। ननु यदि नियमशा-स्त्राणां विधिरूपेण प्रवृत्तिस्तदा 'उभयप्राप्तौ कर्मणि' इति सूत्रे 'षष्ठ्याः प्रतिषेधः' 'कादिप्रयोगेऽप्रतिषेधः' इति वार्तिककारीयप्रतिषेधत्वकथनासङ्गतिरत आह—सामान्य-शास्त्रेत्यादि। अन्यत्र=कर्मातिरिक्ते कर्तरि। तद्भावस्य = षष्ठ्यभावस्य प्रकृतसूत्र-विषये तु सुबादिचतुष्कादिभ्यो ऽन्यत्रेति कल्प्यम्। तम् = निषेधम्। एवञ्च तत्रतत्र प्रतिषेधत्वव्यवहारः फलितार्थकथनपरो न तु शब्दार्थपर इति भावः। नन्वेवं समास ग्रहणकृतनियमेन सामान्यशास्त्रस्यार्थवत्सूत्रस्यैव सङ्कोचः स्यान्नतु कृद्ग्रहणस्येति मूलकेनोपदंशमित्यादौ कृद्ग्रहणे गतिकारकेति परिभाषया दोषः स्यादेवेत्यत आह—कृत्तद्धितेतीति। बाध्येति। लक्ष्यानुसारादित्यादिः। नायम्प्रकारः पाणिनीयनियम-शास्त्रविषय एव किन्तु स्मृतावपीत्याह—पञ्च पञ्चेति। प्रमाणरागेति। प्रमाणपदा-न्तस्य रागपदेन कर्मधारयः। तदितरेति। शशकादिपञ्चनखेतरपञ्चनखकर्मकत्वाभाव-

भावे। 'उदिते जुहोति' 'अनुदिते जुहोति' 'अतिरात्रे षोडशिनं गृह्णाति' 'नातिरात्रे षोडशिनं गृह्णाति' इत्यादि श्रुतिद्वयबलाद्यथा विकल्पस्तथा सामान्यशास्त्रसंकोचाभावेन तेन विधिः प्राप्नोति, नियमशास्त्रेण निषेधश्चेति वचनद्वयबलाद्विकल्पः स्यादिति भावः। षोडशी च सोमरसस्थापनार्थं पात्रविशेषः। अतिरात्रे=यागविशेषे।

१ अर्थवति, कृदन्ते च पदत्वयोग्यपूर्वोत्तरभागघटितार्थवत् समुदायभिन्नत्वेन संकोच, इत्यर्थः।

२ नायं प्रकारोऽत्रशास्त्रे एव, किन्त्वन्यत्रापीत्याह—पञ्च पञ्चनखा इति।

३ वस्तुतस्त्वत्र सर्वत्रोद्देश्यदले एव संकोचदर्शनेन न भक्षणे संकोचः किन्तु पञ्चनखविषयकरा-गेतरपरत्वेन प्रापकरागे एव संकोचो युक्तः। पञ्च पञ्चनखाश्च:—

'शशकः शल्लकी गोधा खड्गः कूर्मश्च पञ्चमः।' इति।

४ गम्यते इत्युक्त्या 'अन्यभक्षणनिवृत्तिरार्थिकी' इति ध्वन्यते। तथा च 'पञ्च पञ्चनखा भक्ष्याः' इत्यादौ पञ्चपदस्य अवधारणविषयबुद्धिस्थवृत्तिपञ्चत्वसंख्यावति लक्षणा। अवधारणञ्चात्र स्वातिरिक्तसं-ख्याधिकरणासम्बन्धिसमभिव्याहृतप्रकारकज्ञानरूपम्। क्वचिदेवकारः प्रयुज्यते, क्वचित्तदर्थे लक्षणा क्रियते। अवधारणविषयो यो बुद्धिस्थः=शशकादिः तद्वृत्तिर्या पञ्चत्वसंख्या तद्वान् शशकादिरेव तत्र लक्षणे-त्यर्थः। स्वम् = शशकादिवृत्तिपञ्चत्वसंख्या, तदतिरिक्ता संख्या=श्वादिवृत्तिः, तदधिकरणं श्वादय एव तदसम्बन्धिसमभिव्याहृतपदार्थः = भक्ष्यत्वम्, तत्प्रकारकं ज्ञानम् श्वाद्यसम्बन्धिभक्ष्यत्वविशिष्टाः पञ्च पञ्चनखाः' इति। तेन श्वादयोऽभक्ष्याः इति फलति। एवकारस्य तदर्थलक्षणायाः फलन्तु प्रापकप्रमाण-बोधितस्य तदतिरिक्तविषयत्वाभावकल्पनम्।

तद्भक्षणे प्रायश्चित्तं च, 'पतिः समास एव' इत्यादौ एवकारो घिसंज्ञाशास्त्रस्य समासाघटकपतिशब्दाविषयकत्वरूपसंकोचस्य स्फुटं द्योतनाय ।

—रूप इत्यर्थः । नन्वेवं पतिः समास एव इति सूत्रे एवकारं विनापीष्टसिद्धावेवकारवैय-

यत्तु—एवकारार्थोऽन्ययोगव्यवच्छेदः । 'पृथिव्यामेव गन्धः' इत्यादौ पृथिव्यामित्यस्यैवकारार्थेऽन्यत्के गन्धे चान्वयः । पृथिव्यन्यावृत्तिः पृथिवीवृत्तिर्गन्ध इत्यादिक्रमेण बोधः। विभक्त्यर्थरहितस्यापि पृथिवीपदार्थस्यान्वयो व्युत्पत्तिवैचित्र्यादिति, तन्न, अनेकव्युत्पत्तिवैचित्र्यकल्पनाया अन्याय्यत्वात्, तादृशेऽर्थे विभक्तेः साधुत्वमात्रार्थिकाया अनन्वाख्यानाच्च । अत एव एवकारसमभिव्याहारेप्यार्थ्येव परिसंख्या अत एव भाष्यम्—भक्ष्या इत्युक्ते गम्यते एतत् अतोऽन्येऽभक्ष्या इति । अत्र 'गम्यते' इत्युक्त्या शाब्दबोधाविषयत्वं ध्वनितम् । अत्यन्ताप्राप्तप्रापणं विधिः, यथा 'इको यणचि' 'अष्टकाः कर्तव्याः' इति । पक्षे प्राप्तस्याप्राप्तपक्षान्तरप्रापणं नियमः । यथा 'समे यजेत' इति, यागविधिना कुत्रचिद् यागो विधेय इति समे देशेऽपि प्राप्त एव, परन्तु विषमे यागकरणे समस्य त्यागः प्राप्तस्तं पूरयति समे एव नान्यत्रेति । व्याकरणशास्त्रे नियमोदाहरणं नास्ति समासस्थलेऽपि 'अर्थवत्' सूत्रेण प्रातिपदिकसंज्ञायाः प्राप्तिरेव, नतु समदेश इव कदाचिदप्राप्तिः । कथञ्चिद्विकल्पेन विहितकार्य्यस्य पुनर्नित्यविधानस्थले 'द्वन्द्वे च' इत्यादौ नियमो वक्तुं शक्यते । परिसंख्या च एकस्यानेकत्र प्राप्तस्यान्यतो निवृत्त्यर्थमेकत्र वचनम् । यथा 'पञ्च पञ्चनखाः भक्ष्याः' 'कृत्तद्धितसमासाश्च' इति । रागतः श्वादिष्वपि भक्षणं प्राप्तम्, 'पञ्च पञ्चनखाः' इत्यनेनोक्तरीत्या निवृत्तिर्बोध्यते । 'अर्थवत्' सूत्रेण वाक्यस्यापि प्रातिपदिकसंज्ञा प्राप्ता समासग्रहणेन निवर्त्यते । तदुक्तम्ः—विधिरत्यन्तमप्राप्तौ नियमः पाक्षिके सति । तत्र चान्यत्र च प्राप्तौ परिसंख्येति गीयते । यद्यपि नियमस्थलेऽपि आर्थिकी अन्यनिवृत्तिर्भवति तथापि यत्र यद्विषयस्याकरणे प्रत्यवायस्तत्र नियमः । यस्याकरणे प्रत्यवायो नास्ति तत्र परिसंख्या । पञ्चनखाभक्षणे प्रत्यवायः शास्त्रे न श्रूयते इति तत्र परिसंख्या । विषमस्थले यागे प्रत्यवायः श्रूयते इति तत्र नियमः । व्याकरणपरिसंख्यायाः अपि नियमसादृश्यात् तत्र तत्र नियमत्वेन व्यवहारो भाष्यादौ । समासविषयकप्रातिपदिकसंज्ञायाः परिसंख्याविषयत्वेऽपि प्रातिपदिकसंज्ञाया अकरणे 'अपदं न प्रयुञ्जीत' इति निषेधश्रवणात् नियमसादृश्यम्

ननु शशकाद्यतिरिक्तभक्षणाभावस्यार्थिकस्य करणे यथा प्रत्यवायस्तथा शाब्दबोधविषयीभूतस्य पञ्चनखभक्षणस्याकरणे कथं न प्रत्यवायः, तत्रापि विध्युल्लङ्घनसत्त्वादिति चेन्न, प्रापकप्रमाणस्य यत्र नियतत्वं तत्रैव तदकरणे प्रत्यवायस्वीकारात्, यथा 'व्रीहीनवहन्ति' इति नियमस्थले पुरोडाशविधिरूपं प्रापकप्रमाणं नियतम्, यथा वा 'इमामगृभ्णन् रशनामृतस्य' इति मन्त्रस्य विनियोगोऽश्वरशनादाने गर्दभरशनादाने च लिङ्गात् प्राप्नोति, तत्र 'अश्वाभिधानीमादत्ते' इति श्रुत्या अश्वरशनादाने विनियोगे बोधिते परिसंख्यया गर्दभरशनादानान्निवर्ततेऽत्र लिङ्गरूपं प्रापकप्रमाणं नियतमिति मन्त्रं विनाऽश्वरशनादाने प्रत्यवायः । प्रकृते तु रागरूपं प्रापकप्रमाण न नियतम्, हिंसायां दोषदर्शनात् रागस्य निवृत्तिसम्भवादिति नात्र पञ्चनखभक्षणस्यावश्यानुष्ठेयत्वम् । 'पञ्च पञ्चनखा भक्ष्याः' इति विधिस्तु अन्यनिवृत्तिफलक एव । भक्षणस्य तु रागरूपप्रमाणेन प्राप्तत्वादभ्यनुज्ञामात्रं करोतीति तेन बोधितभक्षणस्य नावश्यकत्वम् । अभ्यनुज्ञाविधेश्च स्वविधेयस्य प्रवृत्तिप्रतिबन्धकबलवदनिष्टसाधनत्वाभावमात्रबोधकत्वं न तु प्रवृत्तिप्रयोजकेष्टसाधनत्वप्रत्यायकत्वमिति न तद्भक्षणस्य धर्मत्वम् । तथा च रागरहितानां पञ्चनखभक्षणाभावेऽपि न प्रत्यवायः । अत एव 'ऋतौ भार्य्यामुपेयात्' इति विधिमूलकविवाहाद्यावश्यकत्वकल्पनाऽपि प्रत्युक्ता, तस्याभ्यनुज्ञामात्रप्रयोजकत्वादित्यन्यत्र विस्तरः ।

१ नियमस्थले उक्तरीत्या लक्षणयाऽवधारणगर्भितार्थलाभसम्भवेऽपि 'समासाघटकपत्यवयवभिन्नौ

चेति पक्षस्य 'द्युद्भ्यो लुङि' इति सूत्रे भाष्यकृता ध्वनितत्वादिति भावः। निषेधरूपेणप्रवृत्तिरिति पक्षे तु 'पूर्वत्रासिद्धम्' इत्यनेनेति

पतिघटितसमासान्यसमासाविषयकत्वरूपसंकोचो मा भूदिति। अन्ययोगव्यवच्छेद एवकारार्थ इति तु सामान्यप्रमाणसङ्कोचफलितमर्थमादाय नेयम्। द्युद्भ्यो लुङीति। 'द्युद्भ्यो लुङि' इति सूत्रमुपक्रम्य 'अनुपराभ्याम्' इति सूत्र इत्यर्थः। 'पञ्च पञ्चनखा भक्ष्या' इत्यत्र भक्ष्यनियमेऽभक्ष्यप्रतिषेधो गम्यते इति ग्रन्थेन पस्पशायां च भाष्ये स्पष्टमेतत्। भक्ष्यनियमे= प्राप्तभक्षस्य पुनर्विधाने इत्यर्थः। निषेधरूपेणेति। सुबादिपदस्य स्वव्यति-

रेकमत आह—पतिरिति। स्फुटमिति। समासपदोत्तरमेवकारोपादानेन यत्रैवकारस्ततोऽन्यत्र नियम इति सामान्यतः क्लृप्तो यो व्यवहारस्तद्विषयतायाः सत्त्वेनेष्टार्थसिद्धिः स्फुटेति भावः। तान्त्रिकव्यवहारस्याप्युपपत्तिमाह—अन्ययोगेति। अत्र तुना प्रकारान्तरेण तस्यायुक्तत्वमेवेति ध्वनितम्। 'द्युद्भ्यो लुङि' इति सूत्रस्याव्याख्यानादाह—द्युद्भ्य इति। तत्र हि ÷ 'अनुपराभ्याम्' इति सूत्रस्य प्रयोजनकथनावसरे 'स्वरितञितः' इत्यनेन परस्मैपदस्य प्रतिषेधात्कृञादिष्वनेन 'परस्मैपदं विधीयते इत्युक्त्वा, यद्यनेन परस्मैपदं विधीयते तर्हि आत्मनेपदस्य प्रतिषेधो वक्तव्य इति पूर्वपक्षे न वा द्युतादिभ्यो वा वचनात् यदयं द्युतादिभ्यो वा वचनङ्करोति तज्ज्ञापयत्याचार्यो न 'परस्मैपदविषयं आत्मनेपदम्भवति' इत्युक्त्वा यद्वा यथा कर्त्रभिप्राये क्रियाफले आत्मनेपदेन परस्मैपदं बाध्यते, एवम्परस्मैपदेनाप्यात्मनेपदम्बाधिष्यत इति, 'कृञादिभ्य आत्मनेपदस्य प्रतिषेधो न वाच्य' इत्युक्तम्। यदि नियमशास्त्रस्य निषेधमुखेन प्रवृत्तिः स्यात्तदा निषेधस्य शाब्दत्वाद्बाध्यत इत्युक्तिरसङ्गता स्यात्, नियमस्थले प्रतिषेधत्वव्यवहारो गम्यमानार्थमादाय न तु शब्दार्थमादायेत्यत्र भाष्यमपि प्रमाणमित्याह—पञ्च पञ्चेति। नच पञ्च पञ्चेत्यस्य परिसङ्ख्योदाहरणत्वात्कथन्नियमत्वव्यवहारः? परिसंख्यातो नियमेऽस्ति विशेषः पाक्षिकप्राप्तिकांशपरिपूरणफलो नियमः, परिसङ्ख्या तु अन्यनिवृत्तिफलेति वाच्यम्, नियमेऽप्यप्राप्तांशपरिपूरणेनार्थिकान्यनिवृत्तेः सत्त्वेनाभेदमाश्रित्य परिसङ्ख्याविषयेऽप्यत्र शास्त्रे नियमत्वव्यवहारस्य कृतत्वात्। प्रकृते नियमश्रा-

याविदुतौ तौ घिसंज्ञकौ' इति संकुचितार्थबोधनायेत्यर्थः, समासे घिसंज्ञा चेत्पतिशब्दस्यैव इति नियमेन पतिघटितसमासादन्यो यः समासस्तदविषयकः संकोचः, समासाघटकाविदुतौ घिसंज्ञौ' इत्येवंरूपः संकोचो मा भूदित्यर्थः।

१ 'अनुपराभ्याम्' इत्यनेन कर्त्रभिप्राये परस्मैपदस्य विधानेऽपि 'स्वरितञितः' इत्यनेनात्मनेपदं कस्मान्नेति शङ्कायाम् 'परस्मैपदेनात्मनेपदं बाधिष्यते' इत्युक्तं भाष्ये। निषेधमुखेन प्रवृत्तौ तु 'अनुपराभ्याम्' इत्यस्य नियमार्थतया परस्मैपदविधानाभावेन 'परस्मैपदेनात्मनेपदं बाधिष्यते' इत्युक्तिरसङ्गतैव स्यात्।

बोध्यम् । सुब्विधिमुदाहरति—आत्वमित्यादिना । स्वरविधौ तु 'पञ्चा र्मम्' 'दिक्संख्ये संज्ञायाम्' इति समासे नलोपे कृते अवर्णान्तं

---

रिक्तविधौ लक्षणया भवतीत्यस्य च न भवतीत्यर्थे लक्षणयेति भावः। निषेधश्च नलोपविधावनुवर्त्तमानपूर्वत्रासिद्धत्वस्य । अत एवात्र स्वार्थ-हानि-प्राप्तबाध-परार्थकल्पनारूपदोषत्रयं मीमांसकैरुच्यते, परिसंख्यापदेन चायं व्यवह्रियते इति बोध्यम् । इति पक्षे त्विति । अनेनारुचिर्बोधिता । तद्बीजं तु लक्षणायां गौरवं फलाभावश्च, तदभावे लक्षणाया अनौचित्यं चेति । इति समासे इति । इत्यनुवर्तमाने 'तद्धितार्थ' इति समासे इत्यर्थः। 'स्वरविधौ

---

त्मनेपदादिविधायकादीनाम्बोध्यः । निषेधरूपेण प्रवृत्तिप्रकारन्दर्शयति—सुबादिति ।

नन्वत्र निषेध्याभावादेतदयुक्तमत आह—निषेधश्चेति । अत एव=निषेधरूपेण प्रवृत्तौ लक्षणाङ्गीकारादेव । अत्रेति । अस्य मीमांसकैरुच्यत इत्यत्रान्वयः । अत्रेत्यस्य परिसङ्ख्यायामित्यर्थः । अयम् नियमः यद्यपि मीमांसकमते भेदस्तथाप्युक्तभाष्यादस्मच्छास्त्रे नियमोऽपि तादृश एवेति परिसङ्ख्याविषयेऽपि नियमत्वव्यवहारः । ननु निषेधरूपेण नियमशास्त्रस्य प्रवृत्तिरिति पक्षेऽस्तु तथा, विधिरूपेण प्रवृत्तिरिति पक्षे तु कथमुभयोरभेदलाभ इति चेच्छृणु, यथाश्रुतशब्दात्प्रतीयमानेऽर्थे तात्पर्याभावात्तात्पर्यतस्त्यागः, अन्यार्थे तात्पर्यकल्पनेन तात्पर्यतः परार्थकल्पना प्राप्तस्यार्थस्य बाधश्चेति लक्षणायाम्=उभयत्र लक्षणायाम् फलाभावः । विधिरूपेण प्रवृत्तिस्वीकारेणोपपत्तौ पक्षान्तरं स्वीकृत्य लक्षणाकल्पने फलाभावः । तदभावे = फलस्याभावे रूढ्यन्यलक्षणायाः फलवत्त्वनियमादिति भावः। ननु लोपस्यासिद्धत्वेऽपि व्यञ्जनस्या विद्यमानवद्भावेनावर्णान्तत्वमस्त्येवेत्यत आह—स्वरविधाविति । स्वरोद्देश्यविधित्वञ्च स्वरवि-

---

१ 'सुबादिविध्यतिरिक्तविधौ पूर्वत्र कर्तव्ये परमसिद्धन्न' इति निषेधश्चेत्यर्थः । स्वार्थहानिः=अतिरिक्तार्थे लक्षणया सुबादिविधिशब्दशक्यार्थस्य त्यागः । बाधः=प्राप्तासिद्धत्वस्य निषेधः, परार्थकल्पना=लक्ष्यार्थकल्पना, इति दोषत्रयं निषेधमुखेन प्रवृत्तौ मीमांसकैरुच्यते, परिसंख्यापदेन व्यवह्रियते च । वैयाकरणैश्च परिसंख्यापि नियमे इव स्वार्थस्य तात्पर्यलभ्यान्यनिवृत्तेश्चात्रावश्यकरणीयतायाः प्रतीतेः नियमसत्त्वान्नियमशब्देन व्यवह्रियते ।' पञ्च पञ्चनखाः' इत्यस्य परिसंख्यात्वेऽपि भाष्ये नियमत्वेन व्यवहारस्तु अन्यनिवृत्त्या साम्यमात्रेण ।

२ विधिमुखेन प्रवृत्तिपक्षेऽपि अवधारणगर्भितार्थे लक्षणायाः सत्त्वात् 'लक्षणायाम्' इत्यस्य सुबादिशब्दे-भवति शब्दे चानेकत्र लक्षणायामित्यर्थः ।

वस्तुतो दोषत्रयं विधिमुखेन प्रवृत्तावपि । तथा हि—स्वार्थे तात्पर्य्याभावात्तात्पर्य्यतस्त्यागः, पूर्वत्र संकोचरूपान्यार्थे तात्पर्याङ्गीकारेण तात्पर्य्यतः परार्थकल्पना, प्राप्तबाधश्च, इति वक्तुं शक्यते । परन्तु निषेधपक्षे साक्षाच्छास्त्रबाधकल्पनापेक्षया विधिमुखेन प्रवृत्तिरेव न्याय्या ।

३ रूढ्यन्यलक्षणायाः फलवत्त्वनियमादिति भावः ।

पूर्वपदं जातमिति 'अर्मे चावर्णं द्व्यच्त्र्यच्' इति पूर्वपदाद्युदात्तत्वं प्राप्तं नलोपस्यासिद्धत्वान्न भवति । सञ्ज्ञाविधौ पञ्चेत्यत्र नलोपे कृतेऽपीत्यादिना स्त्रीप्रत्ययेषु वक्ष्यति । कृति तुग्विधौ तु 'वृत्रहभ्याम्' 'ह्रस्वस्य पिति' इति तुग् न । कृति किम्—'वृत्रहच्छत्रम्' 'छे च' इति तुक् स्यादेव । प्रतिदिवेति । "कनिन्युवृषितक्षिराजिधन्विद्युप्रतिदिवः" इति कनिन् । 'हलि च' इति दीर्घः । यत्तु—'उपधायां च' इत्युपन्यस्तम्, तन्न, दिवेर्वकारस्यानुपधात्वात् ।

व्यञ्जनमविद्यमानवत्' इति तु नात्र, तस्य स्वरोद्देश्यकविधावेव प्रवृत्तेः । 'नोत्तरपदेऽनुदात्तादावपृथिवीरुद्रपूषमन्थिषु' इति सूत्रे देवताद्वन्द्वे उत्तरपदप्रकृतिस्वरनिषेधके[1] पृथिव्यादिपर्युदासरूपधर्मिग्राहकस्य तथैव सत्त्वात् । अत एव 'अचः कर्तृयकि' 'शतुरनुमो नद्यजादी' इत्यादौ 'अच' इति 'अजादी' इत्यादि च चरितार्थम् । अत एव राजवतीत्यादौ नलोपस्यासिद्धत्वादन्वतीशब्दत्वाद् 'अन्तोऽवत्याः' इति स्वरो न । उदश्वित्वानित्यत्र 'ह्रस्वनुड्भ्याम्' इति मतुबुदात्तत्वं च नेत्याकरः । इदं 'समासस्य' इति सूत्रे भाष्ये स्पष्टम् । इदमेवाभिसंधाय 'यतोऽनाव' इत्येतन्निषेधमूलकम्, 'हल्स्वरप्राप्तौ व्यञ्जनमविद्यमानवत्' इति परिभाषान्तरं भाष्ये

शेषानुवादेन विधित्वम्, तत्र मानमाह—नोत्तरपद इति । अत्रानुदात्ताविति कथनेन स्वरोद्देश्यकविधित्वं स्पष्टमेव । व्यञ्जनस्याविद्यमानवद्भावाभावे पृथिव्यादीनामनुदात्तादित्वाभावादप्राप्तौ तद्वैयर्थ्यं स्पष्टमेव । स्वरोद्देश्यकविधावेव तस्य प्रवृत्तौ गमकान्तरमाह—अत एवेति । तत्रैव तत्प्रवृत्तेरेवेत्यर्थः । 'अचः कर्तृयकि' अजन्तानामित्यर्थः, स्वरकर्मकविधावप्यविद्यमानवद्भावेऽज्ग्रहणवैयर्थ्यं स्पष्टमेव । अत एव=उक्तोऽर्थः, अस्याकर इत्यत्रान्वयः । इदमिति प्रागुक्तमित्यर्थः । इदमेव=स्वरविधाविति परि-

१ पूर्वोत्तरपदस्वरनिषेधकेति पाठः, पूर्वोत्तरपदयोर्युगपत्प्राप्तप्रकृतिस्वरस्य निषेधकत्वात् ।

२ तत्रैव प्रवृत्तिर्धर्मः सोऽस्त्यस्येति धर्मी परिभाषारूप इत्यर्थः ।

३ नच 'अभ्यस्तानामादिः' इत्याद्युदात्तके 'दधती' इत्यत्रोदात्तत्ववारणाय 'अन्तोदात्तात्' ( पा० सू० ६-१-१६९ ) इत्यतोऽन्तोदात्तादित्यनुवृत्तेरावश्यकतया 'शतुरनुमः' इत्यस्यापि स्वरोद्देश्यकत्वेनाजादिग्रहणवैयर्थ्यं तदवस्थमेवेति वाच्यम्, स्वरत्वव्याप्यधर्मघटितधर्मावच्छिन्नविषयतायाः प्रतिबन्धकं व्यञ्जनं न भवतीति परिभाषार्थस्वीकारेणादोषात् । 'तुदद्भ्याम्' इत्यादौ दान्तेऽन्तोदात्तत्वावच्छिन्नविषयतायाः परिभाषया बोधनेऽपि स्यामादौ व्यञ्जनस्याजादित्वबुद्धिप्रतिबन्धकत्वस्य तया बोधयितुमशक्यत्वात् ।

'इन्हन्' । उपधाया इति । उपधादीर्घस्यैवायं नियमः । तेन 'वृत्रहायते' इत्यत्र 'अकृत्सार्वधातुकयोः' इति दीर्घो भवत्येव । तथा वृत्रहणी इत्यत्र 'अनुनासिकस्य क्विझलोः' इति यो दीर्घः सोऽपि नियमेन व्यावर्त्यते, उपधादीर्घमात्रापेक्षया नियमविज्ञानादिति भावः । 'हन्तेरत्पूर्वस्य' इति सूत्रं योगविभागेन व्याचष्टे—हन्तेः । प्रसङ्गादस्योदाहरणमाह—प्रहण्यादिति । प्रकृतोपयुक्तमाह—

तत्रैव स्पष्टमुक्तम् । अनुपधात्वादिति । धातोरुपधाभूतरेफवकारयोर्हल्परयोरिति तदर्थादिति भावः । प्रतिदिवन्शब्दादाचारक्विप्यपि अनुनासिकस्येति दीर्घे इदं रूपं दुर्लभम् । वस्तुतो हलन्तेभ्य आचारक्विपोऽनभिधानमन्यत्रोक्तम् ।

तथेति । यथोपधाग्रहणादकृदिति दीर्घोव्यावृत्तिस्तथा सर्वनामस्थानग्रहणात्सम्बद्धोपधापदनुवृत्तेरस्य व्यावृत्तिरित्यर्थः ।

---

भाषायाः स्वरोद्देश्यकविधौ प्रवर्तनमेव । तत्रैव = समासस्येतिसूत्रभाष्य एव, परिभाषान्तरस्य प्रयोजनन्तु राजदृषदित्यादि ।

ननु प्रतिदिवन् इत्यत्रानुपधात्वादिति कथनमसङ्गतन्तस्योपधात्वस्य स्पष्टत्वादित्यत आह—धातोरिति । एतेन मूलेऽनुपधात्वादित्यस्य धातोरित्यादिः सूचितः । यत्तु + प्रतिदिवन्शब्दाचारक्विबन्तात्कर्तरि यत्र क्विप् तत्पर एवायङ्ग्रन्थ इति कश्चित्, तन्नेत्याह—प्रतिदिवन्नित्यादि । अन्यत्र='ह्रस्वनद्याप' इति सूत्रस्थविवरणे, तत्र सूत्रभाष्ये कात्प्रत्ययादिति विहितस्यामो 'ह्रस्वनद्याप इति सूत्रे ग्रहणमाशङ्क्याकारेणानुबन्धेनास्यामः सानुबन्धकत्वात्समाधायाकारोऽनुबन्धो न कार्यः । न च तदभावे मस्येत्वापत्तिः फलाभावादित्सञ्ज्ञा न भविष्यतीति कथिते मिदचोऽन्त्यात्परत्वम्प्रयोजनम्भविष्यतीत्याशङ्कायां 'प्रत्ययादयमःम् विधीयते तत्र नास्ति विशेषो मिदचोन्त्यात्परत्वे वा' इत्युक्तम् । यदि हलन्तेभ्य आचारे क्विप्स्यात्तदा विशेषः स्पष्ट एवेति तथाकथनेनानभिधानन्ध्वनितमिति भावः ।

दृष्टान्तदार्ष्टान्तिकयोरैकरूप्याभावात्तथेत्यनुपपन्नमतस्तद्योजयति—यथोपधेति । एवञ्च वैषम्येऽप्यन्दृष्टान्तः । नन्वेवं सति पथीनति मथीनतीत्यादावप्युपधादीर्घो न स्यादिति

---

१ ननु 'प्रतिदिवन्' इति समुदाये वस्यानुपधात्वं ब्रह्मणापि दुर्वचमत आह—धातोरिति । तथा च वकारे धातूपधात्वं नास्तीत्यर्थः ।

२ तत्सम्बद्धानुवृत्तौ तु व्यावृत्तिर्दुर्वचा । एतेन नामधातुप्रक्रियायाम् 'पथीनति' इत्याद्युदाहरणानि परास्तानि, पूर्वापरग्रन्थविरुद्धानि च ।

*अत्पूर्वस्य* । *एकाजुत्तरेति* । न चाल्लोपे कृते एकाच्त्वं नास्तीति वाच्यम्, पूर्वस्मादपि विधौ स्थानिवत्त्वात् । न च 'पूर्वत्रासिद्धे न स्थानिवत्' इति वाच्यम्, 'तस्य दोषः संयोगादिलोपलत्वणत्वेषु' इत्युक्तेः । यत्तु—'अट्कुप्वाङ्' इति सूत्रे 'वृत्रघ्नः' इति भाष्यमुपादाय कैयटेन व्याख्यातम्—'प्रातिपदिकान्त' इति णत्वप्रसङ्ग इति; तत् पञ्चमीसमासो मास्त्वित्याशयेन, तस्य दोष इत्यत्र णत्वग्रहणं मास्त्वित्याशयेन वा बोध्यम् । णत्वग्रहणप्रत्याख्यानं तु भाष्ये ध्वनितं कौस्तुभे प्रपञ्चितम् । वस्तुतस्तु 'कुमति च' इति नित्यं णत्वमिह न्याय्यम्, सर्वथाऽपि वैकल्पिकं नित्यं वा प्राप्तं णत्वं नियमेन निवर्त्यत इति सिद्धम् ।

---

पञ्चमीसमासो मास्त्विति । सार्वत्रिको मास्तु अनित्यत्वादित्यर्थः । तदनित्यत्वेन स्थानिवत्त्वाभावे एकाच्त्वाभावादेव 'एकाजुत्तर' इति णत्वव्यावृत्तिः सिद्धेति भावः । णत्वग्रहणमिति । माषवपनीत्येतद्धि तत्प्रयोजनम् । तच्च बहिरङ्गतया 'यस्येति च' इत्यल्लोपासिद्धत्वेनापि सिद्धमिति तन्मास्त्विति भावः । इदं त्रिपाद्यां तत्परिभाषाप्रवृत्त्यभिमानेन । भाष्ये ध्वनितमिति । अन्यथासिद्धमाषवपनीत्येतस्य तदुदाहरणत्वोक्त्येत्यभिमानः । न्याय्यमिति । तस्य प्रातिपदिकान्तेत्यस्यापवादत्वादिति भावः । न च

---

नामधातुस्थपरममूलविरोध इति चेन्न, माधवानुरोधेन तस्य ग्रन्थस्य सत्त्वात् । अयं हि तदाशयः—नियमस्य सजातीयापेक्षत्वं सुप्रसिद्धमिति सर्वनामस्थाननिष्ठसर्वनामस्थानत्वस्यैवानपेक्षा न तु तद्गतसुप्त्वस्येति सुबानन्तर्य एव नियमफलनिषेधस्य प्रवृत्तिरिति । परे तु, तेषामप्युक्तरीत्यानभिधानमेवेत्याहुः ।

मूले पञ्चमीसमासो मास्त्विति । 'बेभिदिता' 'माथितिकः, 'अपीपचन्' इत्येतदुदाहरणानामन्यथासिद्धेः प्रदर्शनान्मास्त्वित्यर्थः । वस्तुतस्तु प्रत्यैषिषन्नित्यादेरुक्तरीत्या तदुदाहरणत्वसम्भवेन तस्यावश्यकत्वेऽपि 'निष्ठायां सेटि' इति सूत्रे सेड्ग्रहणेन तस्यानित्यत्वं ज्ञापितमिति स सार्वत्रिको नेति मास्त्वित्यत्र इहेत्यादिः पूरणीय इत्याशयेनाह—सार्वत्रिक इति । तस्य दोष इति वचनस्थणत्वग्रहणस्याभावेऽपि तदीयप्रयोजनान्यासिद्धिमुपपादयति— भाष्येत्यादिना । इदम् = बहिरङ्गत्वेन यस्येति चेति लोपस्य सिद्धत्वप्रदर्शनम्, अन्यथासिद्धेति । 'उक्तरीत्याऽन्यथासिद्धेरित्यर्थः । अभिमान इति । एतद्बीजन्तु त्रिपाद्यां सर्वथा बहिरङ्गपरिभाषा न प्रवर्तत इत्यसकृदावेदितमिति न्याय्यत्वे साधकमाह—तस्येति । रत्नाकरोक्तं खण्डयति—नचेति । सन्निपातपरिभा-

**भाष्ये तु-ः-'कुव्यवाये हादेशेषु प्रतिषेधो वक्तव्यः।' किं प्रयोजनम् ?**

सन्निपातपरिभाषया तदप्राप्तिः। सर्वणत्वेषु कवर्गव्यवायाश्रयणेन तद्विषये तस्या अनित्यत्वावश्यकत्वात् ।

हादेशेष्विति । हादेशकवर्गव्यवाये इत्यर्थः । आर्षत्वाद्वार्तिके समासः । वार्तिके हादेशेत्युक्तेर्द्रुघण इत्यादौ 'पूर्वपदात्' इति णत्वं सिध्यति । तत्र हि हन्तेरप्प्रत्ययो घनादेशश्च । अत एव 'अगारैकदेश' इति सूत्रे प्रघण-प्रघाणयोः कृतणत्वयोरुच्चारणम् । तत्रापि हन्तेर्घनघानादेशविधानात् । न्याय्यत्वादिति । न च वार्तिकरित्या बहुवृत्रहाणीति णत्वमायाति सूत्रारम्भे तु नेति वार्तिकारम्भस्यैव ज्यायँस्त्वात्कथं न्याय्यत्वं, बहिरङ्गत्वेन दीर्घस्याऽ-

षया घत्वस्य नकारसन्निपातजन्यतयेति भावः । तदप्राप्तिः = कुमति चेत्यस्याप्राप्तिः । सर्वेति । 'अट्कुप्वाङ्नुम्' ग्रहणस्य सर्वत्र सम्बन्धादिति भावः । तद्विषये = णत्वविषये । अनित्यत्वावश्यकत्वादिति । यदि तस्या अनित्यत्वादप्रवृत्तिर्न स्वीक्रियत इति तदा णत्वमात्रस्य कवर्गनिमित्तकत्वेन सन्निपातपरिभाषाप्रवृत्तेर्दुर्वारत्वादट्पूर्वग्रहणस्य हादेशेति वार्तिकस्य च वैयर्थ्यापत्तिरिति भावः ।

हादेशेष्वितीति । कुव्यवायनिमित्तके णत्वे हस्थानिकेषु आदेशे प्रत्यासत्त्या कवर्गरूपेषु सत्सु प्रतिषेधो वक्तव्य इति वार्तिकार्थः । फलितार्थमाह–हादेशेत्यादिना । हादेशेष्वित्युक्तेरिति । हकारविशिष्टादेशपदोक्तेरित्यर्थः । एवञ्च विशेषणाभिधानफलप्रदर्शनमेतदिति लब्धम् । घनादेशश्चेति करणेऽयोविद्रुष्वित्यनेन साधित इति शेषः । अत एवेति । तत्र तादृशोक्तेरेवेत्यर्थः । सूत्रेण वार्तिककारोक्तस्यार्थस्य सम्भव एव चेत्तदा न्याय्यत्वमित्याशङ्कान्निराचष्टे–नचेत्यादिना । बहिरङ्गत्वेनेति ।

१ वस्तुतस्तु सन्निपातपरिभाषायास्त्रिपाद्यामप्रवृत्तिरेव, फलाभावात्, दोषस्यैव बाहुल्याच्च ।

२ हादेशस्याभेदेन कुपदार्थेऽन्वयेन 'सविशेषणानां वृत्तिर्न वृत्तस्य विशेषणयोगो न' इति वार्तिकात् 'कुव्यवाये' इत्यत्र समासाप्राप्तयाऽऽह–आर्षत्वादिति । अन्ये तु-ः-कुव्यवायनिमित्तके णत्वे हस्थाने आदेशेषु प्रत्यासत्त्या कवर्गरूपेषु सत्सु णत्वप्रतिषेध इति वार्तिकार्थः । तत्फलितमाह–हादेश इति । तथा च आर्षत्वाद्वार्तिके समास इति चिन्त्यम् ।

३ योगविभागापेक्षया कुव्यवाये इति वार्तिकारम्भस्यैव ज्यायस्त्वम्, उत्तरमुनिप्रणीतत्वात्, योगविभागेन नियमे स्वार्थहानि–परार्थकल्पना–शास्त्रबाधदोषत्रयापत्तेः, हस्थानिककवर्गवद्धन्तेरुपलक्षणत्वे मानाभावाच्च । असिद्धत्वे त्विति तुनाऽरुचिः सूचिता अन्तरङ्गपरिभाषाया अस्य मते त्रिपाद्यामप्रवृत्तेः, यथोद्देशपक्षे दोषाभावाच्च

ननु 'प्रघनाघनः' इत्यत्र हनधातोरचि 'हन्तेर्घत्वञ्च' इति 'नन्दिग्रहि' इति सूत्रस्थवार्तिकेन हन्तेर्घत्वमच्याक् चाभ्यासस्येत्यर्थकेन कुत्वेन च सिद्धया हस्थानिककवर्गसत्त्वेन 'कुव्यवाये' इति वार्तिकसत्त्वे णत्वं न भवति योगविभागे तु प्राप्नोतीति फलभेद इति चेन्न, प्रघण प्रघाण इत्यत्र णत्वनिपातनेन 'अट्पूर्वस्य' इत्यस्य हस्थानिककवर्गाभाववद्धन्तेरुपलक्षणत्वकल्पनात् । स्वमतमाह–निपातनेति, यथोत्तरं मुनीनां प्रामाण्यात्, दोषत्रयापत्तेः, योगविभागज्ञापकत्वोपलक्षणत्वनियमत्वदोषापेक्षया लाघवाच्च वार्तिकमेव ज्यायः ।

वृत्रघ्नः, स्रुघ्नः, प्राघानि, 'हन्तेरत्पूर्वस्य' इति अत्पूर्वग्रहणं न कर्तव्यं भवति' इत्युक्तम् । एतच्च वार्तिकाशयवर्णनमात्रं न तु वस्तुस्थितिः, वार्तिकेन सूत्रावयवप्रत्याख्यानापेक्षया योगविभागमाश्रित्य वार्तिकार्थोपसङ्ग्रहस्यैव न्याय्यत्वादिति दिक् । *माधवेनोक्तमिति* । इत्थं हि तदीयो ग्रन्थः—'भसञ्ज्ञायामल्लोपे उत्तरपदमनच्कं स्यात्, स्थानिवद्भावश्चाल्विधित्वान्नेति एकाजुत्तरपदत्वाभावात् 'प्रातिपदिकान्तनुम्विभक्तिषु च' इति विकल्पो भवति, *वृत्रघ्नो वृत्रघ्ण इति* । *तद्भाष्येति* । किं चाल्विध्यर्थमेव 'अचः परस्मिन्' इत्यस्यारम्भात्तस्याप्रवृत्तौ युक्त्यन्तरस्यैव वाच्यत्वाद्विकल्प इत्यसङ्गतम्, 'कुमति च' इति सूत्रस्य दुर्वारत्वादित्यवधेयम् ।

*'मघवा बहुलम्'* ॥ 'अर्वणस्त्रसावनञः'' इति सूत्रात् तृ इत्यनुवतर्ते । तदपेक्षया च मघवेति षष्ठ्यर्थे प्रथमा, तदाह—*मघवन्शब्दस्येति* । *अधातोरिति* । अधातुभूतपूर्वस्यापीत्यर्थः । अञ्चतिग्रहणं हि नियमार्थम्—धातोश्चेद्भवति अञ्चतेरेवेति—एवं च गोमानिवाचरति

---

सिद्धत्वे तु प्राघानीत्यत्र दोषः । तथा सूत्रारम्भे प्रघनाघन इत्यत्र णत्वं प्राप्नोति वार्त्तिकरीत्या तु नेति वाच्यम्, 'अत्पूर्वस्य' इत्यनेन हस्थानिककवर्गाभाववद्धन्तेरेवोपलक्षणेनादोषात् । कृतणत्वयोः 'अगारैकदेशे' इति सूत्रे उच्चारणमत्रत्यात्पूर्वग्रहणस्योक्तार्थोपलक्षणत्वे मानम् । णत्वनिपातनकल्पनापेक्षयोक्तार्थग्राहकत्वौचित्यादिति भावस्तदेतद् ध्वनयतोक्तम्—वार्तिकार्थोपसङ्ग्रहस्येति ।

भूतपूर्वपर्यन्तमधातुपदस्य लक्षणायां बीजमाह—अञ्चतिग्रहणं हीति । अञ्चतेरिति । नलोपिनोऽञ्चतेरित्यर्थः, नलोपेन निर्देशात् । सामान्यापेक्षश्च

---

यथोद्देशपक्षे ग्रिपाघान्तस्या अप्रवृत्तिः, कार्यकालपक्षे तु प्रवृत्तिरिति भावः । दोषः=णत्वापत्तिरूपो दोषः । उपलक्षणेनेति । अत्र मानन्तु अत इति एकस्यैव निर्वाहे पूर्वग्रहणम्भूमार्थकबहुव्रीहिलाभार्थम्, अकारः पूर्वो यस्माद्धन्ति नकारादिति तेन लब्धन्तथाचोपलक्षणत्वं स्फुटमिति भावः । मानान्तरमप्याह—प्रघाणप्रघणयोरिति । नलोपन इति । विशेषणविशिष्टाञ्चतिपरमत्राञ्चतिपदमित्यत्र साधकमाह—

---

१ नकारे परे कुत्वविधानसामर्थ्यरूपमूलोक्तयुक्त्यन्तरस्येत्यर्थः ।

गोमानित्यादौ सम्प्रति धातुत्वेऽपि विद्धयर्थमधातुग्रहणम् । एतच्च मूल एव स्फुटीभविष्यति। ननु 'कुर्वन्' इत्यादाविव संयोगान्तलोपस्यासिद्धत्वेन नान्तत्वाभावाद्दीर्घत्वं न स्यादित्याशङ्क्याह—*इहेति* । *बहुलग्रहणादिति* । क्वचिदन्यदेवेत्यर्थकादित्यर्थः । *निपातनादिति* । महेर्हकारस्य घकारोऽवुगागमः कनिप्रत्ययश्चेत्यस्य त्रितयस्य निपातनादित्यर्थः । *प्रत्याख्यातमिति* । तथा च 'छन्दसीवनिपौ' इत्यत्र कैयटेनोक्तम्—'मघवा बहुलम्' इत्येतन्न कर्तव्यम्, श्वन्नुक्षन्निति निपातनान्मघशब्दान्मतुपा च भाषायामपि शब्दद्वयस्य सिद्धत्वादिति ।

यत्त्वत्र वार्तिककृतोक्तम्—

अर्वणस्तृ मघोनश्च न शिष्यं छान्दसं हि तत् ।

---

नियमस्तेन पर्णध्वद् गोमत्यतेः क्विपि गोमानित्यादावुगितश्चेति ङीबपि नेति दिक्, स्पष्टं चेदं भाष्ये उगितश्चेति सूत्रे । कैयटेनेति । अयं च कैयटः 'केशाद्वः' इति सूत्रस्थः । अर्वणस्तृ इत्यादि । अर्वणो मघोनश्च तृ न शिष्यम्, यतस्तच्छान्दसम् ,सामान्यतो बोधितानामपि केषांचिद् घृधात्वादिवन्नियतविषयत्वादित्यर्थः । एवं च छन्दसि दृष्टानुविधिरिति न तदर्थः शास्त्रारम्भ

---

नलोपेनेति । एतेन 'उगिदचाम्' इति सूत्रव्याख्यानावसरे नलोपिनोऽञ्चतेरिति यत्परममूले उक्तन्तेनैकवाक्यता भवतीति ध्वन्यते । नचैवं सति नलोपिन एव यथा-स्यान्न पूजार्थस्येत्यस्य लाभार्थमञ्चतिग्रहणञ्चरितार्थमिति कथम्मूलाद्युक्तनियमलाभ इति वाच्यम्, भाष्यप्रामाण्येनाचामित्यस्यावृत्त्योभयार्थलाभ इत्याशयात् । तत्रैको नियमो मूले एव दर्शितो द्वितीयस्तु अञ्चतेश्चेन्नलोपिन एवेति बोध्य इति । तेन= नियमस्य सामान्यापेक्षत्वेन । एवञ्चाधिकलक्ष्यसङ्ग्रहस्योचितत्वात्सामान्यापेक्षनियम एवोचित इति भावः। ङीबपीति । अपिना नुमः परिग्रहः। दिगिति। दिगर्थस्तु प्रथम-नियमेन पर्णध्वदित्यत्रेव गोमानित्यत्रापि ङीप्। किञ्च प्रकृतसूत्रे झल्ग्रहणापकर्षेण नुम् झलन्तलक्षण एव ग्राह्यः, तेन शमी शमिनावित्यादौ नातिप्रसङ्ग इति बोध्यम् । अत्र भाष्य इति । तत्र मूलोक्तरीत्या स्पष्टम् । 'अन्त्ये धातोरुगितः प्रतिषेधः कार्यः, अञ्चतेश्चोपसङ्ख्यातम्, प्राचीनोभयङ्कर्तव्यम्, उक्तनियमेन सिद्धिः' इत्युक्तम् । कैयट-ग्रन्थस्य तादृशस्याप्रद्धित्वशङ्कां वारयति—अयञ्चेति। तृ इति । इदञ्च स्वरूपपरन्नपुंस-कम् । ननु तृविधायकसूत्रयोश्छन्दसीत्यस्यानुक्तेश्छान्दसमित्यसङ्गतमत आह—सामा-न्यत इति । अत एव तृज्वत्सूत्रे भाष्यकृतोक्तम् 'अविशेषविहिता अपि शब्दा नियत-

मतुब्वन्योर्विधानाच्च छन्दस्युभयदर्शनात् ॥ १ ॥ इति ।
यच्च तद्व्याख्यावसरे कैयटेन भाषायामसाधुतेत्युक्तं तद्वनि-

---

इति तात्पर्यम् । एवं हि छान्दसलक्ष्यसाधकसर्वसूत्रप्रत्याख्यानं स्यादतः प्रकारान्तरेणापि सिद्धिमाह-मतुब्वन्योरिति । ऋधातोर्विजन्तान्मघशब्दाच्च मतुब्वनिभ्यां रूपद्वयसिद्धिरिति भावः । ननु सूत्रारम्भे नित्यस्तृ आदेशोऽर्वणः, प्रत्याख्याने तु पक्षे तदभावोऽपीत्यत आह–छन्दस्युभयेति । आदेशतदभावेत्यर्थः । तदुदाहरणमिमान्यर्वणः पदानीति । एतत्प्रत्याख्याने दीर्घो घकारोदात्तत्वं च लभ्यते । एतेनास्य छान्दसत्वाच्छन्दसि आदेशपक्षे मघवन्नित्येव रूपं तच्च मत्वन्तस्य छान्दसत्वाद्दीर्घाभावेन साध्यमिति प्रत्याख्यानाशयः लोके तु मत्वन्ते दीर्घो भवेत्येवेति परास्तम्, वार्तिकाद्धस्वारस्येन तथाऽप्रतीतेर्मघवान्नूर्जोषीत्यादौ वेदेऽपि दीर्घस्य पठ्यमानत्वाच्च । तदेतत्कैयटेनोक्तं भाषायामसाधुतेति । 'केशाद्वः' इति सूत्रस्थ उक्तकैयटस्तु एतत्सूत्रस्थवार्तिकविरोधात्स्वग्रन्थविरोधाच्च हेय एवेति ध्येयम् ।

यत्तु—छान्दसा अपि क्वचिद्भाषायामित्याश्रित्य भाषायां प्रयोग इति, तन्न, तज्ज्ञापकस्य 'वयस्यासु मूर्ध्नो मतुप्' इति सूत्रप्रयोगस्य छन्दोव-

---

विषया दृश्यन्ते' इति तथा च मतुपः सामान्यतो विधानेऽपि अर्वन्मघवच्छब्दयोश्छन्दस्येव प्रयोगो भविष्यतीति भावः । एवं हीति = उक्तसूत्रद्वयवद्धि । विजन्तादिति । ऋधातोर्यो विच् तदन्तादित्यर्थः । नित्य इति । विकल्पबोधकस्य पदस्य तत्रानुक्तेर्नित्य इत्यर्थः । तदभावोऽपीति । उक्तरीत्येति भावः । उक्तरीत्या प्रत्याख्याने फलान्तरस्यापि सिद्धिमाह—एतदिति । दीर्घः = अत्वसन्तेति विहितः । उदात्तत्वमिति । ह्रस्वनुड्भ्य मिति प्राप्तस्य मतुपि उदात्तत्वस्य न गोश्वन्साविति प्रतिषेधे तस्य पित्त्वादनुदात्तत्वे फिट्स्वरस्यैवावस्थानादिति भावः । एतेन=उक्तव्याख्यानेन । अस्य = मघवेतिसूत्रस्य । इत्येवेति । संयोगान्तलोपस्यासिद्धत्वात्तदा दीर्घप्राप्तेरित्यवेत्यर्थः । तथाऽप्रतीतेरिति । मघवेति सूत्रस्य छान्दसत्वाप्रतीतेः । किन्तु तत्साध्यप्रयोगस्यैव प्रतीतेः । नन्वेवम्पूर्वोक्तकैयटविरोध इत्यत आह—केशाद्व इतीति ।

अन्योक्तां कैयटासङ्गतिङ्खण्डयति—यत्त्विति । इत्याश्रित्येति । इति परिभाषाश्रित्येत्यर्थः । वयस्यास्विति । अत्र तद्वानासामिति मतुपो लुक् यत्प्रत्ययश्च, तस्य

---

१ 'वयस्यासु मूर्ध्नो मतुप्' इति सूत्रे 'वयस्यासु' इति पदं वयश्शब्दवन्मन्त्रोपधेयास्विष्टकासु इत्यर्थकम्, तच्च 'तद्वानासाम्' इति सूत्रेण वयश्शब्दवान्मन्त्र उपधानो यासामिष्टकानाम् इत्यर्थे वयस्वत् शब्दान्मतुबन्तात् छन्दसि सिध्यति । 'न च सूत्रं छन्द इति 'वयस्यासु' इति निर्देश एव 'छान्दसा अपि क्वचित् भाषायाम्' इति परिभाषां ज्ञापयति' इति प्राचीनैरुक्तम् तत्खण्डयति–तज्ज्ञापकस्येति ।

न्तमद्युदात्तमघवन्शब्दविषयकम्, छन्दस्येव वनिब्विधानात्। अतो न कैयटस्य पूर्वापरविरोध इति ध्वनयन्नाह—छन्दसीत्यादि। अन्तोदात्तं त्विति। यद्यपि श्वन्नुक्षन्नित्यत्र कनिन्नन्ता एते इत्युज्ज्वलदत्तादिग्रन्थमहिम्ना आद्युदात्तत्वं लभ्यते, तथापि "उक्षा समुद्रो अरुणः सुपर्णः, पूषा त्वेतो नयतु, अग्निर्मूर्धा, निर्मज्वानं न पर्वणो जभार, स्वमर्यमा भवसि यत्, इत्यादौ तत्सूत्रोपात्तानामुक्षादीनामन्तोदात्तत्वस्य निर्विवादतया कनिप्रत्यय एवोचित इति भावः। 'श्ववन्नहुलम्' इति सूत्रे 'मघोनः' इति प्रतीकमुपादाय मघशब्दस्याकारस्य 'यस्य' इति लोपमाशङ्क्य, नैतदस्ति अन्यदेव हीदमव्युत्पन्नं प्रातिपदिकं तथा हि भाषायामप्यस्य प्रयोगो दृश्यते इति यद्न्यासकारोऽपि मघवन्शब्दस्यान्तोदात्तत्वे भाषायामपि साधुत्वे चानुकूलः, एवं स्थिते मतुपमाश्रित्य त्रादेशं प्रत्याचक्षाणौ भाष्यवार्तिककृतौ मघवानित्यत्र त्रादेशपक्षेऽपि दीर्घं स्वीकुरुत एव, फलभेदे प्रत्याख्यानासम्भवात्। अतो बहुलग्रहणान्नासिद्धत्वमिति यदुक्तं तद्भाष्यादिसम्मतमेव।

---

रसूत्राणि भवन्तीति भाष्यकारेष्ट्याऽन्यथासिद्धत्वादिति तदाशयः। तद्वनिवन्तेति। इदं चिन्त्यम्, 'न शिष्यं छान्दसं हि तत्' इति सामान्यप्रवृत्तवार्तिकस्य सङ्कोचे मानाभावात्। कविप्रयोगाणां बहुशः प्रामादिकानां दर्शनेन तेषामार्षवचनसङ्कोचे न मानत्वमिति दिक्। उचित इति भाव इति।

---

सूत्रस्य छन्दस्येव प्रवृत्त्या छन्दो भिन्ने सूत्रे तथोच्चारणेन सा ज्ञाप्यत इति तद्भावः। इदञ्चिन्त्यमिति। विशेषोपादानञ्चिन्त्यमित्यर्थः। सङ्कोचे = वनिबन्तविषयकत्वकल्पने। बहुश इति। बहूनामित्यर्थः। तम्पातयाऽप्रथममासेत्यादिना यथा। आर्षवचनेति। वार्तिककारीयवचनेत्यर्थः। दिगर्थस्तु—येषां छान्दसत्वन्तेषाम्भाषायां सर्वथाऽप्रयोग एव। कविना—ऋषिभिन्नेन प्रयोगे तु तस्य प्रयोगस्यासाधुत्वमेव। यदि मघवन्शब्दो वनिबन्तस्तदा मघोन इत्यादौ 'यस्येति च' इति लोपापत्तिरपि न, छान्दसत्वात्। अत एव मघोनामिति सूत्रनिर्देशस्याप्युपपत्तिः। 'यस्येति' लोपे आभीयासिद्धत्वन्तु न, व्याश्रयत्वात्। नच तत्र लोपे कर्तव्ये बहिरङ्गस्य सम्प्रसारणस्यासिद्धत्वम्, असिद्धमिति परिभाषाया 'वाह ऊठ्' इति सूत्रस्थोठ्ग्रहणेन ज्ञापितायास्तस्या अप्याभीयतया तत्प्रवृत्तिकाले आभीयस्याऽन्तरङ्गस्यासिद्धत्वेन तस्याः परिभाषाया

भवा 'उत्सादिभ्योऽञ्'। नच 'शार्ङ्गरवाद्यञ्' इति ङीना सिद्ध-मिदमिति वाच्यम्,—तत्र 'जातेः' इत्यनुवृत्तेः। अन्यथा पुंयोगेऽपि स्यात्। एतेन इह अञ्ग्रहणं स्पष्टार्थमिति प्राचो ग्रन्थः प्रत्युक्तः। इहानेकं वाक्यं तत्र अनुपसर्जनमण् योऽकारस्तदन्तादिति व्याख्या-नान्नेह—आपिशलमधीते आपिशला ब्राह्मणीति। अत्र हि प्रोक्तार्थेऽण् उपसर्जनम्, अध्येत्रण् तु लुप्तः, वर्णप्राधान्यान्न प्रत्ययलक्षणम्।

---

पुंयोगेऽपि स्यादिति। इष्यते तु ङीषित्यर्थः। प्रत्युक्त इति। अनेनैव सिद्धे तत्राञ्ग्रहणं तूत्सस्यापत्यं स्त्रीत्यत्र जातिलक्षणङीष्बाधनार्थमिति बोध्यम्। अत्र हीति। न चैवमुपसर्जनाधिकारस्य चारितार्थ्ये मूलोक्ततदन्तविधिज्ञा-

---

पनानुग्रहश्च तत्र तन्न्यायप्रवृत्तेः। कृद्ग्रहणपरिभाषया कुम्भकारशब्दादेव स्त्रीप्रत्ययो भवि-ष्यतीति तु वक्तुमशक्यम्, तस्याः परिभाषायाः कृन्मात्रग्रहणे प्रवृत्तेः सिद्धान्तात्। यदि तु तदन्तविधिरमहत्पूर्वग्रहणेन ज्ञाप्यते, तदा बहुकुरुचरेत्यत्र ङीपोऽभावायानुप-सर्जनादित्यावश्यकम्। स्त्रियामित्यस्य 'स्त्रीप्रत्ययप्रकृतित्वाभिमतविशेषणतायान्तस्या-नुपदं ज्ञापकत्वस्याभिधास्यमानत्वादित्येवंरीत्या भाष्ययोरविरोध उपपादनीयः। तदेतद् ध्वनयन्नाह—विस्तरस्त्विति।

मूले अन्यथेति। ङीप् विधायके जातेरित्यस्याऽननुवृत्तावित्यर्थः। पुंयोगेऽ-पीति। ङीषम्बाधित्वा परत्वादिति शेषः। नह्येवं सति फलाविशेषः, अजन्तान्ङीनि समुदायस्याद्युदात्तत्वमेव भविष्यति, ङीषि तु सतिशिष्टप्रत्ययस्वरेणान्तोदात्तत्वमिति विशेषस्य स्पष्टत्वात्। तत्रेष्टापत्तिच्छिरान्वष्टे—इष्यत इति। इत्यर्थः। इति तात्पर्यार्थः। ननु 'टिड्ढेति' सूत्रस्थाञ्ग्रहणेनाजन्तान्ङीष्यप्यौत्सीत्यादेः सिद्धौ 'शार्ङ्गरवेति' सूत्रे-ऽञ्ग्रहणस्य वैयर्थ्यमत आह—अनेनैवेति। अपत्यं स्त्रीति। गोत्रापत्यं स्त्रीत्यर्थः। एतेन गोत्रञ्च चरणैः सहेति जातित्वमस्तीति सूचितम्। मूले इहानेकमिति। नच 'ऋन्नेभ्यः' इत्यादावपि लक्ष्यभेदेनानेकवाक्यताऽस्त्येवेति वाच्यम्, तत्र सङ्ग्राहकवाक्यस्यैकत्वमिह तु तस्य नानात्वमित्याशयात्। अत एव पञ्चाश्वेत्यत्र न ङीप्। नन्वैवमिति। एवञ्च आपिशलमधीते 'आपिशले'त्यस्य व्यावर्त्यस्य लाभे व्याख्यानेनेति मूलोक्तरीत्याऽनुपस-र्जनादित्यस्य प्रयोजनमुक्त्वा 'एतदपि नास्ति प्रयोजनम् स्त्रियामिति वर्तते नाणं विशे-षयिष्यामः, स्त्रियां योऽण्विहितः एवमपि काशकृत्स्निना प्रोक्ता मीमांसा काशकृत्स्नी, तामधीते 'काशकृत्स्ना' ब्राह्मणी अत्र प्राप्नोति, नैष दोषः, अध्येत्र्यामभिधेयायामण ईकारेण भवितव्यम्, पश्चादध्येत्र्यामभिधेयायामण लुकः सः, यश्च श्रूयते उत्पन्न-स्तस्मादीकार इति पुनर्न भविष्यतीति' भाष्यकृदुक्तग्रन्थमूलकव्याख्यानेनेत्यर्थः।

अतष्टाबेव भवति। *ताच्छीलिकेति*। अयं भावः—'शीलम्' 'छत्रादिभ्यो णः' इति यो णस्तस्मिन् अण्कार्यं भवति, कार्यस्ताच्छील्ये इति ज्ञापकात्। अनेन हि 'अन्' इति अणि विहितं प्रकृतिभावं बाधितुं टिलोपो निपात्यते। *चौरीति*। चुरा शीलमस्याः।

*'हलस्तद्धितस्य'*। *उपधाभूतस्येति*। ननु 'यस्येति च' इति यञोऽकारलोपे कृते यकारस्य ईकारपरत्वमस्त्येव किमुपधाग्रहणानुवृत्त्या। न चाल्लोपस्य स्थानिवद्भावः, यलोपे तन्निषेधात्,

---

पकतानुपपत्तिरिति वाच्यम्, लक्ष्यानुसारिव्याख्यानेन स्त्रियामित्यस्य गृह्यमाणविशेषणतयाऽपि तद्वारणसम्भवात्। तस्माद्बहुकुरुचरेत्येव तद्व्यावर्त्यम्, तच्च तदन्तविधिं विना नोपपद्यते इति तज्ज्ञापकत्वम्, स्त्रियामित्यस्य प्रकृतिविशेषणत्वज्ञापकत्वं चेति बोध्यम्, तत्करणे एतद्व्यावृत्तिरपि अनेनैव उपसर्जनपदेनोभयोरपि ग्रहणमित्याशयात्। अण्कार्यमिति। ङीबित्यर्थः। ताच्छीलिके इत्युक्तेः 'तदस्यां प्रहरणम्' इति णे दाण्डेत्येव।

---

तस्मात्=उक्तरीत्या तद्वारणात्। तच्चेति। तस्य तद्व्यावर्त्यत्वञ्चेत्यर्थः। नन्वेवमुक्तरीत्या तस्य तदन्तविधिज्ञापनेऽपि स्वविषये चारितार्थ्यन्दुरुपपादमिति कथं ज्ञापकत्वमत आह—स्त्रियामित्यस्येति। तत्करणे=तद्व्यावृत्त्यर्थमनुपसर्जनादित्यस्य करणे। एतद्व्यावृत्तिरपीति। आपिशला, काशकृत्स्ना एतयोरपीत्यर्थः। अनेनैवेति। प्रकान्तेनानुपसर्जनाधिकारेणेत्यर्थः। ननु प्रतियोगिसमर्पकमुपसर्जनपदं शास्त्रीयोपसर्जनबोधकमिति कथं व्यावृत्तिरत आह—उपसर्जनेति। कृत्रिमाकृत्रिमन्यायोऽत्रानुपसर्जनाधिकारप्रयोजनप्रदर्शनपरभाष्यप्रामाण्येन बाध्यत इति भावः। इत्याशयादिति। मूलस्येति शेषः। अण्कार्यमित्यत्राण्रूपं कार्यमित्यर्थस्य भ्रमवारणायाह—ङीबित्यर्थ इति। इदमुपलक्षणम् 'अणो द्व्यचः' इति फिञ्सिद्धिरपि प्रयोजनम्। एतेन यदि ङीप्सिद्धिरेव प्रयोजनन्तदा स्वातन्त्र्येण ङीप्विधानेन सिद्धे ज्ञापनस्य नोपयोग इति परास्तम्। नच छत्रादिभ्यो लाघवादणेव कार्यः किमनया कुसृष्ट्येति वाच्यम्, ज्ञापकसिद्धस्यासार्वत्रिकत्वेन छात्रेत्यस्य सिध्यर्थमेवमभिधानात्। दाण्डेत्येवेति। एवन्ताच्छीलिक इत्युक्तौ तत्पदोपादानेन यत्र प्रथमान्तात्ताच्छील्यर्थे णस्तत्रैवाण्कार्यमित्यपि बोधितम्, अत एव शीलिकामीति, वार्तिकस्य मांसशीला, मांसकामेत्याद्येवोदाहृतम्। मूले अत एवेति=आपत्यशब्दस्यापत्याधिकारविहितपरत्वादेव। अयञिति। अयसकारो ऽनुनासिकस्तस्येत्संज्ञया निवृत्तिरिति बोध्यम्।

नैवम्, यलोपे कार्येऽल्लोपस्याभीयत्वेनासिद्धत्वात्। *अनपत्येति*। यद्यपि 'अपत्यग्रहणं कर्तव्यम्' इति वार्तिकं तथाऽपि अपत्याधिकारविहितपरं तत्, तादृशश्च गर्गादियञेव, न तु देवाद्यञ्, तस्यापत्याधिकारात् प्रागेव पाठात्। अत एव भाष्यकृता कण्वकरणोऽयञश्चेति गर्गादिभ्योऽयञिति च अकारः प्रश्लिष्टः। यस्कादिभ्यो गोत्रेऽयञञोश्चेति सूत्रेऽप्येवम्।

*'प्राचां ष्फः'*। तद्धितग्रहणं प्रातिपदिकसंज्ञार्थम्। ननु तां विना-

---

अकारः प्रश्लिष्ट इति। तद्वार्तिकप्रत्याख्यानायेति शेषः। 'अभिजिद्विदभृद्' इत्यादिसूत्रेऽस्त्रियामित्यनुवृत्तेस्तस्य गोत्रार्थकत्वेऽपि न तत्र ङीप् सिद्धान्तेऽपीष्टः। 'संघाङ्क' इति सूत्रे एतद्भाष्यप्रामाण्यादेकानुबन्धकपरिभाषाया अप्रवृत्त्या गर्गादियञ एव ग्रहणमिति भावः। एवमिति। अकारः प्रश्लिष्ट इत्यर्थः।

प्रातिपदिकसंज्ञार्थमिति। तत्फलं च ङीपिति भावः। न च लिङ्गविशिष्टपरिभाषया तत्सिद्धिः, एतत्सूत्रस्थैतत्समाधानार्थभाष्यप्रामाण्येनास्याः स्त्री-

---

अकारप्रश्लेषस्य फलमाह—तद्वार्तिकेति। एवञ्च तद्वार्तिकप्रत्याख्यानपरभाष्यमेवापत्यशब्दस्यापत्याधिकारविहितपरत्वे मानमिति दर्शितम्। ननु स्थलत्रय एव यञकारस्य प्रश्लेषस्तदाभिजिदिति सूत्रविहितयञन्तान्ङीबनापत्तिरत आह—अभिजिदिति। अस्त्रियामित्यनुवृत्तेरिति। 'व्रातच्फञ्' इति सूत्रादित्यादिः। सा च मण्डूकप्लुत्या कार्या। गोत्रार्थकत्वेऽपीति। किमत्र मानमिति चेत् तत्सूत्रभाष्यप्रघट्टकमेव। तथा हि—'तत्र गोत्रमिति वक्तव्यम्, अस्य गोत्रत्वप्रयुक्तकार्यम्भवतीति तदर्थः, किम्प्रयोजनम् आभिजितकः, आभिजिदित्यस्यायमित्यत्र गोत्रचरणादिति वुञ् यथा स्यात्, तच्चाकर्त्तुं शक्यम्, गोत्रादयं स्वार्थिको गोत्रे एवं भवति' अत्र भाष्ये वुञ् एव फलत्वेनोक्तो नतु ङीप्। एतेन गर्गादिभ्योऽयञित्यत्रेवाभिजिदिति, सूत्रेऽप्यकारप्रश्लेष इति वदन्तः परास्ताः। अपीष्ट इति=एवञ्च स्त्रियां यञेव, स नास्तीति न तत्र ङीपः सम्भावना, किन्तु गोत्रार्थबोधकत्वातिदेशाज्जातिलक्षणङीष एवेति न तत्राकारस्य प्रश्लेषः स्त्रियामित्यस्यासम्बन्धेऽपि। ननु 'गर्गादिभ्यः' इति सूत्रे ऽकारस्य प्रश्लेषे 'सङ्घाङ्केति' सूत्रेऽस्य द्व्यनुबन्धकत्वाद् ग्रहणन्न स्यादत आह—सङ्घाङ्केतीति। एतद्भाष्येति। सङ्घाङ्केति सूत्रे 'गाग्र्गो घोषः, गार्ग्योऽङ्कः' इत्युदाहरणपरभाष्येत्यर्थः। अभिजिदित्यस्याधिकारपठितभिन्नत्वात्तत्र गोत्रपदेन ऋष्यपत्यरूपं लौकिकं गोत्रमिति बोध्यम्।

कस्यचिदुक्तिं खण्डयति—नचेति। एतत्समाधनार्थेति। 'तद्धितेति किमर्थम्, स्त्रितः

ऽपि षित्करणसामर्थ्यादेव ङीप् भविष्यति । एवं तर्हि तद्धितग्रहण-मिञन्तादपि कचित् ष्फ इति ज्ञापयति । यञन्ते सवर्णदीर्घेणापि रूपसिद्धौ यस्येति लोपस्यानावश्यकत्वात् । तेन 'आसुरेरुपसंख्यानम्' इति वक्ष्यमाणं सिद्ध्यति ।

'आयने' । फकारादिष्वकार उच्चारणार्थः । आयनीनोर्नकारस्य नेत्त्वम् , फिनो नित्करणसामर्थ्यात् ।

'कौरव्य' । कथं तर्हि 'यद्यसौ कूपमाण्डूकि तवैतावतिकः स्मय' इति भट्टिः। अत्राहुः—कौरव्यसाहचर्यादपत्यप्रत्ययान्तस्यैव माण्डूकस्येह ग्रहणम् । इह तु मण्डूकस्येयं भार्येति 'तस्येदम्' इत्यण् । कुमारीति । प्रथमवयोवाची एष शब्दः, न त्वनूढत्वप्रयुक्तः । वृद्धकुमारीति तु

---

प्रत्ययप्रकरणेऽनुपस्थितेः । सामर्थ्यादेवेति । अप्रातिपदिकत्वेऽपीति भावः ।

उच्चारणार्थ इति । तेन ढूक आदेशसिद्धिः । नित्करणेति । असञ्जातविरोध-न्यायसहकृतेत्यर्थः ।

न त्विति । अल्पवयस्यूढायामपि प्रयोगादिति भावः । गौण इति । पुंसा-

---

प्रातिपदिकाधिकारार्थम्, नैतदस्ति प्रयोजनम्, षित्करणसामर्थ्यादेवात्रेकारो भविष्य-तीति' भाष्येत्यर्थः । अस्याः । लिङ्गविशिष्टपरिभाषाया इत्यर्थः ।

तेन = अकारस्योच्चारणार्थत्वेन, तदकारस्य विवक्षितार्थत्वे रेफपरस्याकारान्तत्वा-भावेनादेशो न स्यादिति भावः । उच्चारणार्थत्वे मानन्तु फढखछघामिति निर्देश एव । अत्र ढूक इति फिनोऽप्युपलक्षणम् । मूले फिनो नित्करणादिति । यद्यायनादेशाव-यवस्य नस्येत्संज्ञा स्यात्तदाऽनेनैव 'ञ्नित्यादि' रित्यस्य प्रवृत्तिसिद्धौ फिनो नित्त्वं व्यर्थं स्यादिति भावः ।

ननु आयनो नित्करणसामर्थ्यात्फिनो नस्य नेत्त्वमिति वैपरीत्यमेव कुतो नेष्यत आह—असञ्जातेति । असञ्जातविरोधात्सञ्जातविरोधस्य सङ्कोच एवोचित इति न्यायेत्यर्थः । न सञ्जातो विरोधो = वैयर्थ्यशङ्कया विरोधो यस्य तस्येत्यर्थः । उत्तर-कालिकप्रतीतिविषये यदीत्संज्ञा तदा प्राथमिकप्रतीतिविषये फिनि नित्त्वार्थं नकारो-च्चारणं व्यर्थमिति शङ्का भवतीति तत्रेत्संज्ञाप्रापकशास्त्रसङ्कोच एवोचित इति भावः । एवञ्च तादृशन्यायसहकृतं यन्नित्करणन्तत्सामर्थ्यादिति फलितम् ।

अल्पवयसि = प्रथमवयसि । अपिना ऽनूढासमुच्चयः, एवञ्च याऽल्पवयस्का ऊढा च तस्यान्तादृशप्रयोगदर्शनेनास्य प्रथमवयसः प्रवृत्तिनिमित्तकत्वमावश्यकम् ।

गौणः प्रयोगः। *त्र्यनीकेति*। त्रयाणामनीकानां समाहारः, अत्राजा-देराकृतिगणत्वात् टाबिति त्र्यनीकाधिकरणे मीमांसकाः।

*पञ्चाश्वेति*। नन्वत्र 'द्विगोः' इति ङीप् मा भूत् ठगन्तत्वात्तु स्यादेवेति चेन्न, ठको योऽकार इति व्याख्यानात्। *द्विबिस्तेति*। 'सुवर्णबिस्तौ हेम्नोऽक्षे' इत्यमरः। आचितो = दश भाराः स्युः। *द्विकम्बल्येति*। द्वाभ्यां कम्बल्याभ्यां क्रीता। कम्बल्यमूर्णापलशतम्। 'कम्बलाच्च संज्ञायाम्' इति यत्, क्रीतार्थस्य ठञो लुक्। *द्व्याढकीति*।

ऽसंप्रयोगरूपसादृश्यादिति भावः।

ठगन्तत्वादिति। द्वाभ्यां शताभ्यां क्रीता द्विशतेत्यादौ निषेधश्चरितार्थः। अत्र हि कनो लुक्।

कम्बल्यमिति। अपरिमाणत्वेऽप्येतयोर्ग्रहणं नियमार्थमुन्मानस्य चेदू

नन्वेवं सति वृद्धकुमारीत्येवम्प्रयोगो 'न सु ने' इतिभाष्ये दृश्यते तस्य कथमुपपत्तिरित्यत आह—मूले वृद्धकुमारीति। गौण: = लाक्षणिकः। लक्षणाप्रयोजकसम्बन्धमाह—पुंसाऽसम्प्रयोग इति। कौमारयौवनवृद्धत्वात्मकानि त्रीणि वयांसि यथाहुः—

पिता रक्षति कौमारे भर्त्ता रक्षति यौवने।
पुत्रस्तु स्थविरे भावे न स्त्री स्वातन्त्र्यमर्हति॥ इति।

केचित्तु—बाल्यमध्यत्ववृद्धत्वात् त्रीणि

'आषोडशाद्भवेद् बालो यावत्क्षीरान्नवर्तकः।
मध्यमः सप्तर्तिं यावत्परतो वृद्ध उच्यते'॥ इत्याहुः।

आयुषश्चतुर्भागैश्चत्वारीत्यन्ये यथाहुः—

'आद्ये वयसि नाधीतन्द्वितीये नार्जितन्धनम्।
तृतीये न तपस्तप्तञ्चतुर्थे किं करिष्यति॥ इति'

वयस्यचरम इति वार्तिकं सर्वथा ऽऽरब्धव्यमेवेति बोध्यम्।

ननु पञ्चाश्वेत्यत्र यदि ठगन्तत्वान्ङीपः प्राप्तिस्तदा निषेधवैयर्थ्यमत आह—द्वाभ्यां शताभ्यामिति। आदिना पञ्चानामजानान्निमित्तं धनपतिसंयोग इत्यर्थे 'गोद्यचः' इति यतो 'अध्यर्द्धेति' लुकि पञ्चाजेत्यस्य सङ्ग्रहः। 'अपरिमाण' इति सूत्रे परिमाणशब्दः पारिभाषिकस्यार्थस्य बोधकः।

यथाहुः—

ऊर्ध्वमानङ्किलोन्मानम्परिमाणन्तु सर्वतः।
आयामस्तु प्रमाणं स्यात्संख्या बाह्या तु सर्वतः॥ इति।

द्वावाढकौ पचतीति 'आढकाचितपात्रात्खोऽन्यतरस्याम्' 'द्विगोष्ठंश्च' इति खठञ्भ्यां मुक्ते प्राग्वतीयष्ठञ् तस्य लुक्। एतेन द्व्याचिता व्याख्याता।

'काण्डान्तात्'। षोडशहस्तप्रमाणो दण्डः काण्डम्। यद्यपि विशेषणेन तदन्तविधिः सिद्धस्तथाऽपि अन्तग्रहणे असति क्षेत्र इत्येतत् श्रुतत्वात्काण्डस्यैव विशेषणं स्यान्न तदन्तस्य। ततश्चेहापि स्यात्—द्वाभ्यां काण्डाभ्यां = काण्डप्रमिताभ्यां क्षेत्राभ्यां क्रीता 'द्विकाण्डी' वडवेति। इह तु न स्यात्, *द्विकाण्डा क्षेत्रभक्तिरिति*। अतोऽन्तग्रहणम्। *मात्रच इति*। यत्तु—प्राचोक्तं द्वयसचो लुगिति, तन्न,

प्रथमश्च द्वितीयश्च ऊर्ध्वमाने मतौ मम।

इति सिद्धान्तात्। द्विकाण्डी रज्जुरिति। नन्विहापि परिमाणान्तादिति पूर्वेण निषेधः स्यात्, काण्डशब्दस्यायामपरतयाऽपरि-

---

बिस्तकम्बल्ययोरेवेति। तेनान्यत्रोन्माने द्विपली द्विनिष्कीत्यादिसिद्धिः।

श्रुतत्वादिति। अवान्तरवाक्यार्थबोधोत्तरं 'येन विधिः' इत्यस्य प्रवृत्तेस्तत्काले श्रुतत्वात्तेनैव सम्बन्धे जाते पश्चात्तदन्तविधावपि पुनर्व्यापारे मानाभाव इति भावः। इहापीति। इहैवेत्यर्थः। सिद्धान्तादिति। षोडशहस्त-

---

अत एव द्वे वर्षे भूता, द्वाभ्यां शताभ्यां क्रीता 'द्विवर्षा' 'द्विशते'त्यादौ तिर्यङ्माने द्विहस्ता भित्तिरित्यादौ च निषेधस्य सिद्धिः। नन्वेवं सत्युन्मानवाचकौ बिस्तकम्बल्यशब्दौ नोपादेयौ अपरिमाणत्वादेव सिद्धेरत आह—अपरिमाणेति।

ननु श्रुतस्य शब्दस्य तदन्तपरतया श्रुतत्वादित्येतन्मात्रोपादानेन कथमिष्टसिद्धिरत आह—अवान्तरेति। तत्काले = अवान्तरवाक्यार्थबोधकाले। अयम्भावः—येन विधिरित्यस्य प्रवृत्तिर्विशेषणज्ञानाधीना, तज्ज्ञानत्वमवान्तरवाक्यार्थबोधोत्तरमेवेति। मानाभाव इति। प्रत्युत निराकाङ्क्षत्वमत्र प्रतिबन्धकमस्तीति बोध्यम्। अपिशब्दोपादाने इह तु न स्यादित्युत्तरवाक्यासङ्गतिरत आह—इहैवेति तथाचापिशब्द एवार्थे इति भावः। तिर्यगिति। प्रकृत इत्यादिः। आयामपरिच्छेदकत्वेन प्रमाणवाचित्वादिति भावः। मूले आयामपरतया = आयामपरिच्छेदकपरतया, आरोहतः—उच्छ्रायात्। परिणाहतः—विस्तारात्। अत एव = आयामपरिच्छेदकत्वापरिमाणार्थत्वादेव। येन = कर्षादिना, इदश्च = ऊर्ध्वायामपरिच्छेदकञ्च, एवञ्चास्य द्विरूपत्वमिति फलितम्।

माणार्थत्वात्। परितः सर्वत आरोहतः परिणाहतश्च येन मीयते तद्धि परिमाणमाढककुडवादि, न तु यथाकथञ्चित्परिच्छेदकमात्रम्। यदाहुः—

ऊर्ध्वमानं किलोन्मानं परिमाणं तु सर्वतः।

आयामस्तु प्रमाणं स्यात् संख्या बाह्या तु सर्वतः॥ इति।

अत एव द्विहस्ता भित्तिरित्यत्र ङीब् न। अत्राहुः—नियमार्थमिदम्—क्षेत्रे एव निषेधो यथा स्यादिति। अतो द्विकाण्डी रज्जुरित्यत्र ङीबेव सूत्रस्य फलमिति।

*'पुरुषात्प्रमाणे'*। यद्यपि पुरुषशब्दो जातिवचनस्तथाऽपि द्वौ पुरुषौ प्रमाणमस्या इति वाक्ये प्रमाणे वर्तते एव, प्रमाणशब्दसामानाधिकरण्यात्। वृत्तौ तु तत्स्वभावादेव। तथा च शुल्बसूत्रम्—'पञ्चारत्निः पुरुषः' इति। *द्विपुरुषीति*। अत्र न्यासकारः—'प्रमाणे लो द्विगोर्नित्यम्' इति द्वयसचो लुगित्याह, तन्न, पुरुषशब्दस्य प्रमाणवाचित्वाभावेन 'प्रमाणे ल' इति श्लोकवार्तिकस्य तत्राप्रवृत्तेः। ये हि शमादिवत् प्रमाणत्वेन प्रसिद्धास्तत्रैतत्प्रवर्तते न तु पुरुषशब्देऽपि।

---

प्रमाणदण्डार्थकाण्डशब्दस्तु तिर्यङ्मानमिति न तस्योर्ध्वमानत्वमिति भावः।

प्रमाणे वर्तत एवेति। परिच्छेदके वर्त्तत इत्यर्थः। तत्स्वभावादिति। वृत्तिस्वभावादित्यर्थः। द्वयसचो लुगिति। तस्यायं भावः—आयामो=दैर्घ्यं, तच्च द्विविधम्—तिर्यगूर्ध्वं च। उन्मानं च तुलादावारोप्य येन मीयते तदिदं च, विनिगमनाविरहादिति। प्रमाणवाचित्वाभावेनेति। तिर्यङ्मानस्यैव प्रमाणत्वात्। तिर्यङ्मानस्यैवायामपदेन प्रमाणलक्षणे ग्रहणं न तूर्ध्वमानस्य। ऊर्ध्वमानं किलोन्मानमित्युक्तेरिति भावः। द्विगोर्लुगित्यंशोऽपि प्रमाणे इत्यनुवर्त्तते प्रवर्त्तते इति तात्पर्यम्। प्रमाणत्वेन प्रसिद्धा इति। तिर्यङ्मानत्वेन प्रसिद्धा इत्यर्थः। शमादीनामूर्ध्वाधरदिगवस्थितवस्तुपरिच्छेदकत्वेऽपि

---

ननु पुरुषशब्दस्य प्रमाणवाचित्वाभावेनेत्यसङ्गतम्पूर्वग्रन्थविरोधादत आह—तिर्यङ्मानस्यैवेति। इत्युक्तेः—इति पृथगुक्तेः, ननु श्लोकवार्तिके प्रमाणे ल इत्यस्य भिन्नवाक्यत्वेन तत्प्रवृत्तेर्निर्बाधतया तदुक्तिरदुष्टैवेत्यत आह—द्विगोरिति। शमादीनाम्पुरुषतुल्यत्वशङ्कां वारयति—शमादीनामिति। शमशब्दो हस्तवाची, 'पाणिः शमः

अन्यथा पुरुषद्वयसमित्यत्रापि लुक् स्यात् । स्पष्टं चेदं 'पुरुषहस्तिभ्यामण् च' इति सूत्रे पदमञ्जर्याम् । न चैवं द्वयसज्दघ्नचावपि नास्मात्स्यातामिति वाच्यम्, ऊर्ध्वमाने मतौ ममेति वचनात् । एवं 'पुरुषात्प्रमाणे' इत्यस्यापि सामर्थ्यादेव प्रवृत्तिः । यत्तु—तत्रैव सूत्रे द्विगोर्नित्यं लुगिति वृत्तिग्रन्थमुपादाय हरदत्तेनोक्तम्—तस्मादप्राप्त एवात्र लुग्विधीयते इति, तदपि चिन्त्यम्, मुनित्रयानुक्तस्य विधानोक्तेर्व्याहतत्वात् । यदपि प्राचीनप्रक्रियां व्याचक्षाणैरुक्तं 'पुरुषहस्तिभ्याम्' इत्यत्र पठ्यमानेन वार्तिकान्तरेण लुगिति, तदपि रभसोक्तिमात्रम्, उदाहृतसूत्रस्य भाष्यवार्तिककाराभ्यामस्पृष्टत्वादित्यास्तां तावत् । वस्तुतस्तु 'पुरुषात्प्रमाणे' इति सूत्रे द्विगोस्तद्धितलुकि इत्यनुवर्तते । तत्सामर्थ्याल्लुगप्याक्षिप्यते । हरदत्तोक्तिरपि कथञ्चिदेवं

---

तिर्यगवस्थितवस्तुनोऽपि परिच्छेदकत्वात्तत्त्वेन सिद्धिरक्षता । अन्यथेति । न च 'प्रमाणे लः' इत्यत्र समर्थानां प्रथमाद्वेत्यतो वेत्यनुवृत्तेरुक्तप्रयोगसिद्धिः, आद्यपदयोरननुवर्तनेन वेत्यस्याप्यसम्बन्धात् । लुक् स्यादिति । शम इत्यादाविवेति भावः । सामर्थ्यादिति । तिर्यगवस्थितवस्तुपरिच्छेदकत्वेऽपि सामर्थ्यात्प्रमाणपदस्य परिच्छेदकमात्रपरत्वमिति भावः । लुगप्याक्षिप्यत इति । इदमपि वृत्त्याशयवर्णनमात्रम्, वस्तुतस्तु द्वौ पुरुषौ प्रमाण-

---

शयो हस्तः' इत्यमरोक्तेः 'पञ्चशाखः शमः पाणिरिति' पाठान्तराच्च, आदिना अङ्गुल्यादीनाङ्ग्रहणम् । वस्तुनोऽपीति । अत एव द्विशर्मा, द्विशमेति तत्र रूपद्वयम्भवति । वस्तुत आद्ये लुगप्राप्त्या द्विशमद्वयसमित्येव । तत्त्वेन = तिर्यङ्मानत्वेन, अत एव वितस्तिर्द्वादशाङ्गुल इति प्रसिद्धिः । पुरुषशब्दस्य तु ऊर्ध्वाधरदिगवस्थितवस्तुमात्रपरिच्छेदकत्वेन क्वचिदपि न प्रमाणवाचकत्वम् । प्रयोगसिद्धिरिति । लुको वैकल्पिकतयोक्तप्रयोगसिद्धिः । आद्यपदयोः = समर्थानाम्प्रथमादित्यनयोः, तयोः प्रत्ययविधावुपयुक्तत्वेनायोग्यत्वादत्रासम्बन्ध इति भावः । असम्बन्धादिति । सन्नियोगशिष्टन्यायोऽत्र साधक इति भावः । दृष्टान्तप्रदर्शनेन कथितस्य दार्ढ्यम्भवतीत्याशयेनाह—शम इत्यादाविवेति । सामर्थ्यं स्पष्टयति—तिर्यगेवेति । सामर्थ्यात् = तदुपादानसामर्थ्यात् । इदमपि = वस्तुतस्त्वित्यादिना मूलोक्तमपि, उपादानसामर्थ्यमेव नास्तीत्याह—वस्तुत इति । आर्हादिति सूत्रे परिमाणम्पारिभाषिकमेवेत्याशयेनाह—ढक इति । उन्मानस्याग्रहणमिति मतेनाह—ढञ इति । उत्तरसूत्रेति । 'सङ्ख्यायाः संज्ञासङ्घ

परतयैव नेयेति सहृदयैराकलनीयम् । प्रमाणे किम्—द्वाभ्यां पुरुषाभ्यां क्रीता द्विपुरुषा गौः । तद्धितलुकीत्येव । समाहारे पञ्चपुरुषी ।

'ऊधसोऽनङ्' । नादेशेनैव सिद्धेऽनङ्करणं 'बहुघ्नी' इत्येतदर्थम् ।

'दाम' । बहुव्रीहिविशेषणत्वादेव सिद्धे अन्तग्रहणं स्पष्टार्थम् । संख्यादेरिति । स्वरितत्वबलादेकदेश एवानुवर्तत इति भावः ।

'केवलमामक' । इत्यादीति । अङ्ग्यस्यां मामकी तनू । मित्रावरुणयोर्भागधेयी । अनिषेव्यास्तन्वः सन्तु पापीः । उत्तापरीभ्यो मघवा विजिग्ये । समानीव आकूतिः । आर्यकृती । सुमङ्गली । शिवा रुद्रस्य भेषजी । प्रत्युदाहरणं त्विति । यत्तु—माचाऽन्तर्वर्ती पलितवतीति प्रत्युदाहृतम्, तदयुक्तमिति भावः । व्यस्ते कथमिति । यत्तु भाचा समस्तेऽप्युपचार इति वर्णितम्, तन्मुधेति भावः ।

---

मस्या इत्यर्थे 'तदस्य परिमाणम्' इति ठक्ष्ञो वा 'अध्यर्द्ध'ेति लुकि शास्त्रस्य चारितार्थ्यात् तदाक्षेपे न मानम्, तत्र हि परिमाणशब्देनोत्तरसूत्रानुरोधेन परिच्छेदकमात्रग्रहणमिति तत्त्वम् ।

नादेशेनेति । अत एव 'ऊधसो नकारो लिङ्गाधिकारे' इति वार्तिककृतोक्तम् । एतेन लाक्षणिकत्वादस्यानो 'अल्लोपोऽन' इति न स्यात् । कुण्डोध्न्यादिभ्य आचारक्विप्यात्मनेपदार्थं च ङकार इत्यपास्तम् । अत्रत्यवार्तिकभाष्यप्रामाण्येनान्ग्रहणे प्रतिपदोक्तपरिभाषया आचारक्विभावस्य च तदन्ते आत्मनेपदाभावस्य वा कल्पनात् ।

तदयुक्तमिति । अन्तर्वर्तीत्यत्र मतुपोऽप्राप्तेरिति भावः । तन्मुधेति ।

---

तिसूत्रेत्यर्थः । 'संख्या बाह्या तु सर्वतः' इत्युक्तेस्तद्वाचकस्यापरिमाणवाचकत्वात्सामानाधिकरण्यानुपपत्तिरन्यथा स्यादिति भावः । अत एव षष्टिर्जीवितपरिमाणमस्य षाष्टिक इत्यस्य सिद्धिः ।

मूलस्थपूर्वपक्षदाढ्यायाह—अत एवेति = नादेशेन सिद्धत्वादेव । एतेन ङकारार्थस्य वार्तिककारसम्मतत्वेन । न स्यादिति । एतेनाकारोच्चारणस्य फलमुक्तम् । ङकारोच्चारणस्य फलमाह—कुण्डोध्न्यादिभ्य इति । एतेनेत्येतदर्थं स्पष्टयति—अत्रत्येति । अन्ग्रहण इति । अर्थवत्परिभाषावदिति शेषः । तदभावकल्पनमात्रेणोपपत्तौ क्विभावकल्पनमनुचितमित्याशयेनाह—आत्मनेपदेति । मूले सुमङ्गलीरियमिति । अत्र 'सुमङ्गली' इत्युदाहरणम्बोध्यम् । सुमङ्गलीरियमिति स्त्रीप्रत्ययान्तत्वप्रसङ्गादुदा-

'पूतक्रतोरै च' । ऐकार आदेशो न तु प्रत्ययः, उत्तरसूत्रे उदात्त इत्युक्तेः । *न त्विति* । अन्यथा वृषाकपिशब्दो 'लघावन्ते द्वयोश्च बह्वषो गुरुः' इति मध्योदात्त उदात्तत्वं प्रयोजयति, अग्न्यादिषु त्रिषु 'स्थाने ऽन्तरतम' इत्येव सिद्धमिति प्राचां ग्रन्था विरुध्येरन्निति भावः ।

*उदात्तैकार इति* । मनुशब्दो ह्याद्युदात्तः । वृषाकपिनीत्यादौ अनेकप्रत्ययविधायके सूत्रे धान्ये निदित्यधिकारात् । समासनिर्देशे-नैतद्दर्शयति—उदात्त इत्यनुवर्तमानं सम्बद्धानुवृत्तेरैकारेणैव सम्बध्यते न त्वौकारेणापीति । ततश्च यदुक्तं प्राचा ऐकारौकारावुदात्तौ स्त इति तदुपेक्ष्यम्, वृत्तिपदमञ्जर्यादिविरोधादिति भावः । *मनायीति* । मध्योदात्तम् । इतरद् द्वयमाद्युदात्तम् । एता = कर्बुरा । *वर्णानामिति* । एतः, शोणः, शितिः, पृश्निः, पृषन् इत्युदाहरणानि । *त्र्येण्येति* । अत्र उत्तरपदस्योपसर्जनत्वेऽपि समस्तस्य अनुपसर्जनत्वमिति भावः । सञ्ज्ञात्वाद् णत्वं छान्दसत्वाद्वा ।

---

'विभाषा सपूर्वस्य' इत्यत्र यज्ञसंयोग इत्यस्यासम्बन्धात् । अत एवाशायाः पतिराशापत्नीति तत्रोदाहृतं भाष्ये । आशापूरकत्वेन कस्याश्चित्तत्पतित्व-मिति भावः ।

इत्युक्तेरिति । प्रत्ययत्वे हि 'आद्युदात्तश्च' इत्येव सिद्धे तद्वयर्थ्यं स्पष्ट-मेवेति भावः । न त्वौकारेणेति । ततश्च स आन्तरतम्यादनुदात्त एवेति भावः । इतरद् द्वयम् = मनावी–मनुरित्येतत् । समस्तस्येति । एतच्च वृत्त्यु-

---

क्तम् । क्वचित्तु ÷ सुमङ्गली शिवेति पाठः । यदि तु सुमङ्गलीरित्येवोदाहरणमित्या-ग्रहस्तदा छान्दसत्वात्सुलोपाभाव इति बोध्यम् ।

अनुक्तत्वे हेतुमाह—अन्तरिति । ननु न तन्मुधा यज्ञसंयोगाभावादत आह—विभाषेति । अत एव=यज्ञसंयोग इत्यस्य तत्राऽसम्बन्धादेव ।

तद्वैयर्थ्यम्=उदात्तशब्दोपादानवैयर्थ्यम् । ततश्च = मनुशब्दस्याद्युदात्तत्वे-नान्त्यस्यानुदात्ततया च । एतच्च=समासात्मकसमुदायस्यानुपसर्जनत्वस्य प्रदर्शनञ्च ।

---

१ वस्तुतस्तु टिड्ढेति सूत्रे अनुपसर्जनादिति गृह्यमाणस्यैव विशेषणमित्यस्य सिद्धान्तसिद्धतया वर्णा-दिति सूत्रेऽपि अनुपसर्जनं यो वर्णवाची तदन्तादित्येवार्थः । न च 'त्र्येणी' इत्यस्यासिद्धिः, त्रिषु स्थानेषु एनी–एतवर्णविशिष्टा इति तत्पुरुषसमासेन तत्सिद्धेः ।

*कमेके इति* । अत्र छन्दसीति भाष्योक्तेर्लोके 'गतो गणस्तूर्णम-सिक्निकानाम्' इत्यादिप्रयोगाः प्रामादिका इति प्राञ्चः । वस्तुतस्तु छन्दस्येके इत्यन्वयात् भाषायामपि इति भाष्याभिप्रेतम् । अन्यथा एकग्रहणं न कुर्यात् । न हि 'छन्दसि पलिक्नीरियुवतय' इत्यादिप्रयोगेषु कश्चिद्विप्रतिपद्यते । *विशुद्धवाचीति* । दैप् शोधने इति स्मरणात् । 'अवदातः सितो गौरः' इति कोशे तु विशुद्धत्वसाधर्म्यात् प्रयोगे उपनिबद्ध इति भावः । *लघाविति* । अन्ते एकस्मिन् लघौ द्वयोश्च लघ्वोः परतो बहुषो = बह्वचकस्य गुरुरुदात्तः स्यात् । अपिति अचः प्राचां सञ्ज्ञा । *कृष्णेति* । कृषेश्चेति नप्रत्यये कपेश्चेति सौत्राद्धातोरौणादिके इलचि च कृष्णकपिलावन्तोदात्तौ ।

---

वृत्त्यनुसारेणोक्तम् । टिड्ढाणञित्यादाविवात्रापि गृह्यमाणविशेषणत्वमेवेति 'उपमानानी'ति सूत्रभाष्यसंमते पक्षे त्रिषु स्थानेषु 'एनी, श्येणी'ति बोध्यम् । छान्दसत्वाद्वा ङीप् । तद् ध्वनयन्सञ्ज्ञात्वानङ्गीकारे आह—छान्दसत्वाद्वेति । ङीप् णत्वं चेति शेषः । -

प्राञ्च इति । कैयटादय इत्यर्थः । छान्दसेषु सूत्रेषु वाग्रहणवदिदमेक इत्यपीति तेषां भावः । न प्रत्यय इति । दशपाद्यनुसारेणेदम् । तत्र हि नप्र-

---

गृह्यवृत्त्यनुसारेणेति । तत्र हि नारायणेन बहुव्रीहिङ्कृत्वा ऽनेन ङीबित्युक्तम् । भाष्यसम्मत इति । तत्र हि 'शर्ङ्गश्यामा इत्यत्र श्यामाशब्दः शस्त्रश्यामेव वर्तते । उपमेयन्तु समासवाच्यमिति पक्षे शर्ङ्गश्यामो देवदत्त इत्यत्र ह्रस्वत्वम् सिध्यति । यद्युपसर्जनह्रस्वत्वन्तदा कुम्भकपाललोहिनीत्यत्रानुपसर्जनलक्षण इकारो न प्राप्नोति' इत्युक्तम्, त्रिषु एनीत्यत्र "सुप्सुपेति" समासः । "सुप्सुपेति" समासकल्पनस्याग्रा-कगतिकत्वादाह—छान्दसत्वादिति । आर्षत्वादित्यर्थः । असंज्ञात्वादाह—पात्वञ्चेति । यदि त्वस्य संज्ञात्वन्तदा छान्दसत्वं ङीबंशे एव हेतुः ।

वस्तुतस्त्वित्युक्तरीत्या कैयटमते एक इत्यस्य वैयर्थ्यंम्प्राप्नोतीत्यतः कैयटाद्याशय-माह—छान्दसेष्विति । तेषाम्=कैयटादीनाम्, तत्र हि=दशपाद्यां हि । "षिद्गौरा-दिभ्यश्च" अस्मिन्गणे गवयादीनामपि पाठ इति कस्यचिन्मतन्तन्न युक्तम् । 'जातेरस्त्री'-तिसूत्रे योपधप्रतिषेधे 'हयगवयमुकयमनुष्यमत्स्यानामप्रतिषेध' इति वार्त्तिकविरो-धादिति कैयटः । एवञ्चात्र 'सूर्यतिष्य' इति सूत्रस्य लेखो गौरादिषु मत्स्यशब्दस्य पाठभ्रमादिति बोध्यम् ।

'षिद्गौरादिभ्यश्च'। श्वन्शब्दोऽत्र पठ्यते। तेन 'ऋन्नेभ्यो ङीप्' इत्यत्र यत्प्राचा 'शुनी'त्युदाहृतं तत्प्रामादिकम्। यत्तु व्याचक्षते-श्वानमाचष्टे श्वेवाचरतीति वार्थे णिचः क्विपो वा क्वौ उपसर्जनत्वात्

---

त्ययप्रकरणे 'तृषिशुषिरसिक्रुषेश्चकित्' इति, इलचप्रकरणे कपेश्चेति पठितम्। कपिः सौत्र इति चोक्तम्। पञ्चपाद्यां तु 'कृषेर्वर्णे' इति नक्प्रत्ययः कसेः पञ्चेति इलजित्युक्तम्।

पठ्यत इति। इदं चासिद्धवत्सूत्रे भाष्ये स्पष्टम्। उक्तं रूपमिति। नान्तं रूपमित्यर्थः। णिचि 'नस्तद्धिते' इति टिलोपे तदभावः स्पष्ट एव। न च 'नस्तद्धिते' इति टिलोपो नेष्ठवद्भावेन। 'टे' रिति तु 'प्रकृत्यैकाजि'ति निषिद्धमिति वाच्यम्, अस्य मतस्य नामधातौ दूषयिष्यमाणत्वात्। तद् ध्वनयतोक्तम्--मुख्यमते इति। 'नस्तद्धिते' इत्यस्यापि प्रकृतिभाव इति 'षपूर्वे'ति 'प्रकृत्यैकाजि' ति सूत्रभाष्ये ध्वनितत्वेन पूर्वं टिलोपाभावेऽपि सम्प्रसारणे 'वार्णादाङ्गमिति' पररूपात्पूर्वं टिलोप इति तस्य दौर्लभ्यम्।

---

उक्तं रूपमित्यस्य शुनीतिरूपमिति नार्थः, ङीप एवाप्राप्तेरत आह---नान्तमिति। एवञ्च नान्तत्वाभावेन 'ऋन्नेभ्य' इत्यस्य न प्राप्तिरिति भावः। एतदेवोपपादयति-णिचीत्यादिना। तदभावः=नान्तरूपाभावः, खण्डनकारोक्तिन्निरस्यति-नचेति। नेष्ठवद्भावेनेति। यदिष्ठनि दृष्टन्तस्यातिदेशो ह्यनेन क्रियते, नस्तद्धितटिलोपस्तु न, दृष्टरित्यस्यैव प्रवृत्तेः, परत्वाद् ब्रह्मिष्ठ इत्यादौ दर्शनाद्। निषिद्धमिति। प्रकृतिभावे हि तस्य प्रवृत्तिर्भवतीति निषेधफलसम्पत्त्या निषिद्धमित्युक्तम्। नच प्रकृतिभावेनैव 'नस्तद्धिते' इत्यस्यापि प्रवृत्त्यभावे सिद्धे 'नस्तद्धिते' इति न दृष्ट इति हेतूपन्यासोऽयुक्त इति वाच्यम्, 'येन नाप्राप्तिन्यायेन' प्रकृतिभावस्य 'टे'रिति सूत्रबाधकत्वस्यैव निर्णयात्। एवञ्च प्रकृतिभावाट्टिलोपासम्भवान्नान्तस्य लाभ इति मूलच्छिन्त्यमिति तदाशयः। अस्य मतस्य=प्रकृतिभावस्य टेरिति सूत्रमात्रबाधकत्वमिति मतस्य। यदि प्रकृतिभावष्टेरित्यस्यैव बाधकस्तदा नैकाजित्येव सिद्धे प्रकृत्येत्येतदुपादानस्य वैयर्थ्यमिति भावः। प्रकृतिभावस्य सर्वबाधकत्वादेव 'अल्लोपोऽन' इत्यल्लोपोऽपि तद्विषये नेति प्रतिपादितम्। प्रकृत्येत्येतदुपादानसामर्थ्यात्तद्विषये न्याथाप्रवृत्तिरित्याशयः। अत एवाह-नस्तद्धित इत्यस्यापीति। अपिना टिलोपसामान्यसङ्ग्रहः। षपूर्वेतीति। तत्र हि 'किमिदं षपूर्वादीनाम्पुनर्वचनमल्लोपार्थमाहोस्विन्नियमार्थम्, कथं वा अल्लोपार्थम् कथं वा नियमार्थम्, यद्यविशेषेणाल्लोपटिलोपयोः प्रकृतिभावस्ततो विध्यर्थम्, अथ हि अणि टिलोपस्यैव प्रकृतिभावस्ततो नियमार्थम्' इति भाष्ये उक्तम्। तत्र कैयटः÷प्रकृत्यैकाजित्यादिः प्रकृतिभावः प्राकरणिकानि कार्याणि भेदेनापेक्ष्ये-

ङीषभावे निःशुनीत्यादिवत् ङीबिति, तन्न, णिचि सम्प्रसारणटिलोपयोरुक्तं रूपं मुख्यमते दुर्लभम्। अन्यत्र तु आस्तां कथंचित्।

तदुक्तं—सम्प्रसारणटिलोपयोरिति। अन्यत्र=क्विबन्तात् क्वौ। 'अनुनासिकस्य' इति दीर्घेऽपि एकदेशविकृतन्यायेनान्त्वमिति सम्प्रसारणं भवतीति भावः। कथञ्चिदिति। अनेनारुचिः सूचिता। तद्बीजमेषामनभिधानम्। अन्यथा 'अनुपसर्जना' दिति सूत्रस्य तदन्तविधिज्ञापकता भाष्योक्ता भज्येत। किं चाचक्षाणकर्त्रादिरूपार्थस्यापि श्वशब्दार्थत्वेन तस्यानुपसर्जनत्वाद-

तद्भेदेन वेति पक्षद्वयोपपत्तिरित्याह—अविशेषेणेति, अल्लोपटिलोपसमुदायमपेक्ष्य प्रकृतिभावो विधीयते, भेदेनेत्यनेन बाध्यविशेषचिन्तोक्ता तदा अनन्तरस्येतिन्यायाट्टिलोपस्यैव प्रकृतिभाव इति पक्षः। अस्मिन्पक्षे ऽल्लोपोन इति सिद्धे नियमार्थम्, यदि बाध्यसामान्यचिन्ता तदा प्रकृतिभावस्य सर्वबाधकतयाऽल्लोपस्यापि प्रकृतिभावेन निवृत्तौ प्राप्तायां विध्यर्थमिदं सूत्रम्। अत्र भाष्ये ऽल्लोपटिलोपयोरिति बाध्यसामान्यचिन्ताभिप्रायेणोक्तन्तदा 'नस्तद्धिते' इत्यस्यापि प्रकृतिभावेन निवृत्तिरिति युक्तमेव। अत एव नैकाजिति नासूत्री प्रकृत्यैकाजितीति, 'तत्र हि प्रकृत्यैकाजिति किमिष्टमेयस्तु ? आहोस्विदविशेषेण ? किन्त्वतः, यद्यविशेषेण खौखीशौवमधुना अत्रापि प्राप्नोति, तद्धितसामान्ये प्रकृतिभावविधानात्, 'अत इनिठना' विति खखशब्दयोरिनौ प्रकृतिभावे सति 'यस्येति' लोपाप्रसङ्गः, शौवमित्यत्र शुनो विकारावयवयोः प्राण्यञि कृते 'नस्तद्धित' इति टिलोपो न प्राप्नोति, अधुनेत्यत्र इदमः इशादेशोऽधुना प्रत्ययश्चेति' यदा प्रक्रिया तदा 'यस्येति' लोपाप्रसङ्ग इति पूर्वपक्षे 'एकाक्षरात्कृतो जातेः संख्यायाश्च न तौ स्मृताविं' त्यनेन खिखिनोरनभिधानम्प्रतिपाद्य शौवमित्यस्य श्वन्शब्दादञि द्वारादित्वादैजागमस्य टिलोपस्य च प्राप्तौ, परत्वादैजागमे प्रकृतिभावस्याप्राप्तौ 'पुनः प्रसङ्गविज्ञाना' ट्टिलोपस्याप्रवृत्त्या सिद्धिमुक्त्वाऽधुनेत्यत्र सप्रत्ययकस्य स्थाने निपातनक्रियते इत्युक्त्वा तस्य सिद्धिरुक्ता। तत्रान्यथासिद्धिप्रदर्शनेन सूत्रस्य प्रत्याख्यानेप्यारम्भपक्षे प्रकृतिभावस्य 'नस्तद्धिते' इति टिलोपबाधकत्वं शौवमित्युदाहरणप्रदर्शनेन ध्वनितमित्यर्थः। तस्य=नान्तरूपस्य। तदुक्तमिति। तदेतदभिप्रेत्योक्तमित्यर्थः। एकदेशविकृतन्यायेनेति। स्थानिवद्भावेनेत्यर्थः। अनेन=कथञ्चिदित्युपादानेन। एषाम्=क्विबन्तात्क्विबन्तानाम्, भज्येतेति। एषस्याभिधानं स्यात्तदैतद्द्वारकतया तदधिकारस्य प्रकृतसूत्रे चरितार्थतया वैयर्थ्याभावेन ज्ञापकता भज्येतेत्यर्थः। अभिधानमभ्युपेत्याह—किञ्चेति। आचक्षाणकर्त्रादिरूपार्थस्य=आचक्षाणरूपो यः कर्त्रादिरूपो ऽर्थस्तस्य। श्वशब्दार्थत्वेनेति। यः शिष्यते स लुप्यमानार्थाभिधायीति न्यायेन, श्वन्शब्देनैव श्वकर्मकाचक्षा-

*आवपनं चेदिति ।* ओप्यते निक्षिप्यते धान्यं यस्मिन् । *गोणान्येति ।* यस्या याहच्छिकं नाम । *अकृत्रिमेति ।* यथा-'सैषा स्थली यत्र विचिन्वता त्वाम्' इति । *स्थलान्येति ।* कृत्रिमा = पुरुषेण संस्कृता । यथा स्थल्योदकं परिगृह्णन्ति । भाणा-पक्का । *अयोविकार इति ।* फाल इति प्रसिद्धः । *कुशान्येति ।* छन्दोगाः स्तोत्रीयगणनार्थान् औदुम्बरान् शङ्कून् कुशा इति व्यवहरन्ति । 'अतः कृकमी' ति सूत्रे 'हानौ तूपाय ने' ति व्याससूत्रे 'कुशा वानस्पत्या स्थ ता मा पाते' ति श्रुतौ च प्रसिद्ध एवायम् ।

---

स्यैव ङीपः प्राप्तिः । अभिव्यक्तेति न्यायस्तु पदकार्यविषय एवेति ।

हृत्याहुरिति । अत्रारुचिबीजं त्वाकडारसूत्रस्थभाष्यविरोधः । तत्र हि समस्तकृदन्ततद्धितसर्वनामजातिसंख्यासञ्ज्ञाशब्दातिरिक्तप्रातिपदिकमा-

---

नकर्तुः प्रतिपादनादिति भावः । एवञ्च दृष्टान्तदार्ष्टान्तिकयोर्वैषम्येनोपसर्जनत्वान्ङीष-भाव इत्युपादानं विरुद्धमिति तात्पर्यम् । नन्वभिव्यक्तेति न्यायेनैतादृशस्य शब्दस्य गणपठितशब्देन बोधनेऽपि ततो ङीप् न भविष्यतीत्यत आह—अभिव्यक्तेतीति । 'हस्वनद्यापः' इति सूत्रस्थभाष्यप्रामाण्येन हलन्तेभ्य आचारे क्विब्भावाच्चेदृशानामन-भिधानमित्यपि बोध्यम् ।

मूले उत्तरार्थमिति 'नित्यञ्छन्दसी'ति सूत्रार्थमित्यर्थः । अत्रेति=आहुरिति कथने । अतिरिक्तप्रातिपदिकमात्रस्येति । तत्र हि 'कानि पुनरस्य योगस्य प्रयोजनानी'त्युप-

---

१ मृतं ज्ञानिनमुपक्रम्य द्विधा श्रुतिः 'अश्व इव रोमाणि विधूय पापं चन्द्र इव राहोर्मुखात्प्रमुच्य धूत्वा शरीरमकृतं कृतात्मा ब्रह्मलोकमभिसम्भवामि, इति ( छा, ८-१३-१ ) 'तस्य पुत्रा दायमुपय-न्छन्ति सुहृदः साधुकृत्यां द्विषन्तः पापकृत्याम्' इति च ( कौ १-४ ) क्वचित् पुण्यपापयोर्हानमेवोच्यते, क्वचित्त सुहृदादिभिरुपादानमेव । तत्र यत्र हानमात्रं श्रूयते तत्र हानेनोपादानमाक्षिप्यते नवेति संशये सूत्रम् 'हानौ तूपायनशब्दशेषत्वात् कुशाच्छन्दस्तुत्युपगानवत्तदुक्तम्' इति अयम्भावः—यत्र श्रुतौ हान-मात्रमुपात्तं तत्र श्रुत्यन्तरोक्तमुपायनमाक्षिप्यते । यथा—माल्लविशाखायाम् ( कुशा वानस्पत्यास्थ ता मा पात ) इति । कुशा उद्गातॄणां स्तोत्रगणनार्था दारुमय्यः शलाकाः । भो कुशा यूयं वनस्थमहावृक्षप्रभवाः ता मां पात रक्षत । अत्र वनस्पतिप्रभवत्वमात्रोक्तम् । परन्तु उदुम्बरवनस्पतिप्रभवा एव ता गृह्यन्ते, 'औदुम्बराः कुशाः' इति शाट्यायनिश्रुतेरौदुम्बरत्वस्याक्षेपात् ।

'छन्दोभिः स्तुवते' इत्यत्र पूर्वं देवच्छन्दसा स्तुतिः, असुरच्छन्दसा वा इति संशये 'देवच्छन्दसि पूर्वाणि' इति पैङ्गीश्रुतेः पूर्वत्वग्रहः । षोडशिनः पात्रविशेषस्य ग्रहणे स्तोत्रमुक्तं कदा स्तुतिरित्याकाङ्क्षा-याम्-समयाध्युषिते सूर्ये षोडशिनः स्तोत्रमुपाकरोति' इति सामान्येतोपगानस्य 'अध्वर्युरुपगायति, इति श्रुत्याऽध्वर्युकर्तृकत्वमेव तत्र । तथा हानश्रुतावपि हानौ केवलायां श्रूयमाणायामपि उपायनं सन्नि-पतति । हानशब्दशेषत्वादुपायनस्य । यत्र हानं तत्रोपायनं श्रुत्यन्तरान्निपतयन्त्यत्रती विस्तरः ।

पतिंवरेति । तथा च पाणिग्रहणोत्कण्ठाभिधायित्वादगुणवचनोऽयमिति भावः ।

'बह्वादिभ्यश्च' । बहुशब्दस्य गुणवाचित्वात् पूर्वेण सिद्धे उत्तरार्थं ग्रहणमित्याहुः । वस्तुतस्तु बहुशब्दो 'नित्यं छन्दसी'त्युत्तरसूत्रं चेति द्वयमपि व्यर्थमेव, सर्वविकल्पानां छन्दसि व्यवस्थितत्वात् ।

---

त्रस्य गुणवचनसञ्ज्ञा कृता । बहुशब्दश्च संख्या । अत्रार्थे बहुग्रहणमपि मानम् । 'सत्त्वे निविशत' इत्यादि गुणलक्षणमपि तदेकवाक्यतापन्नमित्यन्यत्र प्रपञ्चितम् । व्यर्थमेवेति । उत्तरार्थमिति वदतां मत इति शेषः ।

---

क्रम्य "बाध्या बाधिकाश्च सञ्ज्ञा दर्शिताः । तन्मध्ये या याः परा अनवकाशाश्च तास्ताः पूर्वाः सावकाशाश्च बाधन्ते" इत्युक्त्वा "अर्थवत्प्रातिपदिकम् गुणवचनञ्च, गुणवचनसञ्ज्ञकञ्च भवत्यर्थवत्" इत्युक्तम् । अत्र चकारोपादानेन प्रातिपदिक-गुणवचनसञ्ज्ञयोः समावेशो दर्शितः । ततः समासकृत्तद्धिताव्ययसर्वनामासर्वलिङ्गाजातिरिति क्रमेण दर्शिताः । तत एतच्च वक्तव्यमित्युक्त्वा 'संख्या' संख्यासञ्ज्ञा वक्तव्या, 'डुच' डुसञ्ज्ञका वक्तव्या, का पुनर्डुसञ्ज्ञा षट्सञ्ज्ञा एकद्रव्योपनिवेशिनी संज्ञा इत्येतच्च वक्तव्यम्, किमर्थमिदमुच्यते यथान्यास एव भूयिष्ठाः संज्ञाः क्रियन्ते, सन्ति चैवात्र काश्चिदपूर्वाः संज्ञाः, अपि च एतेनानुपूर्व्येण सन्निविष्टानाम्बाधनं यथा स्यात्, गुणवचनसञ्ज्ञायाश्चैताभिः सञ्ज्ञाभिर्बाधनं यथा स्यादि' त्युक्तम् । एवंक्रमेण बाध्यबाधकभावे पाणिनेरपि सम्मतिमाह—अत्रार्थ इति । नचैवं सति राजपौरोहित्यादौ समाससंज्ञया गुणवचनसञ्ज्ञया बाधात्कथं ष्यञिति वाच्यम्, ब्राह्मणादित्वात् । ननु बहुशब्दस्य 'वोतो गुणवचना' दिति सूत्रभाष्योक्तगुणलक्षणाक्रान्तत्वाद्गुणवचनत्वमस्त्येवेत्यत आह—सत्त्व इति ।

सत्त्वे निविशतेऽपैति पृथग्जातिषु दृश्यते ।
आधेयश्चाक्रियाजश्च सोऽसत्त्वप्रकृतिर्गुणः' ॥ इति ।

गुणलक्षणमप्याकडारसूत्रस्थगुणवचनलक्षणैकवाक्यतापन्नमिति संख्यासञ्ज्ञयास्या बाधः स्यादेवेति भावः । सत्त्वे निविशते = द्रव्ये निविशते प्रवर्तते, अपैति = द्रव्यस्य सत्त्वेऽपि नाशो भवति, एताभ्यां विशेषणाभ्यां सञ्ज्ञाया जातेश्च निरासः । न हि सञ्ज्ञा-जातिश्चाश्रयस्य द्रव्यस्य सद्भावेऽपि रक्तादिशब्दवाच्यवत्कदाचित्प्रवर्त्तते, कदाचिन्नेति । पृथग्जातिषु दृश्यते । जात्याश्रयेषु पृथग्भिन्नोऽभिन्नश्च शब्दो दृश्यते । एतेन सर्वनाम्नो निवृत्तिः । यथा—शुक्लादिगुणतौल्येऽपि गोरश्वाश्रये शुक्ल इत्येवाश्वे तु कर्क इति व्यवह्रियते नैवं सर्वनामशब्दाः, एवञ्जातिरूपं यद्द्रव्यत्वन्तद्वाचकस्य द्रव्यशब्दस्य

*पुंयोगादीति* । तथा च गौणी वृत्तिरिति भावः । यदा तु मुख्यार्थात् 'तस्येदम्' इत्यण् तदा गौपीत्येव भवति । योगश्चेह दम्पतिभाव एवेत्येके । वस्तुतस्तु सङ्कोचे मानाभावाज्जन्यजनकभावोऽपीह गृह्यते । तथा च भट्टिः—

कौशल्ययाऽसावि सुखेन रामः प्राक्केकयीतो भरतस्ततोऽभूत् ।

इति । केकयदुहिता केकयी । 'जनपदशब्दा' दित्यपत्यप्रत्यये तु कैकेयीति स्यात् । न च तस्य "अतश्च' इति लुक्, 'न प्राच्यभर्गादि' इति निषेधात् । तथा च कालिदासः—'कैकेयि कामाः फलितास्तवेति' । एतेन देवकी व्याख्याता ।

---

गौणी वृत्तिरिति । लक्षणेत्यर्थः । न त्वेषा गौणी, सादृश्यसम्बन्धमूलकलक्षणाया एव गौणीत्वात् ।

---

घटपटादिषु विभिन्नजातीयेषु प्रवृत्तिदर्शनेऽपि कदाचिदपैतीत्येवास्ति तेन तस्यापि निरासः । आधेयः=यत्नेन निष्पाद्यः, यथा—रक्तादिगुणा आश्रयसद्भावेऽपि यत्नेन निष्पाद्या भवन्ति, एतेन संख्याया निरासः । अक्रियाजश्चेत्यनेन कृदन्तनिरासः, क्रियाबोधकधात्वर्थत्वाच्यार्थप्रवृत्तिनिमित्तकत्वम्पाचकादिशब्दानामिति तेषां क्रियाजत्वं प्रसिद्धमेव । सोऽसत्त्वप्रकृतिरित्यनेन सत्त्ववाचकप्रकृतिभिन्न इत्यर्थकेन समास-तद्धितान्तयोर्निरासः । यद्वाऽद्रव्यस्वभाव इति तदर्थः, यथा ÷ द्रव्यस्यासमवायिकारणन्तु संयोगनिवृत्तेर्नाशस्तथा यो न भवति स इति । अन्यत्र=भाष्यप्रदीपोद्योते । प्रपञ्चितमिति । यथासम्भवं विशेषणानां सार्थक्यमुपपाद्य तस्य लक्षणस्यैकदेशयुक्तिस्वकथितमित्यर्थः । तथा हि ÷ आधेयश्चाक्रियाजश्चेत्येव लक्षणं कार्यम्, आधेय इत्यनेनानित्यत्वस्याऽक्रियाजश्चेत्यनेन नित्यत्वस्य लाभे सति नित्यानित्यवृत्तिजातिमत्त्वमित्येव वक्तव्यम् । नचैवन्तादृशसत्ताजातिमत्त्वं क्रियायामपि वर्तत इत्यतिव्याप्तिरिति वाच्यम्, द्रव्यावृत्तित्वेनापि जातेर्विशेषणात् । एतेनैव सर्वगुणसङ्ग्रहे 'सत्त्वे निविशते' इत्याद्युक्तिर्विफलेति तद्भाष्यमेकदेशयुक्तिः, अत एव तथापाठोत्तरन्तेषां विशेषणानां व्याख्यानेन सार्थक्यम्प्रदर्शितम्भगवता । मूले—इत्येक इति । यथेयम्भर्तृपापकृतान्वधादीन् लभते तथा तच्छब्दमपीति भाष्याक्षरस्वारस्यविदः । अपरे तु ÷ तद्भाष्यमुपलक्षणमित्याशयेन जन्यजनकभावात्मकोऽपि पुंयोगो ग्राह्य इति मेनिरे । तन्मतन्दर्शयति—वस्तुतस्त्वित्यादिना । देवकी व्याख्यातेति । जनपदशब्दादित्यअन्तस्तु नायम्, देवकस्य जनपदवाचकत्वाभावात् । न्यूनतापरिहारायाह—उत्तरार्थमितीति । सादृश्यसम्बन्ध-

*दुष्टो यवो यवानीति* । जात्यन्तरमेवानेनाभिधीयते अयमेव तस्य दोषः—यदुक्तायवत्वजातेरभावेऽपि तदाकारानुकृतिः । *ङीष् वाच्य इति* । इदञ्च तृतीये 'इङश्च' इति सूत्रे स्थितम् । *कथमिति* । यत्तु वदन्ति—दीर्घोच्चारणसामर्थ्याद् आ अनुक् इति पदं विभज्यते । तत्रेन्द्रादीनामनुकैव सिद्धे आकारादेशविधानसामर्थ्यात् क्वचिदन्यतोऽपि विधानमनुमीयते, तेन ब्रह्माणी सिध्यतीति, तच्चिन्त्यम् , अनुकि कृते 'अतो गुणे' इति पररूपप्रसङ्गात् । नन्वकारोच्चारणसा-

---

इङश्चेति सूत्रे इति । 'अपादाने स्त्रियां घञ उपसंख्यानं तदन्ताच्च वा ङीष्' इति तत्रोक्तम् । उपेत्याधीयते यस्या इति विग्रहः । दीर्घोच्चारणेति । न चेन्द्रादिशब्देभ्य आचक्षाणणिचि टिलोपे इन्द्राणीति सिद्ध्यर्थं तत्, अदन्तत्वाभावेन तत्राप्राप्तेः । पदं विभज्यते इति । तत्र नकारोच्चारणसामर्थ्यात् श्रुतक्रमानुरोधेन च पूर्वमाकारस्ततोऽनुगिति बोध्यम् । स्पष्टार्थं दीर्घाकार आदेश उक्तः । प्रसङ्गादिति । इन्द्रादिशब्दे इति भावः । अकारोच्चा-

---

मूलेति बहुव्रीहिः । लक्षणा हि शक्यतावच्छेदकारोपात्मिका तत्र सादृश्यसम्बन्धो यत्र मूलन्तत्रैव लोके गौणीति व्यवहार इति भावः । प्रसादोक्तिम्मूले खण्डयति—यत्त्वित्यादिना । तत्र अजादि इति लुप्तपञ्चम्यन्तम्, दीर्घोच्चारणस्य परोक्तरीत्या सार्थक्यं खण्डयति—नचेति । तत्=दीर्घोच्चारणम् । अदन्तत्वाभावेनेति । नच ब्राह्मणीत्येतत्सिद्धितात्पर्यकदीर्घोच्चारणसामर्थ्यादत इत्यधिकारोऽपि बाध्यतामिति वाच्यम्, प्रतिलक्ष्यं लक्षणभेदेन नान्तप्रकृतिकब्रह्माणीत्यस्य साधकवाक्येऽत इत्यधिकारबाधेऽप्यन्यत्र तद्बाधे मानाभाव इत्याशयात् । ननु पदविभागेऽपि पूर्वमनुगागमस्ततोऽन्त्यस्याकारादेश इत्येव प्रक्रिया कुतो नेत्यत्र आह—तत्रेत्यादि । तत्र अनुकि यद्यागमोत्तरमाकारादेशः स्यात्तदा नकारस्यैवादेशः स्यादिति नकारोच्चारणवैयर्थ्यापत्तिरिति भावः । नन्विन्द्रादिशब्दे फलाभावादाकारादेशाभावेन तेष्वेव नकारोच्चारणञ्चरितार्थमित्यत आह—श्रुतक्रमेति । यथा 'धिन्विकृण्व्योर च' इति सूत्रोदाहरणे श्रुतक्रमानुरोधेनादेशस्य प्रवृत्तिरादौ भवति तथेहाप्याश्रीयत इति तात्पर्यम् । ननु ह्रस्वाकारादेश एव विधेयस्तेन ब्रह्मन्शब्दान्त्यनकारस्य निवृत्तौ तेन सह पररूपेऽपि अनुगागमाकारेण सह सवर्णदीर्घेण रूपस्य सिद्धौ दीर्घाकारस्य विधानवैयर्थ्यमित्यत आह—स्पष्टार्थमिति । सामर्थ्यात्पररूपबाधकल्पनापेक्षया दीर्घादेशे तच्छङ्कैव नोदेतीति भावः । उक्त इति । प्रकाशकृतेति शेषः । पररूपप्रसङ्गादिति । यद्यपि ब्रह्माणीत्यत्राकारादेशेन सिद्धिस्तथापि भवतैवेन्द्रादिशब्देष्वाकारादेशस्याकल्प-

मर्थ्यात् दीर्घो भविष्यति, अन्यथा हि नुकमेव कुर्यादिति चेन्न, 'अल्लोपोऽनः' इत्यस्य बाधेन चरितार्थत्वात् ; 'पत्युर्न' इतिवदादेशे कर्त्तव्ये आगमलिङ्गकाकारोच्चारणसामर्थ्यादेवाल्लोपो न भविष्यतीति चेन्न, शर्वशब्दे ककारस्य चारितार्थ्यात् । न हि तत्र लोपोऽस्ति, 'न संयोगात्' इति निषेधात् । तस्मात् ककाराकारयोः सामर्थ्य-विरहे पररूपबाधनार्थं दीर्घोच्चारणमावश्यकमिति । एतेनानुक् ह्रस्वादिरेव लाघवादुक्तव्य इति हरदत्तोक्तिरपि प्रत्युक्ता । *कर्मण्याणीति* । तदन्तान् ङीप् 'पूर्वपदात्सञ्ज्ञायाम्' इति णत्वम् ।

---

रणेति । अनुकीति शेषः । अल्लोपोऽन इत्यस्य बाधेनेति । 'अल्लोपोऽनः' इत्यत्र लक्षणप्रतिपदोक्तपरिभाषाया अप्रवृत्तेः 'बहुव्रीहेरूधसः' इति सूत्रभाष्य-संमततयाऽकाराभावेऽवश्यप्राप्तस्य 'अल्लोपोऽनः' इत्यस्य बाधेनाकारो-च्चारणस्य चारितार्थ्यादित्यर्थः । न भविष्यतीति । एवं च न तद्बाधनार्थोका-रोच्चारणमिति पररूपस्य तेन बाधादिति भावः । पररूपबाधनार्थमिति । अल्लोपबाधेन चरितार्थस्य पररूपबाधकत्वे मानाभावेनेन्द्रशब्दे पररूपबा-धायाकारोच्चारणस्यावश्यकत्वेन त्वदुक्तकल्पनानवकाश इति भावः । ङीबिति । 'इन्द्रवरुण'इति सूत्रं त्विन्द्रीत्यादिव्यावृत्त्यर्थम् । उदात्तनिवृत्ति-

---

नेन मूलोक्ता पररूपापत्तिरिन्द्रादिशब्देष्वित्यत आह—इन्द्रादिशब्द इति । अकारो-च्चारणे सन्दिग्धमत आह—अनुकीतीति । यत्तु नुगागमेऽनो लाक्षणिकत्वेन 'अल्लो-पोऽनः' इत्येतन्न स्यादिति मूलञ्चिन्त्यमित्याहुस्तदुक्तिन्निरस्यति—'अल्लोपोऽनः' इत्य-त्रेति । सूत्रभाष्येति । ऊधसो नकारो लिङ्गाधिकार इत्येतद्व्याख्यानावसरे प्रतिपादि-तमेतत् । अकाराभावे=अनुक्यकाराभावे । अवश्यप्राप्तस्येति । पररूपस्य तु नावश्यप्राप्तत्वमिति तद्बाधे मानाभाव इति भावः । एवञ्च=आगमलिङ्गकाकारोच्चा-रणसामर्थ्येनाल्लोपाप्रवृत्तिसिद्धौ चेत्यर्थः । तद्बाधनार्थम्=अल्लोपबाधनार्थम् । पर-रूपस्येति । स्वाभावे प्राप्तस्यापीत्यादिः । तेन=अकारोच्चारणेन । अल्लोपबाधने-नेति । स्वाभावेऽवश्यप्रासिकस्याल्लोपस्य बाधनेन चरितार्थस्याकारस्य सत्त्वे तु वार्णा-दाङ्गमिति न्यायेनैकादेशात्पूर्वम्प्राप्तस्याल्लोपस्य बाधनेनेत्यर्थः । नचासमाननिमित्तक-त्वात् कथं वार्णपरिभाषाप्रवृत्तिरिति वाच्यम्, अङ्गसम्बन्धिन्याङ्ग एव प्रवृत्तेः स्वीका-रात् । त्वदुक्तेति । नकाराद्युक्तपूर्वोक्तेरर्थः । ननु यथा ब्रह्माणीत्यस्य सिद्धिः कृता तथैवेन्द्राणीत्यादिसिद्धौ 'इन्द्रवरुण' इति सूत्रस्य वैयर्थ्यमत आह—इन्द्रवरुणेतीति । इन्द्रीत्यादिव्यावृत्त्यर्थम्=पुंयोगे प्राप्तस्येन्द्रीत्यादेर्व्यावृत्त्यर्थम् । यत्तु सूत्रारम्भे

*वस्त्रक्रीतीति*। वस्त्र भिस् क्रीत इत्यस्यामवस्थायां प्राक् सुबुत्पत्तेः समासेऽदन्तत्वान् ङीष्। *क्वचिदेति*। 'कर्तृकरणे कृता' इति सूत्रे बहुलग्रहणात् क्वचित्सुबन्तेन समासः। तत्र च सुपः प्रागेवान्तरङ्गत्वात् टाप्, ततोऽदन्तत्वाभावान्न ङीष् इति भावः।

*तेन बह्वीति*। अयं भावः—'बहोर्नञ्वदुत्तरपदभूम्नि' 'नञ्सुभ्याम्' 'जातिकालसुखादिभ्योऽनाच्छादनात् क्तोऽकृतमितप्रतिपन्नाः' इति ह्यदन्तोदात्तताविधायकानि, तत्र जातिपूर्वादित्युक्ते बह्वादिपूर्वकस्यार्थाद्व्युदास इति। अस्वाङ्गपूर्वपदाद्विकल्पस्य वक्ष्यमाणत्वादिह स्वाङ्गपूर्वपद एवोदाहरणमित्याह—*ऊरुभिन्नीति*। *जातान्तादिति*। 'वर्णादनुदात्तात्' इतिवद् बहुव्रीहेरुदात्तादित्येव सिद्धेऽन्तग्रहणं नित्यत्वप्रतिपत्त्यर्थम्। 'वा जाते' इति तु वैकल्पिक उदात्तो न तु नित्य इति भावः। *सुमुखा शालेति*। एवं च फलमुखी कारणमुखी चावनस्थेत्यादिप्रयोगाः प्रामादिका इति बोध्यम्।

*उरः क्रोडेति*। स्त्रीलिङ्गोऽयमिति हरदत्तादयः। तत्रोपसर्जनह्रस्वत्वे कृतेऽदन्तत्वाद् ङीषः प्राप्तिः। अमरस्तु—न ना क्रोडं भु-

---

स्वरेण च स्वरे न विशेष इति भावः।

सुबुत्पत्तेरिति। टाबुत्पत्तेश्चेत्यपि बोध्यम्। बहुलग्रहणादिति। तत एव 'गतिकारके' त्यादेरनित्यत्वेनाप्रवृत्तिरिति भावः। सुखादिभ्य इति। सुखादयश्च 'सुखादिभ्यः कर्तृवेदनायाम्' इत्यत्र पठिताः सुखदुःखकृच्छ्रादयः।

---

इन्द्राणीत्यन्तोदात्तमिन्द्रमानयतीति रीत्या तत्साधने तु ङीबन्तत्वेनानुदात्तान्तत्वमिति स्वरेऽपि विशेष इति तन्नेत्याशयेनाह—उदात्तनिवृत्तिस्वरेणेति।

वस्त्रेण क्रीता इति विग्रहस्थलेऽलौकिकविग्रहवाक्ये सुबुत्पत्तेः प्राक् समासेऽपि टाबुत्पत्त्यनन्तरं यदि समासस्तदा वस्त्रक्रीतीत्यस्यासिद्धिरत आह—टाबुत्पत्तेरिति। एवञ्च 'गतिकारकोपपदानाम्'इति वचने सुब्ग्रहणं स्त्रीप्रत्ययस्याप्युपलक्षणम्। वचनान्तरानारम्भकृतलाघवन्दर्शयति—तत एवेति। बहुलग्रहणादेवेत्यर्थः। गणपाठे सुखादिप्रदर्शनाभावादाह—सुखादयश्चेति। कृच्छ्रादय इत्यत्रादिना आत्र अलीकादयो विवक्षिताः। तथा च 'जातिकालसुखादिभ्यः' इत्यत्र गणपाठाप्रदर्शनेऽपि 'सुखादिभ्य' इति सूत्रे ये निदर्शितास्तेऽत्र ग्राह्या इति भावः।

जान्तरमित्याह, रत्नमतिस्तु पुंस्त्वमाह । गणे च क्रोडेति प्रतिपदिकमात्रं पठ्यते न तु टाबन्तमिति गणरत्नमहोदधिकारः । एवं चाविशेषाल्लिङ्गत्रयेऽप्युदाहरणं बोध्यम् । माधवस्तु तुदादिगणे क्रुड निमज्जन इति धातावाह—क्रोडः घञ् । क्रोडादिषु टाबन्तस्यैव पाठाद् गुजान्तरमात्रवचनस्य क्रोडशब्दस्य बहुव्रीहौ स्वाङ्गलक्षणङीष्विकल्पो भवत्येव । कल्याणक्रोडी कल्याणक्रोडा मयूरीति ।

*ङीषो ङीबादेश इति* । 'दिक्पूर्वपदात्' इति पञ्चम्या ङीषिति प्रथमायाः षष्ठी कल्प्यत इति भावः । यदि तु स्वतन्त्रो ङीष् स्यात् तदा प्राग्गुल्फादावपि प्रसज्येत । पूर्वोक्तपर्युदासस्य निषेधानां चानुवृत्तौ तु गौरवमिति भावः । *वृषलीति* । एकस्यां हि व्यक्तौ वृषलत्वे कथिते तदपत्यतत्सहोदरादौ कथनं विना तस्य सुग्रहत्वादिति भावः । *औपगवीति* । अणन्तलक्षणं ङीपं परत्वादयं बाधते । एवं चापत्याधिकारे औपगवीति प्रतीकमुपादाय 'टिड्ढाणञ्'इति

---

सकृदाख्यातनिर्ग्राह्येत्यन्तं द्वितीयं लक्षणम् । तत्राख्यातम् = उपदेश इत्याशयेनाह—एकस्यामित्यादीति । ब्राह्मणत्वमप्येवं तत्पितृपितामहादौ सुग्रहमिति बोध्यम् । इयं च नाकृतिग्रहणा, ब्राह्मणक्षत्रियाद्याकारस्य समत्वादिति बोध्यम् । बाधते इति । गोत्राणोति शेषः । प्रतीकमुपादायेति । औपगवीत्यस्य गोत्रानन्तरापत्यसाधारणत्वेन विशिष्य इति तदुक्तिरुपेक्ष्येत्यर्थः । एतेन जातिलक्षणे 'एको गोत्रे' इति सूत्रस्थभाष्यप्रामाण्येन

---

लिङ्गानाञ्च न सर्वभागित्येव द्वितीयलक्षणमिति भ्रमवारणायाह—सकृदित्यन्तमिति । तत्र = लक्षणे । आख्यातपदञ्च तिङन्तपरमित्याह—तत्रेति । लिङ्गानाञ्चेति चशब्दनिर्ग्राह्येत्यनन्तरम्बोध्य उपदेश इति कथनमित्यर्थः । परममूले 'जातेरस्त्री' इति सूत्रे द्वितीयलक्षणलक्ष्यप्रदर्शनावसरे वृषलीति प्रदर्शितत्वेन ब्राह्मणत्वन्न जातिरिति भ्रमः स्यादत आह—ब्राह्मणत्वमप्येवमिति । अपिना क्षत्रियत्व-वैश्यत्वयोर्ग्रहणम् । वक्ष्यमाणदोषस्य प्रकृतेऽभावायाह—गोत्रेति । गोत्रार्थकेऽणीत्यर्थः । 'एको गोत्रे' इतिसूत्रस्थभाष्यविरोधेनापत्यप्रत्ययान्त इत्येतन्मात्राभिधानं यत्परममूले कृतन्तदयुक्तमिति यत्केनचिदुक्तन्तदयुक्तमित्याह—एतेनेति । परममूलस्यापि भाष्यसम्मतरीत्या व्याख्यानेनेत्यर्थः । जातिलक्षणे = 'जातेरस्त्रीति' जातिलक्षणे । भाष्यप्रामाण्येनेति ।

ङीबिति व्याचक्षाणा उपेक्ष्या इति भावः । *ब्राह्मणीत्यत्रेति* । एवं च प्राचो ङीबुदाहरणं प्रामादिकमिति भावः ॥

*कुरूरिति* । लिङ्गविशिष्टपरिभाषया स्वादयः । प्राचा तु 'अन्तादिवच्च' इति सूत्रमुपन्यस्यादिवद्भावात्स्वादय इत्युक्तम् । अत्रेदं वक्तव्यम्—परं प्रत्यादिवद्भावो विधीयते । तथा चेहाप्रत्यय इति प्रतिषेध एव स्यान्न तु स्वादयः । यत्तु व्याचख्युः—आदिः ऊङपेक्षया पूर्वः प्रातिपदिकम्, तद्वद्भावात् = तदवयत्वेन ग्रहणात् पूर्वान्तवद्भावादिति यावदिति, तदपि क्लिष्टं स्वपरग्रन्थविरुद्धम्, उक्तरीत्या हि 'काण्डे' 'कुड्ये' इत्यादावप्येकवचनमुत्सर्गत इति सुः प्रवर्तेत, तद्वारणाय चाप्रत्यय इति प्रसज्यप्रतिषेधाभ्युपगमे प्रकृते दोषः। श्वश्रूरित्यत्रैकादेशाभावाल्लिङ्गविशिष्टपरिभाषाया एव आवश्यकत्वाच्च । यत्तु

---

पारिभाषिकगोत्रस्यैव ग्रहणम् । अवन्तीत्यादेर्गोत्रत्वारोपेण जातित्वमिति प्राचीनोक्तमदुष्टमित्यपास्तम् ।

लिङ्गविशिष्टेति । यत्तु ÷ लिङ्गबोधकप्रत्ययान्तत्वरूपलिङ्गवैशिष्ट्यस्य,

---

तत्र हि÷"गोत्राद्यूनि प्रत्ययो भवति स्त्रियान्तु लुगिति न्यासे औपगवी माणविकेत्यत्राणयोऽनुपसर्जनमित्यनुपसर्जनलक्षण ईकारो न प्राप्नोति मा भूदेवमणन्तादनुपसर्जनादित्येकदेशिनोक्तं तदभ्युपेत्य, इह तर्हि 'औपगवीभार्यः' जातिलक्षणः पुंवत्त्वस्य प्रतिषेधो न प्राप्नोति मा भूवेदम् वृद्धिनिमित्तस्येत्येवं भविष्यति एवन्तर्हि 'ग्लुचुकायनीभार्यः' इत्यत्र दोष इत्यनेन युवापत्यप्रत्ययान्तेऽजातित्वाद्दोषाधानङ्कृतम् । तत्र 'औपगवी' माणविकेत्यत्र 'टिड्ढेति' सूत्राज्जातेरिति सूत्रस्य परत्वात्तस्यैव प्रवृत्त्यभिधाने कर्त्तव्ये 'टिड्ढ' इत्येतदभिधानमपत्यसामान्यस्य जातिलक्षणे ग्रहणे विरुध्येत, एवञ्जातिलक्षणपुंवत्त्वस्य प्रतिषेधो न प्राप्नोतीत्यपि विरुध्येत, नन्वेवमवन्तीत्यत्रान्तरापत्यप्रत्ययान्ते 'वृद्धेत्कोसल' इत्यनेन ञ्यङि तस्य 'स्त्रियामवन्ती' त्यनेन लुकि 'इतो मनुष्यजातेः' इति ङीषित्यनुपसर्जनादिति सूत्रभाष्ये उक्तम् तद्विरुध्येतेत्यत्र आह— अवन्तीत्यादेरिति । गोत्रत्वारोपेणेति । यथाश्वत्थाम्नि द्रौणायनित्वारोपस्तद्वत् यूनि तु न गोत्रत्वस्यारोपः, तत्र युवैव न गोत्रमिति नियमस्य प्रदर्शनात् । प्राचीनोक्तम् = प्रकाशकृदुक्तम् । अदुष्टमिति । 'एको गोत्रे' इत्यत्र पारिभाषिकस्य ग्रहणेऽपि प्रकृते पारिभाषिकस्यैव गोत्रत्वे मानाभाव इति तदाशयः । किञ्चात्र तैः साधारण्येनोक्तं तत्र तु विशिष्येति तेषाम्पूर्वापरविरोधोऽपि दोषः ।

तत्र 'श्वशुरः श्वश्रूवा' इति निर्देशात्स्वादय इति तन्न, निर्देशस्य शब्दपरत्वात्, 'विपराभ्यां जे' 'ङेर्यः' इतिवत् ।

प्रातिपदिकत्वस्य च लाभाय पूर्वान्तत्व-परादित्वयोरावश्यकत्वेनोभयत आश्रयणेऽन्तादिवत्त्वाभावान्नात्रेयमिति, तन्न, इन्द्राणीत्यसिध्द्यापत्तेः । तस्मात् प्रातिपदिकत्वोपयोगो न कश्चित् । नापि लिङ्गविशिष्टप्रातिपदिकस्येति परिभाषायां पठ्यते, तया प्रातिदिकत्व-तद्व्याप्यधर्माणां लिङ्गप्रत्ययविशिष्टेऽतिदेशाच्चेति दिक् ।

ननु 'सप्तम्यधिकरणे च' इति निर्देशेन विभक्त्येकादेशस्यान्तवत्त्वा-

खण्डनकृता लिङ्गविशिष्टपरिभाषयेति मूलोक्तमर्थंतो व्याख्याय खण्डितन्तन्न युक्तमित्येतद्बोधयितुं तदुक्तमनूद्य दूषयति—यत्त्वित्यादिना । वैपरीत्येनान्वयोऽत्र बोध्यः । अयम्भावः—यत्र प्रकृतौ प्रातिपदिकत्वस्य, लिङ्गबोधकप्रत्ययान्तत्वस्य च सत्ता तत्र तादृशसमुदायस्य तया परिभाषया ग्रहणम्बोध्यते । यथा पत्नी दण्डिनीत्यादौ सद्भाव उभयोरस्तीति तस्य समुदायस्य प्रातिपदिकग्रहणेन ग्रहणम्भवतीति । नात्रेति । कुरूरित्यत्र तथा नास्तीत्यर्थः । अत्र हि पूर्वान्तवद्भावं विना प्रातिप्रदिकत्वस्य, परादिवद्भावं विना लिङ्गबोधकप्रत्ययान्तत्वस्य च सत्ता नास्तीत्युभयोरावश्यकतया 'उभयत आश्रयणे नान्तादिवत्' इति निषेधः प्रवर्तत इति यत्र न पूर्वान्तवत्त्वपरादिवत्त्वयोरुपयोगः, तस्य ग्रहणम्परिभाषया भवतीति भवदुक्तमिन्द्राणीत्यादौ नास्ति, अत्र स्त्रीप्रत्ययान्तसमुदाये प्रातिपदिकत्वन्नास्ति, यत्र च प्रकृतिभागे प्रातिपदिकत्वमस्ति, तत्र तादृशप्रत्ययान्तत्वन्नास्ति, अन्तशब्दस्य चरमावयववाचकत्वात् । इन्द्राणीत्येतदेकदेशाभावोदाहरणोपलक्षणम्, तेन दण्डिनीत्यादेरपि भवदुक्तरीत्या ग्रहणन्न स्यादिति 'प्रातिपदिकग्रहण' इति परिभाषा निष्फला स्यादिति भावः । तस्मात्=परिभाषया यस्य समुदायस्य ग्रहणम्भवता बोधनीयन्तस्यैव ग्रहणाभावापत्तिसद्भावात् । उपयोग इति । परिभाषायाः प्रवृत्तिकोटावित्यादिः । नन्वन्तशब्दो न सर्वत्र चरमावयवस्यैव बोधकोऽस्ति, अतो लून्तस्येत्यादौ व्यभिचारात्, किन्तु समीपवाच्यपि, तथा च परिभाषाघटकं यद्विशिष्टपदन्तस्यान्तपरत्वेऽपि तदर्थः समीपे इत्येव । एवञ्च गृह्यते येन तद्ग्रहणं प्रातिपदिकस्य ग्रहणम्प्रातिपदिकग्रहणमिति समासाश्रयणेन प्रातिपदिकवाचकः शब्दो बोध्यते । तस्मिन् लिङ्गबोधकप्रत्ययः समीपो यस्य, तद्ग्रहणमनयापरिभाषया बोध्यत इति नेन्द्राणित्याद्यसङ्ग्रहः । इत्यत आह—नापीति । इदम्भवदुक्तन्तादृशपाठसत्त्वे वक्तुं शक्यं वस्तुतो यत्परिभाषायाः कृत्यन्तदाह—तयेति । दिगिति । दिगर्थस्तु 'प्रातिपदिकग्रहण' इति सप्तमी कर्मार्थे व्यत्ययेन प्रातिपदिकपदञ्च प्रातिपदिकत्व-तद्व्याप्यान्यतरधर्मविशिष्टपरम्, तथाच प्रातिपदिकत्वत-

*श्वशुरस्येति ।* पुंयोगलक्षणे ङीषि प्राप्ते ऊङ् । तत्सन्नियोगेन च विधीयमानो लोपः सन्निहितत्वादन्तस्यैवाकारस्य न त्वादेः । एतच्च वचनं 'श्वशुरः श्वश्र्वा' इति निर्देशसिद्धार्थकथनपरम्, अतोऽपि प्रथमाकारस्य लोपो न शङ्क्यः ।

*उपमानवाचि पूर्वपदमिति ।* 'धात्रीकराभ्यां करभोपमोरूः' इत्यत्र

---

भावज्ञापनादुत्सर्गस्यासार्वत्रिकत्वाच्च ह्रस्वस्य सत्त्वप्रधाने एव प्रवृत्तेश्च काण्डे इत्यादौ न दोषोऽत आह—श्वश्रूरित्यत्रेति ।

वचनमिति । वृत्त्यादिपठितमित्यर्थः । उपमानम्=सादृश्यं तदभावात्=

---

ङ्याप्यान्यतरधर्मविशिष्टस्य ग्रहणं यत्र शास्त्रे तेन लिङ्गबोधकप्रत्ययविशिष्टस्य ग्रहणस्बोधनम्भवतीत्येव परिभाषार्थः, इति न कुरूरित्यत्रादिवत्त्वोपयोगः, इति कुरूरित्यस्य साधुत्वन्न लिङ्गविशिष्टपरिभाषया भवतीति ब्रूमः । किन्तु 'अन्तादिवच्च' इति सूत्रेणेति वदामः । अत आदिवद्भावादिति पदं यदर्थकन्तदाह मूले—यत्तु ङ्याच्ख्युरित्यादिना । तदपि=तादृशव्याख्यानमपि । क्लिष्टम्=आदिशब्दस्याद्यावयवत्वावच्छिन्नबोधकत्वस्य 'आद्यन्तौ टकितौ' इत्यत्र क्लृप्तस्य त्यागेन क्लिष्टमित्यर्थः । स्वपरग्रन्थेति । स्वस्य व्याख्यातुर्यः परग्रन्थस्तद्विरोध इत्यर्थः । काण्डे कुड्ये इत्यत्र यथा प्रसज्यप्रतिषेधाश्रयेण भवता सुबुत्पत्त्यापत्तिरूपो दोषो वार्यते, तथा कुरूरित्यादावपि सुबभावापत्तिः स्यादित्याह—उक्तरीत्येति ।

प्रक्रियाव्याख्यानपरप्रकाशग्रन्थे यथा न स्वपरग्रन्थविरोधात्मको दोष आपतति, तथा शङ्कते—नन्विति । ज्ञापनादित्यन्तेन मूलोक्तप्रकारमुद्भाव्य सिद्धान्तरीत्याह—उत्सर्गेत्यादि । असार्वत्रिकत्वादिति । गमकसद्भाव एव तत्प्रवृत्तेः स्वीकारादिति भावः । सत्त्वप्रधान एवेति । 'ह्रस्वो नपुंसके' यत्तस्येति न्यासेन सिद्धे प्रातिपदिकग्रहणं सत्त्वप्रधानप्रातिपदिकलाभार्थमिति भावः । मूले आवश्यकत्वाच्चेति । तथा च लिङ्गविशिष्टपरिभाषासञ्चारस्यावश्यकतया तयैव कुरूरित्यस्यापि सिद्धावादिवद्भावादिति कथनस्य नोपयोग इति भावः । परोक्तां श्वश्रूरित्येतत्साधकरीतिमनूद्य दूषयति—यत्त्विति । भाष्ये तादृशवचनानुपलम्भादाह—वृत्त्यादीति ।

मूले अतोऽपीति । अतः='श्वशुरः श्वश्र्वा' इति निर्देशात्, अपिना ऊङ्सन्निहितत्वस्य समुच्चायकः, ङ्याप्सूत्रस्थभाष्यस्वारस्यात्तु श्वशुरशब्दादूङि श्वश्रूशब्दस्य सिद्धिरिति न, किन्त्वव्युत्पन्नोऽयमिति, तत्र हि—'ङ्याब्ग्रहणङ्किमर्थम्, न, प्रातिपदिकादित्येव सिद्धम्, न सिध्यति अप्रत्यय इति प्रातिपदिकसंज्ञायाः प्रतिषेधः प्राप्नोति, यद्येष ङ्याब्ग्रहणे हेतुः इत्यूङ्ग्रहणमपि कर्तव्यम्, तावपि हि प्रत्ययौ तिग्रहणे

तु न, करभशब्दस्योपमानवाचित्वेऽपि पूर्वपदत्वाभावात् । शफौ खुराविति । यद्यपि 'शफं क्लीबे खुरः पुमान्' इत्यमरः । तथापि शफशब्दस्य पुंस्त्वमपि बहुसंमतम् । शफाविव जर्भुराणेति श्रुतौ 'ग्राम्यपशुसंघेषु' इति सूत्रस्य व्याख्यावसरे न्यासहरदत्तादिग्रन्थेषु, वाचस्पत्यादिनिबन्धेषु च प्रचुरप्रयोगदर्शनात्, लिङ्गमशिष्यं लोकाश्रयत्वाल्लिङ्गस्येति भाष्याच्च । 'शफो भुजो गुदं घोणे'ति गणरत्नमहोदधौ क्रोडादिगणे पाठाच्च 'शफः खुरे गवादीनां मूले विटपिनामपि' इति

---

तस्य समासावाच्यत्वादित्यर्थः । यद्वोपमानत्वेन प्रतीत्यभावादित्यर्थः । शफोरूरित्यत्रापि सादृश्यमूलकः शफत्वारोपो न तु तत्प्रतीतिरिति

---

तावद्वार्तम्, तद्धितः प्रातिपदिकमिति, प्रातिपदिकसंज्ञा भविष्यति, ऊङ्ग्रहणे चापि वार्तम्, उवर्णान्तादूङ् विधीयते, तत्रैकादेशः, एकादेशे कृते पूर्वस्यान्तवद्भावात्प्रातिपदिकसंज्ञा भविष्यति" एवमूङ्ग्रहणस्याकर्तव्यतोक्ता । यदि मूलोक्तरीत्याऽस्य सिद्धिस्तदा तत्रोऽकादेशाभावेनैतदर्थमूङ्ग्रहणस्यावश्यकत्वेन पूर्वान्तवद्भावेन तस्यानावश्यकत्वप्रतिपादनं विरुध्येतेति । ननु वस्तुत उपमानसत्त्वादुपमानाभावादित्यसङ्गतम् । किञ्च 'ऊरूत्तरपद' इति सूत्रे उपमानेति शब्दो नोपात्त इत्युपमानाभावादित्यसङ्गतमत आह—उपमा = उपमानमिति । उपमानशब्दे भावे ल्युडिति ध्वननायोपमा उपमानमित्युक्तम्, अत एवाह—सादृश्यमिति । ननु करभोरूरित्यत्रोदाहरणे पीवरशब्दस्योपमावाचकस्याभावादुपमायाः कथम्प्रतीतिः तस्येवाक्षिशब्दसत्त्व एव प्रतीतेरत आह—तस्येति । सादृश्यस्येत्यर्थः । एवञ्च करभोरूरित्यत्र सादृश्यान्तर्भावेण वृत्तिस्वीकारादुपमायाः प्रतीतिरस्ति करभोपमोरूरित्यत्र तु सादृश्यस्य समासवाच्यत्वन्नास्तीति भावः । मूलस्थोपमानशब्दः करणल्युडन्त एवास्त्वित्याशयेनाह—यद्वेति । प्रतीत्यभावादिति । पूर्वपदार्थस्येत्यादिः । एवञ्चोपमीयतेऽनया सा उपमा उपमानत्वम्=सादृश्यमित्यर्थः । तद्बोधकम् ऊरूत्तरपदम्प्रातिपदिकमत्र नास्ति यादृशस्थले समासस्य सादृश्यान्तर्भावेण शक्तिरत्रेष्यते सूत्रस्य प्रवृत्तिः । उवर्णान्तादित्येव वक्तव्ये उत्तरपदग्रहणेन पूर्वपदस्याक्षेपाद्यत्र पूर्वपदस्योपमावाचकत्वन्तत्रास्य सूत्रस्य प्रवृत्तेरिति भावः । यत्तु खण्डनकृदाह — शफौ = खुरौ ताविव संश्लिष्टत्वादुपचारादिति चिन्त्यम्, उपचारेऽपि पूर्वपदस्योपमानवाचित्वव्याघातात्पूर्वसूत्रेणैव सिध्येद शफग्रहणवैयर्थ्यम् अतः संहितवाचकः शफशब्द इति तन्नेत्याशयेनाह—शफोरूरित्यत्रेति । एवञ्च शक्यतावच्छेदकस्यारोपोऽत्र, न तु सादृश्यान्तर्भावेण वृत्तिरिति न पूर्वसूत्रस्य प्राप्तिः । एवञ्च = पूर्वत्रारोपस्य सिद्धौ च । करोरुभिरिति व्याख्यात-

हेमचन्द्रकोशाच्च। विश्वकोशे च पुन्नपुंसकतोक्ता। वामौ सुन्दरौ ऊरू यस्या इति विग्रहः। इह सर्वत्र उपमानाभावादप्राप्ते विधिः। कथं तर्हि 'पीवरोरु पिबतीव बर्हिणः' इति कुमारः, प्रमाद एवायम्। सञ्ज्ञापूर्वकत्वात्सम्बुद्धिगुणो नेत्येके। *हितेन सहेति*। 'समो वा हिततत्योः' इति व्युत्पादितः सहितशब्दस्तु नेह गृह्यते। एकदेश-विकृततया संहितग्रहणादेव सिद्धेरिति भावः।

*अञ् योऽकार इति*। अञा अकारविशेषणं किम्। शूरसेनी। 'जनपदशब्दात्' इत्यञो 'अतश्च' इति लुकि जातिलक्षणो ङीष्। *शार्ङ्गरवीति*। शृङ्गरुशब्दादपत्यार्थे अण्।

*नृनरयोरिति*। नृशब्दाद् 'ऋन्नेभ्य' इति ङीपि नरशब्दाज्जा-

---

भावः। एवं च करभोरुशब्दे आरोपविवक्षायामूङ् न भवत्येव। एतेन करोरुभिरिति व्याख्यातम्। एके इति। तस्य भाष्यानुक्तत्वात् साधुत्वे न नियामकतेत्यरुचिरत्र।

ङीषिति। अत एव 'न प्राच्य' इति सूत्रे यौधेयादिग्रहणं चरितार्थम्। तद्धि 'पर्श्वादियौधेयादिभ्यामणञौ' इति स्वार्थिकाञो 'अतश्च' इति प्राप्तलुको निषेधार्थम्, तत्फलं चाऽन्तरङ्गत्वान्ङीन्यथा स्यात्, ढगन्तत्वान् ङीब् माभूदिति।

नरशब्दादिति। यद्यपि नृशब्देन 'नारी' सिद्धा, नरी च पुंयोगे दुर्वारा,

---

मिति। 'विचकरे च करेण करोरुभिः' इति माघस्थपद्य इति आदिः। तस्य = संज्ञा-पूर्वक इति वचनस्य, न नियामकतेति। यद्धि वचनम्भाष्यकारसम्मन्तस्यैव साधुता-नियामकत्वमिति भावः।

अञ्योऽकार इति व्याख्याने साधकमाह—अत एवेति। शूरसेनीत्यत्रातिव्याप्ति-वारकतया तादृशव्याख्यानस्यावश्यकत्वादेव। तद्धि = यौधेयादिग्रहणं हि। 'अणञौ' इतीति। इति सूत्रेण विहितेत्यर्थः। तत्फलम् = निषेधस्य फलम्। ढगन्तत्वादिति। शुभ्राशुभ्राशब्दाभ्यां 'द्व्यच' इति सूत्रविहितढकः सत्त्वात्। यदि त्वञो लुक् स्यात्तदा वर्णप्राधान्ये प्रत्ययलक्षणाभावेन ङीप स्यादिति भावः।

नृनरयोरित्यत्र नरशब्दोपादानाभावेऽपि नारीति रूपन्नृशब्दोपादानमात्रेण सिद्धम्। नरीति रूपव्यावृत्तिस्तदुपादानस्य फलमित्यपि न, पुंयोगे तस्यैव दुर्वारत्वादित्याक्षिप्य समाधत्ते–यद्यपीत्यादिना। पुंयोगे नरीति प्रयोगोऽपि दृश्यते 'किन्नरीणान्नरीणाम्' इति।

तिलक्षणे ङीषि प्राप्ते वचनम् । ननु नरशब्देऽलोन्त्यस्य वृद्धिः स्यात् । यत्वाहुः—अन्त्यस्य यस्येति लोपेनापहारादनन्त्यस्याप्यकारस्य वृद्धिर्भवत्यान्तरतम्यात्, गुणे त्वन्याय्यकल्पनेत्यलोऽन्त्यपरिभाषाबाधस्यैव न्याय्यत्वादिति, तन्न, प्रत्ययसन्नियोगशिष्टाया वृद्धेरन्तरङ्गत्वेन परमपि यस्येति लोपं बाधित्वा प्रवृत्त्यौचित्यात् । किं चास्तु कथंचिल्लोपस्तथाऽपि रेफस्यैव वृद्धिः स्यान्न त्वकारस्य, अन्तरतमपरिभाषापेक्षया चालोऽन्त्यपरिभाषायाः परत्वात् । अपि चान्तरतमपरिभाषाऽसदृशमादेशं व्यावर्तयति न तु स्थानिनं नियच्छति । तत्कथं रेफस्य स्थानित्वव्यावृत्तिः । किं च गुणे त्वन्या-

---

तथाऽपि नरत्वजातिमात्रप्रतिपादनेच्छायां नरीत्यस्य वारणार्थं नरग्रहणं बोध्यम् । ननु वृद्धिविधानसामर्थ्याल्लोपबाधोऽत आह—गुणे त्विति । अलोन्त्यपरिभाषाबाध एव न्याय्य इति भावः । अन्तरङ्गत्वेनेति । सामर्थ्याद् बाधो ह्यनुचितः । न्यायप्राप्तबाधस्तूचित एवेति भावः । कथंचिदिति । संनियोगशिष्टत्वानङ्गीकारेणेत्यर्थः । तत्कथमिति । 'स्थानेऽन्तरतमे' इति सप्तम्यन्तपाठ-

---

जातिमात्रेति । अत्र मात्रपदेन पुंयोगस्य व्यवच्छेदः । नृशब्दावयवऋकारस्य यथा 'अलोन्त्य'परिभाषया वृद्धिर्भवति तथा नरशब्देऽपि प्राप्नोतीत्याक्षेपः । मूले—नन्विति । तत्र 'स्थानेऽन्तरतम' इति सप्तम्यन्तपाठाभिप्रायेण । समाधानवादिमतमनुवदति—यत्त्वत्राहुरित्यादिना । अन्त्याकारस्य वृद्धौ यदि 'यस्येति च' इत्यनेन तस्य लोपस्तर्हि वृद्धिविधानं व्यर्थमिति तत्सामर्थ्याल्लोपस्य बाधोऽस्त्वित्याक्षिपति—नन्विति । यद्यलोऽन्त्यपरिभाषैकवाक्यतयाऽन्त्यस्य वृद्धौ तत्सामर्थ्याल्लोपस्य बाधस्तदा साक्षाद्विधिशास्त्रस्य बाधस्तदपेक्षया लोपस्यादौ प्रवृत्तावपि योऽन्तरतमोऽवशिष्टावयवस्तस्य स्थाने वृद्धिर्भविष्यतीत्याशयेनाह—गुणे त्वन्याय्येति । गुणे=गुणीभूतशास्त्रे परिभाषारूपे, अन्याय्यस्याप्रवर्त्तनस्य कल्पना उचितेति शेषः । तथाप्यादौ वृद्धेरेव प्रवृत्तिः स्यात्, तस्याश्च सामर्थ्यान्निवृत्तिर्न स्यादिति भावेन समाधत्ते—तन्नेति । अन्तरङ्गत्वे सन्नियोगशिष्टत्वमत्र हेतुः, एवञ्चादौ वृद्धेरन्तरङ्गा या अन्तरतमपरिभाषाऽलोन्त्यपरिभाषाभ्यामेकवाक्यतया प्रवृत्तिस्ततो लोपस्य यदि प्रवृत्तिः स्यात्तदा वृद्धिविधानवैयर्थ्यम्, इति सामर्थ्यात्परस्यापि लोपस्य बाधेन वृद्धेः श्रवणं स्यात्, न ह्यत्र केवलान्तरङ्गपरिभाषाया एव प्रवृत्तिः, किन्तूभयोरपीति न्यायप्राप्त एव लोपस्य बाधः सामर्थ्यादिति तात्पर्यम् । कथञ्चिदित्युक्तेस्तात्पर्यमाह—सन्नियोगशिष्टेति । तथाच वस्तुतः सन्नियोगशिष्टत्वेऽपि यदि

त्र्येति न्यायोपन्यसनं स्थवीय एव, परिभाषयोः परस्परं गुणगुणिभावायोगात् ।

अत्रेदं तत्त्वम्—नर् इति रान्तलुप्ताकारानुकरणम्, नरः अः नरः, ना च नरश्च तयोरिति व्याख्येयम् । यद्वा नरस्य अः नरः, कृतन्तवत् पररूपम्, ना च नरश्च तयोर्नृनरयोः । नरस्य च प्रथम एव अकारो

---

स्य भाष्ये कुमार्यत्रेत्यादौ यणनापत्त्या दूषितत्वादिति भावः । परिभाषयोरिति । तद्व्याख्यातृग्रन्थानुसारेणेदम् । तर्हि अलोऽन्त्यस्यैव बाधो न त्वन्तरतमपरिभाषाया इति व्याख्यातम् ।

व्याख्येयमिति । नृनरयोरित्यावर्त्तते एकत्र पञ्चम्यर्थे षष्ठी ताभ्यां ङीन्, नुर्नरोऽकारस्य च वृद्धिरित्यर्थः इति भावः । अत एव वानरशब्दे नाति-

---

तस्यानङ्गीकारस्तदा क्लेशः स्पष्ट एव । तथाच परलोपोत्तरम्पूर्वान्तरतमपरिभाषापेक्षया परत्वेन बलवती याऽलोन्त्यपरिभाषा सैव वृद्धे रेफस्थानिकत्वे नियामिका स्यादित्यनिष्टापत्तिः । नन्वत्र गुणेत्वन्यांत्र्येति पूर्वोक्तन्यायेनालोऽन्त्यपरिभाषाया अप्रवृत्तिः कल्प्यतेऽन्तरतमपरिभाषा तु प्रवर्तत इति तदेकवाक्यतया नकाराकारस्य वृद्धिः स्यादितीष्टसिद्धिरत आह—मूले—अपि चेति । न तु स्थानिनमिति । कुमार्यत्रेत्यादौ दीर्घस्य स्थाने यणादेशः 'स्थानेन्तरतमे' इति सप्तम्यन्तपाठे न स्यात् । तादृशपाठे स्थानिनः सङ्कोचादिति स पाठो नोचितः, किन्तु 'स्थानेऽन्तरतमः' इति प्रथमान्तपाठ एव, तथा चान्तरतमादेशस्य निवृत्तिरित्यादेशसङ्कोच एवेति भावः । एतावता परोक्तरीत्याऽलोन्त्यपरिभाषाया बाधमभ्युपेत्यान्तरतमपरिभाषयापि नेष्टसिद्धिरित्यभिहितम् । वस्तुतस्तु परोक्ता गुणे त्वन्यात्र्येति रीतिरेव प्रकृतेऽयुक्ता, परिभाषयोः समत्वात्, किन्तु परत्वमलोन्त्यपरिभाषाया इति सैव प्रवर्त्ततेत्याशयेनाह—किञ्चेति । ननु परिभाषयोर्गुणगुणिभावोऽत्र न केनाप्युक्त इति कथमेवं वदसीत्यत आह—तद्व्याख्यात्रिति । प्रकाशव्याख्यातृग्रन्थानुसारेणेत्यर्थः । यद्वा तच्छब्दोऽत्र बुद्धिस्थायाः प्रक्रियाया बोधकः । एवञ्च प्रक्रियाया व्याख्यातॄणां ये ग्रन्थाः प्रकाशप्रदीपादयस्तदनुसारेणेत्यर्थः ।

परोक्तप्रकारं सन्दूष्य युक्तं समाधानमाह—अत्रेदमित्यादिना । लुप्तेति । 'यस्येति च' इति सूत्रेण लुप्तेत्यर्थः । एवं व्याख्याने यस्मात्प्रत्ययस्य विधानन्तस्य स्थानित्वेन निर्देशो न जात इति वानरशब्देऽतिप्रसङ्ग इत्यरुचेराह—यद्वेति । मूलोकाभ्यामकाराभ्यां वृद्धिरूपादेशस्य स्थानिनो निश्चयेऽपि प्रत्ययविधानावधेरलाभ इत्यत आह—नृनरयोरित्यावर्तत इति । अत एव—द्वितीयपक्षाश्रयणेना-

गृह्यते, न तु द्वितीयः, प्रश्लेषसामर्थ्यात्। अधिकं शब्दकौस्तुभे बोध्यम्। पुत्रशब्दोऽत्र पठ्यते, शैलपुत्री, पुत्रीव हर्षं हृदये तनोति, कुर्वे तदुर्वीपतिपुत्रि सर्वम्। न च पुत्रशब्दः कन्यायां नास्तीति भ्रमितव्यम्, आत्मजस्तनयः सूनुः सुतः पुत्रः स्त्रियां त्वमी। आहुर्दुहितरं सर्वे इत्यमरोक्तेः। अत एव 'प्रत्ययस्थात्' इतीत्त्वप्रकरणे 'वा सूतकापुत्रिकावृन्दारकाणाम्' इति वार्तिकं च सङ्गच्छते। यत्त्वत्र हरदत्तेनोक्तम्—केवलपुत्रशब्दः स्त्रियां न वर्त्तते इति तद्भाष्यादिविरोधादुपेक्ष्यम्, इत्त्वप्रकरणस्थस्वग्रन्थविरोधाच्च।

इदन्तु चिन्त्यम्—"कारे सत्यागदस्य" इति सूत्रे 'सूतोग्र-

---

प्रसङ्गः, यतो नरशब्दान्ङीन् तदीयरेफान्तसम्बन्ध्यकारस्यैव वृद्धिविधानात् वानरे नरस्यानर्थक्यात्ततो न ङीनिति बोध्यम्। तदाह—अधिकमिति। अमरोक्तेरिति। तत्र स्त्रीत्वबोध ईकारसमभिव्याहारस्तन्त्रम्। केवलाकारान्तपुत्रशब्दस्तु पुंस्त्वविशिष्टस्यैव बोधकोऽत एव स पुत्र इत्यतो न सन्देहः। 'पुमांसं पुत्रमाधेहि' इत्यादौ पुंस्त्वेन विशेषणं त्वतिशयितपुंस्त्वबोधनायेति भावः।

चिन्त्यमिति। चिन्ताबीजन्तु सूतादिपुंशब्देभ्यः परे ङीनन्ते तत्पुरुषे 'पुत्रः पुम्भ्यः' इत्यनेन पुंशब्दात्परपुत्रशब्दान्ततत्पुरुषे पुत्रस्यादिरुदात्त

---

वृत्याचार्यविशेषस्य स्वीकारादेव। तदेव स्फुटयति—यत इति। ततः=वानरशब्दापयवनरशब्दात्। नन्वात्मज इति कोशबलात्सर्वेषां दुहितृप्रतिपादकतया स्त्रीत्वविवक्षायामप्यकारान्तपुत्रशब्दस्य प्रयोगापत्तिरत आह—तत्रेति। पुत्रशब्द इत्यर्थः। पुत्रशब्दनिष्ठः ईकारसमभिव्याहारे ईकाराव्यवहितपूर्वोच्चरितत्वम्, पुत्रशब्देन स्त्रीत्वबोधे तन्त्रन्नियामकमित्यर्थः। पुत्रशब्देनेति। स्त्रीत्वबोध इत्यस्यादिः। अत एव=केवलाकारान्तस्य पुंस्त्वविशिष्टप्रतिपादकत्वादेव। ननु भवदुक्तार्थस्वीकारे 'पुमांसम्पुत्रमाधेहि' इति श्रुतौ पुमांसमिति विशेषणोपादानमनर्थकमापद्येतेत्यत आह—पुमांसमित्यादि। अतिशयितपुंस्त्वम्=पराक्रमातिशयः, एवञ्च स्त्रियामपि वृत्तिरकारान्तपुत्रशब्दस्यैव परन्तु स्त्रीत्वे बोधनीये स्त्रीप्रत्ययसमभिव्याहारो द्योतक इति सिद्धम्।

अत एवाह मूले—यत्त्वत्रेत्यादिना। इदन्तु चिन्त्यमिति। इदम्=वक्ष्यमाणम्। खण्डनकारोक्तश्चिन्ताबीजमाह—चिन्ताबीजन्त्विति। पुंशब्देभ्यः=पुंवाचकशब्देभ्यः। ङीनन्ते तत्पुरुषे=ङीनन्तोत्तरपदकतत्पुरुषे कृते सूतपुत्रीत्यादा-

राजभोजकुलमेरुभ्यो दुहितुः पुत्रड्वा' इति वार्तिकं किमर्थमिति। यत्तु वदन्ति स्वरार्थमिति, तन्न टित्वान् ङीपि कृते उदात्तनिवृत्तिस्वरेणान्तोदात्ते ङीनन्तेन तत्पुरुषेऽपि समासस्वरेणान्तोदात्त एवेति स्वरे भेदाभावात्। यदपि शार्ङ्गरवादौ पुत्रशब्दः प्रक्षिप्तो न तु साम्पदायिक इति, तदपि न, उदाहृतप्रयोगविरोधात्, वा सूतकेत्यादिवार्तिके कैयटहरदत्तादिकृताकारप्रश्लेषविरोधाच्चेत्यास्तां तावत्। आम्बष्ठ्येति। 'वृद्धेत्कोसल' इति यङ्। करीषस्येव गन्धोऽस्य करीषग-

---

इत्यर्थकेन लिङ्गविशिष्टपरिभाषया पुंशब्दोकारोदात्तत्वम्। पुत्रडादेशे तु न तत्प्रवृत्तिः सानुबन्धकत्वादतस्तत्रोदात्तनिवृत्तिस्वरेणान्तोदात्तत्वमिति। 'नादिन्याक्रोशे पुत्रस्य' इत्यस्य पुत्रटि अप्रवृत्तिस्तु न फलम्, पतत्सम्बन्ध्यचः परस्य यर आदिनीशब्दपरत्वासम्भवात्। पुत्रटः स्थानिवद्भावेन दुहितृशब्दत्वेऽपि 'न षट्' इति निषेधो न, तस्य 'ऋन्नेभ्यः' इति ङीब्मात्रबाधकत्वात्, टित्त्वसामर्थ्याच्च। इदं च वार्तिकं तत्पुरुषे एव प्रवर्तते 'कारे सत्या' इति सूत्रे उपसंख्यानात्। तच्चान्यासम्भवात् पूर्वोत्तरसाहचर्येण च तत्पुरुष एव। पतेन बहुव्रीहौ ङीबर्थमिदमित्यपास्तम्। टित

---

त्विति शेषः। ननु पुत्रीशब्दः पुत्रशब्दाभिन्न एवेत्यत आह—लिङ्गेति। उदात्तत्वमिति। भवतीति शेषः। उदात्तनिवृत्तिस्वरेण टित्वान्ङीपि कृतेऽनुदात्तस्य च यत्रोदात्तलोप इत्यनेनेत्यादिः। यत्तु कश्चित् ÷ पुत्रडादेशपक्षे 'सूतपुत्र्यादिनी त्वमसि पापे' इति प्रयोगे सानुबन्धकत्वादपुत्रस्य 'नादिन्याक्रोशे' इति सूत्रे न ग्रहणमित्येव चिन्ताबीजमिति तदपेशलमित्याह—नादिन्येति। आदिनीशब्दपरत्वासम्भवादिति। ङीमात्रव्यवधानेन येन नाव्यवधानन्यायेन रेफाकारमात्रव्यवधान एव तस्य प्रवृत्तेरिति भावः। ननु पुत्रडादेशपक्षे सूतपुत्रीत्यत्र स्थानिवद्भावेन दुहितृशब्दत्वान्न षडिति निषेधः स्यादत आह—पुत्रट इति। ऋन्नेभ्य इतीति। 'येन नाप्राप्ति' न्यायेनेत्यादिः। ननु टापोऽपि निषेधस्य सिध्यर्थं तत्र षट्संज्ञकेभ्यः स्वस्रादिभ्यश्च यत्प्राप्तमिति प्राग्व्याख्यातमिति "टिड्ढ" इत्यस्यापि निषेधः स्यादेवेत्यत आह—टित्त्वसामर्थ्यादिति। "कारे सत्या" इति सूत्रस्य तत्पुरुषे एव प्रवृत्तौ साधकमाह—तच्चेति। "कारे सत्या" इति सूत्रञ्चेत्यर्थः। पूर्वोत्तरेति। 'वाचं यमेति' 'श्येनतिल' इति सूत्रयोरित्यर्थः। एतेनोग्रजातीया कन्येत्यस्य सम्भवादन्यासम्भवादित्यसङ्गतमिति तत्परास्तम्, साहचर्यस्य बलवत्त्वप्रयोजकताया दर्शनात्। एतेन उक्तरीत्या सूतोग्रेत्यस्य वार्तिकस्य तत्पुरुषसमासे एव प्रवृत्तेरेव बहुव्रीहौ ङीबर्थ-

न्धः, 'उपमानाच्च' इति गन्धस्येदन्तादेशः। तस्य गोत्रापत्यं स्त्री, अण्। 'अणिञोः' इति ष्यङादेशः। स च यद्यपि स्त्रियामेव विहितस्तथाऽपि ङित्करणसामर्थ्यात्तदन्तादप्ययं चाप्। *पौतिमाष्येति।* पूतिमाषशब्दो गर्गादिः॥

*'तद्धिताः'।* बहुवचनमनुक्तानामुपसंख्येयानां सङ्ग्रहार्थम्, महासञ्ज्ञाकरणं चान्वर्थत्वाय—तेभ्यः प्रयोगेभ्यो हितास्तद्धिता इति तेन यथाऽभिधानमेव स्युः। स्यादेतत्, टापः प्रागयमधिकारोऽस्तु

---

उपसर्जनत्वेन तत्र ङीपोऽप्राप्तेश्चेति दिक्। ङित्करणसामर्थ्यादिति। यङश्चेत्यत्र सामान्यग्रहणाविघातार्थङित्करणसामर्थ्यादित्यर्थः। द्योतकत्वाच्चेत्यपि बोध्यम्।

अनुक्तानामिति। तेन अल्पार्थे ग्रामटिकादयः साधवः। इदन्तु भाष्ये न दृश्यते। टापः प्रागिति। ङीबादिषु ङस्येत्सञ्ज्ञा तु 'चुटू' इति सूत्रकरणेन सेत्स्यति, टीबादय एव वा ते सन्तु। तद्धितान्तत्वात्प्रातिपदिकत्वेऽपि फिट्स्वरो न। प्रकृतिप्रत्ययविभागशून्ये एव तत्प्रवृत्तेः, पकारषकारभिन्नानुबन्धवै-

---

मित्यर्थः। यद्येतद्वार्तिकन्न स्यात्तदा सूता पुत्री यस्येत्येव विग्रहे समासो वाच्यस्तथा सति नद्यृतश्चेति नित्यकबापत्तिः स्यादिति तात्पर्यम्। ङीबर्थमित्यप्यसंगतमित्याह—उपसर्जनत्वेऽपीति। मूले ङित्करणसामर्थ्यादिति। ष्यङो ङित्करणसामर्थ्यादित्यर्थः। एतद्भावमाह—यङश्चेत्यत्रेति। प्रकान्तरेणाप्युक्तार्थानामिति न्यायस्यात्राप्रवृत्तिमाह—द्योतकत्वाद्विति। स्त्रीप्रत्ययस्य द्योतकत्वादित्यर्थः। द्योतकविषये द्वौ ब्राह्मणावित्यादौ पञ्चकप्रातिपदिकार्थपक्षे द्वित्वसंख्यायाः प्रकृत्याऽभिधानेपि तत्र समुच्चयस्य दर्शनादिति भावः।

तेन = अनुक्तानामिति व्याख्यानेन। ग्रामटिकेति। अल्पो ग्रामो ग्रामटिका ग्रामशब्दाट्टिकच्प्रत्ययस्य प्रयोगः। इदम् = बहुवचनोपादानेनानुक्तानां सङ्ग्रह इत्येतत्। ननु टापः प्रागधिकारकरणे ङीबाद्यवयवङकारस्यातद्धित इति निषेधादित्संज्ञा न स्यादत आह—ङीबादिष्विति। ननु 'चुटू' इति सूत्रे ङकारोच्चारणे गौरवमत आह—टीबादय इति। ङकारस्य स्थाने टकारस्यैवोच्चारणमस्त्वित्यभिप्रायः। टाबादीनान्तद्धितसंज्ञायान्तदन्तप्रातिपदिकत्वापत्त्या 'फिषोऽन्त उदात्तः' इत्यन्तोदात्तत्वापत्तिरित्याशङ्कां वारयति—तद्धितान्तेति। नन्वेवं सति सर्वनामधातुजमाह निरुक्ते व्याकरणे शकटस्य तोकमिति शाकटायनमते सर्वत्रैव प्रकृतिप्रत्ययविभागसम्भवात्तादृशसमुदायस्याप्रसिद्धिरत आह—पकारेति। पकारषकाररूपौ यौ भिन्नावनुबन्धौ

ष्फविधौ तद्धितग्रहणम्, यस्येति लोपे ईद्ग्रहणं च मास्त्विति चेत्, मैत्रम्, पट्वीत्यत्र ओर्गुणप्रसङ्गात्। शत्रन्तादिति। यौति=मिश्रीकरोति पत्येति व्युत्पत्तेः। केचित्तु बाहुलकात् यौतेरौणादिकं कतिप्रत्ययं वदन्ति। उभयथाऽपि युवतीनां समूहो यौवतम्, त्यन्तात्तु अणि पुंवद्भावात् यौवनमित्येव। भिक्षादिपाठसामर्थ्यान्न पुंवदिति

---

यर्थ्यापत्तेश्च। अत एव सिद्धान्ते लिङ्गविशिष्टपरिभाषया नात्र फिट्स्वरः। डाप्प्रत्यये विजातीयडकारानुबन्धश्च न कार्य इत्यपरं लाघवम्, टिलोपस्य 'नस्तद्धिते' इत्यनेनैव सिद्धेः। यस्येति लोपे इति। औङः श्यामिति वार्तिकस्याप्युपलक्षणम्। ओर्गुणेति। न च ईद्ग्रहणं ङीबादिषु तद्धितकार्याभावज्ञापनार्थं तेन पट्वीत्यादौ नौर्गुण इति वाच्यम्, कुरूरित्यादिसिद्ध्यर्थं स्त्रीप्रत्ययेषु तदभावज्ञापने आसुरायणीत्यादौ ष्फेऽपि यस्येति लोपानापत्तेः। अत एव दण्डिनीत्यादौ टिलोपो नेति दिक्। मिश्रीकरोति। आत्मान-

---

तत्करणसामर्थ्यादित्यर्थः। यदि सर्वत्र फिट्स्वरः स्यात्तदान्तोदात्तत्वमेव स्यादिति तयोर्वैयर्थ्यं स्पष्टमेव। अत एव=तादृशेष्वेव फिट्स्वरस्य प्रवृत्तिस्वीकारादेव। सिद्धान्ते। यूनस्तिरिति सूत्रात्प्रागेव पाठरूपसिद्धान्ते। टापः प्राक् तद्धिताधिकारकरणे लाघवान्तरमप्याह—डाप्प्रत्यय इति। 'यस्येति च' इति सूत्रे ईकारग्रहणाभावे औङः श्यामिति वार्तिकमपि न कार्यमित्याह—औङ इति। इद्ग्रहणमिति। यस्येति चेति सूत्रे ईद्ग्रहणमित्यर्थः। ईद्ग्रहणेन ईकारादौ स्त्रीप्रत्यये एव साजात्यात्तद्धितकार्याभावकल्पने कुरूरित्यादौ तद्धितकार्यापत्तिरतः स्त्रीप्रत्ययत्वेन साजात्यमादाय ज्ञाप्यं वचनं स्वीकार्यम्। तथाचाप्यासिरित्याह—कुरूरित्यादीति। अत एव=टापः प्राक् तदधिकारादेव। दिगिति। दिगर्थस्तु ईद्ग्रहणेनाजरूपस्त्रीप्रत्यये तद्धितकार्याभावो ज्ञाप्यतान्तावतैवासुरायणीत्यादिसिद्धिर्यद्यपि भविष्यति तथापि ज्ञापकसिद्धवचनान्तरकल्पनापेक्षया यथाश्रुतमेव लघु। इति योगार्थमात्रं वृद्धायामतिप्रसक्तमत आह—आत्मानमितीति। मूले उभयथेति। शत्रन्तस्य कतिप्रत्ययान्तस्य च सत्त्वेऽपि यौवनमिति 'भस्याढे' इति पुंवद्भावः। अनयोरयं विशेषः—शत्रन्तात् 'उगितश्च' इति ङीप् कतिप्रत्ययान्तात्तु 'कृदिकाराद्' इति ङीष्। आद्ये 'शतुरनुम' इत्यस्य प्रवृत्त्या नद्या उदात्तत्वमिति। वृत्त्युक्तन्दूषयति—भिक्षादीति। अत एव=पूर्वोक्तरीत्या युवतीत्याकारकस्य शब्दद्वयस्य स्वीकारादेव। ननु यूनस्तिरिति सूत्रात्प्राक् तद्धिता इत्यस्य पाठो न कार्यः, लिङ्गविशिष्टपरिभाषयैव

वृत्तिस्तु भाष्यविरुद्धा, भाष्ये तत्पाठस्य प्रत्याख्यानादिति दिक् ॥

इति स्त्रीप्रत्ययाः ।

---

मिति शेषः । दिगिति । दिगर्थस्तु–विकाराभावमात्रतात्पर्यकत्वे वृद्धादीनामप्यभावापत्तिः । अत एव युवतीकरनिर्मथितं दधीत्यादिप्रयोगसिद्धिः । युवतिशब्दे लिङ्गविशिष्टपरिभाषयैव प्रातिपदिककार्ये सिद्धेऽत्र 'तद्धिता' इति अधिकारो लिङ्गविशिष्टपरिभाषाऽनित्यत्वज्ञापनार्थ इति दिक् ॥

इति स्त्रीप्रत्ययाः ।

---

सिद्धेरत आह–युवतिशब्द इति । दिगिति । दिगर्थस्तु 'ऋन्नेभ्यः' इति ङीपि यूनीशब्दोऽपि साधुरिति कश्चित्, तन्न, 'येन नाप्राप्ति' न्यायेन 'यूनस्तिः' इत्यस्य 'ऋन्नेभ्यः' इति सूत्रापवादत्वात् कृतेऽपि ङीपि लिङ्गविशिष्टपरिभाषयाऽस्य प्राप्तेरिति ॥

इति स्त्रीप्रत्ययविवरणम् ॥



# अथ विभक्त्यर्थाः ( कारकप्रकरणम् ) ।

मात्रशब्दस्येति । तस्य चावधारणमर्थः, 'मात्रं कार्त्स्न्येऽवधा-

---

१ अवधारणञ्चान्ययोगव्यवच्छेदः, योगः=सम्बन्धः, व्यवच्छेदः=अभावः। तथा च भेदवत्सम्बन्धाभाव इत्यर्थः सम्पन्नः। भेदस्य प्रतियोगिसाकाङ्क्षतया प्रतियोग्याकाङ्क्षायां प्रातिपदिकार्थादेः प्रतियोगितयाऽन्वयः। सम्बन्धाभाव इत्यत्र सम्बन्धश्च भेदप्रतियोगिनो येन सम्बन्धेनान्वयश्चिकीर्षितः स एव। सम्बन्धाभावस्यापि प्रातिपदिकार्थान्वयिप्रातिपदिके स्वरूपसम्बन्धेनान्वयः। एवञ्च बोधकत्वसम्बन्धेन प्रातिपदिकार्थविशिष्टं यत् प्रातिपदिकार्थप्रतियोगिकभेदाश्रयविषयकबोधजनकत्वसम्बन्धाभाववत्प्रातिपदिकं तस्मात्प्रथमेति फलितम्। एवं स्वविषयकबोधजनकत्वसम्बन्धेन लिङ्गविशिष्टं यत् लिङ्गप्रतियोगिकभेदाश्रयः यः प्रातिपदिकार्थेतरस्तद्विषयकबोधजनकत्वसम्बन्धाभाववत्प्रातिपदिकं तस्मात्प्रथमेत्यादिरूपेण लिङ्गमात्रे विद्यमानात्प्रातिपदिकात्प्रथमेत्यादीनामर्थो बोध्यः।

नन्वन्वयव्यतिरेकाभ्यां लिङ्गादेरपि प्रातिपदिकार्थत्वेन प्रातिपदिकार्थे प्रथमा इत्येव लिङ्गाद्यर्थेऽपि प्रथमायाः सिद्ध्या लिङ्गादिग्रहणं व्यर्थमिति चेन्न, तत्सामर्थ्यादेवात्र प्रातिपदिकार्थपदेन नियतोपस्थितिकार्थस्यैव ग्रहणात्। तदाह—नियतोपस्थितिकः प्रातिपदिकार्थ इति। अर्थे नियतोपस्थितिकत्वञ्च—नपूर्वकयमधातोर्व्यापकत्वार्थकतया, क्तप्रत्ययस्याश्रयार्थकतया, बहुव्रीह्यर्थषष्ठ्यर्थस्य विषयतया, व्यापकत्वस्याश्रयपदार्थैकदेशाश्रयतायां निरूपितत्वसम्बन्धेन आश्रयस्याभेदेनोपस्थितौ, उपस्थितेश्च निरूपितत्वसम्बन्धेन विषयतायाम्, तस्याश्च स्वरूपसम्बन्धेनार्थे च विशेषणतया, व्यापकतानिरूपिताश्रयतावदभिन्नोपस्थितिविषयताश्रयत्वरूपम्। तत्र व्यापकत्वस्य व्याप्यतानिरूपितत्वेन प्रत्यासत्त्या प्रातिपदिकनिष्ठव्याप्यतानिरूपितैव व्यापकता ग्राह्या।

यत्तु, प्रातिपदिकोच्चारणनिष्ठा व्याप्यतेति तन्न, प्रातिपदिकोच्चारणत्वस्य स्वकर्मप्रातिपदिकनिष्ठशक्तिज्ञानसमवायित्वादिसम्बन्धस्य च व्याप्यतावच्छेदकत्वे गौरवात्। प्रातिपदिकनिष्ठव्याप्यता च तत्तदानुपूर्वीरूपधर्मावच्छिन्ना स्वविषयकश्रावणप्रत्यक्षसमवायित्वस्वनिष्ठशक्तिविषयकोद्बुद्धसंस्कारसमवायित्वोभयसम्बन्धावच्छिन्ना च ग्राह्या। तेन शक्तिज्ञानशून्यपुरुषम्, बधिरात्मानम्, शुकात्मानञ्चादाय न दोषः। किञ्च—प्रातिपदिकस्याकाशगुणतयाऽऽकाशस्थत्वेन, उपस्थितेश्च ज्ञानरूपतयाऽऽत्मस्थत्वेन व्यधिकरणत्वात् स्वाधिकरणवृत्त्यत्यन्ताभावीयप्रतियोगितानवच्छेदकधर्मवत्त्वरूपव्यापकत्वं दुर्घटमित्यपास्तम्, पूर्वोक्तसम्बन्धेन व्याप्यव्यापकभावे बाधकाभावात्। ननु प्रातिपदिकनिष्ठव्याप्यतानिरूपितव्यापकतावदुपस्थितिविषयत्वस्य प्रातिपदिकार्थत्वे घटपदस्य पटोऽपि प्रातिपदिकार्थः स्यात्। यत्र घटपदेन घटोपस्थितावुद्बोधकान्तरवशात् पटस्यापि भानं तत्र समूहालम्बनरूपैकोपस्थितौ घटपदनिष्ठव्याप्यतानिरूपितव्यापकतावद्घटविषयकोपस्थितिः तद्विषयता यथा घटे तथा पटेऽप्यस्तीति तस्यापि तदर्थत्वापत्तिरक्षतैवेति चेन्न, प्रातिपदिकनिष्ठव्याप्यतानिरूपितोपस्थितिनिष्ठव्यापकतावच्छेदकविषयतावत्त्वस्य प्रातिपदिकार्थत्वेनाद्दोषात्। घटोपस्थितिनिष्ठव्यापकतावच्छेदिका च विषयता घटघटत्व—पुंस्त्वत्वपुंस्त्वसमवायनिष्ठैव, समनियतविषयताया एवावच्छेदकतया यत्र यत्र घटपदेन घटोपस्थितिस्तत्र तत्र पटोपस्थितेरभावात्तन्निष्ठविषयताया व्यापकतानवच्छेदकत्वात्। न चोपस्थितिनिष्ठव्यापकताया विषयनिष्ठविषयतावैयधिकरण्यादवच्छेदिका

रणे' इत्यमरः। प्रातिपदिकार्थादीन्येव तन्मात्रमित्येवकारेणास्वपदविग्रहः। मयूरव्यंसकादित्वात्समासः। कृष्ण इति। यद्यपि नीलरूप-

नीलरूपवदिति। 'प्रत्ययस्थात्' इति सूत्रस्थेन "असुब्बत" इति भाष्यप्रयो-

अथ स्वौजसमौडित्यादिना विहितानां प्रत्ययानामर्थविशेषे व्यवस्थान्दर्शयति—प्रातिपदिकार्थेति। मूले मात्रशब्दस्येति। अत्र शब्दशब्दोपादानेन नायं सामञ्चप्रत्यय इति स्पष्टयति—अस्वपदविग्रह इति। मयूरव्यंसकादिसमासस्य विभाषाधिकारीयत्वेऽपि मात्रशब्दस्य शब्दशक्तिस्वभावाद्वृत्तिविषयत्वमेवेत्येवमुक्तम्। अत एव कार्त्स्न्यार्थकमात्रशब्देन घटमात्रं रूपवदित्यादौ सर्वे घटा इति वृद्धानां विग्रहः। इदमपि सूत्रं क्रियायोगे एव प्रवर्तते, तिङ्समानाधिकरणे प्रथमेति वार्तिकोक्तेः। ननु 'न कर्मधारयान्मत्वर्थीयो बहुव्रीहिश्चेत्तदर्थप्रतिपत्तिकरः' इति वचनं वृत्तिद्वयाकल्पनमूलकमस्ति। यथा नीलघटम्भूतलमित्येव प्रयोगः, न तु नीलघटवदिति, मत्वर्थबहुव्रीहिणैव विवक्षितार्थलाभात्। बहुव्रीहिश्चेदित्युपादानात्कृष्णसर्पवानित्यादि भवत्येव, अत्र कृष्णसर्पशब्दस्य कर्मधारयसंज्ञकस्य जातिविशेषावच्छिन्ने रूढिर्बहुव्रीहिस्तु न तादृशजातिविशेषावच्छिन्नप्रतिपादकः। एवञ्च तद्वचनविरोधान्नीलरूपवदित्यनुपपन्नमत आह—

न स्यादिति वाच्यम्, स्वरूपसम्बन्धेन विषयताया विषयनिष्ठत्वेऽपि निरूपकतासम्बन्धेनोपस्थितिवृत्तित्वात्। तथा च निरूपकतासम्बन्ध एव विषयतानिष्ठावच्छेदकतावच्छेदकः। ननु प्रकृते उपस्थितिशब्देन नैयायिकाभिमतस्मृतेर्ग्रहणम्, शाब्दबुद्धेर्वा। नाद्यः, तटादिपदजन्योपस्थितौ लिङ्गत्रयमानन्त्येन लिङ्गग्रहणवैयर्थ्यापत्तेः। नान्त्यः, तटादिपदजन्यशाब्दबोधस्य तत्तदाकाङ्क्षादिसहकारेणैकैकलिङ्गविषयकतया शाब्दबोधनिष्ठव्यापकताया लिङ्गनिष्ठविषयताया अनवच्छेदकत्वेन लिङ्गग्रहणस्य सार्थक्येऽपि 'घटः कर्मत्वम् आनयनं कृतिः' इत्यनेनाकाङ्क्षाऽभावेन प्रातिपदिकस्य सत्त्वेऽपि शाब्दबोधाभावात् शाब्दबोधस्य व्यापकत्वानुपपत्तेरिति चेन्न, व्याप्यतावच्छेदकीभूतस्वनिष्ठशक्तिविषयकोद्बुद्धसंस्कारेत्यस्य स्थाने स्वविशेष्यकशक्तिज्ञानाकाङ्क्षादिघटितशाब्दबोधसामग्रीसमवायित्वरूपसम्बन्धस्य निवेशेनाकाङ्क्षाघटितसम्बन्धेनोक्तस्थले प्रातिपदिकस्याप्यभावेनोपस्थितिशब्देन शाब्दबोधस्य ग्रहणेऽपि तत्र व्यापकत्वाक्षतेः। ननु 'सर्वं वाक्यं क्रियया परिसमाप्यते' इति न्यायेन क्रियाबोधस्यापि घटादिप्रातिपदिकव्यापकतया क्रियाया अपि प्रातिपदिकार्थत्वापत्तिरिति चेन्न, स्वनिष्ठशक्तिनिरूपकत्वस्यापि दानेनादोषात्। एवञ्च स्वविषयकश्रावणप्रत्यक्षसमवायित्वस्वविशेष्यकशक्तिज्ञानाकाङ्क्षादिघटितशाब्दबोधसामग्रीसमवायित्वोभयसम्बन्धावच्छिन्नप्रातिपदिकनिष्ठव्याप्यतानिरूपितशाब्दबोधनिष्ठव्यापकतावच्छेदकविषयतावत्त्वे सति प्रातिपदिकनिष्ठशक्तिनिरूपकत्वं प्रातिपदिकार्थत्वं सिद्धम्।

ननु हर्यादिनानार्थकशब्दस्थले सूर्याद्यन्यतमयत्किञ्चिदर्थनिरूपितशक्तिज्ञानाकाङ्क्षादिशाब्दसामग्रीसमवायिनः पुंसस्तदितरविषयकशाब्दबोधानुदयेन तत्र इन्द्रविषयकशाब्दबोधो नास्तीत्यस्य वक्तुं शक्यत्वेन, एवं हरिशब्देनैवेन्द्रविषयकशाब्दबोधसामग्रीसमवायिनि सूर्यविषयकबोधो नास्तीत्यादिबोधाभावस्य सत्त्वेन 'चालनी'न्यायेन तज्जन्यसर्वबोधस्य तदव्यापकतया कस्याप्यर्थस्य प्रातिपदिकार्थत्वं न स्यात्। न च व्याप्यतावच्छेदकसम्बन्धकुक्षौ तत्तदर्थं निवेश्य तत्तदर्थविषयकशाब्दबोधसामग्रीसमवायि-

तत्परोऽयमनियतलिङ्गस्तथाऽपि वासुदेवे भगवति नियतलिङ्ग एवेति भावः। *ज्ञानमिति*। भावे ल्युट्। *द्रोण इति*। न च प्रातिपदिकमात्रे प्रथमेहास्त्विति वाच्यम्, तथा सति परिच्छेद्यपरिच्छेदकभावस्य

---

लेन क्वचिल्लाघवानादरस्यापि सूचनात्कर्मधारयान्मत्वर्थीयोऽपि क्वचिदिति

---

शीलरूपवदितीति। भाष्यप्रयोगेणेति। तत्र हि असुप इति किम्बहुव्रीहिः न विद्यते सुप्सुबन्तं यस्मिन्नङ्गे तदसुबिति, आहोस्विन्न सुप् असुबिति तत्पुरुष इति वितर्क्य 'यदि विज्ञायते असुब्वतोऽङ्गस्येति बहुचर्मिकेत्यत्रेत्वन्न प्राप्नोति' इत्युक्तम्, अपि परे यदङ्गमविद्यमानसुबन्तकन्तदवयवाकारस्य प्रत्ययस्थकात्पूर्वस्येत्त्वमिति सूत्रार्थस्य तदानीं निष्पत्तेः। तत्र लाघवानादरेण स्पष्टप्रतिपत्त्यर्थम्बहुव्रीहेर्मतुपि 'असुब्वत' इति दर्शितमिति लाघवानादरो भाष्यसंमत एवेति भावः। नामार्थयोरित्यस्य नाम्न अर्था-

---

त्यसम्बन्धावच्छिन्नप्रातिपदिकनिष्ठव्याप्यतानिरूपितशाब्दबोधनिष्ठव्यापकतावच्छेदकविषयतावत्त्वे सति प्रातिपदिकनिष्ठशक्तिनिरूपकत्वं प्रातिपदिकार्थत्वमित्यस्य स्वीकारेणादोष इति वाच्यम्, पुंस्त्वविशिष्टतट-विषयकशाब्दसामग्रीसमवायिनि पुरुषे पुंस्त्वविषयकबोधस्य नियमेनोदयात् पुंस्त्वनिष्ठविषयताया अपि तादृशबोधनिष्ठव्यापकतावच्छेदकतया प्रातिपदिकार्थत्वादेव लिङ्गार्थेऽपि प्रथमायाः सिद्धया लिङ्गग्रहणस्य वैयर्थ्यापत्तेरिति चेन्न, प्रातिपदिकप्रयोज्यबोधीयमुख्यविशेष्यतासमानाधिकरणार्थविशेष्यकशक्तीयमुख्यवि-शेष्यतानिरूपितप्रकारताविशिष्टत्वं प्रातिपदिकार्थत्वमिति स्वीकारेणादोषात्। वै० स्वाश्रयत्व-स्वाश्रया-वच्छिन्नविषयतावत्त्वान्यतरसम्बन्धेन। तथा च तटपदप्रयोज्यशाब्दबोधीयमुख्यविशेष्यतासमानाधिकरण शक्तीयविशेष्यता तटनिष्ठैव न पुंस्त्वादिनिष्ठा तन्निरूपितप्रकारता तटत्वनिष्ठा तदाश्रयतया तस्य तदाश्र-यतटत्वावच्छिन्न-पुंस्त्वादिनिष्ठप्रकारतानिरूपितविशेष्यताख्यविषयताश्रयतया तटस्य च प्रातिपदिकार्थत्व सिध्यति। नचैवं घटादिपदस्यापि पुंस्त्वादेः प्रातिपदिकार्थत्वानापत्तिः, घटादिनियतलिङ्गकस्य पुंस्त्वा-दिलिङ्गघटत्वाद्युभयविशिष्टे एव घटादौ शक्तिस्वीकारेण लिङ्गस्यापि प्रातिपदिकार्थत्वात्। प्रकारतावत्त्वञ्च स्वरूप–स्वनिरूपितावच्छेदकतावत्त्वान्यतरसम्बन्धेन तेन पुंस्त्वत्वादौ नाव्याप्तिः। अनियतलिङ्गस्थले तु तटादिशब्दस्य तटत्वादिविशिष्टे तटादौ, पुंस्त्वत्वादिविशिष्टे पुंस्त्वादौ च खण्डशः शक्तिस्वीकारेण बोधीयमुख्यविशेष्यतासमानाधिकरणशक्तीयतटादिनिष्ठविशेष्यतानिरूपितप्रकारतायाः पुंस्त्वादावभावेन न दोषः। नन्वेवमपि अन्ययोगव्यवच्छेदरूपविशिष्टार्थाप्रसिद्धया एवशब्दस्यान्ययोगे व्यवच्छेदे च खण्डशः शक्तिस्वीकारेण शाब्दबोधीयमुख्यविशेष्यताया व्यवच्छेदे एव सत्त्वेन तत्समानाधिकरणशक्तीयविशेष्यता-व्यवच्छेदनिष्ठैव तन्निरूपितप्रकारता व्यवच्छेदत्वे न तु अन्ययोगे इति अन्ययोगस्य प्रातिपदिकार्थत्वाना-पत्तिरिति चेन्न, स्वजन्यबोधविषयत्वप्रकारकतात्पर्यविषयतापर्याप्त्यधिकरणत्वस्वाभाववत्त्वोभयसम्बन्धेन प्रातिपदिकविशिष्टत्वं प्रातिपदिकार्थत्वम् इत्यत्र तात्पर्यात्। अभावश्च—स्वप्रयोज्यधर्मितानिरूपितप्रकारता-वत्त्व–स्वनिष्ठशक्तिविशिष्टावच्छेदकतावद्विषयतावत्त्वोभयसम्बन्धावच्छिन्नप्रतियोगितावच्छेदकताकः। शक्तिवैशिष्ट्यञ्चावच्छेदकतायां स्वविषयविषयतानिरूपितनिरूपकत्वसम्बन्धावच्छिन्नत्व–स्वज्ञानाधीनोप-स्थितिप्रयोज्यशाब्दबोधनिष्ठभेदप्रतियोगितानिरूपितत्वोभयसम्बन्धेन। लक्षणसमन्वयो यथा श्रीशब्दस्य श्रीत्वश्री–स्त्रीत्वत्व-स्त्रीत्वरूपार्थः प्रातिपदिकार्थः। तत्र स्वजन्यबोधविषयत्वप्रकारकतात्पर्यम् 'श्रीत्वं

संसर्गविधया भानायोगात्, नामार्थयोरभेदसंसर्ग एवेति व्युत्पत्तेः ।

ज्ञापनान्न तत्प्रयोगानुपपत्तिरिति बोद्धव्यम् । नामार्थयोरिति । नामार्थश्च नामार्थश्चेत्येकशेषः । अभेदसंसर्ग इति । यद्यप्यभेदो न संसर्गः, राहोः शिर इत्यादावौपाधिकभेदेन षष्ठ्युपपादनस्य भाष्ये कृतत्वात्तथाऽपि इतरसम्बन्धानवच्छिन्नविशेषणविशेष्यभावसंसर्गस्य तेन शब्देनाभिधानान्न दोष इति बोद्धव्यम् । व्युत्पत्तेरिति । नीलमुत्पलमित्यादौ तथा क्लृप्तत्वा-

विति समासं कृत्वाऽभेदः संसर्गः प्रतिपाद्यत इति वाच्यन्तदनुपपन्नम्, पुष्पवन्तपदार्थयोः सूर्याचन्द्रमसोरभेदाप्रतीतेरत आह—नामार्थश्चेत्यादि । न च नाम्नोरर्थौ नामार्थौ तयोरिति षष्ठीतत्पुरुषोऽस्त्विति वाच्यम्, वृत्तावभेदैकत्वसङ्ख्याया यत्नं विना भानस्यान्यत्र सिद्धान्तितत्वेन द्विवचनान्तेन समासासम्भवात्तत्सम्बन्धस्य सम्बन्धिनो यत्र भेदस्तत्रैव विशिष्टबुद्ध्युपपत्तयेऽङ्गीकार इति सिद्धान्तात्कथमभेदः संसर्ग इत्याशङ्कते—यद्यप्यभेद इति । औपाधिकभेदेनेति । दिवसाद्यवच्छिन्नो राहुशब्दार्थो घट्याद्यवच्छिन्नः शिरः शब्दार्थ इति कल्पनयाऽवयवावयविभावरूपसम्बन्धोपपादनेनेत्यर्थः । किञ्च भेदो यदि संसर्गस्तदा नीलो घट इत्यत्र नीलशब्दान्नियमेन षष्ठी स्यादिति तादृशवाक्योच्छेदापत्तिः । नचैवं सति समानाधिकरणाधिकारे समासविधानानुपपत्तिरिति वाच्यम्, विशेषणवाचकप्रातिपदिकात्षष्ठीसत्त्वेऽपि विरुद्धविभक्त्यर्थानवरुद्धत्वे सत्येकविशेष्यकप्रतीतिजनकत्वरूपसामानाधिकरण्योपपादनसम्भवेन तस्य सार्थक्यात् । अत एव तक्षकस्य सर्पस्येत्यादौ समानाधिकरणेन षष्ठीसमासनिषेधस्याप्युपपत्तिः । किञ्चाभेदस्य संसर्गत्वे कृत्तद्धितसमासेभ्यः सम्बन्धाभिधानम्भावप्रत्ययेनेति-सिद्धान्ताद्राजपौरुष्यमित्यादौ भावप्रत्ययेन सम्बन्धस्येव नीलोत्पलत्वमित्यादावपि सम्बन्धाभिधानापत्तिः । नचाभेदसंसर्गः प्रथमावाच्य एवेति भ्रमितव्यम्, धान्येन धनवान्नीलकुटम्पश्येत्यादावपि तदभिधानदर्शनात् । सम्बन्धानवच्छिन्नेति । यत्राभेदः संसर्ग इति व्यवहारस्तत्र विशेषणतायाः सम्बन्धानवच्छिन्नायाः सम्बन्धघटकतया भानेन सम्बन्धानवच्छिन्नविशेषणविशेष्यभावे एव पदार्थयोः संसर्गत्वेन व्यवह्रियत इति भावः । अयमपि विशेषणतावच्छेदकविशेष्यतावच्छेदकधर्मभेदमूलकारोपित आश्रययोर्भेदो यत्र तत्रैव संसर्गतया भासते, तेन घटो घट इत्यादि न प्रयोगः । तादृशसम्बन्धस्य भाने दृष्टान्तमाह—नीलमुत्पलमिति । प्रासो[illegible] प्रास इत्यादौ ताद-

श्रीपदजन्यबोधीयविषयतावद्भवतु' एवं 'श्रीः श्रीपदजन्यबोधीयवि[illegible]षयतावती भवतु इत्यादिरूपम् । तदीयविषयतापर्य्याप्त्यधिकरणत्वं श्रीत्वादिषु । स्वाभाववत्त्वञ्च तेषु, तथा हि—श्रीपदनिष्ठा शक्तिः श्रीत्वावच्छिन्ननिरूपिता तद्विशिष्टावच्छेदकताऽप्रसिद्धा तादृशावच्छेदकताववत्त्वं तेषु नास्तीति तेन सम्बन्धेन श्रीरूपप्रातिपदिकाभावस्तत्र । 'श्रीत्वावच्छिन्नो बोधः पटविषयतावान् न' इति भेदस्य श्रीपदनिष्ठशक्तिज्ञानाधीनोपस्थितिप्रयोज्यशाब्दबोधनिष्ठत्वेऽपि, पटविषयतात्वविशिष्टभेदीयप्रतियोगितानिरूपितावच्छेदक-

न चाषष्ठ्यर्थबहुव्रीहौ व्यभिचारः,

दिति भावः। अषष्ठ्यर्थबहुव्रीहाविति। अत्र षष्ठीपदं सप्तम्या अप्युपलक्षणम्,

शनियमे व्यभिचाराशङ्कां निरस्यति मूले नचेति। षष्ठ्यर्थे बहुव्रीहिश्चित्रगुरित्यादौ

तायाः पटविषयतायां सत्त्वेऽपि, श्रीपदनिष्ठशक्तिविषयश्रीत्वादिनिष्ठविषयतानिरूपितनिरूपकत्वसम्बन्धावच्छिन्नत्वं नास्ति किन्तु पटपदनिष्ठशक्तिविषयपटत्वादिविषयतानिरूपितनिरूपकत्वसम्बन्धावच्छिन्नत्वमेवेति यथा संयोगसम्बन्धावच्छिन्नत्वं गुणनिष्ठवृत्तितायां नास्ति तथा तादृशभेदीयप्रतियोगितावच्छेदकतायां तादृशनिरूपकत्वसम्बन्धावच्छिन्नत्वं नास्तीति तादृशावच्छेदकतावद्विषयतावत्त्वं श्रीत्वादिषु नास्तीति तेन सम्बन्धेन श्रीरूपप्रातिपदिकाभाववत्तेषु सर्वेषु। स्वम् श्रीरूपप्रातिपदिकं तत्प्रयोज्या धर्मिता स्त्रीत्वनिष्ठप्रकारता-निरूपिता श्रीत्वावच्छिन्ना श्रीनिष्ठा तन्निरूपितप्रकारतावत्त्वं यद्यपि स्त्रीत्वे स्त्रीत्वत्वेन जातमिति तेन प्रातिपदिकाभावो नास्ति तथापि पूर्वोक्तसम्बन्धस्य तत्राभावादेकसत्त्वेऽपि द्वयं नास्तीति रीत्या श्रीरूपप्रातिपदिकाभाववत्तेषु इत्युभयसम्बन्धेन प्रातिपदिकविशिष्टतया प्रातिपदिकार्थत्वं तेषामेवात्र बोध्यम्। तटादि-प्रातिपदिकस्थले लिङ्गे प्रातिपदिकविशिष्टत्वं न जातमिति प्रातिपदिकार्थत्वाभावस्तस्य। तथा हि 'तटः' इत्यत्र 'पुंस्त्वं तटपदजन्यबोधीयविषयतावद्भवतु' इति तात्पर्यीयविषयतापर्य्याप्त्यधिकरणत्वस्य पुंस्त्वे सत्त्वेऽपि स्वाभाववत्त्वरूपसम्बन्धाभावान्न प्रातिपदिकार्थत्वम्। तथा हि—यदा तटशब्देन नपुंसकत्वविशिष्टबोधस्तत्र 'नपुंसकत्वविशिष्टतटविषयको बोधः पुंस्त्वविषयतावान्न' इति भेदीयप्रतियोगितानिरूपितपुंस्त्वविषयतानिष्ठावच्छेदकतायां तटपदनिष्ठशक्तिज्ञानजन्योपस्थितिजन्यशाब्दबोधनिष्ठभेदीयप्रतियोगितानिरूपितत्वस्य, तटपदनिष्ठशक्तिविषयपुंस्त्वादिनिष्ठविषयतानिरूपितनिरूपकत्वसम्बन्धावच्छिन्नत्वस्य च सत्त्वात् पुंस्त्वस्य शक्तिविशिष्टावच्छेदकतावद्विषयतावत्त्वात्प्रातिपदिकार्थत्वाभावः। एवमन्यत्राप्यूह्यम्। प्रथमसम्बन्धोपादानादश्वविषयकबोधतात्पर्य्येणोच्चरितहरिपदादि द्रव्यपार्थे प्रथमाऽभावः। स्वाभाववत्त्वरूपसम्बन्धोपादानाल्लिङ्गस्य प्रातिपदिकार्थत्वाभावेन लिङ्गग्रहणं सार्थकम्। अभावीयप्रतियोगितावच्छेदकप्रथमसम्बन्धोपादानात् तटादिशब्दस्थले घटादेः प्रातिपदिकार्थत्वं सिध्यति। प्रतियोगितावच्छेदकद्वितीयसम्बन्धोपादानान्नियतलिङ्गस्थले लिङ्गस्य प्रातिपदिकार्थत्वम्। शक्तिवैशिष्ट्ये प्रथमसम्बन्धेन नियतलिङ्गस्थले 'प्रमेयत्वेन पुंस्त्वविषयतावान्न' इति भेदमादाय पुंस्त्वादौ नाव्याप्तिः, प्रमेयत्वावच्छिन्नभेदीयपुंस्त्वनिष्ठविषयताया घटादिपदनिष्ठशक्तिविषयत्वाभावात्। पुंस्त्वत्वेनैव घटादिपदशक्तिविषयत्वात्। शक्तिवैशिष्ट्यघटकद्वितीयसम्बन्धस्यापि नियतलिङ्गस्थले लिङ्गस्य प्रातिपदिकार्थत्वसिद्धिरेव फलम्। अन्यथा पदान्तरज्ञानादिपदप्रयोज्यनपुंसकत्वविशिष्टबोधे पुंस्त्वविषयतावान्नेति भेदमादाय प्रातिपदिकार्थत्वानापत्तेः।

ननु वासुदेवपरककृष्णशब्दवाच्यपुंस्त्वस्य प्रातिपदिकार्थत्वं न स्यात्प्रातिपदिकवैशिष्ट्यघटकप्रथमसम्बन्धसत्त्वेऽपि स्वाभाववत्त्वरूपद्वितीयसम्बन्धाभावात्। वासुदेववाचककृष्णशब्दे नीलगुणत्वनिरूपितशक्तेरपि सत्त्वात् तादृशशक्तिजन्यनपुंसकत्वविशिष्टबोधनिष्ठभेदीयपुंस्त्वनिष्ठप्रतियोगितावच्छेदकताया उभयसम्बन्धेन शक्तिविशिष्टतया तादृशावच्छेकतावद्विषयतावत्त्वस्यैव पुंस्त्वे सत्त्वादिति चेन्न, स्वाभाववत्त्वसम्बन्धमपहाय स्वनिष्ठशक्त्यभाववत्त्वस्य निवेशेनादोषात्। वासुदेवत्वावच्छिन्ननिरूपितशक्तिमादाय पुंस्त्वस्य प्रातिपदिकार्थत्वोपपादनात्। स्वनिष्ठशक्तिविषयतत्तदर्थनिष्ठविषयत्वपर्य्याप्त्यनुयोगितावच्छेदकरूपावच्छिन्नानुयोगिताकपर्य्याप्तिकावच्छेदकताकप्रतियोगिताकभेदस्यैव ग्रहणेन पुंस्त्वविशिष्टघटसंयुक्तपटादिविषयतावान्नेतिभेदमादाय घटादिपदवाच्यपुंस्त्वादौ नाव्याप्तिरित्यन्यत्र विस्तरः।

वीराः पुरुषा यस्मिन्नित्यत्राप्यव्यभिचारात्। एवं च प्राप्तोदकादावित्यर्थः। न च व्यपेक्षावादेऽपि प्राप्तपदादिविषये पचतीत्यादौ क्लृप्तत्यागस्य प्रत्ययार्थप्राधान्यस्य वृत्तौ त्यागेन विशेषणविशेष्यभाववैपरीत्यस्य सिद्ध्या प्रकारीभूतकर्त्रोदकस्याभेदेनैवान्वयात् क्व व्यभिचार इति वाच्यम्, नामजन्यप्रतीतिविशेष्ययोरेवान्वयः, स चाभेदेनैवेति पदार्थः पदार्थेनेत्येतत्सिद्धो नियम इति नामजन्यप्रतीतिविशेष्ययोस्तथाऽन्वयनियमस्य व्यभि-

---

तज्जन्यबोधश्चित्राभिन्नगोसम्बन्धीत्याद्याकारकस्तत्र पूर्वपदार्थस्योत्तरपदार्थे तादृशसम्बन्धस्य विशेषणतानियामकत्वदर्शनादपष्ठ्यर्थे इति। अत्र=उक्तनियमे। अव्यभिचारादिति। वीररूपस्य पूर्वपदार्थस्योत्तरपदार्थे तादृशसम्बन्धेन विशेषणतया भानस्य दर्शनादिति भावः। प्राप्तोदकादाविति। प्राप्तमुदकं यमिति वाक्याद्यत्कर्मकप्राप्तिकर्तृउदकमिति बोधः। समासात्तूदककर्तृकप्राप्तिकर्मेतिरीत्या बोधस्तत्रोदकस्य प्राप्तौ कर्तृतयाऽन्वयदर्शनेन व्यभिचार इत्यर्थः। व्यपेक्षारूपस्य सामर्थ्यस्य सत्त्वे समास इति मतमाश्रित्य कृतामाशङ्कान्निराचष्टे—नचेति। क्लृप्तत्यागस्येति। वक्ष्यमाणेन भावप्रधानमाख्यातमिति वचनेन प्रत्ययार्थकर्तुः प्रकृत्यर्थक्रियायां विशेषणतया भावस्यानुभवसिद्धत्वादिति। यद्यपि कृदन्ततद्धितान्तजन्यबोधे प्रकृत्यर्थनिष्ठप्रकारतानिरूपिता प्रत्ययार्थनिष्ठा विशेष्यता तथाऽपि तिङन्तजन्यबोधे प्रत्ययार्थो विशेषणतयैव भासते, उक्तवचनबलात्। तद्वद्वृत्तिजन्यबोधेऽपि विशेषणविशेष्यभावस्य वैपरीत्यं कल्प्यते। विशेषणविशेष्यभाववैपरीत्यञ्च, भवतामपि क्लृप्तमेव। चित्रगुरित्यादौ विग्रहवाक्यजन्यबोधस्य गोपदार्थे मुख्यविशेष्यकस्य, समासजन्यस्य तु गोविशेषणकान्यपदार्थमुख्यविशेष्यकस्य दर्शनात्। प्रकारीभूतकेति। गत्यर्थाकर्मकेत्यनेन कर्तरि क्तप्रत्ययस्य विधानात्। उक्तदृष्टान्तेन प्रकृत्यर्थस्य विशेष्यतया भानस्वीकारे प्रत्ययार्थस्य तत्र विशेषणत्वन्तस्मिन्कर्तरि उदकशब्दार्थो विशेषणमिति न व्यभिचार इति भावः। नामार्थयोरिति। व्युत्पत्तौ नामपदं सुबन्तपरमेवेति स्फुटीभविष्यति। एवञ्च तज्जन्यबोधविशेष्यताऽधुना कर्तृविशिष्टप्राप्तिक्रियायां सम्पन्नेति तादृश्यां क्रियायामेवान्वयो वाच्यः। स च भवता परित्यक्त इति व्यभिचारो दुरुद्धरः। विशेष्यस्यैव ग्रहणे साधिका च, गौर्नित्या परशुरपशुरिति वाक्यस्य प्रामाण्यापत्तिवारणाय स्वीकृतायाः 'पदार्थः पदार्थेनान्वेति न तु पदार्थैकदेशेन' इति व्युत्पत्तिः सैवेत्याशयेन दूषयति—नामजन्येत्यादिना। इत्येतत्सिद्ध इति। एतेनेयं व्युत्पत्तिर्यद्यपि लौकिकी तथापि सहकारित्वेनाश्रीयते। नामजन्यप्रतीतिविशेष्ययोर्भेदसम्बन्धेनापि 'राज्ञः पुरुषः' इत्यादावन्वयो भवति यद्यपि, तथापि यत्र सामानाधिकरण्यन्तत्राभेदेनैव, भेदसम्बन्धेनाऽप्येतादृशस्थले तत्स्वीकारे 'राजा पुरुषः' इति वाक्यादपि स्वस्वसम्बन्धावच्छिन्नराजत्वावच्छिन्नप्रकारताकबोधापत्तिरिति भावः। परोक्तरीत्या क्तप्रत्ययार्थकर्तुर्विशेषण-

एकार्थीभावाभ्युपगमात् । नापि निपातार्थे, तेषां द्योतकताभ्युपगमात् ।

चार इत्याशयात् । पचतीत्यादौ तिङां द्योतकतया प्रत्ययार्थप्राधान्यत्यागेऽप्यत्र तत्त्यागे मानाभाव इत्यन्ये । प्राप्तावुदकस्य कर्तृतयाऽन्वयः, क्तस्य कर्मणि लक्षणेति तु न युक्तम्, अन्यपदार्थस्य दुरुपपादत्वात् । एकार्थीभावेति । एवं चैकैवोपस्थितिर्व्युत्पत्तयश्च भिन्नोपस्थितिविषया इति न दोष इति भावः । एतेन 'राजपुरुषः' इत्यादौ व्यभिचारः, राजपदार्थ-पुरुषपदार्थयोः स्वस्वामिभावेनैवान्वयात् । सम्बन्धिलक्षणायां तु न मानमित्यपास्तम् । नापीति। घटश्चेत्यादौ समुच्चयस्य घटे भेदसम्बन्धेनान्वयादिति भावः । द्योतकतेति । घटपदेनैव विशिष्टस्योपस्थितिरिति तत्रान्वय-

त्वमभ्युगम्याप्युक्तरीत्यान्वयबोधानुपपत्तिर्दर्शिता । वस्तुतः प्रत्ययार्थस्य विशेषणत्वे एव न किञ्चिदत्र साधकमित्याशयेनाह—पचतीत्यादौ तिङामिति । अयम्भावः ÷ श्रूयमाणानामनेकतिबादीनाङ्क्त्रादौ शक्तिकल्पनापेक्षायाम्प्रत्ययानुपूर्व्यां नानात्वाच्छक्ततावच्छेदकता नानाधर्मे कल्पनीयेति गौरवम्, तत्प्रकृतिभूतैकानुपूर्व्यवच्छिन्नधातोरेव शक्तिः पञ्चसु कल्प्यते चेल्लाघवम्भवति तिङान्तु द्योतकतैवेति काल इव द्योत्यः कर्ता तत्र विशेषणमित्यस्तु अत एव 'अधोक्' 'अलेट्' इत्यादौ धातुमात्रादपि कर्तृविशेषणकधात्वर्थक्रियाविशेष्यकबोधोपपत्तिः । द्योत्यार्थस्य विशेषणता च 'हेतुमति च' इति सूत्रभाष्ये स्पष्टा । अत एव 'स्त्रियाम्' इति सूत्रभाष्ये स्त्रीत्वस्य टावादिवाच्यत्वपक्षे तस्य प्राधान्यापत्तौ द्विवचनाद्यनुपपत्तिरुक्ता, न तु स्त्रीत्वस्य प्रत्ययद्योत्यत्वपक्षे । यत्र तु प्रत्ययार्थप्राधान्ये साधकमस्ति तत्र तु तस्य विशेष्यत्वमेव । एवञ्च 'तयोरेवेति' 'कर्तरि कृत्' इति 'गत्यर्थाकर्मके'त्यादिशास्त्रबलात्क्तप्रत्ययसमभिव्याहारे तस्य कर्तुर्विशेष्यत्वमेवोचितमिति ।

ननु नात्र प्रत्ययार्थप्राधान्यस्य त्यागः, प्रत्ययस्य कर्मणि लक्षणाया अभ्युपगमाद्विशेषणीभूतक्रियायाङ्कर्तृतासम्बन्धेनोदकस्यान्वय इति नानुभवसिद्धशाब्दबोधानुपपत्तिरिति यत्केनचिदुक्तन्तद् दूषयति—प्राप्तावुदकस्येति । दुरुपपादत्वादिति । अवदुक्तरीत्या कर्मणोऽन्यपदार्थत्वेनाभिप्रेत्य प्राप्तपदेनैव लाभादिति भावः । एवम्बहुव्रीह्युपजीव्यस्यैकधर्मिविशेष्यकबोधजनकत्वस्य अवदुक्तरीत्या त्यागेन बहुव्रीहिसमासानुपपत्तिरपि द्रष्टव्या । एकार्थीभावेति इति वाक्ये पृथगर्थबोधकत्वेन दृष्टानाम्पदानामेकशक्त्या विशिष्टविषयैकोपस्थितिजनकत्वमेवैकार्थीभावः स एवात्र समर्थः पदविधिरिति शास्त्रादाश्रीयते। व्युत्पत्तयः=नामार्थयोरित्यादयः । भिन्नोपस्थितिविषयाः=विभिन्नशब्दाभ्याञ्जनिता या भिन्नशक्त्योपस्थितिस्तद्विषयाः, एतेन=एकार्थीभावाभ्युपगमेन । व्यभिचार इति । तत्पुरुषे एव व्यभिचारदर्शनाद्बहुव्रीहिपर्यन्तानुधावनं व्यर्थमिति भावः । अत्रेदम्बोध्यम् ÷ व्यपेक्षावादेऽप्यषष्ठ्यर्थबहुव्रीहौ व्यभिचारप्रदर्शनम्,

न च सिद्धान्तेऽपि प्रकृतिप्रत्ययार्थयोरभेदान्वयो दुर्लभः, अन्यत्रा-
स्यैवाभाव इति भावः । अत एवानुभूयते इत्यादौ सकर्मकत्वम् । निपाता-

वृत्तिवाक्ययोः समानार्थबोधकत्वमिति नियमस्य त्यागेन, वस्तुतस्तु तादृशनियमानुरोधेन प्राप्तोदकेत्यादिसमुदायाद्वाक्याच्च प्राप्तिकर्त्रभिन्नोदककर्मेत्येव बोधः । अत एव पूर्वोत्तरपदयोः सामानाधिकरण्ये एव, विहितबहुव्रीहिसमासस्योपपत्तिः । अत एव 'प्राप्तभार्यः' इत्यादौ प्राप्तिकर्माभिन्नभार्याकर्त्रेतिबोधात्प्राप्तपदभार्यापदयोः सामानाधिकरण्यात्पुंवद्भावस्य सिद्धिः । उदकादौ कर्तृतानिरूपकत्वबाधेऽपि विशेषणीभूतक्रियायान्तत्पर्यवसानरूपोऽयम् । 'शिखी ध्वस्तः' इतिवत् शाब्दबोधस्तु विशिष्टे आरोपेणोपपाद्य इति शब्देन्दुशेखरे स्पष्टम् । मूलेनापि निपातार्थं इति व्यभिचार इति शेषः । यथा घटः पटश्चेत्यत्र चशब्दार्थसमुच्चये पटस्य निरूपितत्वसम्बन्धेनान्वयदर्शनात् तेषां निपातानाम्, एवञ्च पटसमुच्चितः पटशब्दार्थ एव तस्य घटेऽभेदे वान्वयान्न व्यभिचार इति भावः । एवञ्च घटः पटश्चेत्यादौ पृथग्बुद्धेन संसर्गो यत्र तत्रान्वयबोध इति व्यवहारेण नानुपपत्तिरिति भाव इति । अत एव=निपातानान्द्योतकताभ्युपगमादेव । सकर्मकत्वमिति । प्रकृते भूधातुरन्वित्युपसर्गसमभिव्याहारादनुभवानुकूलव्यापारबोधकत्वात्सकर्मकत्वमित्यर्थः । केचित्तु निपातानां वाचकत्वेऽपि नानुभूयते सुखमित्यादौ धातोः सकर्मकत्वस्य सुखादेः कर्मत्वस्य च नानुपपत्तिः, स्वस्वयुक्तनिपातान्यतरार्थफलव्यधिकरणव्यापारवाचकत्वस्य सकर्मकत्वरूपत्वात्कर्मत्वस्याप्युक्तान्यतरार्थफलसम्बन्धित्वेनोद्देश्यत्वरूपत्वात्, एवञ्च सुखादेर्धातुयुक्तनिपातार्थफलसम्बन्धित्वात्कर्मणि लकारसिद्धिरिति चेन्न, वैकुण्ठमधिशेते हरिरध्यासिता भूमय इत्याद्यसिद्धिप्रसङ्गात्, वैकुण्ठादेर्भवदुक्तकर्मत्वस्यासम्भवात् । तस्मादेतच्छास्त्रीयकर्मसञ्ज्ञकार्थान्वय्यर्थकत्वं सकर्मकत्वमेतच्छास्त्रबोधितकर्मसञ्ज्ञकत्वञ्च कर्मत्वमित्येव युक्तम् । धात्वर्थान्वयित्वविवक्षायान्द्योतकत्वमेव तदतिरिक्तनिपातानां वाचकत्वमपि । अत एवाव्ययं विभक्तीत्यादि सङ्गच्छते । एवञ्चानुभूयते सुखमित्यादावेतच्छास्त्रीयकर्मसञ्ज्ञाया उपपत्तयेऽन्वित्यस्य द्योतकत्वमेव । 'शरैरुस्रैरिवोदीच्यानुद्धरिष्यन् रसानिव' इत्यादावपि विशेषणविशेष्यवाचकपदयोरेकविभक्तिकत्वोपपत्तये द्योतकत्वमेव, घटः पटश्चेत्यादावपि वाचकत्वस्वीकारे निपातार्थयोर्भेदसम्बन्धेनान्वयबोधस्याव्युत्पन्नतया द्योतकत्वमेव युक्तम् । सङ्कटमुद्धतमित्यादौ तु वाचकतेति नानुपपत्तिरित्यन्यत्र विस्तरः । अन्ये तु घटः पटश्चेत्यादौ चार्थे पटादेरन्वयोपपत्तये वाचकत्वपक्षेऽपि निपातातिरिक्तनामार्थयोर्भेदसम्बन्धेनान्वयबोधोऽनुपपन्न इति निपातिरिक्तत्वन्नाम्नि विशेषणन्देयमिति वदन्ति । तन्मतमाह— निपातातिरिक्तत्वेनेति । अन्ये इत्यरुचिबीजन्त्वेतादृशस्थले द्योतकत्वस्वीकारेणैवोपपत्तौ निपातिरिक्तत्वविशेषणदाने गौरवमिति, मूले सिद्धान्तेऽपीति । परिमाणाधिक्ये

दृष्टत्वादिति वाच्यम्, दैवतार्थकतद्धितादौ दृष्टत्वादिति भावः। वचनम् = संख्येति, तथैव प्राचां व्यवहारात्।

---

तिरिक्तत्वेन विशेषणाददोष इत्यन्ये। दैवतार्थकेति। 'आमिक्षां देवतायुक्तां वदत्येवैष तद्धितः' इति मीमांसकमते इति शेषः। एकार्थीभाववादिनामस्माकं तु विशिष्टोपस्थित्या तत्रापीदृशान्वयो दुर्लभ एव। द्रोणो व्रीहिमानयेत्यादि त्वनभिधानान्न, सर्पिः कुडवमात्रमित्यादौ षत्वविकल्पोऽपि व्यवस्थितवि-भाषया नेति दिक्।

वस्तुतस्तिङ्समानाधिकरणे प्रथमेति लक्षणैकवाक्यतया परिमाणे त्यस्य परिमाणे वर्त्तमानात्प्रातिपदिकादित्येवार्थः। न च प्रातिपदिकार्थ-

---

प्रथमेति सिद्धान्ते इत्यर्थः। दैवतार्थकेत्यादि। प्रथमान्तात्प्रातिपदिकाद्देवतासम्बन्धि-न्यर्थेऽणिति 'सास्य देवता' इति सूत्रार्थाद्देवतायाः प्रत्ययार्थत्वम्, तत्रैकदेशान्वय-स्वीकारे देवताविशिष्टन्देयम्प्रत्ययार्थः। तदस्वीकारे तु देवता देयञ्च प्रत्ययार्थं इति विभिन्नशक्तिः स्वीकार्या। अत एवाह—आमिक्षामित्यादि। वस्तुतस्तु तन्न स्वमत-मित्याह—एकार्थीभाव इति। ननु द्रोणो व्रीहिरित्यादौ परिमाणरूपप्रत्ययार्थे द्रोणा-देस्तस्य च व्रीह्यादावन्वयोपगमे द्रोणपदव्रीहिपदयोः सामानाधिकरण्याभावेन व्रीहि-पदार्थस्य क्रियान्तरम्प्रति कर्मत्वविवक्षायान्द्रोणो व्रीहिमानयेत्यादिप्रयोगापत्तिरत आह—द्रोणो व्रीहिमिति। अनभिधानादिति। प्रातिपदिकार्थादिसाहचर्येण समानवि-भक्तिकनामान्तरार्थे भेदेनान्वयविवक्षायामेव परिमाणाधिक्ये प्रथमायाः स्वीकारात्। एवञ्च प्रथमान्तार्थस्य द्रोणाभिन्नपरिमाणस्य प्रथमान्तार्थे व्रीह्यादौ भेदेनान्वयेऽपि व्रीहिपदस्य तिङ्सामानाधिकरण्यादभिहिते प्रथमा, तिङ्समानाधिकरणे प्रथमेति वार्तिककारोक्तेः। नन्वेवं सर्पिः कुडवमित्यादौ कुडवाभिन्नपरिमाणस्य सर्पिःपदार्थेऽन्व-यात् 'इसुसोः सामर्थ्ये' इति षत्वापत्तिरत आह—सर्पिरिति। दिगिति। दिगर्थस्तु तिङ्समानाधिकरणे प्रथमेति वार्तिकैकवाक्यतया 'नीलो घटः' इत्यादावुभयत्र प्रथ-मायाः साधुत्वोपपत्तये समानविभक्तिकनामार्थयोरभेदान्वयादुभयत्र तिङ्सामानाधि-करण्यं यथा तथा यत्र परिमाणाधिक्ये प्रथमा तत्रापि परिमाणे वर्तमानात्प्रातिपदिकाद्यत्र प्रथमा तत्रापि तत्साहचर्यान्नामान्तरार्थे भेदसम्बन्धेन नान्वयः, किन्त्वभेदेनैवेति।

द्रोणो व्रीहिमानयेत्यस्य नापत्तिरिति सिद्धान्तार्थमाह—वस्तुतस्त्विति। परिमाणे वर्तमानात्प्रातिपदिकाद्द यत्र प्रथमा तत्रापि परिमाणत्वेन परिमाणम्प्रकृत्यर्थे प्रकारतया भासत इति द्रोणः खारी आढकमित्याद्येवोदाहरणम्। एतेभ्यः परिमाणाभिन्नो द्रोण इत्याकारक एव बोधः। यत्र च तिङन्तम्पदन्न श्रूयते तत्राप्यस्तिर्भवन्तीपरो ऽप्रयुज्य-मानोऽप्यस्तीति भाष्योक्तेरस्तीत्यस्याध्याहारेण तिङ्सामानाधिकरण्यम्। हरीतकी-

त्वात्सिद्धिः, प्रवृत्तिनिमित्त-तदाश्रयद्रव्ययोरेवात्र प्रातिपदिकार्थपदेन ग्रहणात् । द्रोणादिपदानां च द्रोणत्वाद्येव प्रवृत्तिनिमित्तम् ।

परिमाणत्वेन परिमाणं तु लिङ्गवद्विशेष्यान्वय्येव । द्रोणः परिमाणमिति तु द्वौ ब्राह्मणावित्यादिवदुपपन्नम् । द्रोणत्वादि चेयत्ताविशेषावच्छिन्नपलादिपरिच्छिन्नधान्यादिपरिच्छेदकत्वसमानाधिकरणो धर्मः । द्रोणः, खारी,

रमुञ्चस्व राजन्मातेव हितकारिणीमित्यादिरसाधुरेव । नच तिङ्सामानाधिकरण्ये एव चेत् प्रथमा तदा ऽधिकरणशक्तिप्रधानेभ्य उच्चैरादिभ्यः कथम्प्रथमासिद्धिः, तिङ्सामानाधिकरण्याभावादिति वाच्यम्, 'अव्ययादाप्सुपः' इति ज्ञापकात्तदुपपत्तेः, तिङ्सामानाधिकरण्ये प्रथमैवेति नियमाद्वा । ननु द्रोणादिशब्दानाम्परिमाणत्वेन परिमाणमपि वाच्यमिति प्रातिपदिकार्थे प्रथमेत्येव सिद्धे परिमाणग्रहणमनर्थकमित्याशङ्कान्निराचष्टे-नचेति । द्रव्ययोरेवेति । एवकारेण लिङ्गव्यवच्छेदः । यद्यपि पञ्चकम्प्रातिपदिकार्थः, तथापि प्रकृतसूत्रे प्रातिपदिकार्थपदेन द्वयोरेव ग्रहणम् । एवञ्च प्रातिपदिकार्थमात्रे प्रथमेत्यस्योदाहरणम् उच्चैर्नीचैरित्याद्यलिङ्गाः, स्त्री पुमान् नपुंसकमिति लिङ्गप्रवृत्तिनिमित्तकञ्च, 'कृष्णः' 'श्रीः' 'ज्ञानम्', तटस्तटी तटमित्यादीनि च लिङ्गाधिक्ये इत्यस्योदाहरणम् । अथ परिमाणग्रहणस्य सार्थक्यमाह-द्रोणादिपदानामिति । द्रोणत्वाद्येवेति । लाघवादित्यादिः, एवकारेण तादृशाखण्डोपाधिसमानाधिकरणत्वेन प्रतीयमानं यदियत्ताविशेषावच्छिन्नधान्यादिपरिच्छेदकत्वं तस्य प्रवृत्तिनिमित्तघटकत्वस्य व्यवच्छेदः । एतेन द्रोणत्वादिना प्रतीयमानेऽर्थे यत्परिमाणत्वेन परिमाणम्भासते तस्याधिक्यात्प्रथमासिद्ध्यर्थम्परिमाणग्रहणमिति ध्वनितम् । यद्यपि परिमाणन्तदर्थन्तथापि तस्याभेदेन द्रोणत्वावच्छिन्ने द्रोणादिशब्दजन्यप्रतीतौ विशेषणतया भानम् । ननु यदि द्रोण इति प्रतीतिस्तदोक्तार्थानामप्रयोग इति न्यायाद् द्रोणः परिमाणमिति प्रयोगानुपपत्तिरत आह-द्रोणः परिमाणमिति । इत्यादिवदिति । तत्र यथा द्विवचनेन द्वित्वस्योपस्थितिरस्ति यद्यपि तथापि सम्भेदेनान्यतरवैयर्थ्यमिति न्यायेन द्विशब्दप्रयोगस्योपपत्तिस्तथा परिमाणशब्दस्यापि प्रयोग उपपद्यते । इदमत्र बोध्यम् ÷ धान्यपरिच्छेदके 'परिमाणन्तु सर्वतः' इति लक्षणलक्षिते परिमाणविशेषे एव द्रोणादिशब्दानाम्प्रयोगः । तदुक्तम् 'अष्टमुष्टिर्भवेत्किञ्चित्किञ्चिदष्टौ तु पुष्कलः, पुष्कलानि तु चत्वारि आढकः परिकीर्तितः, चतुराढको भवेद्द्रोण इत्येतन्मानलक्षणमि'ति धान्यपरिच्छेदके एवैषाम्प्रवृत्तौ मानन्तु 'पलञ्च कुडवः प्रस्थ आढको द्रोण एव च, धान्यमानेषु विज्ञेयाः क्रमशोऽमी चतुर्गुणाः । इति' । आढकद्रोणशब्दावर्द्धर्चादी तदुक्तममरसिंहेन 'अस्त्रियामाढकद्रोणौ खारीवाहो निकुञ्चिकः । कुडवः प्रस्थ इत्याद्याः परिमाणार्थकाः पृथगिति' 'पलन्निकुञ्चिकस्मुष्टिः कुडवस्तच्चतुष्टयम् । चत्वारः कुडवाः प्रस्थश्चतुःप्रस्थमथाढकम् । अष्टाढको भवेद् द्रोणो द्विद्रोणः शूर्प उच्यते । सार्द्धः शूर्पो भवेत्खारी द्विशूर्पा गोण्युदाहृता । तामेव मारखा-

इह सूत्रेऽर्थे लिङ्गे च प्रथमेत्येतावदेव सुवचम्, इतरत्सर्वं त्यक्तुं शक्यम्, तथा हि—अर्थे प्रथमेत्युक्ते कस्यार्थे इत्याकाङ्क्षायां यस्मात्स्वादिविधिस्तस्येति लभ्यत एव। स्वादयश्च प्रातिपदिकाल्लिङ्गभ-

---

आढकमित्येव तदुदाहरणं भाष्योक्तं साधु। द्रोणो व्रीहिरिति तु 'सिंहो माणवकः' इतिवल्लक्षणया साधु। लक्षणा च शक्यतावच्छेदकारोप एव। एवञ्च प्रातिपदिकार्थे इत्यस्यालिङ्गा लिङ्गप्रवृत्तिनिमित्तकाश्चोदाहरणम्, अन्ये सर्वे लिङ्गाद्याधिक्यस्य। परिमाणग्रहणं परिच्छेदकमात्रोपलक्षणम्। तद् ध्वनयन्नाह—एतावदेव सुवचमिति।

---

नीयाद्वाहो भारचतुष्टयम्। शुष्कमेयेष्विदम्मानन्द्विगुणन्तद् द्रवेषु त्विति' सूत्रे परिमाणग्रहणमुन्मानप्रमाणयोरप्युपलक्षणम्। अत एव तुलादिशब्देभ्यः प्रथमासिद्धिः। ननु लक्षणया साध्वित्यनुपपन्नं लक्ष्यार्थानामनियततया प्रातिपदिकजन्यनियतोपस्थितिकत्वस्य तत्रासत्त्वादत आह—लक्षणा चेति। तथा च यस्य पदस्य लक्षणया वाक्यार्थबोधजनकता तत्पदशक्यतावच्छेदकस्यारोपो लक्ष्ये आदौ भवतीति कल्पनीयम्। स चारोपो मुख्यार्थबाधज्ञानानन्तरमिति मुख्यार्थबाधज्ञानमस्याः कारणम्मुख्यार्थसम्बन्धग्रहश्च तथा लक्षणा च स्वरूपसती हेतुर्न तु शक्तिवज्जातौ, शाब्दबोधहेतुपदपदार्थसम्बन्धत्वस्यैव वृत्तित्वात्। गङ्गायाङ्घोष इति वाक्याद्गङ्गावृत्तिर्घोष इत्येव बोधः। तदुक्तङ्काव्यप्रकाशे—'मुख्यार्थबाधे तद्योगरूढितोऽर्थप्रयोजनात्। अन्योऽर्थो लक्ष्यते यत्सा लक्षणारोपिता क्रिया' ॥ इति। अत्र मुख्यार्थबाधादित्रितयं हेतुः। आरोपिता क्रिया=आरोपितो व्यापार इति तद्व्याख्यातारः। एवञ्च मुख्यार्थबाधज्ञानञ्च मुख्यार्थोपस्थितिसाध्यमिति मुख्यार्थस्य प्रथममुपस्थितिः पदादेव भवति तच्च पदं स्वार्थं एव प्रथमतः संस्कृतम्भवतीति पदे एव लक्षणा, 'सिंहो माणवकः' इत्यत्र मुख्यार्थस्य सिंहस्य क्रौर्यादयो ये गुणास्तत्सजातीयगुणानाम्माणवके दर्शनेन सिंहत्वस्य तत्रारोपो भवति। सिंह इति पदञ्च स्वप्रकृतिनिमित्तरूपप्रातिपदिकार्थे एव संस्कृतम्भवति यथा तथा द्रोणो व्रीहिरित्यादावपि। व्रीहौ द्रोणत्वारोपानन्तरं द्रोणाभिन्नो व्रीहिरित्याकारकबोधः। एवं एतेभ्य आरोपितद्रोणत्ववान्व्रीहिरित्याद्याकारक एव बोध इति केचित्, तन्न, कचतस्रस्यति वदनमित्यादिभ्यश्चमत्काराभावापत्तेः। एतेन द्रोणाभिन्नपरिमाणपरिच्छेद्यो व्रीहिरिति बोधोपपत्तये देवतार्थकतद्धितादिदृष्टान्तोपादानमयुक्तमिति ध्वनितम्। एवञ्च=प्रवृत्तिनिमित्ततदाश्रययोरेव प्रातिपदिकार्थपदेन ग्रहणस्य सिद्धौ च। अलिङ्गाः=अव्ययानि। लिङ्गप्रवृत्तिनिमित्तकाः=लिङ्गमेव प्रवृत्तिनिमित्तं येषान्ते, यथा स्त्री पुमान् नपुंसकमिति। अन्ये सर्वे=कृष्णः श्रीः ज्ञानमित्यादयः। उपलक्षणमिति। तेन यौतवन्द्रुवयम्पाय्यमित्यादिसङ्ग्रहः।

त्ययविशिष्टाश्च विधीयन्ते। तदर्थत्वञ्च ततो नियतोपस्थितिकत्वमेव।

नियतोपस्थितिकत्वमिति। तच्च प्रवृत्तिनिमित्त-तदाश्रयरूपम्। परिमा-

तद् ध्वनयन् = द्रोणाभिन्नपरिमाणपरिच्छेद्यो व्रीहिरिति रीत्या शाब्दबोधकृत-वैलक्षण्यानादरं ध्वनयन्। तद्वच्चेति। तज्जन्यनियतोपस्थितिकत्ववच्चेत्यर्थः। प्रवृ-

१ प्रवृत्तिनिमित्तत्वञ्च—वाच्यत्वे सति वाच्यवृत्तित्वे सति वाच्योपस्थितीयप्रकारतावत्त्वम्। घटत्वादौ घटपदवाच्यत्वस्य, घटरूपवाच्यवृत्तित्वस्य, घटपदवाच्योपस्थितीयप्रकारतावत्त्वस्य च सत्त्वात् प्रवृत्तिनिमित्तत्वं सिद्धम्। वाच्यत्वविशेषणदानेनाकाशपदवाच्यशब्दाश्रयत्वे नातिव्याप्तिः। नचोपस्थितीयप्रकारतावत्त्वे वाच्यत्वस्यापि नियतत्वेन शब्दाश्रयत्वस्य प्रवृत्तिनिमित्तत्वं दुर्वारमिति वाच्यम्, वाच्यपदेन शाब्दबोधविषयस्यैव ग्रहणेन आकाशपदेन स्वरूपत आकाशस्यैव शाब्दबोधस्य प्राचीनाभिमतत्वेन शक्तिज्ञानोपस्थित्योः प्रकारतया भानेऽपि वाच्यत्वाभावादिति शक्तिवादतो द्रष्टव्यम्। वस्तुतस्तु संसर्गानवगाहिज्ञानस्य शाब्दत्वाभावेन शब्दाश्रयत्वेनैवाकाशस्य भानम्। अत एव दीधितिकृता गुणटिप्पण्यां रूपग्रन्थे "अत्रेदं तत्त्वम्" इत्यादिना गोत्वादिना शब्दाश्रयत्वस्याविशेषं प्रतिपाद्य पक्षधरमिश्रकृतप्रकाशग्रन्थस्थप्रवृत्तिनिमित्तलक्षणे वाच्यत्वोपादानं दूषितमेव।

"व्यक्त्याकृतिजातयस्तु पदार्थः" इति (न्या० द० अ० २ आ० सू० ६७) न्यायसूत्रानुरोधेन गवादिपदवाच्यावयवसंयोगविशेषरूपाकृतावयवनिष्ठायां नातिव्याप्तिः, गोवृत्तित्वाभावात्। वाच्योपस्थितीयप्रकारतावत्त्वनिवेशात् हर्यादिपदवाच्याश्ववृत्तिहर्यादिपदवाच्येन्द्रादौ मृत्पदवाच्यघटादौ च नातिव्याप्तिः। वस्तुतस्तु स्वरूपकीर्तनमिदम्, आधाराधेयसम्बन्धस्य हरिपदवाच्यत्वाभावात्, वाच्यसम्बन्धेनैव वृत्तित्वनिवेशात्। नन्वेवं पुंस्त्वादिलिङ्गस्य विशेषणत्रयविशिष्टत्वात्प्रवृत्तिनिमित्तत्वापत्तिः। न चेष्टापत्तिः, लिङ्गग्रहणस्य वैयर्थ्यापत्तेः इति चेन्न, स्वविशिष्टत्वं स्वप्रवृत्तिनिमित्तत्वमिति परिष्कारेणादोषात्। वै० स्ववाच्यत्वस्ववाच्यनिष्ठविशेष्यतानिरूपितोपस्थितीयप्रकारतावत्त्वस्वप्रयोज्यधर्मितानिरूपितप्रकारतानवच्छेदकत्वत्रितयसम्बन्धेन। द्वितीयसम्बन्धदानात् पुंस्त्वादौ, तृतीयसम्बन्धोपादानात् पुंस्त्वत्वादौ च नातिप्रसङ्गः। नन्वेवं राजपुरुषवाच्यराजत्वे प्रवृत्तिनिमित्तत्वं न स्यात् पुरुषत्वावच्छिन्नधर्मितानिरूपितराजनिष्ठप्रकारतावच्छेदकत्वादिति चेन्न, तृतीयसम्बन्धस्थाने स्वविशिष्टप्रकारतानवच्छेदकत्वस्य निवेशेनाव्याप्तेरभावात्। वै० स्वप्रयोज्यधर्मितानिरूपितत्व—स्वनिष्ठवृत्तिज्ञानाधीनोपस्थितीयसंसर्गत्वाप्रयोज्यसंसर्गतानिरूपितत्वोभयसम्बन्धेन। एवञ्च राजपुरुषपदप्रयोज्यराजनिष्ठप्रकारताया उपस्थितीयस्वस्वामिभावसंसर्गत्वप्रयोज्यसंसर्गतानिरूपितत्वेन राजत्वस्य तादृशप्रकारतावच्छेदकत्वेऽपि उपस्थितीयसंसर्गत्वाप्रयोज्यसंसर्गतानिरूपितप्रकारताया अनवच्छेदकतया प्रवृत्तिनिमित्तत्वे बाधकाभावात्। नन्वेवमपि एवकारार्थान्ययोगत्वस्योपस्थितीयसंसर्गत्वाप्रयोज्याकाङ्क्षाभास्यप्रतियोगितानिरूपकत्वसंसर्गतानिरूपितान्ययोगनिष्ठप्रकारतावच्छेदकतया प्रवृत्तिनिमित्तत्वन्न स्यादिति प्रवृत्तिनिमित्ततदाश्रयातिरिक्तान्ययोगत्वस्य बोधकतया एव शब्दात् प्रथमा न स्यादिति चेन्न, एवपदस्य अन्ययोगे व्यवच्छेदे च खण्डशः शक्तिस्वीकारेऽपि सर्वपदार्थे एव अन्यसम्बन्धस्य सत्त्वेन अन्ययोगव्यवच्छेदाप्रसिद्धिरेव स्यादिति भेदे पार्थादेः प्रतियोगितयाऽन्वयं कृत्वा पार्थप्रतियोगिकभेदत्वप्रतियोगिकतादात्म्यसम्बन्धाभाववान् धनुर्धर इति 'पार्थ एव धनुर्धर' इत्यनेन बोधात्। स्वविशिष्टप्रकारतायाः स्वेतरप्रातिपदिकप्रतिपाद्यतावच्छेदकधर्मानवच्छिन्नाया एव ग्रहणात्। अन्ययोगनिष्ठप्रकारता च स्वेतरप्रातिपदिकार्थपार्थत्वेन परम्परयावच्छिन्नैवेति न दोषः। तथा च स्वविशिष्टत्वं स्वप्रवृत्तिनिमित्तत्वं लब्धम्। वै० स्ववाच्यत्व-स्ववाच्यनिष्ठ

एवं च मृडानीत्यादौ पुंयोगमहत्त्वादेरपि ङ्यन्तान्नियतभानेन प्रथमा
सिद्ध्यतीति अपरमनुकूलम् । यथान्यासे तु सा न स्यात् । यदि तु

वाञ्च प्रातिपदिकांशे । लिङ्गप्रत्ययविशिष्टांशे तु लिङ्गमहत्त्वादिकं च ततो
नियतोपस्थितिकमिति तत्सर्वं तदर्थत्वेन गृह्यते । लिङ्गोदाहरणं तटस्त-
टमिति बोद्ध्यम् । अकारान्तप्रातिपदिकात्कस्यापि नियमेनानुपस्थिते-
स्तस्य तदर्थत्वाभावात् । सा न स्यादिति । न च लिङ्गविशिष्टपरिभाषया
सिद्धिः, यथान्यासे प्रातिपदिकार्थशब्देन प्रवृत्तिनिमित्ततदाश्रययोरेव ग्रह-
णेन लिङ्गग्रहणेन तन्मात्राधिक्यस्यैव ग्रहणेन हिमानीत्यादौ महत्त्वस्याधि-
क्यसत्त्वेन तदसिद्धिरित्याशयात् । द्रोणादिशब्देभ्यः परिमाणस्यापि निय-
तोपस्थित्या तदपि तदर्थ एवेति तेभ्यः प्रथमासिद्धिः । परिमाणग्रहणस्य
मूलोक्तार्थकत्वे तु तथा बोधार्थं तस्यावश्यकत्वेनैतावदेव सुवचमित्युक्ते-

त्तनिमित्ततदाश्रयरूपलिङ्गस्याप्युपलक्षणम् , तेन यत्र दारानित्यादौ लिङ्गस्यापि निय-
मेन प्रातिपदिकजन्यनियतोपस्थितिकत्वन्तत्र प्रातिपदिकार्थे प्रथमेत्यनेनैव प्रथमा-
सिद्धिः । परिमाणग्रहणस्यानावश्यकत्वं स्पष्टयति—परिमाणञ्चेति । प्रातिपदिकांश
इत्यस्य नियतोपस्थितिकमित्यत्रान्वयः । यदि कृष्णादिशब्दजन्योपस्थितौ लिङ्गस्यापि-
नियमेन भानन्तदा तेभ्योऽपि प्रातिपदिकार्थ इत्येव सिद्धमित्याशयेनाह—लिङ्गप्रत्ययेति ।
यत्र लिङ्गबोधकप्रत्ययविशिष्टाद्रमागौरीत्यादेर्लिङ्गमात्रमधिकं बुध्यते, तत्र तावन्मा-
त्रस्य । यत्र तु पुंयोगमहत्त्वादिकमपि यस्मात्प्रथमा विधीयते तज्जन्यनियतोपस्थितिक-
मिति, तत्रापि तावन्मात्रेणैव प्रथमायाः सिद्धिरिति भावः । ननु लिङ्गग्रहणन्तर्हि व्यर्थ-
मेव स्यात्तत्राह—लिङ्गोदाहरणमिति । अत्र किमपि लिङ्गन्न प्रातिपदिकजन्यनि-
यतोपस्थितिकमिति लिङ्गग्रहणेनैव तादृशेभ्यः प्रथमासिद्धिः । मूले यथान्यास इति ।
प्रातिपदिकपदघटितन्यास इत्यर्थः । लिङ्गग्रहणेनेति । मात्रपदसहितेनेति शेषः ।
अर्थे लिङ्गे चेत्येतावन्मात्रोपादानेऽपि यथान्यासे यत्परिमाणग्रहणोपादानस्य फलन्तद-
न्यथासिद्धमित्याशयेनाह—द्रोणादिशब्देभ्य इति । प्रथमासिद्धिरिति । एवञ्च
परिमाणग्रहणमनर्थकमिति शेषः । तथाबोधार्थम्=द्रोणाभिन्नपरिमाणपरिच्छेदो

विशेष्यतानिरूपितप्रकारतावत्त्व–स्वविशिष्टस्वेतरप्रातिपदिकप्रतिपाद्यतावच्छेदकधर्मानवच्छिन्नप्रकारतान-
वच्छेदकत्वोभयसम्बन्धेन । सम्बन्धघटकवैशिष्ट्यञ्च प्रकारतायाम् स्वप्रयोज्यधर्मितानिरूपितत्व-स्वनिष्ठ-
वृत्तिज्ञानाधीनोपस्थितीयसंसर्गतानिरूपितत्वोभयसम्बन्धेन । स्ववाच्यत्वनिवेशात् 'घटो द्रव्यपदवाच्यः'
इति घटत्वोपलक्षितशक्तिज्ञानजन्योपस्थितीयप्रकारतावति घटत्वादौ द्रव्यपदप्रवृत्तिनिमित्तत्वाभाव
इत्यन्यत्र विस्तरः ।

अर्थशब्दो वृत्तिविषयपरः । वृत्तिस्तु शक्तिर्लक्षणा च । गौणी तु लक्षणान्तर्भूता, पृथग्वास्तु । त्रिकं प्रातिपदिकार्थ इत्याश्रीयते, तदा लिङ्गेऽप्यपि मास्तु लक्ष्याणां विचित्रत्वेऽपि न क्षतिः, नियमांशत्या-

रसङ्गतिः स्पष्टैव । लक्षणा चेति । इदं च स्वरूपकथनं न तु प्रकृतोपयोगि, पदस्य स्वार्थे एवान्वाख्यातस्य पदान्तरसमभिव्याहारे लक्षणेति सिद्धान्तात् । लक्षणान्तर्भूतेति । सादृश्यसम्बन्धमूलकलक्षणाया एव गौणीत्वमिति भावः । पृथग्वेति । मीमांसकरीत्येदम् । त्रिकम्=स्वार्थ-द्रव्य-लिङ्गानि । इत्याश्रीयते इत्यनेन सूत्रारम्भेऽस्यानाश्रयणं ध्वनितम् । एवञ्च लिङ्गस्यापि 'स्वमोर्नपुंसकात्' इत्यादिशास्त्रबलेन प्रातिपदिकार्थत्वात् तत्रापि सिद्धिरिति भावः । विचित्रत्वेऽपीति । क्वचिल्लिङ्गस्य नियमेन भानं क्वचिदनि-

व्रीहिरित्येतादृशबोधार्थम् । स्पष्टैवेति । एवञ्च मूलं यथाश्रुतसूत्राशयवर्णनपरमिति भावः । मूले यदि त्वित्यादिना । लिङ्गग्रहणमपि न कार्यमिति प्रतिपादितन्तत्र पूर्वलक्षणारम्भपक्षे शक्यार्थस्यार्थपदेन ग्रहणन्नियमांशस्य प्रवेशो द्विकञ्च प्रातिपदिकार्थ इति पक्षः, तदा लिङ्गग्रहणङ्कर्तव्यम् । यदि नियमांशस्य त्यागस्त्रिकम्प्रातिपदिकार्थ इति पक्षोऽर्थशब्दश्च वृत्तिविषयसामान्यपर इति पक्षस्तदा लिङ्गग्रहणन्न कार्यमिति प्रतीयते इति यत्केनचिदुक्तंतदाशयाज्ञानेनेति ध्वनयन्नाह—इदमिति । इदम्= लक्षणाया वृत्तिशब्दप्रतिपाद्यत्वप्रदर्शनम् । प्रकृतोपयोगित्वाभावन्दर्शयति—पदस्येत्यादिना । स्वार्थे=प्रवृत्तिनिमित्ततदाश्रयरूपे पदान्तरसमभिव्याहारे स्वार्थान्वयित्वेनाभिप्रेतो योऽर्थस्तद्वाचकसमभिव्याहारे मुख्यार्थबाधग्रहसत्त्वे चेति शेषः । इति सिद्धान्तादिति । तथा च पदसंस्कारवेलायां लक्षणाया अवसर एव नास्तीति लक्षणाया गौण्याश्च वृत्तिशब्दवाच्यत्वव्यवस्थापनम्प्रकृतानुपयुक्तमिति भावः । मूलकेति । लक्षणा न शक्यसम्बन्धरूपा, किन्तु शक्यार्थसम्बन्धज्ञानोत्तरञ्जायमानो यः शक्यतावच्छेदकारोपस्तद्रूपा, तत्र पूर्वकालिकसम्बन्धग्रहविषयः सम्बन्धो यदि सादृश्यरूपस्तदोत्तरकालिकारोप एव गौणीत्वेन व्यवह्रियते । यदा त्वन्यस्तदा लक्षणेत्येव व्यवहार इति भावः । मीमांसकरीत्येति । अभिधायाः पदार्थान्तरत्ववत्तदुपपत्तिज्ञानोत्तरं जायमानज्ञानविषयस्यापि पदार्थान्तरत्वमिति तेषामपि मते लक्षणाया मुख्यार्थबाधादिकन्नियामकमस्ति । तत्र यदि सादृश्यात्मकसम्बन्धज्ञानम्पूर्वम्भवति तदा गौणीव्यवहारः अन्यदा शुद्धेति । स्वार्थः=प्रवृत्तिनिमित्तम् । अस्य=त्रिकपक्षस्य । एतेन सूत्रारम्भे द्विकपक्षमाश्रित्यैव लिङ्गग्रहणस्य सत्त्वात्तदा प्रातिपदिकार्थपदेन प्रवृत्तिनिमित्ततदाश्रययोर्ग्रहणमिति यत्तन्मूलकाराभिप्रेतमेवेति ध्वनितम् । एवञ्च=अर्थशब्दमात्रस्योपादाने च, शास्त्रबलेनेति । नपुंसकशब्दस्य नपुंसकाभिधायकशब्दपरतया लिङ्गस्य

गात्। तथा च अर्थे प्रथमेत्येव सारम्। द्रोणो व्रीहिरित्यपि द्रोणश-ब्दस्य तत्परिमिते उपचारात्सिद्धम्। 'गौर्वाहीकः' इतिवत्। एको द्वावित्याद्यपि न केवला प्रकृतिः प्रयोक्तव्येति निषेधादेव सिद्धम्। अनन्वितार्थकप्रयोगापेक्षयाऽनुवादकमात्रप्रयोगस्य न्याय्यत्वात्। एवं

यमेनेत्येवं विचित्रत्वेऽपीत्यर्थः। तदाह—नियमांशेति। नियतोपस्थितिक इत्यत्र नियमांशेत्यर्थः।

इत्येव सारमिति। प्रातिपदिकग्रहणस्य सूत्रोपक्रमे संख्याविद्ध्यर्थक-वाक्यतयाऽव्ययेभ्योऽप्राप्त्या तेभ्यो विधानार्थत्वं वदता 'तद्धितश्चा-सर्वविभक्तिः' 'बहुषु' इत्यादिसूत्रेषु अव्ययेभ्यः प्रकारान्तरेण विभक्ति-साधयता प्रातिपदिकग्रहणं प्रत्याख्यातं भाष्यकृता। स्वादीनां प्रातिपदि-कादेव विधानेन कस्यार्थे इत्याकाङ्क्षया यस्मात्स्वादिर्विहितस्तदर्थे इत्यस्य लाभ इति भावः। उपचारात्=द्रोणत्वारोपात्। इतिवदिति। अत्र यथा वाहीके गोत्वारोपस्तद्वत्। वचनग्रहणप्रत्याख्यानोपायमाह—एक इत्यादि। एतत् 'अनभिहिते' इति सूत्रे भाष्ये स्पष्टम्। न्याय्यत्वादिति। इदं च यथान्यासेऽप्यावश्यकम्। अन्यथा एकादिषु वचनविपर्ययो दुर्वार

ननु प्रकृतसूत्रभाष्ये कस्यापि पदस्याप्रत्याख्यानात्तदुक्त्या यद्यपि प्रातिपदिका-दिपदानामनावश्यकत्वस्य लाभस्तथापि तेषामप्रत्याख्यानम्भाष्यविरुद्धमत आह—प्रातिपदिकग्रहणस्येति। सूत्रोपक्रमे=सूत्रार्थकथनप्रारम्भे। पुरतोग्रे प्रातिपदि-कग्रहणस्येत्यस्य विधानार्थत्वमित्यत्रान्वयः। 'द्व्येकयोर्द्विवचनैकवचने' इति सूत्रै-कवाक्यतया अर्थे प्रथमेत्यस्य एकत्वे द्वित्वे बहुत्वे चैकवचनादीत्यर्थे प्रत्ययनियमपक्षे-ऽव्ययेभ्यः प्राप्तावप्यव्ययेभ्यस्तेषामप्राप्त्या तेभ्य प्रथमासिद्ध्यर्थंप्रातिपदिकग्रहणं विध्य-र्थमित्यर्थः। प्रकारान्तरेण=एकत्वादावेकवचनमेवेत्यादिरीत्याऽर्थनियमेन। प्रत्याख्या-तम्=तत्फलस्यान्यथासिध्या प्रत्याख्यातप्रायम्। आरोपादिति। एवञ्च यस्यारोपवि-षयता तद्धर्मप्रकारिका प्रतीतिः शाब्दबोधरूपा भवतीति प्रत्याख्यानम्भाष्यसम्मतमेवेति भावः। भाष्ये स्पष्टमिति। तत्र हि—एको द्वावित्यादौ प्रातिपदिकोक्तत्वाद्विभक्तिर्न स्यादि-त्याशङ्क्य अर्थतः समयाद्वविष्यतीत्युक्त्या भगवता वचनग्रहणमपि प्रत्याख्यातप्रायमेव। अर्थत इत्यस्यानुवादकविभक्तेर्न्याय्यत्वमित्यर्थं इति कैयटः। इदम्=अनन्वितार्थकेति-युक्तेराश्रयणम्। यथान्यास इति। वचनग्रहणस्य सत्त्वे। अन्यथा=तस्यानादरे, दुर्वार यस्मात्स्वादयो विधीयन्ते तदर्थत्वेन सूत्रे लिङ्गपदाभावेऽपि न क्षतिरिति भावः। क्वचित् 'कृष्णः' 'श्रीः' 'ज्ञानम्' 'गौरी' 'मृडानी' 'दाराः' इत्यादौ। क्वचित्=तटस्तटी तटमित्यादौ। तदाह—तदभिप्रायेणाह। तदर्थत्वन्तज्जन्यबोधविषयत्वमात्रन्तच्च सर्वसाधारणम्।

एवं मात्रग्रहणमपि व्यर्थम्, 'सम्बोधने च' इति ज्ञापकेन कर्माद्याधिक्ये प्रथमाया अप्रवृत्तेः ।

---

स्यादिति भावः । ज्ञापकेनेति ।

ननु प्रातिपदिकार्थ एवेति नियमात्तदाधिक्येऽप्राप्तौ किं ज्ञापकेनेति चेन्न, यथा कर्मण्येव द्वितीयेति नियमेन कर्मत्वाभावसमानाधिकरणार्थान्तरस्यैव व्यावृत्तिर्न तु तत्समानाधिकरणार्थान्तरस्य । अत एव 'गां दोग्धि पयः' इत्यादावपादानत्वादिशक्तिबोधेऽपि द्वितीया भवति, तथा प्रातिपदिकार्थाभावसमानाधिकरणार्थान्तरस्यैव व्यावृत्तिः स्यान्न तु तत्स-

---

इति । सङ्ख्यामात्र इत्यनेन विधीयमाना प्रथमा एकादिशब्देभ्यो वचनवैपरीत्येनापि स्यादिति भावः । मूले सम्बोधने चेतीति । अर्थे प्रथमेति प्रथमा सम्बोधनाधिक्येऽपि भविष्यतीति तस्य सूत्रस्य वैयर्थ्ये तस्य ज्ञापकत्वमित्यर्थः । नच तेन सूत्रेण प्रथमायां सामन्त्रितमित्यामन्त्रितसञ्ज्ञा भवति तस्य सूत्रस्याभावे उद्देश्यतावच्छेदकरूपापरिचयात्कथन्तन्निर्वाह इति वाच्यम् , सम्बोधने आमन्त्रितमित्येकयोगः कार्यः, प्रथमेत्यस्यानुवृत्तिश्च, सम्बोधने या प्रथमा तदन्तमामन्त्रितमित्यर्थः । महासञ्ज्ञाकरणेन प्रत्ययग्रहणेऽपि तदन्तविधिः । एवञ्च योगविभागो व्यर्थ इति तत्सामर्थ्येन ज्ञापकत्वमित्यर्थः ।

अत्र केचित् 'स्वौजसमौडि' ति सामान्यसूत्रेण सिद्धेऽर्थ इत्येतन्नियमार्थम्प्रातिपदिकार्थे एव प्रथमेति । तेन प्रथमाया अर्थान्तरसम्बन्धनिवृत्त्या कर्मसम्बन्धाभावे सिद्धे योगविभागकरणस्य ज्ञापकत्वाश्रयणमयुक्तमिति तन्मतमनूद्य दूषयति—नन्वित्यादिना । अर्थ इति सूत्रवत्कर्मणीत्याद्यपि सूत्रन्नियमार्थमिति तत्र प्रत्ययनियमपक्षे व्यवस्था तथैवात्रापि स्यादित्याशयेनाह—यथा कर्मण्येवेति । कर्मत्वाभावसमानाधिकरणस्य=कर्मत्वशक्तिप्रकारकज्ञानासमानाधिकरणशक्त्यन्तरप्रकारकज्ञानविशेष्यस्य, न त्विति । कर्मत्वज्ञानसमानाधिकरणशक्त्यन्तरज्ञानविषयस्य न व्यावृत्तिरित्यर्थः । सामानाधिकरण्यञ्चैककालावच्छिन्नैकाधिकरणवृत्तित्वसम्बन्धेन, तत्रार्थे 'आकडारादेका' इति सूत्रस्थभाष्यं मानमित्याह—अत एवेति । उक्तनियमादेवेत्यर्थः । द्वितीया भवतीति । "अपादानमुत्तराणि कारकाणि गान्दोग्धि पय इत्यत्र परत्वात्कर्मसञ्ज्ञे"ति भाष्यमत्र मानमिति शेषः । अपादानत्वादिशक्तिबोधेऽपीति । विभागानुकूलव्यापारो दुहेरर्थः । गोर्विभागावधित्वादपादानत्वम्प्राप्तम्प्रधानीभूतव्यापारप्रयोज्यविभागाश्रयत्वात्कर्तुरिति कर्मत्वम्प्राप्तमुभयविवक्षा च, तत्र कर्मसञ्ज्ञायाः परत्वात्सैव भवति । तत्र शक्तिद्वयज्ञानयोः सत्त्वेऽपि न नियमेनोक्तरीत्या व्यावृत्तिरिति भावः । यथा अत्र सूत्रे नियमस्तथा प्रातिपदिकार्थसूत्रेऽपि स्यादित्याह—तथेति । अत्र हि प्रातिपदिकार्थसत्त्व एव प्रथमा, न तु तद्भिन्नसत्त्वे इत्याकारको नियमः स्यात् । तेन यस्य व्यावृ-

यत्तु प्राचोक्तम्-प्रातिपदिकार्थः सत्तेति । यच्च व्याख्यातं योऽर्थः सन्नेव केवलं भासते न जात्यादिरूपो न लिङ्गसंख्याकारक-

---

स्त्वे एव कर्मत्वादेरिति भावः। न च प्रातिपदिकार्थाभावसमानाधिकरणार्थान्तरस्याप्रसिद्ध्या नियमव्यावर्त्याप्रसिद्धिरिति नियमसामर्थ्यात्तत्समानाधिकरणार्थान्तरस्यापि तेन व्यावृत्तिरिति वाच्यम्, प्रातिपदिकार्थे एव प्रथमा न तु निरर्थके इति तद्व्यावृत्तेरेव फलत्वात्। तत्सत्त्वे तु कर्मादियोग्यार्थकप्रातिपदिकाच्चेत्तद्रहितस्वार्थे इत्यर्थान्न दोषः। संख्याधिक्ये तु भवत्येव 'द्व्येकयो' रित्यादिभिरस्यैकवाक्यत्वात्। वार्त्तिककृता तु अर्थनियममाश्रित्य मात्रग्रहणं 'सम्बोधने च' इति सूत्रं लिङ्गादिग्रहणं च प्रत्याख्यातमिति दिक्।

जात्यादिरूप इति। जात्यादिना रूप्यत इति व्युत्पत्त्या जात्यादिधर्मवि-

---

त्तिस्तमाह-प्रातिपदिकार्थत्वाभावेति। तत्सत्त्वे=प्रातिपदिकार्थत्वसत्त्वे, इति भाव इति 'सम्बोधने च' इत्यस्य ज्ञापकत्वं वर्णयतो भाव इत्यर्थः। तत्समानाधिकरणेति। प्रातिपदिकार्थत्वसमानाधिकरणेत्यर्थः। अपिरेवार्थः। अर्थान्तरङ्कर्मत्वादिप्रत्ययनियमपक्षे तादृशनियमसामर्थ्यादन्ययोगव्यवच्छेदेन कर्मत्वाद्याधिक्य इव सम्बोधनाधिक्येऽपि सा न स्यादिति 'सम्बोधने च' इति सूत्रं विध्यर्थङ्कार्थमिति भावः। सजातीयापेक्षोऽत्र नियमः स्यादित्याशयेनाह-प्रातिपदिकार्थ एवेति। न च निरर्थकाप्रसिद्धिः। चवैतुहीत्यादिपादपूरणार्थानामनर्थकनिपातानाञ्च सत्त्वात्। न चेष्टापत्तिः, धार्मिकोऽसि वै त्वा सुखम्प्राप्नोतीत्यादौ 'सपूर्वायाः प्रथमाया विभाषे'त्येतत्प्राप्तेरेव फलत्वात्। तत्सत्त्वे तु=ज्ञापकसत्त्वे तु, न दोष इति। अनर्थकेभ्यः प्रथमाया अप्राप्तिरूपो दोषो नेत्यर्थः। ननु पूर्वोक्तनियमस्वीकारे पञ्चकम्प्रातिपदिकार्थ इति पक्षे सङ्ख्याधिक्ये प्रथमा न स्यादत आह-सङ्ख्याधिक्य इति। एकवाक्यत्वादिति। एकत्वादिविशिष्टे प्रातिपदिकार्थे कर्मत्वादियोग्यार्थकप्रातिपदिकाच्चेदित्येवन्नियमादिति भावः। अर्थनियममिति। प्रातिपदिकार्थे प्रथमैव न द्वितीयादीत्येवंरूपोऽर्थनियममित्यर्थः। तदानीं विभक्त्यन्तरस्य व्यावृत्तिर्न स्वर्थान्तरसम्बन्धस्येति सम्बोधने लिङ्गाधिक्ये च प्रथमा भविष्यति कर्मत्वाद्याधिक्ये तु कर्मादौ द्वितीयाद्येवेत्येवंरूपनियमार्थङ् "कर्मणि द्वितीया' इत्यादिसूत्रमिति द्वितीयाद्येव भवति। दिगिति। दिगर्थस्तु यद्यपि प्रत्ययनियमः सूत्रकारसम्मतस्तथाप्यर्थनियमपक्षे लाघवमित्ययमेव युक्त इति। मूले सन्नित्येव केवलमिति। सन् वर्तमान इत्याकारा या प्रतीतिस्तद्विषयो भवति।

केवलपदार्थमाह-न जात्यादिरूप इति। अत्रैव पदादिपदन्तद्बोध्यार्थमाह-

योगी स विवक्षितः। यथाऽव्ययार्थः। अव्ययार्थो हि केवलमस्तीति शक्यते वक्तुं न पुनरीदृशस्तादृश इतीति चेन्न, उच्चैर्नीचैरित्यादिशब्दानां सत्त्वित्याकारकप्रतीतिजनकत्वस्य सर्वतन्त्रविरुद्धत्वात्। अस्त्यादिसामानाधिकरण्यस्यापि असत्त्वार्थकेषु दुर्लभत्वात्, न लिङ्गसंख्याकारकयोगीति त्वदुक्तिविरोधाच्च। पदान्तरोपस्था-

शिष्ट इत्यर्थः। ननूच्चैरादीनामप्याधारतात्वविशिष्टाधारताशक्तिर्वाच्येति तदप्रसिद्धिरित्यतस्तत् व्याचष्टे—न लिङ्गेति। ईदृशस्तादृश इति। अमुकलिङ्गादिरित्यर्थः। ननु सत्त्वित्याकारकप्रतीत्यभावेऽपि अस्तिसामानाधिकरण्यं स्यादत आह—अस्त्यादीति। विरोधाच्चेति। सत्त्वित्यनेन सामानाधिकरण्ये

न लिङ्गसङ्ख्याकारकेति। तत्र न जात्यादिरूप इत्यस्य न जात्यादिस्वरूप इत्यर्थोऽपि सम्भाव्येत। न चेष्टापत्तिः, सत्त्वित्येव केवलमित्यनेन विरोधात्। तादृशप्रतीतिविषयस्य जातिस्वरूपत्वानपायादत आह—जात्यादिनेति। तथा च वर्तमानत्वमाधेयत्वन्धर्मिणि सत्ता तथा सङ्गासते इत्येव विवक्षितम्। धर्मी तु न धर्मिणि स तथा भासते इति तद्व्युदास इति भावः। ननु जात्यादीत्यत्रादिनाऽखण्डोपाधेरपि ग्रहणं स्यात्तथा सर्वस्यैव जात्यादिविशिष्टधर्मिरूपतया लक्ष्याप्रसिद्धिरित्याशयेनाह—ननूच्चैरादीनामिति। तद्व्याचष्ट इति। सत्त्वित्येतत्पदं व्याचष्ट इत्यर्थः। एवञ्च जात्यादिपदं लिङ्गादेरुपलक्षणम्। लिङ्गादिविशिष्टोऽर्थो यो न भवतीत्यत्र तात्पर्यमिति भावः। न जात्यादिरूप इत्यस्य न लिङ्गादिविशिष्ट इत्येवार्थ इत्येतद् ध्वनयति मूले—अव्ययार्थो हीत्यादिना। अमुकलिङ्गादिरित्यत्रादिना संख्यायाः परिग्रहः। अव्ययार्थः स्त्रीलिङ्गः पुंलिङ्गो नपुंसकलिङ्गः एकत्वादियुक्त इत्येवं वक्तुं न शक्यते। इत्यर्थ इति—इति तात्पर्यार्थः, सत्त्वित्येव केवलम्भासते इत्यस्य प्रातिपदिकजन्या या सत्त्वित्याकारिका प्रतीतिस्तद्विषय इति अस्तिसामानाधिकरण्येन यो भासते इत्यर्थो वा, तत्र नाद्य इत्याह—मूले उच्चैर्नीचैरित्यादीति। न द्वितीया इत्याह—अस्त्यादीति। दुर्लभत्वादिति। यदि अस्तिसामानाधिकरण्यन्तदा कारकत्वं सम्पन्नमित्यसत्त्वार्थकत्वस्यैव हानिः स्यादिति भावः। ननु नास्तिसामानाधिकरण्यमात्रेणासत्त्वार्थकत्वस्य हानिः स्वरादिषु स्वोऽस्ति स्वः पश्येत्यादिदर्शनात्तेषामप्यस्तिसामानाधिकरण्यस्य सुलभत्वादत आह—न लिङ्गसंख्येति। यद्यस्तिसामानाधिकरण्यन्तदा तदर्थस्य कारकत्वमिति न लिङ्गेत्याद्युक्तिविरोधः स्पष्ट एव। एवम्प्रकारेण स्वरादीनामस्तिसामानाधिकरण्यस्य वक्तुं शक्यत्वेऽपि चवाशब्दयोरुच्चैरादिशब्दानामधिकरणशक्तिप्रधानानामस्तिसामानाधिकरण्यन्दुरुपपादमित्यपि बोध्यम्। ननु तैः प्रतिपादिता येऽर्थास्ते यदा समुच्चयविकल्पाधिकरणा-

पितस्य अस्तिसामानाधिकरण्यमस्तीति चेन्न, तस्य अव्यावर्तकत्वात्, न पुनरित्यादिवाक्यशेषविरोधाच्च। कृष्णः श्रीरित्यादावव्याप्तेश्च। न च लिङ्गग्रहणात्तत्सिद्धिः, मात्रशब्देनाधिकव्यवच्छेदात्।

यदपि प्राचा व्याख्यातम्—यत्रार्थान्तरानपेक्षया शब्दप्रवृत्तिः स सर्वः प्रातिपदिकार्थः, शब्दप्रवृत्तिनिमित्तमिति यावत्। यथा उच्चै-र्नीचैरिति अलिङ्गसंख्यावेतौ केवलं जात्यादिनिरपेक्षम् स्वार्थमाहतु-रिति तदपि न, प्रवृत्तिनिमित्तमिह प्रकारीभूय भासते तथा च

कारकत्वस्य दुर्वारत्वादिति भावः। वाक्यशेषविरोधाच्चेति। तत्सत्त्वे लिङ्गा-देरपि सम्भवेन तद्विरोध इति भावः। अव्याप्तेश्चेति। ततः सन्नित्याकारक-प्रतीतेरभावादिति भावः। अधिकव्यवच्छेदादिति। कृष्णत्वादेः सत्तालिङ्गा-भ्यामधिकस्य भानादिति भावः।

अलिङ्गेति। अलिङ्गसंख्यावेतौ केवलमनाश्रितं निरपेक्षं लिङ्गादिनिरपेक्षं

दिपदैः प्रतिपादिता भवन्ति तदाऽस्तिसामानाधिकरण्यमस्त्येवेत्यस्तिसमानाधिकरणार्थ-प्रतिपादकत्वं सर्वत्र सुलभमत आह—पदान्तरोपेति। तस्य = पदान्तरोपस्थितिमा-द्रायास्तिसामानाधिकरण्यस्य। अव्यावर्तकत्वादिति। सर्वत्रैव तस्य सत्त्वेन व्यावर्तक-त्वाभावात्। तत्सत्त्वे=पदान्तरोपस्थापितस्य तस्यास्तिसामानाधिकरण्यसत्त्वे। लिङ्गा-देरपीति। गृहस्योच्चैः पताकाऽस्तीत्यस्यार्थस्य विवरणे ऊर्ध्वदेशेऽस्तीत्यादौ ऊर्ध्वदेश-निष्ठाधिकरणतायाः प्रतिपादक उच्चैः शब्द इत्यादौ च पदान्तरोपस्थिताधिकरणतायां लिङ्गसङ्ख्ययोः सम्भवेनेत्यर्थः। ननु यदि प्रादिपदिकार्थं इत्यस्याव्ययान्येवोदाहरणानि तदा कृष्ण इत्यादीनि कस्योदाहरणानि प्रातिपदिकार्थं इत्यस्य, लिङ्ग इत्यस्य वा, तत्र नाद्यस्येत्याह मूले—कृष्ण इत्यादि। अव्याप्तिमुपपादयति—तत इति। योऽर्थः सन्नित्येव केवलम्भासत इत्यस्य यतः सन्नित्याकारा प्रतीतिर्भवति तस्य प्रातिपदिका-र्थत्वमेत्यत्र प्रातिपदिकपदेन ग्रहणादिति भावः। न द्वितीयस्येत्याह—मूले न च लिङ्ग-ग्रहणादिति। कृष्णत्वादेरिति। भवदुक्तव्याख्यानेन प्रातिपदिकार्थपदस्य सत्ता-बोधकतया लिङ्ग इत्यस्य सत्तापेक्षया लिङ्गमात्रं यत्राधिकम्भासत इत्येवं वचननिष्प-त्तिर्भवदुक्तरीत्या स्यात्। तथा च कृष्णत्वादेरधिकस्य तज्जन्यबोधे भानेन तेष्वव्याप्ति-रिति भावः।

ननु प्रातिपदिकार्थः सत्तेत्यत्र सत्तापदम्प्रवृत्तिनिमित्तस्यैव बोधकन्न तु तद्भिन्न-सत्ताबोधकमिति न भवदुक्तो दोष इत्यर्थमनूद्य दूषयति मूले—यदपि प्राचेति। जात्यादीति। आदिनोपाधिपरिग्रहः, तथाचोच्चैरादीनामूर्ध्वदेशनिष्ठाधारतावृत्त्या-

तन्मात्रबोधोऽसम्भवी । यदि सोऽपीष्टस्तर्हि घटादिशब्देभ्योऽपि स्यादिति संख्याकारकाद्यनन्वय एव स्यात् ।

यदपि द्रोणपरिमिते व्रीह्यादौ द्रोणशब्दः सोऽयमित्यभिसम्बन्धात्प्रवर्तते तत्र गौणमुख्यन्यायान्न प्राप्नोतीति परिमाणग्रहणमिति, तन्न, पदकार्येष्वयं न्यायो न प्रातिपदिककार्येष्विति सिद्धान्तात्, अन्यथा 'सिंहो माणवकः' इत्याद्यसिद्धिप्रसङ्गाच्च ।

---

स्वार्थं जात्याद्याहतुरित्यन्वयः । असम्भवीति । प्रकारताया विशेष्यतानिरूपितत्वात् । कारकादीत्यादिना लिङ्गम् ।

सिद्धान्तादिति । ओत्सूत्रे कैयटे स्फुटमेतत् । इदमेव युक्तं विशिष्टरूपो-

---

धारतात्वात्मकप्रवृत्तिनिमित्तप्रतिपादकतया नाव्याप्तिरित्याशयः । इत्यन्वय इत्यनेन जात्यादीति निरपेक्षमिति च भिन्ने पदे इति ध्वनितम् । प्रवृत्तिनिमित्तमात्रं यज्जन्यबोधविषयो भवतीत्यर्थः स्यात् तथा चासम्भव इत्याशयेन दूषयति मूले–प्रवृत्तिनिमित्तं हीति । तन्मात्रबोधासम्भवमुपपादयति–प्रकारताया इति । नच प्रातिपदिकजन्यनिर्विकल्पके प्रवृत्तिनिमित्तमात्रस्य भानं स्यादिति वाच्यम्, प्रातिपदिकजन्यज्ञानस्य स्मृतिरूपता शाब्दबोधरूपता वोभयथाऽपि विशेष्यविशेषणोभयविषयकत्वस्यानपायादिति भावः ।

कैयटे स्फुटमिति । तत्र भाष्यकृता ध्वनितङ्कैयटेन प्रकटीकृतमित्यर्थः । तत्र भाष्ये अनदः अदः समभवत् अदोऽभवदित्यत्र प्रगृह्यत्ववारणाय वार्तिककृता 'ओतश्चिवप्रतिषेधः' इत्युक्तन्तस्य लक्षणप्रतिपदोक्तपरिभाषया सिद्धमित्यनेन प्रत्याख्याने एवमप्यगौगौः समभवद्गोभवदित्यत्र प्राप्नोतीति शङ्कायां गौणमुख्यन्यायेन समाधाने कृते कथन्तर्हि वाहीके वृद्ध्यात्वे भवत इति परेण शङ्किते अर्थाश्रये एतदेवम्भवति शब्दाश्रये च वृद्ध्यात्वे, इति समाहितम् । एतेन यत्रार्थविशेषपुरस्कारेण कार्यं विधीयते तत्र मुख्यार्थः प्रथमम्बुध्यारूढो भवति । गौणार्थप्रतीतिस्तु पदान्तरसम्बन्धवेलायामिति पदकार्यविषयकत्वमस्य न्यायस्येति ध्वनितम् । कैयटेन तु स्पष्टतयैवोक्तम् ÷ अर्थाश्रय इत्यस्य लौकिकार्थवत्त्वयोग्यपदाश्रय इत्यर्थः । मूले सिद्धान्तादित्यनेन यत्र तस्य न्यायस्य प्रवृत्तियोग्यता तत्र तेन न्यायेन कार्यनिष्पत्तिर्वाच्या । वस्तुतस्तु प्रकृते तत्प्रवृत्तियोग्यतैव नेति ध्वनितन्तदेतत्स्पष्टयति–इदमेवेति । इदमेव = गौणमुख्यन्यायाविषयत्वमेव । युक्तत्वे हेतुमाह–विशिष्टेति । अर्थबोधकतावच्छेदकानुपूर्वीविशिष्टेत्यर्थः । गौणमुख्येति न्यायोऽर्थवद्ग्रहणपरिभाषामूलकः, सा परिभाषा यत्र विशिष्टरूपोपादानन्तत्रैव प्रवर्तते । तत्रैवार्थोपस्थितिसत्त्वे-

यदप्याहुः—द्रोणादयः शब्दा लौहं दारुमयं वा परिमाणमेव न व्यभिचरन्ति, परिमेयं तु व्यभिचरन्त्येव । अतस्तस्य प्रातिपदिकार्थत्वाभावादप्राप्तेः परिमाणग्रहणमिति, तदपि न, गौणलाक्षणिकेषु सिंहो माणवको मञ्चाः क्रोशन्तीत्यादिष्वव्याप्त्यापत्तेः । तत्र विशेष्यस्य माणवकादेर्भेदेऽपि सिंहसदृश इत्यर्थो गौण्यां नियतोपस्थितिक एवेति यदि, तर्हि व्रीह्यादेर्भेदेऽपि द्रोणपरिमितो नियतोपस्थितिक एवेति तुल्यम् ।

'संबोधने च' । मात्रग्रहणात्संबोधनाधिक्ये न प्राप्नोतीत्यारम्भः । इह संबोधनं प्रकृत्यर्थं प्रति विशेष्यं क्रियां प्रति विशेषणमिति सिद्धान्तः । उक्तं च—

संबोधनपदं यच्च तत् क्रियायां विशेषणम् ।
व्रजानि देवदत्तेति निघातोऽत्र तथा सति ॥ इति ।

---

पादानाभावादस्या अत्राप्रवृत्तेर्द्रोणादिशब्दानां लाक्षणिकत्वेऽपि गौणत्वाभावाच्चेत्यपि बोध्यम् ।

सम्बोधनपदमिति । अत्र पुञ्जराजः 'आख्यातं सविशेषणं वाक्यम्'इति वाक्यलक्षणं तत्रास्य क्रियाविशेषणत्वाभावे वाक्यत्वं न स्यादिति समान

---

नोपस्थितस्यार्थस्य शब्दम्प्रति विशेषणत्वसम्भवात् । एतेनापदस्य प्रयोगानर्हत्वेन पदस्यैव पदान्तरार्थसम्बन्धवेलायां गौणार्थत्वावगतिरिति द्रोणादिपदानां स्वार्थ एव साधुत्वान्वाख्यानकार्यम् । तदानीन्तु मूलभूता याऽर्थवत्परिभाषा तद्विषयतैव नास्ति, उपात्तं विशिष्यार्थोपस्थापकं रूपं यत्र तत्रैव तस्याः प्रवृत्तेः । प्रकृतसूत्रे तु न तादृशरूपोपादानमिति परिमाणग्रहणमनर्थकमिति ध्वनितम् । वस्तुतस्तु परसम्मतगौणमुख्यन्यायप्रवृत्तिमभ्युपेत्य प्रातिपदिकसंस्कारवेलायान्तस्याः प्रकृते प्रवृत्त्यभावकथनमित्याशयेनाह—द्रोणादिशब्दानामिति । गौणत्वाभावादिति । सदृशलाक्षणिकस्यैव गौणत्वादिति शेषः ।

यदुक्तं सम्बोधनपदस्य क्रियाविशेषणत्वन्तत्र साधकमाह—अत्रेति । सविशेषणम्=साक्षात्परम्परया च यद्यद्विशेषणन्तद्बोधकसहितम् । तेन गभीरायान्नद्याम्मीनोऽस्ती-

---

१ इदञ्च समर्थसूत्रे भाष्ये उक्तम् । इदञ्च लौकिकम्, 'साकाङ्क्षावयवम्भेदे परानाकाङ्क्षशब्दकम् । क्रियाप्रधानं गुणवदेकार्थं वाक्यमिष्यते ॥ 'अर्थादेकं वाक्यं साकाङ्क्षं चेद्विभागे स्यात्' इत्याद्यलक्ष-

वाक्ये इति प्रकृत्य विहितो निघातो न स्यादिति भाव इति । वस्तुतस्तु त्यस्यैकवाक्यत्वम् । तत्र 'सम्बोधने च' इति सूत्रविहितप्रथमान्तपदघटितसमुदाय-मध्ये, अस्य=देवदत्तेत्यादिपदस्य, निघातो न स्यादिति । आष्टमिकेन 'आमन्त्रितस्य

णसाम्यात् । अत एव 'पचतिभवति' इत्यादेरप्येकवाक्यत्वम्, सविशेषणाख्यातस्यैकत्वेन वार्तिकोक्त्या-प्यत्रैव तात्पर्यम् । व्रजानि देवदत्त इत्यनेन 'देवदत्तसम्बन्धिसम्बोधनविषयो मत्कर्तृकं प्राप्तकालिकं गम-नम्' इति बोधः । अत्रेदं बोध्यम्-संबोधनमभिमुखीभावः=प्रयोक्तृवचनार्थग्रहणे सादरत्वभवनम् । तद्व्यञ्जकञ्च मुखपरावृत्त्यादि । तत्फलं प्रवृत्तिनिवृत्ती । तस्मात् सम्बोधनविभक्तिरनुवाद्यविषयैव, सम्बो-ध्यतावच्छेदकरूपेण सम्बोध्यस्य सिद्धिं विना तस्यासम्भवात् । अत एव कुमारावस्थायां राजन् भव बुध्यस्व इति न प्रयोगः । एवञ्चानुवाद्यस्य विधेये एवान्वयेन विधेयतायाश्च क्रियानिष्ठतया तत्रैवोद्देश्य तयान्वयः । तदुक्तम्:—'सिद्धस्याभिमुखीभावमात्रं सम्बोधनं विदुः । प्राप्ताभिमुख्यो ह्यर्थात्मा क्रियासु विनियुज्यते । सम्बोधनं न वाक्यार्थं इति वृद्धेभ्य आगमः, इति । प्राप्ताभिमुख्यः=मुखपरावृत्त्यादिना-भिमुखीभूतः, अर्थात्मा=प्रयोक्तृवचनार्थज्ञानवान् । प्रयोक्तृज्ञाप्यक्रियासु विनियुज्यते=प्रेर्य्यते । एतेन सम्बोध्यस्य प्रवर्तनाविषयक्रियायामेवान्वय इति बोधितम् । एवञ्च क्रियासु प्रवृत्तिनिवृत्तिफलकोऽभिमु-खीभावः सम्बोधनमिति फलितम् । एवञ्च सम्बोधनं प्रकृत्यर्थं प्रति विशेषणं तद्विभक्त्यन्तार्थश्च क्रियां प्रति विशेषणमिति सिद्धम् । तथा च 'अभिमुखीभवद्रामोद्देश्यकप्रवर्तनाविषयो मत्कर्मकं रक्षणम्' इति बोधः 'राम मां पाहि' इत्यनेन ।

असन्निकृष्टेऽचेतने च सम्बोध्यत्वारोपेण गौणः प्रयोगः । एवञ्च व्रजानीत्यादौ सम्बोध्यस्य व्रजन-क्रियायां विनियोगाभावेन सम्बोध्यत्वानुपपत्तौ तद्विभक्त्यनुपपत्तिरित्यत आह-वस्तुतो व्रजानीति । प्राप्तकालिककोऽन्तव्रजनक्रियायामन्वये तु 'क्रियासु विनियुज्यते' इति हरिविरोधः स्यादिति भावः । सम्बोधनं न वाक्यार्थं इत्यस्य अभिमुखीभवनानुकूलसम्बोधनविभक्त्यन्तशब्दप्रयोगरूपव्यापारस्येतरनैर-पेक्ष्येण प्रतीतेरुद्देश्यविधेयभावरूपवाक्यार्थपरत्वं न सम्बोधनपदस्य, किन्तु उक्तव्यापारपरत्वमेवेत्यर्थः । अत एव 'धिङ्मूर्खं' इत्यत्र गच्छेत्यस्याध्याहारे सम्बोधनपदार्थस्य गमनक्रियायामन्वयात्प्रथमा, अनध्या-हारे तु द्वितीयेति सङ्गच्छते । तथा च 'व्रजानि देवदत्त' इत्यनेन 'अभिमुखीभवद्देवदत्तोद्देश्यको मत्कर्तृ-कप्राप्तकालिकगमनकर्मकः प्रवर्तनाविषयो बोधः' इति बोधः । न च जानीहीत्यस्याध्याहारे एकतिङ्वा-क्यमित्येकवाक्यस्यत्वाभावान्निघातासिद्धिः तस्यैकतिङर्थमुख्यविशेष्यकार्थपरत्वात्, वाक्यैकदेशन्यायेन व्रजानीत्यस्यैव प्रवर्तनाविषयज्ञानघटितार्थपरत्वात्, श्रूयमाणैकतिङन्तघटितमित्यर्थाच्च ।

अत्र प्राचीनमते 'बोधनाय सम्मुखीकरणं सम्बोधनम्' इति व्युत्पत्त्या सम्बोध्यनिष्ठाभिमुखीभाव-रूपव्यापारानुकूलेच्छारूपो व्यापारः सम्बोधकनिष्ठो विभक्त्यर्थः । तस्य च विषयता सम्बन्धेन 'सम्बोधन-पदं यच्च तत् क्रियायां विशेषणम्' इत्युक्तेः, श्रुतत्वाच्च श्रूयमाणव्रजनादिक्रियायामेवान्वयः । विभक्त्यर्थे च प्रकृत्यर्थस्य वृत्तित्वेनान्वयः । तथा च 'व्रजानि देवदत्त' इत्यत्र निघातः सिध्यति ।

अध्याहृतक्रियान्वये तु क्रियाविशिष्टप्रकारताप्रयोजकस्वरूपैकवाक्यत्वाभावात् स न स्यात् । वै० स्वनिष्ठविशेष्यतानिरूपितत्व–स्वनिष्ठविशेष्यतानिरूपितत्वविशिष्टप्रकारत्वावच्छिन्नविशेष्यतानिरूपितत्वान्य-तरसम्बन्धेन । उद्देश्यविधेयभावस्तु न सम्बोधनम्, सम्बोधनं न वाक्यार्थः इति हर्य्युक्तेरिति ।

नवीनास्तु संबोध्यनिष्ठोऽभिमुखीभाव एव सम्बोधनम्; 'सिद्धस्याभिमुखीभावमात्रं संबोधनं विदुः' इति हर्य्युक्तेः । तस्याश्रयत्वसम्बन्धेन प्रकृत्यर्थेऽन्वयः, 'प्राप्ताभिमुख्यो ह्यर्थात्मा' इति हरिवचनात् । प्रकृत्यर्थस्य च स्वोद्देश्यकत्वसम्बन्धेन प्रवर्तनायामन्वयः । न च 'क्रियासु विनियुज्यते' इत्युक्त्या,

एवं च राम मां पाहीति वाक्यस्य रामसंबन्धिसंबोधनविषयो मत्कर्मकं रक्षणमर्थः ॥

इति प्रथमा ॥

एवं सति नद्या यत् कूलं तत्र तिष्ठतीत्याद्यर्थके 'नद्यास्तिष्ठति कूले' इत्यादौ षष्ठ्यन्तस्य क्रियायां विशेषणत्वाभावात्तद्घटितस्य वाक्यत्वानापत्तौ समर्थसूत्रभाष्यसम्मतनिघातस्य तत्रानापत्तिः। तस्मात् सविशेषणमित्यस्य साक्षादन्यद्वारा वा यद्विशेषणं तत्सहितमित्यर्थोऽवश्यं वाच्यः। एतेन यतः पदात्परस्य पदस्य निघातादयः क्रियन्ते तयोः परस्परान्वयनियम इत्यपास्तम्। वस्तुतो व्रजानि देवदत्तेत्यादौ जानीहीति शेषस्तत्र व्रजनस्य कर्मत्वेन देवदत्तस्योद्देश्यत्वेनान्वयान्न दोषः। प्राप्तकालेऽत्र लोट् इति दिक् ॥

इति प्रथमा।

च' इत्यनेन समानवाक्यस्थस्यामन्त्रितस्य पदात्परस्यैव निघातविधानादिति भावः। व्रजानि देवदत्तेत्यस्मात्पुञ्जराजसम्मतो देवदत्तसम्बन्धिसम्बोधनविषयो मत्कर्मकङ्गमनमिति शाब्दबोधः। तत्र साक्षाद्यत्क्रियाम्प्रतिविशेषणन्तत्सहितस्यैवैकवाक्यत्वमिति कश्चित्, तन्न युक्तमित्याशयेनाह—वस्तुतस्त्विति। एतेन = उक्तसमर्थसूत्रसम्मतनिघाताप्राप्तिरूपदोषेण। नियम इति। 'समानवाक्ये' इति वार्तिकबोध्य इति शेषः। यत्तु + सम्बोधनविभक्त्यन्तस्य विधेयभूत क्रियायामेवान्वयः, स एव निघातस्य प्रयोजको वक्ष्यमाणहरिग्रन्थस्वारस्यात्, एवञ्च व्रजानि देवदत्तेत्यत्र व्रजनस्य विधेयत्वाभावेन कथमत्र निघातसिद्धेः फलत्वेन कथनमिति केचित्। तन्मतेऽपि निघातसिद्ध्ये आह—वस्तुतो व्रजानीत्यादि। न दोष इति। व्रजनस्याविधेयतया देवदत्तेत्यनेनान्वयाभावान्निघाताप्राप्तिरूपदोषो नेत्यर्थः। अवबोधनरूपा या क्रिया विधेयत्वेन विवक्षिता, तस्यामुभयोरन्वयेन समानवाक्यत्वस्य सत्वात्। न च जानीहीत्यस्य शेषत्वे तिङन्तद्वयघटितवाक्यस्यैकतिङ्वाक्यमिति परिभाषितं यन्निघातोपयोग्यैकवाक्यत्वन्तदभावे न दोषोऽस्त्येवेति वाच्यम्, जानीहीति शेष इत्यस्य, व्रजानि देवदत्त इति समुदायस्य व्रजानि देवदत्त जानीहीत्यस्य योऽर्थस्तत्र वृत्तिर्वाक्यैकदेशन्यायेनेति श्रूयमाणैकतिङ्घटितत्वेन निघातस्य प्राप्तिरित्याशयात्। अभिमुखीभवद्देवदत्तोद्देश्यकं मत्कर्तृकं प्राप्तकालाधिकरणकगमनकर्मकप्रेरणाविषयो ज्ञानमित्याकारको ह्यस्माच्छाब्दबोधः प्राप्तकाल इति गमनयोग्यस्य कालस्य प्राप्तिविवक्षायामित्यर्थः। लोट् = 'प्रैषातिसर्गप्राप्तकालेषु

'सम्बोधनपदं यच्च तत्क्रियायां विशेषणम्' इत्युक्त्या च विरोधः, प्रवर्तनान्वयद्वाराऽन्वये एव तत्तात्पर्यात्। नामार्थधात्वर्थयोः भेदेन साक्षादन्वयस्याव्युत्पन्नत्वात्। अत एव 'तण्डुलं पचति' इत्यर्थे 'तण्डुलः पचति' इत्यस्य न साधुत्वम्। 'क्रियासु विनियुज्यते' इत्युक्तेः विधेयप्रवर्तनायाश्च विषयत्वसम्बन्धेन

'कर्तुरीप्सिततमं कर्म' ॥ कर्तुरिति 'क्तस्य च वर्तमाने' इति कर्तरि

कृत्याश्च' इत्यनेन लोट् । दिगिति । दिगर्थस्तु यत्र विधेयभूतक्रियावाचकम्पदन्नास्ति केवलसम्बोधनविभक्त्यन्तन्तस्यैवात्र प्रयोगस्तत्र तादृशक्रियावाचकपदाध्याहारेण शाब्दबोधः । यथा मूर्खेत्यादौ अत्र सम्यगाचरेतिपदाध्याहारे सति मूर्खोद्देश्यकं सम्यगाचरणम्प्रेरणाविषय इति बोधो भवति । सम्बोधनन्त्वभिमुखीकरणम्, तच्च प्रयोक्तृवचनार्थग्रहणे आदरत्वसम्पादनम्, तत्फलम्प्रवृत्तिनिवृत्तीमुखपरावृत्त्यादिकन्तु तस्याभिव्यञ्जकम् । सादरत्वसम्पत्त्यनुकूलो व्यापारश्च सम्बोधनविभक्त्यन्तशब्दप्रयोग एव । उद्देश्यतावच्छेदकरूपेण सिद्धश्च यदा ज्ञातो भवति, तदा तद्धर्मावच्छिन्नोद्देशेन क्रिया विधीयत इति सम्बोध्यतावच्छेदकरूपेण सिद्धत्वं सम्बोधनविभक्त्यन्तशब्दप्रयोगे नियामकम् अतो व्यवस्थयैव राजन्युध्यस्व राजा युध्यस्वेत्यनयोः प्रयोगाः । तदुक्तं हरिणा—

> सिद्धस्याभिमुखीभावमात्रं सम्बोधनं विदुः ।
> प्राप्ताभिमुख्यो ह्यर्थात्मा क्रियासु विनियुज्यते ॥ इति

सिद्धस्य—सम्बोध्यतावच्छेदकरूपेण सिद्धस्य, अभिमुखीभावमात्रमित्यनेन फलनिर्देशः । मुखपरावृत्त्यादिना सम्बोध्यतावच्छेदकावच्छिन्नो यदा फलवत्त्वेनानुमितो भवति, तदा क्रिया विधीयते तदाह—प्राप्ताभिमुख्य इति । आभिमुख्यम्=सादरत्वम् प्राप्तमाभिमुख्यं येन स एवार्थः, अर्थपूर्णः, आत्मा, सम्बोध्यः, उष्ट्रमुखवत्समासः प्रयोक्तृवचनार्थज्ञानवान् क्रियासु=बोधनीयक्रियासु विनियुज्यते=प्रवर्त्यते । एवञ्च सम्बोधनमभिमुखीकृत्याज्ञातार्थज्ञानानुकूलव्यापारानुकूलव्यापार इति फलितम् । यत्र सम्बोध्योऽसन्निकृष्टोऽचेतनो वा तत्र सन्निकृष्टत्वारोपेण चेतनत्वारोपेण च गौणः सम्बोधनविभक्त्यन्तशब्दस्य प्रयोग इति । किञ्च 'तिङ्समानाधिकरणे प्रथमा' इति वार्तिकस्वारस्यात्प्रथमापि क्रियाजनकरूपकारकार्थिका विभक्तिः । अत एव "सहयुक्तेऽप्रधाने" इति सूत्रे ऽप्रधानग्रहणस्याकर्तव्यत्वमप्रधानग्रहणं शक्यमकर्तुम् । न चैवम्पुत्रेण सहागतः पितेत्यत्र पितुरपि तृतीयापत्तिः, "उपपदविभक्तेः कारकविभक्तिर्बलीयसी" इति प्रथमा भविष्यतीत्यभिहितम्भाष्ये 'उपपदविभक्ते' रिति परिभाषा तु वाचनिकीति दिक् ।

इति प्रथमाविवरणम् ।

अनेति । व्युत्पत्तिप्रदर्शनेनेत्यर्थः । अस्य सूचयतीत्यत्र, व्याख्यानादित्यस्य तु रूढि-

---

क्रियायामन्वयस्तथा च 'व्रजानि देवदत्त' इत्यत्र जानीहि इति शेषः । 'राम मां पाहि' इत्यनेन 'अभिमुखोभवद्रामाद्युद्देश्यकप्रवर्तनाविषयो मत्कर्मकं स्वकर्तृकं रक्षणमिति बोधः । एकवाक्यत्वञ्च साक्षात्परम्परासाधारणाख्यातार्थनिष्ठविषयतानिरूपितविषयताप्रयोजकस्वरूपमित्याहुरित्यन्यत्र विस्तरः ।

१ कर्तृशब्दोऽत्र प्रकृतधातूपात्तप्रधानीभूतव्यापाराश्रयरूपस्वतन्त्रपरः । कर्तृसंज्ञकपरस्तु न, 'शत्रूनगमयत्' इत्यादौ शत्रुवृत्तिव्यापारजन्यफलाश्रयतया ग्रामादेः कर्तुरित्यनेन कर्मत्वानापत्तेः । अत एव 'सार्थाद् हीयते' इत्यत्र 'अपादाने' चाहीयरुहोः' इत्यनेन अहीय इति पर्युदासात्तसेरभावेऽपि कर्मणि लकारः

षष्ठी। आप्नोतेः सन्नन्तात् 'मतिबुद्धिपूजार्थेभ्यश्च' इति वर्तमाने क्तः। मतिरिच्छा, न तु बुद्धिः, पुनर्बुद्धिग्रहणात्। एवं च कर्त्रा आप्सुमिष्यमाणं कर्मेत्यर्थः। कर्ता च धातूपात्तव्यापाराश्रयः। स च

---

आप्नोतेरित्यादि। अनेन व्याख्यानात् क्रियाशब्द एवात्रेप्सितशब्दो न त्वभिप्रेतपरो रूढ इति सूचयति। आप्तुमिति। संबन्द्धुमित्यर्थः। केनेति

---

रित्यत्रान्वयः। रूढ इति। न च 'अभीष्टमीप्सितं हृद्यन्दयितं वल्लभं प्रियम्' इति

---

सिध्यति। कर्तृषष्ठ्या आश्रयमात्रमर्थः, 'अनन्यलभ्यो हि शब्दार्थः' इति न्यायेन व्यापाराश्रयरूपकर्तरि षष्ठीविधानेऽपि व्यापारस्य धातुलभ्यत्वात्। प्रकृत्यर्थव्यापाराश्रयस्य षष्ठ्यर्थाश्रयेऽभेदेनान्वयः। न चाश्रयत्वस्यैव प्रकारताविशेष्यतावच्छेदकतया घटो घट इतिवदवच्छेदकधर्मभेदाभावादभेदेन शाब्दबोधानापत्तिः नीलघटो घटः इतिवद् विधेयांशेऽधिकावगाहिशाब्दस्थले तन्नियमाभावात्, प्रकारतावच्छेदकतापर्य्याप्त्यधिकरणधर्मभेदस्य सत्त्वाच्च। एवमेव शब्दोऽपि शाब्दबोधे भासते इति सिद्धान्ते शब्दभेदेनाप्यवच्छेदकभेदो बोध्यः।

आप्धात्वर्थो व्याख्यानादुपस्थितत्वाच्च कर्तृवृत्तिव्यापारविशिष्टफलत्वरूपः सम्बन्धः। वै० स्वयोज्यत्व—स्ववाचकधातुवाच्यत्वाभ्याम्। सम्बन्धघटकफलत्वञ्च फलतावच्छेदकसम्बन्धावच्छिन्नं ग्राह्यम्। सन्नर्थेच्छा तत्र विशिष्टफलत्वस्वसम्बन्धस्य स्वनिष्ठप्रकारतानिरूपकत्व-स्वघटकफलनिष्ठप्रयोज्यतानिरूपितप्रयोजकतावद्व्यापाराश्रयसमवेतत्वोभयसम्बन्धेनान्वयः। क्तप्रत्ययार्थ उद्देश्यताख्यविषयताश्रयः। तदेकदेशोद्देश्यतायां निरूपितत्वसम्बन्धेनान्वयः। तमबर्थः प्रकर्षः। तेन प्रयोज्यत्वलाभः। तथा च प्रकृतधात्वर्थप्रधानीभूतव्यापाराश्रयवृत्तिव्यापारविशिष्टफलतावच्छेदकसम्बन्धावच्छिन्नफलाश्रयत्वसम्बन्धविशिष्टेच्छानिरूपितोद्देश्यताश्रयः सङ्केतसम्बन्धेन कर्मपदवान्, इति सूत्रार्थः फलति। प्रथमं वै० स्वप्रयोज्यत्व—स्ववाचकधातुवाच्यत्वाभ्याम्। द्वितीयवै० स्वनिष्ठप्रकारतानिरूपकत्व—स्वघटकफलप्रयोजकव्यापाराश्रयसमवेतत्वाभ्याम्।

ननु क्तार्थवर्तमानत्वस्येच्छायामन्वयात् पाणिनिकर्तृकेप्सधातूच्चारणकालिकेच्छोद्देश्यस्यैव कर्मत्वप्राप्त्या साम्प्रतं तण्डुलं पचति इत्यादेरसिद्धिरिति चेन्न, वर्तमानत्वस्येहाविवक्षितत्वात्। ननु वर्तमानकालविषयकबोधजनकत्वप्रकारकतात्पर्यीयविशेष्यतावत्क्तान्तयोगे षष्ठीत्यर्थकेन "क्तस्य च वर्तमाने" इत्यनेन षष्ठ्यनापत्तिः, कर्मपदशक्यतावच्छेदककोटिप्रविष्टेच्छाविशेषणतया वर्तमानत्वं न विवक्षितमित्यत्रैव 'वर्तमानत्वं तु नेह विवक्षितम्' इत्यस्य तात्पर्यात्। तथा च कर्मपदशक्तिग्राहककर्तुरितिसूत्ररूपवाक्यजन्यबोधविषयतावच्छेदकतया वर्तमानत्वस्य विवक्षासत्त्वेन षष्ठी सिध्यतीति भावः। न च कर्मपदशक्यतानवच्छेदकत्वे तन्निष्ठशक्तिग्राहकवाक्यजन्यबोधीयविषयत्वानापत्तिः, 'घटपदं घटत्वावच्छिन्नविषयकबोधजनकतावत्' इति वाक्यजन्यबोधीयविषयतावत्त्वेऽपि बोधादेर्घटपदशक्यतानवच्छेदकत्वदर्शनात्। एवञ्च शक्तिग्राहकवाक्यजन्यबोधीयविषयताश्रयस्य शक्यत्वं भवत्येवेति नियमाभाव इति भावः। एवमेवोद्देश्यविधेयस्थलेऽपि उद्देश्यदलप्रविष्टधर्ममात्रस्य विधेयेऽपि प्रतीतिरिति नियमाभावः। अत एव घटपदाद् घटो बोद्धव्य इत्यत्र घटत्वस्य विधेयबोधीयविषयतावच्छेदकत्वं भवति, 'पुष्पवन्तपदात् चन्द्रसूर्यौ बोद्धव्यौ' इत्यत्र द्वित्वस्य साहित्यस्य चोद्देश्यविशेषणतयोपस्थितिविषयत्वेऽपि विधेयबोधीयविषयतावच्छेदकत्वाभावः।

केनाप्तुमिच्छतीत्याकाङ्क्षायां विशेषणीभूतेन व्यापारेणेत्यर्थाल्लभ्यते। तदेतदाह–*क्रिययेति*। क्तप्रत्ययेनोपस्थितं वर्तमानत्वं नेह विव-

करणाकाङ्क्षाप्रदर्शनम्। विशेषणीभूतेनेति। कर्तृपदार्थविशेषणीभूतेनेत्यर्थः। उपस्थितं परित्यज्यानुपस्थितकल्पने मानाभावादिति भावः। लभ्यते इति।

क्षो। पाठाद्रूढिरेवाभिप्रेतेति वाच्यम्, योगरूढेः स्वीकारात्। अत्र मानन्तु "वारणार्थानामीप्सितः" इति सूत्रस्थभाष्यमेव। तथाहि–"किमुदाहरणम् माषेभ्यो गा वारयति अवेद्यस्य माषा न गावस्तस्य माषा ईप्सिताः स्युः, ईप्सितशब्दस्याभिप्रेते रूढत्वाभिप्रायेण यस्य स्वामिनः पुरुषस्य माषास्तस्य त एव ईप्सिताः। पूर्वोक्तमेवार्थं द्रढयितुमाह–यस्य तु खलु गावो न माषाः कथं तस्य माषा ईप्सिताः स्युः तस्यापि माषा एवेप्सिताः ईप्सितशब्दः क्रियाशब्द आश्रीयते तत्र वारणक्रियया परकीया अपि माषा वारयितुराप्तुमिष्टा भवन्ति मानशन्नेते इत्येभ्योऽसौ गा वारयतीति कैयटः। माषा एवेत्यत्र एवकारो भिन्नक्रमः। माषा इप्सिता एवेत्यर्थः। अत एव भाष्यकार आह–आतश्चेप्सिताः यदेभ्यो गा वारयति पूर्वापेक्षया किञ्चिद्वैलक्षण्याभिप्रायेण पुनराह –इह कूपादन्धं वारयतीति कूपेऽपादानसंज्ञा न प्राप्नोति न हि तस्य कूप ईप्सितः कस्तर्ह्यन्धः। न प्राप्नोतीती–अन्धसम्बधे सति कूपस्य न विनाशो नापि राजभयमिति प्रश्नः। कस्तर्ह्यन्ध इति–तम्प्रत्यनुकम्पायाः सद्भावात्तस्येप्सितत्वम्मन्यते। तस्यापि कूप एव ईप्सितः, पश्यत्ययमन्धः कूपम्मा प्रापदिति। तस्यापीति–वारणक्रियया आप्तुमिष्ट इत्यर्थः। एतेन ईप्सितशब्दस्य क्रियाशब्दतया कूपस्यापि तत्संयोगाभावरूपफलाश्रयतया कूपस्येप्सितत्वमस्त्येवेति प्रघट्टकेन ईप्सितशब्दो यौगिक इति सूचितम्। एकदेश्याह– इहाऽग्नेर्माणवकं वारयतीति माणवकेऽपादानसंज्ञा प्राप्नोति, सिद्धान्त्याह—कर्मसंज्ञा बाधिका भविष्यतीति ईप्सितमात्रे सावकाशा अपादानसंज्ञा परत्वादीप्सिततमस्य कर्मसंज्ञया बाध्यत इति भावः। करणाकाङ्क्षा=सन्प्रकृतेराप्नोतेः करणाकाङ्क्षा, मानाभावादिति। यथा सोमेन यजेत इत्यत्र भावनायाः करणाकाङ्क्षायामुपस्थितत्वात्फलांशस्य करणत्वेनान्वयो भवति तथा प्रकृतेऽपि। कारकाधिकारात्कर्तृग्रहणस्य सूत्रे सत्त्वाच्च। कर्तृकारकवृत्तिव्यापारस्यैव तथान्वय इति प्रकृतधात्वर्थप्रधानीभूतव्यापारलाभ इति भावः। ईप्सितपदेनेति। ननु सूत्रस्थकर्तृपदेनेति पूर्वोक्तरीत्या वक्तव्ये ईप्सितपदेनेति पूर्वविरुद्धमिति चेन्न, यथा 'वारणार्थानामीप्सितः" इति सूत्रे कर्तृपदाभावेपि कर्मणि क्तप्रत्ययस्येप्सित इत्यत्र सत्त्वात्कर्मणः कर्तृव्यापारजन्यफलाश्रयत्वज्ञानसत्त्व एव तदुपपत्तिरित्यध्याहारेण कर्तुर्लाभस्तथा प्रकृतसूत्रेऽपीप्सितपदेनैव विवक्षितार्थस्य लाभे कर्तृग्रहणं स्पष्टार्थमिति ध्वननायेत्थमभिधानात्। ननु "वारण" इति सूत्रे वारणेत्यस्य विशेषत उपादानात्तदर्थभूतो यः प्रधानीभूतो व्यापारस्तत्प्रयोज्यफलाश्रयस्यैव।

क्षितम्, तेन कटं करिष्यतीत्यादि सिद्ध्यति।

एवं चेप्सितपदेन कर्तृव्यापारप्रयोज्यफलाश्रय उच्यते, यथा तण्डुलं पच-

लाभाद्यवानामेवेप्सितपदेन ग्रहणमिति तेषामेवापादानसंज्ञा, न त्वाक्षिप्तकर्तृपदार्थसामान्यस्य यो व्यापारस्तत्प्रयोज्यफलस्य, अन्यथोत्तरदेशनिष्ठसंयोगानुकूलव्यापारवतो गवादेर्यथा यवेभ्यो गां वारयतीत्यादौ कर्तृत्वसत्त्वात्तन्निष्ठव्यापारजन्यफलाश्रययवादीनामपादानत्वप्रसक्तिः, तथा वारणकर्तुरप्याक्षिप्तकर्तृपदार्थतया तद्वृत्तिव्यापारजन्यफलाश्रययवादीनामप्यपादानत्वं स्यात्, भक्षणादिफलानुकूलव्यापारवत्त्वेन यथा गवादीनां कर्तृत्वं तथा परावृत्त्यादिफलानुकूलव्यापारवत्त्वाद्वारयितुरपि परावर्तयतीत्यत्र कर्तृत्वदर्शनात्। तथा प्रकृतसूत्रे न धात्वर्थविशेषोपादानमिति माषेष्वश्वम्बध्नातीत्यादौ गलाधःसंयोगानुकूलव्यापारवतोऽश्वस्यापि आक्षिप्तकर्तृपदार्थतया तन्निष्ठव्यापारजन्यफलाश्रयमाषाणामपि कर्मत्वापत्तेर्वारणायान्यानधीनस्य कर्तुरेव कर्तृपदेनग्रहणार्थं कर्तृपदमस्त्विति चेन्न, प्रकृतसूत्रे प्रकर्षार्थकतमप उपादानात् प्रकृतधात्वर्थप्रधानीभूतव्यापारवत एवाक्षिप्तकर्तृपदेन लाभसम्भवात्। एवञ्च माषेष्वश्वम्बध्नातीत्यत्र प्रकृतधातुर्बन्धधातुस्तदर्थो देशान्तरसञ्चारविरोधिशङ्कादिसंयोगानुकूलव्यापारस्तदाश्रयचैत्रादेराक्षिप्तकर्तृपदार्थत्वमिति कर्तृव्यापारप्रयोज्यफलाश्रय इति, अत्र प्रयोज्यत्वनिवेशस्य फलन्तु न साक्षात्प्रधानीभूतव्यापारजन्यफलस्यैव ग्रहणङ्किन्तु तज्जन्यजन्यस्यापि ग्रहणमिति सूचनाय। तेन यत्र माषभक्षणेन पुष्टिर्जायतामितीच्छया माषक्षेत्र एवाश्वस्य बन्धनन्तत्रापि माषेष्वश्वम्बध्नातीति प्रयोग इष्यते। अत्र प्रकृतधातुर्बन्धधातुस्तदर्थव्यापारप्रयोज्यफलङ्गलाधःसंयोगोऽपि तदाश्रयत्वान्माषाणामपि कर्मत्वापत्तिः, अतः फलेऽपि प्रकृतधात्वर्थत्वन्निवेशनीयमिति ध्वननमेव। एवञ्च प्रकृतधात्वर्थव्यापारप्रयोज्यप्रकृतधात्वर्थफलाश्रयस्यैवेप्सिततमपदेन ग्रहणमिति तदाश्रयस्यैव कर्मसंज्ञा भवति। न चोक्तरीत्या फले प्रकृतत्वनिवेशनस्य प्रयोज्यनिवेशे एव चेत्सार्थक्यं यदि, तदा प्रकृतधात्वर्थजन्यत्वमेव निवेश्यताम्, फले प्रकृतत्वं त्यज्यतामिति वाच्यम्, भाष्यपठितदुहादिभिन्नानान्द्विकर्मत्वस्यानुपपत्तेः, व्यापारद्वयार्थकत्वेनैव तेषान्तत्त्वस्योपपादनीयत्वात्। अत एव दुहिपच्योर्बहुलं सकर्मकयोरिति "सृजियुज्योः श्यंस्तु" इत्यस्योपपत्तिरिति। तत्र दृष्टान्तमाह—यथा तण्डुलम्पचतीति। अत्र प्रकृतो धातुः पचिति

१ आश्रयत्वञ्च फलतावच्छेदकसम्बन्धेन। अन्यथा कालिकसम्बन्धेन मद्वृत्तिव्यापारजन्यविक्लित्याश्रयः पाषाणं भवत्वितीच्छया पाषाणं पचतीत्यापत्तेः, कालिकसम्बन्धेन विक्लित्याश्रयः तण्डुलः कालश्च भवत्वितीच्छया तण्डुलं पचति, कालं पचतीत्याद्यापत्तेश्च। न च समवायसम्बन्धेनैव फलाश्रयस्य कर्मत्वम्, 'घटं नाशयति' इत्यत्र प्रतियोगितासम्बन्धेन, घटं जानाति, इच्छति, इत्यादौ ज्ञानेच्छानुकूलव्यापारार्थकत्वे विषयतासम्बन्धेन, विषयतानिरूपकज्ञानेच्छार्थकत्वे स्वरूपसम्बन्धेन फलाश्रयस्य घटादेः कर्मत्वानापत्तेः। कालिकान्यसम्बन्धेनैव फलाश्रयस्य कर्मत्वे जनकत्वसम्बन्धेन व्यापारः फला-

*कारकमिति* । एतच्च कारके इत्यधिकाराल्लभ्यते । तत्र हि

तीति । फलस्यापि व्यपदेशिवद्भावेन फलाश्रयत्वात्कर्मत्वम् । अत एव

तदर्थः पूर्वकालस्थितरूपादिनिवृत्तिपूर्वकरूपाद्यन्तरोत्पत्तिरूपफलानुकूलव्यापार इति प्रधानव्यापारप्रयोज्यप्रकृतधात्वर्थतादृशरूपाद्यन्तराश्रयत्वात्तण्डुलानाङ्कर्मता तण्डुलपदञ्च तण्डुलावयवे लाक्षणिकम् । घटम्पचतीत्यादौ तु पिठरपाकवादिमते घटपदङ्घटपरमेव, पीलुपाकवादिमते तु घटावयवे लाक्षणिकम् । 'भूतानि कालः पचती'त्यादौ वैलक्ष्यनिष्पत्त्यनुकूलव्यापारः पच्धात्वर्थं इति यथायथमूहनीयम् । नन्वेवन्तण्डुलपदार्थे कर्मत्वसिद्धावपि स्तोकम्पचतीत्यादौ स्तोकादेर्न तादृशफलाश्रयत्वमिति कथन्तेषाङ्कर्मत्वसिद्धिः । न च स्तोकपदार्थेऽभेदेन फलवत्त्वसत्त्वात्स्यादेव कर्मत्वमिति वाच्यम्, फलतावच्छेदकसम्बन्धेन फलाश्रयस्यैव कर्मत्वात् । अन्यथा पर्वतस्यापि कालिकसम्बन्धेन विक्लित्याश्रयत्वात्पर्वतम्पचतीत्याद्यापत्तेः । फलतावच्छेदकसम्बन्धश्च प्रकृते समवाय एवात आह—फलस्यापीति । स्वज्ञानस्य क्रियोत्पत्तिप्रयोजकत्वात्फलस्य कारकत्वम्बोध्यम् । व्यपदेशिवद्भावेनेति । अत्र मानन्तु 'ओजः सहोम्भसा वर्तते' इति प्रकृते 'तत्प्रत्यनुपूर्वमीपलोमकूलम्' इत्यनेन द्वितीयान्तेभ्यः प्रत्ययविधानमेव, अत एव प्रतीपं वर्तते प्रातीपिकमिति व्याख्यानं सङ्गच्छते । अत एव = फलस्यापि व्यपदेशिवद्भावेन

श्रयो भवत्विती‌च्छया व्यापारं पचतीत्यापत्तेः । कालिकातिरिक्तवृत्तितानियामकसम्बन्धेन फलाश्रयत्वस्य निवेशे जनकत्वस्य वृत्तित्वानियामकतयोक्तस्थले दोषाभावेऽपि विषयितासम्बन्धेन घटाश्रयो ज्ञानम् इति प्रतीतेः विषयितासम्बन्धस्य वृत्तिनियामकतया विषयितासम्बन्धेन विक्लित्याश्रयो ज्ञानं भवत्विती‌च्छया 'ज्ञानं पचति' इत्यापत्तेः ।

फलतावच्छेदकसम्बन्धश्च फलनिष्ठाधेयतावच्छेदकत्वे सति धातुजन्योपस्थितीयविषयताश्रयः । सर्वेषां धातूनां फलविशिष्टव्यापारे शक्तिः, वै० स्वानुकूलत्व—स्वाधिकरणवृत्तित्वोभयसम्बन्धेन । तथा च पच्धातोः विक्लित्तिविशिष्टव्यापारोऽर्थः । वै० स्वानुकूलत्व—स्वनिष्ठसमवायसम्बन्धावच्छिन्नाधेयतानिरूपिताधिकरणतावद्वृत्तित्वोभयसम्बन्धेन । अत्र फलनिष्ठाधेयतावच्छेदकीभूतः धातुजन्योपस्थितीयविषयताश्रयश्च समवाय एव । तेन सम्बन्धेन विक्लित्याश्रयश्च तण्डुलादिरेव, न तु कालपाषाणादिरिति न तस्य कर्मत्वम् ।

एवं नाशविशिष्टो व्यापारो नाशेरर्थः । वै स्वानुकूलत्व—स्वनिष्ठप्रतियोगित्वसम्बन्धावच्छिन्नाधेयतानिरूपिताधिकरणतावद्वृत्तित्वाभ्याम् । अत्र प्रतियोगितासम्बन्धः फलतावच्छेदकः । जानाति, इच्छति, इत्यादौ ज्ञानविशिष्टः, इच्छाविशिष्टो व्यापारो धात्वर्थः । वै० स्वजनकत्व—स्वनिष्ठविषयतासम्बन्धावच्छिन्नाधेयतानिरूपिताधिकरणतावद्वृत्तिभ्याम्, इति विषयतासम्बन्धेन फलाश्रयस्यैव कर्मत्वम् । 'फलाश्रयः कर्म' इत्यस्य फलतावच्छेदक—तादात्म्यान्यतरसम्बन्धेन फलविशिष्टस्य कर्मत्वमिति स्तोकं पचतीत्यादौ स्तोकादेः कर्मत्वसिद्धिः । धातूनां फले व्यापारे च खण्डशः शक्तिरिति मते तु तत्तत्सम्बन्धेऽपि खण्डशः शक्तिरेवेत्यन्यत्र विस्तरः ।

२ ननु तादात्म्यस्य फलतानवच्छेदकत्वात् तेन सम्बन्धेन फलस्य फलाश्रयत्वे कर्मत्वानुपपत्तिः । किञ्च व्यपदेशिवद्भावेन घटकत्व—घटितत्वयोरेवातिदेश इति सिद्धान्तात् आश्रयत्वातिदेशोऽपि न स्यादिति

व्यत्ययेन प्रथमार्थे सप्तमी। प्रतिसूत्रं वाक्यं भित्त्वा कारकसञ्ज्ञा विधीयते। तद्यथा—अपाये ध्रुवं कारकसंज्ञं स्यात्, ततः 'अपादानम्'

तत्समानाधिकरणे शोभनं पचतीत्यादौ कर्मत्वसिद्धिः। वाक्यं भित्त्वेति। योगविभागेनेत्यर्थः। सञ्ज्ञा विधीयते इति। तदुक्तं भाष्ये 'किमिदं कारक इति सञ्ज्ञानिर्देश' इति। वाक्यभेदं दर्शयति—अपाये इत्यादिना। नन्वेवमप्येकसञ्ज्ञाधिकारात्पर्यायापत्तिः। न च क्रियाजनकानां सञ्ज्ञिनामाक्षे-

फलाश्रयत्वात्कर्मत्वस्य स्वीकारादेव। एतेन क्रियाविशेषणानां कर्मत्वमिति वचनमुक्तयुक्तिमूलकमेव, न त्वपूर्वमिति बोध्यम्। एतच्च न सर्वदा किन्तु विवक्षाधीनमन्यथा 'ज्योतिष्टोमेन स्वर्गकामो यजेत' इत्यत्र ज्योतिष्टोमपदात्तृतीयानापत्तिः स्यात्। मम तु धात्वर्थफलस्य व्यपदेशिवद्भावेन फलाश्रयत्वविवक्षा यदा तदा कर्मत्वं यदा तु भावनाम्प्रति भावनाभाव्यनिर्वर्तकत्वरूपपारिभाषिककरणत्वविवक्षा तदा करणत्वस्य सत्त्वेन अभेदेन तदन्वय्यर्थवाचकात्तृतीया भवति। अत एव भाष्यकृता क्रियाविशेषणानाङ्कर्मत्वमिति वचनन्न पठितम्। अपूर्ववचनसत्त्वे तु तेन बाधस्य प्राप्तेस्तृतीयाया अनुपपत्तिः स्यात्। ननु वाक्यभेदेन संज्ञाद्वयविधानेऽपि संज्ञाद्वयसमावेशः कथमत आह—योगविभागेनेति। एतेन यदि योगविभागो न स्यात्तदा द्वितीयवाक्ये कारकस्योद्देश्यत्वालाभः स्यान्न चैकयोगेऽनुवृत्तिर्भवतीति न्यायादिति ध्वनितम्। कारक इति सप्तमी तु प्रथमार्थे इत्याशयः। तदुक्तम्=कारक इत्यस्य कारकसंज्ञाविधायकत्वमुक्तम्, एवमपि=योगविभागेन संज्ञाद्वयविधानेऽपि, प्रथमवाक्ये ध्रुवमित्यस्योपादानं संज्ञिनिर्देशार्थम्। पर्यायापत्तिरिति। कारकसंज्ञयेत्यादिः, परोक्तं संज्ञाद्वयसमावेशप्रकारन्दूषयति—न चेत्यादिना। अयं हि तेषाम्भावः—व्यत्ययेन कारक इति सप्तमी प्रथमार्थ एव,तथा च कारकमित्येवैकं वाक्यम्। तत्र संज्ञिलाभस्त्वाक्षेपादिति। इयं च सञ्ज्ञान्वर्था—करोतीति कारकम्=निर्वर्तयतीत्यर्थः। निर्वर्तनञ्च साध्यत्वेन प्रतीयमानक्रियाया एवेति क्रियावाचकपदाक्षेपो भविष्यति, द्रव्यगुणयोः पदान्तरसमभिव्याहारेणैवार्थिकसाध्यत्वस्य प्रतीतिर्मनसा भवति। क्रियायास्तु शब्दतः साध्यत्वस्य प्रतीति-

देश, तुल्यास्यसूत्रभाष्ये "सर्वमुखस्थानमवर्णमेके इच्छन्ति। एवमपि व्यपदेशो न प्रकल्पते, 'आस्ये येषां तुल्यो देश इति'। व्यपदेशिवद्भावेन व्यपदेशो भविष्यति" इत्युक्त्या घटकत्वघटितत्वयोरिवाश्रयत्वस्याप्यतिदेशात्, विक्लित्तेरिव विक्लित्तित्वस्यापीच्छोद्देश्यताश्रयतया फलत्वेन तन्निष्ठेच्छीयोद्देश्यतावच्छेदकसमवायादेस्स्वरूपसम्बन्धस्य फलतावच्छेदकतया तेन सम्बन्धेन विक्लित्तित्वाश्रयस्य कर्मत्वसिद्धेः, फलस्य साध्यसाधनभावेन व्यापारेऽन्वयात् धात्वर्थप्रयोज्यत्वे सति धात्वर्थनिष्ठविशेष्यतानिरूपितविषयताश्रयत्वरूपफलत्वस्य साध्यत्वनिष्ठसांसर्गिकविषयतायां सत्त्वात् साध्यत्वरूपफलाश्रयतया कर्मत्वसिद्धेश्चेत्यलमतिविस्तरेण।

उक्तं कारकमपादानसंज्ञं स्यात् । पुनः कारकशब्दानुवृत्तिसामर्थ्यात्

पेण तेषां योगविभागानुवृत्तिभ्यां विनाऽपि कारकसञ्ज्ञाविधानेन पर्याये सिद्धे योगविभागेनानुवृत्त्या प्रतिवाक्यं सञ्ज्ञाविधानं समावेशार्थमिति वाच्यम्, आक्षेपक्रियाजनकमात्रस्य सञ्ज्ञापत्तौ नटश्रुतमित्यादौ स्वरवारणाय 'कारकाद्दत्त' इत्यादौ स्वरितपाठाद्याश्रयणेऽधिकगौरवादित्यत आह—पुनः कारकेति । विभक्तेष्वपादानमित्यादिषु तदनुवृत्त्या तदनुवादेन

रिति शेषः । तथा च क्रियाजनकमित्यस्य चाक्षेपाल्लाभ इति । योगविभागेनेति । 'ध्रुवमपाये' इति योगविभागेनेत्यर्थः । अनुवृत्त्या—कारक इत्यस्यानुवृत्त्या । आक्षेपे = महासंज्ञाबलादाक्षेपे । नटश्रुतमित्यादाविति । अत्र नटशब्दात्कारकवाचकादपि सम्बन्धसामान्यविवक्षायां षष्ठीङ्कृत्वा षष्ठीसमासः । कर्तरि षष्ठी तु न, नटशब्दात् 'न लोक' इति निषेधात् । श्रुतशब्दो हि नटेन श्रावितमित्यर्थविवक्षयाऽन्तर्भावितण्यर्थाच्छ्रुधातोः 'क्तिच्क्तौ च संज्ञायाम्' इत्यनेन गतिरूपे कर्मणि विवक्षिते कर्मक्तान्तो 'निष्ठा च द्व्यजनात्' इत्यनेन निष्ठान्तस्य द्व्यच आकारभिन्न आदिरुदात्त इत्यर्थकेनाद्युदात्तः । स्वरवारणायेति । समासस्येत्यन्तोदात्तत्वबाधक 'गतिकारक' इति कृदुत्तरपदप्रकृतिस्वरेणोत्तरपदाद्युदात्ते प्राप्ते तम्बाधित्वा 'कारकाद्दत्तश्रुतयोरेवाशिषि' इत्यनेन आशिषि संज्ञायां दत्तश्रुतयोरन्त उदात्त इत्यर्थकेनान्तोदात्तत्वम्प्राप्तं तद्वारणायेत्यर्थः । स्वरितपाठेति । कारकशब्दस्य स्वरितस्य पाठ आश्रयणीय इत्यर्थः । न च कारकशब्दे 'लिति' इतिसूत्रेणाकारस्य स्थाने उदात्ते तदेकवाक्यतापन्नशेषनिघातेन रेफाकारस्यानुदात्तत्वे 'उदात्तादनुदात्तस्ये'त्यनेन स्वरितत्वन्तस्य भवत्येवेति कथमेतद्दोषावसर इति वाच्यम्, "स्वरितेनाधिकारः" इति सूत्रघटकं स्वरितपदन्न 'समाहारः स्वरित' सूत्रबोध्यपरम्, किन्तु दोषविशेषपरम्, तादृशदोषविशिष्टरकारघटितस्य कारकशब्दस्य पाठः कार्य इत्याशयात् । आदिपदेन 'अधिकः कारोऽधिकारः' स च कारकाधिकारीयापादानादिसंज्ञाप्रवृत्तिरूपो यत्रास्ति तस्य ग्रहणङ्कार्यमित्येवंरूपस्तस्यान्यत्राश्रितस्य परिग्रहः । कारकत्वन्तु नटशब्दार्थेऽस्त्येव, "आख्यातोपयोगे" इति सूत्रे उपयोगग्रहणं प्रत्युदाहरणपरत्वेनास्योपन्यासस्येदृशस्थले करणात् । तत्र हि—"उपयोगे किम् ? नटस्य शृणोति" इत्युक्तम् ।

ननु कारकशब्दानुवृत्तिर्गृहस्य द्वारादागतः इत्यत्र गृहस्यापादानत्ववारणाय चरितार्था । किञ्च पुनः कारकेति मूलात्तत्रैव पुनरनुवर्तमानस्यावृत्तिरित्यर्थः प्रतीयते, स चायुक्तः आवृत्तेर्व्यर्थत्वादत आह—विभक्तेष्वपादानेति । एतेन तस्य मूलस्य विभक्तेषु पश्चादुच्चारितसूत्रेष्वित्यर्थ इति सूचितम् । तदनुवादेनेति । पूर्वसूत्रवदस्यापि कारकसंज्ञानिष्ठविधेयताशालिशाब्दबोधस्य जनकत्वेनेत्यर्थः । अपाये ध्रुव-

विशेषसंज्ञाविधानादित्यर्थः। समावेशफलं तु 'ग्रामेवासः' इत्यादावधि-

करकं सदपादानं स्यादित्येवंवचनकल्पनयेति तात्पर्यम्। तत्र कारकसंज्ञाया विहिताया एव पुनर्विधानेन तस्या अनुवादः सम्पद्यते "वनोर च" इति सूत्रेण ङीब्रयोर्विधानेऽपि ङीबनुवादेनेति व्यवहारवत्। केचित्तु पूर्वसूत्रविहितसंज्ञाविशिष्टस्योद्देश्यत्वकल्पनेन तदनुवादेनेत्युक्तमिति, तन्न, एकसंज्ञाधिकारबाधापरस्य पर्यायत्वापत्तेः। एवञ्च 'प्रकल्प्य चापवादविषयम्' इति न्यायेनोद्देश्यतावच्छेदककारकसंज्ञावैशिष्ट्यमपवादतत्संज्ञाविधानकाले प्रसिद्धमिति शङ्कायां अवकाशोऽपि न। न चैवं सति योगविभागो न कार्यः, प्रथमार्थसप्तम्यन्तस्य 'कारके' इत्यस्योत्तरसूत्रेष्वनुवृत्तिङ्कृत्वा 'अपाये ध्रुवङ्कारकं सदपादानम्' इति व्याख्यानङ्कार्यमिति समावेशो भविष्यतीति वाच्यम्, विधेयभेदे सति वाक्यभेदस्य सर्वतन्त्रप्रसिद्धत्वेन फलतो योगविभाग एव पर्यवसानम्, इतीह योगविभागस्य कथनमित्याशयात्। उत्तरसूत्रे कारकशब्दानुवृत्तिसामर्थ्यात्समावेश इति तु न युक्तम्, ब्राह्मणस्य पुत्रम्पन्थानम्पृच्छतीत्यादौ क्रियानन्वयिनाम्ब्राह्मणादीनाम् 'अकथितञ्च' इत्यनेन कर्मसंज्ञावारकत्वेन 'कारके' इति शब्दानुवृत्तेः सफलत्वात्। अत एव सर्वथाऽपादानत्वादीनां यत्राप्रसक्तिस्तत्र कारकसंज्ञाया 'आख्यातोपयोगे' इति सूत्रे—उपयोगपदोपादानेन सत्त्वात् "अकथितञ्च" इत्यनेन-'कर्मत्वम्प्राप्नोति' इत्याशङ्क्य दुह्यादिपरिगणनेन भाष्ये समाहितम्। उपयोगाभावादपादानत्वमपि न तादृशमुदाहरणन्नटस्य शृणोतीति।

यत्तु कैयटेन — कारकसंज्ञायां विभक्तसूत्रेण सत्यस्य प्रयोजनन्नटश्रुतमित्युक्तम्, नटश्रुतिर्नटश्रवणमित्यनयोरुपलक्षणम्। अत्र हि कारकसंज्ञाया असत्त्वे 'समासस्ये'त्यन्तो दात्तत्वम्, सति तु तस्मिन् 'गतिकारकोपपदात्कृदि'त्युत्तरपदप्रकृतिस्वरेणोत्तरपदाद्युदात्तत्वमिति विशेषस्य स्पष्टत्वात्, उभयोरपि नित्स्वरलित्स्वराभ्यामाद्युदात्तत्वात् नटश्रुतमित्येव तु न युक्तङ्कारकसंज्ञायाः सत्त्वेऽसत्त्वे वा तत्र विशेषस्यासत्त्वात्। तथा हि—तस्याः सत्त्वे गतिकारकोपपदादित्येतद्बाधक 'थाथादि' स्वरेणान्तोदात्तत्वस्य सत्त्वात्, तस्या असत्त्वे तु समासस्येत्यन्तोदात्तत्वबाधकयोः कृदुत्तरपदप्रकृतिस्वरथाथादिस्वरयोरप्राप्तावन्तोदात्तस्वरस्यैव प्राप्तेः। कैयटेन तु श्रुतेति समुदायस्य सञ्ज्ञात्वमाशीर्विषयत्वञ्चाभ्युपेत्य 'कारकाद्दत्तश्रुतयोरेवाशिषि' इत्यन्तोदात्तत्वमपादानादिसञ्ज्ञाया विषये एव जायत इति च स्वीकृत्योक्तम्। तच्च 'सञ्ज्ञायामनाचित' इति सूत्रात्सञ्ज्ञायामित्यनुवृत्तेः। वस्तुतस्तु तादृशसंज्ञाया अप्रसिद्धतया तस्योदाहरणस्योपलक्षणत्वमेव युक्तमिति ध्येयम्।

ग्रामे वास इति। 'शयवास' इति सप्तम्या अलुक्। 'कृदुत्तरपदप्रकृतिस्वरश्च' इति अस्य समासस्येत्यन्तोदात्तत्वबाधकं 'तत्पुरुषे तुल्यार्थेति' पूर्वपदप्रकृतिस्वरबाधकस्य 'गतिकारकोपपदात्कृत्' इति सूत्रविहितकृदुत्तरपदप्रकृतिस्वरस्य प्राप्त्या, वास-

विशेषसंज्ञाभिः सह समावेशः । अन्वर्था चेयं संज्ञा — करोतीति कारकमिति, तेन क्रियानन्वयिनो न भवति, ब्राह्मणस्य पुत्रं पन्थानं

---

करणत्वात्सप्तमी कारकत्वात्कृदुत्तरपदप्रकृतिस्वरश्चेति बोध्यम् । करोतीति । क्रियाञ्जनयतीत्यर्थः । तज्जनकं च प्रत्यासत्त्या तत्रैवान्वेति । क्रियानन्वयिन इति । तदन्वयप्रयोजकतज्जनकत्वाभाववत इत्यर्थः । ब्राह्मणस्य पुत्रमिति । अत्राकथितं चेत्यनेन पृच्छिकर्मपुत्रनिमित्तस्य कर्मत्वापत्तिः । क्रियाजनकत्वं तु न तस्य, पुत्रेणान्यथासिद्धेः । 'अकथितं च' इत्येतद् प्राप्तापादान-

---

शब्दस्य घञन्तत्वेन मध्योदात्तत्वमिति, नार्थः, गतिकारकेत्येतद्बाधकस्य 'थाथेति' सूत्रस्य प्राप्तेः, किन्तु कृदुत्तरपदप्रकृतिस्वरप्रवृत्तेर्निदानस्य कारकत्वस्य सत्त्वेन 'थाथ' इत्यनेनान्तोदात्तत्वमित्यर्थः, तत्रापि कारकादित्यनुवृत्तेः । न च 'भीत्रार्थानाम्भयहेतुरि' त्यादावुक्तरीत्या योगविभागासम्भवेन कथं सञ्ज्ञाद्वयसमावेश इति वाच्यम्, तेषु कारकशब्दस्यावृत्त्याऽर्थाधिकाराद्वाक्यभेदेन सञ्ज्ञाद्वयसमावेश इत्याशयात् । क्रियामिति । स्वभावतः साध्यत्वेन प्रतीयमानाम्प्रधानीभूतव्यापारात्मकक्रियामित्यर्थः । एवञ्च कारकस्य प्रत्यासत्त्या तत्रैवान्वय इत्याह—तज्जनकञ्चेति । ननु क्रियानन्वयिन इति मूलग्रन्थात् क्रियान्वयित्वङ्कारकत्वमिति प्रतीयते इति मूलविरोध इत्यत आह—तदन्वयेति । यदि क्रियान्वयित्वङ्कारकत्वं स्यात्तदा कारकाणां क्रियान्वयित्वमिति वाक्यस्योद्देश्यतावच्छेदकविधेययोरैक्यत्वेन 'घटो घट' इति वाक्यस्येवाबोधकत्वापत्तिरिति क्रियाजनकत्वङ्कारकत्वमित्येव युक्तमिति भावः । ब्राह्मणस्य पुत्रमित्यादिवाक्येऽतिप्रसङ्गमुपपादयति—अत्रेत्यादिना । निमित्तस्येति । अनेन दुहादिपरिगणनलक्ष्यस्योपयोगनिमित्तमित्यस्य सत्त्वन्ध्वनितम् । अन्यथासिद्धेरिति । अन्यथासिद्धस्य न कारणत्वम् ।

> "अन्यथासिद्धिशून्यस्य नियता पूर्ववर्तिता ।
> कारणत्वम्भवेत्"..................

इत्यभियुक्तोक्तेः । अत्रान्यथासिद्धिरन्यम्प्रतिपूर्वभाव इति न पुत्रजनकत्वघटितधर्मेण पूर्ववर्तित्वस्याकल्पनात् । किन्तु जनकम्प्रतीति तुरीया अवश्यक्लृप्तेति पञ्चमी वा ब्राह्मणस्य पुत्रम्पन्थानम्पृच्छतीत्यत्र प्रश्नपदार्थः — स्ववृत्तिजिज्ञासाज्ञानानुकूलशब्दोच्चारणरूपव्यापारात्मिका क्रिया, तद्विशेषणज्ञानाश्रयत्वात्कारकत्वम्पुत्रस्य, पथस्तु जिज्ञासाविषयत्वात्पृच्छिकर्मत्वन्तदाश्रयेण स्वविषयकज्ञानाश्रयत्वम्ब्राह्मणस्येति स्वसमवेतज्ञानविषयत्वसम्बन्धेन कर्मयुक्तत्वम् । एतेन प्रश्नक्रियाजनकत्वेन ब्राह्मणे कर्मत्वम्प्राप्नोतीति शङ्का निरस्ता । नन्वकथितञ्चेति सूत्रे ऽकथितशब्दोपादेन यत्रापादानत्वादीनाम्प्रसक्तौ तदविवक्षायामत्र तस्य प्रवृत्तिरिति कथन्तस्य सूत्रस्य प्राप्तिरत आह—अकथितञ्चेत्ये-

पृच्छतीति, इह हि ब्राह्मणः पुत्रविशेषणम् न तु क्रियान्वयी।

यद्वा कारकशब्दः क्रियापरः, करोति कर्तृकर्मादिव्यपदेशानिति व्युत्पत्तेः। तथा च अपादानादिसंज्ञाविधौ क्रियायामित्यस्योपस्थित्या क्रियान्वयिनामेव तत्तत्संज्ञा विधीयन्ते। "कारकाद्दत्तश्रु-

त्वाद्यविवक्षायां सर्वथा तदप्राप्तौ च प्रवर्त्तते। अत एवास्य न क्रियान्वय इत्याह—न त्विति।

करोतीति। स्वजनकत्वेनैतान् व्यपदेशान् करोतीत्यर्थः। तदुक्तं भाष्ये ÷ यावद् ब्रूयाद् क्रियायामिति तावत्कारके इति'। क्रियायां विषय इत्यर्थः विषयत्वं च जनकत्वेनेति बोध्यम्। क्रियान्वयिनामिति। क्रियान्वययोग्यतावच्छेदकक्रियाजनकत्ववतामित्यर्थः। गृह्यते इति। अत एव नटश्रुतमित्यादौ न दोषः। क्रियान्वयीत्यर्थ इति। तदन्वययोग्यतावच्छेदकक्रियाजनकत्ववदित्यर्थः। यथाश्रुतं तु न युक्तम्, कारकाणां भावनान्वय

तदिति। तदप्राप्तौ = अपादानत्वादीनामप्राप्तौ। अत एवाकथितशब्दस्यासङ्कीर्तितपरता वक्ष्यमाणा साधु सङ्गच्छते। सर्वथा तदविवक्षयामपि तस्य सूत्रस्य प्रवृत्तौ प्रमाणन्तु 'नटस्य श्रृणोति' इत्यादौ सर्वथा तदविवक्षाविषयेऽस्य सूत्रस्य प्राप्तिमाशङ्क्य, दुहादिपरिगणनेन समाधानपरम्भाष्यम्। अत एव = ब्राह्मणस्योक्तकारकत्वाभावादेव। अस्य = ब्राह्मणस्य, पुत्रस्य तु जिज्ञासाविषयार्थज्ञानानुकूलव्यापारस्य पृच्छार्थत्वयां तद्घटकज्ञानजनकत्वेन। एवञ्च पुत्रपदार्थस्याश्रयतया ज्ञानेऽन्वयः।

स्वजनकत्वेन = क्रियाजनकत्वेन। एतान् = कर्त्रादिरूपान्। द्वितीयव्याख्यायाम्भाष्यसम्मतिमाह–तदुक्तमिति। सप्तम्यन्तार्थान्वय्याकाङ्क्षाशान्तये आह–विषय इति। अत्र विषयता न ज्ञानादिसम्बन्धरूपा क्रियायास्तादृशविषयत्वाप्रसिद्धेः, किन्तु जनकतारूपैव। क्रियायामिति। सप्तम्यर्थो निरूपितत्वम्, तस्य जनकपदार्थैकदेशजनकतायामन्वयः। ध्रुवमित्यादिसूत्राणामपाये यद् ध्रुवक्रियाजनकमिति रीत्यार्थः कार्यः। पूर्वकल्पवदत्र पक्षे न वाक्यभेदादिकल्पनेति लाघवम्। अत्र पक्षे पूर्वोक्ताभिप्रायेण व्याचष्टे–क्रियान्वययोग्यतेत्यादि। अत एव = स्वरितत्वप्रतिज्ञया कर्त्रादिषट्कस्य ग्रहणादेव। नटश्रुतमित्यादाविति। गीतद्वारा नटस्य क्रियाजनकत्वेऽपि उक्तषट्कभिन्नत्वेनातिप्रसङ्गो नेति भावः। क्रियान्वयीति। यथाश्रुतमूल-

१ अयुक्तत्वे हेतुमाह–कारकाणामिति—अयम्भावः—उद्देश्यतावच्छेदकरूपेणोद्देश्यज्ञाने सत्येव किञ्चिद्विधीयते। उद्देश्यतावच्छेदक–विधेययोरैक्ये उद्देश्यतावच्छेदकस्य ज्ञातत्वात्तत्रापूर्वबोध्यत्वरूपविधेयत्वासम्भवः। यथा 'घटत्ववतां घटत्ववत्ता' इत्यत्र घटत्वस्यैवोद्देश्यतावच्छेदकतया तस्य विधेय-

वाक्यत्वं च भाष्यवार्तिकादिसकलसंमतम् । न च तिङन्तस्थले क्रियाविशिष्टक्रियान्तरबोधो न जायत एवेति वाच्यम् , तथैव व्युत्पन्नानां तादृशबोधस्य दुर्वारत्वात् । ईदृशेऽर्थे साधुत्वं नेष्टमित्यपि न, साधुत्वानुशासनार्थं प्रवृत्तेरेव तस्य स्वीकारात् , धातुसंबन्धाधिकारव्युत्पादिते 'पुरीमवस्कन्द' इत्यादौ तस्यावश्यकत्वाच्च । ननु

त्वविशिष्टघटस्य कर्मत्वे प्रतिपादनीये नीलं घटमित्यादौ द्वितीयानापत्तेः । श्रुत्वेत्यादि त्वार्षमित्यलं मुनिविरुद्धविचारेण । क्रियाप्रधानमित्यत्र क्रियायाः प्राधान्यमाख्यातघटकप्रत्ययार्थापेक्षयैव बोध्यतेऽतो दृश्यादिकं प्रति धावनादेर्विशेषणत्वेऽपि न क्षतिरिति दिक् । भाष्येति । भूवादिसूत्रस्थं भाष्यम्,

तत्रायमेव प्रकारो बोध्यः । अत्र साधकन्दृष्टान्तमाह—श्रुत्वेत्यादिना । द्वितीयानापत्तेरिति । तस्माद्विशिष्टस्याप्रातिपदिकत्वेऽपि वाक्यावयवस्य प्रातिपदिकस्य तत्तच्छक्तियोग्यतायां तत्तद्बोधिका विभक्तिर्भवत्येवेति कल्पनीयम् । अत एव कटम्भीष्मम् उदारं शोभनमित्यत्र द्वितीयोपपादकभाष्यसङ्गतिः । तस्माद्विशेष्यवाचकाद्यत्र द्वितीयादिविभक्तिस्तत्र तत्समानाधिकरणविशेषणवाचकेभ्योऽपि सा भवति । राज्ञः पुरुषस्पश्येत्यत्र तु राज्ञ इति व्यधिकरणमेव । श्रुत्वेत्यादेरुपपत्तिमाह—आर्षमिति । एवञ्चार्षत्वाद्व्यत्ययेन द्वितीयास्थाने प्रथमा पूर्वसवर्णदीर्घाप्रवृत्तिरप्यत एव बोध्या ।

पश्य लक्ष्मण पम्पायां बकः परमधार्मिकः ॥

इत्यादावपीयमेव गतिः सति सम्भवे, नो चेदसाधुत्वमेव । नच पश्य मृगो धावतीत्यादौ क्रियाया एव कर्मत्वे तण्डुलमपाक्षीद्देवदत्तोऽवेहीत्यादौ तण्डुलादीनां 'कर्मणा यमभिप्रैति स सम्प्रदानमि'ति सूत्रेण सम्प्रदानसञ्ज्ञायाञ्चतुर्थी स्यादिति वाच्यम् , एतादृशे स्थले स्वार्थे परिपूर्णस्याऽर्थान्तराकाङ्क्षेति न्यायेनान्तरङ्गत्वादेकक्रियासम्बन्धेन कर्मत्वादिकम्भवत्येव । अत एव घटन्न पश्यामि इत्यत्र पश्चान्नञर्थान्वयः पुरीमवस्कन्देत्यादौ पुर्यादिपदोत्तरं द्वितीयाङ्कृत्वा तद्विशिष्टार्थस्यास्वास्थ्यपदार्थान्वय इत्याशयादित्याशयेनाह—अलमिति । धावनादिक्रियायाः क्रियान्तरम्प्रति विशेषणत्वेऽपि न यास्कवचनविरोध इत्याशयेनाह—क्रियाप्रधानमित्यत्रेति । नैयायिकानुयायिनस्तु पश्य मृगो धावतीत्यादौ धावनानुकूलकृतिविशिष्टमृगादेर्दर्शनक्रियाम्प्रति कर्मतासम्बन्धेन विशेषणत्वम् । नच नामार्थधात्वर्थयोर्भेदेनान्वयबोधो व्युत्पन्न इति व्युत्पत्तिविरोधः, विशिष्टस्य नामार्थत्वाभावात् । नच शुभ्रस्तण्डुलः पचतीत्यप्येवं सति स्यादिति वाच्यम्, प्रामाणिकप्रयोगस्थल एवैतादृशकल्पना न तु सर्वत्रेति स्वीकारात् । वृत्त्यनियामकसम्बन्धत्वाभावप्रतियोगितावच्छेदकत्वस्वीकाराद्राक्षसो धावति न पश्येत्यादौ नानुपपत्तिरि-

सिद्धान्ते आख्यातवाच्यक्रियाया अपि कर्तृत्वकर्मत्वस्वीकारे तस्या असत्त्वरूपत्वं भज्येतेति चेन्न, लिङ्गसङ्ख्ययोः कर्तृकर्मेतरकारकस्य चाभावमात्रेण तथात्वोपपत्तेः। कर्मत्वस्य प्रकारतया अनभ्युपगमाद्वेत्यन्यत्र विस्तरः। *अभिहिते त्विति*। नन्वेवं 'पक्वमोदनं भुङ्क्ते' इत्य-

पच्याद्यः क्रिया भवतिक्रियायाः कर्त्र्यो भवन्तीति तत्रोक्तम्। वार्तिकम्—शतृविधायकस्थम्। तस्य=क्रियाविशिष्टक्रियाबोधस्य। कर्मत्वस्वीकारे इति। क्रियान्तरनिरूपिततत्स्वीकारे इत्यर्थः। कारकस्य=करणादिकारकशक्तेः। हरिं नमेच्चेत्सुखं यायादित्यादौ हेतुहेतुमद्भावेनान्वयो न क्रियाकारकभावेनेति न दोषः। स्ववाचकधात्वर्थं प्रति तु कर्मत्वान्वयः करणत्वान्वयश्च नासत्त्वरूपताप्रतिबन्धकः, शोभनं पचति, ज्योतिष्टोमेन यजेतेत्यादौ दर्शनात्। अन्य-

स्याहुः। तन्न, तादृशकल्पनायामपि भावप्रधानमाख्यातमित्यादिवाक्यस्य भाष्यादिसम्मतार्थकस्य विरोधो दुर्वार एवेत्याशयेनाह—दिगिति। शतृविधायकस्थमिति। तच्च प्रदर्शितमधस्तात्। ननु धातूपस्थितफलव्यापारयोरन्यतरस्यान्यतरम्प्रति कर्मत्वकरणत्वकर्तृत्वस्य स्वीकारादिदन्नासत्त्वरूपताप्रतिबन्धकमत आह—क्रियान्तरेति। तथा च तयोरन्यतरस्य परस्परम्प्रति तथात्वेऽपि क्रियान्तरनिरूपितन्तत्त्वम्प्रतिबन्धकं स्यादेवेति भावः। ननु कारकशब्दस्य शक्तिमत्परत्वे न पूर्वपक्षविरोधापत्तिरत आह—करणादीति। भिन्नपदोपात्तक्रियान्तरनिरूपितेत्यादि। अत एव वक्ष्यति स्ववाचकेत्यादि। ननु क्रियान्तरम्प्रति क्रियायाः करणत्वं हरिन्नमेदित्यत्र भुक्त्वा तृप्तो न पीत्वेत्यत्र च नमनभोजनयोर्दृष्टमेवेत्यत आह—हरिन्नमेदित्यादि। दर्शनादिति। एवञ्च पृथक्पदोपात्तक्रियानिरूपितकरणत्वाद्ययोगित्वमसत्त्वरूपत्वमिति फलितम्। सर्वत्र=तद्वाचकविभक्तेः सत्त्वेऽसत्त्वे वा। आद्यमेवेति। इदञ्च सामान्यतोऽभिहितम्। वस्तुतस्तु लिङ्गसङ्ख्यानन्वयित्वङ्करणादिशक्तिरूपेण भिन्नपदोपात्तक्रियायामनन्वयित्वं वाऽसत्त्वरूपत्वमिति लक्षणद्वय-

१ तथा चोक्तं हरिणाः—

क्रिया न युज्यते लिङ्गक्रियानाधारकारकैः।
असत्त्वरूपता तस्या इयमेवावधार्यताम्॥ इति॥

ननु सर्वेषां कारकाणां क्रियावत्त्वनियमात् क्रियानाधारेत्यसङ्गतमिति चेन्न, क्रियापदेन धातुवाच्यफलव्यापारयोरेव ग्रहणेन तदाधारत्वस्य कर्तृकर्मणोरेव सत्त्वेन तदितरकारकाणां क्रियानाधारत्वाक्षतेः। तथा च लिङ्गानन्वयित्वे सति कर्तृकर्मेतरकारकानन्वयित्वमसत्त्वभूतत्वमिति फलितम्।

२ स्वस्य=विक्लित्त्यादिरूपफलादेर्वाचको यो धातुस्तदर्थं प्रति तदर्थव्यापारादिकं प्रतीत्यर्थः। तथा च 'भिन्नपदोपात्तक्रियानिरूपितकरणत्वाद्ययोगित्वमेवासत्त्वभूतत्वम्' इति भावः।

त्रापि द्वितीया न स्यादिति चेत्, मैवम्। इह हि पचिभुजिनिरूपिते द्वे कर्मत्वशक्ती। तत्र प्रधानक्रियानिरूपितामनभिहितां शक्तिमादाय द्वितीयोत्पत्तेः। उक्तं च हरिणा।

प्रधानेतरयोर्यत्र द्रव्यस्य क्रिययोः पृथक्।
शक्तिर्गुणाश्रया तत्र प्रधानमनुरुध्यते॥
प्रधानविषया शक्तिः प्रत्ययेनाभिधीयते।
यदा गुणे तदा तद्वदनुक्ताऽपि प्रतीयते॥ इति॥

---

त्रेति। कर्मत्वस्य सर्वत्रै संसर्गतैवेति भाष्यसंमतपक्षे त्वौद्यमेव सारम्। अभिहिते त्विति। तिङादिभिः कर्मादिशक्तेरभिधाने प्रातिपदिकस्योद्भूततच्छक्तिकेऽर्थे वर्त्तमानत्वाभावाद् द्वितीयादेः कर्मादिशब्देभ्य इत्याप्राप्तिरिति भावः। न स्यादितीति। पचधातूत्तरनिष्ठयाऽभिधानादिति भावः। गुणाश्रया=गुणनिरूपिता। प्रधानम्=प्रधानक्रियानिरूपितां शक्तिम्। अनुरोधमेव विशदयति—प्रधानविषयेति। गुणेऽनुक्ताऽपि तद्वदुक्तवत् प्रतीयते। तुल्यन्यायाद्गुणनिरूपिता उक्तापि प्रधाननिरूपितानुक्तशक्तिवत्प्रकाशत इति। अत एव 'प्रासादे आस्ते' इत्यादौ सदिनिरूपिताधिकरणत्वस्योक्तत्वेऽप्यासिनिरूपितस्यानभिधानेनानभिहितत्वात्सप्तमीसिद्धिः। इदं च 'स्वादुमि णमुल्'ति सूत्रे भाष्ये स्पष्टम्। तत्रत्यभाष्यार्थानुवादिन्यौ चेमे हरि-

---

मेव बोध्यम्। कारकस्य विभक्त्यर्थत्वपक्षे उक्तार्थानामिति न्यायेनाभिधानस्थले विभक्तेरप्राप्तावपि सङ्ख्याविभक्त्यर्थं इति पक्षे सूत्रस्यावश्यकतोक्तैवेत्यत आह—तिङादिभिरिति। भाष्यकृत्परिगणनलब्धमिदम्। उद्भूतेति। उद्भूतकर्मत्वादिशक्तिकेऽर्थे वर्तमानादित्यर्थे ऽनभिहित इति सूत्रात्तात्पर्यग्राहकमिति भावः। उद्भूतत्वञ्च तिङाद्यद्योत्यत्वम्, प्रथमा तु प्रातिपदिकार्थस्याभिधानेऽपि भवत्येव। अत एवाभिहिते प्रथमेति वार्तिकमभिहितम्। ततः सोऽर्थोऽन्तर्भूतः प्रातिपदिकार्थः सम्पन्न इति भाष्यञ्च सङ्गच्छते। अभिधानादिति। ओदनपदार्थगतकर्मत्वशक्तेरित्यर्थः। प्रधानविषयेत्यादिना प्रदर्शितानुरोधेन प्रक्रान्ताशङ्कासमाधानासम्भवादाह—तुल्यन्यायादिति। अत एव=उक्तानुरोधस्य सत्त्वादेव। सदिनिरूपितेति। प्र आङ्पूर्वात्सद् धातोरधिकरणे घञ्,

---

१ कर्मत्वादिवाचकविभक्तेः सत्त्वेऽसत्त्वे चेत्यर्थः।

२ ननु सर्वत्र कर्मत्वादेः संसर्गतया मानस्वीकारे हर्यादिपदार्थस्याप्यसत्त्वापत्तिरत आह—आद्यमेवेति—भिन्नसंख्यानन्वयित्वमेवेत्यर्थः। एतेन लक्षणद्वयं सूचितम्। लक्षणैक्ये तु विशेष्यविशेषणभावस्य विनिगमनाविरहेण व्यत्यासे गौरवं स्यादिति भावः।

अत एव पक्वौदनो भुज्यते इत्यत्र भुजिप्रत्ययेनाभिहिते प्रथमैव पचेरप्राधान्यात् । वस्तुतस्तु पक्त्वा भुज्यते इत्यादौ कर्मणः पचिभु-

कारिके इत्यन्यत्र प्रपञ्चितम् । एवमुभयनिरूपितशक्तेरनभिधाने गुणक्रिया-निरूपितशक्तेरप्यभिधायिनी विभक्तिर्भवति । यथा ग्रामाय गन्तुमिच्छति ग्रामं गन्तुमिच्छतीति च । इष्यते ग्रामो गन्तुमित्यादौ प्रधानेषिक्रियान्नि-रूपितशक्तेरभिधाने गुणनिरूपिताया अप्यभिधानान्न कदापि चतुर्थीद्वि-तीये । गमेर्ग्रामः कर्म इषेस्तूभे कर्मणी इति तत्सूत्रे भाष्ये स्पष्टम् । एवं चोभयत्रप्यावृत्त्या शाब्दोऽन्वय इत्येव प्रतीयते, अत्र प्रयोगे गमिक्रिया-पेक्षे द्वितीयाचतुर्थ्यौ न कदा ऽपि भवत इति कैयटात् । एवं चैतद्विरो-धादोदनं पक्त्वेत्यपीष्टमेवेति यत्केनचित् प्राचीनेन वस्तुतस्तु पक्त्वेत्या-दिना साध्वित्यन्तेनोक्तं तदतितुच्छमिति बोध्यम् । स्वरूपन्याक्रियेति न्यायेन तथैवानुवदति–वस्तुतस्त्वित्यादिना । अत एव 'स्वादुमी'ति सूत्रे भाष्ये तुमुन्क्त्वाणमुलादयः स्वान्वयिना समभिव्याहृतेनानुप्रयुज्यमानेन

आदिना शयने आस्त इत्यस्य सङ्ग्रहः । "स्वादुमि णमुलि" इति सूत्रे भाष्ये इति । इदमनुपदमेव व्यक्तीभविष्यति । अनुरोधमेव विशदयति-एवमुभयेति । इति चेति । गत्यर्थकर्मणीति द्वितीयाचतुर्थ्यौ । प्रकृतार्थं भाष्यान्तरतो द्रढयति—इष्यत इति । न कदापि गन्तुमित्यत्र ग्रामपदार्थस्यान्वयकाले एतेनार्थान्वयः । शाब्दा-न्वयो वोभयथा चतुर्थीद्वितीययोरप्रवृत्तिर्ध्वनिता । स च शाब्दोऽन्वयः सकृच्छ्रुतस्य न सम्भवतीत्यावृत्तिरपि सूचिता कदापीत्यस्योपादानात् । सन्सूत्र इति । सन्विधायके धातोः कर्मण इति सूत्र इत्यर्थः । वस्तुतस्त्वित्यादिना यन्मनोरमायामभिहितन्त-त्स्वादुमीतिसूत्रस्थभाष्यविरुद्धमिति केचित्, तन्न, मनोरमाकारस्य तत्र निर्भराभावादिति सूचयन्नाह-एवञ्चैतद्विरोधादिति । अत्र प्रयोग इत्यारभ्य यत्कैयटेनोक्तन्तद्विरो-धात् । यद्यपि स्वादुमीतिसूत्रस्थभाष्यमादावेव वक्तुमुचितन्तथापि कैयटोक्तमपि सप्र-माणमिति बोधयितुं तद्भाष्यमाह—अत एवेत्यादिना । उक्तार्थस्येष्टत्वादेवेत्यर्थः । "आ च तुमुनः समानाधिकरणे प्रत्यया" इति हि तत्र वार्तिकन्तस्य व्याख्यानपरम्भा-ष्यमाह–तुमुन् क्त्वेति । तुमुनस्तत्रत्यमुदाहरणं भोक्तुमोदनः पच्यत इति वार्तिक-स्थं यत्समानाधिकरणपदन्तदर्थस्य प्रतियोग्याकाङ्क्षाशान्त्यर्थम्पूरणेन यद्भाष्यकृतोक्तन्त-दाह-स्वान्वयिनेति । तुमुनादिप्रकृत्यर्थान्वयिनेत्यर्थः । एतस्यैव विवरणं समभिव्या-

१ 'आ च तुमुनः समानाधिकरणे' आ च तुमुनः प्रत्ययाः समानाधिकरणे भवन्तीति वक्तव्यम् । केन ? अनुप्रयोगेण । किं प्रयोजनम् ? स्वादुङ्कारं यवागूर्भुज्यते देवदत्तेनेति देवदत्ते तृतीया यथा स्यात् । .........तत्तर्हि वक्तव्यमा च तुमुनः समानाधिकरणे इति, न वक्तव्यम्, अव्ययकृतोभावे

जिभ्यां न युगपच्छाब्दोऽन्वयः किं त्वन्यतरेण शाब्दोऽपरेणार्थः। तत्र च प्रथमाद्द्वितीये व्यवस्थिते एव। तद्यथा पक्त्वा भुज्यते ओदनः,

समानाधिकरणे तद्वाच्यकारके वक्तव्याः। तेन पक्त्वौदनो भुज्यत इत्यादावोदने द्वितीया न। अन्यथा कृत्वादस्य कर्त्तर्यापत्तौ पचिक्रियाकर्मत्वस्यानभिधानात्सा स्यादेवेत्युक्त्वा न वक्तव्यमव्ययकृतां भावे विधानादित्युक्तम्। अनेन हि भाष्येणोभयत्र शाब्दान्वय एव लभ्यते। तत्र वचनारम्भ एषां प्रयोगाणामुपपत्त्यभावात् प्रत्याख्यानेऽपि ह्युक्तरीत्या सनादिसूत्रस्थभाष्यसम्मत्याऽभाव एवोचितः। एवं च कैयटोक्त क्षुधं प्रतिहन्तुं शक्यमित्यप्यसाध्वेव, वचनारम्भेऽसिद्धेः। तुमुनाद्यन्वयिक्रियानिरूपितशक्तेरयं स्वभावो यत्स्वसमानाधिकरणगुणभूततुमुनादिप्रकृत्यर्थनिरूपितशक्तेः स्ववदभिहितत्वेनानभिहितत्वेन वा प्रकाश इति सुधियो विभावयन्तु।

अन्यतरेण सहेति। इदं प्रागुक्तवस्तुतस्त्वित्यादिरीत्योक्तं तद्वदेवेति बोद्ध्यम्।

इतेनेत्यारभ्यानुप्रयुज्यमानेनेत्यन्तम्। आख्यातेनेति शेषः। समानाधिकरण इति। समानमेकं यदधिकरणन्द्रव्यरूपङ्कारकन्तस्मिन्नित्यर्थः। अत एवाह—तद्वाच्येति। एवञ्चाख्यातवाच्यकारकाभिन्नं यत्क्त्वादिप्रकृत्यर्थकारकन्तस्मिन्निति फलितम्। कारकभेदे तु गुणीभूतक्रियाकर्मत्वबोधिका द्वितीया भवत्येव पक्त्वौदनङ्ग्रामो गम्यत इति यथा। पूर्वोक्तवचनारम्भफलमाह—तेनेति। द्वितीया नेति पच्धात्वर्थकर्मत्वबोधिकेति शेषः। न वक्तव्यमिति। उक्तार्थकन्तद्वार्तिकमित्यर्थः। विधानादिति। अव्ययकृतो भावे इति वचनादित्यर्थः। लभ्यते इति। अन्यथा आरम्भप्रत्याख्यानयोः फलभेदापत्त्या तदसङ्गतिः स्यात्, एतदेवोपपादयति—तत्रेति=आरम्भप्रत्याख्यानयोर्मध्ये, एषाम्=मूलोक्तानाम्, सनादीति। आदिना स्वादुमीत्यस्य सङ्ग्रहः। असाध्वेवेति। अत एव क्षुत्प्रतिहन्तुं शक्यमिति भाष्यकारीयप्रयोगस्य सङ्गतिः। एवञ्चोक्तभाष्यद्वयबलाद्यत्फलितं तद्दर्शयति—तुमुनाद्यन्वयीति। स्वसमानाधिकरणेति। अत्र स्वपदं शक्तिपरम्।

तद्वदेवेति। खण्डनीयमेवेत्यर्थः। नैवमित्युक्त्वा शाब्दबोधवैलक्षण्यसूचनाय

भवन्तीति भावे भविष्यति, किं वक्तव्यमेतत्, नहि, कथमनुच्यमानं गंस्यते, तुमर्थे इति वर्तते, तुमर्थश्च कः? भावः' इति भाष्येण आ च तुमुनः इति वार्तिकसत्त्वे भुज्यते इत्यनेन सामानाधिकरण्याय णमुलः कर्मणि विधाने यवागूपदाद् द्वितीया नैव प्राप्नोति, णमुलादि प्रकृत्यर्थेऽन्वये द्वितीयास्वीकर्तृमते च 'स्वादुंकारं यवागूं भुज्यते' इत्यस्य दुर्वारतयाऽऽरम्भप्रत्याख्यानयोः फलभेदः स्यादिति फलभेदवारणायोभयत्रावृत्त्या शाब्दान्वयेन द्वितीया नैव भवतीति भावः।

किं पक्त्वा अर्थादोदनम् । यदा तु ओदनं पक्त्वा भुज्यते तदा भुज्यत इत्यत्रार्थादोदन इति गम्यते । एवं च विवक्षाभेदेन पूजयितुं शक्यत हरिर्हरिं वेत्युभयं साधु । *प्राप्तानन्द इति* आनन्दकर्तृकप्राप्ति-कर्मीभूत इत्यर्थः ।

यदुक्तं प्रायेणेति तस्य फलमाह—*क्वचिदिति । विषवृक्ष इति* । यदि तु कर्थचिच्छिद्योरन्यतरेण सह कर्मतया ऽन्वयो विवक्ष्यते तदा द्वितीया स्यादेवेति ध्येयम् । *तृणं स्पृशतीति* । यथा स्पृश्यमानस्य ग्रामादेरी-प्सितस्य क्रियया योगस्तज्जन्यसंयोगादिफलाधारत्वात् तथैवानी-प्सितस्य तृणादेरपीति भावः ।

स्यादेतत् ÷ धातूपस्थाप्यफलशालि कर्मेत्येवाऽस्तु । किमीप्सि-तानीप्सितयोः पृथक्कथनेनेति चेत् , मैवम् , अग्नेर्माणवकं वारयती-

मैवमिति । ग्रामं गच्छतीत्यादौ ईप्सिततमत्वोपलक्षितमुद्देश्यत्वं भासते, एतत्सूत्रबोध्यकर्मत्वशक्तेरुद्देश्यतासमानाधिकरणत्वात् । अत एव 'कर्मणा यमभिप्रैती'ति सूत्रे कर्मणेत्यस्याभावे गां ददातीत्यत्र गोरप्युद्देश्यतया तत्रैव पर्यायेण सम्प्रदानसञ्ज्ञा स्यादिति भाष्यकैयटोक्तं सङ्गच्छते । चतुर्थी

कर्त्तुरीप्सिततममित्यस्यारम्भ इति नोक्तमिति न्यूनतापरिहाराय स्वयमाह—ग्राममिति । ईप्सिततमत्वोपलक्षितमिति । इच्छार्थकसन्प्रत्ययसत्त्वात् तेनोद्देश्यत्वं लक्ष्यते । अत एव=उद्देश्यत्वस्य भानादेव । गामिति । अस्य विप्रायेत्यादिः । गोरपीत्यपिना विप्र-समुच्चयः । तत्रैव=गव्येव, अयम्भाव ÷ काकेन पुण्डरीकादिकं यथा परिचाय्यते तेन गृहविशेषस्य प्रतीतिस्तथा ईप्सिततमशब्दस्येच्छार्थकसन्प्रत्ययघटितत्वात्तेनोद्देश्यत्वमुप-लक्ष्यते । अत एव प्रकृतधात्वर्थप्रधानीभूतव्यापारजन्यप्रकृतधात्वर्थफलाश्रयत्वेनोद्देश्य-त्वमीप्सिततमत्वमिति कथयन्ति । तथा च विप्राय गान्ददातीत्यत्र स्वस्वत्वध्वंसविशिष्ट-परस्वत्वोत्पत्त्यनुकूलव्यापारस्य धात्वर्थतया इच्छारूपतादृशव्यापारस्य विप्रविषयकत्वेन विप्रस्य सम्प्रदानसंज्ञा जायते कर्मणेत्यस्य सत्त्वे । तदभावे तु यमभिप्रैति यं फलाश्रय-त्वेनाभिसम्बन्धुमिच्छतीत्यर्थः स्यात् । तथा च गोः सम्प्रदानत्वस्य प्राप्तिरिति दाधातुप्रयोग एव सम्प्रदानसंज्ञा भवतीत्यस्यानाश्रयणाद्धात्वन्तरार्थयोगेऽपि तस्य प्राप्तिरित्याशयेनाह—पर्यायेणेति । तदनाश्रयणे मानन्तु प्रकृतभाष्यमेव, यमभिप्रैतीत्यत्र कर्तृबोधकतिङ्-

१ परे तु निपातेनानभिधानस्य कारकविभक्तिप्रयोजकत्वे न फलम्, विषवृक्ष इत्यत्र तु 'छेत्तुम्' इत्यत्र तुमुनः साधुत्वाय क्रियाध्याहार आवश्यक इति 'समानकर्तृकेषु' इत्यनेन तुमुन्विधानाय 'इष्यते'

त्यत्र 'वारणार्थानाम्' इति सूत्रेण माणवकस्यापादानत्वं प्राप्तं तद्बाधनाय 'कर्तुरीप्सिततमम्' इति वक्तव्यमेव। एवं च द्वेष्योदासीनयोः

उद्देश्यत्वं वाच्यं तत्समानाधिकरणशक्तिर्वेति सर्वसंमतमिति भावः। फलान्तरमप्याह—अन्नेरिति। ईप्सिततमपदाभावे वारणार्थानामित्यस्यैव

सत्त्वात्केनाभिप्रैतीत्याकाङ्क्षायां स्वनिष्ठक्रिययेति प्रतीतं स्यात् तया क्रियया प्रथमतो गौरभिप्रेयते पश्चाद्गवा विप्र इति गोरन्तरङ्गत्वात्सम्प्रदानसंज्ञाप्राप्तिः । एतेन विप्रे सम्प्रदानसंज्ञा चरितार्था, धात्वन्तरार्थयोगे कर्मत्वञ्चरितार्थमिति परत्वाद्गोः कर्मसंज्ञैव स्यादिति कर्मण एव स्यादिति भाष्यस्य तात्पर्यमिति ध्वनितम् । उद्देश्यत्वञ्च फलात्मकधात्वर्थे ग्राह्यम् । क्रियायाः फलेच्छापूर्वकेच्छाविषयत्वात् । तदाश्रयत्वाद्ग्रामादेरप्युद्देश्यत्वव्यवहारः। चतुर्थ्या उद्देश्यत्वार्थकत्व एवोक्तभाष्यसङ्गतिरित्याशयेनाह—चतुर्थ्या इति । शक्तिः=सम्प्रदानत्वशक्तिः । उद्देश्यत्वन्तु उद्देश्यपदशक्यताऽवच्छेदकपदार्थान्तरम् । यत्तु—इच्छाविषयत्वमेवोद्देश्यत्वमिति तन्न, घटो द्रव्यमित्यादौ उद्देश्यविधेयभावेनान्वय इति व्यवहारस्येच्छाविषयत्वस्याप्रतीतावपि दर्शनात् । उद्देश्यत्वमेव चतुर्थीवाच्यमिति प्राचीनमतन्तत्समानाधिकरणं सम्प्रदानत्वमिति प्राचीननवीनोभयसम्मतमित्याशयेनाह—सर्वसम्मतमिति । एतेन प्रघट्टकेनोद्देश्यत्वस्य भानार्थङ्कर्तुरीप्सिततममिति सूत्रमनुद्देश्यत्वभानार्थन्तथायुक्तमितिसूत्रमितिसूत्रकाराशयो वर्णितः । विप्राय गान्ददातीति शब्दाद्विप्राभिन्नसम्प्रदाननिष्ठोद्देश्यतानिरूपकन्दानमिति सम्प्रदानविप्रीयं विप्रसम्प्रदानकमिति वा बोधः । फलान्तरम्=पृथक्सूत्रद्वयोपादानस्य फलान्तरम् । यदुक्तम्मूले माणवकस्यापादानत्वम्प्राप्तमिति तदाशयमाह—ईप्सिततमपदाभाव इत्यादिना। तदपवादत्वापत्तेः। वारणार्थकधातुयोगे ईप्सितस्यापि कर्मत्वं प्राप्तमितिनिरवकाशतया कर्मसंज्ञापवादत्वापत्तेरित्यर्थः । तत्रापि="वारणार्थाना" मिति सूत्रेऽपि । अत एव कूपादन्धं वारयतीत्यादौ कूपादेरपादानत्वस्य

इत्यध्याहरणीयम् । तथा च 'विषवृक्षोऽपि संवर्ध्य स्वयं छेत्तुमिष्यते इति यत्तदसाम्प्रतम्' इत्यर्थेनाध्याहृततिङा कर्मण उक्तत्वान्न द्वितीया । 'नारद इत्यबोधि सः' इत्यत्र तु 'अबोधि' इत्यस्य अमुमित्येव कर्म । 'अमुमागच्छन्तं पदार्थम् अबोधि' इत्यनेन 'अदःपदार्थनिष्ठविषयतानिरूपकातीतकालिकहरिनिष्ठज्ञानानुकूलो व्यापारः इति बोधः । तत्र ज्ञानाकाराकाङ्क्षायाम् 'नारदः' इति ज्ञानकारनिर्देशः । ननु नारद इत्यस्याभेदेन ज्ञानान्वये फलस्यापि फलाश्रयत्वात्कर्मतया द्वितीया दुर्वारा इति चेन्न, 'नारदः' इति प्रथमान्तस्यैव ज्ञानाकारत्वेनाप्रातिपदिकत्वात्तदप्राप्तेः । किञ्च 'अधिहरि' इत्यादौ प्रत्यासत्त्या यद्विभक्त्यर्थेऽव्ययन्तद्विभक्त्यन्तेनैव समासविधानात् तत्राधिशब्देनाधारत्वस्योक्ततया सप्तम्यप्राप्त्या 'वचनस्य मध्यात्सप्तमी' इत्यपि न कल्पनीयम्, निपातेनाभिधानेऽपि विभक्तिस्वीकारे बाधकाभावात् । अत एव अत्र, 'ओं अपः' इत्यत्र 'ओं' इति निपातेनाधिकरणत्वस्योक्तत्वेऽपि अत्रशब्दात्सप्तमी सिध्यतीत्याहुः ।

**संग्रहार्थं 'तथा युक्त' मित्यस्याप्यावश्यकत्वात् । अनीप्सितग्रहणं तु स्पष्टार्थमेव न त्वावश्यकम् ।**

तदपवादत्वापत्तेः । न चाग्नौ तच्चरितार्थम्; तस्यापि तदुपस्थाप्यसंयोगरूपफलाश्रयत्वात् । वारयतेश्च संयोगाद्यनुकूलव्यापाराभावानुकूलव्यापारोऽर्थः । तत्रापीप्सितशब्दः क्रियाशब्द एव ईप्सिततममित्युक्तौ ईप्सितमात्रे सावकाशस्य परत्वादीप्सिततमेऽनेन बाधः । ईप्सिततमत्वं च ÷ प्रकृतधात्वर्थप्रधानीभूतव्यापारप्रयोज्यप्रकृतधात्वर्थफलाश्रयत्वम् । अत एवाग्नेर्नोद्देश्यत्वप्रतीतिस्तत्रेति भावः । न त्वावश्यकमिति । द्वेष्यसंग्रहोऽपि

सिद्धिः । यदीप्सितशब्द इच्छाविषयपरः स्यात्तदा तत्र कूपस्येच्छाविषयत्वाभावान्न स्यात् । ईप्सिततममित्युक्ताविति । वारणार्थकधातुयोगे माणवकादेः कर्मणोऽपवादत्वात्प्राप्तापादानत्ववारणायेप्सिततममित्येतत्पदघटितसूत्रकरणे इत्यर्थः । सावकाशस्येति । अयम्भावः—शुक्लतमः पट इत्यादौ यथा प्रवृत्तिनिमित्तशौक्ल्यगतप्रकर्षे तमप्प्रत्ययो भवति तथात्रापीप्सितशब्दस्य यत्प्रवृत्तिनिमित्तमाप्तीच्छा तस्याः प्रकर्षे तमपा भवितव्यमिच्छायाः प्रकर्षस्तु यद्यपि स्वतः सम्भवति तथापि व्याख्यानात्तद्विशेषणाप्तिगतः प्रकर्ष इह विवक्षितः । आप्तिश्च ÷ धात्वर्थफलानुकूलव्यापारात्मकः सम्बन्धस्तत्प्रकर्षश्च प्रकृते तादृशसम्बन्धघटकफले धात्वर्थप्रधानीभूतव्यापारप्रयोज्यत्वरूपः । एवञ्च वारयतेरुत्तरदेशसंयोगानुकूलव्यापाराभावानुकूलव्यापारार्थकतया तद्घटकतादृशव्यापाराभावात्मकफले प्रधानव्यापारप्रयोज्यत्वसत्त्वात्तदाश्रयमाणवकादौ कर्मसंज्ञा प्रवर्त्तते, यवेभ्यो गां वारयतीत्यादौ तु भक्षणानुकूलव्यापाराभावानुकूलव्यापारात्मकः प्रवृत्तिविघात एतद्घटकप्रधानव्यापारप्रयोज्यभक्षणानुकूलव्यापाराभावात्मकफलाश्रयत्वाद्गोः कर्मत्वम्भवति । ईप्सिततमशब्दघटकेन सना इच्छार्थकेनोद्देश्यत्वमुपलक्षितमिति प्रकृतधात्वर्थप्रधानीभूतव्यापारप्रयोज्यप्रकृतधात्वर्थफलाश्रयत्वेनोद्देश्यत्वङ्कर्मसंज्ञाप्रयोजकन्तच्च न कूपादाविति, तेष्वपादानसंज्ञा चरितार्थेति सा ईदृशप्रकर्षयुक्तफलाश्रये कर्मसंज्ञया बाध्यते । 'वारणार्थाना' मिति सूत्रघटकेप्सितशब्दार्थस्तु वारणार्थकधातूपस्थाप्यफलाश्रयत्वरूपः । एतद्घटकाभावप्रतियोगित्वव्यापारप्रयोज्यं यत्फलमुत्तरदेशसंयोगादि तदाश्रयत्वादग्निकूपादावपादानसंज्ञा भवतीति ततः सन्प्रत्ययेनोद्देश्यत्वमुपलक्षितमत एवाह—अत एवेति । यत ईप्सिततमत्वमुक्तरूपात्मकं विवक्षितमत एवेत्यर्थः । तत्र = अग्नेर्माणवकं वारयतीत्यत्र । उक्तरूपात्मकेप्सिततमशब्दार्थघटकफलव्यापारयोः प्रकृतत्वन्तु प्रत्यासत्त्या लब्धम् । तत्फलन्तु यदा माषभक्षणेनाश्वस्य पुष्टिर्जायतामितीच्छया माषक्षेत्र एवाश्वबन्धनङ्केनापि पुरुषेण कृतन्तत्र माषेष्वश्वम्बध्नातीति प्रयोगो भवति तादृशस्थले कर्तृसमवेतो

व्याख्यानादेव भविष्यतीति भावः, तस्यापीप्सिततमभिन्नत्वात् ।

यः प्रधानीभूतो व्यापारस्तत्प्रयोज्यफलशालिसंयोगोऽपि तदाश्रयत्वान्माषाणाङ्कर्मसंज्ञा स्यादिति तद्वारणम् । भक्षणरूपफलस्य धान्यधात्वर्थत्वाभावात् । उक्तरीत्या ईप्सिततमपदघटितसूत्रे कृते द्वेष्यस्योदासीनस्य च कर्मसंज्ञासिध्यर्थन्तथायुक्तमिति सूत्रमपि कार्यम्, तच्चेप्सिततमभिन्नसङ्ग्रहार्थमिति द्वेष्योदासीनयोः सङ्ग्रहः । इत्याशयेनाह–द्वेष्यसंग्रहोऽपीति ।

नन्वनीप्सितपदाभावे तथायुक्तमित्यस्येप्सिततमभिन्न क्रियायुक्तं क्रियाजन्यफलाश्रयः कर्मेत्यर्थः स्यात् । एवञ्च कूपादन्धं वारयतीत्यादौ कूपादेर्निरुक्तेप्सिततमभिन्नत्वात्पुनरपि वारणार्थानामिति सूत्रन्निरवकाशमिति वाच्यम्, द्वेष्योदासीनयोरेव कर्मसञ्ज्ञा यथा स्यादित्येवमर्थमनीप्सितपदमपि कर्त्तव्यन्तदर्थश्चेप्सिततमभिन्नमित्येव न किन्तु नञो ऽसुराधर्मादिपदघटकनञ्वदीप्सिततमविरोधीत्यर्थः । तद्विरोधश्च द्वेष्योदासीनयोः, तत्रोदासीनत्वमिच्छाद्वेषयोर्यत्राभावस्तत्त्वमेवञ्च कूपादेर्निरुक्तोदासीनत्ववत्त्वेऽपि प्रधानीभूतधात्वर्थव्यापारजन्यफलाश्रयत्वरूपं तथायुक्तत्वमिह विवक्षितमिति । तथायुक्तत्वाभाववत्त्वेन न तथायुक्तमित्यस्य प्राप्तिरित्याशयात् । नचैवन्तथायुक्तमित्येवास्त्विति वाच्यम्, पयसः करणत्वविवक्षया पयसा ओदनं भुङ्क्ते इति यत्र प्रयोगस्तत्र पयसः कर्मत्ववारणाय तथायुक्तञ्चानीप्सितमित्यस्याप्यवश्यकत्वात् । नचैवञ्च त्वावश्यकमिति मूलविरोध इति वाच्यम्, मूलस्य यथाश्रुताभिप्रायकत्वात् । अत एवेहोक्तम्भाव इति मूलकारस्य भावः । वस्तुतस्तु तदावश्यकमित्यत्र तात्पर्यम् । पयसो यदा करणत्वमात्रविवक्षा तदा प्रकृतधात्वर्थप्रधानीभूतव्यापारप्रयोज्यप्रकृतधात्वर्थफलाश्रयत्वेनोद्देश्यता पयसो नेति तस्य न कर्मसञ्ज्ञा । द्वेष्योदाहरणञ्चोरान्पश्यतीति अत्र चोराणामिन्द्रियसंयोगाद् दृश्यमानत्वेऽपि न ते दर्शनोद्देश्या इति न पूर्वसूत्रस्य प्राप्तिरिति बोध्यम् । व्याख्यानादेवेति । तथाशब्दोपादानमूलकादित्यर्थः । केचित्तु प्रकृतधात्वर्थफलवत्कर्मेत्येव सूत्रञ्चार्यन्तथायुक्तमिति न वाच्यमिति लाघवम् । नचैवमूलोक्तरीत्या 'वारणार्थानामीप्सितः' इति सूत्रमनवकाशतया कर्मसञ्ज्ञया वारणार्थकधातुप्रयोगे बाधकं स्यादिति वाच्यम्, प्रवृत्तिविघातो हि वारणम्, प्रवृत्तिविघातश्च÷प्रवृत्तिध्वंसानुकूलव्यापार एव स एव च सर्वत्र वारयतेरर्थः । एवञ्च कूपागन्यादौ नैतादृशधात्वर्थफलाश्रयत्वमिति कूपादेर्न कर्मत्वप्राप्तिरिति वारणार्थानामित्यस्य चरितार्थत्वात् । द्वेष्योदासीनयोस्तु धात्वर्थफलाश्रयत्वाद्भविष्यति कर्मत्वमित्याहुः, तदपेशलम्, उक्तरीत्या शाब्दबोधकृतवैलक्षण्यसम्पादनाय सूत्रावश्यकत्वस्योक्तत्वात् । किञ्च यदा न गवि प्रवृत्तिः किन्तु सम्भावितप्रवृत्तिप्रागभावस्यात्यन्ताभावस्य वा विवक्षा तादृशस्थले ध्वंसस्य प्रतियोगिपूर्वकत्वेन प्रवृत्तिध्वंसस्य सम्भवाद्यवेभ्यो गां वारयतीति प्रयोगानुपपत्तिरिति प्रवृत्तिध्वंसानुकूलव्यापारमात्रस्य वारयत्यर्थत्वमयुक्तमेव, द्वेष्योदाहरणञ्चोरान्पश्यति व्याप्रा-

इदं त्ववधेयम्—ईप्सितानीप्सितयोः शाब्दबोध एकरूप एव, ईप्सानीप्सादेरधिशीङादिवत्सञ्ज्ञाप्रवृत्तावुपयोगेऽपि द्वितीयावाच्यकोटावप्रवेशात्, अनन्यलभ्यस्यैव शब्दार्थत्वात् । कर्मणि द्वितीयेति सूत्रे हि तत्तत्सूत्रैर्यावतां कर्मसञ्ज्ञा विहिता ते सर्वे तेन रूपेणोपस्थिताः । तेषु च विधीयमाना द्वितीया आधारवाचिका, लाघवात् । क्रियाया धातुना, कर्तुश्च देवदत्तादिशब्दैर्लाभात्, इष्टतम-

---

एकरूप एवेति । इच्छाविषयत्वाऽनिच्छाविषयत्वभानकृतवैरूप्यरहित इत्यर्थः । तदाह—ईप्सानीप्सादेरिति । इच्छाविषयत्वानिच्छाविषयत्वयोरित्यर्थः । आदिना ईप्सागतप्रकर्षस्य सङ्ग्रहः । उपयोगेऽपीति । स्वरूपतः सत्तयेति भावः । तदुपलक्षितमुद्देश्यत्वादिकं तु भासत एव तदाह—अनन्यलभ्यस्यैवेति । भासमानोद्देश्यत्व-तदभावाभ्यामर्थत इच्छाविषयत्वादिलाभादिति भावः । आधारवाचिकेति । इदमुपलक्षणम्, दिवो योगे करणवाचकत्वात् । आधारपदेन चात्राधारताशक्तिमानुच्यते कर्तुरीप्सिततममिति लक्षणे विशिष्टस्य प्रवेशात्प्रामाणिकं गुर्वेवं शक्यमस्त्वित्यत आह—क्रियाया इति । फलस्य व्यापारस्य चेत्यर्थः । देवदत्तादिशब्दैरिति । आदिना तिङन्तम् । नन्वेवमाधारस्य धर्मिणोऽपि प्रकृत्या लाभः । आधारत्वेनालाभ इत्यस्याधारत्वं न लभते

---

न्पश्यतीत्याद्येव, न तु विषम्भुङ्क्ते इति । महाभयादिभ्यो दुःखस्य सम्भावितस्य निवृत्त्यर्थं यदा विषम्भक्षयति, तदा भक्षणक्रियाजन्यफलाश्रयत्वादुद्देश्यत्वाच्च तस्य कर्तुरित्येव कर्मत्वस्य सिद्धत्वात् । अत एव "य एष मनुष्यो दुःखार्तो भवति सोऽन्यानि दुःखान्यनुनिशम्य विषभक्षणमेव ज्यायो मन्यते, अतश्चेप्सितं यत्तद्भक्षयतीति" भाष्यकारेणोक्तम् । उदासीनोदाहरणन्तृणं स्पृशतीत्याद्येव । यद्यपि द्वेष्योदासीनयोः प्रधानीभूतव्यापारजन्यफलाश्रयत्वन्तथापि तेषाञ्च मुख्योद्देश्यत्वमिति कर्तुरित्यस्य तत्राप्राप्तिरिति बोध्यम् ।

वैरूप्यरहित इति । तेनोद्देश्यत्वभानकृतवैरूप्यस्य सत्त्वेऽपि न क्षतिरिति भावः । भासत एवेति । एतच्च कर्मणा यमभिप्रैतीतिसूत्रस्थभाष्याल्लभ्यत इति प्रागेवाभिहितम् । ईप्सागतेति । इच्छाविशेषणीभूतव्याप्तिगतेत्यर्थः । ननु सर्वत्राधारवाचकत्वमनुपपन्नम्, "दिवः कर्म च" इति सूत्रविषये आधारप्रतीत्यभावादत आह—इदमुपलक्षणमिति । नन्वेवमिति । एवम्=अनन्यलभ्यस्यैव शब्दार्थत्वे । तस्यैव=आधारत्वस्यैव, शक्तिविशेषरूपस्य=अखण्डोपाधिरूपस्य, चिन्त्यमिति । चिन्ताबीजन्तु अखण्डोपाधिरूपधर्मस्य वाच्यत्वे तस्य विशेषणतया शाब्दबोधविषयत्वकल्पनेन प्रकृतिप्रत्यया-

स्वादेस्तु भानाभावात् । प्रकृतिप्रत्ययार्थयोश्चाभेद इह संसर्गः । तथा च हर्याधारिका या प्रीतिस्तदनुकूलो व्यापारो वाक्यार्थः । यद्यपि कर्मणि कर्त्तरि अधिकरणे च विहितानां द्वितीयादीनामाधारोऽर्थ इति तुल्यम् । तथाऽपि तन्निरूपकं फलम्, व्यापारः, स्वाश्रयद्वारा तदुभयं चेति फलीभूते शाब्दबोधे वैलक्षण्यं सङ्गच्छते । न चाधारतैव वाच्येति मन्तव्यम्, तन्निष्ठधर्मस्य वाच्यताऽवच्छेदकतापरत्वा-

इत्यत्रैव पर्यवसानात्तस्यैव शक्तिविशेषरूपस्य वाच्यत्वं युक्तं तस्य धर्मिसाकाङ्क्षत्वाद्विशेषणत्वञ्च युक्तमिति चिन्त्यम् । अभेद इति । विशेष्यविशेषणभाव इत्यर्थः । वाक्यार्थ इति । हरिं भजतीत्यत्रेति शेषः । फलमिति । कर्त्तुरित्यादिविहितकर्मसञ्ज्ञकविषये फलमित्यर्थः । व्यापार इति । कर्तृविषये । स्वाश्रयेति । स्थाल्यां पचति तण्डुलमित्यत्र कर्मद्वाराऽधिकरणम्, भूतले देवदत्तः पचतीत्यादौ कर्तृद्वाराऽधिकरणम् । फलीभूते इति । पदजन्योपस्थितावविशेषेऽपि तत्फलभूते शाब्दबोधे इत्यर्थः । इदमुपलक्षणम्—संज्ञयार्थस्य निमित्तत्वे तत्तत्सञ्ज्ञाप्रकारिकैवोपस्थितिरिति कर्मत्वादिनैवोपस्थितेस्तत्रापि वैलक्षण्यमस्तीत्यन्यत्र विस्तरः । तन्निष्ठधर्मस्येति । आधा-

विति न्यायविरोधः । "कर्मणि द्वितीया" इति सूत्रस्य "सुपाङ्कर्मादयोऽप्यर्थाः" इति भाष्यस्य च विरोधापत्तिरिति । किञ्च धर्मस्याखण्डोपाधिरूपस्य वाच्यत्वे तन्निष्ठधर्मस्य वाच्यताऽवच्छेदकत्वे तस्य च कर्मेतरावृत्तित्वविशिष्टसकलकर्मवृत्तित्वरूपत्वे महागौरवन्तस्याप्यखण्डोपाधिरूपत्वे तदाश्रयाखण्डोपाधिरूपधर्मस्य वाच्यताऽवच्छेदकत्वं युक्तमिति । वस्तुतस्तु 'पञ्चकम्प्रातिपदिकार्थः' इति पक्षस्य मुख्यतया कर्मादीनां द्योत्यत्वेन प्रकृत्यर्थविशेषणत्वमेव युक्तम् । विशेष्यविशेषणभाव इति । इतरसम्बन्धानवच्छिन्नेत्यादिः । पदजन्योपस्थितावविशेषेऽपि=फल-व्यापारयोर्धातुजन्योपस्थितिविषयत्वस्य समानत्वेऽपि । इदमुपलक्षणमिति । फलभूतशाब्दबोधवैलक्षण्यप्रतिपादनमुपलक्षणमित्यर्थः । सञ्ज्ञया=कर्मादिसञ्ज्ञया । अर्थस्य=सञ्ज्ञिनः । निमित्तत्व इति । शाब्दबोधजनकोपस्थितिनिमित्तत्वमित्यर्थः । तत्रापि=पदार्थोपस्थितावपि । इत्याशय इति । आधारादिरूपधर्मिण एव वाच्यत्वमिति प्रतिपादकमूलस्याशय इत्यर्थः । निरूपकाश्रयसम्बन्धभेदेन क्वचिदाश्रयतानिरूपकं विक्लित्तिरूपम् फलञ्च क्वचित्संयोगः क्वचिद्विभाग इति यथायथमूहनीयमित्यर्थः । आश्रयः=तण्डुलादिः । सम्बन्धभेदेनेति । पचति गच्छतीत्यादौ फलाधारता समवायसम्बन्धावच्छिन्ना, यवेभ्यो गां वारयतीत्यादावभावरूपफलाधारता स्वरूपसम्बन्धावच्छिन्नेति भेदेनेत्यर्थः । नन्वेवमाधारस्य शक्यत्वे

ऽतिगौरवात्, 'कर्मणि द्वितीया' इत्यादिसूत्रस्वरसभङ्गापत्तेश्च । अत एव भाष्यकार आह—'सुपां कर्मादयोऽप्यर्थाः संख्या चैव तथा तिङाम्' इति । न च तिङोऽपि धर्ममात्रमर्थः, कर्तरि कृत्, लः कर्मणि च, तयोरेव कृत्यक्तखलर्था, इति सूत्राणां वैरूप्यापत्तेः, पाचको देवदत्तः, 'पक्व ओदनः' इत्यादौ सामानाधिकरण्यानुरोधेन धर्मिवाचकतास्वीकाराच्च । तस्मादिह घटादिशब्दानामिव विशिष्टमेव वाच्यम् । अकृत्यधिकरणाभ्युपगमे तु कृत्स्वपि धर्ममात्रं सर्वथाऽपि नैयायिकमीमांसकाद्यभ्युपेतमर्धजरतीयं हेयमेव । न हि तिङ्कृतोर्वैलक्षण्यं सूपपादम् । प्रपञ्चितश्चैतच्छब्दकौस्तुभेऽस्माभिरित्यलमियता ।

*परिगणनमिति* । तेन नटस्य श्रृणोतीत्यादौ नातिप्रसङ्ग इति

---

रेतरावृत्तित्वे सति सकलाधारवृत्तित्वरूपस्येत्यर्थः । आधारता तु शक्तिविशेषरूपाऽखण्डैवेत्याशयः । नन्वाधारतैव निरूपकाश्रयसंबन्धभेदेन भिन्ना आश्रयतात्वमखण्डमिति न गौरवमत आह—कर्मणीति । लोके कर्मादिपदानां धर्मिपरतायाः दृष्टत्वेन सूत्रेऽपि तत्परतैवोचितेति भावः । आधारत्वस्य शक्यत्वे त्वनन्ताधारतानामाधारतात्वेनानुगमान्न शक्त्यानन्त्यमिति बोध्यम् । कर्मादयोऽपीति । अपिना सङ्ख्या । सूत्रवदेवात्रापि कर्मपदस्य धर्मिपरता, शक्तिरप्येतैर्धर्म्मभेदमापन्नैवोच्यत इति बोध्यम् । संख्या चेति । चेन कर्तृकर्मणी । वैरूप्यापत्तेरिति । कृद्विषये धर्मिपरता तिङ्विषये धर्मपरतेति वैरूप्यापत्तेरित्यर्थः । कृतां धर्मिवाचकत्वे बीजमाह—पाचक इत्यादि । स्वीकारादिति । कृतामिति शेषः । प्रपञ्चितमिति । लाऽऽदेशशत्रादेस्तिङां च वैधर्म्यं सर्वथा दुरुपपादमित्यादीति भावः ।

तेन नटस्येति । अपादानादिविशेषैरविवक्षा च प्रसक्तस्य बुद्धिपूर्वमवि-

---

तन्निष्ठाधारत्वस्योक्तरीत्या भिन्नस्य शक्यताऽवच्छेदकत्वे शक्यताऽवच्छेदकभेदाच्छक्तिभेदापत्तिरत आह—आधारत्वस्य शक्यत्व इति । आधारतात्वेन—अखण्डोपाधिरूपेणेति शेषः । अनुगमादिति = अनुगताकारप्रतीतिविषयत्वात् । अनुगतधर्मावच्छिन्नशक्यतावच्छेदकतया एकत्वेन शक्तेरेकत्वमिति व्यवहार इति भावः । शक्तिरपि= कर्मत्वादिरूपा शक्तिरपि । एतैः=कर्मादिपदैः । धर्म्यभेदम्=शक्तिमदभेदम् । एवञ्च कर्मत्वादिशक्तिमान् द्वितीयार्थं इति रीत्या स्वीकार्यमिति भाष्यसम्मतमेव युक्तमिति बोध्यम् । यत्प्रपञ्चितन्तदाह—लादेशेति ।

भावः । *गां दोग्धीति* । गोसम्बन्धि पयःकर्मकं दोहनमर्थः । स्यादेतत्—कर्तुरीप्सिततमं कर्म, तथायुक्तं चानीप्सितमिति सूत्राभ्यां गतार्थमेतत्, तथा हि—त्यजनोपसर्जनं त्याजनं दुहेरर्थः । दापनम-

वक्षा सर्वथाऽप्रसक्तस्याविवक्षा वेत्युभयथाऽपि गृह्यते । प्रकृते चान्त्या । गीतद्वारा च तस्याख्यातोपयोग इति शास्त्रक्लृप्तक्रियाजनकत्वम् । न च तस्य कर्मयुक्त्वाभावः, तदंशस्यापि परिगणनलभ्यत्वात् । न च नटान्निःस्सरन्तं शब्दं गृह्णातीत्यर्थात्प्राप्तापादानत्वविवक्षैवात्रेति वाच्यम्, 'आख्यातोपयोगे' इति सूत्रे उपयोगग्रहणेनानुपयोगे आख्यातुरीदृशलक्षणयापादानत्वस्यानिष्टत्वबोधनादिति भावः । गोसम्बन्धीति । गोकर्मकं पयःकर्मकं चेत्यर्थः । तत्र पयस एवेप्सिततमत्वे आह—तथा युक्तमिति । त्यजनोपसर्जनमिति । गौः पयस्त्यजति । गवा पयस्त्याजयतीति प्रतीतेरिति भावः ।

नटस्य शृणोतीत्यादौ यथा नटेऽतिप्रसङ्गप्राप्तिस्तथाह—अपादानादीति । अन्त्येति । सर्वथाऽप्रसक्त्याऽविवक्षारूपा इति शास्त्रक्लृप्तमिति उपयोगग्रहणस्य नटेऽपादानसञ्ज्ञाव्यावर्तकत्वेन भाष्यकृता चारितार्थ्यस्योक्तत्वेन तच्छास्त्रक्लृप्तमित्यर्थः । न च नटीयगीतेन श्रवणक्रियारम्भवे तद्भिन्नस्य नटस्यान्यथासिद्धतया क्रियाजनकत्वमिति वाच्यम्, द्वारेण द्वारिणोऽन्यथासिद्धत्वाभावात् । तदंशस्य=कर्मयुगित्यंशस्य । न च दुहादिपरिगणने कृतेऽपि स्थाल्यान्दोग्धि पय इत्यत्र स्थाल्या अधिकरणत्वाविवक्षायामनेन कर्मसञ्ज्ञा स्यादिति वाच्यम्, धात्वर्थव्यापारात्प्राक्कर्मयुक्तस्य सञ्ज्ञानिमित्तत्वात् । द्विविधाऽविवक्षायाः प्रकृतसूत्रे ग्रहणे मानन्तु गान्दोग्धि पय इत्युदाहरणपरम्प्रकृतसूत्रभाष्यन्नटस्य शृणोतीति प्रत्युदाहरणपरञ्च भाष्यमेव । ननु नटस्य शृणोतीत्यत्रान्त्याऽविवक्षा स्वीकृता सा न सङ्गच्छते, श्रुधातोर्निःसरणविशिष्टश्रवणार्थकत्वेन प्रथमाया अपि तस्याः सम्भवादिति कस्यचिच्छङ्कान्निरस्यति—न चेत्यादिना । अनिष्टत्वेति । यदि निःसरणावधित्वाविवक्षायान्नटस्येति षष्ठी तदा निस्सरणावधित्वविवक्षायां नटाच्छृणोतीत्यस्याप्यापत्त्या "आख्यातोपयोगे" इति सूत्रस्थोपयोगग्रहणवैयर्थ्यापत्तिरिति श्रुधातोर्लक्षणया तादृशार्थबोधकत्वञ्चेति कल्पनीयमिति भावः । "अकथितञ्च" इति सूत्रस्य षष्ठीबाधनार्थमारम्भेणैतत्सूत्रसाध्यकर्मसञ्ज्ञायां या द्वितीया सा सम्बन्धार्थिकेति प्राहुः, तन्न युक्तम्, सर्वकारकविषयेऽप्येतमपवादत्वस्य सम्भवेन सम्बन्धार्थकत्वापत्तेरित्याशयेन व्याचष्टे—गोकर्मकमिति । स्यादेतदित्यादिना शङ्काकरणसमये "अकथितञ्चे"ति सूत्रस्योपन्यासः कृतस्तत्प्रयोजनन्दर्शयति—तत्र पयस एवेति । ईप्सिततमत्वे तदुपलक्षितोद्देश्यत्वे अत्र यत्र यत्रोद्देश्यत्वन्तत्र कर्तुरित्यस्य, यत्र तदभावः, तत्राकथितञ्चेत्यस्य प्राप्तिरिति विवेकः । इति प्रतीतेरिति । एतेन व्यापारद-

ङ्गीकरणं च याचेः । विक्लेदनं निर्वर्तनं च पचेरित्यादि । एवं च धातूपात्तव्यापारविषयीभूतं यत् त्यजनदानाङ्गीकारादि तदाश्रयत्वं गवादीनां स्पष्टमेव । अत एव हि अणौ कर्तुर्णौ कर्मत्वस्य न्यायसिद्धतया गत्यादिसूत्रं नियमार्थमिति प्राचां सिद्धान्तः । अत एव चाकडारसूत्रे 'अपादानमुत्तराणि' गां दोग्धि पय इत्यत्र परत्वात्कर्मसञ्ज्ञेति भाष्यं सङ्गच्छते । 'पञ्चकं प्रातिपदिकार्थः' इति पक्षे त्ववधित्व-फलाश्रयत्वयोर्युगपद्विवक्षायां चेदम् । अवधिभूता, या

न्यायसिद्धतयेति । व्यापारद्वयार्थत्वेनोक्तसूत्रद्वयसिद्धतयेत्यर्थः । प्राचाम् = 'हेतुमति चे' ति सूत्रे भाष्यकृताम् । परत्वादिति । ग्रामादायातीत्यादौ सञ्ज्ञान्तराप्राप्तावपादानत्वं सावकाशम् । कर्मसञ्ज्ञा तु ग्रामं गच्छतीत्यादौ । भाष्यमिति । तच्च भाष्यं नाकथितं चेत्येतद्विषयम्, 'अस्यापादानत्वाविवक्षायां प्राप्त्या परत्वादित्युक्त्यसंगतेस्तद् ध्वनयन्नाह—पञ्चकमित्यादि । अवधित्वेति । अपादानत्वकर्मत्वशक्त्योरित्यर्थः । ईदृशे च

यार्थकत्वन्दर्शितम् । विभागानुकूलव्यापारो हि दुहेरर्थं इति भावः । यदुक्तन्न्यायसिद्धतयेति तत्रान्यन्यायासम्भवादाह—सूत्रद्वयेति । "गतिबुद्धी"ति सूत्रस्य नियमार्थत्वस्भाष्यकारमतसिद्धमिति प्राचामित्यसङ्गतमत आह—हेतुमति चेतीति । एतच्च भाष्यम्=अपादानमुत्तराणीति भाष्यम् । अस्य="अकथितञ्च" इति सूत्रस्य । असङ्गतेरिति । पूर्वस्य परस्य च यत्र प्राप्तिस्तत्रैव विप्रतिषेधसूत्रस्य प्राप्तिरिति कर्तुरीत्यादिसूत्रद्वयविषयकमेव । तथाचाकथितमिति सूत्रस्य कार्यमित्येतदभिप्रायकमिति भावः । पञ्चकमित्यादीति । एतेन पञ्चम्या अवधित्वन्द्वितीयाया फलाश्रयत्वम्प्रतिपाद्यमित्युभयविवक्षा वक्तुमशक्येति शङ्काया नावकाश इति सूचितम्, गोशब्दस्यैव शक्तिद्वयप्रतिपादकत्वसम्भवात् । पञ्चम्या अपादानत्वशक्तिविशिष्टार्थाभिधायकत्वमिति सिद्धान्ताभिप्रायेणाह—अपादानत्वेति । ननु यदि शक्तिद्वयविवक्षा तदा शक्तिद्वयप्रतिपादकत्वं विभक्तेरुपपादनीयन्तच्च न सम्भवति परत्वाज्जातकर्मसंज्ञायाङ्कर्मत्वमात्रस्य द्वितीयया प्रतिपादनसम्भवादत आह—ईदृशे चेति । उभयोः शक्त्योः प्रतिपादकेन

१ अपादानत्वकर्मत्वे तद्विश्लेषहेतुक्रियानाश्रयत्वसमानाधिकरणतद्विश्लेषाश्रयत्व—धात्वर्थफलाश्रयत्वादि धर्माभिव्यङ्ग्यशक्तिविशेषरूपे एव । अत एव फलाश्रयत्वात् कर्मत्वम्, विश्लेषाश्रयत्वादपादानत्वमित्यादिव्यवहारसङ्गतिः । अन्यथा कर्मत्वादेः फलाश्रयत्वादिरूपत्वे 'फलाश्रयत्वात्कर्मत्वम्' इत्यस्य फलाश्रयत्वात्फलाश्रयत्वमित्यर्थकत्वापत्त्या शाब्दबोधानापत्तिः, स्वस्मिन्स्वस्य हेतुत्वासम्भवात् । एवञ्च "क्रियाकारकयोः सम्बन्धस्य द्वितीया वाचिका" इति समर्थसूत्रभाष्यात् सर्वकर्मविहितद्वितीयादीनां

गौस्तन्निष्ठो यः पयःक्षरणानुकूलव्यापारस्तद्विषयिणी गोपनिष्ठा प्रेरणेत्यर्थात् । तथा चाकथितञ्चेति सूत्रं व्यर्थमिति चेत् । अत्रोच्यते—कर्मणः शेषत्वेन विवक्षायां न माषाणामश्नीयादितिवत् षष्ठी प्राप्ता तां बाधितुमिदं सूत्रम् । तथा चेह षष्ठीवत्सम्बन्धमात्रं द्वितीयार्थ इति स्थितम् ।

---

विषये आकडारसूत्र-तद्भाष्यबलादुभयोरपि द्वितीयैव बोधिकेति भावः । इति स्थितमिति । प्राचां ग्रन्थे इति शेषः ।

अत्रारुचिबीजं तु यदा पयोनिष्ठविभागानुकूलव्यापार एव धात्वर्थ-

---

प्रतिपादनविवक्षा जाता त्वेकैव विभक्तिस्तादृशविषय इत्यर्थः । इति स्थितमित्यस्माद्भाष्ये स्थितमित्यर्थः प्रतीयते, परन्त्वेवं वक्तुमशक्यम्, वक्ष्यमाणानुपपत्तेरत आह—प्राचाङ्ग्रन्थ इति ।

अत्र प्राचामित्यनेन प्रतिपादनेन अपादानत्वविवक्षायां गोः पयो दोग्धीत्येव

---

कर्मत्वशक्तिमान्, क्रियाकारकसम्बन्धश्चार्थः । अत एव 'कर्मणि द्वितीया' इत्यनेनैकरूपेण द्वितीयाविधानं सङ्गच्छते । अन्यथा 'अधिशीङ्' 'दिवः कर्म च' कर्तुरीप्सिततमम्' इत्यादिभिरुद्देश्यतावच्छेदकभेदेन कर्मसंज्ञाविधानात् कर्मपदस्य नानार्थकतया "कर्मणि द्वितीया" इत्यस्यावृत्तिमन्तरा तत्तत्कर्मत्वबोधकद्वितीयाप्रसिद्धिः ।

कर्मत्वशक्तिमत्त्वेन द्वितीयाविधाने तु नावृत्तिः, कर्मसंज्ञाज्ञाप्यतादृशशक्तेः सर्वविधकर्मसु सत्त्वात् । तथा च "अकथितञ्च" इति सूत्रविहितद्वितीयायाः षष्ठीविभक्तेरिव सम्बन्धमात्रमर्थः । तत्सूत्रविहितकर्मसंज्ञकार्थकद्वितीयायाश्च विभिन्नरूपेणैव कर्मबोधकत्वमिति च मनोरमोक्तिश्चिन्त्येति शब्दरत्नग्रन्थाकूतम्, इत्याह—अत्रारुचिबीजन्त्वित्यादि ।

मनोरमाकारास्तु—'उद्देश्यतावच्छेदकफलाश्रयत्वादिरूपं नानारूपं कर्मत्वं विभक्तिवाच्यम्, न हि तदतिरिक्तं कर्मत्वशक्तिरूपं कर्मत्वम्, प्रमाणाभावात् । न च 'फलाश्रयत्वात्कर्मत्वम्' इत्यस्यासङ्गतिः, कर्मत्वमित्यस्य कर्मसंज्ञकत्वमित्यर्थेनादोषात् । " एकः पूर्वपरयोः " इति सूत्रभाष्योक्तगुणविधायकवाक्याऽऽवृत्तिवत् "कर्मणि द्वितीया" इत्यस्यावृत्तिरिष्टैव, तत्र द्वितीयया विभिन्नरूपेण बोधस्यानुभविकत्वात् ।

यत्तु शब्दरत्नकाराः—'शेषत्वेन विवक्षायां प्राप्तां षष्ठीं बाधितुम् 'अकथितञ्चेति सूत्रम्, तथा चेह षष्ठीवत् सम्बन्धमात्रं द्वितीयार्थः' इति मनोरमाखण्डनाय "किञ्च कर्तुरित्यपि षष्ठ्यपवाद एव तदभावे तद्विषयेऽपि षष्ठ्या एव प्राप्तेः । अतः षष्ठ्यपवादत्वमात्रेण न सम्बन्धत्वेन बोधकतोचिता" इत्याहुः, तन्न युक्तम्, कर्तुरितिसूत्राभावे शेषषष्ठ्याः प्राप्तिसम्भवेऽपि तत्सत्त्वे कर्मत्वादि विवक्षायामेव कर्तुरित्यस्य प्राप्त्या तदानीं शेषत्वाभावेन षष्ठ्यप्राप्तौ "कर्मणि द्वितीया" इत्यस्य तदपवादत्वासम्भवेन तद्विहितद्वितीयायाः सम्बन्धार्थकत्वाभावेऽपि "अकथितञ्च" इत्यस्यापादानत्वाद्यविवक्षायां प्रवृत्त्या तदानीं "षष्ठी शेषे" इत्यस्यापि प्राप्त्या 'येन नाप्राप्ते' इति न्यायेनापवादतया तद्विहितद्वितीयायाः सम्बन्धार्थकत्वे बाधकाभावादित्याहुस्तत्त्वविदः ।

स्तदा ऽपादानत्वाविवक्षायामन्येनासिद्धेः कर्मत्वार्थमिदमावश्यकमेवमन्येष्वपि । किञ्च कर्तुरित्यपि षष्ठ्यपवाद एव, तदभावे तद्विषयेऽपि षष्ठ्या एव प्राप्तेरतः षष्ठ्यपवादत्वमात्रेण न सम्बन्धत्वेन बोधकतोचिता । तस्मादत्रापि क्रियाजनकतासमानाधिकरणकर्मत्वशक्तिमत्त्वेनैव बोध इत्येवोचितम् ।

व्यापारद्वयार्थत्वे 'कर्तुरीप्सिततमम्' इत्यनेनापि द्विकर्मकत्वमस्त्येव यथाप्रयोगं बहूनां धातूनाम् । तत्र ये व्यापारद्वयार्थत्वेन द्विकर्मकास्तेषां प्रधानकर्मणि लादयः ।

प्रधानकर्मण्याख्येये लादीनाहुर्द्विकर्मणाम् ।

इत्युक्तेः ।

---

भवतीत्याशयेनाह—अपादानत्वाविवक्षायामिति । अन्येन=शास्त्रान्तरेण । असिद्धेरिति । कर्मसंज्ञाया इति शेषः । एकव्यापारार्थकत्वं यदा पचादिधातूनान्तदा तत्कारकस्य कर्मसंज्ञार्थम् "अकथितञ्च" इति सूत्रम् । यदुक्तम्प्राक् षष्ठीबाधनार्थमिदं सूत्रमित्येतत्साध्यविभक्तेः सम्बन्धार्थकत्वमिति तद् दूषयति—किञ्चेति । क्रियाजनकतासमानाधिकरणेति । एतेन कारकत्वमपि शक्तिविशेष एव । तेनैव रूपेण शाब्दबोधविषयता संज्ञिन इति ध्वनितम् । अपादानसम्प्रदानाधिकरणानामपादानत्वादिनाऽविवक्षायामनेन कर्मसंज्ञायाङ्कर्मत्वशक्तिमत्त्वेनैव शाब्दबोधविषयतेति बोध्यम् । मूलङ्खण्डयितुमुपक्रमते—व्यापारद्वयेति । अपिः="तथायुक्त" मिति सूत्रसमुच्चायकः । यथाप्रयोगमित्यनेनातिप्रसङ्गो वारितः । बहूनामिति । मूलपरिगणितभिन्नानामपि ग्रहणमित्यनेनोक्तम् । उक्तरीत्या धातूनान्द्विकर्मकत्वे बोधिते लकाराद्युत्पत्तिविषये व्यवस्थामाह—तत्रेत्यादिना । ये=दुहादयः पच्यादयश्च । इत्युक्तेरिति । इति भाष्य-

---

१ प्रधानकर्मण्याख्येये लादीनाहुर्द्विकर्मणाम् । अप्रधाने दुहादीनां ण्यन्ते कर्तुश्च कर्मणः ॥ इति भाष्यकारिका । अस्या अर्थः—प्रधानकर्मण्यभिधेये द्विकर्मणां न्यादिधातूनां लादयो भवन्ति । अजा नीयते ग्रामम् । अजा नीता ग्रामम् । दुहादीनामप्रधाने कर्मणि लादयो भवन्ति । दुह्यते गौः पयः । ण्यन्ते प्रयोज्यकर्तृरूपकर्मणो वाचका लादयो भवन्ति । गम्यते यज्ञदत्तो ग्रामं देवदत्तेन । इति ।

ननु अनुपदमेव शब्दरत्ने 'एकव्यापारार्थकदुहादियोगे स्वप्रधानकर्मणि' इत्युक्त्या व्यापारद्वयार्थकदुहादियोगेऽपि कर्तृनिष्ठप्रधानधात्वर्थव्यापारमात्रविशेषणफलाश्रयरूपप्रधानकर्मणि प्रत्यय इति प्रतीयते, तच्चासङ्गतम्, "अप्रधाने दुहादीनाम्" इति भाष्योक्तेरिति चेन्न, दुहादीनां द्रवद्रव्यनिष्ठविभागानुकूलव्यापारादिरूपैकव्यापारार्थकत्वपक्षे "अकथितञ्च" इति सूत्रसत्त्वपक्षे एव "अप्रधाने दुहादीनाम्" इति भाष्योक्तेः सत्त्वात् । तत्र पक्षे "प्रधानकर्मण्याख्येये" इत्यनेनासंग्रहात् पूर्वोक्तप्रधानकर्मत्वस्य दुहादीनां गवादिरूपकर्मणि अभावात्तत्संग्रहाय तदुक्तेः । व्यापारद्वयार्थकत्वे तु उक्तप्रधानकर्मत्वस्य गवादौ सत्त्वेन "प्रधानकर्मण्याख्येये" इत्यनेनैव दुहादिकर्मणः संग्रहात् तत्पक्षे "अप्रधाने दुहादीनाम्" इत्युक्तौ भाष्यतात्पर्या-

प्रधानकर्मत्वञ्च÷कर्तृप्रत्ययसमभिव्याहारे कर्तृनिष्ठप्रधानधात्वर्थव्यापारमात्रविशेषणफलाश्रयत्वम् । ण्यन्तविषये ईदृशप्राधान्यस्यैव ग्राह्यत्वम् । गर्गाः शतं दण्ड्यन्तामित्यादौ गर्गाणामेव तत्त्वमिति तत्रैव कर्मणि लादयः । उद्देश्यत्वरूपमर्थप्राधान्यं तु शतस्येत्यनुद्देश्यत्वेनाप्रधानगर्गानुरोधान्न शतावृत्तिरिति न वृद्धिसूत्रस्थभाष्यविरोधः ।

एकव्यापारार्थकदुहादियोगे त्वप्रधानकर्मणि । अप्रधानत्वञ्चात्रोक्त-

---

कारोक्तेरित्यर्थः । इष्टव्यवस्थासिद्धये प्रधानकर्मत्वन्दर्शयति—प्रधानेति । कर्तृप्रत्ययसमभिव्याहृतधातुजन्यशाब्दबोधे यः प्रधानभूतो व्यापारस्तस्मिन्साक्षाद्विशेषणं यत्फलन्तदाश्रयत्वम्प्रधानकर्मत्वम् । व्यापारेति कर्तृनिष्ठेति च स्वरूपकीर्त्तनम् । मात्रपदेन परम्परया विशेषणत्वव्यवच्छेदः । गर्गाः शतन्दण्ड्यन्तामिति भाष्यीयप्रयोगे यद्यपि न कर्तृप्रत्ययस्तथापि गर्गरूपकर्मणि लकारोत्पत्तिव्यवस्थामाह—गर्गा इति । गर्गाणामेवेति । कर्तृप्रत्ययसमभिव्याहारे गर्गान् शतन्दण्डयतीत्यत्र स्वस्वप्रदानकदानानुकूलव्यापारानुकूलव्यापारो दण्डयतेरर्थः । तत्र प्रधानभूतो व्यापारो द्वितीयस्तन्निष्ठविशेष्यतानिरूपिता साक्षात्प्रकारता प्रथमव्यापारस्येति तदाश्रयगर्गाणाम्प्रधानकर्मत्वम् । नन्वेवं "वृद्धिरादैच्" इति सूत्रभाष्येऽप्रधानकर्म गर्गाणाम्बहुत्वेऽपि न प्रधानस्य शतस्यावृत्तिरिति प्रतिपादितन्तद्विरोधः इत्यत आह—उद्देश्यत्वेति ।

दुहादीनामेकव्यापारार्थकत्वे "अकथितञ्च" ति सूत्रेण तद्योगे गवादीनामिति प्रागभिहितन्तदापि गवादिकर्मणि लकारादिव्यवस्थामाह—एकव्यापारेति । तदा हि

---

भावात् । विभागानुकूलव्यापारानुकूलव्यापारार्थकतया कर्तृनिष्ठप्रधानव्यापारविशेषणप्रथमव्यापाराश्रयस्य गोः प्रधानकर्मत्वाक्षतेः ।

न च "प्रधानकर्मण्याख्येये" इति कारिकामुक्त्वा उत्तरार्द्धोपात्तदुहादिण्यन्तधात्वतिरिक्ता द्विकर्मकाः के इत्यभिप्रायेण "के पुनर्धातूनां द्विकर्मकाः ? नीवह्योर्हरतेश्चापि गत्यर्थानां तथैव च । द्विकर्मकेषु ग्रहणं द्रष्टव्यमिति निश्चयः । इति भाष्ये परिगणितम् । तथा च "प्रधानकर्मण्याख्येये लादीनाहुर्द्विकर्मणाम्" इत्यत्र द्विकर्मपदेन न्यादीनामेव ग्रहणमिति लभ्यते । एवञ्च दुहादीनां तत्र ग्रहणाभावात् व्यापारद्वयार्थकत्वपक्षे गवादिरूपप्रधानकर्मणि प्रत्ययासम्भव इति वाच्यम्, एकव्यापारार्थकत्वपक्षे षष्ठ्यपवादत्ववादिनये "नीवह्योः" इति कारिकायां कृषेः पाठाभावेऽपि लक्ष्यानुरोधेन न्यादीनां कृषेरुपलक्षणवत् व्यापारद्वयार्थकत्वेन सर्वेषां धातूनां द्विकर्मत्ववादिनयेऽपि न्यादिग्रहणस्य द्विकर्मकधातुमात्रोपलक्षकत्वसम्भवेन तत्पक्षे दुहादेरपि प्रधानकर्मणि प्रत्ययविधाने बाधकाभावात् । तदुक्तम्:—

'यश्चोभयोः समो दोषः परिहारोऽपि तत्समः ।
नैकः पर्य्यनुयोक्तव्यस्तादृगर्थविचारणे ॥ इति ।

नीप्रभृतिषु कृषेः पाठाभावेऽपि "नीप्रभृतीनां चतुर्णाम्" इति स्वोक्तिर्यथा तव मते समर्थिता भवेत्तथा मन्मतेऽपि "सर्वधातूनां द्विकर्मत्वम्" इत्युक्तिः समर्थिता स्यान्नैकस्तद्विषये प्रष्टव्य उभयमते तद्दोषस्य समत्वादिति दिक् ।

प्रधानकर्मभिन्नत्वम् । तच्च तत्रार्थे गवादीनामेव फलाश्रयत्वाभावात् । एवञ्च भाष्यानुक्तानां परिगणने पाठोऽयुक्तः । अर्थनिबन्धनेयं सञ्ज्ञेति

विभागानुकूलव्यापार एव दुहधात्वर्थः । विभागरूपस्फलप्रधानव्यापारविशेषणन्तदाश्रयत्वात्पयसः प्रधानकर्मत्वन्तद्भिन्नत्वङ्गवादीनामिति तेषामप्रधानकर्मत्वम् । एवञ्चेति=उक्तरीत्येष्टव्यवस्थासिद्धौ च । भाष्यानुक्तानाम्=अपचादीनाम् । भाष्योक्तास्तु दुहादय एकव्यापारार्थकत्वेऽपि तेषामप्रधानङ्कर्म यस्य 'अकथितञ्चे'ति सूत्रेण कर्मसंज्ञा तदेव एपान्तत्तद्धात्वर्थप्रधानीभूतो यस्तादृशव्यापारस्तद्विशेषणं फलाश्रयभिन्नत्वमस्त्येव । इत्थं हि तत्रत्यं भाष्यम्—'केनाकथितम्, अपादानादिभिर्विशेषकथाभिः, इयं करणे तृतीया भूतकालो ऽत्राविवक्षितः, तेन सर्वथा यत्रापादानादीनामप्रसक्तिस्तेषामप्यसङ्कीर्तितत्वादकथितत्वव्यवहारः, किमुदाहरणम्? दुहियाचिरुधिप्रच्छिभिक्षिचिञामुपयोगनिमित्तपूर्वविधौ ब्रुविशासिगुणेन यत्सचते तदकीर्तितमाचरितङ्कविना उपयोगनिमित्तमिति, उपयुज्यते इत्युपयोगः पयःफलादि तस्य निमित्तङ्गवादि' पय आदीनामुपयोगपदव्यवहार्यत्वप्रदर्शनेन तेषामीप्सिततमत्वन्दर्शितम् । गवादीनाञ्च तन्निमित्तत्वेन धात्वर्थव्यापारात्प्राक् पय आदि कर्मयुक्तत्वन्निदर्शितम् । गवादीनान्तथायुक्तत्वाभावादकथितञ्चेत्यनेनाऽपि कर्मसंज्ञा न भवति । अपूर्वविधावित्यत्र पूर्वत्वमुपलक्षणन्तेन परविधावपीयं सञ्ज्ञा न भवति । ब्रुविशासिगुणेनेति=ब्रुविशास्योर्गुणः साधनम्प्रधानङ्कर्म धर्मादिकन्तेन यत्सचते सम्बध्यते इत्यर्थः । क्रियायाः साध्यत्वात्प्राधान्यङ्कारकाणान्तु तदर्थत्वाद्गुणत्वम् । एवम्परिगणनेन नटस्य श्रृणोतीत्यादावतिप्रसङ्गवारकेण 'अकथितञ्चे'ति सूत्रोदाहरणत्वमेषान्धातूनामिति प्रदर्श्य, दुहि—गां दोग्धि पयः, 'नैतदस्ति कथितात्रापादानसञ्ज्ञा 'गोः पय आदत्ते' इत्यर्थावगमादपादानत्वङ्गवादीनाम्, अन्वेत यदा गवादीनामपादानत्वविवक्षा तदा न भवति । यदा तु न तथा धातोर्व्यापारद्वयार्थकता च तदा कर्तुरिप्सितत्वेव कर्मत्वमिति प्रदर्शितम् । याचि 'इदन्तर्हि पौरवं याचते नैत-

---

१ "अकथितञ्च" इति सूत्रे भाष्येः—

दुहियाचिरुधिप्रच्छिभिक्षिचिञामुपयोगनिमित्तमपूर्वविधौ ।
ब्रुविशासिगुणेन च यत्सचते तदकीर्तितमाचरितं कविना ॥ १ ॥

इत्युक्तम् । अत्रोपयोगेत्यादेरयमर्थः—उपयुज्यत इत्युपयोगः=पयःफलादि । तस्य निमित्तम्=गोवृक्षादि, तत् । ब्रुविशास्योर्गुणः=साधनम् प्रधानकर्म क्रियायाः प्राधान्याद् गुणत्वं कारकाणाम् । तेन च यत्सचते=सम्बध्यते तच अपूर्वविधौ=पूर्वसंज्ञानामपादानादीनां विषयाभावे, यद्वा कर्मापेक्षया पूर्वसंज्ञानां विषयाभावे इत्यर्थः=एकव्यापारार्थकत्वेऽपादानत्वाविवक्षायां चेति यावत् । अकीर्तितम्=अकथितं कर्मेति । "आख्यातोपयोगे" इत्यत्रापि "नटस्य श्रृणोति" इत्यत्र "अकथितञ्च" इति कर्मसंज्ञामाशङ्क्य "नैष दोषः, परिगणनं तत्र क्रियते "दुहियाचिरुधिपच्छिभिक्षिचिञामिति" इत्युक्तम् । अत्रापि परिगणने न सन्ति पच्यादय इत्युक्तम्भाष्यानुक्तानामिति ।

अपादानत्वमात्रविवक्षायां तु पञ्चम्येव। गोः क्षीरविशेषणत्वे

चायुक्तम्। एवं द्व्यर्थत्वेन द्विकर्मकत्वातिप्रसङ्गस्त्वनभिधानेन वारणीय इति दिक्।

दस्ति कथितात्र पूर्वापादानसञ्ज्ञा 'पौरवाद्गाभिघृक्षते' इत्यर्थस्य प्रतीतेः। एतेनास्याप्यनुदाहरणत्वन्दर्शयित्वा तत उक्तम् ÷ 'न याचनादेवापायो भवति याचितोऽसौ यदि ददाति तदापायेन युज्यते'। एतेन सर्वथा ऽविवक्षायामनेनासङ्कीर्तितपौरवस्य कर्मत्वम्। रुधि ÷ अन्ववरुणद्धि गां 'व्रजन् नैतदस्ति कथितात्र पूर्वा ऽधिकरणसञ्ज्ञा गां व्रजे स्थापयतीति' सम्प्रत्ययात्। एतेन यदा गौर्व्रजं प्रविशति गवा व्रजम्प्रवेशयतीत्यर्थविवक्षा तदा व्यापारद्वयार्थकत्वेन पूर्वसूत्रस्य प्रवृत्तिरित्यर्थादुक्तम्भवति, प्रच्छि ÷ माणवकम्पन्थानम्पृच्छति। 'नैतदस्ति कथितात्र पूर्वापादानसञ्ज्ञा माणवकान्मार्गोपदेशं जिघृक्षत इत्यर्थविवक्षा दर्शिता तदाऽनुदाहरणत्वम्, यदा तु प्रश्नमात्रमनङ्गीकृतापायन्धात्वर्थस्तदभिप्रायेण न प्रश्नादेवापायो भवति पृष्टोऽसौ यद्याचष्टे तदा ऽपायेन युज्यते' इत्युक्तमनेन सर्वथाऽविवक्षायामुदाहरणत्वम्पृच्छेर्दर्शितम्। भिक्षि ÷ पौरवं गां भिक्षते 'नैतदस्ति कथितात्र पूर्वाऽपादानसञ्ज्ञा न भिक्षणादेवापायो भवति भिक्षितोऽसौ यदि ददाति तदाऽपायेन युज्यते' अनेन भिक्षधातुविषये याचिधातुवदुदाहरणमनुदाहरणत्वञ्च कल्पनीयमिति कथितम्। चिञ् ÷ वृक्षमवचिनोति फलानि वृक्षस्यापादानत्वाविवक्षायामनेन कर्मत्वम्, 'नैतदस्ति कथितात्र पूर्वाऽपादानसञ्ज्ञा वृक्षात्फलान्यादत्ते' इत्यर्थावगमात्। एतेनात्रापादानत्वाविवक्षैव नास्तीति निदर्शितम्। ब्रुवि शासि ÷ 'पुत्रन्धर्मम्ब्रूते पुत्रन्धर्ममनुशास्ति पुत्रो धर्मम्प्रतिपद्यते' पुत्रन्धर्मम्प्रतिपादयतीत्यर्थः। अनेन सम्प्रदानत्वाविवक्षायामुदाहरणत्वमित्युक्तम्। नैतदस्ति कथितात्र पूर्वा सम्प्रदानसंज्ञा वचनानुशासनकर्मणा धर्मेण पुत्रस्याभिप्रेयमाणत्वात्सम्प्रदानत्वम्। तस्या विवक्षा चात्र नास्तीति प्रदर्शितम्। तस्मात् त्रीण्येवोदाहरणानि ÷ 'पौरवं गां याचते' 'माणवकम्पन्थानम्पृच्छति' 'पौरवं गां भिक्षते' इति। इति चायुक्तमिति। भाष्योक्तपरिगणनपरवाक्ये याच्धातुसमानार्थकभिक्षेरुपादानादिति शेषः। एवन्द्व्यर्थत्वेन=दुहादिवद् द्व्यर्थत्वेन। अतिप्रसङ्ग इति। गमादिधातूनां संयोगानुकूलव्यापारानुकूलव्यापाराद्य

१—अत एव प्रकृतसूत्रे, "अकथितञ्च" इति सूत्रे च भाष्ये दुह्यादीनां परिगणने परस्वत्वनिवृत्तिस्वस्वत्वोत्पत्त्युभयानुकूलव्यापारार्थकस्य, 'इदमवश्यं करिष्यामि' इतिवाक्योच्चारणजनकज्ञानविशेषरूपस्वीकारानुकूलव्यापारार्थकस्य च याचेरेव ग्रहणेन भिक्षेः कर्मत्वासिद्धौ तत्परिगणनं संगच्छते। अन्यथोभयार्थकयाचिनैव भिक्षियोगेऽपि कर्मत्वसिद्धेस्तद्वैयर्थ्यं स्पष्टमेव। अर्थनिबन्धनत्वे भाष्योक्तपरिगणनभङ्गरूपदोषस्तु न, परिगणितार्थकानामेव कर्मत्वविधानार्थं परिगणनस्य चारितार्थ्यात्। न च "अहमपीदमचोद्यंचोद्ये" इति भाष्यप्रयोगविरोधः, व्यापारद्वयार्थकत्वेन बहूनां द्विकर्मकत्वस्येष्टत्वेन तदुपपत्तेः।

तु षष्ठी। तेन गोः पयो दोग्धीत्यपि प्रयोगः साधुरेव। एव मग्रेऽप्यूह्यम्। यत्तु प्राचोक्तम्—

---

अपादानत्वमात्रेति। विभागानुकूलव्यापारमात्रार्थकत्वविवक्षायामिति भावः। गोः क्षीरेति। न च क्रियान्वयेऽपि शेषत्वविवक्षया सेति वाच्यम्, षष्ठ्यन्तार्थकस्य स्वान्वययोग्यार्थकनामसमभिव्याहारे तत्रैवान्वयव्युत्पत्तेः। अत एव तण्डुलानामोदनं पचतीत्यादौ 'द्व्यर्थश्चैव पचिर्विकारयोगे षष्ठी तण्डुलानामोदनं पाकेन निर्वर्त्तयती' त्युक्तं भाष्ये, न तु पाकान्वये षष्ठी-

---

र्थकतामाश्रित्य भृत्यङ् ग्रासङ्गच्छतीत्यादिप्रयोगापत्तिरूपो ऽतिप्रसङ्ग इत्यर्थः। विस्तरस्त्वन्यत्र द्रष्टव्य इत्याशयेनाह—दिगिति।

ननु क्रियायामन्वयेऽपि कदाचित्षष्ठीसम्भवात्क्षीरविशेषणत्वमात्रेण षष्ठीप्रतिपादनमयुक्तमित्याशयेनाशङ्काङ्कृत्वा तन्निराचष्टे—न चेति। षष्ठ्यन्तार्थस्येति। शेषेत्यादिः। स्वान्वययोग्यानामभिव्याहार इति कथनेन यत्र तत्समभिव्याहाराभावः क्रियायामन्वयविवक्षा च शेषत्वविवक्षा च तत्र षष्ठी भवत्येव। 'मातुः स्मरति' 'नटस्य शृणोती'-त्यादौ यथा। इति व्युत्पत्तेरिति। एतेन पयःपदसमभिव्याहारे धात्वर्थानन्वय इति दर्शितम्। अत एवेति = उक्तव्युत्पत्तिसत्त्वादेव, आदिना तण्डुलानोदनम्पचतीत्यस्य सङ्ग्रहः। अत्र निर्वर्तनं विक्लेदनं च पचेरर्थः। तण्डुलान् विक्लेदयन्नोदनन्निर्वर्तयतीति वाक्यार्थः। इत्युक्तम्भाष्य इति। "कर्तुरीप्सिततमम्" इति सूत्रभाष्ये उक्तमित्यर्थः।

---

१ अत्रोहश्चेत्थम्:—अकथितशब्दोऽप्रधानवाची, असंकीर्तितवाची च। तत्र "केनाकथितम्? अपादानादिविशेषकथाभिः" इति भाष्यादत्रासंकीर्तितपर एव न त्वप्रधानपरो रूढः, 'गच्छतीत्यत्र केनेत्याकाङ्क्षासत्त्वेऽपि गच्छतीति व्युत्पत्तिकगोपदे केनेत्याकाङ्क्षया अदर्शनेनेव कर्तृनिष्ठप्रधानव्यापारविशेषणफलानाश्रयरूपाप्रधानार्थकरूढाकथितपदे ;केनेत्याकाङ्क्षया अनुत्थानाद्भाष्यासङ्गत्यापत्तेः किषाप्रधानार्थकस्य ग्रहणे 'गोर्दोग्धि पयः' इत्यादावपादानत्वादिविवक्षायामपि उक्तव्यापारविशेषणफलानाश्रयत्वरूपाप्रधानत्वस्य गवि सत्त्वेनापादानत्वाद्यविवक्षायां चरितार्थं कर्मत्वमपादानत्वादिबाधकं स्यादिति तद्वारणायाकीर्तितपरत्वाश्रयणम्। तथाचापादानत्वादिविवक्षायां कर्मत्वाप्राप्त्या नापत्तिरिति भावः असंकीर्तितत्वञ्च द्विधा-पूर्वविधिविषयप्रसक्तिपूर्वकापादानत्वाद्यविवक्षया, सर्वथा पूर्वविधेरप्रसक्त्या च तत्राद्ये गां दोग्धि पय इत्यादि। द्वितीये याचिप्रच्छिभिक्षियोगे बलिं याचते वसुधामित्यादि। पूर्वत्रापादानत्वाविवक्षायां कर्मत्वम्। तद्विवक्षायामपादानत्वम् इति गां दोग्धि, गोर्दोग्धि, इत्युभयं साधु उत्तरत्र पूर्वविषयस्य कस्याप्यप्राप्तेः बलिं याचते इत्येकमेव साधु। न चापादानत्वप्राप्तिः, विभागस्य धात्वर्थत्व एव तत्प्रवृत्तेः याचेश्च परस्वत्वनिवृत्तिस्वस्वत्वोत्पत्त्युभयानुकूलव्यापारार्थकत्वात्। अत एव कैयटेनोक्तम् "असंकीर्तितपर्यायो कथितग्रहणे गां दोग्धि, गोर्दोग्धि इति च। याचिप्रच्छिभिक्षियोगे कर्मसंज्ञैवेति व्यवस्थेति" इति। तथाच मनोरमाकारमते एकव्यापारार्थकत्वे सम्बन्धत्वेन विवक्षायां षष्ठीप्राप्तेस्तद्बाधनार्थं सूत्रम्। रत्नकारमतेऽपादानत्वाद्यविवक्षायां केनापि कर्मत्वाप्राप्तेः कर्मत्वविवक्षायां कर्मसंज्ञार्थं सूत्रम्; इति दिक्।

दुह्याच्पच्दण्ड्रुधिप्रच्छिचिब्रूशासुजिमथ्मुषाम् ।
नीहृकृष्वहां कर्मयुक् दुह्याच्यर्थरुधिप्रच्छिचिब्रूशासुजिकर्मयुक् ।
नीहृकृष्मन्थवहदण्डग्रहमुष्पचकर्मभाक् ॥ इति ।

अत्रेदं वक्तव्यम्—ग्रहेः पाठो निर्मूलः जग्राह द्युतरुं शक्रमित्युदाहरणमप्ययुक्तम् । इतरेषां तु द्विकर्मकत्वं यद्यपि प्रामाणिकं तथाऽपि संदर्भाशुद्धिः । तथा हि—दुह्यादीन् न्यादींश्च द्वैराश्येनेह पठित्वा भावकर्मप्रक्रियाशेषे लकृत्यक्तखलर्थाः किं द्विकर्मकेभ्यो मुख्ये कर्मणि स्युर्गौणे वेत्याकाङ्क्षायां स्वयमेव पठितम् ।

त्युक्तमिति दिक् । निर्मूल इति । अपादानत्वाद्यविवक्षायां तत्सम्बन्धिनः कर्मत्वे मूलं नास्तीति भावः । द्विकर्मत्वं तु यदीष्टं तर्हि व्यापारद्वयार्थतया बोध्यम् । उदाहरणमप्ययुक्तमिति । शक्रात् द्युतरुञ्जग्राहेत्येव प्रतीतेः । पराक्रमातिशयद्योतनाय जहार द्युतरुमित्यस्यैवोचितत्वाच्चेति भावः । द्विकर्मकत्वमिति । अकथितसूत्रविषयतयेत्यर्थः । कैयटमाधवादिसंमतत्वादिति

तत्र हि "अथेह कथम्भवितव्यम् तण्डुलानोदनम्पचतीति आहोस्वित्तण्डुलानामोदनम्पचतीति उभयथा भवितव्यम्, कथम् इह तण्डुलानोदनम्पचतीति ? द्व्यर्थः पचिः तण्डुलान्पचन्नोदनन्निर्वर्तयतीति इहेदानीं तण्डुलानामोदनम्पचतीति द्व्यर्थश्चैव पचिः विकारयोगे षष्ठी तण्डुलविकारमोदनन्निर्वर्तयति" इत्युक्तम् यद्यपि फलव्यापारावादाय सर्वेषामेव धातूनान्द्व्यर्थत्वमितीह द्व्यर्थत्वाभिधानमनुपयुक्तमिति शङ्का भवति तथापि विक्लेदनविशिष्टन्निर्वर्तनम्पचेरर्थं इत्यर्थाभिप्रायेण द्व्यर्थत्वाभिधानम् । विक्लेदनवैशिष्ट्यञ्च क्वचित्सामानाधिकरण्येन यथा आद्ये तत्र विक्लित्तिरूपफलाश्रयत्वात्तण्डुलानान्निर्वृत्तिरूपफलाश्रयत्वात्तु ओदनस्य कर्मता, द्वितीयप्रयोगे तु करणत्वेन विक्लित्तिविशिष्टन्निर्वर्तनम्पचेरर्थः । तत्र तण्डुलानान्धात्वर्थप्रधानव्यापारविशेषणफलाश्रयत्वाभावान्न कर्मत्वङ्किन्तु विकारयोगविवक्षया शेषे षष्ठीति बोध्यम् । विक्लित्तेश्च सम्बन्ध्याकाङ्क्षायां सन्निधानात्तण्डुलसम्बन्धिनी सेति विज्ञायते । अत्र भाष्ये यथा मातुः स्मरतीत्यत्र कर्मणः शेषत्वविवक्षया षष्ठी भवति, तथैव तण्डुलपदादपि सा सिद्धैवेति विशिष्य विकारयोगे षष्ठीत्यभिधानेन षष्ठ्यन्तार्थस्य स्वान्वययोग्यानाम समभिव्याहारे तत्रैवान्वय इत्युत्सर्गतो व्युत्पत्तिः सूचिता । मूलन्नास्तीति । भाष्यानुक्तत्वादिति हेतुः पूरणीयः, अत एवाह—द्विकर्मत्वमिति । ननूक्तरीत्या द्विकर्मकत्वे साधितमेवेति कथम्प्रक्रियाकृदुक्तोदाहरणस्यायुक्तत्वाभिधानमित्याकाङ्क्षायामाह—शक्रादिति । एतेन तादृशप्रयोगाभाव एवेति ध्वनितम् । इतरेषान्द्विकर्मकत्वञ्च व्यापारद्वयार्थत्वेनाभिहितमित्याशयेनाह—अकथितेति । ननु भाष्यानुक्तत्वेनेतरेषा-

न्यादयो ण्यन्तनिष्कर्मगत्यर्था मुख्यकर्मणि ।
प्रत्ययं यान्ति दुह्यादिर्गौणेऽन्ये तु यथारुचि ॥ इति ।

एवञ्च दण्डिमन्थिभ्यामपि मुख्ये स्यात् । तथा च गर्गाः शतं दण्ड्यन्तामिति भाष्यं विरुद्ध्येत । शतं ह्यत्र प्रधानम्, न गर्गाः, अर्थिनश्च राजानो हिरण्येन भवन्तीति वाक्यशेषात् । दण्डिश्चेह ग्रहणार्थो न तु निग्रहार्थः । अत एव ह्यत्र समुदाये वाक्यसमाप्तिः, गुणानुरोधेन प्रधानावृत्तेरसम्भवात् । तथा मन्थेरपि प्रधाने स्यात्, इष्यते तु गौणे, तथा च भारविः—"येनापविद्धसलिलस्फुटनागसद्मा देवासुरैरमृतमम्बुनिधिर्ममन्थे" इति । अत्रामृतं मुख्यम्, उद्देश्यत्वात् । अम्बुनिधिस्तु गौणः ।

यदपि व्याख्यातार आहुः—द्विकर्मकेषु पचेरप्रामाणिकः पाठ इति, तद्भ्रमसात्, तथा हि—कर्मवत्कर्मणेति सूत्रे 'दुहिपच्योर्बहुलं सकर्मकयोः' इति वार्तिके तद्भाष्ये च पचेर्द्विकर्मकता लभ्यते ।

---

भावः । अतस्तद्रीत्यैव दूषणमाह—एवं चेत्यादिना । प्रधानमिति । उद्देश्यत्वादिति भावः । तस्योद्देश्यत्वे मानमाह—अर्थिनश्चेति । न तु निग्रहार्थं इति । शारीरदण्डाद्यर्थं इत्यर्थः । तस्मादेव वाक्यशेषादिति भावः । एतत्सर्वं माधवादिरीत्या लाद्युत्पत्तिनियामकम् । यदि प्रागुक्तं प्रधानकर्मत्वं तदेदं सर्वमसंगतमित्युक्तदिशोह्यम् ।

द्विकर्मकेष्विति । अकथितसूत्रविषयेष्वित्यर्थः । पचेरप्रामाणिकत्वदूषणं

---

न्द्विकर्मकत्वस्य प्रामाणिकत्वाभिधानमयुक्तमत आह—कैयटेति । तद्रीत्यैवेति । कैयटाद्युक्तरीत्येत्यर्थः । ननु ग्रहणार्थत्वेऽपि निग्रहार्थत्वं सिद्धमेवेत्यत आह—शारीरेति । तस्मादेवेति । अर्थिनश्चेत्येतस्मादित्यर्थः । एवञ्च मूले अर्थिनश्चेत्यादिवाक्यशेषादित्यन्तन्देहलीदीपकन्यायेनोभयत्रान्वेति । मूलादि खण्डयितुमुपक्रमते—एतत्सर्वमिति । सर्वम्=मूलस्परममूलं श्लोकस्य पठनम्प्राचीनखण्डनम्प्रागुक्तं वक्ष्यमाणञ्च सर्वम् । प्रागुक्तमिति । कर्तृप्रत्ययसमभिव्याहारे प्रधानीभूतधात्वर्थव्यापारविशेषणेत्यादिना प्रागुक्तमित्यर्थः ।

ननु "कर्तुरीप्सिततमम्" इति सूत्रस्थप्रागुक्तभाष्यसम्मतमेन पचेर्द्विकर्मकत्वमिति कथमप्रामाणिकत्वाभिधानमत आह—अकथितसूत्रेति । अत्रेति । कैयटेत्यादिकथने

कैयटहरदत्ताभ्यां तत्रैव स्फुटीकृता। माधवोऽप्याह—जयतेः कर्षतेर्मन्थेर्मुषेर्दण्डयतेः पचेरित्यादि। उदाजहार च—तण्डुलानोदनं पचतीति।

यत्त्वकथितञ्चेति सूत्रे हरदत्तेनोक्तम्—अकथितशब्दो यद्यप्रधानार्थो गृह्येत तदा पाणिना कांस्यपात्र्यां दोग्धि पय इत्यत्र पाणिकांस्यपात्र्योरपि स्यात्। करणाधिकरणयोस्तु पचत्यादिरवकाशः। न हि तत्रास्य प्रसङ्गो दुहादिपरिगणनादिति। तन्मतान्तराभिप्रायेण। अन्यथा उदाहृतस्वपरग्रन्थविरोधादित्यास्तां तावत्। *शतं जयतीति*। जि अभिभवे। यत्तु जि जय इति व्याख्यातम्, तन्न, तस्याकर्मकत्वात्। यद्यपि जयत्यादयो भाष्ये न पठितास्तथाऽपि चकारेण सङ्गृह्यन्त इति कैयटः।

---

कैयटाद्यनुरोधेनैति ध्वनयन्नाह—कैयटेति। अत्रारुचिबीजं तु पचेर्व्यापारद्वयार्थत्वे कर्तुरीप्सिततममिति कर्मणो वृक्षस्यैकव्यापारपरित्यागेन कर्तृत्वविवक्षयाऽपि भाष्यस्य सूपपादत्वेनैतत्सूत्रविषयत्वे न मानमिति।

तन्मतान्तरेति। पूर्वोपपादितभाष्यसंमतमतान्तरेत्यर्थः। भाष्यानुक्तानां ग्रहणमप्रमाणमित्यनेन सूचयति। उदाहृतस्वपरग्रन्थाश्च यथाश्रुतकैयटानुसारेणेति च ध्वनितमित्यन्यत्र विस्तरः। कैयट इति। अत्रारुचिबीजमुक्तम्।

---

व्यापारद्वयार्थत्वे फलपाकानुकूलव्यापारार्थत्वे इत्यर्थः। तदा ह्युदुम्बरम्फलम्पचतीति प्रयोगः। एकव्यापारेति। फलपाकानुकूलव्यापार एव पचेरर्थः। तदा ह्युदुम्बरः फलम्पच्यत इति प्रयोगः कालनिष्ठस्य द्वितीयस्य व्यापारस्याधुना परित्यागः। भाष्यस्य= "दुहिपच्योर्बहुलं सकर्मकयोरिति भाष्यस्य। एतच्च भाष्यं कर्मवदिति प्राप्तकर्मवद्भावस्य सकर्मकाणाम्प्रतिषेध इत्यनेन प्रतिषेधे प्राप्ते कर्मवद्भावविधायकम्। एतत्सूत्रेति "अकथितञ्च" इति सूत्रेत्यर्थः।

यदुक्तम्मूले मतान्तरेति तद्युक्तम्प्रागुक्तं यद्भाष्यसम्मतम्मतन्तद्रीत्या तस्य युक्तत्वमेवेत्याशयेनाह-पूर्वोपपादितेति। एवञ्च हरदत्तोक्तमसङ्गतमिति भावः। ध्वनितमिति। मतान्तरेत्यभिधानेन ध्वनितमित्यर्थः। उक्तमिति। 'अकथितञ्च' इति सूत्रविषयत्वं यदि जयत्यादीनाम्भाष्यकाराभिमतन्तदा चकारेण तेषां सङ्ग्रह उचितस्तत्रैव तु न मानमित्युक्तप्रायमित्यर्थः।

*अर्थनिबन्धनेति* । न तु स्वरूपाश्रया, 'अहमपीदमचोद्यं चोद्ये' इति तद्धाजसूत्रभाष्ये पृच्छिपर्यायस्य चुदेरपि द्विकर्मकत्वदर्शनादिति भावः। तथा च भट्टिः—स्थास्नुं रणे स्मेरमुखो जगाद मारीचमुच्चैर्वचनं महार्थम्। कालिदासोऽपि—शिलोच्चयोऽपि क्षितिपालमुच्चैः प्रीत्या तमेवार्थमभाषतेव। भारविश्च—उदारचेता गिरिमित्युदारां द्वैपायनेनाभिदधे नरेन्द्र इति। एवञ्च नाथत्यादयो बहवो द्विकर्मका बोद्ध्याः। *देश इति*। कुरुपञ्चालादिरेव गृह्यते। तेनाधिशीङ्स्थासामित्यादेर्न वैयर्थ्यम्। *गोदोह इति*। न चेह कालत्वात्सिद्धिः, लोके कालत्वेन प्रसिद्धस्य मासादेरेव ग्रहणात्।

---

इति भाव इति। अर्थनिबन्धनेयं सञ्ज्ञेति वदतां कैयटादीनामित्यादिः। द्विकर्मकत्वं तु व्यापारद्वयार्थत्वेन सिद्धमिति तत्त्वम्। कुरुपञ्चालादिरिति। व्याख्यानात्तथैव भाष्योदाहरणाच्चेति भावः। न वैयर्थ्यमिति। शीङादेरपि शयनपूर्वके व्यापने वृत्त्या कर्तुरित्येव कर्मत्वस्याऽऽस्यादियोग इव सिद्धत्वादिति भावः। एवं चैवं कल्पनयोक्तदेशादीनामेव कर्मत्वं नान्येषामनभिधादिति सूचयति। प्रसिद्धस्येति। क्रियायाः कालोपाधित्वमेव प्रसि-

---

ननु यदि प्रकृतसूत्रस्यार्थनिबन्धनार्थत्वाभावेनाप्राप्तिस्तदा द्विकर्मकत्वङ्कथमनुक्तानामित्याकाङ्क्षायामाह—द्विकर्मकत्वन्त्विति। यथाप्रयोगव्यापारद्वयार्थकत्वं कल्पनीयमिति भावः। कुरुपञ्चालादेरेव देशपदेन ग्रहणे किम्मानमत आह—व्याख्यानादिति। 'अधिशीङ्स्थासामि' त्यादिसूत्रारम्भमूलकाद्व्याख्यानादित्यर्थः। तथैव कुरुपञ्चालादिशब्दानामेव देशवाचकत्वेनोदाहरणात्। मूलमित्यादेरित्यत्रादिपदेन 'समानोदरे शयित ओ चोदात्तः' इति निर्देशस्य सङ्ग्रहः। 'अकर्मकधातुभिर्योगे' इति वार्तिकमेव स्वातन्त्र्येण न कर्मसञ्ज्ञाविधायकङ्किन्तु स्वार्थकरणकव्यापने धातूनां वृत्तिकल्पनेन सिद्धकर्मत्वानुवादकमित्यस्य वक्ष्यमाणत्वात्तदभिप्रायेणाह—शीङादेरपीति। शयनपूर्वके शयनादिकरणके। नन्वेवन्तादृशदेशग्रहणेऽपि तस्य सूत्रस्य वैयर्थ्यमेवातस्तत्फलितमेवैतदित्याह—एवञ्चेति। तादृशदेशग्रहणे चेत्यर्थः। एवं कल्पनया=स्वकरणकव्यापने वृत्तिकल्पनया, उक्तदेशादीनाम्=कुरुपञ्चालादीनाम्। एवकारेण वैकुण्ठादीनां व्यवच्छेदः। मूलादुक्तार्थस्य न झटिति प्रतीतिरत आह—सूचयतीति। ननु क्रियापि काल एव प्रसिद्धपरिमाणासूर्यक्रियान्तरपरिच्छेदहेतुत्वात्काल एवेत्युक्तेरत आह—क्रियाया इति। जन्यमात्रङ्कालोपाधिरित्यस्य जन्यमात्रन्तत्पदार्थनिष्ठाधेयतानिरूपिता या कालनिष्ठा कालि-

तेन घटमास्ते इत्यादि न भवति। यत्तु प्राचोक्तम्—अकर्मकधातुभिर्योगे देशकालाध्वभावेभ्यो द्वितीयेति केचित्। नदीमास्ते इत्यादि। अत्रेदं वक्तव्यम्—कर्मसञ्ज्ञाया अनुक्तत्वात्कर्मणि लादयो न स्युः। आस्यते मास इति यथा। केचिदित्यप्यसङ्गतम्, द्वितीयाया भाष्यसम्मतत्वात्। नदीमित्युदाहरणमप्यसङ्गतम्। ग्रामसमूहकुर्वादिरेव देशो न तु प्रदेशमात्रम्, तेन ग्रामं स्वपितीत्यत्र न भवतीत्याकरात्। अध्वेति च न्यूनम्, अध्वानं स्वपितीति प्रसङ्गात्। अत एवाकरे अध्वा गन्तव्यत्वेन विशेषितः गन्तव्यत्वेन प्रसिद्धो नियतपरिमाणः क्रोशादिरिति व्याख्यातम्।

*'गतिबुद्धि'*। प्रत्यवसानं भक्षणम्। *शब्दकर्मकाणामिति*। शब्दः कर्म = कारकं येषां तेषामित्यर्थः। न त्विह 'कर्तरि कर्मव्यतिहार' इतिवत् कर्मशब्दः क्रियापरः, कृत्रिमे कार्यसम्प्रत्ययात् कर्मग्रहणसाम-

र्थ्यमिति भावः। तेनेति। देशादीनां ग्रहणेनेत्यर्थः। यत्तु मासादेरेव ग्रहणेनेत्यर्थं इति, तन्न, जन्यमात्रस्य कालोपाधित्वेऽपि कालत्वाभावात्। यदि तु जन्यमात्रस्य कालत्वमिति मतमस्ति तदा घटत्वादिना न तस्य कालत्वम्। किं तु मासत्वादिनैवेति भावः। एतच्च नापूर्वं वचनमित्याकरे स्पष्टम्। अध्वानं स्वपितीति। स्वापमात्रार्थकोऽत्र स्वपितिः।

कार्यसंप्रत्ययादिति। कार्यसंप्रत्ययस्यौचित्यादित्यर्थः। ननु "कर्त्तरि

कसस्बन्धावच्छिन्नाधिकरणता तदवच्छेदकमित्यर्थः। क्रियाया इव जन्यघटादेरपि मासादिपदव्यवहार्यत्वम् 'कालाध्वनोरत्यन्तसंयोग' इति सूत्रोदाहरणसिद्धये स्वीकार्यमेवेत्याशयेनाह—यदि त्विति। न कालत्वम्=न कालपदव्यवहार्यत्वम्। ननु स्वप्धातोर्यदा स्वापकरणकव्यापने वृत्तिस्तदा ऽध्वानं स्वपितीतीष्टमेवेत्यत आह—स्वापमात्रेति। 'एतेनाकर्मकधातुभिर्योग' इति मौलवचनस्यापूर्वत्वशङ्कां वारयति—'अकथितञ्च' इतिसूत्रेऽकर्मकप्रकृतिकण्यन्तानां कथन्द्विकर्मकत्वमिति प्रश्ने ? 'कालभावाध्वगन्तव्याः कर्मसंज्ञा ह्यकर्मणाम्' इत्यत्र प्रसिद्धत्वसूचकहिशब्दोपादानेन सर्वत्र स्वार्थकरणकव्यापने वृत्त्या कालादिकर्मकत्वसम्भवस्य सूचनात्। अकर्मणामित्युपलक्षणम्, सकर्मकाणामप्येवंकल्पनया कालादिकर्मकत्वस्य सम्भवात्।

'कृत्रिमाऽकृत्रिमयो' रिति परिभाषया कृत्रिमाधिकरणकं कार्यजातमुक्तञ्च तु तत्र हेतुरुक्त इत्यत्रग्रन्थस्य हेतुपरत्वमेवेत्याशयेनाह—कार्यसम्प्रत्ययस्येति। एवञ्चौचित्येन

र्थ्याच्च । अन्यथा 'गतिबुद्धिप्रत्यवसानशब्दार्थाकर्मकाणाम्' इत्येवावक्ष्यत् । नियमार्थं चैतत्सूत्रमिति प्राञ्चः । णिजर्थेनाप्यमानस्य यदि भवति तर्हि गत्याद्यर्थानामेव कर्तुरिति । तेन पाचयति देवदत्तो यज्ञदत्तेनेत्यत्र प्रयोज्ये प्रकृत्यर्थं प्रति कर्तृत्वस्यैव निरपवादत्वेनावस्थानात् तृतीया सिद्ध्यति । उक्तञ्च—

गुणक्रियायां स्वातन्त्र्यात् प्रेषणे कर्मताङ्गतः ।
नियमात्कर्मसञ्ज्ञायाः स्वधर्मेणाभिधीयते ॥ इति ।

कर्तुः स्वधर्मेण तृतीययेत्यर्थः । ननु णिजर्थं प्रति कर्मत्वं बाधित्वा प्रकृत्यर्थं प्रति कर्तृत्वं परत्वादेव सिद्धम् । अन्तरङ्गत्वाच्च स्वकारकविशिष्टा हि क्रिया णिजर्थेन सम्बद्ध्यते, हेतुमति णिज्विधा-

---

कर्मे"ति सूत्रे क्रियाया अपि कृतिमत्कर्मत्वोक्तेरिदमसङ्गतमत आह—कर्मेति । प्राञ्च इति । 'हेतुमति च' इत्यत्र भाष्यकृत इत्यर्थः । गुणक्रियायाम्—णिच्प्रकृत्यर्थक्रियायाम् । स्वातन्त्र्यादित्यस्य स्वधर्मेणाभिधाने हेतुत्वम्, कर्मसञ्ज्ञानियमस्य च । प्रेषणे = ण्यर्थे । तृतीययेति । स्वधर्मेणेत्यस्य स्वकार्येणेत्यर्थः । विशिष्टक्रियायाः सम्बन्धे हेतुमाह—हेतुमतीति । अन्तरङ्गत्वादिति । एवं च परत्वादित्यभ्युच्चयः । अस्य विधित्वमित्ययं पक्ष आकडारसूत्रे

---

हेतुनोक्तार्थः साधनीय इति भावः । कृत्रिमकर्मत्वोक्तेरिति । तच्च गन्तुमिच्छतीत्यप्राप्त्यैव, एवं सर्वत्र सन्दर्शनप्रार्थनाध्यवसायारम्भनिर्वृत्तेः सत्त्वेन तत्तन्निरूपितकर्मत्वमस्त्येवेति कृतिमत्कर्मत्वोक्तेरित्यर्थः । एवञ्च कृत्रिमाकृत्रिमन्यायेन कर्मकारकस्यैव ग्रहणमिति नियमासिद्धिरित्याह—इदमसङ्गतमिति । प्राञ्च इत्यभिधानम्मूलकारस्य यद्यरुचिबोधनाय तदा तस्यार्थस्य भाष्यकारसम्मतत्वादेवङ्कथनमसङ्गतमेवेत्यत आह—हेतुमतीति । हरिकारिकायां स्वातन्त्र्यादित्यनेन कर्मत्वप्राप्तिहेतुत्वमभिधानकृतमिति भ्रमनिवारणायाह—स्वातन्त्र्यादित्यस्येति । स्वधर्मेणेत्यस्य कर्तृवृत्तिधर्मेण कर्तृत्वेनेत्यर्थे तृतीयया इत्यस्य न लाभ इत्यत आह—स्वकार्येणेत्यर्थ इति । एवञ्च तृतीययेति फलितार्थकथनमिति भावः । मूलेऽन्तरङ्गत्वमुपपादयति—स्वकारकेति । हेतुमति णिज्विधानादित्यनेन यद्युपजीव्यत्वमेवोपपादितमिति ज्ञायते तदाऽत एवेत्यनेन पुनरुपजीव्येत्यभिधाने पौनरुक्त्यमत आह- विशिष्टाया इति । स्वकारकविशिष्टाया णिजर्थेन सम्बन्ध इत्यर्थः । मूलेऽत एवेत्यस्योक्तहेतोरेवेत्यर्थः । एवञ्च = अन्तरङ्गत्वसत्त्वे च । 'गतिबुद्धीतिसूत्रस्य नियमार्थम्भाष्यकाराभिमतमिति विधित्वपक्षस्य निर्मूलस्य कथनमसङ्गतमत

नात्, कर्तृप्रयोजकस्य हेतुत्वात्। अत एवोपजीव्याऽपि कर्तृसञ्ज्ञा। एवञ्च—

परत्वादन्तरङ्गत्वादुपजीव्यतयाऽपि च।
प्रयोज्यस्यास्तु कर्तृत्वं गत्यादेर्विधितोचिता॥ इति।

अस्त्वेवम्, लक्ष्यस्य निर्बाधत्वात् नियमसूत्रमिदमिति ग्रन्थानां का गतिरिति चेत्, शृणु, णिजर्थस्य शाब्दं प्राधान्यं पुरस्कृत्य प्रधानानुरोधिन्याः कर्मसञ्ज्ञायाः प्राबल्याद्विप्रतिषेध एव नास्ति। अन्तरङ्गोपजीव्यत्वे अपि प्रधानं प्रति न प्राबल्यं प्रयोजयत इत्याशयेन ग्रन्थानामुक्तिसंभवः। अर्थप्राधान्यपुरस्कारे तु विधायकत्वमेवोचितमिति ध्येयम्। *शत्रूनिति*। स्वर्गकर्मकं शत्रुनिष्ठं यद्गमनं तदनुकूलो यन्निष्ठो व्यापारः स श्रीहरिर्मे गतिरित्यर्थः। नन्विह कथं स्व-

---

भाष्ये ध्वनित इत्यभिमानः। तत्र हि परं कार्यमिति पाठे गत्यादीनां ण्यन्तानां कर्मकर्तृसञ्ज्ञमपि प्राप्नोति, आरम्भसामर्थ्यात्कर्मसञ्ज्ञा, परकार्यत्वाच्च कर्तृसञ्ज्ञा प्राप्नोतीत्युक्तम्। तत्रारम्भसामर्थ्यादित्यस्य गत्यादिसूत्रारम्भसामर्थ्यादित्यर्थं मन्यते।

पुरस्कारे त्विति। तुनाऽरुचिः सूचिता। प्रयोजकव्यापारेऽन्यानधीनत्वलक्षणार्थप्राधान्यस्य शाब्दप्राधान्यस्य च सत्त्वेनोद्देश्यत्वलक्षणार्थप्राधान्यस्य प्रयोज्यव्यापारनिष्ठस्य पुरस्कारो न युक्त इति। किं च कर्तृग्रहणं धात्वर्थप्रधानीभूतव्यापाराश्रयरूपस्वतन्त्रोपलक्षणं न तु तत्सञ्ज्ञक-

---

आह—अस्येति। अस्य=गतिबुद्धीतिसूत्रस्य। तदेवाह—तत्र हीति। 'आकडारादि' तिसूत्र इत्यर्थः। कर्मेति प्रथमान्तम् मन्यत इति मूलकृदिति शेषः। अरुचिरभिमान इति मन्यत इत्याभ्यां सूचिता साऽनुपदमेव व्यक्तीभविष्यति। मूले शाब्दप्राधान्यम्पुरस्कृत्येति प्राशाया इति शेषः। न प्राबल्यम्प्रयोजत इति लौकिको दृष्टान्तोऽत्र साधकः, यथा ऽन्तरङ्गामात्यादिकार्यम्प्रधानराजाज्ञया बाध्यत इति' इह शास्त्रे शब्दस्य प्राधान्यात्तदनुरोधिकर्मत्वस्य राजवत्प्राबल्यमिति।

ननु यथा शाब्दप्राधान्यम्प्रयोजकव्यापारे तथोद्देश्यत्वलक्षणमार्थप्राधान्यम्प्रयोज्यव्यापार इति द्वयोः समत्वमेवेति भ्रमादिस्याशयेनाह—अन्यानधीनत्वेति। एवञ्च द्विविधम्प्राधान्यन्तत्रास्तीति प्रयोजकव्यापार एव प्रबल इति भावः। परोक्तमुपजीव्य-

र्गस्य कर्मत्वं कर्तुरीप्सिततमं हि कर्म, न च शत्रवः कर्त्तारः तेषां

परम् । अत उपजीव्यत्वं दुरुपपादम् । आकडारसूत्रस्थस्यारम्भसामर्थ्या-दित्यस्यैतन्नियमारम्भसामर्थ्यादित्यर्थः । किं च परं कार्यमिति पाठे विरो-

त्वमपि खण्डयति—किञ्चेत्यादिना । भाष्यस्य परोक्तस्य तर्हि का गतिरत आह—आक-डारेति । तस्य सूत्रस्य पाठभेदेऽप्यस्य नियमार्थत्वमेवेत्याह—किञ्चेति विपरीतनियम-

१—अयम्भावः "आकडारात्" इति सूत्रे भाष्ये 'लोके व्याकरणे च इन्द्रः, शक्रः पुरुहूतः, कन्दुः, कोष्ठः, कुसूलः इत्येकस्य द्रव्यस्य, कर्तव्यम्, हर्तव्यम् इत्यत्रैकस्य प्रत्ययस्य प्रत्यय-कृत्-कृत्यसंज्ञकस्य च बहुसंज्ञादर्शनादाकडारीयेष्वपि संज्ञानां समावेश एव स्यान्न बाध इति आकडारादिति सूत्रम् । तत्र पुनः शङ्कितम् । "आकडारादेका संज्ञा" इति, "प्राक्कडारात्परकार्य्यम्" इति वा सूत्रं कर्तव्यम् । अत्र कैयटः 'एका संज्ञा' इति पाठे संज्ञाद्वयसमावेशस्य प्राप्ततया 'एकैव संज्ञा न द्वितीया' इति नियमार्थमेव सूत्रम् "प्राक्कडारात्परं कार्य्यम्" इति पाठे तु परपदेन संज्ञाप्रकरणात् संज्ञारूपं परकार्य्यमेव ग्राह्यम् । तथा च परभूताया यस्याः संज्ञायाः पूर्वसंज्ञया बाधः प्राप्नोति तत्र पराऽनेनाभाष्यते इति विध्यर्थं सूत्रम् । नन्वत्रापि पाठे संज्ञयोर्विरोधाभावेन पर्य्यायेण प्रवृत्त्या पूर्वसंज्ञाया अपि चारितार्थ्यसम्भवेनोभयोः प्रसक्तौ नियमार्थमेव स्यात्परमेव न पूर्वमिति वाच्यम्, नियमेऽनुवाददोषापत्त्या बाधकत्वकल्पनाद्वारा विधित्वस्यौचित्येन 'अत्र प्रकरणे संज्ञानां बाध्यबाधकभावो न' इति कल्पनेनादोषात् । तेन परयाऽनवकाशया पूर्वा सावकाशा बाध्यते । द्वयोश्च सावकाशयोर्विप्रतिषेधे परया पूर्वा बाध्यते । इत्येतदत्र वस्तुतत्त्वम् । तत्र 'एका संज्ञा' इति कल्पे 'अङ्गसंज्ञया भपदसंज्ञयोरसमावेशः, 'कर्मधारयत्वे तत्पुरुषग्रहणम्, 'गतिदिवः कर्मकर्तृसंज्ञग्रहणम्' 'गुरुलघुसंज्ञे, नदीघिसंज्ञे' 'परस्मैपदसंज्ञापुरुषसंज्ञा' 'गतिबुद्ध्यादीन ण्यन्तानां कर्मकर्तृसंज्ञम्', इत्यादिवार्तिकैर्दूषणान्युक्तानि । ततः 'गतिबुद्ध्यादीनां ण्यन्तानां कर्मकर्तृसंज्ञमपि प्राप्नोति । आरम्भसामर्थ्याच्च कर्मसंज्ञा, परकार्य्यत्वाच्च कर्तृसंज्ञा प्राप्नोति' इति भाष्ये उक्तम् । अत्र कैयटः 'एकसंज्ञाधिकारे गत्यादिसूत्रं कर्मसंज्ञायां सिद्धायां नियमार्थम्—तथाहि—प्रयोज्यः स्वव्यापारे स्वतन्त्रः, प्रयोजकव्यापारेण चाप्यते इति संज्ञाद्वयप्रसङ्गे एकसंज्ञाधिकारादन्यतरेण भाव्यम् । तत्र प्रत्ययार्थस्य प्राधान्यात्तत्प्रयुक्तया कर्मसंज्ञया प्रवर्त्यम् । गुणप्रधानसन्निधौ प्रधानस्य प्रयोजकत्वे सम्भवति पृथग्गुणास्तद्विरुद्धं स्वकार्य्यं न प्रयुञ्जते । ततश्च सिद्धायां प्रयोज्यस्य कर्मसंज्ञायां गत्यर्थादीनामेवाण्यन्तानां कर्ता ण्यन्तानां कर्मसंज्ञो भवति नान्येषामिति नियमः क्रियते । तेन पाचयत्योदनं देवदत्तो यज्ञदत्तेनेत्यत्र कर्मसंज्ञा न भवति । प्रधानप्रयुक्तकर्मसंज्ञाऽभावे च गुणक्रियानिमित्ता कर्तृसंज्ञा प्रवर्तते । यदा तु 'परं कार्य्यम्' इति पाठस्तदाऽविरोधात् ( एकसंज्ञानियमराहित्यात् ) सर्वत्र संज्ञाद्वयप्रसङ्गे गत्यर्थादीनामेवेति नियमेन ण्यन्तधात्वन्तरप्रयोज्यात् कर्मसंज्ञा व्यावर्त्यते । गत्यर्थादिप्रयोज्यस्य तु संज्ञाद्वयप्रसङ्गः । एषां कर्मसंज्ञैव इति नियमस्तु न, 'आकडारात् परं कार्य्यम्' इति शास्त्रबाधापत्तेः । ननु भाष्ये 'आरम्भसामर्थ्यात्' इत्यनेन विधायकत्वप्रतीत्या गत्यादिसूत्रस्य नियमपक्षे तद्विरोधोऽत आह रत्ने—'आरम्भसामर्थ्यादित्यस्य एतन्नियमारम्भसामर्थ्यादित्यर्थं इति । यद्वा हेतुमति चेति सूत्रे भाष्ये गतिसूत्रस्य नियमत्वोक्त्या कर्तुरित्यस्य ण्यन्तधातुविषयत्वावश्यकत्वेन ण्यन्तधातुविषयस्य 'कर्तुरीप्सिततमम्' इत्यस्यारम्भसामर्थ्यादित्यर्थः । किञ्च 'परं कार्य्यम्' इति पाठे विधायकत्वं दुरुपपादम्, उभयोरप्यविरोधादप्राप्तेः । अत एवाग्रे भाष्ये 'नैष दोषः । आचार्य्यप्रवृत्तिर्ज्ञापयति न कर्मसंज्ञायां कर्तृसंज्ञा भवतीति यदयम् 'हृक्रोरन्यतरस्याम्' इत्यन्यतरस्यां ग्रहणं करोति । 'यदि तु गत्यर्थादिप्रयोज्यस्य संज्ञाद्वयं

गत्यादिसूत्रेण कर्मत्वादिति चेत् मैवम्, कर्मसञ्ज्ञायां हि कर्तृग्रहणं स्वतन्त्रस्योपलक्षणम्। स्वातन्त्र्यञ्च—धातूपात्तव्यापाराश्रयत्वमेव। तच्च—प्रयोजकसंनिधानेऽपि प्रयोज्यस्यास्त्येव। न चोपलक्षणत्वे प्रमाणाभावः, 'प्रधानकर्मण्याख्येये लादीनाहुर्द्विकर्मणाम्, अप्रधाने दुहादीनाम्' इत्युक्त्वा 'ण्यन्ते कर्तुश्च कर्मणः' इति वदतो भाष्यकृत एव

धाभावात्सर्वत्र सञ्ज्ञाद्वयप्राप्तावस्य नियमार्थतैवोचिता। एषां कर्मसञ्ज्ञैवेति नियमस्तु न, 'प्राक् कडारा'दिति शास्त्रबाधापत्तेः। स्पष्टं चेदं तत्रैव कैयटे। नन्विहेति। तथायुक्तमित्यनेनापि न, तस्यानीप्सितत्वाभावात्,

शङ्कां वारयति—एषामिति। योगे कर्तुरिति शेषः। तदा हि गत्याद्यर्थानामणौ कर्तुर्णौ यदि भवति तदा कर्मसंज्ञैवेति नियमाकारः। शास्त्रबाधापत्तेरिति। तादृशनियमेन कर्तृसंज्ञाया व्यावृत्त्या परकार्यस्य विधानाभावादिति भावः। किञ्च भवदुक्तो नियमाकारश्चेत्पाचयत्यादियोगेऽपि कर्मसंज्ञाप्रयोजकव्यापारस्योक्तद्विविधप्राधान्यस्य सत्त्वात्प्राप्नोति, नचेष्टापत्तिः, आकडारादिति न्यासान्तरेण वैरूप्यापत्तेः। तथाणौ यः कर्ता स एव णौ कर्म भवति, न तु तद्भिन्न इति विपरीतनियमः कस्मान्न भवतीति वाच्यम्, लक्ष्यविसंवादापत्तेः। ण्यन्ते कर्मान्तरस्य भवन्मतेऽभावेन "ण्यन्ते कर्तुश्च कर्मणः" इति विशेषाभिधानानुपपत्तेश्च, कर्मान्तरसम्भावनाया अभावेन सौत्राकर्मकग्रहणवैयर्थ्यापत्तेश्च। अनीप्सितत्वाभावादिति। प्रकृतिजन्यशाब्दबोधे प्रधानीभूतो यो व्यापारस्तत्प्रयोज्यफलाश्रयत्वेनोद्देश्यत्वस्य सत्त्वेनोद्देश्यत्वाभावात्मकानीप्सितत्वाभावादित्यर्थः।

प्राबल्यं तत्रैव सूत्रे ह्रक्रोरकरिष्येताम् नाकरिष्यतामन्यतरस्यां ग्रहणमित्यर्थं इति कैयटः। 'परं कार्य्यम्' इति पाठेऽपि नियमेन वारणे तु भाष्यकैयटादिकमसङ्गतं स्यादिति भावः।

अत्रेदं तत्त्वम्—यद्यपि शाब्दबोधीयमुख्यविशेष्यताश्रयत्वरूपं शाब्दप्राधान्यं णिजर्थव्यापारस्यैवेति लोके राजमन्त्रिणोरिव प्रधानकार्य्यं सर्वतो बलवदिति न्यायेन उपजीव्यामन्तरङ्गामपि कर्तृसंज्ञां बाधित्वा कर्मसंज्ञैव स्यादिति गत्यादिसूत्रस्य नियमत्वं प्राप्तं तथापि राजकुमाराध्यापकयोरिव, आरम्भसामर्थ्यादित्याकडारादिति सूत्रस्थभाष्यप्रामाण्यात्, विधिनियमसम्भवे विधिरेव ज्यायानिति न्यायात्, लोकव्यवहारबोधोद्देश्यत्वलक्षणार्थप्राधान्यस्यैव शाब्दप्राधान्यापेक्षया बलवत्त्वमिति कर्तृसंज्ञा स्यादिति तद्बाधनार्थं गत्यादिसूत्रमिति विधित्वमेवास्येति प्राचीनाः। नवीनास्तु शाब्दप्राधान्यस्य, अन्यानधीनत्वलक्षणार्थप्राधान्यस्य च णिजर्थव्यापारे सत्त्वात्, हेतुमति चेति सूत्रभाष्ये "एतेषामेव ण्यन्तानां यः कर्ता स णौ कर्मसंज्ञो भवति नान्येषामिति" इत्युक्तेश्च नियमार्थत्वमेव गत्यादिसूत्रस्य। आकडारादिति सूत्रस्थभाष्यन्तु नियमसूत्रारम्भसामर्थ्यादित्यर्थकम्, ण्यन्तविषयककर्तुरिति सूत्रारम्भसामर्थ्यादित्यर्थकं वेति न तद्विरोधः।

तथा च णिजर्थव्यापारजन्यफलाश्रयस्य कर्मत्वंचेत्तदा गत्याद्यर्थकणिजन्तधातूपात्तव्यापारजन्यफलाश्रयस्यैव नान्यस्येति कर्तुरिति सूत्रे णिजर्थव्यापारजन्यफलाश्रयातिरिक्तस्येप्सिततमस्य ग्रहणान्न देवदत्तेन पाचयतीत्यादौ कर्मत्वमित्याहुः। अत्र नियमार्थत्वपक्ष एव श्रेयान् भाष्यस्वरसादिति दिक्।

तत्र प्रमाणत्वात् । न हि लक्षणां विना णिजन्तानां द्विकर्मकता लभ्यते येन ण्यन्ते कर्तुरिति वचनं सावकाशं स्यात् । ननु स्वतन्त्रे सङ्केतितस्य तत्रैव लक्षणा कथमिति चेत्सञ्ज्ञान्तरानुपहिते सङ्केतितस्य तदुपहितसाधारणे स्वतन्त्रमात्रे सेत्यवधेहि ।

---

तत्रापि कर्तुरित्यनुवृत्तेश्च । लक्षणां विनेति । कर्तृपदस्य स्वतन्त्रे लक्षणां विनेत्यर्थः । अत एव 'सार्थाद्धीयते' इत्यत्र कर्तुरपादानत्वेऽपि कर्मत्वप्रयुक्तलकारसिद्धिरिति सम्प्रदानसञ्ज्ञासूत्रे कैयटे स्पष्टम् । 'तत्प्रयोजको हेतुः' इति सूत्रेऽप्येवमेवात एव णिच्सिद्धिः । अवधेहीति । किं च प्रयोजककर्तृव्यापारप्रयोज्यसंयोगरूपफलाश्रयत्वेनाक्षतं कर्मत्वम् । किं च णिजुत्पत्तेः

---

ननु प्रयोज्यव्यापारोद्देशेन प्रयोजकव्यापारस्य प्रवृत्तेर्लौकिकमनीप्सितत्वं स्वर्गादीनामस्येवेत्यत आह—तत्रापीति । कर्तुः क्रियया तथायुक्तमित्येवं सूत्रार्थस्य सत्त्वात् । मूले स्वतन्त्रोपलक्षणमिति स्वतन्त्रे लाक्षणिकमित्यर्थः । कर्तृपदस्य शक्तिविशेषावच्छिन्ने परिभाषितत्वादिति भावः । अत एव=कर्तृपदस्य तत्र लक्षणासत्त्वादेव, हाधातोर्विभागानुकूलव्यापारोऽर्थः । तादृशविभागावधित्वस्य प्रकृतधात्वर्थप्रधानव्यापाराश्रयत्वेन कर्तृत्वस्य च प्राप्तौ परत्वात्कर्तृसंज्ञैव सार्थस्य स्यान्न त्वपादानत्वमिति कथमत्र पञ्चमीति न शङ्क्यम्, 'अपादाने चाहीयरुहो'रिति ज्ञापकादिति गृहाण । अपादाने या पञ्चमी भवति तदन्ताद्वा तसिः स्यात् तच्चेद् अपादानं हीयरुहसम्बन्धि न चेदिति तदर्थः । ग्रामाद् ग्रामतो वा गच्छतीति तदुदाहरणम् । अत्र हीयेति कर्मप्रत्यये सति हीयते इति यद्भवति तदेकदेशानुकरणमतस्तेन पर्युदासरूपज्ञापकेन कर्मप्रत्ययान्तहाधातुयोगे विप्रतिषेध इति शास्त्राप्रवृत्त्याऽपादानत्वम्भवति, सार्थं एनं जहाति अयं सार्थाद्धीयते इति सम्प्रत्ययात् । हीयत इति कर्मकर्तरि कः, हीयतेऽपगच्छतीत्यर्थः । न केवलङ्गतिबुद्धीति सूत्र एव कर्तृग्रहणं स्वतन्त्रोपलक्षणङ्किन्त्वन्यत्राऽपीत्याह—तत्प्रयोजकमिति । एवमेव=तत्पदमपि स्वतन्त्रपरामर्शकमेव । 'कर्तुरीप्सिततमम्' इति सूत्रे कर्तृपदस्य लक्षणां विनापि निर्वाह इत्याशयेनाह—किञ्च प्रयोजकेति । एतत्सर्वङ्कर्मसंज्ञायाः प्रागप्रवृत्तिमभ्युपेत्य । वस्तुतस्तु गतिबुद्धीति सूत्रस्य णिचि कृते प्रवृत्तिः । 'कर्तुरीप्सिततममि'त्यस्य तु प्रागेव प्रवृत्तिरित्यनुपपत्तिगन्धोऽपि नेत्याह—किञ्च णिजुत्पत्तेरिति । ननु कृतमपि कार्यन्निवर्तयन्तीत्यर्थकाकृतेति न्यायेन प्राक् प्रवृत्तायाः

---

१ ननु कर्मसंज्ञोद्देश्यकोटौ संज्ञान्तरानुपहितत्वस्याप्रवेशात् तेन रूपेण कर्तृपदस्याबोधकतया 'संज्ञान्तरानुपहिते संकेतितस्य' इत्यसङ्गतमिति चेन्न, कर्तृपदस्य संकेतसम्बन्धेन कर्तृपदवत्त्वेन शक्ततया धात्वर्थव्यापाराश्रयत्वरूपस्वतन्त्रत्वावच्छिन्ने संज्ञान्तरापादानाद्युपहितानुपहिते लक्षणेति तदर्थत्वेनादोषात् । तथा च कर्तृपदेन धात्वर्थव्यापाराश्रयस्य ग्रहणेन सार्थाद्धीयते इत्यादावपि नासङ्गतिरिति भावः ।

*नीवह्योरिति* । यद्यप्यनयोः प्रापणमर्थो न गतिस्तथाऽपि गति-रपि विशेषणीभूय प्रापणमध्ये प्रविष्टेत्येतावन्मात्रेण प्राप्तिं मत्वा प्रति-षेध उक्तः । *नियन्त्रिति* । नियन्ता=पशुप्रेरको न तु सारथिरेव, तेन वाहयति बलीवर्दान् यवान् इति सिद्ध्यति । *अनिषेध इति* । प्रयोज्यः कर्मेति वक्तव्यमिति फलितोऽर्थः । *सूत इति* ।

---

प्रागेव स्वर्गादीनां कर्मत्वप्रवृत्तिस्तस्यामवस्थायां कर्तृत्वसत्त्वात् । अकृ-तव्यूहा इति त्वनित्या, नास्त्येव वा ।

प्रापणमिति=उत्तरदेशसंयोगानुकूलव्यापारानुकूलव्यापारो हि तत् । तथाऽपीति । अत एव प्रतिषेधाद्यथाकथंचिद्गत्यर्थानामप्यत्र ग्रहणमिति भावः । प्राप्तिं मत्वेति । न वेति सूत्रे भाष्ये हृक्रोरित्यस्योभयत्र विभाषा-त्वमुक्त्वा प्राप्तेऽभ्यवहरतिमुदाहृत्याप्राप्ते हरति भारं देवदत्तो हारयति भारमित्युदाहरणात्, विपूर्वो हरतिर्गत्यर्थोऽभ्यवपूर्वः प्रत्यवसानार्थ इति तत्रत्यकैयटाच्च, न गतीति सूत्रभाष्ये 'हृ-वह्योरप्रतिषेधः' 'सम्प्रहरन्ते राजानः' इति हिंसार्थे एव उदाहरणाच्च । तत्रैव वहिर्न गत्यर्थः, देशान्त-

---

संज्ञाया अपगमे पुनस्तस्याः प्रवृत्तिरभिप्रेता, अथवा प्रयोज्यस्य कर्तृत्वमुल्लङ्घ्यतीति स्व-र्गादीनाङ्कर्मसंज्ञा प्राङ् न भविष्यतीत्यत आह—अकृतेति । अनित्यमिति । 'छ्वोरि' तिसूत्रे सतुक्ग्रहणात् एतत्कैयटानुरोधेन । स्वमतेनाह—नास्त्येवेति ।

गतिः=उत्तरदेशसंयोगानुकूलव्यापारमात्रम्, प्रापणन्तु तादृशव्यापारानुकूलव्यापार इत्याह—उत्तरदेशेति । अत एव प्रतिषेधादिति नीवह्योरित्यस्मादेव प्रतिषेधादित्यर्थः । यथाकथञ्चित् विशेषणतया जातिविशिष्टस्य शब्दार्थत्वेऽपि जातिशब्दत्वव्यवहारवत् अपिना विशेष्यतयेत्यस्य सङ्ग्रहः । अत्र=गतीति सूत्रे । अत एव णिजन्तस्य गत्याद्यर्थकत्व-मुपजीव्य गत्याद्यर्थानामणौ कर्त्ता यः स णाविति व्याख्यानमपि सुष्ठु सङ्गच्छते । एता-वता प्रबन्धेन मूलं संयोज्य सिद्धान्तरीत्या मूलं खण्डयितुमुपक्रमते—न वेति । सूत्र इत्यादिना । अभ्यवहरतिम्=अभ्यवपूर्वकहृधातुम् । प्रत्यवसानार्थत्वाद्धि प्राप्तिरत्र । अप्राप्त इति । संयोगानुकूलव्यापारमुख्यविशेष्यकोपस्थितिजनकस्य गत्यर्थत्वमिति तदा-शयः । उदाहरणादिति । प्रापणार्थस्य गत्यर्थत्वेऽप्राप्त्यभिधानमसङ्गतं स्यादिति भावः । विपूर्व इति । विहरति देशान्तुरग इति शब्दात्सम्यग्गच्छतीत्यर्थावगमात् केवलस्य गत्यर्थत्वे विपूर्व इति न वदेदिति भावः । अभ्यवपूर्व इति । हरतिरित्यस्यानुषङ्गः, अप्रतिषेध इति । न गतीतिप्रतिषेधो नेत्यर्थः । प्रापणं यदि गतिः स्यात्तदा प्रतिषेधा-भावाभिधानमसङ्गतं स्यादिति भावः । नन्वेतावता हरतेरस्तु तथा वहतेस्तु गत्यर्थत्वा-

नियन्ता प्राजिता यन्ता सूतः क्षत्ता च सारथिः।

*आदयतीति*। अकर्त्रभिप्राये फले शेषात्कर्त्तरीति परस्मैपदम्। कर्त्रभिप्राये तु णिचश्चेत्यात्मनेपदमेव। तदपवादस्य 'निगरणचलनार्थेभ्यश्च' इत्यस्य "अदेः प्रतिषेधः" इति निषिद्धत्वात्। *सस्यामिति*। क्षेत्रस्थानां यवानां भक्ष्यमाणानां हिंसा द्रष्टव्या, तस्यामवस्थायां तेषां चेतनत्वात्। *स्मारयतीति*।

यत्तु—'णेरणाविति सूत्रे स्मरयत्येनं वनगुल्मस्स्वयमेवेत्युदाहियते, तत्र भाष्यप्रयोगादेव कर्मत्वं बोद्धयम्।

रप्रापणं वहेरर्थ इति भाष्येण प्रापणस्य गतित्वाभावबोधनाच्च न गत्यर्थत्वेन तेषां ग्रहणम्। प्राप्तिश्च ÷ सम्बन्धमात्रम्; न संयोग एव, सुखं प्राप्तो भूः प्राप्तेत्यादिव्यवहारात्। आदिकर्मणि च कर्तरि क्तः। देशान्तरप्राप्तेः परं गतिं विनाऽनुपपत्त्या क्वचिन्नान्तरीयकतया गतिप्रतीतिरस्त्येव तादृशमपि गत्यर्थकत्वमभिमत्य वार्तिकारम्भः। वस्तुतोऽप्राप्तिरेवेति अनेन सूचितम्। हिंसेति। हिंसाङ्गे भक्षणे च भक्षयतेर्वृत्तिर्बोद्धया। भाष्यप्रयोगादेवेति। आध्यानार्थकघटादिभिन्नस्मरतेरेव योगे तद्भाष्यप्रामाण्यात्कर्मत्वाभावो घटादेस्तु भवत्येव कर्मत्वमिति भावः।

भावे किम्मानमत आह—तत्रैवेति। न गतीतिसूत्र एवेत्यर्थः। इति भाष्येणेति। वार्तिकस्थवाहग्रहणप्रत्याख्यानपरेणेति शेषः। वहधातोर्गत्यर्थत्वाभावे हेतुमाह—प्राप्तिश्चेति। एवञ्च संयोगत्वेन संयोगस्य तन्मध्येऽप्रवेशान्न गत्यर्थत्वमिति भावः। सुखम्प्राप्त इति। अत्र समवायत्वेन सम्बन्धस्योत्तरत्र स्वस्वामिभावत्वेन सम्बन्धस्य प्रवेश इति विवेकः। गत्यर्थत्वाभावे कर्तरि क्तप्रत्यय एव कथमत आह—आदिकर्मणीति। चस्त्वर्थे। नन्वेवन्तर्हि 'नीवह्यो' रिति वार्तिकस्य का गतिरत आह—देशान्तरप्राप्तेरिति। परं केवलं सुखम्प्राप्त इत्यत्र तथावगत्यभावादाह—क्वचिदिति। ग्रामम्प्राप्त इत्यादौ नान्तरीयकतया तस्य प्रतीतिः, इत्यभिमत्य=एवमङ्गीकृत्य। उक्तभाष्यविरोधो ह्यभिमानस्वोक्तौ हेतुः। एवञ्च न्यायसिद्धार्थानुवाद एव वार्तिककृता कृत इति तत्त्वम्। ननु क्षेत्रस्थानां यवानाम्भक्षणे यवानां यद्यपि प्राणवियोगसत्त्वाद्धिंसा भवति तथापि धातोस्तदर्थत्वाभावान्न निषेधस्य प्राप्तिरत आह—हिंसाङ्गेति। हिंसाया अङ्गम्=विशेषणमिति वाच्यार्थः। भक्षणकरणकहिंसने धातोर्वृत्तिरिति भावः। भक्षयतेः स्वार्थणिजन्तप्रकृतिकहेतुमण्णिजन्तस्य भक्षयतेः अस्मादेव निषेधात् 'गतिबुद्धि' इति सूत्रेऽणीत्यत्र हेतुमण्णिच एव ग्रहणम्। मूले—स्मारयतीति। चिन्तनार्थोऽयन्न मिद्। ननु यदि

*शब्दायतेरिति* । शब्दं करोतीत्यर्थे 'शब्दवैर'इत्यादिना क्यङ्, ततो हेतुमण्णिच् । *धात्वर्थेति* । एतेन शब्दाययन्ति सैनिका रिपूनिति कर्म प्रयुञ्जानाः परास्ताः । यत्तु प्राचा—अय-क्रन्द-शब्दाय-ह्वेञां नेत्युक्तम् । तत्रायतेरुक्तिस्तावन्निर्मूलैव । क्रन्दह्वेञोस्तु शब्दक्रियत्वमात्रेण प्राप्तिसम्भावना । वस्तुतस्तु नासौ सूत्रार्थ इत्युक्तम् । यदपि श्रु-ग्रह-दृशामिति कर्मत्वमुक्तम् । तत्र दृशिग्रहणं प्रामाणिकमेव । शृणोतेस्तु शब्दकर्मकत्वात्सिद्धम् । ग्रहेस्तु द्विकर्मकत्वं यद्यपि सुधाकरादीनां संमतं तथाऽपि बहूनामसंमतम् । अत एव 'अजिग्रहत्तं जनको धनुस्तद्' इति भट्टिप्रयोगमजिग्रहत् बोधितवानिति, व्याचख्युः । तथा अयाचितारं न हि देवदेवमद्रिः सुतां ग्राहयितुं शशाकेत्यत्र ग्राहयितुमुद्वाह्यत्वेन बोधयितुमिति । युक्तं चैतत्—ग्राहेर्द्विकर्मकत्वे हि जायाप्रतिग्राहितगन्धमाल्यामित्यत्र क्तेन प्रयोज्याया धेनोरभिधानं स्यात्, ण्यन्ते कर्तुश्च कर्मण इत्युक्तेः । ततश्च जायया गन्धमाल्ये प्रति-

परास्ता इति । इदं च कैयटानुरोधेनोक्तम् । वस्तुतः शब्दक्रियाणामिति पक्षे भाष्ये ह्वाययति, शब्दाययति, क्रन्दयतीनां निषेध उक्तो न तु शब्दकर्मकारकाणामिति पक्षे । एवं च तत्र पक्षे शब्दायतौ प्रतिषेधानुक्त्याऽकर्मकशब्दायतिसत्त्वे न मानम्=शब्दस्य धात्वर्थेन संगृहीतत्वे ऽपि बहिर्भूतपुत्रादिकर्माभावे न मानमिति बोद्धव्यम् । व्याचख्युरिति । तेन बोधनातिरिक्तार्थस्य न द्विकर्मकत्वम् । अन्यथा ऽप्रसिद्धार्थपरिग्रहो व्यर्थ एव स्यादिति भावः । ग्राहेः=बोधनातिरिक्तार्थग्राहेः । ततश्चेति । एवं व्यधिकरणत्वादन्य-

भाव्यप्रयोगात्कर्मत्वन्तदा स्मारयति देवदत्तेनेत्यत्रातिप्रसङ्ग इत्यत आह—आध्यानेति । उत्कण्ठापूर्वकस्मरणेत्यर्थः । स्मरतेः=चिन्तनार्थस्य स्मरतेः ।

वक्ष्यमाणरीत्याऽयुक्तममूलं योजयति—इदमिति । शब्दायतेरिति वचनमित्यर्थः । कैयटपदसूचितामरुचिमाह—वस्तुत इत्यादिना । एवञ्च=तत्र पक्षे प्रतिषेधानुक्तौ च । तत्र पक्षे=शब्दकर्मकाणामिति पक्षे । ननु धात्वर्थसङ्गृहीतकर्मकत्वमेव मानम्भविष्यतीत्यत आह—शब्दस्येत्यादि । बहिर्भूतेति । अन्तर्भूतशब्दात्मककर्मण इत्यादिः । तेन=एवं व्याख्यानेन । बोधनार्थस्य बुध्यर्थकत्वेन गतिबुद्धीति सूत्रस्य प्राप्तिरन्यार्थकत्वे तु नेति भावः । अन्यथा=अन्यार्थस्यापि द्विकर्मकत्वस्य प्रामाणिकत्वे ।

ग्राहितामिति स्यात् । सिद्धान्ते तु प्रतिग्राहिते गन्धमाल्ये ययेति विग्रहः । जायानिष्ठप्रेरणविषयीभूतं गन्धमाल्यकर्मकं यत्प्रतिग्रहणं

पदार्थाभावाच्च बहुव्रीहिर्न स्यादिति भावः । प्रतिग्राहिते इति । अस्य जाययेत्यादिः । तत्र जायाप्रतिग्राहितशब्दयोस्तृतीयातत्पुरुषं कृत्वा बहुव्रीहिः कार्य इति भावः । बहुव्रीहिणा तृतीयातत्पुरुषस्तु दुर्लभो विधायकाभावात्, अवयवेन सामर्थ्येऽपि समुदायेन तृतीयान्तस्यासामर्थ्याच्च । तदाह—जायानिष्ठेति । ननु द्विकर्मकत्वेऽपि धेनुरूपप्रयोज्यकर्मणः कर्मत्वाविवक्षायां गन्धमाल्यरूपकर्मण्येव क्ते इष्टसिद्धिरिति चेन्न, णिजुत्पत्त्यर्थं प्रयोजकजायाया हेतुत्वावश्यकत्वेन हेतोश्च कर्तृप्रयोजकरूपत्वेन प्रयोज्याया धेनोः कर्तृत्वार्थं तन्निष्ठप्रेरणविषयीभूतव्यापाराश्रयत्वविवक्षाया आवश्यकत्वेनेदृशार्थस्यैवैतत्कर्मलक्षणानिमित्तकोटौ प्रवेशेनेदृशविषये कर्मत्वाविवक्षाया उपपादयितुमशक्यत्वात् । कर्मत्वशक्तेरपि तत्समनियतत्वेनाविवक्षाया असम्भव इत्यभिमानात् । न च निवृत्तप्रेषणप्रतिग्रहधातोर्णिजिति गन्धमाल्य-

एवञ्चेति=धेनोरभिधाने च । अन्यपदार्थत्वाभावादिति । धेनोः क्तेनाभिधानादिति भावः । तत्र जाययेत्यस्यादित्वे तृतीयान्तस्य व्यधिकरणत्वाद्बहुव्रीहिघटकत्वन्न सम्भवतीत्यत आह—तृतीयातत्पुरुषमिति । बहुव्रीहिरिति । जायाप्रतिग्राहितशब्दस्य द्वन्द्वसंज्ञकगन्धमाल्यशब्देन बहुव्रीहिसमास इत्यर्थः । ननु प्रतिग्राहिते गन्धमाल्ये ययेत्यर्थे बहुव्रीहिं कृत्वा तेन जाययेति तृतीयान्तस्य तत्पुरुषोऽस्त्वित्यत आह—बहुव्रीहिणेति । विधायकाभावादिति । समुदायार्थस्य तृतीयान्तार्थकृतत्वाभावेन 'तृतीयातत्कृतेति' सूत्रस्याप्राप्तेरिति भावः । ननु अवयवद्वारकसामर्थ्यमादाय 'सुप्सुपा' इति समासोऽस्त्वित्यत आह—अवयवेनेति । द्विकर्मकत्वेऽपीति । बोधनातिरिक्तार्थस्य प्राहेर्द्विकर्मकत्वेऽपीत्यर्थः । कर्मत्वाविवक्षायामिति । सम्बन्धित्वेन विवक्षायामित्यर्थः । इष्टसिद्धिरिति । जायया प्रतिग्राहिते इत्यर्थे तृतीयातत्पुरुषं कृत्वा जायाप्रतिग्राहिते गन्धमाल्ये यस्या इत्यर्थे बहुव्रीहिसमासेनेष्टसिद्धिरिति भावः । हेतुत्वार्थमिति । हेतुसंज्ञार्थमित्यर्थः । कर्तृत्वार्थमिति । कर्तृसंज्ञासिध्यर्थमित्यर्थः । ईदृशार्थस्य=तादृशव्यापाररूपार्थस्य । एतत्कर्मसंज्ञेति । धेनोः कर्मसंज्ञानिमित्तकोटौ प्रवेशेनेत्यर्थः । ईदृशविषये=कर्तुः कर्मत्वविषये । ननु कर्तृत्वकर्मत्वशक्त्योरन्यतरस्य सत्त्वमस्तु, अन्यतरस्य विवक्षाऽस्त्वित्यत आह—कर्मत्वशक्तेरपीति । तत्समनियतत्वेन=कर्तृत्वसमनियतत्वेन । अभिमानादित्यभिधानमरुचिसूचनाय, तद्बीजन्तु शक्त्योर्भेदे तथा विवक्षा सम्भवत्येवेति ।

निवृत्तप्रेषणग्रहधातोः स्वीकारमात्रार्थकग्रहधातोः णिचि तादृशस्वीकारानुकूल-

तत्कर्त्रीमित्यर्थः। अन्यपदार्थान्तर्भावेणेव विशेषणविशेष्यभाववैपरीत्येनैवैकार्थीभावकल्पनात्। अभिवादिदृशोरिति। अभिवादयतेरप्राप्ते दृशेस्तु प्राप्ते विभाषेयम्।

*'आभिनि'*। नेरल्पाच्तरत्वेन पूर्वनिपाते कर्तव्ये विपरीतोच्चारणं तादृशसमुदायविवक्षार्थमित्याह—*संघातपूर्वकस्येति*। तेनेह न—'निविशते यदि शूकशिखा पदे' इति। *क्वचिन्नेति*। 'एष्वर्थेष्वभिनिविष्टानाम्' इति भाष्यप्रयोगश्चेह मानम्। उपपदविभक्तिमाह—*उभसर्वतसो*‌*रित्यादिना*। उभसर्वयोस्तसौ उभसर्वतसौ तदन्तयोर्योगे द्वितीया कार्ये

---

कर्मण्येव क्ते इष्टसिद्धिर्जायापदेन षष्ठीसमास इति वाच्यम्, प्रकृत्यैव तदर्थलाभाण्णिजुपादानस्यापुष्टतापत्तेः। ननु गवादिपदानां विग्रहे स्वार्थमात्रपराणां समासेऽन्यपदार्थपरत्वमिव प्रतिग्राहितशब्दस्य धेनुपरत्वेऽपि वृत्तौ गन्धमाल्यपरत्वं भविष्यतीत्यत आह—अन्यपदार्थेति। तदन्तर्भावेणैकार्थीभावस्य सूत्रव्युत्पत्त्यादिबलेनाङ्गीकारेऽप्यन्यान्तर्भावेण तत्स्वीकारे मानाभाव इति भावः। अभिवादयतेरिति। वदि अभिवादन इति ण्यन्तस्येत्यर्थः।

व्याख्यानात् सङ्घातग्रहणे स्थिते व्याख्याने बीजाभासं दर्शयति—पूर्वनिपातेति।

निविशत इति। अत एव 'सत्त्वे निविशते' इति भाष्यप्रयोगः सङ्गच्छते। भाष्यप्रयोग इति। समर्थसूत्रस्थ इति शेषः। उभसर्वयोस्तसाविति। उभांशे उभशब्दघटितसमुदायोद्देश्यकत्वं षष्ठ्यर्थ इति बोध्यम्। उभशब्दस्य

---

व्यापाररूपार्थे णिचि उच्छृङ्खलस्य शङ्कां वारयितुमुपक्रमते—नन्वित्यादिना। अन्यान्तर्भावेणेति। वृत्तौ विग्रहघटकपदार्थातिरिक्तार्थस्यान्यपदार्थभिन्नस्य बोधकः शब्द इत्यर्थे मानाभाव इति भावः। व्याख्यानादिति। वक्ष्यमाणभाष्यप्रयोगमूलकव्याख्यानादित्यर्थः। बीजाभासमिति। पूर्वनिपातप्रकरणस्यानियतत्वात्पूर्वनिपातस्य संघातविवक्षासाधकत्वाभावाद्बीजाभासत्वमित्यर्थः।

अत एव=संघातस्य विवक्षायाः सत्त्वादेव। भाष्यप्रयोगः—वोतो गुणवचनादिति सूत्रस्थभाष्यप्रयोगः। ननु नित्यमिति सूत्रेणाऽयचो वृत्तिविषये विधानादुभशब्दोद्देश्यकत्वं षष्ठ्यर्थं इति वक्तुमशक्यमित्यत आह—उभांश इति। ननु मौलवचने तर्हि कुतो नायजित्यत आह—उभशब्दस्येति। यत्र संख्येयपरताऽस्ति तत्र 'उभादुदात्त' इत्यस्य प्रवृत्त्या नित्यमित्यस्यापि तत्रैव प्रवृत्तिरिति भावः। प्राचीनसम्मतव्याख्यानानु-

त्यर्थः । अत्र प्राञ्चः—उभशब्देनोभयशब्दो लक्ष्यते,—अन्यथा तसोऽसम्भवादित्याहुः । वस्तुतस्तु वृत्तिविषये अयच्प्रवृत्तावपि उभशब्दाद्विहितो यस्तस् तदन्तमस्त्येवेति यथाश्रुतं साधु । धिगित्यविभक्तिको निर्देशो गवित्ययमाहेतिवदिति प्राञ्चः, तन्न, तथा सति अपदान्ततया दृष्टान्ते 'लोपः शाकल्यस्य' इत्यस्येव दार्ष्टान्तिके जश्त्वस्यापि अप्रवृत्तिप्रसङ्गात् । न चायं गकारान्त एवेति भ्रमितव्यम्, 'कस्य च दः' इति सूत्रे धक्किदित्युदाहरणस्यासङ्गतिप्रसङ्गात् । तस्माद्धिगिति विभक्त्यन्तमेव, प्रकृतिवदनुकरणमित्यतिदेशात्सुपो लुक् । उभयतः कृष्णमिति कृष्णस्यपार्श्वद्वयेऽपीत्यर्थः । आद्यादित्वात्तसिः । षष्ठ्यर्थे द्वितीया । एवमुपपदविभक्तौ सर्वत्र बोध्यम् ।

नाम्नोर्द्विधैव सम्बन्धः सर्ववाक्येष्ववस्थितः ।
सामानाधिकरण्येन षष्ठ्या वाऽपि क्वचिद्भवेत् ॥

---

शब्दपरत्वाद्वृत्तिविषयेऽपि नायच् वार्त्तिके । उदाहरणे तु अन्तरङ्गत्वात् पूर्वमेवायचि तत उभयशब्दात्तस्यपि तद्घटितसमुदायोद्देश्यकत्वमस्त्येवेति न दोषः । वृत्तिविषये इति । वृत्तौ कृतायामित्यर्थः । प्राचीनैर्हि 'उभौ साभ्यासस्य' इति निर्देशेन वृत्तिघटके परत एवायजिति व्याख्यातं तदाह—उभशब्दादित्यादि । एवञ्च तेषां लक्षणाश्रयणं व्यर्थमिति भावः । अविभक्तिक इति । अनुत्पन्नविभक्तिक इति व्याख्यातारः । दृष्टान्तबलेन तथैव लाभादित्यभिप्रेत्याह—जश्त्वस्येति । अतिदेशादिति । अतिदेशेनाव्ययत्वादित्यर्थः । आद्यादित्यादिति । कृष्णसम्बन्धिपार्श्वद्वयाभ्यामागता इत्यर्थे पञ्चम्यास्तसिलित्यन्ये । सामानाधिकरण्येन=विनाऽपि सम्बन्धं विशेष्यविशेषणभावेन । षष्ठ्यर्थे:

---

रोधेनाह—वृत्तौ कृतेति । धिगित्यत्र विभक्त्यश्रवणेनाविभक्तिकत्वं स्पष्टमेवेत्यत आह—अनुत्पन्नेति । सूत्रेणैव तसिलप्रत्ययस्योपपत्तावाद्यादित्वकल्पनमनुचितमित्यभिप्रायेणाह—कृष्णसम्बन्धीति । ननु सामानाधिकरण्यमेकाधिकरणवृत्तित्वन्तस्य सम्बन्धत्वन्तु 'नीलो घटः' इत्यादौ बाधितन्द्वयोरभेदादत आह—विनापीति । सम्बन्धम्=सम्बन्धविशेषम् । षष्ठ्याः शब्दरूपतया सम्बन्धत्वन्न सम्भवतीत्यत आह—भेदसम्बन्धेति । भेदप्रयोज्यसम्बन्धेत्यर्थः । स च स्वस्वामिभावादिरूपः । ननु नाम्नोरेव द्विधाऽभिसम्बन्धाभिधानमसङ्गतम्, क्रिययोरपि द्विधा सम्बन्धस्य दर्शनात् । 'एधाञ्चक्रे' इत्यादौ, 'पुरीमवस्कन्द' इत्यादौ चाभेदस्य,' कृष्णन्नमेच्चेत्सुखं यायात्' इत्यादौ

इति वृद्धोक्तौ षष्ठीग्रहणं तदपवादविभक्तेरप्युपलक्षणम् । द्विधेत्युक्तिः सामानाधिकरण्यवैयधिकरण्याभ्यां निर्वाह्या । षष्ठी—तदपवादयोरेककोटितया वा । *धिक् कृष्णाभक्तमिति* । तस्य निन्द्यत इत्यर्थः । कथं धिङ् मूर्खेति, सम्बोधनपदस्य क्रियान्वय इति प्रागेवोक्ततया धिक्शब्दयोगाभावात् । क्रियापदं च क्वचिच्छ्रुतं क्वचिदाक्षिप्तमित्यन्यदेतत् । तथा च मूर्खसम्बोध्यकं निषिद्धाचरणादि निन्द्यत इति वाक्यार्थः । एतेन हा तात हा देवि धीरा भवेत्यादि व्याख्यातम् ।

---

ति । भेदसम्बन्धपूर्वकविशेष्यविशेषणभावेनेत्यर्थः । नाम्नोरित्यनेन क्रियाकारकयोः क्रियाकारकभावरूपकारकविभक्त्यर्थसम्बन्धेनान्वय इति सूचितम् । वैयधिकरण्येति । षष्ठ्या वेत्येतद्वैयधिकरण्योपलक्षणमिति भावः । क्रियान्वय इति । बोधनीयक्रियान्वय इत्यर्थः । धिक्शब्दयोगाभावादिति । संबोधनस्य क्रियान्वयात् क्रिययैव धिको योगो न तेनापीति भावः । व्याख्या-

---

भेदसम्बन्धावच्छिन्नविशेष्यविशेषणभावस्य प्रतीतेरत आह—नाम्नोरित्यनेनेति । एवञ्च नाम्नोरेव द्विधा सम्बन्धप्रतिपादने न तात्पर्यङ्किन्तु क्रियाकारकयोर्विशेषसम्बन्धाभिधाने तात्पर्यमिति भावः । ननु वृद्धोक्तौ वैयधिकरण्यपदानुक्तेः कथमेवमभिधानमत आह—षष्ठ्या वेत्येतदिति । बोधनीयेति । विधेयभूतेत्यर्थः । एवञ्च 'धिङ् मूर्ख' इत्यत्र जीवसीत्यादि विधेयक्रियायाम्मूर्खेत्यस्यान्वयस्तस्यामेव धिक्शब्दार्थनिन्द्यत्वस्यान्वय इति क्रियाया निन्द्यत्वस्य प्रतीतिर्न तु मूर्खत्वस्येति भावः । तथा च यस्मिन्वाक्ये सम्बोधनेन विभक्त्यन्तस्य क्रियावाचकस्य च तादृशस्य प्रयोगस्तत्र तस्याङ्क्रियायामन्वयः, यत्र तु सम्बोधनविभक्त्यन्तमात्रस्याप्रयोगस्तत्र विधेयक्रियावाचकस्पदमध्याहर्तव्यमित्यत्र तात्पर्यम् । यत्र धिङ् मूर्ख जीवसीति प्रयुज्यते तत्र जीवनरूपा क्रिया न विधेया, तस्याः सिद्धत्वात्किन्तु जानीहीत्यस्य शेषता कल्पनीया । अभिमुखीभवन्मूर्खोद्देश्यकं जीवनसम्बन्धि निन्दाकर्मकं यज्ज्ञानन्तदनुकूलप्रवर्त्तनाविषयो व्यापार इति शाब्दबोधः ।

---

१ न च 'लुनीहि लुनीहि इत्येवायं लुनाति,' 'पुरीमवस्कन्द' 'पर्धाचक्रे,' कृष्णं नमेच्चेत्सुखं यायात्' इत्यादौ द्विधान्वयस्येष्टत्वात्तत्संग्रहाय नाम्नोरित्युपलक्षणं वाच्यमिति क्रिययोरिव क्रियाकारकयोरपि द्विधा सम्बन्धः स्यादिति वाच्यम्, तस्य सजातीययोरेव प्रतियोग्यनुयोगिनोरुपलक्षणत्वात् । साजात्यञ्च सत्त्वरूपत्वेनेत्याह—क्रियाकारकयोरिति । 'स्तोकं पचति' इत्यादावभेदेनाप्यन्वयदर्शनात् क्रियापदेन व्यापार एव ग्राह्यः ।

यत्त्वाहुः - उपपदविभक्तेः कारकविभक्तिर्बलीयसीति सम्बोधने प्रथमैव भवति, सम्बोधनपदस्य कर्तृकारकवाचित्वादिति; तन्मन्दम्, सम्बोधनपदस्य कर्तृकारकत्वे उक्तिसम्भवाभावात्। देव प्रसीदेत्यादौ वस्तुगत्या देव एव कर्तेति चेत् नैतावता कारकविभक्तित्वं लभ्यते। किं च देव त्वां भजन्तीत्यादौ सम्बोध्यस्य वास्तवमपि न कर्तृत्वमित्यास्तां तावत्। *उपर्युपरीति*। कथं तर्हि 'उपर्युपरि बुद्धीनां चरन्तीश्वरबुद्धयः' उच्यते, उपरि बुद्धीनामुत्तानबुद्धीनामुपरि चरन्तीत्यर्थः। एवं च आम्रेडितत्वाभावान्न द्वितीया। यद्वा प्रतिपदोक्तस्योपर्यध्यधसः सामीप्य इति कृतद्वित्वस्यात्र ग्रहणम्, तेन वीप्सायां

---

कारकविभक्तित्वमित्यर्थः। संबोधनपदार्थस्य देवस्य त्वमित्यनेन सहाभेदेऽपिशब्दतः क्रियाश्रयत्वादिप्रतीतेरुपपादनस्याशक्यतया कर्तृत्वं दुर्लभम्। वास्तवक्रियाश्रयत्वमादाय कर्तृत्वे तु बहूपप्लव इति भावः। नास्य

---

तमिति। तातेत्यादेर्हाशब्देन न योग इति भावः। हापदस्य चाध्याहृतत्वामित्यनेन मामित्यनेन वान्वय इति तात्पर्यम्। कारकविभक्तित्वमिति। कर्तृन योग इति। किन्तु जानीहीत्येतदर्थे तातेत्यस्य। त्वां हा, मां वा हा, इति वाक्यद्वयमेवात्र बोध्यम्। हापदस्येति। खेदार्थकस्येति शेषः। ननु सम्बोधनपदार्थस्य क्रियायामन्वयस्य प्राक् प्रतिपादितत्वेन तिङ्समानाधिकरणे प्रथमेति वार्तिकैकवाक्यतया प्रथमायाः कारकविभक्तित्वस्य सत्त्वाच्च तन्मन्दमित्यादिना प्रतिपादितमसङ्गतमत आह—कर्तृकारकेति। ननु यदि कारकत्वन्तर्हि तस्य कर्तृत्वमप्यस्त्वित्यत आह—सम्बोधनपदार्थस्येति। देव त्वम्प्रसीदेति वाक्य इत्यादिः। त्वमित्यनेन= एतदर्थेन। अभेदेऽपीति—फलिताभेदेऽपीत्यर्थः। शङ्कत इति। सम्बोधनपदार्थे इत्यादिः। उद्देश्यतयैव तस्य तत्रान्वयस्य स्वीकारादिति भावः। ननु तस्मिन् वाक्ये त्वमित्येतदर्थेन सह देवेत्यस्याभेदस्य सत्त्वाद्वस्तुगत्याऽऽश्रयत्वमप्यस्तीत्यत आह—वास्तवेति। बहूपप्लव इति। वचनपुरुषाद्यव्यवस्थारूप इत्यर्थः। वस्तुतस्तु 'वाक्यैकदेश'न्यायेन 'व्रजानि देवदत्त' इत्यस्य व्रजानि देवदत्त जानीहीत्येतदर्थकतास्ति। एकतिङ् वाक्यमित्यस्य श्रूयमाणैकतिङ्वाक्यमित्यर्थं इति सिद्धान्तस्य सिद्धिरप्यस्ति। अत एव सम्बोधनस्य कर्तृकारकवाचित्वव्यवहारोऽपि प्राचाम्, देवदत्तेत्यस्योक्तन्यायेन देवदत्त त्वज्जानीहीत्येतदर्थकत्वेन विधेयक्रियाकर्तृकारकवाचित्वात्। अत एव तिङ्समानाधिकरणे प्रथमेति वार्तिकस्याप्युपपत्तिः। यत्र क्रियावाचकम्पदन्न श्रूयते तत्रापि

द्विर्वचने सति नास्य प्रवृत्तिः। अन्यत्रापि दृश्यत इत्युक्तं तद्दर्शयति— *अभितः परित इति*। *प्रतिभातीति*। एष प्रतिशब्दः क्रियाविशेषकत्वादुपसर्गः, न तु कर्मप्रवचनीयः। *अन्तरा त्वां मामिति*। तव मम च मध्ये इत्यर्थः। *सामर्थ्यादिति*। अत एव हेतुत्वपर्यन्तमपि शाब्दबोधे विषय इति स्वीक्रियत इति भावः। *नदीमन्विति*। द्वितीयायाः सम्बन्धोऽर्थः। स चेह साहित्यरूप इत्यनुना द्योत्यते।

---

प्रवृत्तिरिति। अत एव 'सर्वेषामयमम्लानामुपर्युपरि वर्त्तते' इत्यादौ न द्वितीया। अत्र ह्युपर्युपरीत्यस्यातिशयोऽर्थो न सामीप्यम्। वीप्साद्विर्वचनं चात्रेति बोध्यम्। उपसर्ग इति। बुभुक्षितान्वितप्रत्यर्थसम्बन्धस्य क्रियागतत्वात् बुभुक्षितस्य न भातीत्यन्वय इति भावः। मध्य इति। अन्तर इति हि मध्ये इत्यर्थकम्।

---

'अस्तिर्भवन्तीपर' इति न्यायेन गम्यमानक्रियान्वयोऽस्त्येव। भवन्तीपर इत्यस्य लट्पर इत्यर्थः। अत्र भवन्तीत्युपलक्षणम्, लकारान्तरस्यापि क्वचित्सम्भवादत आह—इति भाव इति। एवञ्च मूलोक्तञ्चिन्त्यमित्यत्र तात्पर्यम्। ननु प्रथमसमाधानेन उपर्युपरि बुद्धीनामित्यस्य सूपपादत्वेन यद्वेत्यादिनोक्तद्वितीयसमाधानस्य नोपयोगः। किञ्च बुद्धीनाम् इना = श्रेष्ठा बुद्धीना तामुपर्युपरीत्येवन्द्वितीयापि वक्तुं शक्येत्यत आह—अत एवेति। द्वितीयसमाधानादेवेत्यर्थः। एतदेवाहात्रेति। उक्तवाक्ये इत्यर्थः। अतिशय इति। यथा 'उपर्युपरि लोकं हरिः' इत्यादौ द्विरुक्तस्योपर्युपरीत्यस्य समीपोर्ध्वदेशवृत्तित्वमर्थः। प्रतियोगित्वरूपः सम्बन्धो लोकपदोत्तरद्वितीयार्थः। लोकप्रतियोगिकसामीप्यवदूर्ध्वदेशवृत्तिर्हरिरित्यर्थः प्रतीयते, न तथा प्रकृते, किन्तु बुद्धीनां लौकिकपुरुषबुद्धीनामुपर्युपरि तदवधिकातिशयविशिष्टाश्चरन्तीत्यर्थं इति न द्वितीयाप्रसक्तिरिति भावः। द्विर्वचनञ्चात्रेति। चस्त्वर्थे। ननु 'बुभुक्षितम् प्रतिभाति' इत्यत्र कर्मप्रवचनीययुक्त इत्येव द्वितीया सिद्धा प्रतिशब्दस्येत्थम्भूताख्याने तस्याः संज्ञायाः प्राप्तेरत आह—बुभुक्षितेति। बुभुक्षितेनान्वितो यः प्रत्यर्थः प्रतिद्योत्यस्तद्रुपो यः सम्बन्धस्तस्य क्रियागतत्वमित्यर्थः। स च प्रतिभात्स्वरूप एव। एतच्च झटिति स्फूर्तिकत्वमेव एतस्य सम्बन्धस्य प्रतिद्योत्यता, वाच्यस्तु स धातोरेवेति सूच-

---

१ 'पुरस्तादपवादा अनन्तरान्' इति न्यायेन 'सह युक्ते' इत्यस्यैवापवादतया अपवादानामुत्सर्गसमानदेशत्वस्यौचित्येन तृतीयापदेनात्र तत्सूत्रोपात्तसहशब्दो लक्ष्यते। तदर्थश्चात्र समानकालिकक्रियागुणवत्त्वादिरूपसाहित्यमेव गृह्यते, तदर्थत्वेन तस्यैव प्रसिद्धत्वात्, न तु सादृश्यादिरूपम्। अत एव 'सहार्थे' इत्यनुक्त्वा 'तृतीयार्थे' इत्युक्तिः संगच्छते।

'लक्षणेत्थम्' । *वृक्षं प्रतीति* । वृक्षसम्बन्धि विद्योतनमर्थः । सम्बन्धश्च—[1]लक्ष्यलक्षणभाव इति प्रत्यादयो द्योतयन्ति । *भक्तो विष्णु प्रतीति* । विष्णोर्भक्तेश्च विषयविषयिभावः प्रत्यादिद्योत्यः । *लक्ष्मीरिति* । लक्ष्मीरूपस्य भागस्य हरिणा सह स्वस्वामिभावः । *वृक्षं वृक्षमिति* । इह वीप्सा द्विर्वचनेनैव द्योत्यते । परिशब्दस्तु क्रियया संबध्यते । कर्मणि द्वितीया । कर्मप्रवचनीयसञ्ज्ञया बाधात् षत्वं न । एतदर्थमेव

---

लक्ष्यलक्षणेति । [2]वृक्षप्रकाशेन विद्युद्विद्योतज्ञानात् वृक्षो लक्षणं विद्युद्विद्योतनं लक्ष्यम् । कर्मणीति । वृक्षपदार्थस्य सेचनं प्रति कर्मत्वात् । अत

---

नाय बुभुक्षितस्य न भातीत्यस्य प्रतिशब्दाघटितस्य लेखः । कर्मप्रवचनीयत्वे तु तस्याप्युपादानङ्कृतं स्यात् । एवञ्च बुभुक्षितसम्बन्धी यत्किञ्चिद्विषयकप्रतिभाव इति बोधः । अन्तराशब्दस्याधिकरणशक्तिप्रधानत्वादाह—अन्तरा इति हीति । मध्यत्वाव्यवधिस्वरूपः सम्बन्धो द्वितीयार्थः । अन्तरान्तरेणेति सूत्रे परस्परसाहचर्यादव्ययचयोरेव ग्रहणन्न तु टाबन्त-तृतीयान्तयोः ।

अत एवेति । कर्मणि द्वितीयाङ्गीकारादेवेत्यर्थः । षष्ठीति । कर्तृकर्मणोरिति सूत्रविहिता षष्ठीत्यर्थः । एतेनास्य कर्मप्रवचनीयसंज्ञया षत्वाभावो यथा भवति तथा कर्मप्रवचनीययुक्त इति द्वितीयापि सिद्धैवेति "कर्मणि द्वितीया" इत्ययुक्तमिति परास्तम् । 'शेषे षष्ठी' तु वक्तुमशक्या, कर्मप्रवचनीययोगविहितद्वितीयायास्तद्बाधकत्वात् । ननु लक्षणादीनां विषयत्वन्द्योत्यत्वेन वाच्यत्वेन वा वक्तव्यन्तच्चान्यतरदप्यत्र न,

---

१ ननु 'अर्थमर्थं प्रति प्रत्यर्थम्' इति सरूपसूत्रस्थभाष्याद्यत्र वीप्सावाचकत्वमव्ययस्य तत्र 'अव्ययं विभक्ति' इति नित्यसमासप्राप्त्या पर्यादेर्वीप्सावाचकत्वे 'वृक्षं वृक्षं सिञ्चति' इत्यत्र नित्यसमासापत्तिः । द्योतकत्वपक्षे 'अर्थमर्थं प्रति' इति भाष्यासङ्गत्यापत्तेर्द्विर्वचनस्यैव वीप्सावृत्तित्वात् प्रतिशब्दस्य तत्रावृत्तेः समासाभावेऽपि 'वृक्षं परिषिञ्चति' इत्यादौ वीप्साया अप्रतीतेः, 'वृक्षं वृक्षं परिसिञ्चति' इत्यत्र वीप्सायाः प्रतीतेश्चान्वय-व्यतिरेकाभ्यां द्विर्वचनस्यैव वीप्साया मुख्यद्योतकत्वमिति पर्यादेर्वीप्साद्योतकत्वेऽपि न मानमत आह—इह वीप्सा द्विर्वचनेनैव द्योत्यते, परिशब्दस्तु क्रियया संबध्यते इति, एतदर्थमेव लक्षणादयो विषयतयोपात्ता इति, व्याख्यातमाकरे इति चेति ।

२ ननु लक्ष्यलक्षणत्वस्य ज्ञाप्यज्ञापकत्वरूपत्वे वैपरीत्येन विद्युत्पदादेव द्वितीयाप्रवृत्तिरत आह—वृक्षप्रकाशेनेति । तथा च ज्ञानजनकज्ञानविषयत्वं लक्षणत्वम्, ज्ञानजन्यज्ञानविषयत्वं लक्ष्यत्वमिति भावः । वृक्षगतप्रकाशज्ञानेन विद्युद्विद्योतनदेशज्ञानात् स्वविषयप्रकाशाश्रयत्वसम्बन्धेन वृक्षविषयकं यज्ज्ञानं तज्जन्यं यत् स्वविषयदेशवृत्तित्वसम्बन्धेन प्रकाशविषयकं ज्ञानं तादृशज्ञानविषयत्वात् वृक्षस्य लक्षणत्वम् विद्युत्प्रकाशस्य च लक्ष्यत्वं बोध्यम् ।

लक्षणादयो विषयतयोपात्ता इति व्याख्यातमाकरे। 'पञ्चम्यपाङ्परिभिः' इति तु न भवति, वर्जनार्थेनापेत्यनेन साहचर्यात्। समा-

एव वृक्षस्य प्रतिसेचनमित्यादौ षष्ठीति भावः। विषयतयेति। अन्यद्योत्याया अपि वीप्सायाः सञ्ज्ञां प्रति निमित्तत्वादिति भावः। इतरे लक्षणादयस्तु द्योत्या एवेति बोध्यम्। इति तु न भवतीति। विशिष्टक्रियासम्बन्धे विशेषणेनापि सम्बन्धात्प्राप्तिरिति भावः। एतत्सर्वं हरदत्तानुरोधेन। कर्म-

वीप्सायान्द्विर्वचनस्य स्वीकारादत आह—अन्यद्योत्याया इति। द्विर्वचनद्योत्याया इत्यर्थः। विषयत्वन्तु तद्घटितवाक्यजन्यशाब्दबोधविषयत्वाद् बोध्यम्। वीप्साया विषयत्वबोधनाय सूत्रे वीप्सापदम्प्रत्यादिसान्निध्येनोपात्तम्। इतरे वीप्सातः। ननु परिशब्दस्य क्रियया सम्बन्धः न तु वृक्षेणेति कथम्पञ्चम्यापत्तिः कर्मप्रवचनीयद्योत्यसम्बन्धप्रतियोगित्वस्यैव कर्मप्रवचनीययुक्तत्वादत आह—विशिष्टक्रियासम्बन्धे इति। परिद्योत्य सर्वतोभावविशिष्टक्रियासम्बन्धे इत्यर्थः। यदि क्रियया सम्बन्धो न स्यात्तदा कर्मत्वाभावाद् द्वितीयापि न स्यात्। एवञ्च कर्मप्रवचनीयद्योत्यसम्बन्धाश्रयान्वितत्वरूपमिह कर्मप्रवचनीययुक्तत्वमस्तीति भावः। अभ्युपेत्यवादोऽयमिति ध्वनयन्नाह—एतत्सर्वमिति। एतत्सर्वम्=इह वीप्सेत्यादिनोक्तम्। हरदत्तानुरोधेनेति।

१ ननु विषयताया अपि वीप्साया वाच्यत्व-द्योत्यत्वान्यतरप्रयोज्याया एव सम्भवेनोभयोरभावे विषयताया अप्यसम्भवोऽत आह—अन्यद्योत्याया इति। तथा च कर्मप्रवचनीयसंज्ञानिमित्तत्वेन वीप्साया अपि निमित्तताख्यविषयताऽस्तीति भावः।

अयम्भावः—'प्रतिमासम्' इत्यादौ प्रतेरपि वीप्साद्योतकत्वस्य दृष्टतया 'वृक्षं वृक्षं प्रति सिञ्चति' इत्यादावपि प्रतिशब्द-द्विर्वचनयोरुभयोरपि द्योतकत्वमेव। न चान्यतरवैयर्थ्यम्, 'अनुतिलुनीते' इतिवदुपपत्तेः, लक्षणादीनां द्योत्यत्वेन तत्साहचर्याद् वीप्साया अपि द्योत्यत्वौचित्याच्च। अत एव 'वृक्षं वृक्षम्' इत्यत्र द्वितीयासिद्धिः। न च कर्मणि द्वितीया, तस्य कर्मत्वे सेचनेऽन्वयेन वृक्षेण सामर्थ्याभावात् 'प्रति वृक्षम्' इत्यादौ समासानापत्तेः, कर्मप्रवचनीयसंज्ञाया द्वितीयार्थकत्वादेव भाष्ये 'किमर्थम्पुनरिदमुच्यते? नचोपसर्गभावार्थम्, क्रियायोगाभावात् इत्युक्त्वा 'द्वितीयार्थम्' इति सिद्धान्तितम्। अत एव 'अर्थमर्थं प्रति' इति भाष्यं सङ्गच्छते इति नवीनाः।

प्राचीनास्तु द्वितीयार्थः=कर्म। तस्य च प्रकृतबुद्धिस्थयावन्निष्ठव्याप्यतानिरूपितव्यापकतासम्बन्धेन सेचनेऽन्वयः। प्रत्यादयः क्रियाविशेषका एव। संज्ञाफलन्तु षत्वाभावः। प्रतिना समासस्तु न, प्रतेरतदर्थकत्वात्, क्रियान्वयेन सामर्थ्याभावाच्चेत्याहुः।

अत्र प्राचीनमतमेव ज्यायः। तथाहि—उपपदविभक्तेरिति न्यायात् कर्मण्येव द्वितीया। वीप्साविषये कर्मत्वाविवक्षा तु कर्तुमशक्या द्विरुच्चारणकर्मीभूतनिष्ठपदसंज्ञाप्रयोजकविभक्त्यर्थसम्बन्धावच्छिन्नव्यापकतानिरूपितव्याप्यतावदर्थबोधकपदस्यैव प्रत्यासत्त्या 'नित्यवीप्सयोः' इत्यनेन तद्विधानात् कर्मत्वविवक्षायां द्वित्वस्यैवानापत्तेः। अत एव कर्मतासम्बन्धावच्छिन्नव्यापकताया द्विर्वचनेन बुबोधयिषया 'वृक्षो वृक्षः सिञ्चति' इति न प्रयोगः। अतस्तादृशपदत्वसम्पादनाय पूर्वं कर्मणि द्वितीया ततो व्यापकत्वद्योत-

*भिष्यादिति* । मम भागः स्यादित्यर्थः । मामभिष्यादित्यपि प्राञ्चः प्रत्युदाहरन्ति । तत्र मां प्राप्नुयादित्यर्थः । उपसर्गवशेन अस्तेः सक-

त्वाविवक्षायामपि द्वितीयार्थे सञ्ज्ञाया आवश्यकत्वात् । किं च परेः क्रियाविशेषकत्वेऽनर्थत्वेन कर्मप्रवचनीयत्वस्यैवानापत्तिरित्यन्यत्र विस्तरः ।

उपपदविभक्तेरिति न्यायेनात्र कर्मण्येव द्वितीया, पर्यादयस्तु क्रियाविशेषका एवेति हि तेनोक्तम् । कर्मत्वाविवक्षायामिति । तादृशशक्तिमत्त्वेन विवक्षायां 'कर्मणि द्वितीया' इत्यस्य प्रवृत्तिरिति स्पष्टमेव । अनापत्तिरिति । कर्मप्रवचनीय इत्यत्र बाहुलकात्कर्तरि भूतेऽनीयर् । कर्मशब्दोऽत्र क्रियागतविशेषस्य बोधकः । ये कर्म प्रोक्तवन्तः, सम्प्रति तु न तथा, किन्त्वप्रयुज्यमानक्रियाकृतसम्बन्धविशेषस्य द्योतका इति लब्धम् । एवञ्च यदि प्रयुज्यमानसेचनक्रियागतविशेषद्योतका एते तदा अप्रयुज्यमानक्रियाकृतविशेषाद्योतकत्वात्कर्मप्रवचनीयसंज्ञैव न स्यान्महासंज्ञाकरणादिति भावः । ननु भवन्मते कथमत्र कर्मप्रवचनीयसंज्ञेति चेदित्थम्—वृक्षम्प्रति विद्योतते विद्युदित्यत्र प्राप्तिरूपा याऽविद्यमाना क्रिया तत्कृतो यो विलक्षणो वृक्षविद्योतनयोर्लक्ष्यलक्षणभावाख्यः सम्बन्धस्तद्द्योतकत्वमस्ति ।

इत्थम्भूताख्याने उदाहरणम्—'अस्मिन्देशे प्रति पुरुषं सौन्दर्यमस्ति' इत्यादौ प्राप्तिक्रियाजनिताधाराधेयभावाख्यस्य पुरुषसौन्दर्ययोः सम्बन्धस्य द्योतकताऽस्ति । भागे—'वृक्षम्प्रति फलानि तिष्ठन्ति' अत्राप्रयुज्यमानप्राप्तिक्रियाजनितो योऽवयवावयविभावो जन्यजनकभावो वा सम्बन्धस्तत्परिच्छेदकताऽस्ति । वीप्सायाम्—'वृक्षं वृक्षं प्रति सिञ्चति' इत्यत्र वृक्षस्य जलसंयोगाख्यसेचनस्य च यो व्याप्यव्यापकभावाख्यः सम्बन्धः सोऽप्रयुज्यमानस्तत्तद्वृक्षावच्छिन्नोत्पत्तिकृत इति कर्मप्रवचनीयत्वम् । किञ्च यद्यत्र वृक्षस्य क्रियाकर्मत्वमाश्रित्य कर्मणि द्वितीया प्रतेः सेचनगतसर्वतोभावरूपस-

कत्वप्रयुक्तया प्रतेः कर्मप्रवचनीयसंज्ञया षत्वाभावोऽपि सिद्ध्यति । एवञ्च कर्मत्वाविवक्षायां वृक्षशब्दस्य विभक्त्यर्थसम्बन्धावच्छिन्नव्यापकतानिरूपितव्याप्यतावदर्थबोधकत्वाभावाद् द्वितीयातः प्राग् द्वित्वासम्भवः । वृत्तेरन्यत्र व्यापकताबोधकत्वस्य द्विर्वचनं विना प्रतेरदर्शनेन द्वित्वाभावे वीप्साया अप्रतीत्या कर्मप्रवचनीयसंज्ञापि न स्यात् । कर्मत्वाविवक्षायामपि प्रतेरेव व्यापकतार्थकत्वस्वीकारेण कर्मप्रवचनीयसंज्ञया द्वितीयास्वीकारे तु 'वृक्षो वृक्षः प्रतिसिच्यते' इत्यादावपि द्वितीयापत्तिः । न च तिङा कर्मत्वस्योक्ततयां प्रातिपदिकार्थे एव प्रथमायाः सत्त्वाद्विभक्त्यर्थसम्बन्धेनान्वयाभावेन द्वित्वयोग्यपदाभावेन द्वित्वस्याप्यनापत्तिः, अभिहितकारके विहितप्रथमाया अनुद्भूतशक्तिमत्त्वेन कर्मत्वादिबोधकतया सुरूपविभक्त्यर्थसम्बन्धेन सेचनेऽन्वयाभावेऽपि द्विरुच्चारणीयपदघटकविभक्त्यर्थसम्बन्धावच्छिन्नव्यापकतानिरूपितव्याप्यतावदर्थबोधकताया प्रकृतवृक्षशब्देऽक्षतत्वात् । "द्वितीयार्थम्" इति भाष्योक्त्या तु न विरोधः, 'वृक्षं प्रति विद्योतते' इत्यकर्मकधातुसमभिव्याहाराभिप्रायेण तद्भाष्यप्रवृत्तेः । तथा च कर्मणि द्वितीयायाः सिद्धया प्राचीनोक्तषत्वाभाव एवं कर्मप्रवचनीयसंज्ञायाः फलमिति परे । विस्तरस्त्वन्यत्र द्रष्टव्यः ।

मंत्वान्मामिति द्वितीया, अत्र च मम भाग इत्यर्थतः पर्यवसानात् । अभागे इति कर्मप्रवचनीयत्वे निषिद्धे 'उपसर्गप्रादुर्भ्याम्' इति षत्वम् । *पूजायां चेति* । 'सुः पूजायाम्' इति पूर्वसूत्रात् पूजाग्रहणमनुकृष्यते ।

*'कालाध्वनोः'* । अन्तं विराममतिक्रान्तोऽत्यन्तः स चासौ संयो-

---

नन्वत्रार्थे भागाप्रतीत्या कथं निषेधोऽत आह—अत्र चेति । अर्थतो भागे पर्यवसानमादाय निषेधप्रवृत्तिरिति भावः ।

कालाध्वेति । येन कालेनाध्वना वाऽत्यन्तसंयोगस्तद्वृत्तिभ्यामित्यर्थः ।

---

म्बन्धद्योतकता च कल्प्यते, तदाऽसामर्थ्यात्प्रतिवृक्षमित्यत्र समासानापत्तिः । अत एव 'प्रत्यर्थं शब्दनिवेशान्नैकेनानेकार्थस्याभिधानम्' इति सरूपसूत्रस्थभाष्यप्रयोगस्योपपत्तिः । अन्यथा प्रतेर्भवदुक्तरीत्या निवेशेनान्वयित्वेनासामर्थ्यात्समासो न स्यात् । अत एवैतत्सूत्रभाष्ये ÷ "कस्य लक्षणादयोऽर्था निर्दिश्यन्ते वृक्षादीनाम्, किमर्थम्पुनरिदमुच्यते ? कर्मप्रवचनीसंज्ञा यथा स्यात् गत्युपसर्गसंज्ञे मा भूतामिति, नैतदस्ति प्रयोजनम्, यत्क्रियायुक्ताः प्रादयस्तम्प्रति गत्युपसर्गसंज्ञे भवतः, नच वृक्षादीन्प्रति क्रियायोगः, इदन्तर्हि प्रयोजनम्—द्वितीया यथा स्यात् कर्मप्रवचनीययुक्ते द्वितीयेति, वृक्षम्प्रति विद्योतते वृक्षमनु विद्योतते" इति प्रघट्टकेन च वृक्षादीन्प्रति क्रियायोग इत्यनेन वृक्षप्रतिशब्दयोः सम्बन्धो दर्शितः । कर्मप्रवचनीययोगेन द्वितीया च स्पष्टमभिहिता । किञ्चोक्तोदाहरणे धुतेरकर्मकत्वात्कर्मणि द्वितीया वक्तुमप्यशक्येति बोध्यम् । मूले प्राञ्च इत्यस्य प्रक्रियाकृत इत्यर्थः । तस्योपपत्तिरपि तत्रेत्यनेन दर्शिता । तत्र=तस्मिन्प्रत्युदाहरणे । अत्रार्थे=माम्प्राप्नुयादित्यत्रार्थे, यन्माम्प्राप्नुयात्तद्दीयतामित्युक्ते भाग एव वक्तृतात्पर्यावगमः । यदि तु यच्छब्दस्य बुद्धिस्थवाचकत्वेन भागवाचकत्वमेव प्रकृतेऽस्त्विति स्वीक्रियते, तदा तु न काऽपि शङ्केति बोध्यम् ।

कालाध्वनोर्योऽत्यन्तसंयोगः सम्बन्धो=व्याप्यव्यापकभावस्तस्मिन्नर्थे प्रातिपदिकाद् द्वितीयेत्यर्थं केनात्यन्तसंयोग इत्याकाङ्क्षायाङ् गुणेन, क्रियया, अभावेन वा सति सम्भवतीति तेषां लाभे प्रत्यासत्त्या 'कालाध्वनोरत्यन्तसंयोगे' इति यद्यपि लभ्यते, तथाप्यन्यकालेनात्यन्तसम्बन्धोऽन्यकालप्रतिपादकात्तु सेति कुतो नेत्यत आह—येन कालेनेति । संयोग इति । गुणादीनामिति—अभावोदाहरणम् 'मासमभोजनाभावः' इति । ननु यन्मूले समासनिवृत्तेरेव फलत्वादित्युक्त्वा तस्मादित्युपसंहृतन्तदयुक्तम-

---

१ गुणेन, क्रियया, द्रव्येण, अभावेन वा निरन्तरसम्बन्ध इत्यर्थः । सम्बन्धे निरन्तरत्वञ्च गुणाद्यनुयोगिकसम्बन्धप्रतियोगित्वेन विवक्षितबुद्धिस्थयावदवयववृत्तिप्रतियोगिव्यधिकरणाभावाप्रतियोगित्वरूपम् ।

गः = निरन्तरसन्निकर्ष इत्यर्थः। द्वितीया स्यादिति—श्रुतत्वात् कालाध्ववृत्तिभ्यामेव। *मासस्येति*। 'कृत्वोऽर्थप्रयोगे कालेऽधिकरणे' इति षष्ठीत्याहुः, तन्न, तत्र शेषग्रहणानुवृत्त्या द्विरह्नो भोजनमिति कृदन्तेन सह समासाप्रवृत्तेरेव फलत्वात्। तस्मादिह 'षष्ठी शेषे' इति सूत्रेणैव षष्ठीति तत्त्वम् ॥

॥ इति द्वितीया ॥

---

तस्मादिति। अन्तरङ्गत्वाच्चेत्यपि बोध्यम्। एतेन शेषग्रहणाननुवृत्तौ तेनैवेति परास्तम्।

॥ इतिद्वितीया ॥

---

न्यार्थक कृतस्य कुल्यादेरन्योपकारकत्वस्य दृष्टतया तिङन्तेन योगे कृत्वोऽर्थप्रयोगसूत्रप्रवृत्तेर्दुर्वारत्वादत आह—अन्तरङ्गत्वाच्चेति। अल्पापेक्षस्वरूपत्वात्रान्तरङ्गत्वम्, अचारिताध्यविषयतायास्तस्योक्तेरिति भावः। एतेन=अन्तरङ्गत्वेन। अननुवृत्ताविति। 'कृत्वोऽर्थ' इति सूत्र इत्यादिः। एवञ्च वक्ष्यमाणरीत्या सप्तसूत्र्यामेव शेषग्रहणानुवृत्तिः। तेनैव=कृत्वोऽर्थ इत्यनेनैव। परास्तमिति। अल्पापेक्षस्यान्तरङ्गत्वन्तत्सम्मतमिति तद्रीत्यैव तदुक्तमपास्तमित्यर्थः। यदि तु तादृशान्तरङ्ग-बहिरङ्गभावो न सिद्धान्तिसम्मत इत्युच्यते तदा तु तेनैव द्वितीयेति तत्त्वम् ॥

॥ इति द्वितीया ॥

---

'स्वतन्त्रः कर्ता' ॥ प्रधानीभूतधात्वर्थं प्रति आश्रयत्वं स्वातन्त्र्यम् । आह च—

धातुनोक्तक्रिये नित्यं कारके कर्तृतेष्यते । इति ।

प्रधानीभूतेति । प्राधान्यञ्च—कर्तृप्रत्ययसमभिव्याहारे धात्वर्थनिष्ठवि-

ननु प्राधान्यम्मुख्यविशेष्यत्वरूपञ्चेत्प्रयोज्यव्यापारे तदभावात्प्रयोज्यस्य कर्तृत्वं णिच्समभिव्याहारे कर्मणि यत्र प्रत्ययस्तत्र, चैत्रेण पक्व इत्यादौ च फलव्यापारयोर्व्यत्यासात्तत्र कर्तृत्वं कस्यापि स्यादत आह—प्राधान्यञ्चेति । 'देवदत्तेन पच्यते तण्डुलः' इत्यादौ देवदत्तस्य कर्तृत्वसिद्धये—कर्तृप्रत्ययसमभिव्याहार इति । धात्वर्थनिष्ठप्रकारतानिरूपितविशेष्यत्वमित्येतावन्मात्रोक्तौ विभागावच्छिन्नक्षरणानुकूलव्यापारस्य 'गोः पयो दोग्धि चैत्रः' इत्यत्र दुहधात्वर्थत्वात्तत्र क्षरणेऽतिव्याप्तिरिति धात्वर्थनिष्ठविशेष्यतानिरूपितप्रकारतानाश्रयत्वनिवेशः । अत्र धातौ तत्त्वन्निवेशनीयम् , अन्यथा णिजन्तजन्यशाब्दबोधे प्रयोज्यव्यापारस्य प्रयोजकव्यापारविशेषणत्वात्तत्र णिच्प्रकृतिकधात्वर्थस्य प्राधान्यव्यवहारो न स्यात् । नचेष्टापत्तिः, 'चैत्रेण पाचयति तण्डुलं यज्ञदत्तः' इत्यत्र चैत्रेऽव्याप्तेः । णिच् तु प्रयोजकव्यापारवाचक एव । एवञ्च णिजन्ततत्प्रकृतिकधात्वोर्भिन्नतया तदुभयार्थव्यापारयोः स्वस्वार्थम्प्रति प्राधान्यस्य सत्त्वेन प्रयो-

१ रत्नकारमते कर्मप्रत्ययस्थले फलविशेष्यकबोधस्वीकारेण 'देवदत्तेनौदनः पच्यते' इत्यादौ 'देवदत्ताभिन्नकर्तृनिष्ठधात्वर्थव्यापारजन्या, ओदनाभिन्नकर्मनिष्ठा विक्लित्तिः, इति बोधेन व्यापारे फलनिष्ठविशेष्यतानिरूपितप्रकारतायाः सत्त्वेन तादृशव्यापाराश्रयेऽव्याप्तिवारणाय कर्तृप्रत्ययसमभिव्याहार इति । इदमुपलक्षणं न तु विशेषणम् इति भावः। न च प्राधान्यलक्षणस्य कर्तृपदार्थघटिततया कर्तृलक्षणस्य च प्राधान्यपदार्थघटिततया प्राधान्यज्ञानकर्तृज्ञानयोः परस्परापेक्षत्वेनान्योऽन्याश्रय इति वाच्यम् , कर्तृप्रत्ययसमभिव्याहारे इत्यपहाय तृच्समभिव्याहारे इत्यस्य निवेशेनादोषात् । नचैवमपि 'देवदत्तेन यज्ञदत्तः पाचयति' इत्यादौ प्रयोज्यव्यापारस्य प्रकारताश्रयतया अव्याप्तिः, तत्र णिचोऽपि प्रयोजकनिष्ठव्यापारवाचकत्वस्वीकारेण पच्धात्वर्थव्यापारमादाय प्रयोज्यस्य, पाचिधात्वर्थव्यापारमादाय प्रयोजकस्य च कर्तृत्वाक्षतेः । नन्वेवमपि तृच्समभिव्याहारज्ञानं विनापि कर्तृत्वज्ञानस्यानुभवसिद्धत्वेन तदुपलक्षणत्वमप्यसङ्गतमिति चेन्न, धातुविशिष्टव्यापाराश्रयत्वस्य कर्तृत्वेनादोषात् । वै० स्वजन्यबोधविषयत्वेन तात्पर्यविषयत्व-स्वजन्यबोधविषयत्वेन तात्पर्यविषयीभूतार्थनिष्ठजनकतानिरूपितजन्यत्वेनाप्रतीयमानत्वाभ्याम् । नचैवमपि 'अग्नेर्माणवकं वारयति' इत्यत्र वारिधातोः संयोगानुकूलव्यापाराभावानुकूलव्यापारार्थकतया संयोगानुकूलव्यापारस्य जन्यत्वेनाप्रतीयमानत्वात्तदाश्रयस्य माणवकादेः कर्तृत्वापत्तिरिति वाच्यम्, स्वजन्यबोधविषयत्वेन तात्पर्यविषयीभूतजन्यत्वेन प्रतीयमानाभावाप्रतियोगित्वरूपतृतीयसम्बन्धस्याविदानेनोक्तापत्त्यभावात् । ननूक्तरीत्योक्तदोषवारणेऽपि ण्यन्ताण्णिचि पाचिधातोरेव विक्लित्त्यनुकूलव्यापारानुकूलव्यापारानुकूलव्यापारार्थकतया द्वितीयव्यापारस्य जन्यत्वेन प्रतीयमानत्वात्तदाश्रये प्रयोजकेऽव्याप्तिरिति वाच्यम् , धातुनिष्ठशक्तिविशिष्टव्यापाराश्रयत्वप्रकारकेच्छीयविशेष्यताश्रयस्य कर्तृत्वस्वीकारात् । वै० पूर्वोक्तसम्बन्धैरेव । तथा चानेकव्यापारार्थकस्यापि पाचिधातोः शक्तेर्भेदेनादोषादिति दिक् ।

'साधकतमं करणम्' । प्रकृष्टेति । यद्व्यापारादनन्तरं क्रियानिष्पत्तिस्तत्प्रकृष्टम् । उक्तञ्च—

क्रियायाः परिनिष्पत्तिर्यद्व्यापारादनन्तरम् ।
विवक्ष्यते यदा यत्र करणं तत्तदा स्मृतम् ॥ इति ।

विवक्ष्यते इत्यनेन स्थाल्यादीनामपि वैवक्षिककरणत्वमस्तीति ध्वनयति । आह च—

वस्तुतस्तदनिर्देश्यं न हि वस्तु व्यवस्थितम् ।
स्थाल्या पच्यत इत्येषा विवक्षा दृश्यते यतः ॥ इति ॥

अयं भावः—कारकत्वं तद्व्याप्यकर्तृत्वादिषट्कं च वस्तुविशेषे

---

शेष्यतानिरूपितप्रकारतानाश्रयत्वम् । धातुनोक्तक्रिये कारके नित्यं कर्तृतेष्यते इत्यन्वयः ।

यद्व्यापारादिति । अनन्तरशब्दयोगे 'दूरान्तिकार्थैः' इति सूत्रेण पञ्चमी । यत्र=येषां कारकाणां मध्ये इत्यर्थः । वस्तुत इति । वस्तुनीत्यर्थः । सार्वविभक्तिकस्तसिः । तत्कर्तृत्वादिकमनिर्देश्यम् इदं वस्तु कर्त्रैवेत्यादिक्रमेण न निर्देश्यमित्यर्थः । हि=यतो वस्तु तत्तद्रूपेण न व्यवस्थितम् । तामेवाव्यवस्थां दर्शयति—स्थाल्येत्यादि । कारकत्वमिति । विशेषणत्वादि यथा खड्ग-

---

ज्यस्य कर्तृत्वसिद्धिः । 'कारके' इति सूत्रस्थभाष्यात्तु तत्तद्धात्वर्थकारकचक्रप्रवर्तकत्वं कर्तृत्वमिति लभ्यते, तच्चारोपितमनारोपितं वेत्यन्यदेतत् । स्थाली पचतीत्यादावाद्यम् । चैत्रः पचतीत्यादावन्त्यम् । यद्व्यापारस्यान्यव्यापारप्रवर्तकत्वविवक्षा तदा तद्व्यापार एव धात्वर्थः । मूलोक्तार्थस्तु न युक्तः, तस्मिन्नर्थे भाष्यकृता स्वतन्त्रपदस्यापरिभाषणात् । कर्तृसंज्ञाबोधितकर्तृत्वशक्तिमत्त्वन्तु कर्तृत्वम् । स चोक्तस्वतन्त्रे तिष्ठति, तस्या विभक्तिद्योत्यत्वात्प्रकृत्यर्थविशेषणता, कर्तृक्रियाभावसम्बन्धस्तु तृतीयार्थः । प्रकृत्यर्थस्य तद्धटककर्तर्यभेदेन विशेषणता । एवञ्च चैत्रः पचतीत्यादिभ्यः कर्तृचैत्राभिन्नकर्तृकः पाक इति रीत्या बोधः । धातुना नित्यमुक्तक्रिय इति भ्रमवारणायाह—धातुनोक्तेति । अत्र क्रियापदम्प्रधानव्यापारपरन्तदाश्रयस्य कर्तृसञ्ज्ञैव, न तु कर्मसञ्ज्ञेत्यस्यार्थस्य स्पष्टप्रतिपत्तये नित्यपदम् ।

अनन्तरशब्दार्थेन योगे षष्ठी प्राप्ता, ताम्बाधित्वा पञ्चमीत्याशयेनाह—अनन्तरशब्देति । मूलपठितवचने यदेत्येतदपेक्षया यत्रेत्यधिकमत आह—यत्रेति । अधि-

---

१ वस्तुविशेषमात्रनिष्ठत्वेन गोत्वादिवत् तत्=करणत्वं निर्देष्टुमशक्यमित्यर्थः ।

विशेषणविशेष्यभाववन्न व्यवतिष्ठते। न हि गौस्सर्वं प्रति गौरेव न तु किंचित्प्रत्यगौरितिवद् विशेषणं विशेषणमेवेति सुवचम्। तथा च कयाचिद् धातुव्यक्त्या उपस्थापितेऽर्थे किं कर्त्रादिकमिति प्रश्ने प्रकृतव्यक्त्युपात्तव्यापाराश्रयतया विवक्षितः कर्ता। व्यापारव्यधिकरणफलाश्रयः कर्म। कर्तृकर्मद्वारासम्बन्धेनाश्रयोऽधिकरणम्। पच्यर्थो व्यापारश्चानेकधा। एवं च पचेरधिश्रयणतण्डुलावपनैधोपकर्षणादितात्पर्यकत्वे तदाश्रयो देवदत्तः कर्ता। ज्वलनतात्पर्यकत्वे एधाः कर्तारः। तण्डुलधारणादिपरत्वे स्थाली कर्त्री। अवयवविभागादिपरत्वे तण्डुलाः कर्तारः। स्थाल्या पचतीत्यत्र तृतीयोपात्तव्यापाराश्रयापि स्थाली करणमेव न तु कर्त्री, देवदत्तादिव्यापारस्यैव तद्धातूपात्तत्वात्। तथा—आदिखादिभ्यामुपात्तेऽर्थे प्रयोज्यः कर्ता, तस्मिन्नेवार्थे भक्षयतिनोपात्ते कर्म, अधिपूर्वैः शीङादिभिरुपात्तेऽर्थे आधारः कर्म, केवलैरुपात्ते अधिकरणमित्यादि। एतेन

---

कुब्जादावव्यवस्थितमेवं कारकत्वं तद्व्याप्यमधिकरणत्वादिकं चेत्यर्थः। तण्डुलानोदनं पचतीत्यत्र कारकस्यापि तण्डुलस्य तण्डुलानामोदनं पचतीत्यादावोदनपदार्थान्वयेन षष्ठ्यन्ततादर्शनात्कारकत्वस्य व्यभिचारो द्रष्टव्यः। प्रकृतव्यक्त्युपात्तेति। प्रकृतधातुव्यक्त्येत्यर्थः। अनेकधात्वमेव दर्शयति—एवं च पचेरिति। तण्डुलधारणादिपरत्वे इति। आदिना आपाकसमाप्तिधारणम्। अवयवविभागादीति। आदिना रोटिकाद्यवयवमेलनम्। तण्डुलाः कर्तार इति। कर्मकर्तरीत्यर्थः। संप्रदानापादानयोस्तु न कर्तृत्वविवक्षा शब्दशक्तिस्वाभाव्यात्तद्व्यापारे धातोरवृत्तेरिति बोध्यम्। उपात्ते=उक्ते इत्यर्थः। स्वैप्र-

---

करणादीनामित्यर्थः। अव्यवस्थान्दर्शयति—तण्डुलानोदनमित्यादिना। कर्मणः कर्तृत्वस्थलमाह—कर्मकर्तरीति। कारकसामान्यस्य न कर्तृत्वविवक्षेत्याशयेनाह—सम्प्रदानेति। अपादानग्रहणं तच्चार्थकर्मकत्र सम्भवतीत्यत आह—उक्त इति।

मूले—आदिखादिभ्यामित्यादिना केवलैरुपात्ते अधिकरणमित्यन्तेन ग्रन्थेनैकस्यैव

---

१ कर्तृत्वादीनां वैवक्षिकत्वे चेत्यर्थः।

२ कर्तृत्वादेः शब्दविशेषनिमित्तकत्वव्यवस्थापनाद् निर्धर्मिणि ब्रह्मणि तदसम्भवरूपवक्ष्यमाणापरिहारेणेत्यर्थः।

३ स्वप्रकाशत्वञ्च, अवेद्यत्वे सत्यपरोक्षव्यवहारयोग्यत्वात्यन्ताभावानधिकरणत्वरूपम्। घटादावति-

ज्ञानस्य स्वप्रकाशत्वे कर्तृकर्मविरोध इत्यादि परास्तम्, शब्दविशेषोपाधिकस्य कर्तृत्वादेः प्रत्यक्षादौ उक्तिसम्भवात् । एतेन परसमवे-

काशत्वे=ज्ञानविषयत्वे । कर्तृकर्मविरोध इति । अभेदे आधाराधेयभावस्य

शब्दभेदेन सञ्ज्ञाभेदः प्रदर्शितः । गलाधःसंयोगानुकूलव्यापारो यद्यपि णिच्प्रकृत्यद्-धातुना खादृधातुना, चाभिधीयते, स एव च भक्षधातुनापि, तथापि 'आदिखाद्योर्न' इति निषेधात्ताभ्यां णिचि सति प्रकृत्यर्थव्यापाराश्रयस्य कर्तृसंज्ञैव भवति, न तु कर्मसञ्ज्ञा, यदा तु भक्षधातोर्णिचि सति स एवार्थो भक्षयतिनाऽभिधीयते, तदा निषेधवचनाभावात्प्रयोज्यव्यापाराश्रयस्य 'गतिबुद्धि' इति सूत्रेण कर्मसञ्ज्ञा भवतीति प्रकारेण शब्दविशेषनिमित्तकत्वं सञ्ज्ञायाः । एतेनेति=वक्ष्यमाणपरिहारेणेत्यर्थः । ज्ञानस्य स्वप्रकाशत्व इति । एतादृशो व्यवहारो वेदान्तिनामस्ति, तस्योपपत्तिर्न सम्भवतीति केषाञ्चिदुक्तिरियम् । स्वप्रकाशशब्दस्य स्वम्=आत्मानम्प्रकाशयति=विषयीकरोतीत्यर्थः कार्यः । एवञ्चैकस्य कर्मत्वङ्कर्तृत्वञ्च बाधितम् , कर्तृसञ्ज्ञायाः कर्मसञ्ज्ञाबाधकत्वादिति तेषाम्भावः । नच तेजसो यथा ग्राह्यत्वन्द्रव्यत्वेन ग्राहकत्वन्तूद्भूतानाभिभूतरूपवत्तेजस्त्वेनोपाधिना भवति, उपाधिभेदस्यैवोभयव्यवहारनियामकत्वात्, तथा ज्ञानस्यापि भविष्यतीति वाच्यम्, 'नित्यं विज्ञानमानन्दम्ब्रह्म' इति श्रुत्या 'ज्ञानपदवाच्यम्ब्रह्मैव' इति श्रुत्या धर्मरहितत्वेन प्रतिपादितमित्युपाधिभेदस्यैवाभावात् । अन्यथाऽद्वैतानापत्तिः । न च लौकिकोपाध्यभावस्य तत्र भवन्मन्ते सत्त्वात्कथन्निर्धर्मिकत्वमिति वाच्यम्, अभावस्याधिकरणात्मकतया स्वभिन्नधर्मशून्यत्वसत्त्वादित्याह—ज्ञानविषयत्व इति । आधाराधेयभावस्येत्यनेन कर्तृत्वखण्डनम् । विषयविषयिभावस्येति कर्मत्वखण्डनम् । एवञ्च ज्ञानस्य ब्रह्मात्मकस्य स्वप्रकाशत्वमिति व्यवहारासङ्गतिः ।

उक्तविरोधस्य परिहारमाह—मूले शब्दविशेषोपाधिकस्येति । अत्रोपाधिशब्दो

व्याप्तिवारणाय सत्यन्तम् । अतीतानागतयोर्नित्यानुमेयेषु धर्मादिषु चातिव्याप्तिवारणाय विशेष्यदलम् । न च तेषामप्यागमादिवेद्यत्वेन नातिव्याप्तिरिति वाच्यम् , फलव्याप्यतारूपवेद्यत्वस्य लक्षणे निविष्टत्वेन तस्य तत्राभावादतिव्याप्तेर्दुर्वारत्वात् । विषयावच्छिन्नमभिव्यक्तिविशिष्टं चैतन्यं फलम् । अभिव्यक्तिश्चेन्द्रियद्वारा अर्थसंनिकृष्टमनःपरिणामविशेषः, सचादृष्टादिषु न सम्भवति, तेषामिन्द्रियागोचरत्वात् ।

१ कर्तृत्वकर्मत्वविरोध इत्यर्थः, स ज्ञानवस्थानरूपविरोधस्य कर्तृकर्मणोरभावात् ।

२ 'यत्साक्षादपरोक्षाद् ब्रह्म' इति श्रुतेः ब्रह्मणो घटादीनामिव प्रत्यक्षविषयत्वेन न प्रत्यक्षत्वम्, किन्तु स्वात्मकप्रकाशरूपत्वेनेति प्रत्यक्षादावुक्तिसम्भवादित्यनेन बोध्यते । आदिनाऽनुमित्यादेः सङ्ग्रहः ।

३ आधाराधेययोर्विषयविषयिणोश्चैक्ये इत्यर्थः । अयम्भावः—अपूर्वकप्रकाशधातोर्ज्ञानविषयीकरणमर्थः । तथा च स्वमात्मानं प्रकाशयति यज्ज्ञानं तत्स्वप्रकाशमित्युच्यते । एवञ्च ज्ञानस्यैव कर्तृत्वं कर्मत्वञ्च प्राप्नोति । तच्च न सम्भवति, कर्तृसंज्ञया कर्मसंज्ञया बाधादित्युक्तं केनचित् । तदुक्तिं खण्डयति—अभेदे

विषयविषयिभावस्य चाभावादिति भावः । शब्दविशेषोपाधिकस्य—शब्दविशेषनिमित्तकस्य । कर्तृकर्मशब्दयोराश्रयविषयोपलक्षकत्वे, स्वप्र-

निमित्तपरः, इत्याशयेनाह–शब्दविशेषनिमित्तकस्येति । यद्धात्वर्थक्रियया यस्य स्वातन्त्र्यविवक्षा स तद्धात्वर्थकर्ता, यद्धात्वर्थप्रधानव्यापारविशेषणफलाश्रयत्वविवक्षा यस्य तत् तत्कर्मेतिरीत्या धातुस्वरूपो यः शब्दस्तन्निमित्तकत्वन्तयोरित्यर्थः । प्रत्यक्षादाविति मूलेन ब्रह्मणः प्रत्यक्षरूपत्वन्दर्शितम् । तस्यायम्भावः—यथा घटादिविषयाणां स्वभिन्नापरोक्षज्ञानविषयत्वेन प्रत्यक्षत्वव्यवहारस्तथा न ब्रह्मणः, किन्तु स्वात्मकस्वप्रकाशः । स एव प्रत्यक्षपदेन व्यवह्रियते इति, 'यत्साक्षादपरोक्षात्' इति श्रुतेः । अपरोक्षादित्यस्यापरोक्षमित्यर्थः । ननु ब्रह्म यदि न जन्यज्ञानविषयस्तदा तस्मिन्स्वप्रकाशत्वव्यवहारोऽपि कथमिति चेच्छृणु, किम्ब्रह्म यद्यवेद्यं स्यात्तर्हि तादृशव्यवहारविषयो न स्यादिति तर्केण तादृशव्यवहारं खण्डयसि, उत स्वप्रकाशत्वव्यवहारोऽस्माकमित्येतादृशव्यवहारविषयत्वेन हेतुना अवेद्यत्वाभावानुमानङ्करोषि । नाद्यः, आपाद्यापादकयोर्द्वयोरपि ब्रह्मणि सत्त्वावोधकम् । न द्वितीयः, हेत्वसिद्ध्या स्वरूपासिद्धेः, ब्रह्मणः शब्दावेद्यत्वात्, 'यतो वाचो निवर्तन्ते अप्राप्य मनसा सह' इति श्रुतेः । ननु भवन्मते ब्रह्मस्वप्रकाशमिति वाक्यघटकः स्वप्रकाशशब्दो यौगिको रूढो वा । आद्ये स्वम्प्रकाशयतीति व्युत्पत्त्या-स्वपदार्थस्य कर्मत्वम्प्रकाशशब्दार्थस्य प्रकाशकर्त्रर्थकत्वं वाच्यम्, तच्च विषयत्वाश्रयरूपम्, उभयथाप्यनुपपत्तिः, निर्धर्मिकत्वबोधकश्रुतिविरोधात् । द्वितीये स्वप्रकाशशब्दः स्वप्रकाशशब्दव्यवहार्य इत्यर्थको वाच्यः, तत्रापि तच्छ्रुतिविरोध इत्यत आह—कर्तृकर्मशब्दयोरिति ।

इत्यादिना । आधाराधेयभावस्येत्यनेन कर्तृत्वं खण्ड्यते स्वनिष्ठाधेयतानिरूपितस्वनिष्ठाधारत्वस्यादर्शनात् । विषयविषयिभावस्येत्यनेन कर्मत्वं निरासितम्, स्वनिष्ठविषयतानिरूपितस्वनिष्ठविषयित्वस्याप्यसिद्धेः । नानेन कर्तृत्वकर्मत्वयोर्विरोधः खण्ड्यते; किन्तु निर्धर्मिणि ब्रह्मणि कर्तृत्व–कर्मत्वयोरसम्भवेन कर्तृकर्मशब्दप्रयोगः खण्ड्यते ।

१ अत्रोपाधिशब्देन निमित्तं लक्ष्यते, कर्तृत्वादिनिरूपितोपाधित्वस्य धातुरूपशब्दविशेषे बाधात् । स्वगतधर्मस्यान्यत्रावभासक उपाधिरिति वेदान्तिमतम् । न हि धातुरूपः शब्दः स्वगतधर्मं कर्तृत्वाद्यवभासयति ।

साध्यव्यापकत्वे सति साधनाव्यापकत्वरूपस्य नैयायिकाभिमतोपाधेरप्यत्रासम्भव एव । कर्तृत्वादौ धातूनां निमित्तत्वन्त्वक्षतमेवेत्याह–शब्दविशेषनिमित्तकस्येति । कर्तृत्वस्य धात्वर्थव्यापाराश्रयत्वेन कर्मत्वस्य धात्वर्थतावच्छेदकफलाश्रयत्वेन विवक्षाधीनत्वात् ।

२ ननु 'कर्तृकर्मविरोधः' इति ग्रन्थो मास्तु कर्तृत्वकर्मत्वविरोधपरः, तयोरेव तत्राभावाद्विरोधस्य दूरापास्तत्वात् । परन्तु कर्तृकर्मपदयोः क्रमेण विषयिविषययोरुपलक्षकत्वेन विरोधपरोऽस्तु, स्वं प्रकाशयतीति व्युत्पत्त्या कर्तृत्वकर्मत्वप्रतीतावपि कर्तृकर्मपदयोर्विषयिविषययोरुपलक्षकत्वात् । नन्वेवं स्वपदार्थस्याकर्मत्वे 'कर्मण्यण्' इति अणोऽप्राप्त्या स्वप्रकाशशब्दस्यासाधुत्वापत्तिरत आह—स्वप्रकाशशब्द-

तत्क्रियाजन्यफलशालित्वं कर्मत्वं चेत् अपादानेऽतिव्याप्तिमाशङ्क्य धात्वर्थतावच्छेदकफलशालि कर्मेति परिष्कुर्वन्तोऽपि प्रत्युक्ताः । ग्रामं गमयति देवदत्तमित्यादौ गन्तर्यव्याप्तेः, तन्मते गमनस्य प्रकृत्यर्थत्वेऽपि तत्त्वानवच्छेदकत्वात्[1] । तत्र णिचो व्यापारार्थकत्वं न प्रकृतेः । तत्त्वे वा पाचयत्यादिप्रयोज्यकर्तर्यतिव्याप्तेः । पारिभाषि-

काशस्त्वे इत्यस्य स्वप्रकाशपदव्यवहार्यत्वे इत्यर्थे वा लक्षणैव दोष इति बोध्यम् । परेति । कर्मत्वाभिमतापेक्षया परेत्यर्थः । गम्यादिकर्तर्यतिव्याप्तिवारणायेदम् । अपादाने इति । प्रयागात् काशीं गच्छतीत्यादौ तस्यापि क्रियाजन्यविभागाश्रयत्वादिति भावः । धात्वर्थताऽवच्छेदकेति । संयोगस्यैव तथात्वं न तु विभागस्येति भावः । तत्त्वे वेति । ण्यन्तधात्वर्थतावच्छेदकत्वे

ननु भवन्मते तस्य वाक्यस्य का गतिः ? इति चेदित्थम्—स्वश्चासौ प्रकाशश्चेति कर्मधारयः । प्रकाशशब्दो भावघञन्तः । स्वाभिन्नः प्रकाशः, तस्य भावः स्वप्रकाशत्वम्, 'कृत्तद्धितसमासेभ्यः सम्बन्धाभिधानम्भावप्रत्ययेन' इति सिद्धान्तात् । स्वप्रत्ययार्थोऽत्र स्वाभेद एव, स च नोतिरिक्त इति यत्किञ्चिदपेक्षया परत्वमव्यावर्तकमत आह—कर्मत्वाभिमतेति । फलाश्रयत्वेनास्योपस्थितत्वादित्यर्थः । कर्मापेक्षयेति तु नोक्तम्, एतावत्पर्यन्तङ्कर्मत्वस्यासिद्धेः । अतिव्याप्तीति । 'ग्रामङ्गच्छति चैत्रः' इत्यत्र चैत्रे गमनक्रियाजन्यसंयोगाश्रयत्वसत्त्वादतिव्याप्तिरित्यर्थः । अत्र फले तद्धात्वर्थत्वमपि विशेषणन्देयम् । तेन स्पन्देन पूर्वोत्तरदेशयोः कर्मत्वापत्तिः । काशीङ्गच्छतीति । अत्र विभागजन्यसंयोगानुकूलव्यापारस्य गम्धात्वर्थत्वमिति विभागस्य धात्वर्थत्वमस्तीति भावः । एतन्मते भेदः आधेयत्वञ्च द्वितीयार्थः । भेदे प्रकृत्यर्थस्य तद्व्यक्तित्वावच्छिन्नप्रतियोगिताकत्वसम्बन्धेनान्वयः । तस्य च भेदस्य सामानाधिकरण्यसम्बन्धेन व्यापारेऽन्वयः । ग्रामपदार्थस्याधेयत्वेऽप्यन्वयः । ग्रामपदार्थस्य च द्वेधा भानमिति ग्रामवृत्तिसंयोगानुकूलाग्रामभेदविशिष्टव्यापारानुकूलकृतिमानित्यन्वयबोधः परमते, स्वमते तु कर्तृविशिष्टस्तादृशव्यापार इत्याकारकः । संयोगस्यैव तथात्वमिति गम्धातोः संयोगावच्छिन्नव्यापार एव शक्तिरिति भावः । धात्वर्थताऽवच्छेदकेत्यत्र धातुपदङ्गणपठितधातुपरम्, उत तद्भिन्नस्यापि बोधकम् ? नाद्यः, इत्याह—ग्रामङ्गमयतीति । तन्मते = नैयायिकमते । गमनस्य = संयोगावच्छिन्नव्यापारस्य । न द्वितीयः, इत्याह—तत्त्वेवेति ।

स्येति—स्वप्रकाशशब्दस्य स्वपदव्यवहार्यत्वे लक्षणयोक्तदोषाभाव इति भावः । तत्पक्षेऽप्याह लक्षणैव दोष इति । तथा च कर्तृकर्मविरोध इति ग्रन्थोऽसङ्गत एवेति भावः ।

१ धात्वर्थत्वानवच्छेदकत्वादित्यर्थः । २ आधुनिकसंकेतः 'परिभाषा' तद्विषयीभूतमित्यर्थः ।

कमनुशासनोपयोगि कर्मत्वं वचनबलाद् व्यवस्थितमिति चेत्, अपादानेऽपि तर्हि तन्नास्तीत्यवधेहि। एकसञ्ज्ञाधिकारेऽनवकाशया सावकाशाया बाधात्। अत एवात्मानमात्मना हन्तीत्यादौ परया

वेत्यर्थः। वचनबलात्=गत्यादिनियमबलात्। ननु विभागस्य तत्त्वेन 'कर्तु'-रिति 'तथायुक्त' मिति च प्राप्नोति, अपादानप्रकरणेऽवध्यन्वयिनो विभागस्य धात्वर्थताया वक्ष्यमाणत्वादित्यत आह—एकसञ्ज्ञेति। सावकाशाया इति। 'विषं भुङ्क्ते' इत्यादौ सावकाशाया इत्यर्थः। 'कर्तुः' इति कर्मसञ्ज्ञायाः परत्वाद् बाधिका। अत एव ग्रामं त्यजतीत्यादौ द्वितीयासिद्धिरिति तात्पर्यम्। अपादाननिष्ठविभागीयसम्बन्धस्य फलताऽनवच्छेदकत्वाच्च

मूले—अपादानेऽपि तर्हीति। एवञ्च तद्व्यावृत्तये धात्वर्थताऽवच्छेदकत्वविशेषणनिवेशपर्यन्तानुधावनं विफलमिति भावः। एवं सति परया कर्तृसंज्ञया बाधेन चैत्रश्चैत्रङ्गच्छतीत्यादिप्रयोगापत्तिवारणेन यन्नेदेऽपि द्वितीयायाः शक्तिरिति प्रागुक्तन्तन्नोचितमिति च 'वचनबलादि' त्यनेन सूचितम्।

ननु स्वमते यदि सूत्रेणैव संज्ञाप्रवृत्तिनिर्णयस्तदाऽपादानस्य कर्मसंज्ञा प्राप्नोतीत्याशयेन शङ्कते—नन्विति। तत्त्वेन=धात्वर्थकुक्षिप्रवेशेन। विभागजन्यसंयोगानुकूलव्यापारो धात्वर्थ इत्याशयः। उद्देश्यत्वानुद्देश्यत्वभेदेन सूत्रद्वयोपन्यासः, द्वितीयसूत्राभिप्रायेणेदमुत्तरमित्याशयेनाह—विषम्भुङ्क्त इत्यादाविति। आदिनोदासीनतृणादिसङ्ग्रहः। आद्यसूत्रस्य यत्र फलाश्रयत्वेनोद्देश्यता तत्र प्रवृत्त्या विभागजन्यसंयोगानुकूलव्यापारस्य धात्वर्थत्वेऽपि कर्तृवृत्तिव्यापारजन्यसंयोगाश्रयत्वेन प्रयागात्काशीङ्गच्छतीत्यत्र काश्या एवोद्देश्यता, न तु प्रयागस्येति तत्र प्रयागे सावकाशाऽपादानसंज्ञा ग्रामन्त्यजतीत्यत्र कर्मसंज्ञया बाध्यते। अत एव=प्रथमसूत्रविहितकर्मसंज्ञाया अपादानसंज्ञाबाधकत्वादेव। प्रकारान्तरेणाप्यतिप्रसङ्गं वारयति—अपादाननिष्ठेति। 'ग्रामाद् गृहमायाति' इत्यत्र यद्यपि विभागात्रच्छिन्नसंयोगानुकूलव्यापारो धात्वर्थस्तथापि संयोगीयो योऽनुयोगितारूपः सम्बन्धः स एव फलताऽवच्छेदकः, न तु विभागीयः, फलताऽवच्छेदकसम्बन्धेन फलाश्रयत्वमेव कर्मसंज्ञाप्रयोजकम्। अन्यथा कालिकसम्बन्धेन संयोगाश्रयत्वस्य पर्वतादावपि सत्त्वेन 'ग्रामम्पर्वताद्गच्छति' इति यत्र

१ फलताऽवच्छेदकसम्बन्धश्च तत्तद्धातुसमभिव्याहारे फलनिष्ठाधेयताऽवच्छेदकत्वेन प्रतीतिविषयीभूतसम्बन्धविशेष एव। स च वृत्तितानियामकः कालिक-विषयतासम्बन्धातिरिक्त एवेति न दोषः। यद्वा फलविशिष्टव्यापारवाचकत्वमेव धातूनाम् वै० स्वजनकत्वेन प्रतीतिविषयत्व–स्वनिष्ठतत्तत्सम्बन्धावच्छिन्नाधेयतानिरूपिताधिकरणतावद्वृत्तित्वैतदुभयसम्बन्धेनेति तत्तद्धातुनिष्ठवृत्तीयफलनिष्ठाधेयताऽवच्छेदकसम्बन्ध एव फलताऽवच्छेदकसम्बन्धो बोध्य इति नातिप्रसङ्गः।

कर्तृसञ्ज्ञया कर्मसञ्ज्ञाबाधमाशङ्क्याहङ्कारादिविशिष्टात्मभेदमाश्रित्य समाहितं भाष्ये ।

*रामेणेति* । इह यद्यपि विभक्त्युपस्थितानां कारकाणां क्रियां प्रति विशेषणतैव, तथाऽपि कृदुपस्थितानां विशेष्यतैव, सत्त्वप्रधानानि नामानीत्युक्तेः । धातूपस्थाप्ययोः फलव्यापारयोरपि कर्मकृत्समभिव्याहारे विशेषणविशेष्यभावव्यत्यासः । तथा च रामनिष्ठो यो व्यापारस्तद्विषयीभूतबाणव्यापारसाध्यप्राणवियोगाश्रयो वालीति वाक्यार्थः ।

---

दोष इत्यपि बोध्यम् । अत एव-एकसञ्ज्ञाधिकारे सञ्ज्ञयोर्बाध्यबाधकभावादेव । अहङ्कारादीति । आदिना शरीरम् ।

विभक्त्युपस्थितानामिति । विभक्त्यर्थस्य संसर्गत्वमते तदन्तोपस्थितानामित्यर्थः । व्यत्यास इति । तद्व्यत्यासेनैव धातुतस्तदुपस्थितिरित्यर्थः । तत्र व्यापारजन्यफलमेव धात्वर्थ इति भावः ।

---

तत्र पर्वतं गच्छतीति स्यात् । यत्र विभागावच्छिन्नव्यापारो धात्वर्थस्तत्राप्यनुयोगित सम्बन्ध एव फलताऽवच्छेदको न तु प्रतियोगितालक्षणः । अत एव 'वृक्षाद्विभजते' इत्यादौ वृक्षादिशब्देभ्यः पञ्चमीसिद्धिः । न च "आत्मानमात्मना हन्ति" इतिवच्चैत्रश्चैत्रङ्गच्छतीति प्रयोगापत्तिः ? तत्रापि शरीराद्युपाधिभेदेन कर्तृकर्मणोर्भेदस्य कल्पनासम्भवादिति वाच्यम्, प्रामाणिकप्रयोगस्योपपत्तये एवङ्कल्पनायाः सत्त्वात् ।

स्वसिद्धान्ते पञ्चकम्प्रातिपदिकार्थस्तत्र विभक्तिद्योत्यकारकाणाम्प्रातिपदिकार्थविशेषणतैव, न तु क्रियाविशेषणत्वमिति प्रसक्तामूलासङ्गतिम्परिहरति-विभक्त्यर्थस्येत्यादिना । एवञ्च विभक्त्यन्तेनोपस्थितानान्तत्तद्विभक्त्यर्थसम्बन्धेन क्रियाविशेषणत्वं स्पष्टमेव । तद्व्यत्यासेन=फलव्यापारयोर्विशेष्यविशेषणभावव्यत्यासेन । फलावच्छिन्नव्यापारे, व्यापारावच्छिन्नफले च धातोः शक्तिः । कर्तृकर्मबोधकप्रत्ययसमभिव्याहारस्तत्तद्बोधतात्पर्यग्राहक इति स्वसिद्धान्ताभिप्रायेणेदम् । तत्र कर्मबोधकप्रत्ययसमभिव्याहारे-मूले-रामनिष्ठो यो व्यापारस्तद्विषयत्वम्फलभूतधात्वर्थे इत्युक्तम्, तच्च स्वोत्पादकप्रवृत्त्युद्देश्यत्वरूपम्बोध्यम् । एवम्प्राणवियोगात्मकफले बाणव्यापारसाध्यत्वाभिधानङ् कृतन्तेन करणकारकस्य सर्वत्र स्वव्यापारद्वारा फलम्प्रत्येव जनकत्वात्तत्रैवान्वय इति ध्वनितम् । मीमांसकैर्यदुक्तं 'काष्ठैः पाकः' इत्यपि स्यादिति तत्पाकक्रियायाः सिद्धावस्थापन्नाया एव पाकपदेनाभिधानात्कारकान्वययोग्यतावच्छेदकसाध्यत्वेनानभिधानेन नात्र कारकान्वय इत्यभिमानेन ।

यत्तु—वाजपेयाधिकरणे[1] मीमांसकैरुक्तम्—'काष्ठैः पाकः' इत्यपि स्यादिति तदिष्टापत्तिग्रस्तम्, 'कर्तृकरणे कृता बहुलम्' 'कर्तृकर्मणोः कृति' इत्यादिसूत्राणां कृत्प्रकृत्यर्थेन कारकान्वयं विनोक्तिसम्भवस्यैवाभावादिति सुधीभिराकलनीयम्।

अनभिहिते किम्? हरिः करोति, जीवन्त्यनेन जीवनः, शाब्दिकः, शब्दर्दुरं करोतीति ठक्, कृतं विश्वं येन कृतविश्वः—

तदिष्टापत्तीति। तत्प्रकृत्यर्थक्रियायामपि कारकाणामन्वयादिति भावः। तत्रैव मानमाह—कर्त्रित्यादि। यत्तु—भवतिक्रियायां प्राथमिकान्वयेन तत्तद्विभक्तौ कृदन्तेन पार्ष्णिकान्वयात् तेषां चारितार्थ्यमिति; तन्न, भवतिक्रियायां कर्तृत्वेनान्वये कर्तुरुक्तत्वात्तृतीयानापत्त्या 'हरिणा त्रातः' इत्यसिद्ध्यापत्तेः। करणत्वेनान्वये पार्ष्णिकस्यापि हरिकर्तृकत्राणकर्मणो बोधानापत्तेः, कर्तृतृतीयान्तेन समासविधायकासङ्गतेश्च।

यत्कर्तृककृतिकर्म विश्वमिति विग्रहवाक्यजबोधाद्विलक्षणबोधस्वीकारे न

वस्तुतस्तु पाकादिशब्दघटकधातुना अत्रापि साध्यत्वेनैव क्रियाया अभिधानेन तस्यां कारकान्वये बाधकाभाव इत्याशयेनाह—तदिष्टापत्तीति। तत्रैव=प्रकृत्या तेन रूपेणाभिधाने। भवतिक्रियायामिति। 'काष्ठैः पाकः' इत्यादौ यद्यपि भवतिक्रियाबोधकपदन्नास्ति तथापि "अस्तिर्भवन्तीपरोऽप्रयुज्यमानोऽप्यस्ति" इति साध्यकारोक्तेरत्रापि सा प्रतीयत एवेत्याशयेनेदम्। कर्तुरुक्तत्वादिति। प्रधानेतरयोरिति न्यायेन प्रधाने भवतिक्रियाकर्तृत्वस्याभिधानेन गुणभूतपचिक्रियाकर्तृत्वमप्यभिहितमिति भावः। ननु न प्रधानक्रियायाङ्कर्तृत्वेनान्वयः किन्तु करणत्वेनेति तदनुयायिनः शङ्कां वारयति—करणत्वेनेति। पार्ष्णिकस्यापीति। इदङ्कर्मण इत्यत्र सामानाधिकरण्येनान्वयि तद्विषयकबोधस्य पश्चाद्भवता तद्विषयेऽपि पार्ष्णिकत्वव्यपदेशः। नन्वेतादृशस्थले हरिकर्तृकत्राणबोधाभावे इष्टापत्तिरेवेत्यत आह—कर्तृतृतीयान्ते-

१ अधिक्रियते निर्णयार्थं विचारोऽस्मिन्नित्यधिकरणम्। विषय-संशय-पूर्वपक्ष-सिद्धान्त-निर्णयात्मकपञ्चाङ्गबोधकवाक्यसमूहात्मकं महावाक्यमिति यावत्। विचारणीयं वाक्यं विषयः। सिद्धान्तः=उत्तरपक्षः। वस्तुतत्त्वावधारणम्=निर्णयः। शेषं स्पष्टम्।

२ तन्मते भावप्रत्ययान्तेन सिद्धरूपाया एव क्रियाया अभिधानात् कारकाणाञ्च साध्यरूपक्रियायामेवान्वयस्य नियमात् 'काष्ठैः पाकः' इति न भवतीति भावः। वस्तुतस्तु 'उभयप्राप्तौ कर्मणि' इत्यादिसूत्राणां भावार्थकप्रत्ययान्तयोगे एव प्रवृत्त्या तत्रापि धातुना साध्यरूपक्रियाया अभिधानमावश्यकम्। तत्र साध्यरूपप्रकृत्यर्थक्रियायाः सिद्धरूपधात्वर्थक्रियायामन्वयस्तु स्ववृत्तिक्रियात्वावच्छिन्नसम्बन्धेन बोध्यः। एतेन साध्यरूपक्रियायाः सिद्धरूपक्रियायामनन्वय एव स्यादित्यपि परास्तम्।

विश्वकर्मकर्तृत्वाश्रय इत्यर्थः। अषष्ठ्यर्थबहुव्रीहौ व्युत्पत्त्यन्तरस्वीकारात्। यथा चैतत्तथा वक्ष्यते। *प्रकृत्यादिभ्य इति*। आकृतिगणोऽयम्। तेन 'नाम्ना सुतीक्ष्णश्चरितेन दान्त' इत्यादि बोध्यम्। द्वयोर्द्रोणयोः समाहारो द्विद्रोणम्, पात्रादित्वात्स्त्रीत्वाभावः। द्रोणद्वयसम्बन्धिधान्यमित्यर्थः। *चादिति*। करणशब्दानुवृत्त्या 'परिक्रयणे सम्प्रदानम्' इत्युत्तरसूत्रस्थान्यतरस्यांग्रहणापकर्षणेन वा सञ्ज्ञयोः पर्यायत्वे लब्धे समावेशार्थश्चकारः, तेन मनसा देव इत्यत्र

---

अनमतं आह—अषष्ठ्यर्थेति। आकृतीति। इदं च यथायथं सर्वविभक्त्यपवादः। नाम्नेति। नामसम्बन्धितीक्ष्णत्ववानित्यर्थः। करणशब्दानुवृत्त्येति। एकसंज्ञाधिकारेण चेति बोध्यम्। ननु मनसा देव इत्यसङ्गतम्, कृद्योगलक्षणषष्ठीप्राप्तेः। न च कर्तृसाहचर्यात्तत्र मुख्यव्यवहारेण धात्वर्थाश्रयस्यैव कर्मणो ग्रहणम्, अतः 'स्तोकं पाकः' इत्यादौ षष्ठी नेति वाच्यम्, धात्वर्थे भेदेनान्वयि कर्मग्रहणेनैव तदुपपत्तावत्राप्रवृत्तौ मानाभावात्।

---

नेति। असङ्गतेरिति। तद्घटककर्तृपदांशस्यासङ्गत्यापत्तेरित्यर्थः। विग्रहवाक्यजेति। लौकिकविग्रहवाक्यजेत्यर्थः। इदञ्चेति। "प्रकृत्यादिभ्यः" इति वार्तिकञ्चेत्यर्थः। आदिशब्दोऽत्र प्रकारे, तेन 'वह्नित्वेन घटाभावः' 'दण्डत्वेन कारणता' इत्यादिप्रयोगाणामुपपत्तिः। नामसम्बन्धीति। नामज्ञाप्यमित्यर्थः। वह्नित्वेनेत्यादौ त्ववच्छिन्नप्रतियोगिताकत्वन्तृतीयार्थः। ननु "दिवः" इति सूत्रे करणशब्दानुवृत्त्या संज्ञयोः समावेशो भविष्यतीत्यत आह—एकेति। मूले—'यन्मनसा देव' इत्येतत्सिद्धिरूपं संज्ञाद्वयसमावेशफलमुक्तन्तदसङ्गतमिति हरदत्तानुयायिन उक्तिं खण्डयति—नन्वित्यादिना। षष्ठ्या प्राप्तेरिति। यथा 'अक्षाणान्देविता' इत्यत्रापवादत्वात्तृतीया बाध्यते। तद्वदिति शेषः। तत्र='कर्तृकर्मणोः कृति' इति सूत्रे। कर्तृसाहचर्यादिति। यथा धातुप्रतिपाद्यप्रधानव्यापाराश्रयस्य कर्तृपदेन ग्रहणन्तथा मुख्यतया तदर्थफलाश्रयस्य तत्र ग्रहणमित्यत्र साहचर्यं हेतुत्वेनाभिहितम्। मुख्यत्वाभिधानं व्यपदेशिवद्भावेन यस्य कर्मत्वन्तद्व्युदासाय। अत एव=तादृशकर्मणो ग्रहणादेव। अत्र स्तोकपदार्थस्य व्यपदेशिवद्भावेन यत्कर्मत्ववत्तत्राभेदेनान्वयात्कर्मत्वम्, न तु मुख्यकर्मत्वमस्तीति न षष्ठीति भावः। 'कर्मणि द्वितीया' इति सूत्रे तु मुख्यकर्मणो ग्रहणमित्यत्र साधकाभावाद्व्यपदेशिवद्भावलब्धकर्मत्ववतोऽपि ग्रहणमिति द्वितीया भवति। धात्वर्थे फले भेदेन क्रियाकारकभावसम्बन्धेन तदुपपत्तौ 'स्तोकम्पाकः' इत्यत्र षष्ठ्यभावोपपत्तौ तत्र स्तोकपदार्थस्य फलेऽभेदेनान्वयादिति भावः। अत्र=मनसा देव इत्यत्र।

कर्मण्यण्, करणे तृतीया चेत्युभयं सिध्यति। 'मनसः सञ्ज्ञायाम्' इत्यलुक्। किं चाक्षैर्देवयते यज्ञदत्तेनेत्यत्र सकर्मकत्वादणि कर्तुर्णौ कर्मत्वं न, 'अणावकर्मकात्' इति परस्मैपदं च नेति सिद्धान्तः।

यत्तु प्राचा—कर्मसंज्ञं वा स्यादिति व्याख्यातम्, तदाकर-विरोधादुपेक्ष्यम्।

स्यादेतत्—करणसंज्ञाया अवकाशः देवना अक्षाः, करणे ल्युट्। कर्मसञ्ज्ञायास्तु दीव्यन्ते अक्षाः, कर्मणि लट्। अक्षैर्दीव्य-तीत्यत्र तु सञ्ज्ञाद्वयप्रयुक्तकार्यद्वयप्रसङ्गे परत्वात् तृतीयैव स्यान्न

---

ध्वनितं चेदमाकडारसूत्रे कैयटे। तादृशसञ्ज्ञाभावे दृढतरमानाभावश्चे-त्यरुचेराह—किं चेति। कर्मत्वं नेति। न च वैकल्पिकत्वेऽप्यत्यन्ताविद्यमा-नकर्मकत्वाभावात् कर्मत्वाभावः सिद्ध इति वाच्यम्, तत्रात्यन्ताविद्यमा-नकर्मकाणामेव ग्रहणे मानाभावस्यान्यत्र निरूपितत्वादिति भावः। फला-न्तरमाह—अणाविति। दीव्यतेऽक्षैर्देवदत्तेनेति भावे लकाराभावः फलमि-

---

अप्रवृत्ताविति='कर्तृकर्मणोः' इत्यस्याप्रवृत्तौ। अत्र प्रमाणमाह—ध्वनितञ्चेदमिति। तत्र हि—अक्षाणान्देवितेत्यत्रापवादत्वाद् द्वितीयायाः षष्ठी बाधिका, तृतीयायास्तु परत्वादिति प्रतिपादितम्। अत्र षष्ठ्याः 'कर्तृकर्मणोः' इति विहिता या तृतीया बाध-कत्वाभिधानेन मनसा देव इत्यत्रापि तस्य सूत्रस्य प्रवृत्तिर्नास्त्येवेति ध्वनितमित्यर्थः।

ननु 'कर्तृकर्मणोः कृति' इति सूत्रे धात्वर्थफलाश्रयकर्मण एव ग्रहणमिति कल्पनया न षष्ठीप्राप्तिरत आह—तादृशसंज्ञासत्त्व इति। समाविष्टकर्मकरणसंज्ञाद्वयसत्त्वे इत्यर्थः। न चैवं सति 'मनसा देवः' इति प्रयोगस्यैव तदुच्छेदः स्यादिति वाच्यम्, 'हेतौ' इति सूत्रविहिततृतीयान्तस्य पचाद्यजन्तदेवशब्देन समाससम्भवोगोपपत्तेः। 'दिवः कर्म च' इति सूत्रे संज्ञाद्वयसमावेशफलकचकाराभावेऽपि किञ्चिदादिरूपफलमन्यथा-सिद्धमित्याशयकशङ्कानिरसितुमाह—न चेति। वैकल्पिकत्वेऽप्येवेति। चकाराभावे कर्मकरणसंज्ञयोः पर्यायेण प्रवृत्त्या वैकल्पिकत्वेऽपीत्यर्थः। अपिना समावेशसमुच्चयः। 'येषान्देशकालादिभिन्नं कर्म न सम्भवति ते एवाकर्मकपदेन गृह्यन्ते' इति तैरुक्तम्। कर्मत्वाभाव इति। गतिबुद्धीतिसूत्रविहितेत्यादिः। अन्यत्र निरूपितत्वादिति। अत्र शास्त्रेऽविवक्षितकर्मकाणामप्यकर्मकाणामप्यकर्मकपदेन ग्रहणम्। अत एव भाष्य-कृता 'कृतपूर्वी कटम्' 'भुक्तपूर्वी ओदनम्', इत्युदाहृतम्। अत एव 'णेरणौ' इति सूत्रव्याख्यानावसरे 'लावयति केदारन्देवदत्तः' इति प्रयोगे—लुनातेर्निवृत्तप्रेषणाण्णिचि द्वितीया कैयटेन स्वीकृता। अत एव 'अधीगर्थ' इति सूत्रभाष्ये—कर्मणः शेषत्वविवक्षया

तु द्वितीयेति चेत्। अत्राहुः—कार्यकालपक्षे कर्मणि द्वितीयेत्यत्र यद्स्योपस्थापनं तस्यानवकाशत्वाद् द्वितीयेति। ननु दीव्यन्ते अक्षा इत्यत्र कर्मण्यभिहितेऽपि करणत्वस्यानभिधानात् तृतीया स्यात्, तथा देवना अक्षा इत्यत्र ल्युटा करणत्वस्याभिधानेऽपि कर्मणोऽनभिधानाद् द्वितीया स्यात्, मैवम्, एकैव ह्यत्र शक्तिः सञ्ज्ञाद्वयोपयो-

---

त्यपि बोध्यम्। करणत्वाच्च तृतीयेति समावेशफलम्। द्वितीयेतीति अक्षान् दीव्यतीत्यत्राक्षपदस्याक्षजेये धने लक्षणा। न च तदा करणत्वमक्षैरित्यर्थेऽक्षानिति न भवतीत्यन्ये। एकैव ह्यत्र शक्तिरिति। दिव्धात्वर्थनिरूपितसाधकतमत्वशक्तिरित्यर्थः।

---

'मातुः स्मर्यते' इत्यत्र भावे लकार उदाहृतः। फलान्तरमिति। संज्ञयोः समावेशस्येत्यादिः। स्वयम्फलान्तरमाह—दीव्यत इत्यादिना। ननु स्थलत्रयेऽपि कर्मसंज्ञायाः फलमुक्तम्, न तु करणसंज्ञाया इत्यत आह—करणत्वाच्चेति। चकारो भिन्नक्रमेण तृतीयापदानन्तरन्द्रष्टव्यः। मूले—यत्तु प्राचेति। प्रक्रियाकृतेत्यर्थः। अस्योपस्थानमिति। 'दिवः कर्म च' इत्यस्योपस्थानमित्यर्थ। वस्तुतस्तु मूलोक्तरीत्याऽक्षैरक्षानित्यस्योपपत्तिरयुक्ता। कार्यकालपक्षविशेषकथनेन 'देवदत्तो वामेनाक्ष्णा पश्यति' इत्युक्ते दक्षिणेन न पश्यतीति यथा गम्यते, तथा यथोद्देशपक्षे नासिद्धिरिति गम्येत तदसङ्गतम्। यथोद्देशपक्षेऽपि 'प्रधानान्यात्मसंस्काराय सन्निधीयमानानि गुणभेदम्प्रयुञ्जत' इति क्विचेति सूत्रस्थकैयटोक्तरीत्या 'कर्मणि द्वितीया' इति सूत्रस्यात्रागमनेन 'दिव' इतिसूत्रस्यापि भेदस्य सत्त्वात्। किञ्च—कार्यकालपक्षेऽपादानमुत्तराणि बाधन्ते, 'गान्दोग्धि पयः' इत्यत्र 'परत्वात्कर्मसंज्ञा' इति भाष्ययोजनाय संज्ञाविषये, यथोद्देशे संज्ञाशास्त्रम्पठितन्तद्देशीयमेव परत्वन्नियामकम्, न तु यत्रोपस्थितिस्तद्देशीयम्। अन्यथा कर्मसंज्ञाशास्त्रस्य 'कर्मणि द्वितीया' इत्यत्रोपस्थितिः, अपादानसंज्ञायास्तु 'अपादाने पञ्चमी' इत्यत्रेति पञ्चमीविधायकशास्त्रस्य द्वितीयाविधायकशास्त्रापेक्षया परत्वाद्भाष्यासङ्गतिः स्पष्टैव। अत एव 'अयादिभ्यः परैव प्रगृह्यसंज्ञा' इति 'अदसो मात्' इति सूत्रभाष्ये उक्तम्। एतत्सर्वम्परिचिन्त्याक्षान्दीव्यतीति प्रयोगोपपत्तिं स्वयमाह—अक्षान्दीव्यतीत्यत्रेति। दिव्धातुरघुना विजिगीषार्थकः। अन्ये=भाष्यतत्त्वविदः। इदमुपलक्षणं यदाऽक्षेषु फलाश्रयत्वसमानाधिकरणकर्मत्वविवक्षा तदापि तादृशप्रयोगसिद्धिरिति बोध्यम्। एकैव शक्तिः संज्ञाद्वयोपयोगिनीति मूले ऽभिहितम्, तच्च यथाश्रुते सङ्गतम्, 'सप्तमीपञ्चम्यौ कारकमध्ये' इति सूत्रे कारकशब्दस्य कर्मत्वादिशक्तिपरत्वस्य सुप्रसिद्धतया कर्मत्वस्य च तादृशस्य कारणत्वापेक्षया भिन्नत्वेनैकशक्तेः संज्ञाद्वयोपयोगित्वं वक्तुमशक्यमत आह—दिव्धात्वर्थेति। एवञ्चैकैव शक्तिरित्यत्र शक्तिपदं धर्मपरन्द्रष्टव्यम्। तथाच

गिनी। तथा च उभयत्राप्यभिधानमेव न त्वनभिहितत्वम्।

'सहं युक्ते'। पुत्रेणेति। पितुरत्र क्रियया संबन्धः शाब्दः, पुत्रस्य तु आर्थ इति तस्याप्राधान्यम्। अप्रधानग्रहणं शक्यमकर्तुम्, न चैवं

'सह युक्ते'। अत्राप्राधान्यं नाम—शाब्दगुणाद्यन्वयित्वाभाव इत्याह—

कर्मादिपदानां कर्मत्वादितत्तच्छक्तिरूपेण बोधकतया द्वयोः शक्त्योर्भेद एवोचितः। सर्वसाधारणकर्मव्यवहारस्तु कर्मत्वशक्तिमत्त्वेनोपपादनीयः। एवं सकर्मकत्वमपि तादृशशक्तिमदर्थान्वयित्वमेव। अत एव 'अध्यासिता भूमयः' इत्यत्र कर्मणि क्तः सिध्यति। सूत्रस्थचकारेण शक्तिद्वययोगो बोध्यते, न तु तयोः शक्त्योरभेदः। नचैवं सति—नन्वित्यादिना मूलेन प्रतिपादिता शङ्का तदवस्थैवेति वाच्यम्, 'अपादानमुत्तराणि कारकाणि बाधन्ते, गान्दोग्धि पयः' इत्यत्र परत्वात्कर्मसंज्ञेत्युक्तम्, तत्र पञ्चमीवारणाय द्रव्यगतानेकशक्तिमध्ये एकस्या अभिहितत्वे परस्या अपि तद्वत्त्वकाङ्क्षीकारेणाक्षतेः। मूलन्तु प्राचामनुरोधेन।

'सह युक्ते' इति सूत्रे न लौकिकं यदप्राधान्यम्मुख्यत्वरूपन्तदभावरूपमप्राधान्यं विवक्षितम्। राज्ञा सह सेना आगच्छतीत्यत्र राज्ञो लौकिकप्राधान्यसत्त्वात्तृतीयानापत्तेरित्यत्रत्याप्राधान्यम्पारिभाषिकमित्याशयेनाह—अत्राप्राधान्यमिति। गुणाद्यन्वयित्व-

१ सहशब्दसमभिव्याहृतपदोपस्थाप्यगुणादिरूपेऽर्थे तृतीयार्थ द्वारा तृतीयाप्रकृत्यर्थानन्वय एव शब्दागुणाद्यन्वयित्वाभावः। अयम्भावः—सहार्थः साहित्यम्। तच्च समभिव्याहृतपदार्थगुणाद्यधिकरणकालरूपम्। तृतीयार्थश्च कर्तृत्वादिसम्बन्धरूपः। तथा च प्रकृत्यर्थस्य तृतीयार्थे तस्य गुणादिरूपे सहार्थैकदेशेऽन्वये सहार्थतादृशकालस्य पित्रादिरूपे नामार्थेऽन्वयः। एवञ्च 'पुत्रेण सहागतः पिता' इत्यनेन पुत्रनिष्ठकर्तृतानिरूपकसमीपदेशसंयोगानुकूलव्यापाराधिकरणकालवृत्तिः पिता अतीतकालिकागमनाश्रय इति बोधः।

उद्देश्यतावच्छेदकावच्छेदेन विधेयान्वयस्य व्युत्पत्तिसिद्धत्वात् विशिष्टे पितरि आगतपदार्थगमनान्वये तादृशागमनस्यापि सहार्थकालान्वयित्वं फलति। तथा च 'पुत्रकर्तृकागमनकालिकागमनाश्रयः पिता' इति मानसिको बोधः।

एवम् 'पुत्रेण सह पितुर्धनम्' इत्यनेन पुत्रनिरूपितस्वत्वाधिकरणकालवृत्तिपितृसम्बन्धि धनम् इति बोधे पुत्रस्वत्वसमानकालिकपितृस्वत्ववद्धनमिति मानसिको बोधः।

'पुत्रेण सह पिता स्थूलः' इत्यत्रापि 'पुत्रनिष्ठस्थूलत्वाधिकरणकालवृत्तिः पिता स्थूलः इति शाब्दो बोधः। पुत्रनिष्ठस्थूलत्वसमानकालिकस्थूलत्ववान् पिता' इति मानसिकः।

अत्र सर्वत्र मानसबोधमादाय समभिव्याहृतपदार्थगुणाद्यन्वयित्वरूपविशेष्यांशस्य सत्त्वेऽपि शाब्दत्वरूपविशेषणाभावकृतो विशिष्टाभावः। 'सहैव दशभिः पुत्रैर्भारं वहति गर्दभी' इत्यत्र पुत्राणां वहने न शाब्दो नाप्यर्थोऽन्वय इति विशेष्यविशेषणोभयाभावकृतो विशिष्टाभावः।

मञ्जूषाकारास्तु—'सहार्थश्च समभिव्याहृतपदार्थसमकालिकत्वरूपं साहित्यम्, तत्समनियताखण्डोपाधिरूपं वा। तृतीयार्थस्तत्र क्रियाकर्तृत्वादिकमेव। एवञ्च 'पुत्रेण सहागतः' 'पुत्रेण सह पितुर्गौः'। 'पुत्रेण सह स्थूलः' इत्यादौ पुत्रकर्तृकागमनसमकालिकागमनवान्, पुत्रस्वामिकत्वसमानकालिकपितृ-

पितुरपि तृतीयापत्तिः। तत्र प्रातिपदिकार्थमात्रे अन्तरङ्गत्वात्प्रथमो-

---

पितुरत्रेति। आर्थं इति। पुत्रसाहित्यवान् पिता आगत इति बोधे साहित्यस्य पुत्रेणागमनसम्बन्ध एव सम्भव इति पश्चात्तस्यापि मानसस्तत्सम्बन्धबोधं इति भावः। शाब्दत्वं च विवक्षानिबन्धनमेवं चैषु शाब्दत्वरूपविशेषणाभावकृतो विशिष्टाभावः। सहैव पुत्रैर्दशभिर्भारं वहतीत्यादौ विद्यमानतावाचिसहशब्दयोगे क्रियाद्यन्वयित्वरूपविशेष्याभावकृतो विशिष्टाभावो दशानां पुत्राणां विद्यमानत्वेऽपीत्यर्थं इत्यन्यत्र विस्तरः। अन्तरङ्गत्वा-

---

मित्यत्रादिना द्रव्यक्रिययोः संग्रहः। न चैवं सति द्रव्याद्यन्वयित्वाभाव इत्येव द्रव्यपदार्थस्य प्रथमन्तन्त्रान्ते प्रतिपादनादुचितमिति वाच्यम्, "गुणसमुदायो द्रव्यम्" इति पतञ्जल्युक्त्यनुसारेणैवमभिधानात्। गुणोदाहरणम् ÷ 'पुत्रेण स्थूलः' इति। द्रव्योदाहरणम् ÷ 'पुत्रेण सह पितुर्धनमिति। क्रियोदाहरणम् ÷ 'पुत्रेण सहागतः पिता' इत्यादिप्रसिद्धमेव। एषु शाब्दगुणान्वयित्वं पितर्येवेति पुत्रस्याप्राधान्यम्। आर्थिकगुणाद्यन्वयित्वन्तु तत्रापि। अत एव पुत्रेण सहागमनम्पितुरित्यत्र पितरि शाब्दस्य कृत्प्रकृत्यर्थक्रियाकर्तृत्वस्य सत्त्वेन 'कर्तृकर्मणोः' इति षष्ठी भवति। शाब्दत्वन्तु इतरसम्बन्धं विनापि वाक्यजन्यशाब्दबोधे भासमानत्वमेव। सहार्थः=साहित्यम्—तच्च स्वसमभिव्याहृतशब्दजन्योपस्थितिविषयगुणादिसमानाधिकरणगुणाद्यन्वयित्वमेव। सामानाधिकरण्यमत्र कालिकप्रत्यासत्त्या यत्र क्षेत्रे तिलवापोत्तरम्माषवापस्तत्र 'तिलैः सह माषान्वपति' इति प्रयोगाद्दैशिकमपि क्वचित्। एतत्तृतीयार्थस्तु क्रियावाचकशब्दसत्त्वे प्रतीयमानतादृशक्रियान्वयित्वमेव। यत्र तु गुणद्रव्ययोरुपस्थितिस्तत्र सहशब्दस्य प्रयोगबलात्प्रतीयमानतत्तत्पदार्थसम्बन्धित्वमेव। एवञ्च 'पुत्रेण सह पितुर्धनम्' इति शब्दात्पुत्रस्वामित्वसमानकालिकपितृस्वामित्ववद्धनमिति बोधः। 'पुत्रेण सह स्थूलः' इति शब्दात्तु पुत्रवृत्तिस्थौल्यसमानकालिकस्थौल्यवान्पितेति बोधः। 'पुत्रादेः सहार्थयोगस्तु तत्तद्द्वारक एवेति विभावनीयम्। एतत्सर्वं हृदि निधायाह—आर्थं इतीत्यादिना। तस्यापि=पुत्रस्यापि। तत्सम्बन्धबोधः=गुणादिसम्बन्धबोधः। अप्रधानत्वाभिमते यथा विशिष्टाभावस्य सत्ताऽस्ति तथोपपादयति—शाब्दत्वरूपेत्यादिना। विवक्षानिबन्धनत्वकथनेन पित्रा सहागतः पुत्र इत्याद्यपि सूचितम्। विशेष्याभावकृत इति। विशेष्याभावकृतोऽपीत्यर्थः। अन्यत्र=शेखरादौ। वक्ष्यमाणरीत्या यथाश्रुतम्मूलमसङ्गतमत आह—प्राचीनैरिति। सीरदेवादिभिरित्यर्थः। क्रियाकारकयोः साक्षात्सम्बन्ध इति तन्निमित्ता विभक्तिरन्तरङ्गा उपपदपदार्थेन तु

---

स्वामिकस्ववती गौः, पुत्रवृत्तिस्थौल्यसमानकालिकस्थौल्यवान् इति बोधः। इतरसम्बन्धं विना प्रतीयमानत्वमर्थस्य शाब्दत्वम्। पुत्रस्य सहार्थबलात्प्रतीयमानैस्तैस्तैः सम्बन्धाद्यर्थः सम्बन्ध इत्याहुः।

न्यायादित्यर्थः।
वित्ति। प्राचीनैरन्तरङ्गत्वमूलकतयोक्तादुपपदविभक्तेरिति न्यायादित्यर्थः।

वस्तुतस्तु तद्वाचनिकमेवेत्यन्तरङ्गत्वं तन्न्यायोपलक्षणं बोध्यम्। प्रथमायाश्च कारकविभक्तित्वमनभिहितपादे भाष्ये बहुशः स्पष्टमन्यत्र प्रपञ्चितं च। अन्तरङ्गत्वं तु न युक्तम्, षष्ठ्यपवादत्वमिव प्रथमापवादत्वमित्यस्याप्युपपदविभक्तीनामापत्तेः, अनन्तरस्येति न्यायेन च प्रथमापवादस्यैव वाऽऽपत्तेः। उपपदविभक्तेरिति न्यायेन वाचनिके सर्वतो बलवत्त्वे कारकविभक्तेर्बाधितेऽर्थाच्छेषषष्ठ्यपवादत्वमुपपदविभक्तीनामवतिष्ठते। किं च उपपदविभक्तेः पदान्तरनिमित्तकत्ववत् कारकविभक्तेः क्रियानिमित्तकत्वात्त्वं दुरुपपादम्। न च सम्बन्धस्य[1] क्रियाकारकभावमूलकत्वेन तत्प्रयुक्तं

यत्किञ्चित् क्रियाद्वारकः सम्बन्ध इति तन्निमित्ता विभक्तिर्बहिरङ्गेति तेषामभावः। परन्त्विदमयुक्तम्, 'नमस्यति देवान्' इत्यत्र नमःशब्दार्थयोगसत्वाच्चतुर्थीप्राप्तिमाशङ्क्यानेन न्यायेन द्वितीयासाधनपराऽऽकरविरोधात्। प्रकृते नमः पदार्थस्य क्रियात्वमस्तीत्युभयोरपि समत्वात्। यथा मुण्डयतौ मुण्डस्य क्रियात्वं तद्वत्।

अत एवाह–वस्तुत इति। तदिति–उपपदविभक्तेरिति वाक्यमित्यर्थः। अत एव सत्सप्तम्यपेक्षया ऽधिकरणसप्तम्या बलवत्त्वन्तत्र च दीयत इति सूत्रे भाष्यकृता ध्वनितम्, कैयटेन तु स्पष्टीकृतन्तत्सङ्गच्छते। एवन्तर्हि मूलमसङ्गतमेव स्यादत आह–अन्तरङ्गत्वमिति। ननु प्रथमायाः कारकाधिकारे पाठाभावेनाकारकविभक्तित्वात्कथन्तेन वचनेन प्रथमासाधनमत आह-प्रथमायाश्चेति। कारक विभक्तित्वं हि क्रियाजनकार्थकविभक्तित्वम्, तच्च प्रथमाया अप्यस्तीति सापि कारकविभक्तिरेव 'अभिहिते प्रथमा' इति वार्तिककारोक्तेः। अन्यत्र=उद्योतादौ। नन्वस्य वचनस्यापूर्वत्वकल्पनापेक्षया पूर्वोक्तरीत्याऽन्तरङ्गत्वमूलकत्वमेवास्त्वित्यत आह–अन्तरङ्गत्वं त्विति। प्रथमापवादत्वस्येति। यदि प्रकृतसूत्रेऽप्रधानग्रहणन्न क्रियते तदा सहार्थकशब्दयोगे षष्ठ्या इव प्रथमाया अपि प्राप्त्या बाध्यसामान्यचिन्तायामुभयापवादत्वापत्तिः। अन्तरङ्गादप्यपवादस्य बलवत्त्वादिति भावः। नन्वत्र बाध्यविशेषचिन्तैव तर्ह्यस्त्वित्यत आह–अनन्तरस्येति। षष्ठीविधायकसूत्रापेक्षया प्रथमाविधायकसूत्रस्य पुरःस्फूर्तिकत्वेन तदपवादकत्वापत्तेरित्यर्थः। एवञ्चेष्टव्यवस्थाया असिध्या अप्रधानग्रहणस्यावश्यकत्वेन तेन न्यायेन तत्खण्डनासङ्गतिः।

तस्य वचनस्यापूर्वत्वे तु तेन वचनेनेष्टस्य सिध्या तत्खण्डनमुचितमिति मनसि निधायाह–उपपदेत्यादि। न्यायेन चेत्यत्र चस्त्वर्थे। अर्थादिति। परिशेषादित्यर्थः। इदं सर्वमन्तरङ्गत्वाभ्युपगमेन। वस्तुतस्तु तदेव नास्तीत्याह–किञ्चेति। पदान्तरेति।

१ सम्बन्धमात्रं क्रियाकारकभावमूलकम्। तथा हि—'राज्ञः पुरुषः' इत्यत्र राजकर्मकं पुरुषकर्तृकं यदा सेवनं तदैव स्वस्वामिभावस्तयोः। 'देवदत्तस्य छात्रः' इत्यत्र यदा देवदत्तकर्तृकं छात्रकर्मकमध्यापनं तदा गुरुशिष्यभावस्तयोः। एवमेव सर्वत्रोह्यम्।

त्पत्तेः, पितुरागमनमित्यादौ कारकविभक्तेः प्राबल्याच्च ।

'येनाङ्गविकारः' । अङ्गशब्दोऽर्श आद्यजन्तस्तदाह—अङ्गिन इति ।

कार्यं बहिरङ्गं पुत्रेऽपि तृतीयानापत्तेरेकक्रियाकर्तृत्वात्साहित्यस्य । क्रियायाः प्राधान्यात्तन्निमित्तिका विभक्तिः प्रबलेत्यपि न युक्तम्, अप्रधानक्रियायामपि कारकान्वयदर्शनात् । तदेव ध्वनयन्नाह—इत्यादौ कारकविभक्तेरिति । अत्राङ्गिना पुत्रेण सहागतः पितेत्यस्य सङ्ग्रह इत्यलम् ।

तदर्थेत्यर्थः । एवञ्चान्तरङ्गत्वमनैमित्तिकत्वरूपमल्पापेक्षत्वरूपं वा भवता वाच्यन्तदुभयमपि न सम्भवति, अन्यादृशन्तु तद्वक्तुमशक्यमिति भावः । तदवम् = अन्तरङ्गत्वम् । प्राचीनोक्तरीत्याऽन्तरङ्गत्वङ्खण्डयति—न चेति । सम्बन्धस्येत्यस्य उपपदार्थेन सहेत्यादिः । क्रियेत्यस्य यत्किञ्चिदित्यादिः । तत्प्रयुक्तमिति । उपपदार्थसम्बन्धप्रयुक्तमित्यर्थः । कार्यम् = विभक्तिरूपम् । अस्य बहिरङ्गत्वोपपादनेन क्रियाकारकभावात्मकसम्बन्धस्यान्तरङ्गत्वेन तत्प्रयुक्तं विभक्तिरूपङ्कार्यमन्तरङ्गमित्यर्थादुक्तम् । एवमभिधाने समीहिता सिद्धिरित्याह—पुत्रेऽपीति । अपिशब्दः पितृसमुच्चायकः । तृतीयानापत्तेरिति । 'सह युक्त' इति सूत्रविहिततृतीयानापत्तेरित्यर्थः । एतदुपपादयति—एकेति । यत्क्रियाकर्तृत्वम्पितुस्तत्क्रियाकर्तृत्वमेव पुत्रस्येत्युभयत्रोपपदार्थसम्बन्धस्य समतया पुत्रशब्दादप्यन्तरङ्गत्वात्प्रथमा स्यादिति भावः । नचैवं सति 'सह युक्ते' इति सूत्रवैयर्थ्यमिति शङ्कनीयम्, द्रव्यगुणयोगे चारितार्थ्यात् । केचित्तु प्रधानीभूता या क्रिया तत्सम्बन्धनिमित्तकङ्कार्यमन्तरङ्गमिति तन्न्यायार्थः, कारकविभक्तेः प्रधाननिमित्तकत्वेन प्राबल्यादित्याहुस्तन्मतङ्खण्डयति—क्रियाया इत्यादिना । यदि प्रधानक्रियायामेव कारकान्वयनियमः स्यात्तदा भवदुक्तेः सम्भवः स्यात्स एव तु नास्तीत्याशयेनाह—अप्रधानक्रियायामपीति । पुत्रेण सह पितुरागमनमित्यादौ भावल्युडन्तप्रतिपाद्या क्रिया यद्यपि प्रधानीभूता तथापि पुत्रेण सहागत इत्यत्र कर्त्तरि क्तप्रत्ययस्वसत्त्वेन तदर्थस्यैव प्राधान्येन क्रियायास्तत्राप्राधान्येन भवदुक्तो नियम एव नास्तीति भावः ।

मूले—पुत्रेण सहागत इत्यत्र पितृशब्दादन्तरङ्गत्वात्प्रथमामुपपाद्य तद्विपरीत्या पितुरागमनमित्यत्र कर्तृषष्ठ्याः कारकत्वमुक्तमिति प्रथमा न कारकविभक्तिरिति कश्चिद्भ्राम्येतेति तद्भ्रमनिरासार्थमुक्तम्—तदेवेति । उक्तार्थरूपमेवेत्यर्थः । अत एवाह—अत्राङ्गिनेति । उक्तवाक्य इत्यर्थः । नचैवं सति प्राबल्याच्चेति चकारासङ्गतिरिति वाच्यम्, चकारस्य हेत्वर्थकत्वात् । यतो वचनेनापूर्वेण कारकविभक्तेः प्राबल्यमुक्तमतोऽप्रधानग्रहणं शक्यमकर्तुमित्यन्वयः । एतेन द्रव्यगुणयोगे तृतीयासिद्ध्यर्थमावश्यकं यत्सहयोग इति सूत्रं तद्विशेषविहितत्वेन परमपि कर्तृकर्मणोरिति सूत्रम्बाधित्वा पितुरागमनमित्यत्र तृतीयाविधायकं स्यादिति अप्रधानग्रहणमावश्यकमिति परास्तम्,

येनेति सर्वनाम्ना प्रकृत्यर्थभूतोऽवयव एव गृह्यते, सन्निधानात्। स चार्थाद्विकृत एव, न ह्यविकृतेनावयवेन शरीरस्य विकारः संभवति। तदेतदाह—*येनाङ्गेन विकृतेनेति।* *संजानीत इति।* 'सम्प्रतिभ्यामनाध्याने' इति तङ्। कृद्योगे परत्वात् षष्ठी 'पितुः सञ्ज्ञाता'। यत्तु—हरदत्तेनोक्तम्—आध्याने परत्वात् 'अधीगर्थ' इति षष्ठी मातुः संजानातीति, तन्न, तत्र शेषाधिकारात्।

*द्रव्यादीति।* उक्तं च—

---

अर्श आद्यजन्त इति। व्याख्यानादिति भावः। अन्यथा येन गुणेन काणत्वादिनाऽवयवस्य विकारो लक्ष्यत इत्यर्थापत्त्याऽक्षि काणमस्येत्यादौ प्रथमां बाधित्वा गुणवचनात्काणशब्दादेव स्यात्, अक्ष्णा काण इत्यादौ तु षष्ठ्येव स्यादिति बोध्यम्। प्रकृत्यर्थेति। अर्श आद्यच् कृतेरित्यर्थः। द्रव्यादीति। आदिना गुणक्रिये। एवञ्च त्रितयसाधारणं हेतुत्वम्। नियतक्रि-

---

वाचनिकेन तेन न्यायेन कारकविभक्तेरेवैतादृशस्थले प्रबलायाः प्रवृत्तिबोधनेन विशेषविहितत्वस्याकिञ्चित्करत्वात्। किञ्च नमस्यति देवानित्यत्र नमःशब्दयोगेन परत्वात्प्राप्तामपि चतुर्थीं बाधित्वा द्वितीया यथा स्यादित्येतदर्थं वचनमावश्यकम्। अत एव 'गाः स्वामी गच्छति' इत्यत्र 'स्वामीश्वर' इति षष्ठीं बाधित्वा धात्वर्थव्यापारजन्यफलाश्रयत्वेन गवां कर्मत्वाद् द्वितीया भवतीत्याशयेनाह—अलमिति।

व्याख्यानादिति। अङ्गग्रहणसामर्थ्यमूलकव्याख्यानादित्यर्थः। अत एव 'अङ्गशब्दोऽयं समुदायशब्दः' इति भाष्ये उक्तम्। अन्यथा = अजन्तत्वाभावे। अङ्गशब्दस्यावयवे सुप्रसिद्धतया गुणवाचकस्यैव प्रत्यासत्त्योपस्थितिः स्यादिति येन गुणेनावयवस्य विकारो लक्ष्यते तद्वाचकात्तृतीयेति सूत्रार्थः स्यादित्याशयेनाह—येन गुणेनेति। लक्ष्यत इति। तद्वाचकात्तृतीयेति शेषः। अक्ष्णा काण इत्यादाविति। आदिना 'पादेन खञ्जः' इत्यस्य सङ्ग्रहः। यदि तु सूत्रेऽङ्गशब्दस्परित्यज्य गुणिशब्द एवोपादीयते तदा तु न दोष इत्यवधेयम्। प्रकृतित्वस्याव्यावर्तकतया संदेहनिवृत्तये आह—अर्श आद्यजिति। यद्यप्यक्ष्येव काणन्तथाप्यवयवधर्मस्य समुदाये आरोपाद्यथा शरीरे प्रयोगस्तथा शरीरावच्छिन्नात्मन्यपि व्यवहारस्य दर्शनादाह—शरीरस्येत्यवयव्युपेति। विकारसम्भवस्य सूत्राप्रतिपाद्यत्वाद्विकारः सम्भवतीत्युक्त्यनुपपत्तिरत आह—लक्ष्यत इति। त्रितयसाधारणमिति। त्रितयनिरूपितमित्यर्थः। एवं क्रियामात्रविषयमित्यत्र

---

१ 'अङ्गशब्दोऽयं समुदायवचनः। (अर्श आद्यजन्तः) येनेति च करणे एषा तृतीया। येनावयवेनाङ्गी = समुदायो लक्ष्यते तस्मिन् भवितव्यम्' इति भाष्यकारीयव्याख्यानादित्यर्थः।

द्रव्यादिविषयो हेतुः करणं नियतक्रियम् ॥ इति ।
अनाश्रिते तु व्यापारे निमित्तं हेतुरिष्यते ॥ इति च ।

*फलमपीति* । एतच्च 'प्रत्ययः' इति सूत्रे कैयटे स्पष्टम् । एवं च तादर्थ्यचतुर्थ्या सहेयं तृतीया विकल्प्यते । अध्ययनाय वसति ।

---

यमिति=क्रियया नियतमित्यर्थः । क्रियामात्रविषयमिति यावत् । हेतुकरणयोर्वैषम्यान्तरमप्याह—अनाश्रिते त्विति । एवं च करणत्वहेतुत्वविषयकशाब्दबोधाय सूत्रद्वयमित्यर्थः । विकल्प्यत इति । तदर्थत्वेन विवक्षायां चतुर्थ्याः, हेतुत्वेन विवक्षायां तृतीयायाश्च प्राप्तविवक्षाभेदेन विभक्तिद्वयमित्येतावता तयोर्विकल्पव्यवहार इति बोध्यम् । फलेन सहेति । तत्र फलं फल-

---

विषयशब्दो निरूपितार्थकः, तस्य करणत्वेऽन्वयः । अथवा विषयशब्दो जनकार्थकः । वैषम्यान्तरमिति । एतेन यत् क्रियाजनकङ्करणन्तत्राप्यनेनैव तृतीया भविष्यतीति 'कर्तृकरणयोः' इति सूत्रे करणशब्दो नोपादेय इति परास्तम्, शाब्दबोधकृतवैलक्षण्यस्य स्फुटत्वात् । एवञ्च = व्यापारवदेव । करणमिति । भेदे चेत्यर्थः । एवञ्च करणत्वशक्त्यपेक्षया हेतुत्वशक्तिर्विलक्षणा तृतीयार्थ इति भावः । ननु तृतीया विकल्प्यते इति मूलमसङ्गतम्, समानार्थत्व एव विकल्पव्यवहारात् । अत एव 'तुल्यार्थास्तु विकल्पेरन्'—इति जैमिनिनाप्युक्तम् । यथा 'व्रीहिभिर्यवैर्वा यजेत' 'उदितेऽनुदिते वा जुहोति' इत्यत्र । अन्यथा द्वितीयादिभ्योऽपि विकल्पव्यवहारः स्यादत आह—तदर्थत्वेनेति । तादर्थ्येनेत्यर्थः । एवञ्च विकल्प्यत इत्यस्य विवक्षाभेदेन भवतीत्यर्थः ।

फलमपीह हेतुरिति परममूले उक्तम्, तत्र यदिहेति तस्य—इह सूत्र इत्यर्थः । केषाञ्चिन्मते मतान्तरे तु इहेत्यस्यैतत्सूत्रोदाहरणे इत्यर्थः । आद्यमते तृतीयार्थः फलत्वेन फलन्तत्र प्रकृत्यर्थस्याभेदेन, तस्य तु जनकतासम्बन्धेन वासादावन्वय, इत्यध्ययनाभिन्नफलजनको वास इति बोधः । अन्यमते तु फलस्य स्वज्ञानद्वारा वासादिहेतुत्वविवक्षा यत्र तत्राध्ययनाय वसतीति प्रयोगादध्ययनस्य हेतुरूपतृतीयार्थेऽभेदेनान्वयः, तृतीयार्थस्य तु जन्यतासम्बन्धेन वासेऽन्वय, इत्यध्ययनाभिन्नहेतुजन्यो वास इति बोधः । तद्वेतदुपपादयति—तच्च फलमित्यादिना । हेतुत्वेनैवेत्येवकारेणास्य मतस्य

---

'१ फलमपीह हेतुः' इति मूले यदा 'इह' पदेन 'हेतौ' इति सूत्रं विवक्ष्यते तदा इह सूत्रे हेतुपदेन फलत्वेन फलमप्युच्यत इत्यर्थः । तथा च फलं तृतीयार्थः । तथा चाध्ययनाभिन्नफलजनको वास इति 'अध्ययनेन वसति' इत्यनेन बोधः । यदा च 'इह' इत्यस्योदाहरणे इत्यर्थः तदा हेतुत्वेन रूपेण फलमपि तृतीयार्थ इत्यर्थः । उभयत्रापि प्रकृत्यर्थाध्ययनस्य तृतीयार्थेऽभेदेनान्वय इत्यभेदः संसर्गे इत्यन्त-

अयं तु विशेषः—अध्ययनस्य फलेन सहाभेदः संसर्गः, उपकारकत्वेन सह तु निरूपकतेति। *गम्यमानेति*। न तु श्रूयमाणैवेत्याग्रह इति

त्वेन तृतीयार्थ इत्येके। हेतुत्वेनैवेत्यन्ये। अध्ययनहेतुको वास इति बोधस्तृतीयायाम्। चतुर्थ्यामध्ययनोपकारको वास इति बोध इति मते इदम्। अध्ययनोपकार्यको वास इति बोधश्चतुर्थ्यामिति मते तत्राप्यभेदेन भानमेवेति बोध्यम्। गम्यमानेति। श्रमेणेत्यादिपदजबोधविषयेत्यर्थः। स्पष्टं

मुपपत्त्यन्दर्शितम्। यदा तु तादर्थ्ये चतुर्थी तदापि मतभेदेन शाब्दबोधे वैलक्षण्यमित्याह—चतुर्थ्यामिति। आद्यमते उपकारकत्वञ्चतुर्थ्यर्थः। तत्र प्रकृत्यर्थस्य स्वनिष्ठोपकार्यतानिरूपकत्वसम्बन्धेनान्वयः, प्रत्ययार्थस्य स्वाश्रयतया वासेऽन्वयः। द्वितीयमते उपकार्यश्चतुर्थ्यर्थः, तत्र प्रकृत्यर्थस्याभेदेन, तस्य तु स्वनिष्ठोपकार्यतानिरूपितोपकारकत्वेन वासेऽन्वय इति मतभेद इति बोध्यम्।

नन्वलं श्रमेणेत्यत्र क्रियावाचकपदाप्रयोगात्कथं कारकविभक्तिः? यदि तु तद्विनाऽपि कारकविभक्तिस्तदर्थस्य यत्र कुत्रचिदन्वयस्तदा कारकाणां क्रियामात्रान्वयित्वनियमभङ्ग इत्यत आह—गम्यमानेतीति। अत्र प्राञ्चः—अलंशब्दो निषेधार्थः, अलम्भोजनेनेत्यादौ तथा दर्शनात्। निषेधस्य प्रतियोगिसाकाङ्क्षत्वात्प्रतियोगिवाचकम्पदं स्मर्यते। तच्च योग्यत्वादिह—साध्यमिति। तदर्थान्वयित्वेन श्रमेणेति तृतीया। न चाध्याह्रियमाणं यत्साध्यमिति तस्य नामत्वात्तदर्थो न क्रियेति कथन्तत्र तृतीयान्तार्थान्वय इति वाच्यम्, विशिष्टार्थस्याक्रियात्वेऽपि तद्घटकप्रकृत्यर्थस्य साध्यत्वेन प्रतीयमानस्य क्रियात्वात्तस्य करणकारकान्वये बाधकाभावात्। गम्यमानेत्यस्य स्मर्यमाणपदजन्यबोधविषयेत्यर्थ इति। वस्तुत इदन्न युक्तम्, साध्यमिति पदं स्मृतिविषयोः, मानसज्ञानविषयो वा? भवतूभयथापि, तस्यानुच्चारितत्वात्प्रत्यायकता बाधिता, 'उच्चारितः शब्दः प्रत्यायको नानुच्चारितः' इति भाष्यकारोक्तेः। तस्माद्यथा पदार्थे पदशक्तिग्रहकाले पदैकदेशस्यापि शक्तिग्रह इति पदैकदेशादपि तस्यार्थस्योपस्थितिः। सत्या, भामा, भीमादिभ्यो यथा, तथा वाक्यार्थे वाक्यैकदेशपदस्यापि शक्तिग्रह इति तस्माद्वाक्यार्थस्योपस्थितिः। एवञ्च श्रमेण साध्यमिति वाक्यार्थे श्रमेणेत्यस्य शक्तिरिति श्रमे-

ग्रन्थाभिप्रायः चतुर्थ्यां बर्थमाह—उपकारकत्वेनेति—यदा तादर्थ्यपदेन उपकारकत्वं गृह्यते तदाऽध्ययनस्य निरूपकता सम्बन्धेन (स्वनिष्ठोपकार्यतानिरूपितनिरूपकतासम्बन्धेन) उपकारकत्वरूपचतुर्थ्यर्थे, तस्य स्वरूपसम्बन्धेन वासेऽन्वयः। तथा च अध्ययननिरूपितनिरूपतावदुपकारकत्वान् वास इति बोधः। 'इति मते इदम्' इत्यन्तशब्दरत्नाशयः।

यदा तु उपकार्यश्चतुर्थ्यर्थस्तदाध्ययनस्याभेदेनैव उपकार्येऽन्वयः, तस्य च स्वनिष्ठोपकार्यतानिरूपितोपकारकत्वेन वासेऽन्वयः। तदाह—अध्ययनोपकार्यक इति।

भावः । *साधनेति* । साध्यमित्यत्र प्रकृतिभागस्यार्थं प्रतीति भावः । 'मा चापलायेति गणान् व्यनैषीत्' इत्यत्र तु यतध्वमिति शेषः । *अशिष्टेति* । एतच्च 'दाणश्च सा चेच्चतुर्थ्यर्थे' इत्यनेन ज्ञाप्यते ॥

इति तृतीया ।

---

चेदं 'सहयुक्ते' इत्यत्र भाष्ये तदाह—न तु श्रूयमाणेति । श्रूयमाणस्वमात्रवाचकपदजन्यबोधविषयेत्यर्थः। ज्ञाप्यते इति । चतुर्थ्यर्थविहिततृतीयायुक्ताद्दाण आत्मनेपदमिति तदर्थः, सा चेदित्यनेन तस्याः काचित्कत्वं ज्ञाप्यते । तेनाशिष्टव्यवहारे इत्यंशोऽपि सिद्ध इति भावः ।

इति तृतीया ।

---

णेत्येतत्पदजन्यबोधविषयत्वमव्याहतमिति भावः ।

अस्य सिद्धान्तत्वसूचनायाह–स्पष्टञ्चेदमिति । 'इग्यणः सम्प्रसारणम्' इति सूत्रभाष्येऽपि, तत्र हि ÷ वाक्यस्य सम्प्रसारणसञ्ज्ञायाम् 'सम्प्रसारणाच्च' इत्यादावनुवादमदेशे वाक्यात्परत्वानुपपत्तिप्रसक्त्या सम्प्रसारणाज्जातं सम्प्रसारणशब्देन गृह्यत इत्युक्तम् । परमसूत्रस्य तु स्ववाच्यक्रियाम्प्रति स्वस्य करणत्वमित्यर्थः । नन्वेवं सति श्रूयमाणपदजन्यबोधविषयत्वमेवागतमिति न तु श्रूयमाणेत्यसङ्गतमेवेत्यत आह–श्रूयमाणस्वमात्रवाचकेति । स्वमात्रवाचकम्पदम्प्राधान्येन क्रियाबोधकम् । तेन चतुर्थ्यर्थे ज्ञापिततृतीयायाः क्वाचित्कत्वेन अशिष्टव्यवहार इत्यंशोऽपि सिद्ध इति, अभिधानस्वाभाव्यादयमंशः सिद्ध इति भावः । अशिष्टानाम् = सङ्कीर्णाचाराणां यो व्यवहारः= क्रिया तद्वाचकस्य प्रयोगे यत्सम्बन्धेन व्यवहारस्य सङ्कीर्णत्वम्भिन्नत्वन्तद्वाचकाच्चतुर्थ्यर्थे तृतीया स्यादीति वार्तिकार्थः । अत्र दाणधात्वर्थो दानपूर्वक उपभोगः, कामुककर्तृको दासीकर्मकदानपूर्वक उपभोग इति बोधः। दास्यै दत्त्वा तामुपभुङ्क्ते इति फलितम् ।

इति तृतीयाविवरणम् ।

---

अन्वर्थसञ्ज्ञाबलेनाह—दानस्येति । तेन अजां नयति ग्रामम्, हस्तं निदधाति वृक्ष इत्यादौ नातिप्रसङ्ग इति भावः । दानं चापुनर्ग्रहणाय स्वस्वत्वनिवृत्तिपूर्वकं परस्वत्वोत्पादनम् । अत एव रजकस्य वस्त्रं ददातीत्यादौ न भवति । तत्र हि ददातिर्भाक्तः । एतच्च वृत्तिमतम् । भाष्यमते तु नान्वर्थतायामाग्रहः, खण्डिकोपाध्यायस्तस्मै

अपुनर्ग्रहणायेति । इदं च स्वत्वनिवृत्तेर्वाच्यतास्वीकारफलप्रदर्शनम्, न तु धात्वर्थनिविष्टमिति बोध्यम् । भाक्त इति । अधीनीकरणरूपेऽर्थे इत्यर्थः । 'न शूद्राय मतिं दद्यात्' इत्यत्र मतिम्=तज्जनकं शास्त्रं नोपदिशेदित्यर्थः । आग्रह इति । अत एव 'क्रियाग्रहणं कर्त्तव्य'मिति वार्तिकं भाष्ये प्रत्याख्यातम् । भाष्यान्तरमाह—खण्डिकेत्यादि । चपेटां ददातीत्यत्र संयोगोऽर्थः ।

ननु स्वस्वत्वनिवृत्तिपूर्वकपरस्वत्वोत्पत्त्यनुकूलव्यापारो यदि दाण्धात्वर्थस्तदा कर्मणि स्वस्वत्वनिवृत्तिः प्रधानव्यापारेण सम्पन्नेति पुनर्ग्रहणाप्रसक्त्याऽपुनर्ग्रहणायेत्यस्य वैयर्थ्यमत आह-इदञ्चेति । अपुनर्ग्रहणायेत्यस्योपादानञ्चेत्यर्थः । वाच्यता = दाणधातुवाच्यता । भाक्तत्वम् = गौणत्वम्, तच्च किञ्चिन्निरूपितमेवेति निरूपकाकाङ्क्षाशान्त्यर्थमाह—अधीनीकरणरूप इति । ननु स्वस्वत्वध्वंसविशिष्टपरस्वत्वोत्पत्त्यनुकूलव्यापार एव चेद्दानन्तदा 'न शूद्राय मतिन्दद्यात् इत्यत्रानुपपत्तिः, मतिशब्दार्थे व्यापारजन्यफलाश्रयत्वस्यासम्भवेन द्वितीयाया अनुपपत्तेरत आह–न शूद्रायेति । तज्जनकम् = मतिजनकम् । शास्त्रम् = वेदादिरूपम् । क्रियाग्रहणमिति । 'कर्मणा यमभिप्रैति' इति सूत्रे कर्मणेति परित्यज्य क्रिययेति वक्तव्यमित्यर्थः । प्रत्याख्यातमिति । क्रियाऽपि कृत्रिमं कर्म, कया क्रियया ? सन्दर्शनादिक्रियया इत्यादिना प्रत्याख्यातम् । 'पत्ये शेते' इत्यस्मात्पतिसम्प्रदानकपत्नीकर्तृकं शयनमिति शाब्दबोधः । यदि वृत्तिकारमतार्थं एव भाष्यकारस्याप्यभिप्रेतः स्यात्तदा सूत्रस्थकर्मशब्देन क्रियाया ग्रहणेऽपि मुख्यं यदनुगतं सम्प्रदानत्वन्तदत्र न सम्भवतीति 'पत्ये शेते'इति प्रयोगोपपत्त्यसम्भवेन क्रियायाः कृत्रिमकर्मत्वोपपादनमसङ्गतमेव स्यादिति भावः ।

१ अकर्मकक्रियोद्देश्यस्य सम्प्रदानत्वार्थं वार्तिकम् । तत्र शयनादिक्रियाया अपि प्रतीयमानपतिकर्तृकदर्शनकर्मकत्वेन यदा विवक्षा तदा शयनस्यापि दर्शनकर्मतया शयनरूपेण कर्मणा ( कर्मसंज्ञकेन ) करणभूतेन यं पति संयोगादिसम्बन्धेन सम्बन्धुमिच्छति तस्य सूत्रेणैव सम्प्रदानत्वं स्यादिति वार्तिकं व्यर्थमिति भाष्याशयः । क्रियामात्रकर्मणोऽग्रहणे इदं भाष्यमसङ्गतमेव स्यादिति भावः । एवञ्च 'पत्ये शेते' इत्यनेन पतिसम्प्रदानकं दर्शनादिकर्मीभूतं पत्नीकर्तृकं शयनमिति बोधः । क्रियामात्रकर्मणो ग्रहणेन 'शिष्याय शास्त्रमुपदिशति' इत्यादावपि सम्प्रदाने चतुर्थी सिध्यति । तादर्थ्यचतुर्थ्यैव सिद्धे सम्प्रदानसंज्ञा 'दाशगोघ्नौ सम्प्रदाने' इत्येतदर्था, सम्प्रदानत्वेन बोधार्था चेत्यन्यत्र विस्तरः ।

'सुट्तिथो'रिति सूत्रे सुपा सीयुटो बाधो नेति वृत्तिः। करणत्वविवक्षायां तृतीयेति गृहाण।

"*न लोकाव्ययनिष्ठा*"। उश्च उकश्च ऊकौ, लश्च ऊकौ चेति विग्रहः। उकारेण कृते विशेषणात्तदन्तविधिस्तदाह—*हरिं दिदृक्षुरलङ्करिष्णुर्वेति*। *शेषे षष्ठी त्विति*। एतेन 'इक्ष्वाकूणां दुरापेऽर्थे त्वदधीना हि सिद्धयः' अपि वागधिपस्य दुर्वचं वचनं तद्विदधीत विस्मयम्'

---

कर्मोपपदादण्प्रत्यये उपपदसमासः, अजन्तस्य कर्मषष्ठ्या वा समास इति निरस्तम्। अत एव द्वितीयासमर्थादिति व्याख्यायते। राजानमर्हतीति च विगृह्यते। तत्फलं त्वनित्यत्वबोधनमेवेति। भाष्ये तु नैतद् दृश्यते इति बोद्ध्यम्।

ऊकौ चेति। अव्ययं चेत्यादेरुपलक्षणमिदम्। तदन्तविधिरिति। व्यपदेशिवद्भावेन तस्यापीति बोध्यम्। ननु नपुंसके भावे क्तस्येति भाष्ये वार्तिकात्कारकषष्ठीनिषेधविषये शेषत्वविवक्षा न, तत्प्रत्याख्याने त्वनभि-

---

माणरीत्येति तामाह—एतेनेति। निरस्तमित्यत्रान्वयः। तदिति। द्वितीयान्तम्। अर्हमिति। पचाद्यजन्तम्। न च तदर्हमिति निर्देशस्य सौत्रत्वेनोपपत्तिरस्त्विति वाच्यम्, सौत्रत्वकल्पनापेक्षयाऽनेकप्रयोगसाधकानित्यत्वकल्पनस्य न्याय्यत्वादिति भावः। अत एव = तदित्यस्य द्वितीयान्तत्वादेव। षष्ठ्यन्तत्वे तु षष्ठीसमर्थादिति स्यात्। अत एव विधिमर्हतीति विग्रहः। तत्फलन्तु=असमस्तद्वितीयान्तत्वफलन्तु। मूले-अत्राहुरित्युपादानमरुचिबोधनाय। तामप्रकटयति—भाष्ये त्विति। एतत्=अनित्यत्वम्। नेति। भट्टिप्रयोगस्योक्तरीत्योपपत्तिः। तदर्हमिति तु कर्मोपपदादण्प्रत्ययान्तम्। किञ्चोक्तरीत्या योगविभागेन व्याख्याने यद्यपि पुनस्तस्येत्यस्यानुपादाने शब्दलाघवन्तथापि तस्येत्यत्र स्वरितत्वस्य निर्हेतुकशब्दाधिकारस्य चाश्रयणमिति ज्ञानजनकमनोव्यापारस्य गौरवमस्त्येवेति।

मूले—"लश्च" इति पृथक्कृत्वा, विग्रहघटकत्वेन प्रदर्शितम्। लश्च उश्च उकश्चेति तु नोक्तम्, "इग्भिन्नीनाम्" इति न्यायेन रूपासिद्धिप्रसङ्गादत एवाह—ऊकौ चेतीति। अव्ययपदमुक्तद्वन्द्वाघटकमिति भ्रमवारणायाह—अव्ययमिति। ननु यद्युकारेण तदन्तविधिस्तदा हरिं दिदृक्षुरित्यत्र न स्यादत आह—व्यपदेशिवद्भावेनेति। सर्वोऽयङ्कारकषष्ठ्याः प्रतिषेध इति कथनेन शेषषष्ठ्यनङ्गीकारे दुरापशब्दस्य खल्प्रत्ययान्ततया षष्ठी न स्यादिति भावः। 'इक्ष्वाकूणान्दुराप' इत्यादीनां शेषत्वविवक्षया साधनन्दुर्बलमिति सूचयन्नाह—नन्विति। वार्तिकादिति। षष्ठीति निषेधस्य

इत्यादि व्याख्यातम् । यद्वा इक्ष्वाकूणां सिद्धय इत्यन्वयः, न तु इक्ष्वाकूणां दुराप इति । तथा वागधिपस्य विस्मयमित्यन्वयः, न तु वागधिपस्य दुर्वचमिति ।

'*तुल्यार्थैः*' । कथं तर्हि 'तुलां यदारोहति दन्तवाससा' इति कालिदासः, 'स्फुटोपमं भूतिसितेन शम्भुना' इति माघश्च । उच्यते—'सहयुक्तेऽप्रधाने' इति तृतीया । 'स्वबालभारस्य तदुत्तमाङ्गजैः समं चमर्येव तुलाभिलाषिणः' इत्यत्र यथा । उक्तं हि—विनापि तद्योगे तृतीयेति । *व्याख्यानादिति* । सूत्रेऽर्थशब्दोऽपि पृथङ्निमित्तम्, तथा च द्वन्द्व एव, न तु अर्थशब्देन बहुव्रीहिरिति भावः ॥

इति षष्ठी ।

---

धानाद् क्तातिरिक्तविषये सा न । अत एव 'पूरणगुण' इति सूत्रे सद्ग्रहणप्रत्याख्यानं भाष्ये ध्वनितमित्यरुचेराह—यद्वेति । सहयुक्ते इति । स्फुटोपममित्यत्रोपमाशब्दो भावसाधनः ॥

इति षष्ठी ।

---

बाधकादिति शेषः । तत्प्रत्याख्यान इति । शेषत्वविवक्षयेत्यादिः । सा नेति—शेषत्वविवक्षा नेत्यर्थः, आरम्भ-प्रत्याख्यानयोः फलैक्यायैवमेव कल्पनादिति भावः । तत्रार्थे प्रमाणान्तरमाह—पूरणेत्यादि । ध्वनितमिति । तत्र हि—"सति किमुदाहरणम् ? ब्राह्मणस्य कुर्वन् । नैतदस्ति, कारकषष्ठ्या निषेधात् । शेषषष्ठ्यान्तु ब्राह्मणस्य कटमित्यर्थेनासामर्थ्यात्सतीति व्यर्थम्" इत्युक्तम् । यदि कारकषष्ठीविषयेऽपि शेषत्वविवक्षा स्यात्तदा कुर्वन्नित्येतद्योगेऽपि शेषत्वविवक्षा सम्भवतीति कटादियोगेनासामर्थ्यप्रदर्शनमसङ्गतं स्यात्तेनेदन्ध्वनितमित्यर्थः । यदि स्फुटोपममित्यत्रोपमाशब्दः कर्माऽन्तस्तदा 'भूतिसितेन शम्भुना' इति करणतृतीयैव युक्ता, कारकविभक्तेर्बलवत्त्वादत आह—स्फुटोपमेति । भावसाधन इति । भावेऽभिधेये प्रत्यय इति भावः साधनत्वेन व्यपदिश्यते । एवञ्च भावेऽङ्प्रत्ययस्तत्प्रकृत्यर्थोपमानक्रियायाश्चारदस्य शाब्दोऽन्वयः शम्भोश्चार्थः । तुल्यार्थैरतुलोपमाभ्यामित्यत्र तु तुलोपमाशब्दौ कर्मसाधनाऽन्तौ सादृश्यानुयोगिवाचकौ । सादृश्यमेतयोः प्रवृत्तिनिमित्तमिति बोध्यम् ।

इति षष्ठी विवरणम् ।

---

आधारस्त्रिधेति । एतच्च 'संहितायाम्' इति सूत्रे भाष्ये स्पष्टम् । चतस्र इति । प्रातिपदिकार्थमात्र इति भावः । किं च 'दूरान्तिके'ति सूत्रस्य इहाप्यनुवर्तनादधिकरणेऽप्येता बोद्ध्याः । कस्येति । इन्=

प्रातिपदिकार्थमात्र इति । 'सप्तम्यधिकरणे च' इति सूत्रेणाधिकरणे सप्तम्याः सिद्धत्वाच्चकारेणान्तरङ्गत्वात् प्रातिपदिकार्थमात्रे सप्तमी विधीयते । प्रागुक्ताश्च तिस्रः, इयं च सप्तमी निरवकाशत्वात्पराया अपि प्रथ-

ननु चकाराद् दूरान्तिकार्थेभ्योऽधिकरणे सप्तमीविधानेऽपि कथं विभक्तिचतुष्टयमत आह—सप्तम्यधीति । सिद्धत्वादिति । एतेन तत्र न चकारेण सप्तमीविधानं किन्तु प्रथमोपस्थितिकत्वेन प्रातिपदिकार्थस्यान्तरङ्गत्वात्तत्र सप्तमी विधीयते । सा च कस्मादित्याकाङ्क्षायाम्पूर्वसूत्रेण दूरान्तिकार्थेभ्य इत्यस्योपस्थानात्तेभ्यः सप्तमीत्यस्य लाभः । अत एवाह—प्रागुक्ता इति । ननु प्रातिपदिकार्थ इति सूत्रस्य परत्वात्तेन परत्वाद्बाधिका प्रथमैव स्यादिति कथञ्चतस्रो विभक्तय इत्यत आह—इयञ्चेति । अपीति । तेनान्तरङ्गायाः समुच्चयः । एतेभ्योऽधिकरणकारकेऽपि सप्तमी भवति, प्रथमायास्तत्र मात्रपदेन व्यावृत्तेः । मूले—त्रैविध्यमाधारस्य दर्शितन्तत्र सम्मतिरुक्ता संहितायामितीति । ननु प्रवृत्तिनिमित्तमधिकरणशब्दस्याधिकरणत्वमेव तच्चैकमिति कथमाधारस्य त्रैविध्यमिति चेन्न, आधारतायाः सम्बन्धावच्छिन्नत्वनियमेनोपकारकसम्बन्धभेदादधिकरणं त्रिविधमित्युच्यते यत्राधारत्वाभिमतपदार्थावयवस्किञ्चिदवयवावच्छेदेन संयोगे सति कर्तृकर्मसमवेतक्रियानिरूपिताधारत्वविवक्षास्ति सः । यत्र वा उप=समीपे श्लेष इति व्युत्पत्त्याऽव्यवहितसामीप्यसम्बन्धावच्छिन्नाधेयतानिरूपितकर्तृकर्मसमवेतक्रियानिरूपिताधारत्वस्य विवक्षाऽस्ति, स च औपश्लेषिकाधार इत्युच्यते । अत एव भृत्येभ्यो यन्मासिकन्दीयते तत्र मासे दीयते 'मासिकम्' इति व्युत्पत्तिः "तत्र च दीयते" इति सूत्रसम्मता भवति । अत्र बुद्धिस्थदिवसपरिच्छिन्नमासस्य दाधात्वर्थफलविशिष्टाऽऽधारकालस्य चोपश्लेषोऽस्तीति मास औपश्लेषिकमधिकरणम् । मासेऽतिक्रान्ते दीयते उत्तरकाले दीयते इत्यर्थः स्पष्टप्रतिपत्तये क्रियते फलितार्थसूचनाय ।

ननु संयोग—समवायान्यतरसम्बन्धेन यः कर्तृकर्मव्यवहितक्रियाधारस्तत्र रूढिसत्वाद्योगार्थमादाय सामीप्यमादाय व्यवहितस्य कथङ्ग्रहणमिति चेन्न, 'गङ्गायां गावः' 'कूपे गर्गकुलम्' इति भाष्यकारीयव्यवहारबलेन तस्यापि ग्रहणात् । अत एव "इको यणचि" इत्यादिसूत्राणामजुपश्लिष्टस्येक इत्यर्थविवरणं सुष्ठु सङ्गच्छते । अत एव च "शब्दस्य शब्देन कोऽन्योऽभिसम्बन्धो भवितुमर्हति अन्यदत उपश्लेषात्" इति भाष्योक्तिरप्युपपद्यते । साक्षात् क्रियाधारस्य कर्मकर्तृसंज्ञाऽधिकरणसंज्ञाया बाधिका भवतीति परम्परया क्रियाधारस्य सा भवति । सा च परम्परा क्वचित्संयो-

इन्नन्तः शब्दो विषयः = वृत्तिभूमिर्यस्य क्तस्येत्यर्थः। हेतौ तृतीयेति।

माया बाधिकेति भावः। वृत्तिभूमिर्यस्येति। यत् क्तान्तनिरूपितपरार्थाभिधायकत्वाश्रय इन्नन्तः शब्द इत्यर्थः। अत्रेनो विषयस्येनः प्रकृतेः क्तान्त-

गघटिता क्वचित्समवायघटिता क्वचित्तदन्यतरातिरिक्तविशेषणतासम्बन्धघटिता। आद्या—'कटे शेते' 'स्थाल्यान्तण्डुलं पचति' इत्यादौ। 'पटे शौक्ल्यम्' 'द्रव्यादिषु जातिः' इत्यादौ द्वितीया। तृतीया तु घटाभावे पटाभाव इत्यादौ। तदुक्तं हरिणा—

कर्तृकर्मव्यवहितामसाक्षाद्धारयत् क्रियाम्।
उपकुर्वत् क्रियासिद्धौ शास्त्रेऽधिकरणं स्मृतम्॥ इति।

अत्र व्यवहितामित्युक्तेऽप्यसाक्षादित्युक्तिः परम्परयैवान्वयसूचनाय। अत एव 'अक्षेषु शौण्डः' इति विग्रहे "सप्तमी शौण्डैः" इति समासः। वैषयिकाधारस्तु मोक्षे इच्छाऽस्तीत्यादौ। यत्र सर्वावयवावच्छेदेन सम्बन्धोऽस्ति स एवाभिव्यापकाधार इत्युच्यते—'तिलेषु तैलम्' 'दधिन सर्पिः' इत्यादौ यथा। अत्रायं विशेषः—इच्छा इत्यादौ धात्वर्थेच्छाविषयता यदा मोक्षस्य विवक्षिता तदा मोक्षमिच्छतीत्येवान्तरङ्गत्वेन कर्मसंज्ञया भवति। यदा तु प्रत्ययार्थसिद्धावस्थापन्नार्थविषयतामोक्षस्य विवक्षिता तदा मोक्षे इच्छास्तीति भवति। अत्रापि प्रकृत्यर्थसाध्येच्छाविषयत्वविवक्षायाङ्कर्मणि षष्ठी भवति। अधिकमन्यत्र द्रष्टव्यम्।

क्तस्येन्विषयस्य कर्मण्युपसंख्यानमित्यत्र विषयशब्दो वृत्तिभूमिपरत्वेन मूले व्याख्यातस्तदर्थङ्कथयितुमाह—यत् क्तान्तेति। यत् क्तान्तार्थेत्यर्थः। वार्त्तिके क्तशब्दः क्तान्तपरः। एवमिन्शब्दोऽपि तदन्तपरः। विषयशब्दो वृत्तिभूमिपरः। एतदर्थः—परार्थाभिधायकत्वाश्रयः। एवञ्चेन्नन्तः शब्दः परार्थाभिधायकत्वाश्रयो यस्य क्तान्तार्थस्येत्यर्थः फलितः। यस्येत्यत्र षष्ठ्यर्थो निरूप्यनिरूपकभावः। यत् क्तान्तार्थनिरूपिताभिन्नपरार्थाभिधायकत्वाश्रय इन्नन्तः शब्दस्तस्य क्तान्तस्य कर्मणि सप्तमी भवतीत्यर्थः सिद्धः। एवम्बहुव्रीहिपर्यन्तधावने फलाभावाद्विषयशब्दस्य देशवाचकत्वेन प्रसिद्धत्वात्प्रकृतिरेव देशपरत्वेन गृह्यत इत्याशयेन व्याचष्टे—इनो विषयेति। एवञ्च बहुव्रीह्यपेक्षया षष्ठीतत्पुरुषे लाघवमिति भावः। 'अधीती व्याकरणे' इति शब्दाद् भूतकालिकव्याकरणकर्मकाध्ययनकर्तेति बोधः। इन्विषयस्य कर्मणीत्यत्र कर्मशब्दः कालादिभिन्नकर्मबोधकः। तेन मासमधीती व्याकरण इत्यस्योपपत्तिः।

"निमित्तात्कर्मयोगे" अत्र निमित्तपदङ् क्रियाजनकप्रवृत्तिकारणज्ञानविषयलाक्षणिकम्। फलज्ञानस्य च प्रवृत्तिहेतुत्वम्प्रसिद्धमेवेत्यभिप्रायेण परममूले निमित्तमिह फलमित्युक्तम्। कर्मयोग इत्यस्य क्रियाकर्मणा योगः सम्बन्धस्तस्मिन्नित्यर्थः। सतीति शेषः। फलश्चर्मणि द्वीपिनमित्यादौ सप्तम्यर्थः। तस्य फलत्वन्तु हननक्रियायास्तज्ञ-

तादर्थ्ये चतुर्थीत्यपि बोद्धव्यम् । *सीमेत्यादि* । एतच्च दुर्गवाक्यप्रबोधे कुलचन्द्रेणोक्तम् । मेदिनीकारोऽप्याह—

सीमाघाटस्थितिक्षेत्रेष्वण्डकोशेषु च स्त्रियामिति ।

अथ पुष्कलको गन्धमृगे क्षपण-कीलयोः ॥ इति च ।

हरदत्तादयस्तु—पुष्कलकः = शङ्कुः, सीम्नि = सीमज्ञानार्थं हतः = निहतो निखात इत्याहुः ।

*'यस्य च'* । निर्ज्ञातकाला क्रिया अनिर्ज्ञातकालायाः क्रियायाः

---

स्येति षष्ठीतत्पुरुषोऽपि वक्तुं शक्यः । तादर्थ्ये इति । फलस्य हेतुत्वेन विवक्षणात्फलार्थत्वाच्च करणस्येति भावः ।

ननु ज्ञाप्यज्ञापकभावरूपलक्ष्यलक्षणभावो भूयोदर्शनाश्रयो दृष्टस्तत्श्चोदिते आदित्ये तमो नष्टमित्यादावेव स्यान्न तु प्रकृते कदाचिद्धि गोषु दुह्यमानास्वसौ गत इत्यत आह—निर्ज्ञातकालेति । कालो देशस्याप्युप-

---

भेच्छाधीनत्वाद्बोध्यम् । एवञ्च 'चर्मणि द्वीपिनं हन्ति' इतिशब्दाच्चर्महेतुकं यद् द्वीपिकर्मकं हननन्तद्विशेष्यकः कर्तृप्रकारकः शाब्दबोधः । परममूले हेतुतृतीयेत्यभिधानम् 'हेतौ' इति सूत्रे फलस्यापि हेतुपदेन ग्रहणमित्यभिप्रायेण । एवञ्च फलार्थकत्वमपि हननस्य सम्भवतीत्याशयेनाह मूले—तादर्थ्ये चतुर्थीत्यपीति । एतदेव प्रकटयति—फलस्येति । 'चर्मणि द्वीपिनं हन्ति' इत्यत्र, 'सीम्नि पुष्कलको हतः' इत्यत्र, पुष्कलकशब्दस्याण्डकोशार्थकत्वे कर्मणा योगः—समवायः, 'दन्तयोर्हन्ति कुञ्जरम्' इत्यत्र 'केशेषु चमरीं हन्ति' इत्यत्र पुष्कलशब्दस्य शङ्कुपरत्वे सीमशब्दस्य परिच्छिन्नदेशपरत्वे च संयोगात्मकः कर्मयोगो बोध्यः । 'यस्य च भावेन भावलक्षणम्' इत्यत्र भावशब्दः क्रियाया बोधकः । एवञ्च यत्सम्बन्धिक्रियया यस्य क्रिया लक्ष्यते ततः सप्तमीत्यर्थः ।

नन्वस्य सूत्रस्य यत्र क्रिययोर्ज्ञाप्यज्ञापकभावरूपलक्ष्यलक्षणभावस्तत्रैव चेत्प्रवृत्तिस्तदा ह्यत्र ज्ञापकत्वोपपादिका भूयोदर्शनादिघटिता सामग्री सम्भवति तत्रैव प्रवृत्तिः स्यान्नत्वन्यत्रेत्याशयेन शङ्कते—नन्विति । भूयोदर्शनाश्रयः = साध्यसाधनयोः सामानाधिकरण्यस्य भूयांसि यानि दर्शनानि तत्प्रयोज्यः, यथा वन्हि-धूमयोः । नन्वस्तु भूयोदर्शनाश्रयत्वञ्चिन्नश्छिन्नमत आह—ततश्चेति । तदङ्गीकारे चेत्यर्थः । प्रकृते 'गोषु दुह्यमानासु गतः' इत्यादौ इदं वाक्यङ्गृहीणम्प्रति आगन्तुकपुरुषकर्तृकगमनक्रियोत्पत्त्यधिकरणकालज्ञानेच्छया आगन्तुकः 'कदा गत इति यः प्रश्नस्तस्योत्तरभूतम्, एवञ्चात्र न निरुक्तभूयोदर्शनसम्भव इत्याह—कदाचिद्धीति । मूले—निर्ज्ञातकालेति बहुव्रीहिः, क्रिया अन्यपदार्थः । एवञ्च निर्ज्ञातकाला या दोहनक्रिया सा अनिर्ज्ञात-

कालपरिच्छेदकत्वाल्लक्षणम्, तदाश्रययोः कर्तृकर्मणोर्बोधकादियं सप्तमी। तत्र ब्राह्मणेष्वधीयानेषु गत इति कर्तर्युदाहरणम्। कर्मण्याह–*गोष्विति*। इह अधीयानानां ब्राह्मणानाम्, दुह्यमानानां गवां च प्रतीयमानलक्षकत्वं विशेषणीभूतयोरध्ययनगोदोहनक्रिययोर्वि-

लक्षणं तदुदाहरणं सति गुणे द्रव्यत्वमस्तीति। तदाश्रययोरिति। क्रियाश्रययोरित्यर्थः। विशेषणीभूतयोरिति। 'शिखी ध्वस्तः' इत्यादौ शिखायां ध्वंस-

काला या गमनक्रिया तस्या लक्षणम्भवति। मूलस्य न्यूनताम्परिहर्तुमाह–कालो देशस्येति। एवञ्च निर्ज्ञातदेशा क्रिया अनिर्ज्ञातदेशाया लक्षणमिति बोध्यम्। एवञ्च तत्तच्छब्दबोध्यत्वेन विवक्षितं यज्ज्ञापकत्वन्तदेतच्छास्त्रप्रवृत्तिप्रयोजकञ्च त्वत्र भूयोदर्शनापेक्षेति तात्पर्यम्। सति गुण इति। अत्र गुणसत्त्वक्रियाधिकरणदेशः पृथिव्यादिर्ज्ञात इति गुणसत्त्वक्रिया द्रव्यत्वसत्त्वक्रियाया लक्षणम्, यत्सम्बन्धिक्रियेत्यत्र यत्पदबोध्यः क्वचित्कर्म क्वचित्कर्ता।

अत एवोक्तम्मूले–तदाश्रययोः कर्तृकर्मणोरिति, कर्तुः कर्मणश्च यदुदाहरणं तत्र तयोः कृदन्तबोध्यत्वात्प्राधान्यं क्रियायास्तु विशेषणत्वमिति प्रधानयोरिव लक्षणत्वप्रतीतिरित्याशयेनोक्तम्–इहेति = कर्तृकर्मबोधकप्रत्ययान्तघटितोदाहरणद्वये प्रतीयमानमिति। उभयत्र सप्तम्यर्थौ ज्ञाप्यज्ञापकभावः, दोहनादिक्रियाधिकरणकालसम्बन्धश्च। तस्य प्रकारत्वमते गोष्वित्यादिवाक्याद्वर्तमानकालावच्छिन्नव्यापारजन्यदोहनाश्रयगोनिष्ठज्ञापकतानिरूपितज्ञाप्यताविशिष्टो दोहनाधिकरणकालसम्बन्धविशिष्टव्यापारजन्यगमनाश्रयश्चैत्र इत्यादिक्रमेण बोध्यः। सप्तम्यर्थस्य संसर्गत्वमेतच्चोक्तोभयसम्बन्धेन तादृशगवीविशिष्टगमनकर्त्रभिन्नश्चैत्र इत्यादिक्रमेण बोध्यः। न द्रव्ययोरेव ज्ञाप्यज्ञापकभावः, किन्तु क्रियाविशिष्टयोरेव। अन्यथा 'गोषु चैत्र' इति शब्दादपि गोज्ञाप्यश्चैत्र इति बोधः स्यात्। एवञ्च यद्धर्मविशिष्टयोस्तथात्वसम्भवस्तद्धर्मयोरेव ज्ञाप्यज्ञापकभावो मानसज्ञानविषयः। व्यञ्जनाया अपि वृत्तित्वमते शाब्दबोधविषयो वेत्याशयेनोक्तम्–विशेषणीभूतयोरित्यादि। अत एवोक्तं सूत्रकृता—"यस्य च भावेन" इति। तद्विवरणे–निर्ज्ञातकालेति। स कालो यदि प्रातःसमयरूपस्तदा तस्यैव पक्षत्वम्। कालिकसम्बन्धेन गमनक्रियाविशिष्टस्य साध्यता। कालिकसम्बन्धेनैव दोहनकर्माभिन्नगवीनां हेतुता बोध्या। विशेषणांशे पर्यवसानविषये दृष्टान्तमाह–शिखी ध्वस्त इत्यादाविति। इदम्पर्यवसानं यदा शिखाविशिष्टस्य पुरुषस्य जीवननिश्चयस्तस्मिन्समये भवति।

ननु क्रियाया एव लक्षकत्वं सूत्रकृतोक्तमिति तत्र पर्यवसानोक्तिरयुक्तेत्यत आह–

प्रतियोगित्वविश्रान्तिमद्विशिष्टवेषेणैवं तस्य लक्षकत्वात् ।

विशिष्टवेषेणेति । अभेदसम्बन्धेन गमनादिक्रियाविशिष्टगवादिनिष्ठतादृशगोत्वादिनेत्यर्थः । धातूपस्थाप्यक्रियायाः साक्षादेव ज्ञापकत्वं वक्तुमशक्यम् , असत्त्वभूतत्वात्, किन्त्वाश्रयद्वारैवात एव 'तदाश्रयद्वारेण' इति मूलेऽभिहितम् । एतेन क्रिययोः साक्षात्तदाश्रययोस्तद्द्वारेति कस्यचिदुक्तिर्निरस्ता । इदञ्च सूत्रं यत्र मानान्तरसिद्धस्यार्थस्य कालदेशान्यतरघटितसम्बन्धेन फलविशेषणसम्बन्धस्य प्रतिपादनाय प्रयोगस्तत्रैव प्रवर्तते।

अत्रेदञ्चोध्यम् :- काचित् क्रिया स्वाधारकालावच्छिन्नामन्यां क्रियां लक्षयति, यथा—'गोषु दुह्यमानासु गतः' इत्यादौ । काचित्स्वाधारकालाव्यवहितपूर्वकालावच्छिन्नामन्यां लक्षयति, यथा :- गोषु धोक्ष्यमाणास्वागतश्चैत्र इत्यादौ । काचित्तु स्वाधारकालानन्तरकालावच्छिन्नामन्यां क्रियां लक्षयति, यथा—'गोषु दुग्धासु गतः' इत्यादौ । लक्षकक्रियाश्रयवाचकत्वद्वयोरपि गोशब्ददुह्यमानशब्दयोरित्युभाभ्यां सप्तमी । ननु यत्र क्रियावाचकपदञ्च प्रयुज्यते—विवाहे नान्दीमुखञ् कुर्यादित्यादौ, तत्र कथं सप्तमीति, चेदित्थम् :- अत्र विवाहपदस्य विवाहप्राक्काले लाक्षणिकत्वात् ''सप्तम्यधिकरणे च'' इति सप्तमी । ''राहूपरागे स्नायात्'' इत्यादौ राहूपरागपदस्य राहूपरागकाले लक्षणा । तस्य सप्तम्यर्थाधारतायामन्वयस्तस्यास्तु स्वनिरूपिताधेयतासम्बन्धेन स्नाधात्वर्थेऽन्वये सिद्धसाध्यसमभिव्याहारन्यायेन राहूपरागस्नानयोर्निमित्तनिमित्तिभावे पर्यवसानम् ।

अङ्गवङ्गकलिङ्गेषु सौराष्ट्रमगधेषु च ।
तीर्थयात्रां विना गत्वा पुनः संस्कारमर्हति ॥

अत्राङ्गादिपदमङ्गादिदेशपरम् , अधिकरण एव सप्तमी, तस्य गमनेऽन्वयः । तस्य स्वसमानकर्तृकत्व-स्वोत्तरकालिकत्वोभयसम्बन्धेन पुनः संस्कारयोग्यतायामन्वयोऽवच्छेदकावच्छेदेनेति तत्तद्देशगमनस्य पुनः संस्कारनिमित्तत्वम्फलति ।

'भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः ।
क्षीयन्ते चास्य कर्माणि तस्मिन्दृष्टे परावरे' ॥

परं=हिरण्यगर्भादि अवरं यस्मात्तस्मिन् ब्रह्मणि दृष्टे तद्विषयकदर्शने अहम्ब्रह्मास्मीत्याकारकापरोक्षज्ञाने ईदृशज्ञानोत्तरकालेऽस्य द्रष्टुः पुरुषस्य हृदयग्रन्थिर्मिथ्याज्ञानजन्यसंस्कारो भिद्यते, सर्वसंशयास्तादृशसंस्कारप्रभवसंशयाश्छिद्यन्ते, जाता नश्यन्ति पुनरुत्पत्तिस्तु तेषाञ्च भवति सामग्र्यभावात् । अत एव सर्वपदम् अस्य कर्माणि

१ अध्ययनक्रियाशून्यकालिकब्राह्मणानां लक्षकत्वाभावेनाध्ययनक्रियायां लक्षणत्वं विश्राम्यति । तदाह—विशिष्टवेषेणेति :- अध्ययनक्रियाविशिष्टरूपेणेत्यर्थः । धातूपस्थाप्यक्रियाया असत्त्वभूततया साक्षाल्लक्षणत्वासम्भवः । सिद्धक्रियास्थले तु अधिकरणे सप्तमी बोध्या ।

श्राम्यति । *भेद एवेति* । न तु शब्दान्तरोपात्तसामान्यरूपाक्रान्ततेति भावः । *माथुरा इति* । न ह्यत्र गवां कृष्णेत्यादाविव सामान्यविशेषभावः, किन्तु शब्दोपात्तयोर्धर्मयोर्विरोध एव । *निपुणो राज्ञ इति* ।

न त्विति । गवां कृष्णेत्यादौ गोत्वाद्याक्रान्तता यथेति भावः । तदाह—न ह्यत्रेति ।

सञ्चितान्यदृष्टानि क्षीयन्ते = नश्यन्ति । प्रारब्धानान्तु भोगान्निवृत्तिर्भवतीत्यर्थः । दृष्टपदन्तादृशदर्शनोत्तरकाललाक्षणिकमौपश्लेषिकाधारे एव सप्तमी । मासिकादौ यथा, तथैव बोध्या । एवं हृदयग्रन्थिशब्देन सकुभयद्वेषमोहशोकादि यद्यत् तत्सर्वं ग्राह्यम्, अविद्याया नाशे तत्कार्याणान्नाशात् । भिद्यत इत्यत्र कर्मकर्तरि लट् ।

मूले—वृक्षे न कपिसंयोग इत्यत्र मूलपदात्सप्तम्यप्यौपश्लेषिकाधारे, अवच्छेदकतासम्बन्धस्याप्याधारतानियामकत्वात् । अत एव 'शिरसि वेदना' 'पादे मे सुखम्' इति व्यवहारे यथायथमवधातव्यम् ।

अत्रेदम्बोध्यम् :- उक्तत्रिविधाधिकरणेषु मुख्यमधिकरणमभिव्यापकं सर्वावयवावच्छेदेन यत्राधेयस्य सम्बन्धस्तदेव, अत एव "स्वरितेनाधिकारः" इति सूत्रभाष्ये आचार्यः किमधिकरणं न्याय्यम्मन्यते यत्र कृत्स्न आधारात्मा व्याप्त इत्युक्तम् । अस्य न्याय्यत्वन्तु प्रकृत्यर्थतावच्छेदकविशिष्टे तद्भानाद्भवति अन्यदधिकरणङ्गौणम् । सप्तमी तु सर्वस्मिन्नप्यधिकरणे सप्तम्यधिकरणे चेत्यत्राधिकरणपदे स्वरितत्वप्रतिज्ञानाद्भवति । अत एव गङ्गायाङ्गावः कूपे गर्गकुलमित्यत्र गौणाधारे सप्तम्युदाहृता भाष्ये । पञ्चमी विभक्ते यतश्च निर्द्धारणमित्यनुवर्तते, अत्र विभक्तशब्दार्थो भेदः, एवञ्च यतो निर्धारणम्भेदश्च ततः पञ्चमीत्यर्थः । यत्र निर्धारणं तत्र भेदस्य सर्वत्र सत्त्वात् । विभक्तग्रहणसामर्थ्याद् भेद एवेति नियमलाभः । भेद एवेत्यस्य भिन्नधर्मप्रकारकप्रतीतिविशेष्यत्वमेव एवकारेणाभेदस्य व्यवच्छेदः । स च निर्द्धार्यमाणस्य क्वापि नास्तीति नियमप्रदर्शनवैयर्थ्यम्प्राप्नोतीत्याकाङ्क्षायामाह—मूले न तु शब्दान्तरेति । तदुदाहरणं स्पष्टप्रतिपत्तये आह—गवामिति । उक्तस्य विभक्तपदार्थस्य सत्त्वमुदाहरणे प्रदर्शितम्मूले—न ह्यत्रेत्यादिना । यत्र सामान्यविशेषभावस्तत्र विशेषस्य सामान्यधर्मावच्छिन्नत्वमस्त्येव, प्रकृते तु निर्द्धार्यमाणेषु पाटलिपुत्रकत्वान्नास्तीति भेदस्यैव सत्त्वमावश्यकमिति भावः । अत्र पञ्चम्यर्थो निर्द्धारणविषयत्वम्, पाटलिपुत्रकावधिकनिर्द्धारणविषया माथुरा आढ्यतरा इति बोधः । साधुनिपुणाभ्यामितिसूत्रस्थस्यार्चाया-

१ यतो निर्धार्यते, यश्च निर्धार्यते, येन रूपेण निर्धार्यते एतत्त्रितयवाचकशब्दसमभिव्याहारे एव पञ्चम्यादिविधानम् । एवञ्चावधि ( भेदप्रतियोगि ) वाचकपदोपात्तधर्मानाक्रान्तत्वं यत्र निर्धार्यमाणस्य तत्रैव पञ्चमी, न तु तादृशधर्माक्रान्तत्वे तदाह–शब्दान्तरेति । प्रकृतभेदप्रतियोगिवाचकशब्दोपात्तेत्यर्थः ।

साधुशब्दप्रयोगे त्वर्चां विनाऽपि सप्तमी भवत्येव, "साध्वसाधुप्रयोगे च" इति वार्त्तिकात् । *प्रसित इति ।* तत्परे प्रसितासक्ताविस्यमरः । *मूलेनेति ।* नक्षत्रेण युक्तः काल इत्यणो 'लुबविशेषे' इति

---

वार्तिकादिति । साधुर्भृत्यो राज्ञ इति तु राज्ञो भृत्येनान्वये साधु । प्रत्यासत्त्या च राजविषयमेव साधुत्वं गम्यते न तु शब्देन तत् स्पृश्यते । अर्चायां प्रतियोगिनिषेधार्थं त्वत्र साधुग्रहणमिति तत्त्वम् । तत्परे इति । रूढत्वा-

---

मित्यस्य व्याचर्यप्रदर्शनसमये साधुशब्दम्परित्यज्य निपुणशब्द एवोक्तस्तद्बीजमाह—वार्तिकादितीति । नन्वेवं साधुर्भृत्यो राज्ञ इत्यस्य वृत्तिप्रदर्शितप्रयोगस्य कथमुपपत्तिरत आह—साधुर्भृत्य इति । नन्वेवमन्यविषयकमपि साधुत्वङ्गम्येतेत्यत आह—प्रत्यासत्त्येति । एवञ्च यद्विषयकसाधुत्वं शब्दतो बुध्यते तद्वाचकादेव वार्तिकेन सप्तमीति भावः । अत एव तत्र वार्तिके प्रकृष्टयोगात्मकप्रयोगग्रहणम् । ननु यदि साधुशब्दार्थस्यार्थिको योगो राजनि गम्यत इति भवत्सम्मतन्तदा वृत्तिप्रदर्शितस्प्रथमोपस्थितं साधुर्भृत्यो राज्ञ इति प्रत्युदाहरणमपि सम्यगेव । प्रकृतसूत्रेऽर्चायामित्यस्याभावे "साधुनिपुणाभ्याम्" इति तृतीयया योगमात्राक्षेपादिति तत्त्यागानौचित्यमेवेत्यत आह–अर्चायाम्प्रतियोग इति । 'साधुर्मातरम्प्रतिपर्यन्तु' इत्यत्र यदाऽर्चा विवक्षिता तदा मातृशब्दात्सप्तमी प्राप्ता परन्तु प्रतियोगसत्त्वान्न भवति । एतेन प्रकृतसूत्रे साधुग्रहणमनर्थकम् । साधुशब्दप्रयोगे "साध्वसाधुप्रयोगे च" इति वार्तिकेन सप्तम्या दुर्वारत्वादिति कस्यचिदुक्तिः प्रत्युक्ता, प्रकृतसूत्रे पुनः साधुशब्दोपादानसामर्थ्यात्प्रत्यादिभिर्योगे साधुशब्दे प्रकृतसूत्रेण वार्तिकेन वा प्राप्ता सप्तमी न भवतीति भावः । अप्रतेरिति शब्दे समस्तः प्रतिशब्दो "लक्षणेत्थम्भूत" इति कर्मप्रवचनीयसंज्ञाघटकप्रत्यादिलाक्षणिक इत्याशयेन वार्तिककृतोक्तमप्रत्यादिभिरिति । नन्वेवं सति प्रकृतसूत्रे एव साधुशब्दोपादानमस्तु प्रत्यादियोगाभावे प्रकृतसूत्रेणैव साधुशब्दप्रयोगे सप्तम्याः सिद्धौ वार्तिके साधुग्रहणमनर्थकमिति चेन्न, साधुः कृष्णो मातरीत्यत्र तत्त्वकथनेऽर्चाया अभावेऽपि सप्तमीसिद्ध्यर्थन्तस्य सत्त्वात् । एवञ्च प्रकृतसूत्रेऽर्चाग्रहणन्निपुणार्थमेवेति ध्वनयन्नाह–तत्त्वमिति । अत एव सप्तम्यधिकरणे चेति सूत्रस्थसाध्वसाधुप्रयोग इति वार्तिकव्याख्यानावसरे साधुनिपुणाभ्यां सप्तम्यां सिद्धायामनर्चार्थमत्र साधुग्रहणन्तेन तत्त्वकथने 'साधुशब्दयोगे सप्तमी भवति, अर्चाग्रहणन्तु तत्र निपुणविशेषणार्थमेव' इति कैयटः सङ्गच्छते । मूले "प्रसितोत्सुकाभ्याम्" एतद्व्याख्यानावसरे तत्परे प्रसितासक्ताविस्यमरप्रदर्शनं रूढस्यैव प्रसितशब्दस्य ग्रहणन्न तु यौगिकस्येति प्रदर्शनायेत्याशयेनाह–रूढत्वादिति । प्रसिद्धत्वादित्यर्थः । रूढिर्योगमपहरतीति

लुप्। *पर्यायेणेति* । ईश्वरशब्दो भावसाधनः यस्य स्वामिन ईश्वरत्व-मुच्यते इत्येकं व्याख्यानम्। यस्येति स्वं निर्दिश्यते। यस्य स्वस्य ईश्वर उच्यते इत्यपरम्। एवं च व्याख्याभेदात्पर्यायेण विभक्तिः। सा च विशेषणात् षष्ठीवदिति भावः॥

इति श्रीमद्भट्टोजिदीक्षितविरचितायां प्रौढमनोरमायां
सप्तमी कारकप्रकरणम्॥

---

देतदर्थस्यैव ग्रहणम्। तेन प्रकर्षेण सित इत्यर्थे न॥

इति श्रीमद्भट्टोजिदीक्षितपौत्रहरिदीक्षितविरचिते प्रौढमनोरमा-
व्याख्याने लघुशब्दरत्ने कारकप्रकरणम्॥

---

न्यायस्यापि प्रसिद्धत्व एव तात्पर्यम्। एतदर्थस्य = एतदर्थकस्य। सितशब्दो गौर-वाची। इत्यर्थे इति। सतीति शेषः। परममूले "यस्मादधिकं यस्य चेश्वरवचनम्" इति सूत्रस्य व्याख्यानम्मङ्गलाय "मङ्गलादीनि मङ्गलमध्यानि मङ्गलान्तानि शास्त्राणि प्रथन्ते" इति भाष्यात्। तत्र यस्य चेश्वरवचनमितिशब्दस्य यस्य स्वस्य ईश्वरः कथ्यते तद्वाचकादित्यर्थे स्ववाचकात्सप्तमी यदा त्वीश्वरशब्दो भावप्रधाननिर्देशेनेश्वरत्ववचन-स्तदा स्वामिवाचकात्सा भवति। अधिभुवि रामः, अधिरामे भूरित्यत्र यथा।

इति श्रीमहामहोपाध्यायभैरवमिश्रविरचितायां शब्दरत्नव्याख्यायां कारकान्तं
प्रकरणं सप्तमीविवरणम् सम्पूर्णम्।

---

इति शम्।

---

# अथाव्ययीभावः ।

समर्थाश्रित इति । सूत्रे समर्थशब्दो लाक्षणिक इति भावः ।

---

१ स्वौजसमौडित्यादिविहितस्वादीनामर्थविशेषान् कारकान्तेन निरूप्य प्रसङ्गसङ्गत्या समाससंज्ञां निरूपयितुं तदुपयोगिपरिभाषासूत्रं व्याचष्टे समर्थाश्रित इति । यद्यपि सूत्रे समर्थं इत्येव श्रूयते तथापि अत्र समर्थं इत्यस्य समाससंज्ञारूपपदविधेः साक्षाद्विशेषणत्वासम्भवात्सामर्थ्याश्रिते लक्षणया सिद्धार्थमाह—समर्थाश्रित इति । अत्रापि समर्थपदं सामर्थ्यें लाक्षणिकमिति भावः । सामर्थ्यं द्विविधम्—व्यपेक्षारूपमेकार्थीभावरूपञ्च । तत्र स्वार्थपर्य्यवसायिनां शब्दानामाकाङ्क्षावशाद्यः परस्परं सम्बन्धः सा व्यपेक्षा। सा च वाक्ये एव । समासादिवृत्तौ च एकार्थीभावरूपसामर्थ्यमेव गृह्यते, 'पृथगर्थानामेकार्थीभावः समर्थवचनम्' । पृथगर्थानां पदानामेकार्थीभावः समर्थमित्युच्यते । क पृथगर्थानि केकार्थानि ? वाक्ये पृथगर्थानि 'राज्ञः पुरुषः' इति । समासे पुनरेकार्थानि 'राजपुरुषः' इति, 'संसृष्टार्थं समर्थम्' इति च प्रकृतसूत्रस्य भाष्यात् । एवञ्च 'यत्किञ्चित्पदजन्यपृथगुपस्थितिविषयार्थकत्वेन लोके दृष्टानां शब्दानां विशिष्टविषयैकशक्त्यैवोपस्थितिजनकत्वमेकार्थीभाव इति फलितम् । घट इत्यादौ वारणाय दृष्टानामित्यन्तम् । औपगवादौ प्रत्ययानां तथा दृष्टत्वाभावेनोपस्थितौ यत्किञ्चित्पदजन्येति विशेषणम् । अपत्यरूपार्थस्य उपगोरपत्यमस्तीत्यादौ तथादर्शनसत्त्वात् तत्त्वम् । विभक्त्यर्थस्य तु न तथात्वम्, तद्वाच्यार्थवाचकस्य शब्दान्तरस्याभावादिति मञ्जूषाकाराः । नन्वेवमपि पशुशब्दस्य लोमवल्लाङ्गूलावच्छिन्ने शक्तत्वेनातिव्याप्तिरिति चेन्न, शक्तिविशिष्टत्वम् एकार्थीभाव इति स्वीकारात् । वै० स्वपर्य्याप्त्यधिकरणघटितत्वम्, स्वनिरूपकेतरनिरूपितशक्तिपर्य्याप्त्यधिकरणघटितत्वम्, स्वज्ञानप्रयोज्यज्ञानविषयीभूतशक्तिपर्य्याप्त्यधिकरणत्वम् एतत्त्रितयसम्बन्धेन । अन्त्यसम्बन्धाभावेन रथन्तरमण्डूकसरसादिसंज्ञाशब्देषु तु न दोषः, तादृशार्थे तेषां रूढत्वस्वीकारात् ।

एवञ्च विशिष्टार्थघटकनिरूपितां शक्तिमादाय लक्षणसमन्वयो विधेयः । तथाहि—'राजपुरुषः' इत्यत्र स्वं राजत्वावच्छिन्ननिरूपिता शक्तिः, तत्पर्य्याप्त्यधिकरणं राजपदं तद्घटितत्वस्य, स्वनिरूपको राजरूपोऽर्थस्तदितरः पुरुषरूपार्थः तन्निरूपितशक्तिपर्य्याप्त्यधिकरणं पुरुष इति पदं तद्घटितत्वस्य, राजत्वावच्छिन्ननिरूपितशक्तिज्ञानप्रयोज्यं राजसम्बन्ध्यभिन्नपुरुषत्वावच्छिन्ननिरूपितशक्तिज्ञानं तज्ज्ञानविषयीभूतशक्तिपर्य्याप्त्यधिकरणत्वस्य 'राजपुरुषः' इति समुदाये सत्त्वाल्लक्षणसमन्वयः । अत्रान्त्यसम्बन्धदानाद् घटादिपदे वाक्ये च नातिव्याप्तिः । आद्यं सम्बन्धद्वयन्तु स्वरूपकीर्तनमात्रपरम् । 'लिट्' इत्यादावपि आस्वादनत्वावच्छिन्ननिरूपितां शक्तिमादाय लक्षणसमन्वयः । तथा हि—स्वं लेहनत्वावच्छिन्ननिरूपिताशक्तिस्तत्पर्य्याप्त्यधिकरणलिड्घटितत्वस्य, स्वनिरूपकेतरकर्तृरूपार्थनिरूपितशक्तिपर्य्याप्त्यधिकरणलिड्घटितत्वस्य च व्यपदेशिवद्भावेन, यः शिष्यते स लुप्यमानेति न्यायेन च, अन्त्यसम्बन्धस्य च स्वत एव सत्त्वादेकार्थीभाववत्त्वं स्वत एवोपपन्नमिति आरोपस्य नोपयोगः ।

नन्वेवमपि वाक्यशक्तिनये वाक्ये, वाक्यैकदेशस्य वाक्यार्थे शक्तिरिति मते 'दधि भुङ्क्ष्व' इत्यर्थके 'दधि' इत्यत्र चातिव्याप्तिरिति चेन्न, अन्त्यसम्बन्धघटकस्वज्ञानप्रयोज्यज्ञानविषयीभूतायाः शक्तेरारोपितायाः एव ग्रहणेनादोषात् । एकार्थीभाव इत्यत्र च्विनिर्देशेनारोपितस्यैवैकार्थत्वस्य वृत्तौ 'वृत्तिप्रयोजकत्वतत्सूत्रारम्भसामर्थ्येन' स्वीकारात् । वाक्ये, वाक्यैकदेशे च वास्तविकशक्तेः सत्त्वादित्यलं पल्लवितेन

कातिपयेति । यद्यपि उदात्तवता गतिमता च तिङा गतेः समासो नित्या-

१ कुगतिप्रादय इति सूत्रभाष्ये गतेस्तिङन्तेन सह समासविधानायेदं वार्तिकम्। उदात्तवता गतिमता च तिङा गतिः समस्यते इत्यर्थः। तत्रोदात्तवतेत्यस्योदाहरणम् 'यत्परियन्ति' इति। अत्र 'निपातैर्यद्यदि' इति निघातप्रतिषेधेनान्तीत्यस्य प्रत्ययस्वरेणाद्युदात्ततया परिरूपगतेरुदात्तवता 'यन्ति' इत्यनेन समासः।

'अनुव्यचलत्' इत्यादौ 'वि' इत्यस्य 'अचलत्' इत्यनेन 'अनु' इत्यस्य 'व्यचलत्' इत्यनेन समासः। अत्र परत्वात् 'तिङ्ङतिङः' इत्यनेन निघाते 'उदात्तवता' इत्यस्याप्राप्त्या गतिमता चेत्युक्तम्। अत्र गतिविशिष्टतिङन्तेन समासविधानाज्ज्ञापकाद् 'व्यचलत्' इत्यत्र तिङन्तत्वारोपेणानु इत्यस्य समासो बोध्यः। वार्तिकारम्भे 'वि' इत्यस्य 'अचलत्' इत्यनेन तु न समासः,'उदात्तवत्त्व गतिमत्त्वयोरभावात्। 'अनुव्यचलत्' इत्यत्र पूर्वपदप्रकृतिस्वरस्तु न 'गतिर्गतौ' इत्यनेनानु इत्यस्यानुदात्तत्वेन 'तत्पुरुषे तुल्यार्थ' इत्यत्रोदात्तस्वरितेत्यस्य सम्बन्धेन उदात्तस्वरितयोगिपूर्वपदके एव तत्प्रवृत्तेः किन्तु समासान्तोदात्तत्वमेव।

ननु पदसम्बन्धिविधेरेवैकार्थीभावरूपसामर्थ्याश्रितत्वं लभ्यत इतीच्छार्थकसन्विधायकस्य पदविधित्वाभावेन सामर्थ्याश्रितत्वं न स्यात्। तथा च 'इह द्वौ पक्षौ-वृत्तिपक्षश्चावृत्तिपक्षश्च। तत्र 'वावचनानर्थक्यं नित्यत्वात्सनः' इति भाष्यं विरुध्येतेति चेन्न, पदविधिशब्देन पदविधिसहचरितस्यापि ग्रहणात्। सहचरितत्वञ्च स्वघटितपदघटकशास्त्रविधेयत्वरूपम्, पदोद्देश्यकविधिविधायकशास्त्रसम्पाद्यशाब्दबोधप्रयोजकपदानुपूर्वीकपदघटितशास्त्रविधेयत्वरूपं वा बोध्यम्।

यद्वा पदत्वप्रयोजकप्रत्ययनिष्ठविधेयतानिरूपितोद्देश्यतावच्छेदकसंज्ञीयोद्देश्यतावच्छेदकसम्पादकशास्त्रविधेयत्वरूपं पदविधित्वम्। एवञ्च पदत्वप्रयोजकप्रत्ययः सुप्तिङ्रूपः, तन्निष्ठविधेयतानिरूपितोद्देश्यतावच्छेदकीभूतसंज्ञा प्रातिपदिकसंज्ञा धातुसंज्ञा च, तादृशसंज्ञानिष्ठविधेयतानिरूपितोद्देश्यताऽवच्छेदकं कृदन्तत्वम्, तद्धितान्तत्वम्, समासत्वम्, सनाद्यन्तत्वञ्च, तत्सम्पादकशास्त्रं कृद्विधायकम्, तद्धितविधायकम्, समासविधायकम्, सनादिविधायकञ्च, तद्विधेयत्वं कृत्तद्धितसमाससनादीनामिति पदविधित्वेन सामर्थ्याश्रितत्वं तेषाम्। एकशेषस्योक्तपदविधित्वाभावेऽपि 'अपवाद एकशेषो द्वन्द्वं बाधिष्यते' इति भाष्येण द्वन्द्वविषयकतया सामर्थ्याश्रितत्वलाभेन वृत्तित्वव्यवहारः।

अत एव 'समासेऽङ्गुलेः सङ्गः' इत्यत्र समासग्रहणस्य, 'पदान्ताद्वा' इत्यत्रान्तग्रहणस्य च न वैयर्थ्यम्। एवञ्च 'न पदान्ताट्टोरनाम्' इत्यादीनामसामर्थ्येऽपि प्रवृत्तिः सिध्यति। इति दिक्। वृत्तावेकार्थीभावरूपसामर्थ्यस्वीकारादेव राजपुरुषादिवृत्तिघटकराजादिपदार्थादौ न ऋद्धस्येत्यादिविशेषणान्वयः, 'पदार्थः पदार्थेनान्वेति न तु पदार्थैकदेशेन' इत्यनुभवसिद्धसिद्धान्तात्। पदार्थश्च स्वीयवृत्तिग्रहविशेष्य एव। एवञ्च 'सविशेषणानां वृत्तिर्न वृत्तस्य विशेषणयोगो न, इत्यादिसमासादिवृत्तौ विशिष्टशक्तिस्वीकर्तृवैयाकरणनये न्यायसिद्धमेव। अत एव 'अथैतस्मिन् व्यपेक्षायां सामर्थ्ये योऽसावेकार्थीभावकृतो विशेषः स वक्तव्यः' इति भाष्यकारोक्तिः सङ्गच्छते, एकार्थीभावरूपसामर्थ्यपक्षे तादृशविशेषस्यावक्तव्यत्वसूचनात्। नचैवं 'देवदत्तस्य गुरुकुलम्' 'चैत्रस्य दासभार्या' इत्यादौ देवदत्तस्य गुरुत्वे, चैत्रस्य दासत्वे चान्वयेनोक्तन्यायविरोधात् तादृशवाक्यानामप्रामाण्यापत्तिः, स्वनिरूपकाकाङ्क्षाव्याप्यज्ञानविषयत्वरूपनित्यसाकाङ्क्षत्वानाक्रान्तपदार्थैकदेशान्वयस्थलेऽनित्यत्वेन तन्न्यायाप्रवृत्तेः। नच समासस्य समुदायशक्त्या बोधकत्वेऽवयवस्यानर्थकतयाऽर्थवन्महदादीनामात्वादिविधायकशास्त्राप्रवृत्त्या 'महादेवः'

धिकारे वार्तिककृतोक्तः, तथाऽपि नासौ नियतः, य आनयत्, अभिप्रभरद्वषतेत्यादौ समासादर्शनात् । अत एव भाष्यकृता 'सह' इति योगविभागेनायं साधितः, यथोत्तरं मुनीनां प्रामाण्यमिति भावः । *स चेति* । एतदपि योगविभागस्येष्टसिद्ध्यर्थत्वादेव लभ्यते । एतच्च सम्प्रदानसञ्ज्ञासूत्रे पदमञ्जर्यां स्पष्टम् । यदि हि लोकेऽपि स्यात् तर्हि अभिप्रैति इत्यादौ समासात्स्वादयः स्युः, पचतिकल्पमित्यादौ तद्धितान्ताद्यथा । न च लिङ्गसर्वनामनपुंसकताभ्युपगमेन निर्वाहः, 'प्रकुरुते' इत्यादौ ह्रस्वापत्तेः । प्रकुर्वीरन्नित्यत्र नलोपापत्तेश्च । *निर्देशादिति* । अन्यथा हि प्रथमानिर्दिष्टत्वाविशेषेऽपि उपसर्जनसञ्ज्ञाया अन्वर्थत्वेन पूर्वशब्दस्यैव पूर्वनिपातः स्यादिति भावः ।

---

नित्याधिकारे इति । उपपदमतिङित्यत्रेत्यर्थः । नियत इति । अप्रतिबद्धप्रसरो नित्य इत्यर्थः । एवं चाधिकारप्राप्तमपि नित्यपदं तदंशे न संबध्यत इति भावः । योगविभागेनेति । तस्य च वैकल्पिकत्वं वक्ष्यति । एतदपीति । छन्दस्येवेत्येतदित्यर्थः । एतदुत्तरं छन्दस्येवेति प्रतीकपाठो लेखकप्रमादात् । एतच्चेति । उक्तच्छान्दसत्वमित्यर्थः । निर्वाह इति । शयितव्यमित्यादेः क्रियावाचकस्यापि नपुंसकत्ववदस्यापि प्रातिपदिकत्वे तत्त्वेन लुका तदश्रवणादित्यर्थः । अन्यथेति । सुबन्तमित्यनेनान्यतरस्यैव ग्रहणे विनिगमकाभावादिति भावः । पूर्वशब्दस्यैवेति । तस्य कालवाचकत्वेन क्रियायां

---

'अष्टाकपालः' इत्यादावात्त्वानुपपत्तिरिति वाच्यम्, सूत्रारम्भसामर्थ्येन भूतपूर्वगत्याश्रयणेनादोषात् । तथा च वृत्तौ सत्यापृथगुपस्थित्यजनकत्वेऽपि व्यपेक्षाकालिकार्थवत्त्वमादायात्त्वादिकार्ये क्षत्यभाव इति भावः ।

१ योगविभागेनेष्टसिद्धिरेव, न त्वनिष्टापादनम् । तत्समानविधेयताकद्वितीययोगेन विभक्तयोगस्यानित्यतया 'योगविभागादिष्टसिद्धिः' इत्यस्य फलितत्वात् । अत एव 'आतः' इति योगविभागेन 'क्त्वः' इत्यादावेव लोपो न तु साशब्दादाविति भावः ।

२ 'अप्रधानमुपसर्जनम्' इति पूर्वाचार्यवचनेन, 'कालोपसर्जने च तुल्यम्' इति पाणिनिवचनेन च उपसर्जनपदस्याप्रधानार्थकतयाऽप्रधानस्यैवोपसर्जनसंज्ञकत्वात् 'क्रियाभेदाय कालः स्यात्' इति व्युत्पत्त्या कालस्य क्रियाविशेषणतया 'पूर्वं भूतः' इत्यत्र पूर्वशब्दस्यैव कालवाचकत्वेनाप्रधानार्थकतयोपसर्जनत्वमिति भावः ।

ननु विशेषणवाचकस्यैव प्रथमानिर्दिष्टस्योपसर्जनस्वीकारे पूर्वकायाद्यसिद्धिः पूर्वपदस्य विशेष्यवाचकत्वादिति चेन्न, समासशास्त्रे यं शब्दं प्रति यदप्रधानं तं प्रति तदुपसर्जनमित्यर्थेन 'अनेन साकं भवानपि मदुत्सवे आगच्छतु' इत्युक्ते प्रथमान्तार्थस्य दुःखदर्शनेन प्रथमान्तार्थे तृतीयान्तार्थाधीनत्वरूपाप्रा-

इवेनेति । अयमपि समासः पूर्ववत्क्वाचित्क एव । तेन जीमूतस्येवेत्यादौ तैत्तिरीयाणां पृथक्पदत्वेन पाठः । 'उद्बाहुरिव वामनः' इत्यादौ व्यस्तप्रयोगोऽपि सङ्गच्छते ।

'गोस्त्रियोः' । उपसर्जनं च इति । यत्तु प्राचा गोऽन्त–स्त्रीप्रत्ययान्तयोरुपसर्जनयोरित्युक्तम्, तन्न, चित्रगुरित्यादौ गोशब्दस्योपसर्जनत्वेऽपि तदन्तस्यातथात्वात्, गौरीपतिरित्यादौ अतिप्रसङ्गाच्च ।

---

विशेषणत्वादिति भावः । क्वाचित्क इति । कादाचित्क इत्यपि बोध्यम् । योगविभागसिद्धत्वात् तदनुवादेन विभक्त्यलोपस्यैवानेन विधानमिति भावः । व्यस्तप्रयोग इति । समासे ह्यवस्य परनिपातः स्यादिति भावः । अलोपश्च प्रत्यासत्त्या समासावयवविभक्तेरेव । तेन समासादुत्पन्नस्य 'अव्ययात्' इति लुग्भवत्येव ।

ननु गोपदार्थस्यैव चित्रगो इति समुदायार्थस्य चित्राभिन्नगोरूपस्यान्यपदार्थोपसर्जनत्वमेवेत्यरुचेराह—गौरीपतिरिति । राजकुमारीपुत्रे स्त्रीप्र-

---

धान्यस्य दर्शनात् तादृशाप्राधान्यस्य पूर्वपदार्थे एव सत्त्वेन पूर्वकायादिसिद्धेः । नचैवं सति पूर्वं भूत इति विग्रहे उभयोरपि तादृशाप्राधान्यस्य सम्भवादुभयोरपि पूर्वनिपातप्राप्त्या 'भूतपूर्वे चरट्' इति निर्देशाद् भूतशब्दस्य पूर्वनिपात इति ग्रन्थासङ्गतिः, प्रथमान्तार्थानधीनत्वरूपप्राधान्यासमानाधिकरणस्यैव तृतीयान्तार्थाधीनत्वरूपाप्राधान्यस्य ग्रहणात्, 'भूतपूर्वे चरट्' 'गोष्ठात् खञ् भूतपूर्वे' 'पूर्वे भूतपूर्वे' इत्यादौ सर्वत्र भूतशब्दस्यैव पूर्वनिपातदर्शनेन लक्ष्यानुरोधात्तत्र विशेषणत्वरूपलौकिकाप्राधान्यस्यैव ग्रहणात्, पदार्थैकदेशभवनक्रियायामेव पूर्वपदार्थस्यान्वयेन समासाप्राप्त्या 'भूतपूर्वे' इत्यादिनिर्देशज्ञापितसमासस्य भूतशब्दाद्यवयवकसमासे एव कल्पनेन पूर्वशब्दाद्यवयवकसमासाप्राप्तेश्चेत्यन्यत्र विस्तरः ।

३ अप्रतिबद्धप्रवृत्तिक इत्यर्थः । (पृ० न०. ७८३)

४ क्वचित्पुस्तके 'स चेति' इति प्रतीकोत्तरं छन्दस्येवेति प्रतीकं लभ्यते, तच्चासङ्गतम्, एतदपि स्यस्यैव तदर्थकत्वात् । (पृ० न० ७८३)

१ क्वाचित्केति । इदञ्च न समासविधायकं किन्तु सुपेति विभक्तयोगसिद्धसमासानुवादेन विभक्त्यलोपमात्रविधायकम्, सह सुपेतिसूत्रभाष्ये एवैतस्य पाठात्तदाह क्वाचित्क इति । अस्य क्वाचित्कत्वेऽपि 'हरीतकीं भुङ्क्ष्व राजन् मातेव हितकारिणीम्' इत्यत्र मातेवेत्यस्यासाधुत्वमेव, उपमानोपमेययोः समानविभक्तिकत्वनियमात्, 'तिङ्समानाधिकरणे प्रथमा' 'अभिहिते प्रथमा' इति वार्तिकात्, प्रथमायाः कारकविभक्तित्वपरकभाष्याच्च क्रियायोगे एव प्रथमायाः साधुत्वलाभात् । नचैवं 'चैत्र इव मैत्रो गच्छति' इत्यादौ चैत्रादेरिवार्थेऽन्वयात् क्रियायोगाभावेन प्रथमाया असिद्धिः, इवशब्दस्य तात्पर्यग्राहकतया चैत्रशब्दस्यैव चैत्रसदृशार्थकत्वेन मैत्रार्थेऽभेदान्वये क्रियायोगसत्त्वात् ।

एतेन 'मातेव' इत्यस्य इवेनेति समासे समस्तस्य हितकारिणीमित्यनेन विशेषणसमासे तत्साधुत्वमेवेति परास्तम् । मातेत्यस्य विभक्त्यन्तप्रतिरूपकाव्ययत्वं तु कथञ्चित्साधुत्वं वक्तुं शक्यमित्युपाध्यायाः ।

कथं सुगोकुलं राजकुमारीपुत्र इति चेत्, शृणु, उपसर्जनस्य सम्बन्धिकतया यस्य प्रातिपदिकस्य ह्रस्वो विधीयते तदर्थं प्रति उत्तरपदयोर्गोस्त्रियोर्गुणीभावस्तदैव ह्रस्वत्वम्। *दिशयोरिति*। दिशोरिति हलन्तेन विग्रहेऽप्येतदेव रूपम्। दिश्शब्दस्य शरदादित्वाट्टच्।

*वचनसामर्थ्यादिति*। विभक्तीत्यनेन हि येन सुबन्तेन सह समासस्तद्घटकीभूतैव विभक्तिर्गृह्यते, सन्निधानात्। तदर्थद्योतकश्चाधि-

त्यव्ययान्तस्य प्रातिपदिकत्वलाभाय समस्तस्य पूर्वपदत्वकरणम्। उत्तरपदभूतयोरिति स्वरूपकथनम्। उत्तरपदस्यैव तथात्वसंभवात्। टजिति। यतष्टच् अत एतदेव रूपमित्यन्वयः। सन्निधानादिति। उपस्थितत्वादित्यर्थः।

१ तदुक्तं भाष्ये 'अप्रधानम्' 'उपसर्जनम्' इति सम्बन्धिशब्दावेतौ, तत्र सम्बन्धादेतद्गन्तव्यं यं प्रति यदप्रधानं तस्य चेत् सोऽन्तो भवति' इति। यत्प्रथमया निर्दिष्टं तस्य=तद्घटितसमासस्य चेत्सः=अप्रधानशब्दोऽन्तो भवतीति भाष्यार्थः। उपसर्जनपदेनात्र शास्त्रीयस्यैव ग्रहणम्। अत एव 'गोण्याः' इति सूत्रभाष्ये 'गोण्या न' इत्येव वक्तव्यम्, किमर्थमित्वं विधीयते। 'पञ्चगोणिः' इत्यादौ 'लुक्तद्धितलुकि' इति लुकि प्रतिषिद्धे 'एकविभक्ति' इत्यनेनोपसर्जनत्वाद् गोणीशब्दस्य ह्रस्वत्वं सिध्यतीति किमर्थमित्वमित्याशङ्क्य 'गोणीमात्रमिदं गोणिः' इत्यत्र मात्रच्प्रत्ययस्य 'प्रमाणे लः' इति लुकि शास्त्रीयोपसर्जनत्वाभावाद् ह्रस्वो न स्यादित्यभिप्रायेण ह्रस्वविधानमित्युक्तम्। तस्मात् शास्त्रीयोपसर्जनस्यैवात्र ग्रहणमिति स्पष्टमेव लभ्यते।

अत एव कुमारीमिच्छन् ब्राह्मणः कुमारी, गोवष्कयणी, इत्यादौ लौकिकोपसर्जनत्वस्येतरविशेषणत्वरूपस्य कुमारीवष्कयणीशब्दयोः सत्त्वेऽपि ह्रस्वत्वाभावः। गोशब्दे शास्त्रीयोपसर्जनत्वसत्त्वेऽपि तदन्तसमासत्वाभावान्न दोषः।

२ यद्यपि नपुंसकह्रस्वत्वेनापीदं सिध्यति तथापि चित्रगुरित्याद्यर्थमावश्यकस्य गोस्त्रियोरित्यस्योद्देश्यताऽवच्छेदकाक्रान्ततया परत्वात्प्रवृत्तेरौचित्येन तदुपन्यासः।

शरदादिषु दिक्शब्दस्य पाठसत्त्वेऽपि दिशाशब्दस्य तत्राभावान्न टच्। न च लिङ्गविशिष्टपरिभाषया दिशाशब्देन समासेऽपि टज्दुर्वारः, समासान्तप्रकरणे लिङ्गविशिष्टपरिभाषाऽभावस्य ङ्याप्सूत्रे भाष्ये स्पष्टीकृतत्वात्।

एतेन टचि कृते 'यस्येति च' इति सूत्रेणाकारलोपे प्रकृते ह्रस्वस्य विषयाभावात् 'गोस्त्रियोः' इत्यस्योपन्यासोऽत्र न चिन्त्य इत्यपास्तम्। टावन्तदिशाशब्दस्य भाष्यसम्मतादन्तप्रकृतिकत्वे तु टचः प्राप्तिरेव न। इदं व्याख्यानम् 'दिशयोर्मध्ये' इति विग्रहाभिप्रायेण। 'क्लीबाव्ययन्त्वपदिशं दिशोर्मध्ये विदिक् स्त्रियाम्' इति अमरस्वारस्यात् दिश्शब्देन विग्रहे तु टचा सिद्धया न ह्रस्वप्रयोजनम् इत्याह—दिशोरितीति।

३ 'अप्रधानमुपसर्जनमिति 'सम्बन्धिशब्दावेतौ' तत्र सम्बन्धादेतद् गन्तव्यं यं प्रति यदप्रधानं तं प्रति तदुपसर्जनम्। तस्य चेत्सोऽन्तो भवतीति भाष्योक्तेस्तादृशस्यैव ह्रस्वप्राप्तेरिति भावः।

४ सन्निधानाद्यद्विभक्त्यर्थेऽव्ययं तद्विभक्त्यैव यत्सुबन्तं तस्यैव सूत्रे ग्रहणे नान्यद्विभक्त्यन्तेन समासप्राप्तिरप्यधिकी शङ्केति स्पष्टैवेति भावः।

रिति भावः। परिशिष्टे तु प्रथमान्तेनायं समासः, षष्ठ्यन्तेन वेत्यपि पक्षद्वयं स्थितम्। यत्तु प्राचोक्तम्—हरौ अधिकृत्येति विग्रहे हराव-धीति स्थिते इति, तन्न, नित्यसमासत्वेन विग्रहायोगात्। यदाहुः—*अविग्रहो नित्यसमास इति*। नन्वस्वपदविग्रहोऽपि स्वीक्रियते—कुम्भं करोतीति यथा, अयमपि तथाऽस्तु, अधिकृत्येति ल्यबन्तस्य समासाप्रविष्टस्य सत्त्वादिति चेन्न, समासार्थलेशमपि अबोधयत-स्तस्य विग्रहे प्रवेशस्यैवासम्भवात्।

यत्तु व्याचख्युः—विग्रह इव विग्रहः=अर्थकथनमात्रम्। तेनावि-ग्रहत्वान्नित्यसमासत्वमविरुद्धम्। अत एव समासप्रकृतिभूतमलौकिकं वाक्यान्तरं दर्शयति—हरौ अधीति स्थित इतीति। अत्रेदं वक्तव्यम्—विग्रह इवेत्यसङ्गतम्, अर्थकथनवाक्यस्यैव विग्रहत्वेन ततो भेदाभावात्। अर्थकथनमात्रमित्यपि न, ल्यबन्तेन समासार्थाऽसंस्पर्शात्। यच्च हरौ अधीति अलौकिकमित्युक्तम्; तदपि न, तत्र हरि ङि इत्यस्यैव प्रवे-शात्, अन्तरङ्गानपीति न्यायात्, अन्यथा समासे हरिशब्देकारस्य दुर्लभत्वापत्तेश्च।

---

परिशिष्टे त्विति। अत्रारुचिः स्पष्टैव। द्योतकसमभिव्याहारे षष्ठ्या अप्राप्तेश्च। वाचकत्वेऽपि संनिधानत्यागे न मानमिति। विग्रहायोगादिति। एवञ्च विग्रहे इति तदुक्तिरसङ्गतेति भावः। प्रवेशस्यैवेति। एवञ्च तादृश-विग्रहस्वरूपकथनमसङ्गतमिति भावः। असंस्पर्शादिति। एवञ्च तत्रार्थकथ-नत्वस्यैवाभावेन तन्मात्रत्वोक्तिरसङ्गतेति भावः। दुर्लभत्वापत्तेरिति।

---

१ चिन्त्यमिदम्—भाष्ये 'इह कस्मान्न भवति' 'सुमद्राः' 'सुमगधाः' इति, अथवा नेमे समासार्था निर्दिश्यन्ते, किं तर्हि, अव्ययार्था इमे निर्दिश्यन्ते। एतेष्वर्थेषु यदव्ययं वर्तते तत्सुबन्तेन सह सम-स्यते' इत्युक्तेः। अत्र कैयटः—अव्ययस्य श्रुतत्वादन्तरङ्गत्वात्तस्यैव विभक्त्यादयो विशेषणानि। तत्र यदो-त्तरपदार्थावच्छिन्नाः समृद्ध्यादयः प्रतिपिपादयिषितास्तदाऽव्ययं समृद्ध्यादीनां वाचकमिति तेषां तदर्थता भवति। सुमद्रा इत्यत्र तु मद्रशब्द एव समृद्धिविशिष्टार्थमाह सुशब्दस्तु समृद्धिद्योतको न तु वाचकः, इति, एतद्भाष्यकैयटाभ्यामव्ययीभावविषये वाचकत्वमेवाव्ययानाम्। अत एव 'वचनग्रहणा-त्समृद्ध्यादिवाचकत्वे एवाव्ययीभावः' इति शेखरोक्तं सङ्गच्छते।

किञ्चाव्ययीभावस्य भाष्योक्तौत्सर्गिकपूर्वपदार्थप्रधानत्वस्यापि वाचकत्वे एव सङ्गतिः, द्योत्यार्थस्य क्वचिदपि विशेष्यत्वादर्शनात्। 'स्त्रियाम्' इति सूत्रे 'स्त्रियामिति स्त्र्यर्थाभिधाने चेद्टाबादयो द्विवचनबहु-

यदपि व्याचख्युः—अलौकिकत्वादेवाधिशब्देनाभिहितेऽपि सप्तमी, अन्यथा सा न स्यात्, अनभिहिताधिकारादिति, तदप्यापाततः; अलौकिकत्वं हि नित्यविध्यन्तरप्राप्तिविषयत्वेनापरिनिष्ठितत्वम्, न त्वेतावन्मात्रेणाननुशिष्टायाः सप्तम्यास्तत्र प्रवेशः सूपपादः, अतिप्रसङ्गात्। यत्तु तत्पौत्रेण व्याख्यातम्—तिङ्कृत्तद्धितसमासैरिति परिगणनादधिनाऽभिहितेऽपि सप्तमीति, तन्न, परिगणनस्याकरे प्रत्याख्यातत्वात्, 'कर्मणि द्वितीया' इति सूत्रे स्वयमपि तथैवोक्तत्वात्, 'क्रमादमुं नारद इत्यबोधि सः' इत्यादिप्रयोगविरोधाच्च।

"द्वितीयापञ्चम्योः" इति। एतच्च रक्षितग्रन्थे स्पष्टम्। यत्तु वदन्ति—चैत्रस्य वनादारादित्यादौ सापेक्षत्वादसमासे चरितार्थत्वा-

---

कृतात्वेन कृतैकादेशौकारस्यैव लुकापहारेणेति भावः। वैकल्पिकेऽदादिविषये सेद्धेत्यादावलौकिकत्ववारणाय। नित्येति। आकरे = अनभिहित सूत्रे भाष्ये। परिगणनफलस्य भीष्मं कटमित्यस्यान्यथासिद्धिस्तत्रोक्ता। रक्षितग्रन्थे इति। अत्रारुचिबीजन्तु मध्यार्थकसमयायोगे द्वितीयाविधा-

---

वचनानेकप्रत्ययानुपपत्तिः' इति भाष्यवार्तिकपर्य्यालोचनयाऽपि द्योत्यार्थस्य विशेष्यत्वासम्भव एव लभ्यते, वाचकत्वे एव स्त्रीत्वस्य विशेष्यतया दोषोक्तेरिति दिक्।

१ परिगणनफलस्य 'भीष्मं कटं कुरु' इत्यादौ विशेष्यवाचककटपदोत्तरद्वितीयया कर्मण उक्तत्वेऽपि भीष्मशब्दादुत्पद्यमानस्य द्वितीयारूपस्य 'कटोऽपि कर्म भीष्मादयोऽपि' इत्यादिना कटत्वविशिष्टकटनिष्ठकर्मत्वोक्तावपि भीष्मत्वादिगुणविशिष्टनिष्ठकर्मणोऽनुक्ततया 'उक्तार्थानाम्' इति न्यायाप्राप्त्याऽन्यथासिद्धा, परिगणने दोषाप्रदर्शनेन च परिगणनस्य निष्फलत्वमात्रे भाष्यतात्पर्य्ये परिगणने निपातेनाभिधानेऽपि द्वितीयादेर्दुर्वारतया प्रत्याख्यानेऽपि फलैक्याय तेनाभिधाने द्वितीयादिप्रवृत्त्यौचित्येन निपातेनाभिधाने कारकविभक्त्यनुत्पत्त्यभिधानं चिन्त्यम्।

२ वस्तुतस्तु 'विषवृक्षोऽपि संवर्ध्य स्वयं छेत्तुमसाम्प्रतम्' इत्यादौ तुमुनः साधुत्वाय 'इष्यते' इत्यस्याध्याहारेण कर्मणस्तिङोक्तत्वाद् द्वितीयाया अप्राप्तिः। 'नारद इत्यबोधि सः' इत्यादौ 'नारदः' इति श्रीकृष्णीयज्ञानाकारानुकरणम्। इति 'नारदः' इत्यस्य कर्मत्वेऽपि प्रथमान्तस्याप्रातिपदिकतया न तत्र द्वितीया। यद्वा—नारदोऽत्रेतिपदार्थः। नारदपदञ्चेतिशब्दस्य तदर्थत्वे तात्पर्यग्राहकम्। इतिपदमेव कर्मवाचकम्। ततश्चोपन्नाया द्वितीयाया अव्ययत्वाल्लुकि 'नारद इत्यबोधि' इत्यस्य साधुत्वम्। अन्ये तु इतिशब्दस्य कर्मत्वमात्रद्योतकत्वे विद्यमानतया 'इति नारदम्' इत्येव स्यात्। नचाव्ययमिति सूत्रे विभक्तिपदेन ङिविभक्तेरेव ग्रहणम्, 'ङिसमृद्धि' इत्येव वक्तव्ये विभक्तिपदेन विभक्तिमात्रस्य ग्रहणादिति वदन्ति। उपाध्यायास्तु कर्मत्वद्योतकत्वेऽपि नात्राव्ययीभावः, वाचकाव्ययस्यैवाव्ययीभावस्य सिद्धान्तसिद्धत्वादित्याहुः।

द्विधानसामर्थ्यं नास्तीति, तच्चिन्त्यम्, नित्यसमासस्य न्यायप्राप्तत्वे सति चैत्रस्येत्यादिविशेषणप्रयोगस्यैवासम्भवात्। उक्तं हि भाष्ये— 'वृत्तस्य विशेषणयोगो न' इति। ननु 'सविशेषणानां वृत्तिर्न' इत्यपि भाष्ये उक्तमिति चेत्सत्यम्, अनित्यसमासविषयं तत्, नित्यसमासस्यापि सविशेषणेष्वप्रवृत्तौ महतः कुम्भस्योप इत्याद्यापद्येत। यत्तु प्राचा— कृष्णस्योपेत्युक्तम्, यच्च व्याचख्युरीदृशे प्रक्रियावाक्ये स्थिते इति तदुभयमपि प्रागुक्तरीत्या प्रामादिकमेव। *सम्प्रति नेति।* सम्प्रतीत्यव्ययमिदानीमित्यर्थे।

एतर्हि सम्प्रतीदानीमधुना साम्प्रतं तथा। इत्यमरः।

---

नस्य दूरार्थकाराच्छब्दयोगे पञ्चमीविधानस्य चारितार्थ्यमिति[1]। प्रागुक्तरीत्या= अधिहरीत्यत्रोक्तया। अधिकरणशक्तीति। कालवाचकत्वादित्यपि बोध्यम्।

---

१ नन्वेवं 'समया ग्रामम्' 'आराद्वनात्' इत्यादावव्ययीभावो दुर्वार इति चेन्न, 'अब्भक्षवायुभक्ष'न्यायेन 'अप एव यो भक्षयति, वायुमेव यो भक्षयति, इत्यवधारणगर्भार्थकेन मत्स्यसर्पमात्रबोधवत् तेनैव न्यायेन विभक्त्यर्थादिमात्रवृत्त्यव्ययस्यैवानेन सूत्रेणाव्ययीभावविधानात् समयाऽऽराच्छब्दा अधिकरणशक्तिप्रधाना इति समीपमात्रवाचित्वाभावात्समासाप्राप्तेः। समया ग्रामम्, आराद्वनात्, इत्यनयोर्ग्रामस्य समीपे, वनस्य समीपे इति चार्थः। 'उपकृष्णम्' इत्यादेस्तु कृष्णसामीप्यवन्त इत्यर्थेन समीपमात्रवचनोऽत्रोपशब्द इत्यव्ययीभावाप्राप्तेरित्यन्यत्र विस्तरः।

सिद्धान्तविदस्तु समीपार्थकनिकषाशब्दसाहचर्यान्मध्यार्थकसमयाशब्दयोगे द्वितीया नैव जायते। न च अन्यारादिति पञ्चमीविधानस्य दूरार्थकाराच्छब्दयोगे चारितार्थ्येन समीपार्थकाराच्छब्दयोगेऽव्ययीभावसमासो दुर्वार इति वाच्यम्, 'अजाद्यैभिः' इति तृतीयान्तनिर्देशेनैव सिद्धे युक्तग्रहणसामर्थ्याद्व्याप्तिक्रमेणाराच्छब्दमात्रयोगे पञ्चमीविधानबोधनात्समीपार्थाराच्छब्दयोगेऽपि पञ्चम्या विशिष्यविधानसत्त्वेन तत्सामर्थ्यादव्ययीभावस्य बाधात्। अन्यथा 'दूरान्तिकार्थैः षष्ठ्यन्यतरस्याम्' इत्यनेन षष्ठीपञ्चम्योः प्राप्तयोः नित्यपञ्चमीविधानस्य समीपार्थकाराच्छब्दयोगे वैयर्थ्यापत्तेः। नित्यसमासे सति षष्ठीपञ्चम्योर्विशेषाभावात्। अत एव 'अव्ययम्' इति विभक्तसूत्रेणापि नाव्ययीभावः, 'अब्भक्षवायुभक्ष'न्यायेन समीपार्थकत्वमादायाव्ययीभाववारणेऽपि 'अव्ययम्' इति विभक्तसूत्रेण समासो दुर्वार एव स्यात्। न च योगविभागस्येष्टसिद्ध्यर्थतया तत्सिद्धिः, लक्षणैकचक्षुष्काणामिष्टत्वस्य दुर्ज्ञेयत्वात्। किञ्च पदान्तरसमभिव्याहारे पत्राधिकरणत्वस्य संसर्गतया प्रतीत्या 'अब्भक्ष'न्यायेनाव्ययीभावाभावेऽपि पदान्तरासमभिव्याहारे समीपमात्रार्थकत्वेनाव्ययीभावस्य दुर्वारत्वम्। किञ्च वृत्तिविषयेऽधिकरणशक्तिप्रधानस्यापि प्रातरशब्दादेः प्रातःकल्पमित्यादावधिकरणताविशिष्टबोधकत्वस्य दर्शनात्समयादेरपि पदान्तरासमभिव्याहारेऽधिकरणताविशिष्टसमीपमात्रार्थबोधकतयोक्तन्यायेन समासवारणासम्भवान्मूलोक्ताद् द्वितीया पञ्चम्योर्विधानसामर्थ्यादेव समासवारणं युक्तमित्याहुः।

तच्चाधिकरणशक्तिप्रधानत्वात्क्रियापदेनैवान्वयार्हम्, निषेधोऽपि क्रियाया एव । तदेतदाह—*युज्यते इति* । *असम्प्रतीति* । समासवृत्तौ तु युजिक्रियान्तर्भवति, 'दध्योदनः' इत्यत्र सेकक्रिया यथा । यत्तु प्राचोक्तम्—असम्प्रतीति सम्प्रत्यभाव इत्यर्थः । अनेनोपभोग्यवस्तुनो यो वर्तमानः कालस्तस्यैव निषेधः क्रियते इति, तन्न, अधिकरणस्य निषेधं प्रति योगित्वेनान्वयस्य सर्वतन्त्रविरुद्धत्वात् । न हि भूतले घटो नास्तीत्यनेन भूतलं निषिध्यत इति कश्चिदभ्युपेति, न वा युक्तिसहमित्यास्तां तावत् । *इति हरीति* । स्वरूपपरेण षष्ठ्यन्तेन हरिशब्देन सह प्रकाशार्थस्येतिशब्दस्य समासः । *प्रतिशब्दस्येति* । यत्त्वाहुः—ग्रामस्य वृक्षं प्रतीत्यत्र सापेक्षत्वेन समासाभावे द्वितीयाविधानं सावकाशमिति । तत्प्रागेव दूषितम् ।

---

क्रियापदेनैवेति । कर्तृकर्मद्वारेति भावः । निषेधोऽपीति । अत्यन्ताभावार्थकनञः क्रियान्वयित्वव्युत्पत्तेरिति भावः । न वा युक्तीति । उक्तव्युत्पत्तिविरोधादिति भावः । ततो भूतलाधारकघटाभावप्रतीतिस्त्वार्थीति बोध्यम् ।

---

१ नित्यसमासस्य न्याय्यत्वे सति ग्रामस्येत्यादिविशेषणप्रयोगस्यैवासम्भवादितिरीत्या दूषितमिति भावः ।

२ अत्राभावपदेनात्यन्ताभाव एव गृह्यते, अभावेत्येव वक्तव्येऽर्थग्रहणसामर्थ्यात् । तेन प्रागभावार्थेन निरादिना नाव्ययीभावः । अत एवात्ययग्रहणमपि चरितार्थम्, अन्यथा ध्वंसस्याप्यभावतया तेनैव सिद्धेऽत्ययग्रहणस्य वैयर्थ्यापत्तेः । अत्यन्ताभावेऽपि समस्यमानोत्तरपदार्थप्रतियोगिक एव ग्राह्यः, अन्यथा 'दुर्यवनम्' इत्यादावर्थाभावेनैव सिद्धे व्यृद्धिग्रहणस्य वैयर्थ्यप्रसङ्गात् । नन्वेवमपि 'न पचतितराम्' 'घटो न पटः' इत्यादौ समासो दुर्वार इति चेन्न, 'ततः पश्चात्' इति भाष्यप्रयोगेण सूत्रगृहीताव्ययेन समासाभावात् अभावपदेन अस्य गृहीतत्वात्, अर्थग्रहणेन लिङ्गसङ्ख्यान्वयिसमस्यमानपदजन्यप्रतीतिविशेष्यविरोधिन एवाभावस्य ग्रहणाद्वा । पचतितरामित्यस्य लिङ्गसंख्यान्वयित्वाभावात्, 'न पटः' इत्यत्र नञो भेदार्थकतया भेदस्य प्रतियोगितावच्छेदकीभूतपटत्वेन सह विरोधेऽपि पटपदजन्यप्रतीतिविशेष्यपदेन सह विरोधाभावाच्च तत्र समासाप्राप्तेः । 'घटो नास्ति' इत्यादौ तु नञः प्रसज्यप्रतिषेधार्थकतया क्रियायामन्वयेन घटेन सामर्थ्याभावान्न समासः । नञर्थाभावनिष्ठविशेष्यतानिरूपितप्रकारतासम्बन्धेन शाब्दबुद्धित्वावच्छिन्नं प्रति विशेष्यतासम्बन्धेन क्रियोपस्थितेः कारणत्वात्तु घटो नास्तीत्यनेन घटसत्त्वाभाव एव प्रतीयते । घटात्यन्ताभावबोधस्त्वार्थः, समनियताभावानामैक्येन घटसत्त्वाभावस्य घटात्यन्ताभावरूपतया तन्मूलको वा । 'उत्तरे कर्मण्यविघ्नमस्तु' इत्यादिप्रयोगास्तु 'सामान्ये नपुंसकम्' इत्याश्रित्य नञ्तत्पुरुषेणोपपाद्यः । वस्तुतस्तु 'अविघ्नम्' इत्यत्राव्ययीभाव एव । सूत्रगृहीताव्ययेन समासो नेति तु न युक्तमिति 'यथाऽसादृश्ये' इत्यत्र वक्ष्यते । क्रियायामन्वयेनासामर्थ्यन्तु न, लक्षणया विघ्नशब्दार्थे एव क्रियाया अन्तर्भावात् ।

हरदत्तस्त्वाह—अर्थमर्थं प्रतीति भाष्यकारप्रयोगाद् वाक्यमपि साधु। यद्वा नात्राव्ययं वीप्सावृत्ति, किं तर्हि कर्मप्रवचनीयत्वात् सम्बन्धमवच्छिनत्ति, वीप्सा तु द्विर्वचनद्योत्येति।

*सहपूर्वाह्णमिति*। साकल्येऽव्ययीभावः। *गुणभूतेऽपीति*। यदि साहश्य इति नोच्येत ततो यत्र साहश्यं प्रधानं तत्रैव[२] स्यात्। अव्य-

---

भाष्यकारेति। सञ्ज्ञा तु प्रतिस्थानमित्यादौ षत्वाभावार्थेति तदाशयः। अत्र=अर्थमर्थं प्रतीति वाक्ये। प्रतिशब्दस्येत्यादि मूलं तु रक्षितानुसारीति बोध्यम्।

---

१ वस्तुतस्तु कर्मप्रवचनीयसंज्ञायाः 'प्रतिस्थानम्' इत्यादौ षत्वाभावसम्पादनेन चरितार्थतया 'अर्थमर्थं प्रति प्रत्यर्थम्' इति सरूपसूत्रादिस्थभाष्यप्रयोगाद्यथा द्विर्वचनं तदा प्रतिशब्दस्य वीप्सावृत्तित्वाभावात् समासाप्राप्त्या, वाक्यं साध्विति तत्त्वम्। वृत्तौ द्विर्वचनन्तु न, समासेन वीप्साया द्योतितत्वादिति ह्यवरट्सूत्रे कैयटः। प्रतिना तस्या उक्तत्वादिति तत्त्वमिति शेखरकाराः :

२ यथार्थत्वेनेति भावः। वस्तुतस्तु यथार्थपदेन सादृश्यस्य न ग्रहणमिति यथार्थत्वेन समासाप्राप्तिः। तथा हि÷यथाशब्दो द्विविधः÷व्युत्पन्नोऽव्युत्पन्नश्च। तत्र व्युत्पन्नस्थाल्प्रत्ययान्तः=सादृश्यवाची। तस्य च न समासः, उत्तरसूत्रेऽसादृश्ये इति निषेधात्।

अव्युत्पन्नश्च योग्यतावीप्सापदार्थानतिवृत्तिपदार्थत्रितयवाच्येव, न सादृश्यवाची; तत्त्वे प्रमाणाभावात्। 'अव्ययं विभक्ति' इत्यनेन योग्यताद्यर्थस्यापि यथाशब्दस्य न समासः, ततः पश्चात्, सर्वपश्चात्, इत्यादिभाष्यप्रयोगेण तत्सूत्रे तत्तदर्थबोधकपदघटकतया गृहीताव्ययेन तत्तदर्थकेन समासाभावज्ञापनात्। यस्मिन्यस्मिन्नर्थे विद्यमानस्याव्ययस्य समास इष्यते तत्तदर्थबोधाभिप्रायेण सूत्रोपात्तो यः शब्दस्तद्घटकतया गृहीतेन तत्तदर्थकेनाव्ययेन नायं समास इत्यर्थः। अत्र तत्तदर्थकेनेत्युपादानात् सम्प्रत्ययर्थबोधाभिप्रायेण कृतस्य वृत्तिकाराद्यभिप्रेतस्य 'अतिहिमम्' इत्यादेरुपपत्तिः। एवमत्ययरूपार्थे 'वैशाखे निर्हिमम्' इत्यादेरपि साधुत्वं सिध्यति। यथाशब्दस्य 'अव्ययं विभक्ति' इत्यनेन समासाभावेऽपि 'यथाऽसादृश्ये' इत्युत्तरसूत्रेण समासो भवत्येव। यत्तु प्रतिषेधेति प्रतीके 'यथार्थे यदव्ययमिति पूर्वेणैव सिद्धे समासे सादृश्यप्रतिषेधार्थत्वादस्यारम्भस्य' इति कैयटः, तन्न, सूत्रगृहीताव्ययेन तेन समासाभावात्। नियमत्वापेक्षयैतदर्थकत्वस्यैवोचितत्वात्। अत एव सूत्रे सादृश्यग्रहणं चरितार्थम्। अन्यथा यथार्थत्वेनैव समासे सिद्धे सादृश्यग्रहणस्य वैयर्थ्यापत्तेः। अत एव 'यथाऽसादृश्ये' इति सूत्रे 'पूर्वेण प्राप्नोति सादृश्यसम्पत्तीति' इति भाष्योक्तं संगच्छते। अन्यथा यथाशब्दस्य समासार्थम् प्रतिपदोक्तत्वेन 'यथार्थेति प्राप्नोति' इत्येव ब्रूयात्। न च सादृश्यग्रहणं गुणभूतसादृश्यग्रहणार्थम्, लक्ष्यानुरोधेन प्रधानन्यायाप्रवृत्त्योभयेनापि तेन सिद्धेः। यथा योग्यताया यथार्थत्वेऽपि रूपस्य योग्यमनुरूपमित्यादौ योग्यतात्वदर्थकेनापि समासस्तद्वत्। अव्ययमिति सूत्रे यथार्थग्रहणमन्याव्ययग्रहणार्थम्। एवञ्च यथाशक्तीति एतदुदाहरणमेवेति भाष्ये स्पष्टम्। वीप्सादावपि यथाशब्देन समासो भवत्येव, यदव्युत्पन्नं वीप्सावाचि तस्येदं ग्रहणमिति भाष्यात्। एवञ्च स्पष्टमेवोपक्रमोपसंहारबलादस्य विधित्वं भाष्याल्लभ्यते। कैयटानुयायिनस्तु÷'यथाऽसादृश्ये' इत्यस्य नियमार्थत्वमेव वर्णयन्ति। तथा हि:—'यथाऽसादृश्ये' इति सूत्रभाष्ये 'असादृश्ये इति किमर्थम्÷यथा देवदत्तस्तथा यज्ञदत्त इति, असादृश्ये इत्युच्यते तत्रेदं न

यार्थप्राधान्यस्याव्ययीभाव औत्सर्गिकत्वादिति भावः । अन्त इति ।

साकल्ये इति । पूर्वाह्णमपरित्यज्येत्यर्थ इति भावः । औत्सर्गिकत्वादिति ।

---

सिध्यति–यथाशक्ति, यथाबलम् इति, किं कारणम् , यथेत्ययं प्रकारवचने थाल् , स च सादृश्ये वर्तते, नैष दोषः, अयं यथाशब्दोऽस्त्येवाव्युत्पन्नं प्रातिपदिकं वीप्सावाचि । अस्तिप्रकारवचने थाल् । तत्र 'यदव्युत्पन्नं प्रातिपादिकं वीप्सावाचि तस्येदं ग्रहणम् । अथ यः प्रकारवचने थाल् तस्य ग्रहणं कस्मान्न भवति पूर्वेण प्राप्नोति सादृश्यसम्पत्तीति, प्रतिषेधवचनसामर्थ्यान्न भविष्यति' इत्युक्तम् । तत्र कैयटेन 'असादृश्ये' इति किमिति प्रतीके कारणत्रयमुपन्यस्तम् । देवदत्तसादृश्यवानिति बोधे 'कः' इत्युपमेयाकाङ्क्षादर्शनात् उपमेयसापेक्षत्वात् समासो न स्यादिति 'असादृश्ये' इति व्यर्थमिति सापेक्षत्वरूपमेकं प्रश्नकारणमुपन्यस्य प्रधानस्य सदृशार्थस्य सापेक्षत्वेऽपि विशेषणस्य देवदत्तस्य सापेक्षत्वाभावात् , यत्सादृश्यवान् देवदत्त इति प्राथमिकबोधे विशेषणस्य सापेक्षत्वेऽपि यत्सादृश्यवानित्यत्रोपमानभूतदेवदत्तस्य यदर्थे उपमेये नित्यसाकाङ्क्षतया देवदत्तस्य गुरुकुलमितिवत्समासः प्राप्नोत्येवेति तत्सार्थक्यमुक्तम् । ननु सापेक्षत्वरूपस्य प्रश्नकारणस्य, प्रधानसापेक्षत्वरूपस्य, नित्यसापेक्षत्वरूपस्य च परिहारस्य च भाष्यकृताऽनुक्तत्वादिदमसङ्गतमिति चेन्न, पूर्वोक्तप्रश्नकारणपरिहारयोः सुस्पष्टतया भाष्येऽनुल्लेखात् । 'असादृश्ये इत्युच्यते तत्रेदं न सिध्यति यथाशक्तीत्यादिना यथाशब्दस्य सादृश्यमात्रवाचकत्वरूपं द्वितीयं प्रश्नकारणमुक्त्वा 'नैष दोषः' इत्यादिना वीप्सावाचिनोऽव्युत्पन्नस्य ग्रहणमुपन्यस्य सूत्रसार्थक्यमुक्तम् ।

'यथाऽसादृश्ये' इत्यनेन नाप्राप्तत्वाद्यथार्थत्वेन प्राप्तस्यैव निषेधात् सादृश्यसम्पत्तीत्यादिना यथाशब्दस्य सादृश्यार्थे समासो दुर्निवार इति 'असादृश्ये एव' इति व्यर्थं एवेति अनाप्राप्तत्वात्पूर्वप्राप्तिनिषेधो न स्यादिति तृतीयं कारणमुक्तम् । तत्परिहारश्च 'अथ यः प्रकारवचने थाल् तस्य ग्रहणं कस्मान्न भवति' इत्यादिशङ्कायाम् 'प्रतिषेधवचनसामर्थ्यान्न भविष्यति' इति भाष्योक्त एव । तत्प्रतीकमुपादाय 'यथार्थे यदव्ययमिति पूर्वेणैव सिद्धे समासे सादृश्यप्रतिषेधार्थत्वादस्यारम्भस्य' इति कैयटेन स्पष्टमुक्तः । 'अत्र असादृश्ये इत्युच्यते तत्रेदं न सिध्यति 'यथाशक्ति' इत्यादीतिद्वितीयाक्षेपे प्रयोगासिद्धिव्याजेन भाष्यकृता सूत्रवैयर्थ्यस्यैवोद्भावितत्वात्तदेकवाक्यतया प्रथमतृतीयाक्षेपयोरपि सूत्रवैयर्थ्योद्भावने एव तात्पर्यमुन्नेयम् । सादृश्यसम्पत्तीति प्राप्तस्यानिषेधे हि नियमकरणं व्यर्थमेव स्यादिति तत्सामर्थ्यादनाप्राप्तत्वेन व्यर्थत्वाप्रयोजकस्यापि सादृश्यसम्पत्तीत्यस्यानेन निषेधः । अत एव यथार्थत्वात् प्राप्नोतीति नाशङ्कितम् , तस्य नाप्राप्तत्वादेवानेन निवृत्तिसिद्धेः । एतेन पर्युदासघटितकैयटोक्तनियामकत्वपक्षे सूत्रवैयर्थ्यस्यैवोद्भावयितुमुचितत्वाद् 'असादृश्ये' इत्येतावन्मात्रस्य वैयर्थ्योद्भावनमसङ्गतम् , विधायकत्ववादिनये तु 'यथा' इत्येकं वाक्यं विधायकम् । 'असादृश्ये' इति द्वितीयं निषेधकम् । तत्र यथाशक्तीत्याद्यर्थम् 'यथा' इत्यस्यावश्यकतया 'असादृश्ये' इत्येतावन्मात्रस्य वैयर्थ्योद्भावनमुचितमेवेति परास्तम् , पक्षद्वयेऽपि सूत्रवैयर्थ्योद्भावनपर्यवसाने एव भाष्यकृत्तात्पर्यस्योपपादितत्वात् ।

यत्तु–नियमत्वापेक्षया 'सूत्रगृहीताव्ययेन समासः' इति ज्ञापकात्तस्यैवोचितत्वमिति, तन्न, बाध्यशास्त्रे सूत्रगृहीताव्ययातिरिक्तत्वेन संकोचापेक्षया यथाशब्दातिरिक्तत्वेन संकोचकल्पने एव लाघवात् । घटः पटो नेत्यत्र समासवारणन्तु न फलम् , तदन्यथासिद्धत्वस्य प्रागुक्तत्वात् । 'अविघ्नम्' इत्यादाव्ययीभावो भवत्येव, नञ्सूत्रे भाष्ये नञ्समासस्य पूर्वपदार्थप्रधानत्वपक्षे नञ्समासेऽव्ययीभावस्य येन नाप्राप्तन्यायेन बाधादव्ययीभावासिद्धेर्दोषतयानुपन्यासादन्यपक्षेऽव्ययीभावस्यानिष्टत्वकल्पनन्तु नोचितम् । अनेकमित्यादावेकवचनासिद्ध्या, ताभ्यां भिन्नोऽस्तीत्याद्यर्थे 'अतौ स्त' इत्याद्यसिद्ध्यापत्त्या, अत्वं भवसि

इदानीमेतावान्प्रदेशोऽध्येतव्य इति यावतः प्रदेशस्य परिग्रहः कृतस्तदपेक्षया समाप्तिरिहान्तो विवक्षितः। स चासकलेऽप्यध्ययने भवतीति साकल्यात् पृथगुच्यते। अग्निशब्दस्तदर्थे ग्रन्थे वर्तते, स तृतीयान्तः समस्यते, यद्यप्यग्निना सहेति प्रयोगार्हमेव तथाऽपि साहित्यमात्रे तथा, अन्तत्वविवक्षायां तु समासो नित्यः, अत एवाग्निग्रन्थपर्यन्तमित्यस्वपदविग्रहो दर्शितः। यत्तु—अग्निरन्तोऽस्येति प्रथमान्तेनाग्नेरन्तत्वमिति षष्ठ्यन्तेन वा विग्रह इति प्रथमान्तेन षष्ठ्यन्तेन वा समास इति, तन्न, सहशब्दस्यान्तवाचकत्वाभावात्, अन्तत्वस्य तु सुतरामलाभात्, तस्याध्ययनेऽनन्वयाच्च, सहयुक्ते तृतीयाया न्याय्यत्वाच्च, सतृणमत्तीत्यत्र साकल्यस्यैव साग्नीत्यत्रा-

उन्मत्तगङ्गमित्यादौ व्यभिचारादिति भावः। नन्वग्निग्रन्थादग्रेऽप्यध्ययनमस्तीत्यत आह—इदानीमिति। तदर्थे = तत्प्रतिपादके। अन्तत्वविवक्षायाम् = तस्यापि विवक्षायामित्यर्थः। ग्रन्थपर्यन्तमिति। तदन्तमित्यर्थः। अन्तत्वस्य सुतरामिति। प्राधान्येनेत्यर्थः। तस्येति। अन्तत्वस्येत्यर्थः। ननु सहशब्दस्यान्तवाचकत्वाभावे तेन समासो न स्यात्, अग्निग्रन्थपर्यन्तमिति विग्रहप्रदर्शनेन भवताऽपि तस्य स्वीकारात्। अग्निरन्तो यस्येत्यस्य त्वयुक्तविग्रहसमानार्थत्वादत आह—सहयुक्ते इति। एवञ्च प्रथमान्तेन समास इत्यसङ्गतम्। साहित्यं च सहशब्दार्थः। तत्र च सूत्रे विनिगमनाविरहादधिकार्थकसहशब्दस्य ग्रहणमिति भावः। साकल्यस्यैवेति। यस्तृणानि भक्षयेत् स कथमन्यत्परित्यजेदिति प्रतीतेरिति भावः। एवञ्च यत्र

अनहं भवामि, इत्याद्यसिद्ध्यापत्त्या च नञ्समासेऽपसिद्धान्तपूर्वपदार्थप्रधानत्वपक्षे दोषानुपन्यासमात्रेण कस्यचिदर्थस्य कल्पयितुमशक्यत्वात्।

यत्तु शेखरकाराः—'सामान्यस्य भेदको यो विशेषस्तद्रूपे प्रकारे थालिति यद्विशेषवान् हरिस्तद्विशेषवदभिन्नो हर इति बोधानन्तरम्—'यथाशब्द उपमानत्वं द्योतयति' इत्यभियुक्तोक्त्या उपमानहर्यभिन्न उपमेयो हर इति, तन्न, थाल्सूत्रे प्रकारशब्देन सादृश्यस्यैव ग्रहणात्। यथेत्ययं प्रकारवचने थाल्, स च सादृश्ये वर्तते इति भाष्याक्षरस्वारस्यात्। यत्सादृश्यवान् हरिस्तत्सादृश्यवान् हर इति बोधानन्तरं हरिसदृशो हर इति बोधेनोपमानोपमेयभावस्य विषयीकरणात्, एकप्रतियोगिकसादृश्यविशिष्टयोः परस्परं सादृश्यस्य नियतत्वात्, उभयबोधयोः शाब्दत्वं तु 'गङ्गायां घोषः' इत्यादौ लक्षणामूलकान्वयअनाजन्यबोधस्थले आरोपितगङ्गाऽऽधारत्वपावनत्वबोधयोरिव सुवचम्, तथ यद्धर्मवान् हरिस्तद्धर्मवान् हर इति बोधोत्तरमुपमानहर्यभिन्न उपमेयो हर इति बोधयोरिव। तस्मादत्रत्यं कैयटोक्तं सर्वं साध्वेवेत्याहुः।

१ तत्र समभिव्याहृतपदप्रतिपाद्यक्रियादिसमानकालिकतत्क्रियादिमत्स्वरूपम्।

न्तत्त्वस्यापि साहित्यद्योत्यतया तत्र तृतीयान्तेन समासं स्वीकृत्येह तत्परित्यागस्य निर्मूलत्वाच्च । यावच्छ्लोकमिति । यावदित्यव्ययं समस्यते विग्रहस्तु तद्धितेनेत्यस्वपदत्वं बोद्ध्यम् ।

"विभाषा" । एतदिति । न्यायसिद्धेऽर्थे लिङ्गदर्शनमिदम् । टिघुभादिसञ्ज्ञानामिव समाससञ्ज्ञाया अपि नित्यप्राप्तत्वाद्वचनं विना विद्ध्यन्तराणामिव सञ्ज्ञानामपि विकल्पालाभात् ।

---

'न त्वत्र तृणभक्षणे तात्पर्य' मिति ग्रन्थसूचितं साहित्यप्रतीतौ न तात्पर्यं तत्रापि चेत्तृतीया तर्हि यत्र तदपि भासते तत्र कथं न तृतीयेति तात्पर्यम् । साहित्यद्योत्यतयेति । साहित्यवद् द्योत्यतया बोद्ध्यतयेत्यर्थः । मयूरव्यंसकादित्वात्सुप्सुपेति वा समासः । यथाश्रुते तु ग्रन्थद्वयस्य सहाद्ध्ययनेऽपि साहित्यप्रतीतिर्जायते न त्वन्तत्वप्रतीतिरिति तस्य तद्द्योत्यतोक्तिरसङ्गतैव स्यादिति दिक् ।

---

१ अवधारणे इति शेषः । संख्यादिना इयत्तापरिच्छेदोऽवधारणम् । अनव्यययावच्छब्दव्यावृत्तये 'अव्ययम्' इत्यनुवृत्त्या यावदित्यव्ययस्यैव समासः । तेन 'यावन्तः श्लोकाः' इत्यस्वपदविग्रहे समासस्य नित्यत्वेऽपि समासाभावः, तत्र यावदित्यस्यानव्ययत्वात् । अवधारणे किम्—'यावद्दत्तं तावद्भुक्तम्' इत्यत्र मा भूत् । कियद्दत्तं कियद्भुक्तमिति नावधारयामीत्यर्थः ।

२ यथा टिघ्वादिसंज्ञानाम् 'असति यत्ने उद्देश्यताऽवच्छेदकव्यापकत्वं विधेये भासते' इति नियमान्नित्यत्वम्, तथा समाससंज्ञाया उद्देश्यताऽवच्छेदकव्यापकत्वेनैव नित्यत्वं स्यात् । तदुद्देश्यतावच्छेदकमेकार्थीभावघटितम् । तस्य च 'स्वभावतश्चैतद्भवति—वाक्यञ्च वृत्तिश्चेति' इति भाष्याद्वैकल्पिकत्वेन एकार्थीभावे समासस्य व्यपेक्षायां वाक्यस्य च सिद्धेरिदं व्यर्थम्, एकार्थीभावे एव समाससंज्ञादिविकल्पार्थं तु न, 'न च संज्ञाया भावाभावाविष्येते' इति भाष्योक्तेः । एकार्थीभावे एव समाससंज्ञाया भावाभावौ नेष्येते इति तदर्थः । एवं सति समासनिषेधकसूत्राणि 'नित्यं क्रीडा' इत्यादिषु नित्यग्रहणञ्च व्यर्थम्, निषेधविषये एकार्थीभावाभावेन समासाप्राप्तेः । नित्याधिकारविषयेऽस्याभावेन वाक्याप्राप्तेश्च । तथापि लक्षणैकचक्षुष्कान् मन्दान्प्रति क्वैकार्थीभावो नित्यः, क्व पाक्षिकः, क्व नास्त्येवं बोधनार्थं सर्वमावश्यकम् । ध्वनितं चेदम् 'समर्थानाम्' इति सूत्रे भाष्ये । लक्ष्यैकचक्षुष्कं प्रति तु 'समर्थः' इति सूत्रे भाष्ये तत् प्रत्याख्यातम् । एवञ्च विशेषणीभूतैकार्थीभावस्य विकल्पबोधकानीमानि । अत एव 'पारे मध्ये' इति सूत्रे भाष्ये 'एकया वृत्तिर्विभाषा, परया वृत्तिविषयेऽनित्योऽपवादः' इत्युक्तम् । तत्र वृत्तिः=एकार्थीभाव इति शेखरकाराः ।

३ साहित्यद्योत्यतयेत्यस्य साहित्यमिवान्तत्वमपि द्योत्यमेवेत्येवार्थः, न तु साहित्येन द्योत्यम् यत्र ग्रन्थद्वयस्य सहाध्ययनमात्रं तत्रापि साहित्यसत्त्वेनान्तत्वाप्रतीत्या व्यभिचरितत्वात् । तथा च साहित्यमन्तत्वञ्च सहशब्दबोध्यम्, अग्निपदमग्निग्रन्थे लाक्षणिकम् । तथा च 'साग्नि' इत्यनेन अन्त्याग्निग्रन्थसहितमिति बोधः । अग्निं वा सहेत्यलौकिकम् । अधीते इत्यस्य प्रमाणाभावेन समासेऽनन्तर्भावात् 'साग्नि'इत्यस्य 'अधीते'इति शेषः। यद्वा अध्ययनार्थेऽपि तस्य 'सर्वादेः सादेश्च लुग्वक्तव्यः'इति लुकि साधु।

स्यादेतत्—'सुप्सुपा' इत्यपि तर्हि नित्यं स्यात्, न चेष्टापत्तिः, अपसिद्धान्तात्। तथा हि—चरट्सूत्रे वृत्तिकृतोक्तम् पूर्वं भूतो भूतपूर्वः, सुप्सुपेति समास इति। तथा शाकलसूत्रे 'सिन्नित्यसमासयोः शाकलप्रतिषेधः' इत्यत्र 'नित्यग्रहणेन नार्थः, इदमपि सिद्धं भवति वाप्यामश्वः 'वाप्यश्वः' इति भाष्यं कैयटो व्याख्यत्—वाप्यश्व इति सुप्सुपेति समासः, 'सञ्ज्ञायाम्' इति समासस्य नित्यत्वात्सिद्धः प्रतिषेध इति। तथा 'अनुदात्तं पदमेकवर्जम्' 'असिद्धवदत्र' इत्यादिसूत्रेष्वपि कैयटे स्पष्टम्। अत आह—*सुप्सुपेतीति*। *समासेति*। योगविभागेनैव सिद्धे समासे उत्तरसूत्रैः पुनर्विधानं प्राचीनस्य क्वाचित्कतां ज्ञापयति। एवञ्च इवेन समासस्यापि क्वाचित्कत्वादु-

---

न्यायसिद्धत्वमेवाह—वचनं विनेति। विकल्पबोधकशब्दं विनेत्यर्थः। नित्यत्वादिति। वाक्येन सञ्ज्ञानवगमान्नित्यसमाससदृशत्वेन नित्यत्वादित्यर्थः। पुनर्विधानमिति। समाससञ्ज्ञाया इति भावः। अन्यथा तद्विहितसमाससञ्ज्ञानुवादेनाव्ययीभावादिसञ्ज्ञामेव विदध्यात्। अत्र च व्याख्यानमेव शरणं वृद्धानाम्। न च तत्सञ्ज्ञाविधानमव्ययादीनां समास-

---

१ वक्ष्यमाणं सम्भाव्यत इत्यर्थः। सह सुपा इत्यतः प्रागकृत्वा अत्र 'विभाषा' इत्यधिकारकरणसामर्थ्यादतः प्राक् तदसम्बन्धेन तेषां नित्यत्वम् प्रतीयते इति भावः। नन्वेवं 'सुपा' इत्यस्यापि नित्यत्वापत्तिः। तथा च भाष्ये 'सुपा' इत्यस्योदाहरणभूते 'विस्पष्टपटुः' इत्यत्र 'विस्पष्टं पटुः' इति विग्रहप्रदर्शनासङ्गतिः, नित्यसमासस्याविग्रहकत्वात्, अस्वपदविग्रहकत्वाद्वेति चेन्न, एतद्विहितसमासानुवादेनैवाव्ययीभावादिसंज्ञाविधानेन सिद्धे पुनस्तैः समाससंज्ञाविधानेन 'सुपा' इति विहितसमासस्यानित्यत्वज्ञापनात्। न च 'अव्ययं विभक्ति' इत्यादिसूत्रैः 'सुपा' इति विहितसमासानुवादेनाव्ययीभावमात्रविधानेन सिद्धे समाससंज्ञाविधाने प्रमाणाभावः 'उपपदमतिङ्' 'कर्तृकरणे कृता' आख्यातमाख्यातेन' इत्यादिविषये 'सुपा' इत्यस्याप्राप्त्या तत्राधिकृतस्य 'समासः' इत्यस्य विधायकत्वपरत्वस्यावश्यकतयाऽर्थाधिकारानुरोधात् 'अव्ययं विभक्ति' इत्यादौ सर्वत्र विधेयसमर्पकत्वात्, 'अव्ययं विभक्ति' इति सूत्रभाष्ये 'एतेष्वर्थेषु यदव्ययं वर्तते तत्सुबन्तेन सह समस्यते' इत्युक्तेश्च तेषां समासविधायकत्वस्य स्पष्टत्वाच्च। न च तैरव्ययीभावादिसंज्ञामात्रविधाने तेषां समाससंज्ञाविधायकशास्त्रत्वाभावेन 'प्रथमानिर्दिष्टं समास उपसर्जनम्' इत्यस्याप्राप्तया उपसर्जनसंज्ञापत्तिः, तत्र 'समासे' इत्यस्य समासत्वव्याप्यसंज्ञाविधायकशास्त्रे लक्षणया प्रथमानिर्दिष्टाव्ययादेरुपसर्जनत्वस्य साधयितुं शक्यत्वात्। 'सुपा' इति सूत्रभाष्ये 'विस्पष्टं पटुः' इति विग्रहदर्शनादपि तस्यानित्यत्वं बोध्यम्।

२ स्वभावसिद्धमित्यर्थः। तदुक्तं भाष्ये 'इह द्वौ पक्षौ वृत्तिपक्षश्चावृत्तिपक्षश्च। तत्र स्वभावतश्चैतद्भवति वाक्यञ्च वृत्तिश्चेति' इति।

ह्वाहुरिव वामन इत्यादि सिद्धम् । इवेनेति वार्तिकं तु यद्यपि कुगतीत्यत्र पठ्यते तथाऽपि सुप्सुपेत्यत्रत्यमेव नित्याधिकारे 'स्मारितमिति कैयटः । एवं स्थिते इवेन समासस्य छान्दसत्वं कल्पयन्तः प्रत्युक्ताः । जीमूतस्येवेत्यत्र बह्वृचैः समासाभ्युपगमेऽपि तैत्तिरीयैर्व्यस्तस्यैव पाठादिति दिक् ।

*'अपपरिबहिः'* । अत एव ज्ञापकाद् बहिर्योगे पञ्चमी । ज्ञापकसिद्धं न सर्वत्र । तेन 'करस्य करभो बहिः' इति सिद्धम् । *आबालमिति* । यत्तु—आ परमाणोः आ च भूगोलकमिति किरणावल्यां प्रयुक्तं तत्प्रामादिकम्, समासमध्ये चकारप्रयोगासम्भवात् । आ च भूगोलकादिति तु पाठ्यम् । *यं पदार्थमिति* । सूत्रे यदिति सामान्ये नपुंसकम् । 'अव्ययं विभक्ति' इत्यनेन सिद्धे विभाषार्थं

---

शास्त्रप्रथमानिर्दिष्टत्वसंपादनेनोपसर्जनसञ्ज्ञार्थं चरितार्थमिति कथं ज्ञापकमिति वाच्यम्, तत्र सूत्रे समास इत्यस्य समासत्वव्याप्यसञ्ज्ञाविधौ प्रथमानिर्दिष्टमित्यर्थे बाधकाभावादिति दिक् । इवेन समासस्य काचित्कत्वे हेतुमाह—जीमूतस्येवेति ।

अत एव ज्ञापकादिति । बहिर्योगे पञ्चम्या समासविधानाज्ज्ञापकादित्यर्थः । लक्षणत्वं वस्तुसन्निमित्तम्, न तु तेन सम्बन्धेनान्वयस्तदाह—

---

१ अयम्भावः—अत्र सूत्रे परस्परसाहचर्य्यादपपरी वर्जनार्थौ कर्मप्रवचनीयावेव गृह्येते । तद्योगे 'पञ्चम्यपाङ्परिभिः' इति सूत्रात्, प्रतिपदोक्तपरिभाषया अपपरिशब्दसमुच्चार्य्य विहितङसन्तस्यैव ग्रहणाच्च पञ्चम्यैव समासः स्यादिति तत्साहचर्य्यादुक्तपरिभाषया चाप्युत्तरपदेनापि पञ्चम्यैव समासे सिद्धेऽत्र सूत्रे 'पञ्चम्या' इति व्यर्थं सद् बहिरशब्दस्य पञ्चम्यन्तेन समासविधानद्वारा तद्योगे पञ्चमीं ज्ञापयति । इदञ्च 'अपपरिबहिः' इति सूत्रभाष्ये स्पष्टम् ।

२ ननु ज्ञापकेन चेत्पञ्चमी स्वीक्रियते तदा पञ्चमीप्रकरणे 'अन्यारादितरर्ते'इति सूत्रे एव बहिश्शब्दः कुतो न पठ्यते ज्ञापकस्याश्रयणे गौरवमत आह—ज्ञापकसिद्धमिति । लाघवाद् पञ्चमीविधायके एव बहिश्शब्दे पठनीयेऽनुमानाद्बोधनस्यासार्वत्रिकत्वमिति तात्पर्यमूलकमेतद्वचनमिति भावः ।

३ लक्षणेनेत्यनुवर्तते । समयेत्यधिकरणशक्तिप्रधानम् । समीपे इति तदर्थः । सूत्रे यदिति सामान्ये नपुंसकं द्वितीयान्तम्, 'अभितः परितः इति वचनात् । तथा च यत्सामीप्यमनुना द्योत्यते तद्वाचकेन लक्षणभूतेनानुः समस्यते इत्यर्थः । वनादेर्लक्षणत्वं समीपद्वारा । वनं स्वसामीप्येनाशनिदेशं ज्ञापयति । दाहं प्रति बहिरिव लक्षणत्वं वस्तुसन्निमित्तम्, न तु लक्ष्य-लक्षणभावसम्बन्धेनाशनिकर्तृकगमनक्रियायामन्वयः । एवञ्च वनस्य कर्मप्रवचनीयद्योत्यसम्बन्धेनान्वयाभावान्नात्र द्वितीया, कर्मप्रवचनीय-

सूत्रम् । तेन पक्षे वनस्यानु इत्युदाहार्यम् । *अनुगङ्गमिति* । इहाऽऽयामो लक्षणत्वं चानुना द्योत्यते । लक्ष्यन्तु समासार्थः, अत एव वाराणस्याः सामानाधिकरण्यम् एवं स्थिते फलितमाह—*गङ्गादैर्घ्येति* । *वाराणसीति* । वरं च तदनश्च वरानः, श्रेष्ठोदकं, तस्यादूरभवा, 'अदू-

अव्ययमिति । अनोः समीपार्थत्वादिति भावः । वनस्यान्विति । कर्मप्रवचनीयसञ्ज्ञा तु नात्र तद्द्योत्येन लक्ष्य-लक्षणभावेनेतरस्यान्वयाभावात् । वनसमीपमित्येव बोधादिति भावः । तेन सम्बन्धेनान्वये तु वनमन्वित्येव बोध्यम्, अग्निमभीतिवत् । अनुना द्योत्यत इति । दीर्घगङ्गासदृशीति वाच्योऽर्थः । गङ्गादैर्घ्येत्यादिः फलितोऽर्थः, द्योत्यार्थस्य विशेषणताया

दीर्घा या गङ्गा तत्सदृशीत्यर्थः, अनुद्योत्यदीर्घत्वस्य विशेषणताया एवौचित्यात् । यद्वा मूले 'द्योत्यते' इत्यस्य शक्त्यैव बोध्यत इत्यर्थः । एवञ्च 'अनुगङ्गं वाराणसी' इत्यत्र दैर्घ्यसदृशदैर्घ्यमनुबोध्यम् । तदेकदेशे प्रथमदैर्घ्ये गङ्गापदार्थस्याधेयतासम्बन्धेनान्वय इति कर्मप्रवचनीयद्योत्यसम्बन्धेनान्वयाभावान्न द्वितीया किन्तु षष्ठ्येव तदाह—तेन सम्बन्धेनेति । अत्रापि लक्षणत्वं वस्तुसन्निमित्तम् नत्वनोर्द्योत्यम् । तथा च 'गङ्गादैर्घ्यसदृशदैर्घ्यविशिष्टा वाराणसी' इति बोधे गङ्गायां ज्ञापकत्वस्य, 'अनुवनम्' इत्यनेन 'वनसमीपं गतः' इति बोधे च वने ज्ञापकत्वस्य नियमेन मनसा बोधाद्न्यलभ्यत्वेन नात्र लक्षणत्वमनोर्द्योत्यमिति तात्पर्य्यम् । तेन सम्बन्धेनान्वये तु 'गङ्गामनु' 'वनमनु' इति द्वितीयैव, 'निवेश्य गङ्गामनु तां महानदीं चमूम्' इति रामायणे प्रयोगात् । ननु ज्ञाप्यत्वम् – ज्ञापकत्वाभिमतविषयकज्ञानजन्यज्ञानविषयत्वमेव । तच्चाज्ञातस्यैव सम्भवति । प्रकृते च असीवरणयोर्मध्ये वाराणसी इत्यादिवाक्यैर्वाराणसी ज्ञातैवेति चेन्न, स्वरूपेण ज्ञातत्वेऽपि 'प्राक्पश्चिमायता, दक्षिणोत्तरायता वा वाराणसी' इत्येवं प्रश्ने 'अनुगङ्गं वाराणसी' इत्युत्तरवाक्यं प्रयुज्यते । असीवरणामध्यदेशावच्छिन्नगङ्गादैर्घ्यस्य ज्ञाततया तेन तत्सदृशदैर्घ्यविशिष्टत्वज्ञानात् गङ्गादैर्घ्यस्य च दक्षिणोत्तरायतत्वाद् वाराणसी दक्षिणोत्तरायतेति ज्ञानं जायते विशालत्वञ्चान्यादृशमिति गम्यते । तदुक्तं भाष्ये "अनुगङ्गं हास्तिनपुरम्, अनुगङ्गं

द्योत्यसम्बन्धप्रतियोगिवाचकादेव द्वितीयाया विधानात् । अत एव षष्ठ्यन्तेनैव समासात् तदभावे 'वनस्यानु' इति मनोरमोक्तविग्रहः संगच्छते । एतेन 'वनस्य अनु' इति विग्रहे षष्ठी दुर्लभेति तत्त्वबोधिन्यां दण्ड्युक्तमपास्तम् । अनुद्योत्यलक्ष्य-लक्षणभावसम्बन्धेनान्वये तु 'वनमनु' इत्यपि विग्रहः । अत एव 'लक्षणेनाभि' इति सूत्रे 'अग्निमभि' इति द्वितीयान्तेन विग्रहस्यापि संगतिः । लक्षणत्वञ्च ज्ञानजनकज्ञानविषयत्वम् । वनज्ञानेन देशविशेषविशिष्टमज्ञनिकर्तृकगमनं ज्ञाप्यते । तेन वनस्य लक्षणत्वम् ।

रमनश्च' इत्यण्, आदिवृद्धिः, 'पूर्वपदात्सञ्ज्ञायाम्' इति णत्वम्, अणन्तत्वान्ङीप् ।

'नदीभिश्च' । स्वरूपस्य, सञ्ज्ञायाः, नद्याश्च नेह ग्रहणम्, बहुवचननिर्देशात् । किं त्वर्थस्य । न च तस्य समाससञ्ज्ञा भवति । अतस्तद्वाचिनामयं समासः । ते च न केवलं विशेषशब्दा एव किं तु

---

एव सर्वसम्मतस्यात् । यद्वा ÷ द्योत्यते = इत्यस्य बोध्यते इत्यर्थः । स च शक्त्यैवेति बोध्यम् । लक्षणत्वं च वस्तुसदेव निमित्तम् । एवं चात्रापि तेन सम्बन्धेनान्यत्राव्ययाभावान्न कर्मप्रवचनीयत्वप्रयुक्ता द्वितीया । साहचर्याद्यन्तर्भावश्चैकार्थीभावबलात् । उपलक्षितेत्यस्य विशिष्टेत्यर्थः । गङ्गादेर्य्यत्सद्द्योत्यादिबोधोत्तरं नियमेन मनसा तद्गतज्ञापकत्वबोधात्तस्या- नुद्धोत्यतोक्ता । यथा प्रारभ्यत इति क्रियाध्याहारकतयाऽथशब्दस्य प्रारम्भद्योतकता इति बोध्यम् ।

---

वाराणसी, अनुशोणं पाटलिपुत्रम् । यस्य चायाम इत्युच्यते गङ्गा चाप्यायता, वाराणस्यप्यायता तत्र कुत एतत् गङ्गया सह समासो भविष्यति न पुनर्वाराणस्येति एवं तर्हि लक्षणेनेति वर्तते । गङ्गा चैव लक्षणम्, न वाराणसी । अथवा यस्य चायाम इत्युच्यते । गङ्गा चाप्यायता वाराणस्यप्यायता तत्र प्रकर्षगतिर्विज्ञास्यते साधीयो यस्यायाम इति साधीयश्च गङ्गायाः, न वाराणस्याः ।

अत्र कैयटः='लक्ष्यलक्षणयोर्द्वयोरप्यायामवत्त्वात्पृच्छति किमुदाहरणमिति । गङ्गा चैव लक्षणमिति अनेकदेशव्याप्त्याऽनेकजनापेक्षया प्रसिद्धत्वात्तस्या एव लक्षणत्वम् । ततो यद्यपि कस्यचित्पुरुषस्य हास्तिनपुरमप्यायामवत्त्वेन प्रसिद्धं न गङ्गा, तथापि न तदपेक्षया प्रयोगव्यवस्था किन्तर्हि प्रचुरलोकापेक्षया । अथवेति लक्षणेनेत्यस्यानुवृत्त्या विनाऽपीष्टसिद्धिं दर्शयति । उपमानोपमेयभावे चायं समास इष्यते । न्यूनगुणश्चोपमेयं परिपूर्णगुणश्चोपमानम् । तत्र सम्पूर्णगुणसन्निधौ न्यूनगुणसद्गुणमिव प्रतिभातीति सामर्थ्यात् प्रकर्षगतिर्विज्ञायते, 'प्रकृष्टाऽप्रकृष्टसन्निधौ च प्रकृष्टस्य कार्य्येण सम्बन्धो नेतरस्य' इति ।

---

१ 'अशब्दसंज्ञा' इति निषेधाच्चेत्यपि बोध्यम् । अत एव कृत्रिमाकृत्रिमन्यायाश्रयणे भाष्ये दोषमाचक्षुयोक्तम् । 'इह तर्हि प्राप्नोति नदीभिश्चेति । बहुवचननिर्देशान्न भविष्यति । स्वरूपविधिस्तर्हि प्राप्नोति, बहुवचननिर्देशादेव न भविष्यति ।' इति ।

ननु 'नदीभिश्च' इति सूत्रं समानाधिकरणसमाससमात्रस्य बाधकमुत पुरस्तादपवादन्यायेन 'पूर्वकालैक' इत्यस्य बाधकम् । उभयथाऽपि 'एकनदीतरः' इति प्रयोगानुपपत्तिरतो मूले उक्तम् 'समाहारे चायमिष्यते' इति । समाहारे एवेत्यर्थः । तथा च समाहारे द्विगोरपवादत्वात्तदभावे 'पूर्वकालैक'

सामान्यशब्दोऽपि । *नित्यसमास इति* । एतच्च वृत्तौ स्पष्टम् । शाकलसूत्रे कैयटस्वरसोऽप्येवम् । नन्वेवं न्यायसाम्यात् बहुव्रीहेरपि नित्यसमासत्वं स्यादिति चेन्मैवम्, यस्येत्यादिपदान्तरसमभिव्याहारेणान्यपदार्थप्रतीतेः । अत एव सञ्ज्ञाऽनवगमात् इत्युक्तम्, न त्वन्यपदार्थाऽनवगमादिति । सञ्ज्ञायां किम्—शीघ्रगङ्गो देशः । अथाव्ययीभावेऽसाधारणान् समासान्तानाह—

*'अव्ययी'* । *समासान्त इति* । समासस्य समासार्थोत्तरपदस्य

---

सामान्यशब्दोऽपीति । तेन पञ्चनदं सप्तगङ्गमित्यादिसिद्धिः । पदान्तरसमभिव्याहारेणेति । तद्घटितमेव तत्र वाक्यम्, न केवलवर्णिपदार्थघटितमिति भावः ।

समासस्येति । इदं च 'समासान्ताः' 'अन्तः' इत्यादिसूत्रेषु भाष्ये स्पष्टम् । समासार्थोत्तरपदस्य वेति । अयं पक्षः सरूपसूत्रे कैयटे स्पष्टः ।

---

इति समासे 'पञ्चनदीतरः' इति सिध्यतीति भावः । अन्यथा समानाधिकरणतत्पुरुषं बाधित्वाऽव्ययीभावे नपुंसकह्रस्वत्वापत्तिः, टजापत्तिश्च 'पञ्चनदीतरः' इत्यत्र समाहाराभावान्न दोष इति भावः । अन्ये तु 'गोदावर्य्याश्च नद्याश्च संख्याया उत्तरे यदि' इत्यभियुक्तोक्तः समासान्तोऽच् 'अच्प्रत्यन्वव' ... 'अच्' इति योगविभागेन साध्यते, स च योगविभागस्येष्टसिद्ध्यर्थतया 'पञ्चनदीतरः' इत्यत्र न प्रवर्तते । अव्ययीभावे तु 'पञ्चनदम्' इत्यत्र भवत्येवेत्याहुस्तन्न, भाष्ये तदनुक्तेरिति दिक् ।

१ तत्सदृश इत्यर्थः । तत्सादृश्यञ्च समाससमानार्थकलौकिकवाक्याभावेन । एवञ्च नित्यसमासस्थले विशेष्याभावाद्विशिष्टाभावः । प्रकृते तु विशेष्यांशसत्त्वेऽपि तस्य संज्ञिनोऽबोधकतया विशेषणाभावप्रयुक्तविशिष्टाभावः । लौकिकेत्युक्तेरलौकिकविग्रहवाक्यसत्त्वेऽपि न दोषः । तथा च लौकिकत्वसमानार्थकत्वोभयाभाववद्वाक्याभावेन सादृश्यं बोध्यम् । समासघटकपदानां विग्रहस्यस्त्येव, महाविभाषाया सम्बन्धाभावे मानाभावात् । अत एव 'द्वितीयतृतीय' इति सूत्रेऽन्यतरस्यांग्रहणेन 'उत्सर्गापवादयोर्महाविभाषाविषयत्वेऽपवादाभावे उत्सर्गाप्रवृत्तिः' इत्यर्थे ज्ञापिते 'उन्मत्तगङ्गम्' इत्युदाहृतम् । अव्ययीभावेन मुक्ते बहुव्रीहिर्नेति चोक्तं भाष्ये । अस्य नित्यत्वे 'अव्ययीभावेन मुक्ते' इत्यसङ्गतमेव स्यात् एवमेवान्यत्रापि महाविभाषाधिकारे संज्ञायां समासे बोध्यम् ।

२ 'समासान्ताः' इत्यस्य समासस्य चरमावयवा इत्यर्थः । अत्र समासपदं समासार्थविग्रहवाक्यपरम् । तथा च समासार्थलौकिकविग्रहवाक्यान्तावयवा इति फलति । तेन 'बहुकुमारिकः' इत्यत्र गोस्त्रियोरिति ह्रस्वो न, समासात् प्राक्, तत्समकालं वा समुदायस्याप्रातिपदिकत्वेन उपसर्जनं यो गोशब्दः स्त्रीप्रत्ययान्तश्च तदन्तसमासाभिन्नाजन्तप्रातिपदिकस्य ह्रस्व इत्यर्थकस्याप्राप्तेः कपि कृते स्त्रीप्रत्ययान्तत्वाभावात् । तदुक्तं भाष्ये 'कपि ह्रस्वस्य प्रतिषेधो वक्तव्यः, बहुकुमारीकः, न वक्तव्यः कपि कृतेऽनन्त्यत्वाद्ध्रस्वत्वं न भविष्यति, इदमिह सम्प्रधार्य्यं कप् क्रियतां ह्रस्वत्वमिति, परत्वात्कप्, समाससामान्यापेक्षत्वादन्तरङ्गं ह्रस्वत्वम्, अन्तरङ्गतरः कप्; ननु चायं कप् समासान्त इत्युच्यते

**परं तु चिन्त्यः, समासपदस्य तदर्थोत्तरपदलक्षणायां मानाभावात् ।**

---

तादर्थ्यात्ताच्छब्द्यं भविष्यति, येषां पदानां समासो न तावत्तेषामन्यद्‌ भवति कपं तावत्प्रतीक्षते' इति । 'अन्तः' इति सूत्रे भाष्ये च किं समासस्यान्त उदात्तः, आहोस्विदुत्तरपदस्य, आद्ये 'इदम्प्रथमकाः' इत्यादौ कपि पूर्वस्योपसङ्ख्यानङ्कर्तव्यम् । अन्त्ये 'अनृचः' इत्यादौ 'नञ्सुभ्याम्' इत्यनेनान्त्याकारस्योदात्तत्वानापत्तिः' इत्युक्तम् । यदि समासे कृते समासान्तः प्रवर्तेत तदा 'इदम्प्रथमकाः' इत्यत्र समासे कृते समासान्तापेक्षया परत्वात् 'बहुव्रीहाविदमेतत्तद्‌भ्यः प्रथमपूरणयोः क्रियागणने' इत्यनेन स्वरे कृते ततः कपि दोषाभावसिद्धौ भाष्यासङ्गतिः स्पष्टैव । समासार्थालौकिकविग्रहवाक्यघटकोत्तरपदावयवाः समासान्ताः; अत एव सरूपसूत्रे भाष्ये कृतद्वन्द्वानां विभक्तौ परत एकशेष इति पक्षे "ऋक् च ऋक् च ऋचौ" "असारूप्यादेकशेषो न प्राप्नोति" इत्युक्तिः संगच्छते। ऋच्छब्दयोर्द्वन्द्वे कृते 'ऋक्पूरब्धूः' इत्यप्रत्यये 'ऋच् ऋच् औ' इत्यवस्थायामसारूप्यादेकशेषो न स्यादिति भाष्यार्थः। समासावयवत्वे द्वयोः शब्दयोः सारूप्यसत्त्वेन 'असारूप्यादेकशेषो न प्राप्नोति' इति भाष्यासङ्गतिः स्पष्टैवेत्याह ' समासार्थोत्तरपदस्य वा चरमावयव इति । अत एव 'द्विधुरी' 'द्विपुरी' इत्यादि सिध्यति । समासावयत्वे तु उत्तरपदस्यादन्तत्वाभावात् 'अकारान्तोत्तरपदो द्विगुः स्त्रियामिष्टः' इत्यस्याप्राप्त्या स्त्रीत्वं न स्यात् । न च समासान्तानामुत्तरपदावयवत्वे 'उपशरदम्'इत्यत्र अव्ययीभावस्यादन्तत्वाभावेन 'नाव्ययीभावादतोऽम् त्वपञ्चम्याः' इत्यमादेशानापत्तिः' 'अवयवावयवः समुदायावयवः'इति न्यायेनाव्ययीभावस्याप्यदन्तत्वेन तत्सिद्धिरिति प्राचः।

अत्र नव्याः—'समासान्ताः' इत्यत्र 'तादर्थ्यात्ताच्छब्द्यम्' इति भाष्यप्रामाण्यात् समासपदस्य समासार्थालौकिकविग्रहवाक्ये लाक्षणिकतया समुदायचरमावयवत्वमेव । अत एव 'अन्तः' इति सूत्रे भाष्ये समासस्यान्तोदात्तत्वमुत्तरपदस्य वेति विकल्पे आद्ये 'इदम्प्रथमकाः' इत्यादौ कपोऽन्तोदात्तत्वापत्तिमुक्त्वाऽन्त्ये 'अनृचः' इत्यत्रान्तोदात्तत्वासिद्धिरित्युक्त्वा लक्ष्यानुरोधात्क्वचिदुत्तरपदान्तोदात्तत्वं क्वचित्समासान्तोदात्तत्वमित्युक्तिः सङ्गच्छते । द्विपुरीत्यादौ समुदायस्य स्त्रीत्वन्तु 'लिङ्गमशिष्यं लोकाश्रयत्वाल्लिङ्गस्य' इति 'समासान्ताः' इति सूत्रभाष्योक्त्या लिङ्गानुशासनस्य लोकसिद्धलिङ्गानुवादकत्वेन लोकादेव सिद्धेः । अत एव 'परवल्लिङ्गम्' इति सूत्रसत्त्वेऽपि 'द्विनावम्' 'अर्द्धखारम्' इत्यत्र नपुंसकत्वस्य सिद्धिः । अत एव 'अकारान्तोत्तरपदो द्विगुः स्त्रियामिष्टः' इत्यत्र उत्तरपदग्रहणस्य 'पञ्चराजम्' इत्यादौ स्त्रीत्वाभावरूपं फलं सङ्गच्छते । अत एव 'उपशरदम्' इत्यत्र 'नाव्ययीभावात्' इत्यम् , 'अव्ययानां भमात्रे' इति टिलोपाभावश्च सिद्धः, पूर्वभागस्याव्ययीभावत्वाभावेनानव्ययत्वात् । न च समुदायावयवत्वे सरूपसूत्रस्थभाष्यविरोधः समुदायावयवत्वेऽपि तद्भाष्यविरोधाभावात् । तथा हि:—'ऋक्च ऋक्च ऋचौ' असारूप्यादेकशेषो न प्राप्नोति' इति भाष्यम् । विभक्तौ परतः कृतद्वन्द्वानामेकशेष इति पक्षे समासान्तप्राग्भागस्य विभक्त्यव्यवहितपूर्वत्वाभावः । तद्विशिष्टस्य तु न सरूपत्वमित्युक्तम् भाष्ये 'असारूप्यात्' इति । किञ्चोत्तरपदावयवत्वे 'समासान्ताः' इत्यत्र समासपदस्य समासार्थालौकिकविग्रहवाक्यघटकोत्तरपदे लक्षणायां लक्ष्यताऽवच्छेदके गौरवञ्चेत्याहुः । अन्ये तु 'ऋक् ऋक् च ऋचौ' असारूप्यादेकशेषो न प्राप्नोति' इति भाष्ये एकशेषाप्राप्तौ 'ऋच' इत्यस्यानर्थकत्वरूपहेतोरनुक्त्योत्तरपदावयवत्वमेव, अन्यथा भाष्यस्य न्यूनतापत्तिः । उत्तरपदावयवत्वे तु 'ऋच' इत्यत्रार्थवत्त्वस्यैव सत्त्वेन न्यूनत्वाभावः । न च विशिष्टरूपोपादानाभावेन 'अर्थवद्ग्रहणे' इति परिभाषाया अप्राप्त्या 'सरूपाणाम्' इति सूत्रेणार्थवतामेवैकशेष इत्यत्र प्रमाणाभावः, सहविवक्षायामेवैकशेषस्य प्रमाणसिद्धत्वेन समुदितार्थविषयकबोधतात्पर्येणोच्चरितानां सरूपाणामेवैकशेषोद्देश्यताऽवच्छेदकाक्रान्ततयाऽर्थवत्त्वाभावे च तद्व्याप्यस्य समुदितार्थबोधकत्वस्य सुतरामभावेन समुदितार्थबोधकत्वरूपव्याप्यधर्मेण हेतुना व्यापकस्यार्थवत्त्वा-

वा चरमावयव इत्यर्थः। तेनोपशरदमित्यत्र 'नाव्ययीभावात्' इत्यम् द्विपुरीत्यादौ 'द्विगोः' इति ङीप् च सिध्यति। *जराया इति*। गणसूत्रम्। *प्रतिपरेति*। *अक्ष्णः परमिति*। अविषय इत्यर्थः। वृत्तिविषयेऽक्षिशब्द इन्द्रियमात्रपरः। *समक्षमिति*। अक्ष्णो योगश्च।

*'नदी'*। इह स्वरूपस्यैव ग्रहणम्, न सञ्ज्ञायाः, पौर्णमास्या-

---

तदर्थवाक्यस्योपचारेण समासपदेन ग्रहणमित्यर्थस्यैव 'गोस्त्रियोः' इति भाष्ये उक्तत्वाच्च। 'अन्त' इति सूत्रस्थभाष्येणोत्तरपदावयवत्वपक्षस्य विरोधाच्च। सरूपसूत्रस्थभाष्यन्तु समासावयवत्वपक्षेऽपि सुयोजं सुधियाम्। तद् ध्वनयन्नाद्यपक्ष एव फलद्वयमाह—तेनेति। अदन्ताव्ययीभावत्वप्रयुक्तोऽम्, अदन्तद्विगुत्वप्रयुक्तो ङीप् चेत्यर्थः। न च द्विपुरीत्यादावकारान्तोत्तरपदत्वाभावात् स्त्रीत्वं कथं स्यादिति वाच्यम्, लिङ्गानुशासनसूत्राणां लोकसिद्धलिङ्गानुवादकत्वेनाविधायकत्वेन चात्रत्यद्विगौ स्त्रीत्वाभावनियामकत्वाभावात्। तदुक्तं 'लिङ्गमशिष्यं लोकाश्रयत्वाल्लिङ्गस्य' इति 'समासान्ताः' इत्यादिसूत्रेषु भाष्ये। न चोत्तरपदावयवत्वेऽपि अवयवावयवस्य समुदायावयवत्वेनोक्तप्रयोगयोः सिद्धिरिति वाच्यम्, 'अन्त' इति सूत्रे समासस्यान्तोदात्तत्वमुत्तरपदस्य वेति विकल्पे आद्ये इदं प्रथमका इत्यादौ कपोऽन्तोदात्तत्वापत्तिमुक्त्वा अस्तु तर्ह्युत्तरपदस्येत्युक्त्वा तत्पक्षेऽनृच इत्यत्रान्तोदात्तत्वासिद्धिरितीत्यर्थपरभाष्यविरोधेन तत्पक्षस्याङ्गीकर्तुमशक्यत्वादित्यलम्। इन्द्रियमात्रपर इति। बाह्येन्द्रियेत्यर्थः। सर्वबाह्येन्द्रियाविषये परोक्षत्वव्यवहारादिति भावः।

न सञ्ज्ञाया इति। तत्संज्ञकस्येत्यर्थः। नपुंसकह्रस्व इति। उपलक्षणमेतद्

---

ववस्यानुमानेन तस्यैव प्रमाणत्वात्। अत एव 'काक्षः' इति बहुव्रीहौ 'का पथ्यक्षयोः' इत्यनेन षच्प्रत्ययान्तस्यार्थवत्त्वेन कादेशः सिध्यति, समुदायावयवत्वे तु अक्षशब्दस्यात्रानर्थकतया कादेशानापत्तिः। न च प्रतिपदोक्तपरिभाषया षच्प्रत्ययान्ते कादेशाप्राप्तिः, प्रतिपदोक्तपरिभाषया 'कुगतिप्रादयः' इति विहितसमास एव 'कोः कत्तत्पुरुषेऽचि' इत्यस्य प्रवृत्त्या समासान्तरे दोषाभावेन 'तत्पुरुषे' इत्यस्य चरितार्थत्वेनास्मिन् प्रकरणे प्रतिपदोक्तपरिभाषाया अप्रवृत्तिकल्पनात्। उत्तरपदावयवत्वादेव 'अन्तरीपम्' इत्यत्र 'द्व्यन्तरुपसर्गेभ्योऽप ईत्' इत्यनेनार्थवदपशब्दमादाय ईदादेशः सिध्यति। ईद्विधानसामर्थ्यादर्थवत्परिभाषाया अप्रवृत्तिकल्पनन्तु न युक्तम्, सामर्थ्यात् प्रवृत्तिकल्पनापेक्षयोत्तरपदावयवत्वस्वीकारस्यैवौचित्यादिति वदन्ति। उपाध्यायास्तु—समासान्ताः समासावयवा एव 'अन्तः' इति सूत्रे भाष्ये उत्तरपदस्यान्तोदात्तत्वपक्षे 'अनृचः' इत्यत्रान्तोदात्तत्वासिद्धिरूपदोषोक्तेः, अन्यथोत्तरपदावयवत्वे समासान्ताकारस्योत्तरपदावयवत्वेनोदात्तत्वसिद्धया भाष्यासङ्गत्यापत्तेः। किञ्चोत्तरपदावयवत्वे 'अकारान्तोत्तरपदो द्विगुः स्त्रियामिष्यते' इति वार्तिके उत्तरपदग्रहणवैयर्थ्यापत्तिः, तत्फलस्य 'पञ्चराजम्' इत्यत्र स्त्रीत्वाभावस्य तत्सत्त्वेऽप्यशक्यवारण-

ग्रहणयोः पृथग्ग्रहणात् । *उपनदीति* । टजभावे नपुंसकह्रस्वः । इदं त्ववधेयम्—'नदीभिश्च' इति सूत्रे विशेषाणामिव स्वरूपस्य ग्रहणम्, विशेषाणामेवेत्यत्र मानाभावादित्युक्तम् । तेन पञ्चनदमिति सिध्यति अत्र च नित्योऽच् । तदुक्तम्—

गोदावर्याश्च नद्याश्च सङ्ख्याया उत्तरे यदि । इति ।

एतच्च 'अच्प्रत्यन्वव' इत्यत्राजिति योगविभागात्सिद्धम् पूर्वार्धमिति । अन्यतरस्याङ्ग्रहणस्य प्रकृतत्वादिति भावः ॥

इत्यव्ययीभावः ।

---

उपसर्जनह्रस्वस्यापि । तदुक्तमिति । माधवादिभिरिति भावः । 'नदीभिश्च' इत्यत्र कैयटोऽप्येवम् । परन्तु योगविभागसिद्धस्य सामान्यत्वेन विशेषे

---

त्वात् 'सरूपाणाम्' इति सूत्रभाष्यासङ्गतेर्दुर्वारत्वात् । 'ऋक् च ऋक् च ऋचौ' इत्यत्र 'विरूपाणाम् समानार्थानाम्' इत्यनेनैकशेषस्य सिद्धतया भाष्योक्तैकशेषानापत्तिरूपदोषासङ्गत्यापत्तेश्च । समुदायावयव तु 'ऋच' इत्यस्यानर्थकतया 'विरूपाणाम्' इत्यस्याप्राप्त्या नासङ्गतिः । किञ्च 'सरूपाणाम्' इत्यनेना वतामेवैकशेष इत्यत्र प्रमाणाभावः, अन्वयव्यतिरेकाभ्यां समुदितार्थवत्त्वेनावयवार्थवत्त्वस्य सत्त्वेऽपि अनुमितस्य त 'सरूपाणाम्' इति वाक्यार्थे प्रवेशाभावेनार्थवतामेवैकशेष इत्यस्य वक्तुमशक्यत्वात् । न चानर्थकस्यैकशे तेनार्थबोधानापत्तिः, 'यः शिष्यते' इति न्यायेन तद्बोधकत्वोपपत्तेरित्याहुरिति सुधियो विभावयन्तु ।

१ नन्वनयोरुपादानं नियमार्थमस्तु 'ईकारान्तस्य चेदनयोरेव' इति चेन्न, 'ऊनदीपौर्णमासी' इत्ये सिद्धे नदीग्रहणस्य ज्ञापकत्वे बाधकाभावात् । न च 'ऊ' इत्यस्य ग्रहणेऽनदीसंज्ञकानमप्यूकारान्ता ग्रहणापत्तिः, नदीसाहचर्यादूपदेनापि नदीसंज्ञकोकारान्तानामेव ग्रहणात् । न चास्य वैकल्पिकत्वेऽ व्यवस्थितविभाषात्वाश्रयणेन विपाटशब्दान्ते नित्यप्रवृत्त्या नोक्तभाष्यविरोधः, तथात्वे 'देवत्रातः' इत्यादी व्यवस्थितविभाषाविषयत्वेन परिगणनपरभाष्यविरोधापत्तेरिति दिक् ।

२ 'वा' इति करणेनैव सिद्धे सेनकग्रहणं पूजार्थमपीति भावः । अत एव 'नदीपौर्णमासी' इ सूत्रे नदीशब्देन विशेषाणामग्रहणे शरदादिषु विपाट् शब्दपाठस्य ज्ञापकत्वं संख्यासंज्ञासूत्रभाष्यो संगच्छते । 'नदीपौर्णमासी' इत्यस्य वैकल्पिकत्वे तु नित्यत्वाय पाठस्यावश्यकतया भाष्यासङ्गत्यापत्तेः नचैवमन्यतरस्यामित्यस्यात्रासम्बन्धे उत्तरत्र 'झयः' इत्यत्राप्यसम्बन्धेनानेनैव शरदादिझयन्ताव्यय भावात् टचि सिद्धे शरदादिषु झयन्तपाठवैयर्थ्यम्, तत्र झयन्तपाठस्य प्रपञ्चार्थत्वादिति सेनकग्रहण पूजार्थत्वं विकल्पार्थत्वञ्चोभयमपि फलमिति भावः ।

३ 'नदीभिश्च' इति सूत्रभाष्यव्याख्यावसरे 'एकनदी' इति प्रतीकमादाय 'यदि समाहारग्रहणं क्रियते तदा 'पुरस्तादपवादाः' इति न्यायेनायं समासः पूर्वकालैकेति समासं बाधेत । समाहारे तु परत्व द्विगुः स्यात् । ततश्चैकनदीत्यत्राव्ययीभावे कृते तन्निबन्धनो नदीपौर्णमास्याग्रहायणीभ्य इति वा ट

'नदीपौर्णमासी' इत्यनेन बाधः कथं नेत्यत्र दृढं मानं फलं च चिन्त्यं तदेतत्तदुक्तमित्यनेन ध्वनितम् ।

॥ इत्यव्ययीभावः ॥

---

प्नोति नपुंसकत्वञ्च । यस्तु गोदावर्य्याश्च नद्याश्चेत्यच् समासान्तः सोऽच् प्रत्यन्ववेत्यत्र योगविभागेन क्रियते । स चेष्टप्रसिद्ध्यर्थं इति तत्पुरुषे प्रयोगादर्शनादेकनदीत्यत्र न प्रवर्तते । अव्ययीभावे तु पञ्चनद-मित्यत्र भवत्येवैकापूपीवत् समाहारविवक्षायामेकनदमेकनदीति भवतीत्याहुः' अत्र 'एकापूपीवत्समाहार-विवक्षायाम्' 'एकनदम्' 'एकनदि' इति भवति इति चिन्त्यम्, एकत्वसंख्यामादाय समाहारासम्भ-वादित्युपाध्यायाः ।

यदीयशिक्षाव्रततिः प्रसूते तर्कप्रसूनं बुधमोदखेलम् ।
समर्च्य रत्नप्रभया तदङ्घ्रिं सभापतिर्नौति नतोऽनुवेलम् ॥१॥

। बलियाप्रान्तवास्तव्यसरयूपारीणद्विजान्वयजन्मकाशीस्थविरलामहाविद्यालयप्रधानाध्यापकपण्डितश्री-सभापतिशर्मोपाध्यायविरचितायां मनोरमाशब्दरत्नटिप्पण्यां रत्नप्रभायामव्ययीभावप्रकरणम् ।



॥ शङ्करोतु शङ्करः ॥

सुधियः प्रार्थये भूयः क्षन्तव्यास्त्रुटयो यदि ।
सन्तोऽप्यसन्तो दोषाः स्युः प्रपञ्चोऽद्वैतिनामिव ॥१॥

॥ इति शम् ॥

